॥ श्रीः ॥

# श्रीमन्महाभारतम् ।

## सटिप्पणम् ।

## आदिपर्व १

एतच्च

कुम्भघोणस्थेन श्रीमन्मध्वविलासपुस्तकालयाधिपतिना

**टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च**

अनेकेषां विदुषां साहाय्येन दाक्षिणात्यबहुकोशानुसारेण

संशोध्य

मुंबापुर्यां

जावजी दादाजी इत्येतेषां निर्णयसागरमुद्रणयन्त्रे मुद्रयित्वा प्रकाशितम् ।

शाके १८२८ पराभवनामसंवत्सरे ।

१४२

श्रीः ।

# श्रीमन्महाभारतम् ।

## आदिपर्व १ ।

### (अनुक्रमणिकापर्व ॥ १ ॥)

### प्रथमोऽध्यायः ॥ १ ॥

आदौ मङ्गलाचरणं ॥ १ ॥ नैमिशारण्ये दीर्घसत्रे शौनकादीन्प्रति सौतेरागमनं ॥ २ ॥ तत्र शौनकादिभिः सौतिं प्रति भारतकथनचोदना ॥ ३ ॥ सौतिना श्रीमन्नारायणनमस्कारपूर्वकं व्यासस्य भारतनिर्माणकथनं ॥ ४ ॥ पर्वानुक्रमणिका ॥ ५ ॥

---

॥ श्रीवेदव्यासाय नमः ॥

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव(व्यासं) ततो जयमुदीरयेत् १

'नारायणं सुरगुरुं जगदेकनाथं
भक्तप्रियं सकललोकनमस्कृतं च ।
त्रैगुण्यवर्जितमजं विभुमाद्यमीशं
वन्दे भवघ्नममरासुरसिद्धवन्द्यम् ॥' २

'नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान्'
ॐ नमो भगवते वासुदेवाय ।
ॐ नमः पितामहाय । ॐ नमः प्रजापतिभ्यः ।
ॐ नमः कृष्णद्वैपायनाय ।
ॐ नमः सर्वविघ्नविनायकेभ्यः ॥ ४

रोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको
नैमिशारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ५
सुखासीनानभ्यगच्छद्ब्रह्मर्षीन्संशितव्रतान् ।
विनयावनतो भूत्वा कदाचित्सूतनन्दनः ॥ ६
तमाश्रममनुप्राप्य नैमिशारण्यवासिनः ।
'उवाच तानृषीन्सर्वान्धन्यो वोऽस्म्यद्य दर्शनात् ७
वेद वैयासिकीः सर्वाः कथा धर्मार्थसंहिताः ।
वक्ष्यामि वो द्विजश्रेष्ठाः शृण्वन्त्वद्य तपोधनाः ८
तस्य तद्वचनं श्रुत्वा नैमिशारण्यवासिनः ।'

---

श्रीलक्ष्मीनृसिंहाय नमः ॥ श्रीहयग्रीवाय नमः ॥ श्रीवेदव्यासाय नमः ॥ इह खलु भगवान्पाराशर्यः परमकारुणिको मन्दमतीननुग्रहीतुं चतुर्दशविद्यास्थानान्येकत्र दिदर्शयिषुर्महाभारताख्यमितिहासं प्रणेष्यन्प्रारिप्सितस्य निष्प्रत्यूहपरिपूरणाय प्रचयगमनाय च मङ्गलं रचयन् शिष्यशिक्षायै श्लोकरूपेण निबध्नन्नर्थात्तत्र प्रेक्षावत्प्रवृत्त्यङ्गमभिधेयादि दर्शयति ॥ नारायणमिति ॥ नरोत्तमं पुरुषोत्तमं नारायणं नरं देवीं सरस्वतीं (व्यासं) चैव नमस्कृत्य जयं भारताख्यमितिहासं उदीरयेत् ॥ १ ॥ लक्ष्यालङ्कारव्याख्यानरीत्यायमाद्यः श्लोकः ॥ २ ॥ कतिपयकोशरीत्यायमाद्यः ॥ ३ ॥ रोमहर्षणपुत्रः रोमाणि हर्षयाञ्चक्रे श्रोतॄणां यः स्वभाषितैः । कर्मणा प्रथितस्तेन रोमहर्षणसंज्ञया । इति कौर्मे निरुक्तार्थनाम्नः पुत्रः । उग्रश्रवाः उग्रस्य नृसिंहस्य श्रवः श्रवणं यस्य सः । पौराणिकः पुराणे कृतश्रमः । नैमिशारण्ये वायवीये । एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते । यत्रास्य शीर्यते नेमिः स देशस्तपसः शुभः । इत्युक्त्वा सूर्यसंकाशं चक्रं सृष्ट्वा मनोमयम् । प्रणिपत्य महादेवं विससर्ज पितामहः । तेपि हृष्टतरा विप्राः प्रणम्य जगतां प्रभुम् । प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत । तद्वनं तेन विख्यातं नैमिशं मुनिपूजितम् । इति उक्तरूपे। नैमिषेति पाठे तु वाराहे । एवं कृत्वा ततो देवो मुनिं गौरमुखं तदा । उवाच निमिषेणेदं निहतं दानवं बलं । अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितं। इति निर्वचनं द्रष्टव्यं । शुनकस्य मुनेरपत्यं शौनकः । कुलपतेः । एको दशसहस्राणि योऽन्नदानादिना भरेत् । स वै कुलपतिः इत्युक्तलक्षणस्य । सत्रे ये यजमानास्तएव ऋत्विजो यस्मिन्बहुकर्तृके क्रतौ स सत्रसंज्ञः तस्मिन् ॥ ५ ॥ नैमिशारण्यवासिनः तान्सर्वानृषीनुवाचेत्यन्वयः ॥ ७ ॥ अहं वैया-

चित्राः श्रोतुं कथास्तत्र परिवव्रुस्तपस्विनः ॥ ९
अभिवाद्य मुनींस्तांस्तु सर्वानेव कृताञ्जलिः ।
अपृच्छत्स तपोवृद्धिं सद्भिश्चैवाभिपूजितः ॥ १०
अथ तेषूपविष्टेषु सर्वेष्वेव तपस्विषु ।
निर्दिष्टमासनं भेजे विनयाद्रौमहर्षणिः ॥ ११
सुखासीनं ततस्तं तु विश्रान्तमुपलक्ष्य च ।
अथापृच्छदृषिस्तत्र कश्चित्प्रस्तावयन्कथाः ॥ १२
कुत आगम्यते सौते क्वचायं विहृतस्त्वया ।
कालः कमलपत्राक्ष शंसैतत्पृच्छतो मम ॥ १३
एवं पृष्टोऽब्रवीत्सम्यग्यथावद्रौमहर्षणिः ।
वाक्यं वचनसंपन्नस्तेषां च चरिताश्रयम् ॥ १४
तस्मिन्सदसि विस्तीर्णे मुनीनां भावितात्मनाम् ।

सौतिरुवाच ।

जनमेजयस्य राजर्षेः सर्पसत्रे महात्मनः ॥ १५
समीपे पार्थिवेन्द्रस्य सम्यक्पारिक्षितस्य च ।
कृष्णद्वैपायनप्रोक्ताः सुपुण्या विविधाः कथाः १६
कथिताश्चापि विधिवद्या वैशंपायनेन वै ।
श्रुत्वाऽहं ता विचित्रार्था महाभारतसंश्रिताः १७
बहूनि संपरिक्रम्य तीर्थान्यायतनानि च ।
समन्तपञ्चकं नाम पुण्यं द्विजनिषेवितम् ॥ १८
गतवानस्मि तं देशं युद्धं यत्राभवत्पुरा ।
कुरूणां पाण्डवानां च सर्वेषां च महीक्षिताम् १९
दिदृक्षुरागतस्तस्मात्समीपं भवतामिह ।
आयुष्मन्तः सर्वे एव ब्रह्मभूता हि मे मताः ॥
अस्मिन्यज्ञे महाभागाः सूर्यपावकवर्चसः ॥ २०
कृताभिषेकाः शुचयः कृतजप्या हुताग्नयः ।
भवन्त आसते स्वस्था ब्रवीमि किमहं द्विजाः २१
पुराणसंहिताः पुण्याः कथा धर्मार्थसंश्रिताः ।
इतिवृत्तं नरेन्द्राणामृषीणां च महात्मनाम् ॥ २२

ऋषय ऊचुः ।

द्वैपायनेन यत्प्रोक्तं पुराणं परमर्षिणा ।
सुरैर्ब्रह्मर्षिभिश्चैव श्रुत्वा यदभिपूजितम् ॥ २३
तस्याख्यानवरिष्ठस्य विचित्रपदपर्वणः ।
सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥ २४
भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम् ।
संस्कारोपगतां ब्राह्मीं नानाशास्त्रोपबृंहिताम् ॥ २५
जनमेजयस्य यां राज्ञो वैशंपायन उक्तवान् ।
यथावत्स ऋषिः पृष्टः सत्रे द्वैपायनाज्ञया ॥ २६
वेदैश्चतुर्भिः संयुक्तां व्यासस्याद्भुतकर्मणः ।
संहितां श्रोतुमिच्छामः पुण्यां पापभयापहाम् २७

सौतिरुवाच ।

आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥ २८
असच्च सच्चैव च यद्विश्वं सदसतः परम् ।
परावराणां स्रष्टारं पुराणं परमव्ययम् ॥ २९
मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम् ।
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥ ३०
महर्षेः पूजितस्येह सर्वलोकैर्महात्मनः ।
प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुतकर्मणः ॥ ३१
'नमो भगवते तस्मै व्यासायामिततेजसे ।
यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् ॥ ३२
सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।
न तथा फलदं सूते नारायणकथा यथा ॥
नास्ति नारायणसमं न भूतं न भविष्यति
एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम्'
आचख्युः कवयः केचित्संप्रत्याचक्षते परे ।

---

सिकीः सर्वाः कथा वेद जानामि ॥ ८ ॥ निर्दिष्टं इहोपविश्यतामिति दर्शितम् ॥ ११ ॥ प्रस्तावयन् उपोद्घातयन् ॥ १२ ॥ विहृतः नीतः ॥ १३ ॥ तेषां मुनीनां चादन्येषां राजादीनां च यानि चरितानि तेषामाश्रयभूतम् । भावितात्मनां शोधितचित्तानाम् ॥ १४ ॥ समन्तपञ्चकं समन्तात् पञ्चकं परशुरामकृतह्रदपञ्चकं यस्मिंस्तत् । स्यमन्तपञ्चकमित्यपि पाठो दृश्यते ॥ १८ ॥ ब्रवीमि किमहं द्विजाः अहं च पुराणादिष्वन्यतमं किं ब्रवीमि तदाज्ञापयतेति शेषः ॥ २१ ॥ संस्कारोपगतां पदादिव्युत्पत्तिमतीम् । ब्राह्मीं वाचं । ब्राह्मी तु भारती भाषेत्यमरः ॥ २५ ॥ मङ्गलाचरणपूर्वकं मुनिभिः प्रार्थितमर्थं वक्तुं प्रतिजानीते आद्यमित्यादिचतुर्भिः । हरिं नमस्कृत्य महर्षेर्मतं प्रवक्ष्यामीत्यन्वयः । पुरुहूतं पुरुभिर्बहुभिर्होतृभिः हूतं आहूतं । पुरुभिः सामगैः स्तुतं । ऋतं सत्यं । एकश्चासावक्षरश्च तं । एकं अद्वितीयं समाधिकरहितमिति वा । अक्षरं नाशरहितं । व्यक्ताव्यक्तं रामकृष्णादिरूपेण दृश्यं । ज्ञानानन्दादिरूपेण मन्दैरदृश्यं ॥ २८ ॥ मङ्गल्यं मङ्गलप्रदं ॥ ३० ॥

आख्यास्यन्ति तथैवान्य इतिहासमिमं भुवि॥३५
इदं तु त्रिषु लोकेषु महज्ज्ञानं प्रतिष्ठितम् ।
विस्तरैश्च समासैश्च धार्यते यद्द्विजातिभिः ॥ ३६
अलङ्कृतं शुभैः शब्दैः समयैर्दिव्यमानुषैः ।
छन्दोवृत्तैश्च विविधैरन्वितं विदुषां प्रियम् ॥ ३७
तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् ।
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः ॥ ३८
'पुण्ये हिमवतः पादे मध्ये गिरिगुहालये ।
विशोध्य देहं धर्मात्मा दर्भसंस्तरमाश्रितः ॥ ३९
शुचिः सनियमो व्यासः शान्तात्मा तपसि स्थितः
भारतस्येतिहासस्य धर्मेणान्वीक्ष्य तां गतिम्॥४०
प्रविश्य योगं ज्ञानेन सोऽपश्यत्सर्वमन्ततः ॥४१'
निष्प्रभेऽस्मिन्निरालोके सर्वतस्तमसा वृते ।
बृहदण्डमभूदेकं प्रजानां बीजमव्ययम् ॥ ४२
युगस्यादिनिमित्तं तन्महद्दिव्यं प्रचक्षते ।
यस्मिंस्तच्छ्रूयते सत्यं ज्योतिर्ब्रह्म सनातनम् ॥४३
अद्भुतं चाप्यचिन्त्यं च सर्वत्र समतां गतम् ।
अव्यक्तं कारणं सूक्ष्मं यत्तत्सदसदात्मकम्॥ ४४
यस्मिन्पितामहो जज्ञे प्रभुरेकः प्रजापतिः ।
ब्रह्मा सुरगुरुः स्थाणुर्मनुः कः परमेष्ठ्यथ ॥ ४५
प्राचेतसस्तथा दक्षो दक्षपुत्राश्च सप्त वै ।
ततः प्रजानां पतयः प्राभवन्नेकविंशतिः ॥ ४६
पुरुषश्चाप्रमेयात्मा यं सर्वऋषयो विदुः ।
विश्वेदेवास्तथाऽऽदित्या वसवोऽथाश्विनावपि४७
यक्षाः साध्याः पिशाचाश्च गुह्यकाः पितरस्तथा ।
ततः प्रसूता विद्वांसः शिष्टा ब्रह्मर्षिसत्तमाः॥४८
महर्षयश्च बहवः सर्वैः समुदिता गुणैः ।
आपो द्यौः पृथिवी वायुरन्तरिक्षं दिशस्तथा॥४९
संवत्सरर्तवो मासाः पक्षाहोरात्रयः क्रमात् ।
यच्चान्यदपि तत्सर्वं संभूतं लोकसाक्षिकम् ॥५०
यदिदं दृश्यते किंचिद्भूतं स्थावरजङ्गमम् ।
पुनः संक्षिप्यते सर्वं जगत्प्राप्ते युगक्षये ॥ ५१
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु॥५२
एवमेतदनाद्यन्तं भूतसंघातकारकम् ।
अनादिनिधनं लोके चक्रं संपरिवर्तते ॥ ५३
त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ।
त्रयस्त्रिंशच्च देवानां सृष्टिः संक्षेपलक्षणा ॥ ५४
दिवः पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः ।
सविता स ऋचीकोऽर्को भानुराशावहो रविः॥५५
पुत्रा विवस्वतः सर्वे मनुस्तेषां तथाऽवरः ।
देवभ्राट् तनयस्तस्य सुभ्राडिति ततः स्मृतः॥ ५६
सुभ्राजस्तु त्रयः पुत्राः प्रजावन्तो बहुश्रुताः ।
दशज्योतिः शतज्योतिः सहस्रज्योतिरेव च॥५७
दशपुत्रसहस्राणि दशज्योतेर्महात्मनः ।
ततो दशगुणाश्चान्ये शतज्योतेरिहात्मजाः ॥५८
भूयस्ततो दशगुणाः सहस्रज्योतिषः सुताः ।
तेभ्योऽयं कुरुवंशश्च यदूनां भरतस्य च ॥ ५९
ययातीक्ष्वाकुवंशश्च राजर्षीणां च सर्वशः ।
संभूता बहवो वंशा भूतसर्गाः सुविस्तराः ॥ ६०
भूतस्थानानि सर्वाणि रहस्यं त्रिविधं च यत् ।
वेदा योगः सविज्ञानो धर्मोऽर्थः काम एव च ६१
धर्मार्थकामयुक्तानि शास्त्राणि विविधानि च ।
लोकयात्राविधानं च सर्वं तद्दृष्टवानृषिः ॥ ६२
'नीतिर्भरतवंशस्य विस्तारश्चैव सर्वशः ।'
इतिहासाः सहव्याख्या विविधाः श्रुतयोऽपि च६३
इह सर्वमनुक्रान्तमुक्तं ग्रन्थस्य लक्षणम् ।
'संक्षेपेणेतिहासस्य ततो वक्ष्यति विस्तरम् ॥' ६४
विस्तीर्यैतन्महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत् ।
इष्टं हि विदुषां लोके समासव्यासधारणम् ॥६५
मन्वादि भारतं केचिदास्तीकादि तथाऽपरे ।
तथोपरिचराद्यन्ये विप्राः सम्यगधीयिरे ॥ ६६

ज्ञानं ज्ञानसाधनं इदं भारतं त्रिषु लोकेषु प्रतिष्ठितम् ॥३६॥ समयैः संकेतैः । छन्दोवृत्तैः त्रिष्टुवादिछन्दोन्तर्गतैरिन्द्रवज्रादिभिर्वृत्तैः ॥ ३७ ॥ यस्मिन् ब्रह्माण्डे ॥ ४५ ॥ प्रतिकल्पं सृष्टेः समाननामरूपत्वमाह यथेति ॥ ५२ ॥ कल्पानामानन्त्यमाह एवमिति ॥ ५३ ॥ एवं जडसृष्टिमुक्त्वा चेतनसृष्टिमाह त्रयस्त्रिंशदिति ॥ ५४ ॥ भूतस्थानानि नृणां वासस्थानानि नगरादीनि ॥ ६१ ॥ इह सर्वमनुक्रान्तं अनुक्रमेण उक्तं॥६४॥ समासः सङ्क्षेपः । व्यासो विस्तारः ॥ ६५ ॥ भारतारम्भे मत-

विविधं संहिताज्ञानं दीपयन्ति मनीषिणः ।
व्याख्यातुं कुशलाः केचिद्ग्रन्थान्धारयितुं परे॥६७
तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् ।
इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः ॥ ६८
पराशरात्मजो विद्वान्ब्रह्मर्षिः संशितव्रतः ।
मातुर्नियोगाद्धर्मात्मा गाङ्गेयस्य च धीमतः ॥६९
क्षेत्रे विचित्रवीर्यस्य कृष्णद्वैपायनः पुरा ।
त्रीनग्नीनिव कौरव्याञ्जनयामास वीर्यवान् ॥७०
उत्पाद्य धृतराष्ट्रं च पाण्डुं विदुरमेव च ।
जगाम तपसे धीमान्पुनरेवाश्रमं प्रति ॥ ७१
तेषु जातेषु वृद्धेषु गतेषु परमां गतिम् ।
अब्रवीद्भारतं लोके मानुषेऽस्मिन्महानृषिः ॥ ७२
जनमेजयेन पृष्टः सन्ब्राह्मणैश्च सहस्रशः ।
शशास शिष्यमासीनं वैशंपायनमन्तिके ॥ ७३
स सदस्यैः सहासीनं श्रावयामास भारतम् ।
कर्मान्तरेषु यज्ञस्य चोद्यमानः पुनः पुनः ॥ ७४
विस्तारं कुरुवंशस्य गान्धार्या धर्मशीलताम् ।
क्षत्तुः प्रज्ञां धृतिं कुन्त्याः सम्यग्द्वैपायनोब्रवीत्७५
वासुदेवस्य माहात्म्यं पाण्डवानां च सत्यताम् ।
दुर्वृत्तं धार्तराष्ट्राणामुक्तवान्भगवानृषिः ॥ ७६
इदं शतसहस्रं तु श्लोकानां पुण्यकर्मणाम् ।
उपाख्यानैः सह ज्ञेयं श्राव्यं भारतमुत्तमम् ॥७७
चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ।
उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः ॥७८
ततोऽध्यर्धशतं भूयः संक्षेपं कृतवानृषिः ।
अनुक्रमणिकाध्यायं वृत्तान्तं सर्वपर्वणाम् ॥ ७९
तस्याख्यानवरिष्ठस्य कृत्वा द्वैपायनः प्रभुः ।
कथमध्यापयानीह शिष्यानित्यन्वचिन्तयत् ८०
तस्य तच्चिन्तितं ज्ञात्वा ऋषेर्द्वैपायनस्य च ।
तत्राजगाम भगवान्ब्रह्मा लोकगुरुः स्वयम् ॥८१
प्रीत्यर्थं तस्य चैवर्षेर्लोकानां हितकाम्यया ।
तं दृष्ट्वा विस्मितो भूत्वा प्राञ्जलिः प्रणतः स्थितः८२
आसनं कल्पयामास सर्वैर्मुनिगणैर्वृतः ॥ ८३
हिरण्यगर्भमासीनं तस्मिंस्तु परमासने ।
परिवृत्यासनाभ्याशे वासवेयः स्थितोऽभवत् ॥८४
अनुज्ञातोऽथ कृष्णस्तु ब्रह्मणा परमेष्ठिना ।
निषसादासनाभ्याशे प्रीयमाणः शुचिस्मितः॥८५
उवाच स महातेजा ब्रह्माणं परमेष्ठिनम् ।
कृतं मयेदं भगवन्काव्यं परमपूजितम् ॥ ८६
ब्रह्मन्वेदरहस्यं च यच्चान्यत्स्थापितं मया ।
साङ्गोपनिषदां चैव वेदानां विस्तरक्रिया ॥ ८७
इतिहासपुराणानामुन्मेषं निमिषं च यत् ।
भूतं भव्यं भविष्यच्च त्रिविधं कालसंज्ञितम्॥८८
जरामृत्युभयव्याधिभावाभावविनिश्चयः ।
विविधस्य च धर्मस्य ह्याश्रमाणां च लक्षणम् ॥ ८९
चातुर्वर्ण्यविधानं च पुराणानां च कृत्स्नशः ।
तपसो ब्रह्मचर्यस्य पृथिव्याश्चन्द्रसूर्ययोः ॥ ९०
ग्रहनक्षत्रताराणां प्रमाणं च युगैः सह ।
ऋचो यजूंषि सामानि वेदाध्यात्मं तथैव च॥९१
न्यायशिक्षा चिकित्सा च दानं पाशुपतं तथा ।
इति नैकाश्रयं जन्म दिव्यमानुषसंज्ञितम् ॥ ९२
तीर्थानां चैव पुण्यानां देशानां चैव कीर्तनम् ।
नदीनां पर्वतानां च वनानां सागरस्य च ॥९३
पुराणां चैव दिव्यानां कल्पानां युद्धकौशलम् ।
वाक्यजातिविशेषाश्च लोकयात्राक्रमश्च यः ॥९४
यच्चापि सर्वगं वस्तु तच्चैव प्रतिपादितम् ।
परं न लेखकः कश्चिदेतस्य भुवि विद्यते ॥ ९५
ब्रह्मोवाच ।
तपोविशिष्टादपि वै वसिष्ठान्मुनिपुंगवात् ।
मन्ये श्रेष्ठतमं त्वां वै रहस्यज्ञानवेदनात् ॥ ९६
जन्मप्रभृति सत्यां ते वेद्मि गां ब्रह्मवादिनीम् ।
त्वया च काव्यमित्युक्तं तस्मात्काव्यं भविष्यति९७

भेदमाह मन्वादीति । मन्वादि मनुर्मन्त्रः नारायणं नमस्कृत्येति । ॐ नमो भगवते वासुदेवायेति वा तदादि । आस्तीकं आस्तीकचरितं तदादि । उपरिचरो वसुः तच्चरितादि वा ॥ ६६ ॥ बह्वर्थत्वाद्विविधं संहिताज्ञानं दीपयन्ति प्रकाशयन्ति

॥ ६७ ॥ मातुः सत्यवत्याः । गाङ्गेयस्य भीष्मस्य ॥ ६९ ॥ क्षेत्रे भार्यासु अम्बिकादिषु ॥ ७० ॥ परमां गतिं मृत्युं ॥७१॥ शशास त्वमेतान् भारतं श्रावयेत्याज्ञापितवान् ॥ ७३ ॥ वसोः अपत्यं स्त्री वासवी तस्याः अपत्यं वासवेयो व्यासः ॥८४॥ कृष्णो

अस्य काव्यस्य कवयो न समर्था विशेषणे ।
विशेषणे गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥ ९८
'जडान्धबधिरोन्मत्तं तमोभूतं जगद्भवेत् ।
यदि ज्ञानहुताशेन त्वया नोज्ज्वलितं भवेत् ॥ ९९
तमसान्धस्य लोकस्य वेष्टितस्य स्वकर्मभिः ।
ज्ञानाञ्जनशलाकाभिर्बुद्धिनेत्रोत्सवः कृतः' १००
धर्मार्थकाममोक्षार्थैः समासव्यासकीर्तनैः ।
त्वया भारतसूर्येण नृणां विनिहतं तमः ॥ १०१
पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाप्रकाशिना ।
नृणां कुमुदसौम्यानां कृतं बुद्धिप्रसादनम् १०२
इतिहासप्रदीपेन मोहावरणघातिना ।
लोकगर्भगृहं कृत्स्नं यथावत्संप्रकाशितम् ॥१०३
संग्रहाध्यायबीजो वै पौलोमास्तीकमूलवान् ।
संभवस्कन्धविस्तारः सभापर्वविटङ्कवान् ॥ १०४
आरण्यपर्वरूपाढ्यो विराटोद्योगसारवान् ।
भीष्मपर्वमहाशाखो द्रोणपर्वपलाशवान् ॥ १०५
कर्णपर्वसितैः पुष्पैः शल्यपर्वसुगन्धिभिः ।
स्त्रीपर्वैषीकविश्रामः शान्तिपर्वमहाफलः ॥ १०६
अश्वमेधामृतरसस्त्वाश्रमस्थानसंश्रयः ।
मौसलश्रुतिसंक्षेपः शिष्टद्विजनिषेवितः ॥ १०७
सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति ।
पर्जन्यइव भूतानामक्षयो भारतद्रुमः ॥ १०८
काव्यस्य लेखनार्थाय गणेशः स्मर्यतां मुने १०९
सौतिरुवाच ।
एवमाभाष्य तं ब्रह्मा जगाम स्वं निवेशनम् ।
भगवान्स जगत्स्रष्टा ऋषिदेवगणैः सह ॥ ११०
ततः सस्मार हेरम्बं व्यासः सत्यवतीसुतः ॥१११
स्मृतमात्रो गणेशानो भक्तचिन्तितपूरकः ।
तत्राजगाम विघ्नेशो वेदव्यासो यतः स्थितः ११२
पूजितश्चोपविष्टश्च व्यासेनोक्तस्तदानघ ।
लेखको भारतस्यास्य भव त्वं गणनायक ॥
मयैव प्रोच्यमानस्य मनसा कल्पितस्य च ॥ ११३
श्रुत्वैतत्प्राह विघ्नेशो यदि मे लेखनी क्षणम् ।
लिखतो नावतिष्ठेत तदा स्यां लेखको ह्यहम् ११४
व्यासोऽप्युवाच तं देवमबुद्ध्वा मा लिख क्वचित् ।
ओमित्युक्त्वा गणेशोपि बभूव किल लेखकः ११५
ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात् ।
यस्मिन्प्रतिज्ञया प्राह मुनिर्द्वैपायनस्त्विदम् ॥ ११६
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ।
अहं वेद्मि शुको वेत्ति संजयो वेत्ति वा न वा ११७
तच्छ्लोककूटमद्यापि ग्रथितं सुदृढं मुने ।
भेत्तुं न शक्यतेऽर्थस्य गूढत्वात्प्रश्रितस्य च ॥ ११८
सर्वज्ञोपि गणेशो यत्क्षणमास्ते विचारयन् ।
तावच्चकार व्यासोपि श्लोकानन्यान्बहूनपि ११९
तस्य वृक्षस्य वक्ष्यामि शाखापुष्पफलोदयम् ।
स्वादुमेध्यरसोपेतमच्छेद्यममरैरपि ॥ १२०
अनुक्रमणिकाध्यायं वृत्तान्तं सर्वपर्वणाम् ।
इदं द्वैपायनः पूर्वं पुत्रमध्यापयच्छुकम् ॥
ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ प्रभुः
षष्टिं शतसहस्राणि चकारान्यां स संहिताम् ।
त्रिंशच्छतसहस्रं च देवलोके प्रतिष्ठितम् ॥ १२२
पित्र्ये पञ्चदश प्रोक्तं रक्षोयक्षे चतुर्दश ।
एकं शतसहस्रं तु मानुषेषु प्रतिष्ठितम् ॥ १२३
नारदोऽश्रावयद्देवानसितो देवलः पितॄन् ।
गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः ॥ १२४
'वैशंपायनविप्रर्षिः श्रावयामास पार्थिवम् ।
पारिक्षितं महात्मानं नाम्ना तु जनमेजयम्' १२५
अस्मिंस्तु मानुषे लोके वैशंपायन उक्तवान् ।
शिष्यो व्यासस्य धर्मात्मा सर्ववेदविदां वरः १२६
एकं शतसहस्रं तु मयोक्तं वै निबोधत ॥ १२७
दुर्योधनो मन्युमयो महाद्रुमः
कर्णः स्कन्धः शकुनिस्तस्य शाखाः ।

---

व्यासः ॥ ८५ ॥ विशेषणे अतिशायने ॥ ९८ ॥ विटङ्काः पक्ष्युपवेशनस्थानानि ॥ १०४ ॥ सारो मज्जा ॥ १०५ ॥ विश्रामः छाया ॥ १०६ ॥ आश्रमस्थानसंश्रयः आश्रमवासिकस्थण्डिलः । मौसलश्रुतिसंक्षेपः मौसलादिग्रन्थः श्रुतिस्थानीयदीर्घशाखान्तः ॥ १०८ ॥ यतः यत्र देशे ॥ ११२ ॥ अबुद्ध्वा अर्थमिति शेषः । ओमित्यङ्गीकारे ॥ ११५ ॥ ग्रन्थ-

दुश्शासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषी । १२८
युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।
माद्रीसुतौ पुष्पफले समृद्धे
मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥ १२९
पाण्डुर्जित्वा बहून्देशान्युधा विक्रमणेन च ।
अरण्ये मृगयाशीलो न्यवसत्सजनस्तथा ॥ १३०
मृगव्यवायनिधनात्कृच्छ्रां प्राप स आपदम् ।
जन्मप्रभृति पार्थानां तत्राचारविधिक्रमः ॥१३१
मात्रोरभ्युपपत्तिश्च धर्मोपनिषदं प्रति ।
धर्मस्य वायोः शक्रस्य देवयोश्च तथाऽश्विनोः १३२
'ततो धर्मोपनिषदं भूत्वा भर्तुः प्रिया पृथा ।
धर्मानिलेन्द्रांस्ताभिः साऽऽजुहाव सुतवाञ्छया॥
तद्दत्तोपनिषन्माद्री चाश्विनावाजुहाव च ।
जाताः पार्थास्ततः सर्वे कुन्त्या माद्र्याश्च मन्त्रतः।'
तापसैः सह संवृद्धा मातृभ्यां परिरक्षिताः ॥१३४
मेध्यारण्येषु पुण्येषु महतामाश्रमेषु च ।
'तेषु जातेषु सर्वेषु पाण्डवेषु महात्मसु ॥ १३५
माद्र्या तु सह संगम्य ऋषिशापप्रभावतः ।
मृतः पाण्डुर्महापुण्ये शतशृङ्गे महागिरौ ॥'१३६
ऋषिभिश्च समानीता धार्तराष्ट्रान्प्रति स्वयम् ।
शिशवश्चाभिरूपाश्च जटिला ब्रह्मचारिणः॥१३७
पुत्राश्च भ्रातरश्चेमे शिष्याश्च सुहृदश्च वः ।
पाण्डवा एत इत्युक्त्वा मुनयोऽन्तर्हितास्ततः ॥
तांस्तैर्निवेदितान्दृष्ट्वा पाण्डवान्कौरवास्तदा ।
शिष्टाश्च वर्णाः पौरा ये ते हर्षाच्चुक्रुशुर्भृशम्१३९
आहुः केचिन्न तस्यैते तस्यैत इति चापरे ।
यदा चिरमृतः पाण्डुः कथं तस्येति चापरे १४०
स्वागतं सर्वथा दिष्ट्या पाण्डोः पश्याम सन्ततिम्।
उच्यतां स्वागतमिति वाचोऽश्रूयन्त सर्वशः १४१
तस्मिन्नुपरते शब्दे दिशः सर्वा निनादयन् ।
अन्तर्हितानां भूतानां निःस्वनस्तुमुलोऽभवत् ॥
पुष्पवृष्टिः शुभा गन्धाः शङ्खदुन्दुभिनिःस्वनाः ।
आसन्प्रवेशे पार्थानां तदद्भुतमिवाभवत् ॥१४३
तत्प्रीत्या चैव सर्वेषां पौराणां हर्षसंभवः ।
शब्द आसीन्महांस्तत्र दिवस्पृक्कीर्तिवर्धनः॥१४४
तेऽधीत्य निखिलान्वेदाञ्शास्त्राणि विविधानि च।
न्यवसन्पाण्डवास्तत्र पूजिता अकुतोभयाः १४५
युधिष्ठिरस्य शौचेन प्रीताः प्रकृतयोऽभवन् ।
धृत्या च भीमसेनस्य विक्रमेणार्जुनस्य च ॥१४६
गुरुशुश्रूषया कुन्त्या यमयोर्विनयेन च ।
तुतोष लोकः सकलस्तेषां शौर्यगुणेन च ॥१४७
समवाये ततो राज्ञां कन्यां भर्तृस्वयंवराम् ।
प्राप्तवानर्जुनः कृष्णां कृत्वा कर्म सुदुष्करम् १४८
ततः प्रभृति लोकेऽस्मिन्पूज्यः सर्वधनुष्मताम् ।
आदित्य इव दुष्प्रेक्ष्यः समरेष्वपि चाभवत्॥१४९
स सर्वान्पार्थिवाञ्जित्वा सर्वांश्च महतो गणान् ।
आजहारार्जुनो राज्ञो राजसूयं महाक्रतुम् ॥१५०
अन्नवान्दक्षिणावांश्च सर्वैः समुदितो गुणैः ।
युधिष्ठिरेण संप्राप्तो राजसूयो महाक्रतुः ॥ १५१
सुनयाद्वासुदेवस्य भीमार्जुनबलेन च ।
घातयित्वा जरासन्धं चैद्यं च बलगर्वितम् १५२
दुर्योधनं समागच्छन्नर्हणानि ततस्ततः ।
मणिकाञ्चनरत्नानि गोहस्त्यश्वधनानि च ॥१५३
विचित्राणि च वासांसि प्रावारावरणानि च ।
कम्बलाजिनरत्नानि राङ्कवास्तरणानि च ॥ १५४
समृद्धां तां तथा दृष्ट्वा पाण्डवानां तदा श्रियम् ।
ईर्ष्यासमुत्थः सुमहांस्तस्य मन्युरजायत ॥ १५५
विमानप्रतिमां तत्र मयेन सुकृतां सभाम् ।

ग्रन्थि ग्रन्थे दुर्भेद्यस्थानं ॥ ११६ ॥ कृच्छ्रां आपदं व्यवायकाले मरिष्यसीत्येवं शापरूपां । तत्र आपदि एवं सत्यामपि पार्थानां पाण्डवानां जन्मप्रभृति आचारविधिक्रमः अभूदिति शेषः ॥ १३१ ॥ आचारविधिक्रममेवाह । मात्रोरिति । मात्रोः कुन्तीमाद्र्योः । धर्मोपनिषदं प्रति आपदि अपत्यार्थे विशिष्टः पुमान्प्रार्थनीय इत्येवंरूपं धर्मरहस्यं प्रति । अभ्युपपत्तिः अङ्गीकारः ॥ १३२ ॥ धार्तराष्ट्रान्धृतराष्ट्रसंबन्धिगृहान् ॥ १३७ ॥ अन्तर्हितानां भूतानां निःस्वनः पाण्डुपुत्रा एवैते इत्येवंरूपा अशरीरवाक् ॥ १४२ ॥ भर्तारं स्वयमेव वृणुत इति भर्तृस्वयंवरां ॥ १४८ ॥ राज्ञो युधिष्ठिरस्य ॥ १५० ॥

पाण्डवानामुपहृतां स दृष्ट्वा पर्यतप्यत ॥ १५६
तत्रावहसितश्चासीत्प्रस्कन्दन्निव संभ्रमात् ।
प्रत्यक्षं वासुदेवस्य भीमेनानभिजातवत् ॥ १५७
स भोगान्विविधान्भुञ्जन्रत्नानि विविधानि च ।
कथितो धृतराष्ट्रस्य विवर्णो हरिणः कृशः ॥१५८
अन्वजानात्ततो द्यूतं धृतराष्ट्रः सुतप्रियः ।
तच्छ्रुत्वा वासुदेवस्य कोपः समभवन्महान् १५९
नातिप्रीतमनाश्चासीद्विवादांश्चान्वमोदत ।
द्यूतादीननयान्घोरान्विविधांश्चाप्युपैक्षत ॥ १६०
निरस्य विदुरं भीष्मं द्रोणं शारद्वतं कृपम् ।
विग्रहे तुमुले तस्मिन्दहन्क्षत्रं परस्परम् ॥ १६१
जयत्सु पाण्डुपुत्रेषु श्रुत्वा सुमहदप्रियम् ।
दुर्योधनमतं ज्ञात्वा कर्णस्य शकुनेस्तथा ॥ १६२
धृतराष्ट्रश्चिरं ध्यात्वा संजयं वाक्यमब्रवीत् ।
शृणु संजय सर्वं मे नचासूयितुमर्हसि ॥ १६३
श्रुतवानसि मेधावी बुद्धिमान्प्राज्ञसंमतः ।
न विग्रहे मम मतिर्न च प्रीये कुलक्षये ॥ १६४
न मे विशेषः पुत्रेषु स्वेषु पाण्डुसुतेषु वा ।
वृद्धं मामभ्यसूयन्ति पुत्रा मन्युपरायणाः ॥१६५
अहं त्वचक्षुः कार्पण्यात्पुत्रप्रीत्या सहामि तत् ।
मुह्यन्तं चानुमुह्यामि दुर्योधनमचेतनम् ॥ १६६
राजसूये श्रियं दृष्ट्वा पाण्डवस्य महौजसः ।
तच्चावहसनं प्राप्य सभारोहणदर्शने ॥ १६७
अमर्षितः स्वयं जेतुमशक्तः पाण्डवान्रणे ।
निरुत्साहश्च संप्राप्तुं सुश्रियं क्षत्रियोऽपि सन् १६८
गान्धारराजसहितश्छद्मद्यूतममन्त्रयत् ।
तत्र यद्यद्यथा ज्ञातं मया संजय तच्छृणु ॥ १६९
श्रुत्वा तु मम वाक्यानि बुद्धियुक्तानि तत्त्वतः ।
ततो ज्ञास्यसि मां सौते प्रज्ञाचक्षुषमित्युत १७०
यदाऽश्रौषं धनुरायम्य चित्रं
  विद्धं लक्ष्यं पातितं वै पृथिव्याम् ।
कृष्णां हृतां प्रेक्षतां सर्वराज्ञां
  तदा नाशंसे विजयाय संजय ॥ १७१
यदाऽश्रौषं द्वारकायां सुभद्रां
  प्रसह्योढां माधवीमर्जुनेन ।
इन्द्रप्रस्थं वृष्णिवीरौ च यातौ
  तदा नाशंसे विजयाय संजय ॥ १७२
यदाऽश्रौषं देवराजं प्रवृष्टं
  शरैर्दिव्यैर्वारितं चार्जुनेन ।
अग्निं तथा तर्पितं खाण्डवे च
  तदा नाशंसे विजयाय संजय ॥ १७३
यदाऽश्रौषं जातुषाद्वेश्मनस्ता-
  न्मुक्तान्पार्थान्पञ्च कुन्त्या समेतान् ।
युक्तं चैषां विदुरं स्वार्थसिद्ध्यै
  तदा नाशंसे विजयाय संजय ॥ १७४
यदाऽश्रौषं द्रौपदीं रङ्गमध्ये
  लक्ष्यं भित्त्वा निर्जितामर्जुनेन ।
शूरान्पञ्चालान्पाण्डवेयांश्च युक्तां-
  स्तदा नाशंसे विजयाय संजय ॥ १७५
यदाऽश्रौषं मागधानां वरिष्ठं
  जरासन्धं क्षत्रमध्ये ज्वलन्तम् ।
दोर्भ्यां हतं भीमसेनेन गत्वा
  तदा नाशंसे विजयाय संजय ॥ १७६
यदाऽश्रौषं दिग्जये पाण्डुपुत्रै-
  र्वशीकृतान्भूमिपालान्प्रसह्य ।
महाक्रतुं राजसूयं कृतं च
  तदा नाशंसे विजयाय संजय ॥ १७७
यदाऽश्रौषं द्रौपदीमश्रुकण्ठीं
  सभां नीतां दुःखितामेकवस्त्राम् ।
रजस्वलां नाथवतीमनाथव-
  त्तदा नाशंसे विजयाय संजय ॥ १७८
यदाऽश्रौषं वाससां तत्र राशिं
  समाक्षिपत्कितवो मन्दबुद्धिः ।
दुःशासनो गतवान्नैव चान्तं
  तदा नाशंसे विजयाय संजय ॥ १७९
यदाऽश्रौषं हृतराज्यं युधिष्ठिरं
  पराजितं सौबलेनाक्षवत्याम् ।

अनभिजातवत् ग्रामीणवत् ॥ १५७ ॥ धृतराष्ट्रो यद्विवादानन्वमोदत यच्चानयानुपैक्षत तस्माद्वासुदेवस्य कोपः समभवत् ॥ १६० ॥ दहन् अदहत् ॥ १६१ ॥ प्रवृष्टं वर्षणे प्रवृत्तं ॥ १७३ ॥

अन्वागतं भ्रातृभिरप्रमेयै-
स्तदा नाशंसे विजयाय संजय ॥ १८०

यदाऽश्रौषं विविधास्तत्र चेष्टा
धर्मात्मनां प्रस्थितानां वनाय ।
ज्येष्ठप्रीत्या क्लिश्यतां पाण्डवानां
तदा नाशंसे विजयाय संजय ॥ १८१

यदाऽश्रौषं स्नातकानां सहस्रै-
रन्वागतं धर्मराजं वनस्थम् ।
भिक्षाभुजां ब्राह्मणानां महात्मनां
तदा नाशंसे विजयाय संजय ॥ १८२

यदाऽश्रौषमर्जुनं देवदेवं
किरातरूपं त्र्यम्बकं तोष्य युद्धे ।
अवाप्तवन्तं पाशुपतं महास्त्रं
तदा नाशंसे विजयाय संजय ॥ १८३

'यदाऽश्रौषं वनवासेन पार्था-
न्समागतान्महर्षिभिः पुराणैः ।
उपास्यमानान्सगणैर्जातसख्यां-
स्तदा नाशंसे विजयाय संजय ॥' १८४

यदाऽश्रौषं त्रिदिवस्थं धनंजयं
शक्रात्साक्षाद्दिव्यमस्त्रं यथावत् ।
अधीयानं शंसितं सत्यसन्धं
तदा नाशंसे विजयाय संजय ॥ १८५

यदाऽश्रौषं कालकेयास्ततस्ते
पौलोमानो वरदानाच्च दृप्ताः ।
देवैरजेया निर्जिताश्चार्जुनेन
तदा नाशंसे विजयाय संजय ॥ १८६

यदाऽश्रौषमसुराणां वधार्थे
किरीटिनं यान्तममित्रकर्शनम् ।
कृतार्थं चाप्यागतं शक्रलोका-
त्तदा नाशंसे विजयाय संजय ॥ १८७

'यदाऽश्रौषं तीर्थयात्राप्रवृत्तं
पाण्डोः सुतं सहितं लोमशेन ।
बृहदश्वादक्षहृदयं च प्राप्तं
तदा नाशंसे विजयाय संजय ॥' १८८

यदाऽश्रौषं वैश्रवणेन सार्धं
समागतं भीममन्यांश्च पार्थान् ।
तस्मिन्देशे मानुषाणामगम्ये
तदा नाशंसे विजयाय संजय ॥ १८९

यदाऽश्रौषं घोषयात्रागतानां
बन्धं गन्धर्वैर्मोक्षणं चार्जुनेन ।
स्वेषां सुतानां कर्णबुद्धौ रतानां
तदा नाशंसे विजयाय संजय ॥ १९०

यदाऽश्रौषं यक्षरूपेण धर्मं
समागतं धर्मराजेन सूत ।
प्रश्नान्कांश्चिद्विब्रुवाणं च सम्यक्
तदा नाशंसे विजयाय संजय ॥ १९१

यदाऽश्रौषं न विदुर्मामकास्तान्
प्रच्छन्नरूपान्वसतः पाण्डवेयान् ।
विराटराष्ट्रे सह कृष्णया च
तदा नाशंसे विजयाय संजय ॥ १९२

'यदाऽश्रौषं कीचकानां वरिष्ठं
निषूदितं भ्रातृशतेन सार्धम् ।
द्रौपद्यर्थे भीमसेनेन सङ्ख्ये
तदा नाशंसे विजयाय संजय ॥' १९३

यदाऽश्रौषं मामकानां वरिष्ठा-
न्धनंजयेनैकरथेन भग्नान् ।
विराटराष्ट्रे वसता महात्मना
तदा नाशंसे विजयाय संजय ॥ १९४

यदाऽश्रौषं सत्कृतां मत्स्यराज्ञा
सुतां दत्तामुत्तरामर्जुनाय ।
तां चार्जुनः प्रत्यगृह्णात्सुतार्थे
तदा नाशंसे विजयाय संजय ॥ १९५

यदाऽश्रौषं निर्जितस्याधनस्य
प्रव्राजितस्य स्वजनात्प्रच्युतस्य ।
अक्षौहिणीः सप्त युधिष्ठिरस्य
तदा नाशंसे विजयाय संजय ॥ १९६

यदाऽश्रौषं माधवं वासुदेवं
सर्वात्मना पाण्डवार्थे निविष्टम् ।

चेष्टाः बाहुवीक्षणाद्याः ॥ १८१ ॥ स्नातकानां समापितविद्यानां ब्राह्मणानां ॥ १८२ ॥ शंसितं प्रशस्यं ॥ १८५ ॥

यस्येमां गां विक्रममेकमाहु-
स्तदा नाशंसे विजयाय संजय ॥ १९७
यदाऽश्रौषं नरनारायणौ तौ
कृष्णार्जुनौ वदतो नारदस्य ।
अहं द्रष्टा ब्रह्मलोके च सम्यक्
तदा नाशंसे विजयाय संजय ॥ १९८
यदाऽश्रौषं लोकहिताय कृष्णं
शमार्थिनमुपयातं कुरूणाम् ।
शमं कुर्वाणमकृतार्थं च यातं
तदा नाशंसे विजयाय संजय ॥ १९९
यदाऽश्रौषं कर्णदुर्योधनाभ्यां
बुद्धिं कृतां निग्रहे केशवस्य ।
तं चात्मानं बहुधा दर्शयानं
तदा नाशंसे विजयाय संजय ॥ २००
यदाऽश्रौषं वासुदेवे प्रयाते
रथस्यैकामग्रतस्तिष्ठमानाम् ।
आर्तां पृथां सान्त्वितां केशवेन
तदा नाशंसे विजयाय संजय ॥ २०१
यदाऽश्रौषं मन्त्रिणं वासुदेवं
तथा भीष्मं शान्तनवं च तेषाम् ।
भारद्वाजं चाशिषोऽनुब्रुवाणं
तदा नाशंसे विजयाय संजय ॥ २०२
यदा कर्णो भीष्ममुवाच वाक्यं
नाहं योत्स्ये युध्यमाने त्वयीति ।
हित्वा सेनामपचक्राम चापि
तदा नाशंसे विजयाय संजय ॥ २०३
यदाऽश्रौषं वासुदेवार्जुनौ तौ
तथा धनुर्गाण्डिवमप्रमेयम् ।
त्रीण्युग्रवीर्याणि समागतानि
तदा नाशंसे विजयाय संजय ॥ २०४
यदाऽश्रौषं कश्मलेनाभिपन्ने
रथोपस्थे सीदमानेऽर्जुने वै ।
कृष्णं लोकान्दर्शयानं शरीरे
तदा नाशंसे विजयाय संजय ॥ २०५
यदाऽश्रौषं भीष्ममममित्रकर्शनं
निघ्नन्तमाजावयुतं रथानाम् ।
नैषां कश्चिद्वध्यते ख्यातरूप-
स्तदा नाशंसे विजयाय संजय ॥ २०६
यदाऽश्रौषं चापगेयेन सङ्ख्ये
स्वयं मृत्युं विहितं धार्मिकेण ।
तच्चाकार्षुः पाण्डवेयाः प्रहृष्टा-
स्तदा नाशंसे विजयाय संजय ॥ २०७
यदाऽश्रौषं भीष्ममत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
शिखण्डिनं पुरतः स्थापयित्वा
तदा नाशंसे विजयाय संजय ॥ २०८
यदाऽश्रौषं शरतल्पे शयानं
वृद्धं वीरं सादितं चित्रपुङ्खैः ।
भीष्मं कृत्वा सोमकानल्पशेषा-
स्तदा नाशंसे विजयाय संजय ॥ २०९
यदाऽश्रौषं शान्तनवे शयाने
पानीयार्थे चोदितेनार्जुनेन ।
भूमिं भित्त्वा तर्पितं तत्र भीष्मं
तदा नाशंसे विजयाय संजय ॥ २१०
यदाश्रौषं शुक्रसूर्यौ च युक्तौ
कौन्तेयानामनुलोमौ जयाय ।
नित्यं चास्माञ्श्वापदा भीषयन्ति
तदा नाशंसे विजयाय संजय ॥ २११
यदा द्रोणो विविधानस्त्रमार्गा-
न्विदर्शयन्समरे चित्रयोधी ।
न पाण्डवाञ्श्रेष्ठतरान्निहन्ति
तदा नाशंसे विजयाय संजय ॥ २१२
यदाऽश्रौषं चास्मदीयान्महारथा-
न्व्यवस्थितानर्जुनस्यान्तकाय ।

इमां गां पृथिवीं यस्य वासुदेवस्य एकं विक्रमं पदमात्रमाहुः ॥ १९७ ॥ यौ नरनारायणौ ब्रह्मलोके अहं द्रष्टा अद्राक्षं तौ कृष्णार्जुनौ अर्जुनकृष्णौ इति वदतो नारदस्य नारदात् ॥ १९८ ॥ बहुधा विश्वरूपत्वेन ॥ २०० ॥ तेषां पाण्डवानां ॥ २०२ ॥ सोमकानेव अल्पशेषान्कृत्वा ॥ २०९ ॥ चोदितमर्जुनं च । गां भित्त्वाम्भो वारुणेनाददाने इति पाठान्तरं ॥ २१० ॥

संशप्तकान्निहतानर्जुनेन
तदा नाशंसे विजयाय संजय ॥ २१३
यदाऽश्रौषं व्यूहमभेद्यमन्यै-
र्भारद्वाजेनात्तशस्त्रेण गुप्तम् ।
भित्त्वा सौभद्रं वीरमेकं प्रविष्टं
तदा नाशंसे विजयाय संजय ॥ २१४
यदाऽभिमन्युं परिवार्य बालं
सर्वे हत्वा हृष्टरूपा बभूवुः ।
महारथाः पार्थमशक्नुवन्त-
स्तदा नाशंसे विजयाय संजय ॥ २१५
यदाऽश्रौपमभिमन्युं निहत्य
हर्षान्मूढान्क्रोशतो धार्तराष्ट्रान् ।
क्रोधादुक्तं सैन्धवे चार्जुनेन
तदा नाशंसे विजयाय संजय ॥ २१६
यदाऽश्रौपं सैन्धवार्थे प्रतिज्ञां
प्रतिज्ञातां तद्वधायार्जुनेन ।
सत्यां तीर्णां शत्रुमध्ये च तेन
तदा नाशंसे विजयाय संजय ॥ २१७
यदाऽश्रौपं श्रान्तहये धनंजये
मुक्त्वा हयान्पाययित्वोपवृत्तान् ।
पुनर्युक्त्वा वासुदेवं प्रयातं
तदा नाशंसे विजयाय संजय ॥ २१८
यदाऽश्रौपं वाहनेष्वक्षमेषु
रथोपस्थे तिष्ठता पाण्डवेन ।
सर्वान्योधान्वारितानर्जुनेन
तदा नाशंसे विजयाय संजय ॥ २१९
यदाऽश्रौषं नागबलैः सुदुःसहं
द्रोणानीकं युयुधानं प्रमथ्य ।
यातं वार्ष्णेयं यत्र तौ कृष्णपार्थौ
तदा नाशंसे विजयाय संजय ॥ २२०
यदाऽश्रौषं कर्णमासाद्य मुक्तं
वधाद्भीमं कुत्सयित्वा वचोभिः ।
धनुष्कोट्याऽऽतुद्य कर्णेन वीरं
तदा नाशंसे विजयाय संजय ॥ २२१

यदा द्रोणः कृतवर्मा कृपश्च
कर्णो द्रौणिर्मद्रराजश्च शूरः ।
अमर्षयन्सैन्धवं वध्यमानं
तदा नाशंसे विजयाय संजय ॥ २२२
यदाऽश्रौषं देवराजेन दत्तां
दिव्यां शक्तिं व्यंसितां माधवेन ।
घटोत्कचे राक्षसे घोररूपे
तदा नाशंसे विजयाय संजय ॥ २२३
यदाऽश्रौषं कर्णघटोत्कचाभ्यां
युद्धे मुक्तां सूतपुत्रेण शक्तिम् ।
यया वध्यः समरे सव्यसाची
तदा नाशंसे विजयाय संजय ॥ २२४
यदाऽश्रौषं द्रोणमाचार्यमेकं
धृष्टद्युम्नेनाभ्यतिक्रम्य धर्मम् ।
रथोपस्थे प्रायगतं विशस्तं
तदा नाशंसे विजयाय संजय ॥ २२५
यदाऽश्रौषं द्रौणिना द्वैरथस्थं
माद्रीसुतं नकुलं लोकमध्ये ।
समं युद्धे मण्डलेभ्यश्चरन्तं
तदा नाशंसे विजयाय संजय ॥ २२६
यदा द्रोणे निहते द्रोणपुत्रो
नारायणं दिव्यमस्त्रं विकुर्वन् ।
नैषामन्तं गतवान्पाण्डवानां
तदा नाशंसे विजयाय संजय ॥ २२७
यदाऽश्रौषं भीमसेनेन पीतं
रक्तं भ्रातुर्युधि दुःशासनस्य ।
निवारितं नान्यतमेन भीमं
तदा नाशंसे विजयाय संजय ॥ २२८
यदाऽश्रौषं कर्णमत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
तस्मिन्भ्रातॄणां विग्रहे देवगुह्ये
तदा नाशंसे विजयाय संजय ॥ २२९
यदाऽश्रौषं द्रोणपुत्रं च शूरं
दुःशासनं कृतवर्माणमुग्रम् ।

व्यंसितां व्यर्थीकृतां ॥ २२३ ॥

युधिष्ठिरं धर्मराजं जयन्तं
तदा नाशंसे विजयाय संजय ॥ २३०
यदाऽश्रौषं निहतं मद्रराजं
रणे शूरं धर्मराजेन सूत ।
सदा सङ्ग्रामे स्पर्धते यस्तु कृष्णं
तदा नाशंसे विजयाय संजय ॥ २३१
यदाऽश्रौषं कलहद्यूतमूलं
मायाबलं सौबलं पाण्डवेन ।
हतं सङ्ग्रामे सहदेवेन पापं
तदा नाशंसे विजयाय संजय ॥ २३२
यदाऽश्रौषं श्रान्तमेकं शयानं
ह्रदं गत्वा स्तम्भयित्वा तदम्भः ।
दुर्योधनं विरथं भग्नशक्तिं
तदा नाशंसे विजयाय संजय ॥ २३३
यदाऽश्रौषं पाण्डवांस्तिष्ठमानान्
गत्वा ह्रदे वासुदेवेन सार्धम् ।
अमर्षणं धर्षयतः सुतं मे
तदा नाशंसे विजयाय संजय ॥ २३४
यदाऽश्रौषं विविधांश्चित्रमार्गान्
गदायुद्धे मण्डलशश्चरन्तम् ।
मिथ्या हतं वासुदेवस्य बुद्ध्या
तदा नाशंसे विजयाय संजय ॥ २३५
यदाऽश्रौषं द्रोणपुत्रादिभिस्तै-
र्हतान्पञ्चालान्द्रौपदेयांश्च सुप्तान् ।
कृतं बीभत्समयशस्यं च कर्म
तदा नाशंसे विजयाय संजय ॥ २३६
यदाऽश्रौषं भीमसेनानुयाते-
नाश्वत्थाम्ना परमास्त्रं प्रयुक्तम् ।
क्रुद्धेनैषीकमवधीद्येन गर्भं
तदा नाशंसे विजयाय संजय ॥ २३७
यदाऽश्रौषं ब्रह्मशिरोऽर्जुनेन
स्वस्तीत्युक्त्वाऽस्त्रमस्त्रेण शान्तम् ।
अश्वत्थाम्ना मणिरत्नं च दत्तं
तदा नाशंसे विजयाय संजय ॥ २३८

क्रुद्धेनैषीकं चावधीद्यत्र गर्भं इति पाठान्तरम् ॥ २३७ ॥

यदाऽश्रौषं द्रोणपुत्रेण गर्भे
वैराट्या वै पात्यमाने महास्त्रैः ।
संजीवयामीति हरेः प्रतिज्ञां
तदा नाशंसे विजयाय संजय ॥ २३९
द्वैपायनः केशवो द्रोणपुत्रं
परस्परेणाभिशापैः शशाप ।
बुद्ध्वा चाहं बुद्धिहीनोऽद्य सूत
संतप्ये वै पुत्रपौत्रैश्च हीनः ॥ २४०
शोच्या गान्धारी पुत्रपौत्रैर्विहीना
तथा वध्वा पितृभिर्भ्रातृभिश्च ।
कृतं कार्यं दुष्करं पाण्डवेयैः
प्राप्तं राज्यमसपत्नं पुनस्तैः ॥ २४१
कष्टं युद्धे दश शेषाः श्रुता मे
त्रयोऽस्माकं पाण्डवानां च सप्त ।
द्व्यूना विंशतिराहताऽक्षौहिणीनां
तस्मिन्सङ्ग्रामे भैरवे क्षत्रियाणाम् ॥ २४२
तमस्त्वतीव विस्तीर्णं मोह आविशतीव माम् ।
संज्ञां नोपलभे सूत मनो विह्वलतीव मे ॥ २४३
सौतिरुवाच ।
इत्युक्त्वा धृतराष्ट्रोऽथ विलप्य बहु दुःखितः ।
मूर्च्छितः पुनराश्वस्तः संजयं वाक्यमब्रवीत् २४४
धृतराष्ट्र उवाच ।
संजयैवं गते प्राणांस्त्यक्तुमिच्छामि मा चिरम् ।
स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे २४५
सौतिरुवाच ।
तं तथा वादिनं दीनं विलपन्तं महीपतिम् ।
निःश्वसन्तं यथा नागं मुह्यमानं पुनः पुनः २४६
गावल्गणिरिदं धीमान्महार्थं वाक्यमब्रवीत् ।
संजय उवाच ।
श्रुतवानसि वै राजन्महोत्साहान्महाबलान् २४७
द्वैपायनस्य वदतो नारदस्य च धीमतः ।
महत्सु राजवंशेषु गुणैः समुदितेषु च ॥ २४८
जातान्दिव्यास्त्रविदुषः शक्रप्रतिमतेजसः ।
धर्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वाप्तदक्षिणैः २४९

संसिँल्लोके यशः प्राप्य ततः कालवशं गतान् ।
शैब्यं महारथं वीरं सृंजयं जयतां वरम् ॥ २५०
सुहोत्रं रन्तिदेवं च काक्षीवन्तमथौशिजम् ।
बाह्लीकं दमनं चैद्यं शर्यातिमजितं नलम् २५१
विश्वामित्रममित्रघ्नमम्बरीषं महाबलम् ।
मरुत्तं मनुमिक्ष्वाकुं गयं भरतमेव च ॥ २५२
रामं दाशरथिं चैव शशबिन्दुं भगीरथम् ।
कृतवीर्यं महाभागं तथैव जनमेजयम् ॥ २५३
ययातिं शुभकर्माणं देवैर्यो याजितः स्वयम् ।
चैत्ययूपाङ्किता भूमिर्यस्येयं सवनाकरा ॥ २५४
इति राज्ञां चतुर्विंशन्नारदेन सुरर्षिणा ।
पुत्रशोकाभितप्ताय पुरा श्वैत्याय कीर्तितम् २५५
तेभ्यश्चान्ये गताः पूर्वं राजानो बलवत्तराः ।
महारथा महात्मानः सर्वैः समुदिता गुणैः २५६
पूरुः कुरुर्यदुः शूरो विष्वगश्वो महाद्युतिः ।
अणुहो युवनाश्वश्च ककुत्स्थो विक्रमी रघुः २५७
विजयो वीतिहोत्रोऽङ्गो भवः श्वेतो बृहद्गुरुः ।
उशीनरः शतरथः कङ्को दुलिदुहो द्रुमः ॥ २५८
दम्भोद्भवः परो वेनः सगरः संकृतिर्निमिः ।
अजेयः परशुः पुण्ड्रः शंभुर्देवावृधोऽनघः ॥ २५९
देवाह्वयः सुप्रतिमः सुप्रतीको बृहद्रथः ।
महोत्साहो विनीतात्मा सुक्रतुर्नैषधो नलः २६०
सत्यव्रतः शान्तभयः सुमित्रः सुबलः प्रभुः ।
जानुजङ्घोऽनरण्योऽर्कः प्रियभृत्यः शुचिव्रतः २६१
बलबन्धुर्निरामर्दः केतुशृङ्गो बृहद्बलः ।
धृष्टकेतुर्बृहत्केतुर्दीप्तकेतुर्निरामयः ॥ २६२
अविक्षिच्चपलो धूर्तः कृतबन्धुर्दृढेषुधिः ।
महापुराणसंभाव्यः प्रत्यङ्गः परहा श्रुतिः ॥ २६३
एते चान्ये च राजानः शतशोऽथ सहस्रशः ।
श्रूयन्ते शतशश्चान्ये सङ्ख्याताश्चैव पद्मशः ॥ २६४
हित्वा सुविपुलान्भोगान्बुद्धिमन्तो महाबलाः ।
राजानो निधनं प्राप्तास्तव पुत्रैर्महत्तराः ॥ २६५
येषां दिव्यानि कर्माणि विक्रमस्त्याग एव च ।
माहात्म्यमपि चास्तिक्यं सत्यं शौचं दयाऽर्जवम्
विद्वद्भिः कथ्यते लोके पुराणैः कविसत्तमैः ।
सर्वर्द्धिगुणसंपन्नास्ते चापि निधनं गताः ॥ २६७
तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना ।
लुब्धा दुर्वृत्तभूयिष्ठा न ताञ्छोचितुमर्हसि २६८
श्रुतवानसि मेधावी बुद्धिमान्प्राज्ञसंमतः ।
येषां शास्त्रानुगा बुद्धिर्न ते मुह्यन्ति भारत ॥ २६९
निग्रहानुग्रहौ चापि विदितौ ते नराधिप ।
नात्यन्तमेवानुवृत्तिः कार्या ते पुत्ररक्षणे ॥ २७०
भवितव्यं तथा तच्च नानुशोचितुमर्हसि ।
दैवं पुरुषकारेण को निवर्तितुमर्हति ॥ २७१
विधातृविहितं मार्गं न कश्चिदतिवर्तते ।
कालमूलमिदं सर्वं भावाभावौ सुखासुखे ॥ २७२
कालः सृजति भूतानि कालः संहरते प्रजाः ।
संहरन्तं प्रजाः कालं कालः शमयते पुनः ॥ २७३
कालो विकुरुते भावान्सर्वाँल्लोके शुभाशुभान् ।
कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः २७४
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ।
कालः सर्वेषु भूतेषु चरत्यविधृतः समः ॥ २७५
अतीतानागता भावा ये च वर्तन्ति सांप्रतम् ।
तान्कालनिर्मितान्बुद्ध्वा न संज्ञां हातुमर्हसि २७६

सौतिरुवाच ।

इत्येवं पुत्रशोकार्तं धृतराष्ट्रं जनेश्वरम् ।
आश्वास्य स्वस्थमकरोत्सूतो गावल्गणिस्तदा २७७
धृतराष्ट्रोऽपि तच्छ्रुत्वा धृतिमेव समाश्रयत् ।
दिष्ट्येदमागतमिति मत्त्वा स प्राज्ञसत्तमः ॥ २७८
लोकानां च हितार्थाय कारुण्यान्मुनिसत्तमः ।
अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् २७९
विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः ।
भारताध्ययनं पुण्यमपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥ २८०
देवा देवर्षयो ह्यत्र तथा ब्रह्मर्षयोऽमलाः ।
कीर्त्यन्ते शुभकर्माणस्तथा यक्षा महोरगाः ॥ २८१
भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥ २८२

पूयन्ते नश्यन्ति ॥ २८० ॥

शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् ।
यस्य दिव्यानि कर्माणि कथयन्ति मनीषिणः२८३
असत्सत्सदसच्चैव यस्माद्विश्वं प्रवर्तते ।
सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः ॥ २८४
अध्यात्मं श्रूयते यत्र पञ्चभूतगुणात्मकम् ।
अव्यक्तादि परं यच्च स एव परिगीयते ॥ २८५
यं ध्यायन्ति सदा मुक्ता ध्यानयोगबलान्विताः ।
प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम्२८६
श्रद्दधानः सदा युक्तः सदा धर्मपरायणः ।
आसेवन्निममध्यायं नरः पापात्प्रमुच्यते ॥ २८७
अनुक्रमणिकाध्यायं भारतस्येममादितः ।
आस्तिकः सततं शृण्वन्न कृच्छ्रेष्ववसीदति २८८
उभे सन्ध्ये जपन्किंचित्सद्यो मुच्येत किल्बिषात् ।
अनुक्रमण्या यावत्स्यादह्ना रात्र्या च संचितम्२८९
भारतस्य वपुर्ह्येतत्सत्यं चामृतमेव च ।
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ॥२९०
आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा ।
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् २९१
यथैतानीतिहासानां तथा भारतमुच्यते ।
यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः॥२९२
अक्षय्यमन्नपानं वै पितॄंस्तस्योपतिष्ठते ।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ २९३
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।
कार्ष्णं वेदमिमं विद्वाञ्श्रावयित्वार्थमश्नुते ॥२९४
भ्रूणहत्यादिकं चापि पापं जह्यादसंशयम् ।
य इमं शुचिरध्यायं पठेत्पर्वणि पर्वणि ॥ २९५
अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः ।
यश्चैनं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः ॥२९६
स दीर्घमायुः कीर्तिं च स्वर्गतिं चाप्नुयान्नरः ।
एकतश्चतुरो वेदा भारतं चैतदेकतः ॥ २९७
पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम् ।
चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा २९८
तदाप्रभृति लोकेऽस्मिन्महाभारतमुच्यते ।
महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम् २९९
महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ ३००
तपो नकल्कोऽध्ययनं नकल्कः
स्वाभाविको वेदविधिर्नकल्कः ।
प्रसह्य वित्ताहरणं नकल्क-
स्तान्येव भावोपहतानि कल्कः ॥ ३०१

इति श्रीमन्महाभारते आदिपर्वणि अनुक्रमणिकापर्वणि प्रथमोऽध्यायः ॥ १ ॥

## अनुक्रमणिकापर्व समाप्तम् ॥

---

कार्ष्णं कृष्णेन व्यासेन प्रोक्तं ॥ २९४ ॥ ननु वेदेभ्यः कथमिदमधिकं अत्र युद्धप्रधानानां कर्मणां बन्धनहेतूनां कथनादुपनिषदि तावन्मोक्षसाधनानां धर्माणां ब्रह्मणश्च प्रतिपादनादिति चेत्तत्राह । तप इति । तपः कृच्छ्रचान्द्रायणादि नकल्कः पापनाशकं । स्वाभाविकः स्वस्ववर्णाश्रमादिपुरस्कारेण विहितः । वेदविधिः वेदोक्तो विधिः सन्ध्योपासनादिः । प्रसह्य प्रकर्षेण सोढ्वा क्षुधादिदुःखमपि सोढ्वा । वित्तस्य आहरणं शिलोञ्छादिना अर्जनं । तान्येव तपआदीन्येव भावेन फलानुसन्धानेन उपहतानि प्रतिषिद्धानि । कल्कः पापहेतुः । तथाचात्रापि मोक्षधर्मादिषु तत्रतत्र निष्कामकर्मणां प्रतिपादनं ब्रह्मनिरूपणं चास्त्येव । अतो वेदादप्युत्तमं भारतं ॥ ३०१ ॥ इति टिप्पणे प्रथमोऽध्यायः ॥ १ ॥

# (अथ पर्वसंग्रहपर्व ॥ २ ॥)

## द्वितीयोऽध्यायः ॥ २ ॥

समन्तपञ्चकाख्यानं ॥ १ ॥ अक्षौहिण्यादिपरिमाणं ॥ २ ॥ आदिपर्वादिसर्वपर्वणां संक्षेपेण वृत्तान्तकथनं ॥ ३ ॥ भारतश्रवणफलकथनं ॥ ४ ॥

---

ऋषय ऊचुः ।
समन्तपञ्चकमिति यदुक्तं सूतनन्दन ।
एतत्सर्वं यथातत्त्वं श्रोतुमिच्छामहे वयम् ॥ १
सौतिरुवाच ।
शृणुध्वं मम भो विप्रा ब्रुवतश्च कथाः शुभाः ।
समन्तपञ्चकाख्यं च श्रोतुमर्हथ सत्तमाः ॥ २
त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृतां वरः ।
असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः ॥ ३
स सर्वं क्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥ ४
स तेषु रुधिराम्भःसु ह्रदेषु क्रोधमूर्च्छितः ।
पितॄन्संतर्पयामास रुधिरेणेति नः श्रुतम् ॥ ५
अथर्चीकादयोऽभ्येत्य पितरो राममब्रुवन् ।
राम राम महाभाग प्रीताः स्म तव भार्गव ॥ ६
अनया पितृभक्त्या च विक्रमेण तव प्रभो ।
वरं वृणीष्व भद्रं ते यमिच्छसि महाद्युते ॥ ७
राम उवाच ।
यदि मे पितरः प्रीता यद्यनुग्राह्यता मयि ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ॥ ८
अतश्च पापान्मुच्येऽहमेष मे प्रार्थितो वरः ।
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ ९
एवं भविष्यतीत्येवं पितरस्तमथाब्रुवन् ।
तं क्षमस्वेति निषिषिधुस्ततः स विरराम ह ॥ १०
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम् ।
समन्तपञ्चकमिति पुण्यं तत्परिकीर्तितम् ॥ ११
येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते ।
तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥ १२
अन्तरे चैव संप्राप्ते कलिद्वापरयोरभूत् ।
समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः ॥ १३
तस्मिन्परमधर्मिष्ठे देशे भूदोषवर्जिते ।
अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया ॥ १४
समेत्य तं द्विजास्ताश्च तत्रैव निधनं गताः ।
एतन्नामाभिनिर्वृत्तं तस्य देशस्य वै द्विजाः ॥ १५
पुण्यश्च रमणीयश्च स देशो वः प्रकीर्तितः ।
तदेतत्कथितं सर्वं मया ब्राह्मणसत्तमाः ॥
यथा देशः स विख्यातस्त्रिषु लोकेषु सुव्रताः ॥ १६
ऋषय ऊचुः ।
अक्षौहिण्य इति प्रोक्तं यत्त्वया सूतनन्दन ।
एतदिच्छामहे श्रोतुं सर्वमेव यथातथम् ॥ १७
अक्षौहिण्याः परीमाणं नराश्वरथदन्तिनाम् ।
यथावच्चैव नो ब्रूहि सर्वं हि विदितं तव ॥ १८
सौतिरुवाच ।
एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ १९
पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः ।
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ २०
त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः ।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ २१
चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी ।
अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥ २२
अक्षौहिण्याः प्रसंख्याता रथानां द्विजसत्तमाः ।
संख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ २३
शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः ।
गजानां च परीमाणमेतदेव विनिर्दिशेत् ॥ २४

---

क्षत्रं क्षत्रियजातिं । अमर्षः स्वपितुः क्षत्रियेण हतत्वाज्जातस्य क्रोधस्यासहनं तेन चोदितः प्रेरितः ॥ ३ ॥ निषिषिधुः निषिद्धवन्तः । अक्षराधिक्यमार्षं ॥ १० ॥ भूदोषाः निम्नोन्नतत्व-कण्टकिलादयः ॥ १४ ॥ पदातय इति रथादिगतानां नराणां व्युदासः ॥ १९ ॥ अक्षौहिण्याः २१८७० रथाः । २१८७०

ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु ।
नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः २५
पञ्च षष्टिसहस्राणि तथाश्वानां शतानि च ।
दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया ॥ २६
एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः ।
यां वः कथितवानस्मि विस्तरेण तपोधनाः ॥२७
एतया संख्यया ह्यासन्कुरुपाण्डवसेनयोः ।
अक्षौहिण्यो द्विजश्रेष्ठाः पिण्डिताष्टादशैव तु ॥२८
समेतास्तत्र वै देशे तत्रैव निधनं गताः ।
कौरवान्कारणं कृत्वा कालेनाद्भुतकर्मणा ॥ २९
अहानि युयुधे भीष्मो दशैव परमास्त्रवित् ।
अहानि पञ्च द्रोणस्तु ररक्ष कुरुवाहिनीम् ॥ ३०
अहनी युयुधे द्वे तु कर्णः परबलार्दनः ।
शल्योऽर्धदिवसं चैव गदायुद्धमतः परम् ॥ ३१
तस्यैव दिवसस्यान्ते द्रौणिहार्दिक्यगौतमाः ।
प्रसुप्तं निशि विश्वस्तं जघ्नुर्यौधिष्ठिरं बलम् ॥ ३२
यत्तु शौनक सत्रे ते भारताख्यानमुत्तमम् ।
जनमेजयस्य तत्सत्रे व्यासशिष्येण धीमता ॥ ३३
कथितं विस्तरार्थं च यशो वीर्यं महीक्षिताम् ।
पौष्यं तत्र च पौलोममास्तीकं चादितः स्मृतम् ३४
विचित्रार्थपदाख्यानमनेकसमयान्वितम् ।
प्रतिपन्नं नरैः प्राज्ञैर्वैराग्यमिव मोक्षिभिः ॥ ३५
आत्मेव वेदितव्येषु प्रियेष्विव हि जीवितम् ।
इतिहासः प्रधानार्थः श्रेष्ठः सर्वागमेष्वयम् ॥ ३६
अनाश्रित्यैदमाख्यानं कथा भुवि न विद्यते ।
आहारमनपाश्रित्य शरीरस्येव धारणम् ॥ ३७
तदेतद्भारतं नाम कविभिस्तूपजीव्यते ।
उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ ३८
इतिहासोत्तमे यस्मिन्नर्पिता बुद्धिरुत्तमा ।
स्वरव्यञ्जनयोः कृत्स्ना लोकवेदाश्रयेव वाक् ॥३९
तस्य प्रज्ञाभिपन्नस्य विचित्रपदपर्वणः ।

सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥ ४०
भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः ।
पर्वानुक्रमणी पूर्वं द्वितीयः पर्वसंग्रहः ॥ ४१
पौष्यं पौलोममास्तीकमादिरंशावतारणम् ।
ततः संभवपर्वोक्तमद्भुतं रोमहर्षणम् ॥ ४२
दाहो जतुगृहस्यात्र हैडिम्बं पर्व चोच्यते ।
ततो बकवधः पर्व पर्व चैत्ररथं ततः ॥ ४३
ततः स्वयंवरो देव्याः पाञ्चाल्याः पर्व चोच्यते ।
क्षात्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम् ॥४४
विदुरागमनं पर्व राज्यलाभस्तथैव च ।
अर्जुनस्य वने वासः सुभद्राहरणं ततः ॥ ४५
सुभद्राहरणादूर्ध्वं ज्ञेया हरणहारिका ।
ततः खाण्डवदाहाख्यं तत्रैव मयदर्शनम् ॥ ४६
सभापर्व ततः प्रोक्तं मन्त्रपर्व ततः परम् ।
जरासन्धवधः पर्व पर्व दिग्विजयं तथा ॥ ४७
पर्व दिग्विजयादूर्ध्वं राजसूयिकमुच्यते ।
ततश्चार्घाभिहरणं शिशुपालवधस्ततः ॥ ४८
द्यूतपर्व ततः प्रोक्तमनुद्यूतमतः परम् ।
तत आरण्यकं पर्व किर्मीरवध एवच ॥ ४९
अर्जुनस्याभिगमनं पर्व ज्ञेयमतः परम् ।
ईश्वरार्जुनयोर्युद्धं पर्व कैरातसंज्ञितम् ॥ ५०
इन्द्रलोकाभिगमनं पर्व ज्ञेयमतः परम् ।
नलोपाख्यानमपि च धार्मिकं करुणोदयम् ॥५१
तीर्थयात्रा ततः पर्व कुरुराजस्य धीमतः ।
जटासुरवधः पर्व यक्षयुद्धमतः परम् ॥ ५२
निवातकवचैर्युद्धं पर्व चाजगरं ततः ।
मार्कण्डेयसमास्या च पर्वानन्तरमुच्यते ॥ ५३
संवादश्च ततः पर्व द्रौपदीसत्यभामयोः ।
घोषयात्रा ततः पर्व ततः प्रायोपवेशनम् ।
मन्त्रस्य निश्चयं चैव मृगस्वप्नोद्भवं ततः ॥ ५४
व्रीहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैव च ।

गजाः । १०९३५० पदातयः । ६५६१० हयाः ॥ २३–२६ ॥ पिण्डिता एकीभूताः ॥ २८ ॥ हार्दिक्यः कृतवर्मा गौतमः कृपः ॥ ३२ ॥ ते तव सत्रे यद्भारताख्यानं मत्तः प्रवृत्तं तज्जनमेजयस्य सत्रे व्यासशिष्येण कथितमित्युत्तरेण संबन्धः ॥ ३३ ॥ तत्र भारते ॥ ३४ ॥ प्रतिपन्नं शरणीकृतं ॥ ३५ ॥ अभिजातः कुलीनः ॥ ३८ ॥ हरणं दायः पारिवर्हमिति यावत् तस्य हारिका समानयनं ॥ ४६ ॥ अनुद्यूतं पुनर्द्यूतं ॥ ४९ ॥ अभिगमनं तपसे गमनं ॥ ५० ॥ समास्या सहावस्थानं ॥ ५३ ॥

द्रौपदीहरणं पर्व जयद्रथविमोक्षणम् ॥ ५५
रामोपाख्यानमत्रैव पर्व ज्ञेयमतः परम् ।
पतिव्रताया माहात्म्यं सावित्र्याश्चैवमद्भुतम्॥५६
कुण्डलाहरणं पर्व ततः परमिहोच्यते ।
आरणेयं ततः पर्व वैराटं तदनन्तरम् ॥
पाण्डवानां प्रवेशश्च समयस्य च पालनम् ॥ ५७
कीचकानां वधः पर्व पर्व गोग्रहणं ततः ।
अभिमन्योश्च वैराट्याः पर्व वैवाहिकं स्मृतम्॥५८
उद्योगपर्व विज्ञेयमत ऊर्ध्वं महाद्भुतम् ।
ततः संजययानाख्यं पर्व ज्ञेयमतः परम् ॥ ५९
प्रजागरं तथा पर्व धृतराष्ट्रस्य चिन्तया ।
पर्व सानत्सुजातं वै गुह्यमध्यात्मदर्शनम् ॥ ६०
यानसन्धिस्ततः पर्व भगवद्यानमेव च ।
मातलीयमुपाख्यानं चरितं गालवस्य च ॥ ६१
सावित्रं वामदेव्यं च वैन्योपाख्यानमेव च ।
जामदग्न्यमुपाख्यानं पर्व षोडशराजकम् ॥ ६२
सभाप्रवेशः कृष्णस्य विदुलापुत्रशासनम् ।
उद्योगः सैन्यनिर्याणं विश्वोपाख्यानमेव च॥६३
ज्ञेयं विवादपर्वात्र कर्णस्यापि महात्मनः ।
'मन्त्रस्य निश्चयं कृत्वा कार्यस्य समनन्तरम्॥ ६४
कीर्त्यते चाप्युपाख्यानं सेनापत्येऽभिषेचनम् ।
श्वेतस्य वासुदेवेन चित्रं बहुकथाश्रयम् ।'
निर्याणं च ततः पर्व कुरुपाण्डवसेनयोः ॥ ६५
रथातिरथसंख्या च पर्वोक्तं तदनन्तरम् ।
उलूकदूतागमनं पर्वामर्षविवर्धनम् ॥ ६६
अम्बोपाख्यानमत्रैव पर्व ज्ञेयमतः परम् ॥
भीष्माभिषेचनं पर्व ततश्चाद्भुतमुच्यते ॥ ६७
जम्बूखण्डविनिर्माणं पर्वोक्तं तदनन्तरम् ॥
भूमिपर्व ततः प्रोक्तं द्वीपविस्तारकीर्तनम्॥ ६८
'दिव्यं चक्षुर्ददौ यत्र संजयाय महामुनिः ।'
पर्वोक्तं भगवद्गीता पर्व भीष्मवधस्ततः ।
द्रोणाभिषेचनं पर्व संशप्तकवधस्ततः ॥ ६९
अभिमन्युवधः पर्व प्रतिज्ञा पर्व चोच्यते ।
जयद्रथवधः पर्व घटोत्कचवधस्ततः ॥ ७०
ततो द्रोणवधः पर्व विज्ञेयं लोमहर्षणम् ।
मोक्षो नारायणास्त्रस्य पर्वानन्तरमुच्यते ॥ ७१
कर्णपर्व ततो ज्ञेयं शल्यपर्व ततः परम् ।
ह्रदप्रवेशनं पर्व गदायुद्धमतः परम् ॥ ७२
सारस्वतं ततः पर्व तीर्थवंशानुकीर्तनम् ।
अत ऊर्ध्वं सुबीभत्सं पर्व सौप्तिकमुच्यते ॥ ७३
ऐषीकं पर्व चोद्दिष्टमत ऊर्ध्वं सुदारुणम् ।
जलप्रदानिकं पर्व स्त्रीविलापस्ततः परम् ॥ ७४
श्राद्धपर्व ततो ज्ञेयं कुरूणामौर्ध्वदेहिकम् ।
चार्वाकनिग्रहः पर्व रक्षसो ब्रह्मरूपिणः ॥ ७५
आभिषेचनिकं पर्व धर्मराजस्य धीमतः ।
प्रविभागो गृहाणां च पर्वोक्तं तदनन्तरम् ॥७६
शान्तिपर्व ततो यत्र राजधर्मानुशासनम् ।
आपद्धर्मश्च पर्वोक्तं मोक्षधर्मस्ततः परम् ॥ ७७
शुकप्रश्नाभिगमनं ब्रह्मप्रश्नानुशासनम् ।
प्रादुर्भावश्च दुर्वासःसंवादश्चैव मायया ॥ ७८
ततः पर्व परिज्ञेयमानुशासनिकं परम् ।
स्वर्गारोहणिकं चैव ततो भीष्मस्य धीमतः ॥७९
ततोऽश्वमेधिकं पर्व सर्वपापप्रणाशनम् ।
अनुगीता ततः पर्व ज्ञेयमध्यात्मवाचकम् ॥ ८०
पर्व चाश्रमवासाख्यं पुत्रदर्शनमेव च ।
नारदागमनं पर्व ततः परमिहोच्यते ॥ ८१
मौसलं पर्व चोद्दिष्टं ततो घोरं सुदारुणम् ।
महाप्रस्थानिकं पर्व स्वर्गारोहणिकं ततः ॥ ८२
हरिवंशस्ततः पर्व पुराणं खिलसंज्ञितम् ।
विष्णुपर्व शिशोश्चर्या विष्णोः कंसवधस्तथा ॥ ८३
भविष्यं पर्व चाप्युक्तं खिलेष्वेवाद्भुतं महत् ।
एतत्पर्वशतं पूर्णं व्यासेनोक्तं महात्मना ॥ ८४
यथावत्सूतपुत्रेण रौमहर्षणिना ततः ।
उक्तानि नैमिशारण्ये पर्वाण्यष्टादशैव तु ॥ ८५

---

प्रवेशः विराटनगरे । समयस्य संकेतस्य नियमस्य वा ॥ ५७ ॥ प्रतिज्ञा जयद्रथवधार्थे ॥ ७० ॥ ह्रदप्रवेशनं दुर्योधनस्य ॥ ७२ ॥ अन्यत्र कथितस्यावशिष्टं यत्पुनः प्रक्रम्य कथ्यते तत् खिलं प्रोच्यते । हरिवंशश्च तादृशः ॥ ८३ ॥

समासो भारतस्यायमत्रोक्तः पर्वसंग्रहः ।
पौष्यं पौलोममास्तीकमादिरंशावतारणम् ॥ ८६
संभवो जतुवेश्माख्यं हिडिम्बबकयोर्वधः ।
तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयंवरः॥८७
क्षात्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम् ।
विदुरागमनं चैव राज्यलाभस्तथैव च ॥　८८
वनवासोऽर्जुनस्यापि सुभद्राहरणं ततः ।
हरणाहरणं चैव दहनं खाण्डवस्य च ॥　८९
मयस्य दर्शनं चैव आदिपर्वणि कथ्यते ।
पौष्ये पर्वणि माहात्म्यमुत्तङ्कस्योपवर्णितम् ॥ ९०
पौलोमे भृगुवंशस्य विस्तारः परिकीर्तितः ।
आस्तीके सर्वनागानां गरुडस्य च संभवः ॥९१
क्षीरोदमथनं चैव जन्मोच्चैःश्रवसस्तथा ।
यजतः सर्पसत्रेण राज्ञः पारिक्षितस्य च ॥　९२
कथेयमभिनिर्वृत्ता भारतानां महात्मनाम् ।
विविधाः संभवा राज्ञामुक्ताः संभवपर्वणि॥ ९३
अन्येषां चैव शूराणामृषेर्द्वैपायनस्य च ।
अंशावतरणं चात्र देवानां परिकीर्तितम् ॥　९४
दैत्यानां दानवानां च यक्षाणां च महौजसाम् ।
नागानामथ सर्पाणां गन्धर्वाणां पतत्रिणाम् ९५
अन्येषां चैव भूतानां विविधानां समुद्भवः ।
महर्षेराश्रमपदे कण्वस्य च तपस्विनः ॥　९६
शकुन्तलायां दुष्यन्ताद्भरतश्चापि जज्ञिवान् ।
यस्य लोकेषु नाम्नेदं प्रथितं भारतं कुलम् ॥ ९७
वसूनां पुनरुत्पत्तिर्भागीरथ्यां महात्मनाम् ।
शन्तनोर्वेश्मनि पुनस्तेषां चारोहणं दिवि ॥ ९८
तेजोंशानां च संपातो भीष्मस्याप्यत्र संभवः ।
राज्यान्निवर्तनं तस्य ब्रह्मचर्यव्रते स्थितिः ॥ ९९
प्रतिज्ञापालनं चैव रक्षा चित्राङ्गदस्य च ।
हते चित्राङ्गदे चैव रक्षा भ्रातुर्यवीयसः ॥ १००
विचित्रवीर्यस्य तथा राज्ये संप्रतिपादनम् ।
धर्मस्य नृषु संभूतिरणीमाण्डव्यशापजा ॥ १०१
कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा ।

उत्तङ्कस्य उदङ्कस्येत्यपि पाठः ॥ ९० ॥

धृतराष्ट्रस्य पाण्डोश्च पाण्डवानां च संभवः १०२
वारणावतयात्रा च मन्त्रो दुर्योधनस्य च ।
कूटस्य धार्तराष्ट्रेण प्रेषणं पाण्डवान्प्रति ॥　१०३
हितोपदेशश्च पथि धर्मराजस्य धीमतः ।
विदुरेण कृतो यत्र हितार्थं म्लेच्छभाषया ॥१०४
विदुरस्य च वाक्येन सुरुङ्गोपक्रमक्रिया ।
निषाद्याः पञ्चपुत्रायाः सुप्ताया जतुवेश्मनि १०५
पुरोचनस्य चात्रैव दहनं संप्रकीर्तितम् ।
पाण्डवानां वने घोरे हिडिम्बायाश्च दर्शनम् ॥
तत्रैव च हिडिम्बस्य वधो भीमान्महाबलात् ।
घटोत्कचस्य चोत्पत्तिरत्रैव परिकीर्तिता ॥ १०७
महर्षेर्दर्शनं चैव व्यासस्यामिततेजसः ।
तदाज्ञयैकचक्रायां ब्राह्मणस्य निवेशने ॥　१०८
अज्ञातचर्यया वासो यत्र तेषां प्रकीर्तितः ।
बकस्य निधनं चैव नागराणां च विस्मयः १०९
संभवश्चैव कृष्णाया धृष्टद्युम्नस्य चैव ह ।
ब्राह्मणात्समुपश्रुत्य व्यासवाक्यप्रचोदिताः ११०
द्रौपदीं प्रार्थयन्तस्ते स्वयंवरदिदृक्षया ।
पञ्चालानभितो जग्मुर्यत्र कौतूहलान्विताः १११
अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽर्जुनस्तदा ।
सख्यं कृत्वा ततस्तेन तस्मादेव च शुश्रुवे ॥११२
तापत्यमथ वासिष्ठमौर्वं चाख्यानमुत्तमम् ।
भ्रातृभिः सहितः सर्वैः पञ्चालानभितो ययौ ॥
पाञ्चालनगरे चापि लक्ष्यं भित्त्वा धनञ्जयः ।
द्रौपदीं लब्धवानत्र मध्ये सर्वमहीक्षिताम् ११४
भीमसेनार्जुनौ यत्र संरब्धान्पृथिवीपतीन् ।
शल्यकर्णौ च तरसा जितवन्तौ महामृधे ॥११५
दृष्ट्वा तयोश्च तद्वीर्यमप्रमेयममानुषम् ।
शङ्कमानौ पाण्डवांस्तान् रामकृष्णौ महामती ॥
जग्मतुस्तैः समागन्तुं शालां भार्गववेश्मनि ।
पञ्चानामेकपत्नीत्वे विमर्शो द्रुपदस्य च॥　११७
पञ्चेन्द्राणामुपाख्यानमत्रैवाद्भुतमुच्यते ।
द्रौपद्या देवविहितो विवाहश्चाप्यमानुषः ॥ ११८

भार्गवः कुलालः ॥ ११७ ॥

क्षत्तुश्च धार्तराष्ट्रेण प्रेषणं पाण्डवान्प्रति ।
विदुरस्य च संप्राप्तिर्दर्शनं केशवस्य च ॥ ११९
खाण्डवप्रस्थवासश्च तथा राज्यार्धसर्जनम् ।
नारदस्याज्ञया चैव द्रौपद्याः समयक्रिया ॥१२०
सुन्दोपसुन्दयोस्तद्वदाख्यानं परिकीर्तितम् ।
अनन्तरं च द्रौपद्या सहासीनं युधिष्ठिरम् ॥१२१
अनु प्रविश्य विप्रार्थे फाल्गुनो गृह्य चायुधम् ।
मोक्षयित्वा गृहं गत्वा विप्रार्थे कृतनिश्चयः ॥१२२
समयं पालयन्वीरो वनं यत्र जगाम ह ।
पार्थस्य वनवासे च उलूप्या पथि सङ्गमः॥ १२३
पुण्यतीर्थानुसंयानं बभ्रुवाहनजन्म च ।
तत्रैव मोक्षयामास पञ्च सोऽप्सरसः शुभाः१२४
शापाद्ग्राहत्वमापन्ना ब्राह्मणस्य तपस्विनः ।
प्रभासतीर्थे पार्थेन कृष्णस्य च समागमः ॥१२५
द्वारकायां सुभद्रा च कामयानेन कामिनी ।
वासुदेवस्यानुमते प्राप्ता चैव किरीटिना ॥ १२६
गृहीत्वा हरणं प्राप्ते कृष्णे देवकिनन्दने ।
अभिमन्योः सुभद्रायां जन्म चोत्तमतेजसः १२७
द्रौपद्यास्तनयानां च संभवोऽनुप्रकीर्तितः ।
विहारार्थं च गतयोः कृष्णयोर्यमुनामनु ॥ १२८
संप्राप्तिश्चक्रधनुषोः खाण्डवस्य च दाहनम् ।
मयस्य मोक्षो ज्वलनाद्भुजङ्गस्य च मोक्षणम्१२९
महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसंभवः ।
इत्येतदादिपर्वोक्तं प्रथमं बहु विस्तरम् ॥ १३०
अध्यायानां शते द्वे तु संख्याते परमर्षिणा ।
सप्तविंशतिरध्याया व्यासेनोत्तमतेजसा ॥ १३१
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ।
श्लोकाश्च चतुराशीतिर्मुनिनोक्ता महात्मना १३२
द्वितीयं तु सभापर्व बहुवृत्तान्तमुच्यते ।
सभाक्रिया पाण्डवानां किङ्कराणां च दर्शनम्१३३
लोकपालसभाख्यानं नारदाद्देवदर्शिनः ।
राजसूयस्य चारम्भो जरासन्धवधस्तथा ॥ १३४
गिरिव्रजे निरुद्धानां राज्ञां कृष्णेन मोक्षणम् ।
तथा दिग्विजयोऽत्रैव पाण्डवानां प्रकीर्तितः१३५
राज्ञामागमनं चैव सार्हणानां महाक्रतौ ।
राजसूयेऽर्घसंवादे शिशुपालवधस्तथा ॥ १३६
यज्ञे विभूतिं तां दृष्ट्वा दुःखामर्षान्वितस्य च ।
दुर्योधनस्यावहासो भीमेन च सभातले ॥ १३७
यत्रास्य मन्युरुद्भूतो येन द्यूतमकारयत् ।
यत्र धर्मसुतं द्यूते शकुनिः कितवोऽजयत् ॥१३८
यत्र द्यूतार्णवे मग्नां द्रौपदीं नौरिवार्णवात् ।
धृतराष्ट्रो महाप्राज्ञः स्नुषां परमदुःखिताम् ॥१३९
तारयामास तांस्तीर्णाञ्ज्ञात्वा दुर्योधनो नृपः ।
पुनरेव ततो द्यूते समाह्वयत पाण्डवान् ॥ १४०
जित्वा स वनवासाय प्रेषयामास तांस्ततः ।
एतत्सर्वं सभापर्व समाख्यातं महात्मना ॥१४१
अध्यायाः सप्ततिर्ज्ञेयास्तथा चाष्टौ प्रसंख्यया ।
श्लोकानां द्वे सहस्रे तु पञ्च श्लोकशतानि च१४२
श्लोकाश्चैकादश ज्ञेयाः पर्वण्यस्मिन्द्विजोत्तमाः ।
अतः परं तृतीयं तु ज्ञेयमारण्यकं महत् ॥ १४३
वनवासं प्रयातेषु पाण्डवेषु महात्मसु ।
पौरानुगमनं चैव धर्मपुत्रस्य धीमतः ॥ १४४
अन्नौषधीनां च कृते पाण्डवेन महात्मना ।
द्विजानां भरणार्थं च कृतमाराधनं रवेः ॥ १४५
धौम्योपदेशात्तिग्मांशुप्रसादादन्नसंभवः ।
हितं च ब्रुवतः क्षत्तुः परित्यागोऽम्बिकासुतात् ॥
त्यक्तस्य पाण्डुपुत्राणां समीपगमनं तथा ।
पुनरागमनं चैव धृतराष्ट्रस्य शासनात् ॥ १४७
कर्णप्रोत्साहनाच्चैव धार्तराष्ट्रस्य दुर्मतेः ।
वनस्थान्पाण्डवान्हन्तुं मन्त्रो दुर्योधनस्य च॥१४८
तं दुष्टभावं विज्ञाय व्यासस्यागमनं द्रुतम् ।
निर्याणप्रतिषेधश्च सुरभ्याख्यानमेव च ॥ १४९
मैत्रेयागमनं चात्र राज्ञश्चैवानुशासनम् ।
शापोत्सर्गश्च तेनैव राज्ञो दुर्योधनस्य च ॥१५०
किर्मीरस्य वधश्चात्र भीमसेनेन संयुगे ।
वृष्णीनामागमश्चात्र पाञ्चालानां च सर्वशः १५१

कितवो द्यूतकारकः ॥ १३८ ॥

शत्रुस्तव ऊरू भेत्स्यतीतिशापोत्सर्गः ॥ १५० ॥

श्रुत्वा शकुनिना द्यूते निकृत्या निर्जितांश्च तान् ।
क्रुद्धस्यानुप्रशमनं हरेश्चैव किरीटिना ॥ १५२
परिदेवनं च पाञ्चाल्या वासुदेवस्य सन्निधौ ।
आश्वासनं च कृष्णेन दुःखार्तायाः प्रकीर्तितम् ॥
तथा सौभवधाख्यानमत्रैवोक्तं महर्षिणा ।
सुभद्रायाः सपुत्रायाः कृष्णेन द्वारकां पुरीम् १५४
नयनं द्रौपदेयानां धृष्टद्युम्नेन चैव ह ।
प्रवेशः पाण्डवेयानां रम्ये द्वैतवने ततः ॥ १५५
धर्मराजस्य चात्रैव संवादः कृष्णया सह ।
संवादश्च तथा राज्ञा भीमस्यापि प्रकीर्तितः १५६
समीपं पाण्डुपुत्राणां व्यासस्यागमनं तथा ।
प्रतिश्रुत्याथ विद्याया दानं राज्ञो महर्षिणा १५७
गमनं काम्यके चापि व्यासे प्रतिगते ततः ।
अस्त्रहेतोर्विवासश्च पार्थस्यामिततेजसः ॥ १५८
महादेवेन युद्धं च किरातवपुषा सह ।
दर्शनं लोकपालानामस्त्रप्राप्तिस्तथैव च ॥ १५९
महेन्द्रलोकगमनमस्त्रार्थे च किरीटिनः ।
यत्र चिन्ता समुत्पन्ना धृतराष्ट्रस्य भूयसी ॥१६०
दर्शनं बृहदश्वस्य महर्षेर्भावितात्मनः ।
युधिष्ठिरस्य चार्तस्य व्यसने परिदेवनम् ॥ १६१
नलोपाख्यानमत्रैव धर्मिष्ठं करुणोदयम् ।
दमयन्त्याः स्थितिर्यत्र नलस्य चरितं तथा १६२
तथाक्षहृदयप्राप्तिस्तस्मादेव महर्षितः ।
लोमशस्यागमस्तत्र स्वर्गात्पाण्डुसुतान्प्रति ॥१६३
वनवासगतानां च पाण्डवानां महात्मनाम् ।
स्वर्गे प्रवृत्तिराख्याता लोमशेनार्जुनस्य वै ॥१६४
संदेशादर्जुनस्यात्र तीर्थाभिगमनक्रिया ।
तीर्थानां च फलप्राप्तिः पुण्यत्वं चापि कीर्तितम्
पुलस्त्यतीर्थयात्रा च नारदेन महर्षिणा ।
तीर्थयात्रा च तत्रैव पाण्डवानां महात्मनां १६६
तथा यज्ञविभूतिश्च गयस्यात्र प्रकीर्तिता ॥ १६७
आगस्त्यमपि चाख्यानं यत्र वातापिभक्षणम् ।
लोपामुद्राभिगमनमपत्यार्थमृषेस्तथा ॥ १६८
ऋश्यशृङ्गस्य चरितं कौमारब्रह्मचारिणः ।
जामदग्न्यस्य रामस्य चरितं भूरितेजसः ॥ १६९
कार्तवीर्यवधो यत्र हैहयानां च वर्ण्यते ।
प्रभासतीर्थे पाण्डूनां वृष्णिभिश्च समागमः १७०
सौकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः ।
शर्यातियज्ञे नासत्यौ कृतवान्सोमपीथिनौ १७१
ताभ्यां च यत्र स मुनिर्यौवनं प्रतिपादितः ।
मान्धातुश्चाप्युपाख्यानं राज्ञोऽत्रैव प्रकीर्तितं १७२
जन्तूपाख्यानमत्रैव यत्र पुत्रेण सोमकः ।
पुत्रार्थमयजद्राजा लेभे पुत्रशतं च सः ॥ १७३
ततः श्येनकपोतीयमुपाख्यानमनुत्तमम् ।
इन्द्राग्नी यत्र धर्मश्चाप्यजिज्ञासञ्शिबिं नृपम् १७४
अष्टावक्रीयमत्रैव विवादो यत्र बन्दिना ।
अष्टावक्रस्य विप्रर्षेर्जनकस्याध्वरेऽभवत् ॥ १७५
नैयायिकानां मुख्येन वरुणस्यात्मजेन च ।
पराजितो यत्र बन्दी विवादेन महात्मना ॥१७६
विजित्य सागरं प्राप्तं पितरं लब्धवानृषिः ।
यवक्रीतस्य चाख्यानं रैभ्यस्य च महात्मनः ।
गन्धमादनयात्रा च वासो नारायणाश्रमे ॥१७७
नियुक्तो भीमसेनश्च द्रौपद्या गन्धमादने ।
व्रजन्पथि महाबाहुर्दृष्टवान्पवनात्मजम् ॥ १७८
कदलीषण्डमध्यस्थं हनूमन्तं महाबलम् ।
यत्र मन्दारपुष्पार्थे नलिनीं तामधर्षयत् ॥१७९
यत्रास्य युद्धमभवत्सुमहद्राक्षसैः सह ।
यक्षैश्चैव महावीर्यैर्मणिमत्प्रमुखैस्तथा ॥ १८०
जटासुरस्य च वधो राक्षसस्य वृकोदरात् ।
वृषपर्वणो राजर्षेस्ततोऽभिगमनं स्मृतम् ॥ १८१
आर्ष्टिषेणाश्रमे चैषां गमनं वास एव च ।
प्रोत्साहनं च पाञ्चाल्या भीमस्यात्र महात्मनः ॥
कैलासारोहणं प्रोक्तं यत्र यक्षैर्बलोत्कटैः ।
युद्धमासीन्महाघोरं मणिमत्प्रमुखैः सह ॥ १८३
समागमश्च पाण्डूनां यत्र वैश्रवणेन च ।
समागमश्चार्जुनस्य तत्रैव भ्रातृभिः सह ॥ १८४
अवाप्य दिव्यान्यस्त्राणि गुर्वर्थं सव्यसाचिना ।
निवातकवचैर्युद्धं हिरण्यपुरवासिभिः ॥ १८५
निवातकवचैर्घोरैर्दानवैः सुरशत्रुभिः ।
पौलोमैः कालकेयैश्च यत्र युद्धं किरीटिनः ॥१८६

वधश्चैषां समाख्यातो राज्ञस्तेनैव धीमता ।
अस्त्रसंदर्शनारम्भो धर्मराजस्य सन्निधौ ॥ १८७
पार्थस्य प्रतिषेधश्च नारदेन सुरर्षिणा ।
अवरोहणं पुनश्चैव पाण्डूनां गन्धमादनात् १८८
भीमस्य ग्रहणं चात्र पर्वताभोगवर्ष्मणा ।
भुजगेन्द्रेण बलिना तस्मिन्सुगहने वने ॥ १८९
अमोक्षयद्यत्र चैनं प्रश्नानुक्त्वा युधिष्ठिरः ।
काम्यकागमनं चैव पुनस्तेषां महात्मनाम् १९०
तत्रस्थांश्च पुनर्द्रष्टुं पाण्डवान्पुरुषर्षभान् ।
वासुदेवस्यागमनमत्रैव परिकीर्तितम् ॥ १९१
मार्कण्डेयसमास्यायामुपाख्यानानि सर्वशः ।
पृथोर्वैन्यस्य यत्रोक्तमाख्यानं परमर्षिणा ॥१९२
संवादश्च सरस्वत्यास्तार्क्ष्यर्षेः सुमहात्मनः ।
मत्स्योपाख्यानमत्रैव प्रोच्यते तदनन्तरम् ॥१९३
मार्कण्डेयसमास्या च पुराणं परिकीर्त्यते ।
ऐन्द्रद्युम्नमुपाख्यानं धौन्धुमारं तथैव च ॥ १९४
पतिव्रतायाश्चाख्यानं तथैवाङ्गिरसं स्मृतम् ।
द्रौपद्याः कीर्तितश्चात्र संवादः सत्यभामया १९५
पुनर्द्वैतवनं चैव पाण्डवाः समुपागताः ।
घोषयात्रा च गन्धर्वैर्यत्र बद्धः सुयोधनः ॥ १९६
ह्रियमाणस्तु मन्दात्मा मोक्षितोऽसौ किरीटिना ।
धर्मराजस्य चात्रैव मृगस्वप्ननिदर्शनात् ॥ १९७
काम्यके काननश्रेष्ठे पुनर्गमनमुच्यते ।
व्रीहिद्रौणिकमाख्यानमत्रैव बहुविस्तरम् ॥ १९८
दुर्वाससोऽप्युपाख्यानमत्रैव परिकीर्तितम् ।
जयद्रथेनापहारो द्रौपद्याश्चाश्रमान्तरात् ॥ १९९
यत्रैनमन्वयाद्भीमो वायुवेगसमो जवे ।
चक्रे चैनं पञ्चशिखं यत्र भीमो महाबलः ॥२००
रामायणमुपाख्यानमत्रैव बहुविस्तरम् ।
यत्र रामेण विक्रम्य निहतो रावणो युधि ॥२०१
सावित्र्याश्चाप्युपाख्यानमत्रैव परिकीर्तितम् ।
कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरंदरात् २०२
यत्रास्य शक्तिं तुष्टोऽसावदादेकवधाय च ।
आरणेयमुपाख्यानं यत्र धर्मोऽन्वशात्सुतम् २०३

जग्मुर्लब्धवरा यत्र पाण्डवाः पश्चिमां दिशम् ।
एतदारण्यकं पर्व तृतीयं परिकीर्तितम् ॥ २०४
अत्राध्यायशते द्वे तु संख्यया परिकीर्तिते ।
एकोनसप्ततिश्चैव तथाऽध्यायाः प्रकीर्तिताः२०५
एकादश सहस्राणि श्लोकानां षट् शतानि च ।
चतुःषष्टिस्तथा श्लोकाः पर्वण्यस्मिन्प्रकीर्तिताः॥
अतः परं निबोधेदं वैराटं पर्व विस्तरम् ।
विराटनगरे गत्वा श्मशाने विपुलां शमीम् २०७
दृष्ट्वा संनिदधुस्तत्र पाण्डवा ह्यायुधान्युत ।
यत्र प्रविश्य नगरं छद्मना न्यवसंस्तु ते ॥ २०८
पाञ्चालीं प्रार्थयानस्य कामोपहतचेतसः ।
दुष्टात्मनो वधो यत्र कीचकस्य वृकोदरात् २०९
पाण्डवान्वेषणार्थं च राज्ञो दुर्योधनस्य च ।
चाराः प्रस्थापिताश्चात्र निपुणाः सर्वतोदिशं२१०
न च प्रवृत्तिस्तैर्लब्धा पाण्डवानां महात्मनाम् ।
गोग्रहश्च विराटस्य त्रिगर्तैः प्रथमं कृतः ॥ २११
यत्रास्य युद्धं सुमहत्तैरासील्लोमहर्षणम् ।
ह्रियमाणश्च यत्रासौ भीमसेनेन मोक्षितः ॥२१२
गोधनं च विराटस्य मोक्षितं यत्र पाण्डवैः ।
अनन्तरं च कुरुभिस्तस्य गोग्रहणं कृतम् ॥ २१३
समस्ता यत्र पार्थेन निर्जिताः कुरवो युधि ।
प्रत्याहृतं गोधनं च विक्रमेण किरीटिना २१४
विराटेनोत्तरा दत्ता स्नुषा यत्र किरीटिनः ।
अभिमन्युं समुद्दिश्य सौभद्रमरिघातिनम् ॥२१५
चतुर्थमेतद्विपुलं वैराटं पर्व वर्णितम् ।
अत्रापि परिसंख्याता अध्यायाः परमर्षिणा२१६
सप्तषष्टिरथो पूर्णाः श्लोकानामपि मे शृणु ।
श्लोकानां द्वे सहस्रे तु श्लोकाः पञ्चाशदेव तु ॥
उक्तानि वेदविदुषा पर्वण्यस्मिन्महर्षिणा ।
उद्योगपर्व विज्ञेयं पञ्चमं शृण्वतः परम् ॥ २१८
उपप्लाव्ये निविष्टेषु पाण्डवेषु जिगीषया ।
दुर्योधनोऽर्जुनश्चैव वासुदेवमुपस्थितौ ॥ २१९
साहाय्यमस्मिन्समरे भवान्नौ कर्तुमर्हति ।
इत्युक्ते वचने कृष्णो यत्रोवाच महामतिः ॥२२०

नौ आवयोर्मध्ये ममैव साहाय्यं कर्तुमर्हतीति प्रत्येकं प्रार्थना ज्ञेया ॥ २२० ॥

अयुध्यमानमात्मानं मन्त्रिणं पुरुषर्षभौ ।
अक्षौहिणीं वा सैन्यस्य कस्य किं वा ददाम्यहम्॥
वव्रे दुर्योधनः सैन्यं मन्दात्मा यत्र दुर्मतिः ।
अयुध्यमानं सचिवं वव्रे कृष्णं धनंजयः ॥ २२२
मद्रराजं च राजानमायान्तं पाण्डवान्प्रति ।
उपहारैर्वञ्चयित्वा वर्त्मन्येव सुयोधनः ॥ २२३
वरदं तं वरं वव्रे साहाय्यं क्रियतां मम ।
शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् ॥
शान्तिपूर्वं चाकथयद्यत्रेन्द्रविजयं नृपः ।
पुरोहितप्रेषणं च पाण्डवैः कौरवान्प्रति ॥ २२५
वैचित्रवीर्यस्य वचः समादाय पुरोधसः ।
तथेन्द्रविजयं चापि यानं चैव पुरोधसः ॥२२६
संजयं प्रेषयामास शमार्थी पाण्डवान्प्रति ।
यत्र दूतं महाराजो धृतराष्ट्रः प्रतापवान् ॥२२७
श्रुत्वा च पाण्डवान्यत्र वासुदेवपुरोगमान् ।
प्रजागरः संप्रजज्ञे धृतराष्ट्रस्य चिन्तया ॥ २२८
विदुरो यत्र वाक्यानि विचित्राणि हितानि च ।
श्रावयामास राजानं धृतराष्ट्रं मनीषिणम् ॥२२९
तथा सनत्सुजातेन यत्राध्यात्ममनुत्तमम् ।
मनस्तापान्वितो राजा श्रावितः शोकलालसः ॥
प्रभाते राजसमितौ संजयो यत्र वा विभो ।
ऐकात्म्यं वासुदेवस्य प्रोक्तवानर्जुनस्य च ॥२३१
यत्र कृष्णो दयापन्नः सन्धिमिच्छन्महामतिः ।
स्वयमागाच्छमं कर्तुं नगरं नागसाह्वयम् ॥२३२
प्रत्याख्यानं च कृष्णस्य राज्ञा दुर्योधनेन वै ।
शमार्थे याचमानस्य पक्षयोरुभयोर्हितम् ॥ २३३
दम्भोद्भवस्य चाख्यानमत्रैव परिकीर्तितम् ।
वरान्वेषणमत्रैव मातलेश्च महात्मनः ॥ २३४
महर्षेश्चापि चरितं कथितं गालवस्य वै ।
विदुलायाश्च पुत्रस्य प्रोक्तं चाप्यनुशासनम् २३५
कर्णदुर्योधनादीनां दुष्टं विज्ञाय मन्त्रितम् ।
योगेश्वरत्वं कृष्णेन यत्र राज्ञां प्रदर्शितम् ॥ २३६
रथमारोप्य कृष्णेन यत्र कर्णोऽनुमन्त्रितः ।
उपायपूर्वं शौटीर्यात्प्रत्याख्यातश्च तेन सः २३७
आगम्य हास्तिनपुरादुपप्लाव्यमरिंदमः ।
पाण्डवानां यथावृत्तं सर्वमाख्यातवान्हरिः २३८
ते तस्य वचनं श्रुत्वा मन्त्रयित्वा च यद्धितम् ।
साङ्ग्रामिकं ततः सर्वं सज्जं चक्रुः परंतपाः॥२३९
ततो युद्धाय निर्याता नराश्वरथदन्तिनः ।
नगराद्धास्तिनपुराद्बलसंख्यानमेवच ॥ २४०
यत्र राज्ञा ह्युलूकस्य प्रेषणं पाण्डवान्प्रति ।
श्वोभाविनि महायुद्धे दौत्येन कृतवान्प्रभुः २४१
रथातिरथसंख्यानमम्बोपाख्यानमेव च ।
एतत्सुबहुवृत्तान्तं पञ्चमं पर्व भारते ॥ २४२
उद्योगपर्व निर्दिष्टं सन्धिविग्रहमिश्रितम् ।
अध्यायानां शतं प्रोक्तं षडशीतिर्महर्षिणा २४३
श्लोकानां षट् सहस्राणि तावन्त्येव शतानि च ।
श्लोकाश्च नवतिः प्रोक्तास्तथैवाष्टौ महात्मना २४४
व्यासेनोदारमतिना पर्वण्यस्मिंस्तपोधनाः ।
अतः परं विचित्रार्थं भीष्मपर्व प्रचक्षते ॥ २४५
जम्बूखण्डविनिर्माणं यत्रोक्तं संजयेन ह ।
यत्र यौधिष्ठिरं सैन्यं विषादमगमत्परम् ॥ २४६
यत्र युद्धमभूद्घोरं दशाहानि सुदारुणम् ।
कश्मलं यत्र पार्थस्य वासुदेवो महामतिः॥२४७
मोहजं नाशयामास हेतुभिर्मोक्षदर्शिभिः ।
समीक्ष्याधोक्षजः क्षिप्रं युधिष्ठिरहिते रतः ॥२४८
रथादाप्लुत्य वेगेन स्वयं कृष्ण उदारधीः ।
प्रतोदपाणिराधावद्भीष्मं हन्तुं व्यपेतभीः ॥२४९
वाक्यप्रतोदाभिहतो यत्र कृष्णेन पाण्डवः ।
गाण्डीवधन्वा समरे सर्वशस्त्रभृतां वरः ॥ २५०
शिखण्डिनं पुरस्कृत्य यत्र पार्थो महाधनुः ।
विनिघ्नन्निशितैर्बाणै रथाद्भीष्ममपातयत् ॥२५१
शरतल्पगतश्चैव भीष्मो यत्र बभूव ह ।
षष्ठमेतत्समाख्यातं भारते पर्व विस्तृतम् ॥२५२
अध्यायानां शतं प्रोक्तं तथा सप्तदशापरे ।
पञ्च श्लोकसहस्राणि संख्ययाष्टौ शतानि च १५३

ऐकात्म्यं एकचित्तत्वं ॥ २३१ ॥

शौटीर्यात् गर्वात् ॥ २३७ ॥

श्लोकाश्च चतुराशीतिरस्मिन्पर्वणि कीर्तिताः ।
व्यासेन वेदविदुषा संख्याता भीष्मपर्वणि २५४
द्रोणपर्व ततश्चित्रं बहुवृत्तान्तमुच्यते ।
सैनापत्येऽभिषिक्तोऽथ यत्राचार्यः प्रतापवान् ॥
दुर्योधनस्य प्रीत्यर्थं प्रतिजज्ञे महास्त्रवित् ।
ग्रहणं धर्मराजस्य पाण्डुपुत्रस्य धीमतः ॥ २५६
यत्र संशप्तकाः पार्थमपनिन्यू रणाजिरात् ।
भगदत्तो महाराजो यत्र शक्रसमो युधि ॥ २५७
सुप्रतीकेन नागेन स हि शान्तः किरीटिना ।
यत्राभिमन्युं बहवो जघ्नुरेकं महारथाः ॥ २५८
जयद्रथमुखा बालं शूरमप्राप्तयौवनम् ।
हतेऽभिमन्यौ क्रुद्धेन यत्र पार्थेन संयुगे ॥ २५९
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ।
यत्र भीमो महाबाहुः सात्यकिश्च महारथः २६०
अन्वेषणार्थं पार्थस्य युधिष्ठिरनृपाज्ञया ।
प्रविष्टौ भारतीं सेनामप्रधृष्यां सुरैरपि ॥ २६१
संशप्तकावशेषं च कृतं निःशेषमाहवे ।
संशप्तकानां वीराणां कोट्यो नव महात्मनाम् ॥
किरीटिनाभिनिष्क्रम्य प्रापिता यमसादनम् ।
धृतराष्ट्रस्य पुत्राश्च तथा पाषाणयोधिनः ॥२६३
नारायणाश्च गोपालाः समरे चित्रयोधिनः ।
अलम्बुषः श्रुतायुश्च जलसन्धश्च वीर्यवान्॥२६४
सौमदत्तिर्विराटश्च द्रुपदश्च महारथः ।
घटोत्कचादयश्चान्ये निहता द्रोणपर्वणि ॥ २६५
अश्वत्थामापि चात्रैव द्रोणे युधि निपातिते ।
अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः ॥ २६६
आग्नेयं कीर्त्यते यत्र रुद्रमाहात्म्यमुत्तमम् ।
व्यासस्य चाप्यागमनं माहात्म्यं कृष्णपार्थयोः ॥
सप्तमं भारते पर्व महदेतदुदाहृतम् ।
यत्र ते पृथिवीपालाः प्रायशो निधनं गताः२६८
द्रोणपर्वणि ये शूरा निर्दिष्टाः पुरुषर्षभाः ।
अत्राध्यायशतं प्रोक्तं तथाध्यायाश्च सप्ततिः२६९
अष्टौ श्लोकसहस्राणि तथा नव शतानि च ।
श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना २७०

पाराशर्येण मुनिना संचिन्त्य द्रोणपर्वणि ।
अतः परं कर्णपर्व प्रोच्यते परमाद्भुतम् ॥ २७१
सारथ्ये विनियोगश्च मद्रराजस्य धीमतः ।
आख्यातं यत्र पौराणं त्रिपुरस्य निपातनम्२७२
प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः ।
हंसकाकीयमाख्यानं तत्रैवाक्षेपसंहितम् ॥ २७३
वधः पाण्ड्यस्य च तथा अश्वत्थाम्ना महात्मना।
दण्डसेनस्य च ततो दण्डस्य च वधस्तथा॥२७४
द्वैरथे यत्र कर्णेन धर्मराजो युधिष्ठिरः ।
संशयं गमितो युद्धे मिषतां सर्वधन्विनाम् २७५
अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः ।
यत्रैवानुनयः प्रोक्तो माधवेनार्जुनस्य हि ॥२७६
प्रतिज्ञापूर्वकं चापि वक्षो दुःशासनस्य च ।
भित्त्वा वृकोदरो रक्तं पीतवान्यत्र संयुगे ॥२७७
द्वैरथे यत्र पार्थेन हतः कर्णो महारथः ।
अष्टमं पर्व निर्दिष्टमेतद्भारतचिन्तकैः ॥ २७८
एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्वणि ।
चत्वार्येव सहस्राणि नव श्लोकशतानि च २७९
चतुःषष्टिस्तथा श्लोकाः पर्वण्यस्मिन्प्रकीर्तिताः ।
अतः परं विचित्रार्थं शल्यपर्व प्रकीर्तितम्॥२८०
हतप्रवीरे सैन्ये तु नेता मद्रेश्वरोऽभवत् ।
यत्र कौमारमाख्यानमभिषेकस्य कर्म च ॥२८१
वृत्तानि चाथ युद्धानि कीर्त्यन्ते यत्र भागशः ।
विनाशः कुरुमुख्यानां शल्यपर्वणि कीर्त्यते २८२
शल्यस्य निधनं चात्र धर्मराजान्महात्मनः ।
शकुनेश्च वधोऽत्रैव सहदेवेन संयुगे ॥ २८३
सैन्ये च हतभूयिष्ठे किंचिच्छिष्टे सुयोधनः ।
ह्रदं प्रविश्य यत्रासौ संस्तभ्यापो व्यवस्थितः२८४
प्रवृत्तिस्तत्र चाख्याता यत्र भीमस्य लुब्धकैः ।
क्षेपयुक्तैर्वचोभिश्च धर्मराजस्य धीमतः ॥ २८५
ह्रदात्समुत्थितो यत्र धार्तराष्ट्रोऽत्यमर्षणः ।
भीमेन गदया युद्धं यत्रासौ कृतवान्सह ॥२८६
समवाये च युद्धस्य रामस्यागमनं स्मृतम् ।
सरस्वत्याश्च तीर्थानां पुण्यता परिकीर्तिता २८७

आचार्यः द्रोणाचार्यः ॥ २५५ ॥

समवाये समये ॥ २८७ ॥

गदायुद्धं च तुमुलमत्रैव परिकीर्तितम् ।
दुर्योधनस्य राज्ञोऽथ यत्र भीमेन संयुगे ॥ २८८
ऊरू भग्नौ प्रसह्याजौ गदया भीमवेगया ।
नवमं पर्व निर्दिष्टमेतदद्भुतमर्थवत् ॥ २८९
एकोनषष्टिरध्यायाः पर्वण्यत्र प्रकीर्तिताः ।
संख्याता बहुवृत्तान्ताः श्लोकसंख्याऽत्र कथ्यते ॥
त्रीणि श्लोकसहस्राणि द्वे शते विंशतिस्तथा ।
मुनिना संप्रणीतानि कौरवाणां यशोभृता ॥२९१
अतः परं प्रवक्ष्यामि सौप्तिकं पर्व दारुणम् ।
भग्नोरुं यत्र राजानं दुर्योधनममर्षणम् ॥ २९२
अपयातेषु पार्थेषु त्रयस्तेऽभ्याययू रथाः ।
कृतवर्मा कृपो द्रौणिः सायाह्ने रुधिरोक्षितम् २९३
समेत्य ददृशुर्भूमौ पतितं रणमूर्धनि ।
प्रतिजज्ञे दृढक्रोधो द्रौणिर्यत्र महारथः ॥ २९४
अहत्वा सर्वपाञ्चालान्धृष्टद्युम्नपुरोगमान् ।
पाण्डवांश्च सहामात्यान्न विमोक्ष्यामि दंशनं २९५
यत्रैवमुक्त्वा राजानमपक्रम्य त्रयो रथाः ।
सूर्यास्तमनवेलायामासेदुस्ते महद्वनम् ॥ २९६
न्यग्रोधस्याथ महतो यत्राधस्ताद्व्यवस्थिताः ।
ततः काकान्बहून्रात्रौ दृष्ट्वोलूकेन हिंसितान् २९७
द्रौणिः क्रोधसमाविष्टः पितुर्वधमनुस्मरन् ।
पाञ्चालानां प्रसुप्तानां वधं प्रति मनो दधे ॥२९८
गत्वा च शिबिरद्वारि दुर्दर्शं तत्र राक्षसम् ।
घोररूपमपश्यत्स दिवमावृत्य धिष्ठितम् ॥ २९९
तेन व्याघातमस्त्राणां क्रियमाणमवेक्ष्य च ।
द्रौणिर्यत्र विरूपाक्षं रुद्रमाराध्य सत्वरः ॥ ३००
प्रसुप्तान्निशि विश्वस्तान्धृष्टद्युम्नपुरोगमान् ।
पाञ्चालान्सपरीवारान्द्रौपदेयांश्च सर्वशः ॥ ३०१
कृतवर्मणा च सहितः कृपेण च निजघ्निवान् ।
यत्रामुच्यन्त ते पार्थाः पञ्च कृष्णबलाश्रयात् ३०२
सात्यकिश्च महेष्वासः शेषाश्च निधनं गताः ।
पाञ्चालानां प्रसुप्तानां यत्र द्रोणसुताद्वधः ॥३०३
धृष्टद्युम्नस्य सूतेन पाण्डवेषु निवेदितः ।
द्रौपदी पुत्रशोकार्ता पितृभ्रातृवधार्दिता ॥ ३०४
कृतानशनसंकल्पा यत्र भर्तृनुपाविशत् ।
द्रौपदीवचनाद्यत्र भीमो भीमपराक्रमः ॥ ३०५
प्रियं तस्याश्चिकीर्षन्वै गदामादाय वीर्यवान् ।
अन्वधावत्सुसंक्रुद्धो भारद्वाजं गुरोः सुतम् ॥३०६
भीमसेनभयाद्यत्र दैवेनाभिप्रचोदितः ।
अपाण्डवायेति रुषा द्रौणिरस्त्रमवासृजत् ॥ ३०७
मैवमित्यब्रवीत्कृष्णः शमयंस्तस्य तद्वचः ।
यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः ३०८
द्रौणेश्च द्रोहबुद्धित्वं वीक्ष्य पापात्मनस्तदा ।
द्रौणिद्वैपायनादीनां शापाश्चान्योन्यकारिताः ॥
मणिं तथा समादाय द्रोणपुत्रान्महारथात् ।
पाण्डवाः प्रददुर्हृष्टा द्रौपद्यै जितकाशिनः ॥३१०
एतद्वै दशमं पर्व सौप्तिकं समुदाहृतम् ।
अष्टादशास्मिन्नध्यायाः पर्वण्युक्ता महात्मना ३११
श्लोकानां कथितान्यत्र शतान्यष्टौ प्रसंख्यया ।
श्लोकाश्च सप्ततिः प्रोक्ता मुनिना ब्रह्मवादिना ॥
सौप्तिकैषीकसंबन्धे पर्वण्युत्तमतेजसी ।
अत ऊर्ध्वमिदं प्राहुः स्त्रीपर्व करुणोदयम् ॥३१३
पुत्रशोकाभिसंतप्तः प्रज्ञाचक्षुर्नराधिपः ।
कृष्णोपनीतां यत्रासावायसीं प्रतिमां दृढां ३१४
भीमसेनद्रोहबुद्धिर्धृतराष्ट्रो बभञ्जह ।
तथा शोकाभितप्तस्य धृतराष्ट्रस्य धीमतः ॥ ३१५
संसारदहनं बुद्ध्या हेतुभिर्मोक्षदर्शनैः ।
विदुरेण च यत्रास्य राज्ञ आश्वासनं कृतम् ३१६
धृतराष्ट्रस्य चात्रैव कौरवायोधनं तथा ।
सान्तःपुरस्य गमनं शोकार्तस्य प्रकीर्तितम् ३१७
विलापो वीरपत्नीनां यत्रातिकरुणः स्मृतः ।
क्रोधावेशः प्रमोहश्च गान्धारीधृतराष्ट्रयोः ॥३१८
यत्र तान्क्षत्रियाः शूरान्सङ्ग्रामेष्वनिवर्तिनः ।
पुत्रान्भ्रातृन्पितृंश्चैव ददृशुर्निहतान्रणे ॥ ३१९
पुत्रपौत्रवधार्तायास्तथात्रैव प्रकीर्तिता ।
गान्धार्याश्चापि कृष्णेन क्रोधोपशमनक्रिया ३२०

संसारदहनं निरूप्येतिशेषः ॥ ३१६ ॥ आयोधनं युद्धस्थानं ॥ ३१७ ॥ क्षत्रियाः क्षत्रियस्त्रियः ॥ ३१९ ॥

श्लो: राजा महाप्राज्ञः सर्वधर्मभृतां वरः ।
राज्ञां तानि शरीराणि दाहयामास शास्त्रतः ॥ ३२१
तोयकर्मणि चारब्धे राज्ञामुदकदानिके ।
गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः ३२२
सुतस्यैतदिह प्रोक्तं व्यासेन परमर्षिणा ।
एतदेकादशं पर्व शोकवैक्लव्यकारणम् ॥ ३२३
प्रणीतं सज्जनमनोवैक्लव्याश्रुप्रवर्तकम् ।
सप्तविंशतिरध्यायाः पर्वण्यस्मिन्प्रकीर्तिताः ३२४
श्लोकसप्तशती चापि पञ्चसप्ततिसंयुता ।
संख्यया भारताख्यानमुक्तं व्यासेन धीमता ३२५
अतः परं शान्तिपर्व द्वादशं बुद्धिवर्धनम् ।
यत्र निर्वेदमापन्नो धर्मराजो युधिष्ठिरः ॥ ३२६
घातयित्वा पितॄन्भ्रातॄन्पुत्रान्संबन्धिमातुलान् ।
शान्तिपर्वणि धर्माश्च व्याख्याताः शारतल्पिकाः॥
राजभिर्वेदितव्यास्ते सम्यग्ज्ञानबुभुत्सुभिः ।
आपद्धर्माश्च तत्रैव कालहेतुप्रदर्शिनः ॥ ३२८
यान्बुद्ध्वा पुरुषः सम्यक्सर्वज्ञत्वमवाप्नुयात् ।
मोक्षधर्माश्च कथिता विचित्रा बहुविस्तराः ३२९
द्वादशं पर्व निर्दिष्टमेतत्प्राज्ञजनप्रियम् ।
अत्र पर्वणि विज्ञेयमध्यायानां शतत्रयम् ॥ ३३०
विंशच्चैव तथाध्याया नव चैव तपोधनाः ।
चतुर्दशसहस्राणि तथा सप्तशतानि च ॥ ३३१
सप्तश्लोकास्तथैवात्र पञ्चविंशतिसंख्यया ।
अत ऊर्ध्वं च विज्ञेयमनुशासनमुत्तमम् ॥ ३३२
यत्र प्रकृतिमापन्नः श्रुत्वा धर्मविनिश्चयम् ।
भीष्माद्भागीरथीपुत्रात्कुरुराजो युधिष्ठिरः ३३३
व्यवहारोऽत्र कात्स्न्येन धर्मार्थीयः प्रकीर्तितः ।
विविधानां च दानानां फलयोगाः प्रकीर्तिताः ॥
तथा पात्रविशेषाश्च दानानां च परो विधिः ।
आचारविधियोगश्च सत्यस्य च परा गतिः ३३५
महाभाग्यं गवां चैव ब्राह्मणानां तथैव च ।
रहस्यं चैव धर्माणां देशकालोपसंहितम् ॥ ३३६
एतत्सुबहुवृत्तान्तमुत्तमं चानुशासनम् ।
भीष्मस्यात्रैव संप्राप्तिः स्वर्गस्य परिकीर्तिता ॥ ३३७
एतत्त्रयोदशं पर्व धर्मनिश्चयकारकम् ।
अध्यायानां शतं त्वत्र षट्चत्वारिंशदेव तु ॥ ३३८
श्लोकानां तु सहस्राणि प्रोक्तान्यष्टौ प्रसंख्यया ।
ततोऽश्वमेधिकं नाम पर्व प्रोक्तं चतुर्दशम् ॥ ३३९
तत्संवर्तमरुत्तीयं यत्राख्यानमनुत्तमम् ।
सुवर्णकोशसंप्राप्तिर्जन्म चोक्तं परीक्षितः ॥ ३४०
दग्धस्यास्त्राग्निना पूर्वं कृष्णात्संजीवनं पुनः ।
चर्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः ॥ ३४१
तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः ।
चित्राङ्गदायाः पुत्रेण स्वपुत्रेण धनंजयः ॥ ३४२
सङ्ग्रामे बभ्रुवाहेन संशयं चात्र जग्मिवान् ।
सुदर्शनं तथाऽऽख्यानं वैष्णवं धर्ममेव च ।
अश्वमेधे महायज्ञे नकुलाख्यानमेव च ॥ ३४३
इत्याश्वमेधिकं पर्व प्रोक्तमेतन्महाद्भुतम् ।
अध्यायानां शतं चैव त्रयोऽध्यायाश्च कीर्तिताः ॥
त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च ।
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥
ततस्त्वाश्रमवासाख्यं पर्व पञ्चदशं स्मृतम् ।
यत्र राज्यं समुत्सृज्य गान्धार्या सहितो नृपः ३४६
धृतराष्ट्रोऽश्रमपदं विदुरश्च जगाम ह ।
यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा ३४७
पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता ।
यत्र राजा हतान्पुत्रान्पौत्रानन्यांश्च पार्थिवान् ॥
लोकान्तरगतान्वीरानपश्यत्पुनरागतान् ।
ऋषेः प्रसादात्कृष्णस्य दृष्ट्वाश्चर्यमनुत्तमम् ॥ ३४९
त्यक्त्वा शोकं सदारश्च सिद्धिं परमिकां गतः ।
यत्र धर्मं समाश्रित्य विदुरः सुगतिं गतः ॥ ३५०
संजयश्च सहामात्यो विद्वान्गावल्गणिर्वशी ।
ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः ॥ ३५१
नारदाच्चैव शुश्राव वृष्णीनां कदनं महत् ।
एतदाश्रमवासाख्यं पर्वोक्तं महदद्भुतम् ॥ ३५२
द्विचत्वारिंशदध्यायाः पर्वैतदभिसंख्यया ।

---

शरा एव तल्पो यस्य सः शरतल्पो भीष्मः तेन प्रोक्ताः । शरतल्पे भवा वा तत्रस्थेन व्याख्यातत्वात् ॥ ३२७ ॥ सुदर्शनं तथाख्यानमित्यत्र मृगदर्शं तथाचैवेति—मणिदर्शनं तथाचैवेत्यपि पाठो दृश्यते ॥ ३४३ ॥ धृतराष्ट्रःआश्रमपदमिति च्छेदः

सहस्रमेकं श्लोकानां पञ्चश्लोकशतानि च ॥३५३
षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ।
अतः परं निबोधेदं मौसलं पर्व दारुणम् ॥३५४
यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शहता युधि ।
ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः॥३५५
आपाने पानकलिता दैवेनाभिप्रचोदिताः ।
एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम् ॥ ३५६
यत्र सर्वक्षयं कृत्वा तावुभौ रामकेशवौ ।
नातिचक्रामतुः कालं प्राप्तं सर्वहरं महत् ॥३५७
यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृताम् ।
दृष्ट्वा विषादमगमत्परां चार्तिं नरर्षभः ॥ ३५८
स संस्कृत्य नरश्रेष्ठं मातुलं शौरिमात्मनः ।
ददर्श यदुवीराणामापाने वैशसं महत् ॥ ३५९
शरीरं वासुदेवस्य रामस्य च महात्मनः ।
संस्कारं लम्भयामास वृष्णीनां च प्रधानतः॥३६०
सवृद्धबालमादाय द्वारवत्यास्ततो जनम् ।
ददर्शापदि कष्टायां गाण्डीवस्य पराभवम् ॥ ३६१
सर्वेषां चैव दिव्यानामस्त्राणामप्रसन्नताम् ।
नाशं वृष्णिकलत्राणां प्रभावानामनित्यताम् ३६२
दृष्ट्वा निर्वेदमापन्नो व्यासवाक्यप्रचोदितः ।
धर्मराजं समासाद्य संन्यासं समरोचयत् ॥ ३६३
इत्येतन्मौसलं पर्व षोडशं परिकीर्तितम् ।
अध्यायाष्टौ समाख्याताः श्लोकानां च शतत्रयम् ॥
श्लोकानां विंशतिश्चैव संख्याता तत्त्वदर्शिना ।
महाप्रस्थानिकं तस्मादूर्ध्वं सप्तदशं स्मृतम् ॥ ३६५
यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः ।
द्रौपद्या सहिता देव्या महाप्रस्थानमास्थिताः ॥
यत्र तेऽग्निं ददृशिरे लौहित्यं प्राप्य सागरम् ।
यत्राग्निना चोदितश्च पार्थस्तस्मै महात्मने ॥ ३६७
ददौ संपूज्य तद्दिव्यं गाण्डीवं धनुरुत्तमम् ।
यत्र भ्रातॄन्निपतितान्द्रौपदीं च युधिष्ठिरः ॥३६८
दृष्ट्वा हित्वा जगामैव सर्वाननवलोकयन् ।
एतत्सप्तदशं पर्व महाप्रस्थानिकं स्मृतम् ॥ ३६९

यत्राध्यायास्त्रयः प्रोक्ताः श्लोकानां च शतत्रयम् ।
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥
स्वर्गपर्व ततो ज्ञेयं दिव्यं यत्तदमानुषम् ।
प्राप्तं दैवरथं स्वर्गान्नेष्टवान्यत्र धर्मराट् ॥ ३७१
आरोढुं सुमहाप्राज्ञ आनृशंस्याच्छुना विना ।
तामस्याविचलां ज्ञात्वा स्थितिं धर्मे महात्मनः ३७२
श्वरूपं यत्र तत्त्यक्त्वा धर्मेणासौ समन्वितः ।
स्वर्गं प्राप्तः स च तथा यातना विपुला भृशम् ॥३७३
देवदूतेन नरकं यत्र व्याजेन दर्शितम् ।
शुश्राव यत्र धर्मात्मा भ्रातॄणां करुणा गिरः ॥ ३७४
निदेशे वर्तमानानां देशे तत्रैव वर्तताम् ।
अनुदर्शितश्च धर्मेण देवराज्ञा च पाण्डवः ॥ ३७५
आप्लुत्याकाशगङ्गायां देहं त्यक्त्वा स मानुषम् ।
स्वधर्मनिर्जितं स्थानं स्वर्गे प्राप्य स धर्मराट् ॥३७६
मुमुदे पूजितः सर्वैः सेन्द्रैः सुरगणैः सह ।
एतदष्टादशं पर्व प्रोक्तं व्यासेन धीमता ॥ ३७७
अध्यायाः पञ्च संख्याताः पर्वण्यस्मिन्महात्मना ।
श्लोकानां द्वे शते चैव प्रसंख्याते तपोधनाः ॥३७८
नव श्लोकास्तथैवान्ये संख्याताः परमर्षिणा ।
अष्टादशैवमेतानि पर्वाण्येतान्यशेषतः ॥ ३७९
खिलेषु हरिवंशश्च भविष्यं च प्रकीर्तितम् ।
दश श्लोकसहस्राणि विंशच्छ्लोकशतानि च॥३८०
खिलेषु हरिवंशे च संख्यातानि महर्षिणा ।
एतत्सर्वं समाख्यातं भारते पर्वसंग्रहः ॥ ३८१
अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया ।
तन्महादारुणं युद्धमहान्यष्टादशाभवत् ॥ ३८२
यो विद्याच्चतुरो वेदान्साङ्गोपनिषदो द्विजः ।
न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः ३८३
अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत् ।
कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ३८४
श्रुत्वा त्विदमुपाख्यानं श्राव्यमन्यन्न रोचते ।
पुंस्कोकिलगिरं श्रुत्वा रूक्षा ध्वाङ्क्षस्य वागिव ३८५
इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः ।

सन्धिरार्षः ॥ ३४७ ॥ ब्रह्मदण्डः ब्राह्मणशापः ॥३५५॥ आपाने पानगोष्ठ्यां । पानेन कलिताः विवशीकृताः । एरकाः तृणविशेषाः ॥ ३५६ ॥ नातिचक्रामतुः कालं समर्थावपि मर्यादां नोल्लङ्घितवन्तावित्यर्थः॥३५७॥वैशसं परस्परं विशसनं ॥ ३५९॥ अस्य अ-

पञ्चभ्य इव भूतेभ्यो लोकसंविधयस्त्रयः ॥ ३८६
अस्याख्यानस्य विषये पुराणं वर्तते द्विजाः ।
अन्तरिक्षस्य विषये प्रजा इव चतुर्विधाः ॥ ३८७
क्रियागुणानां सर्वेषामिदमाख्यानमाश्रयः ।
इन्द्रियाणां समस्तानां चित्रा इव मनः क्रियाः ३८८
अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते ।
आहारमनपाश्रित्य शरीरस्येव धारणम् ॥ ३८९
इदं कविवरैः सर्वैराख्यानमुपजीव्यते ।
उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ ३९०
अस्य काव्यस्य कवयो न समर्था विशेषणे ।
साधोरिव गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥ ३९१
धर्मे मतिर्भवतु वः सततोत्थितानां
स ह्येक एव परलोकगतस्य बन्धुः ।
अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना
नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥ ३९२
द्वैपायनौष्ठपुटनिःसृतमप्रमेयं
पुण्यं पवित्रमथ पापहरं शिवं च ।
यो भारतं समधिगच्छति वाच्यमानं
किं तस्य पुष्करजलैरभिषेचनेन ॥ ३९३
यदह्ना कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन् ।
महाभारतमाख्याय सन्ध्यां मुच्यति पश्चिमाम् ॥
यद्रात्रौ कुरुते पापं कर्मणा मनसा गिरा ।
महाभारतमाख्याय पूर्वां सन्ध्यां प्रमुच्यते ॥ ३९५
यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे च बहुश्रुताय ।
पुण्यां च भारतकथां शृणुयाच्च नित्यं
तुल्यं फलं भवति तस्य च तस्य चैव ॥ ३९६
आख्यानं तदिदमनुत्तमं महार्थं
विज्ञेयं महदिह पर्वसंग्रहेण ।
श्रुत्वादौ भवति नृणां सुखावगाहं
विस्तीर्णं लवणजलं यथा प्लवेन ॥ ३९७

इति श्रीमन्महाभारते आदिपर्वणि पर्वसंग्रहपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

समाप्तं पर्वसंग्रहपर्व ॥

---

# (अथ पौष्यपर्व ॥ ३ ॥)

## तृतीयोऽध्यायः ॥ ३ ॥

जनमेजयं प्रति सरमाख्यदेवशुनीशापः ॥ १ ॥ शापनिवारणार्थमृषेः सोमश्रवसः पौरोहित्येन वरणम् ॥ २ ॥ आरुण्युपमन्युवैदाख्यानां धौम्यशिष्याणामुपाख्यानम् ॥ ३ ॥ वैदशिष्यस्योत्तङ्कस्योपाख्यानम् ॥ ४ ॥ पौष्यस्य राज्ञ उपाख्यानम् ॥ ५ ॥

सौतिरुवाच ।

जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते। तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति । तेषु तत्सत्रमुपासीनेष्वभ्यागच्छत्सारमेयः ॥ १

जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् ॥ २

तं माता रोरूयमाणमुवाच । किं रोदिषि केनास्यभिहत इति ॥ ३

स एवमुक्तो मातरं प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति ॥ ४

तं माता प्रत्युवाच व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति ॥ ५

स तां पुनरुवाच नापराध्यामि किंचिन्नावेक्षे हवींषि नावलिह इति ॥ ६

---

विचलामितिच्छेदः ॥ ३७२ ॥ विषये देशे अन्तरिक्षमित्यर्थः । पुराणं अष्टादशभेदं पाद्मादि ॥ ३८७ ॥ संध्यां संध्यायां ॥ ३९४ ॥

द्वितीयोऽध्यायः ॥ २ ॥

परिक्षितोऽपत्यं पुमान्पारिक्षितः। सरमायाः देवशुन्याः अप-

तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्ता तत्सत्रमुपागच्छद्यत्र स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते ॥ ७

स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किंचिदपराध्यति नावेक्षते हवींपि नावलेढि किमर्थमभिहत इति ॥ ८

न किंचिदुक्तवन्तस्ते सा तानुवाच यस्मादयमभिहतोऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति ॥ ९

जनमेजय एवमुक्तो देवशुन्या सरमया भृशं संभ्रान्तो विषण्णश्चासीत् ॥ १०

स तस्मिन्सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोद्यो मे पापकृत्यां शमयेदिति ॥ ११

स कदाचिन्मृगयां गतः पारिक्षितो जनमेजयः कस्मिंश्चित्स्वविषय आश्रममपश्यत् ॥ १२

तत्र कश्चिदृषिरासांचक्रे श्रुतश्रवा नाम । तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम ॥ १३

तस्य तं पुत्रमभिगम्य जनमेजयः पारिक्षितः पौरोहित्याय वव्रे ॥ १४

स नमस्कृत्य तमृषिमुवाच भगवन्नयं तव पुत्रो मम पुरोहितोऽस्त्विति ॥ १५

स एवमुक्तः प्रत्युवाच जनमेजयं भो जनमेजय पुत्रोऽयं मम सर्प्यां जातो महातपस्वी स्वाध्यायसंपन्नो मत्तपोवीर्यसंभृतो मच्छुक्रं पीतवत्यास्तस्याः कुक्षौ जातः ॥ १६

समर्थोऽयं भवतः सर्वाः पापकृत्याः शमयितुमन्तरेण महादेवकृत्याम् ॥ १७

अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः कंचिदर्थमभियाचेत्तं तस्मै दद्यादयं यद्येतदुत्सहसे ततो नयस्वैनमिति ॥ १८

तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच भगवंस्तत्तथा भविष्यतीति ॥ १९

स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच मयाऽयं वृत उपाध्यायो यदयं ब्रूयात्तत्कार्यमविचारयद्भिर्भवद्भिरिति । तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः । स तथा भ्रातॄन्संदिश्य तक्षशिलां प्रत्यभिप्रतस्थे तं च देशं वशे स्थापयामास ॥ २०

एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामापोदस्तस्य शिष्यास्त्रयो बभूवुः ॥ २१

उपमन्युरारुणिर्वेदश्चेति स एकं शिष्यमारुणिं पाञ्चाल्यं प्रेषयामास गच्छ केदारखण्डं बधानेति ॥ २२

स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं बद्धुं नाशकत् । स क्लिश्यमानोऽपश्यदुपायं भवत्वेवं करिष्यामीति ॥ २३

स तत्र संविवेश केदारखण्डे शयाने च तथा तस्मिंस्तदुदकं तस्थौ ॥ २४

ततः कदाचिदुपाध्याय आपोदो धौम्यः शिष्यावपृच्छत् क्व आरुणिः पाञ्चाल्यो गत इति ॥ २५

तौ तं प्रत्यूचतुर्भगवंस्त्वयैव प्रेषितो गच्छ केदारखण्डं बधानेति । स एवमुक्तस्तौ शिष्यौ प्रत्युवाच तस्मात्तत्र सर्वे गच्छामो यत्र स गत इति ॥ २६

स तत्र गत्वा तस्याह्वानाय शब्दं चकार । भो आरुणे पाञ्चाल्य क्वासि वत्सैहीति ॥ २७

स तच्छ्रुत्वा आरुणिरुपाध्यायवाक्यं तस्मात्केदारखण्डात्सहसोत्थाय तमुपाध्यायमुपतस्थे ॥ २८

प्रोवाच चैनमयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य केदारखण्डं भवन्तमुपस्थितः ॥ २९

---

त्वं पुमान्सारमेयः ॥ ७ ॥ अदृष्टं अतर्कितं ॥ ९ ॥ संभ्रान्तः संतप्त इति पाठान्तरं ॥ १० ॥ पापकृत्यां शापरूपां बलायुःप्राणनिकृन्तनीं देवतां । शमयेदकोधनां कुर्यात् ॥ ११ ॥ उपांशुव्रतं गूढव्रतं ॥ १८ ॥ तक्षशिलां देशविशेषं जेतुमिति शेषः ॥२०॥ अपोत्तीत्यपोदः अब्भक्षः तस्यापत्यमापोदः ॥२१॥ केदारो महाक्षेत्रान्तर्गतं चतुरस्रं तस्य खण्डो जलनिरोधभि-

तदभिवादये भगवन्तमाज्ञापयतु भवान्कमर्थं करवाणीति ॥ ३०

स एवमुक्त उपाध्यायः प्रत्युवाच यस्माद्भवान्केदारखण्डं विदार्योत्थितस्तस्मादुद्दालक एव नाम्ना भवान्भविष्यतीत्युपाध्यायेनानुगृहीतः॥ ३१

यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि। सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति ॥ ३२

स एवमुक्त उपाध्यायेनेष्टं देशं जगाम॥ ३३

अथापरः शिष्यस्तस्यैवापोदस्य धौम्यस्योपमन्युर्नाम । तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो गा रक्षस्वेति ॥ ३४

स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ ३५

तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो केन वृत्तिं कल्पयसि पीवानसि दृढमिति ॥ ३६

स उपाध्यायं प्रत्युवाच भो भैक्ष्येण वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच ॥ ३७

मय्यनिवेद्य भैक्ष्यं नोपयोक्तव्यमिति।स तथेत्युक्तो भैक्ष्यं चरित्वोपाध्यायाय न्यवेदयत्॥३८

स तस्मादुपाध्यायः सर्वमेव भैक्ष्यमगृह्णात् । स तथेत्युक्तः पुनररक्षद्गा अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य गुरोरग्रतः स्थित्वा नमश्चक्रे ॥

तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच । वत्सोपमन्यो सर्वमशेषतस्ते भैक्ष्यं गृह्णामि केनेदानीं वृत्तिं कल्पयसीति ॥ ४०

स एवमुक्त उपाध्यायं प्रत्युवाच । भगवते निवेद्य पूर्वमपरं चरामि तेन वृत्तिं कल्पयामीति तमुपाध्यायः प्रत्युवाच ॥ ४१

नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं करोषि इत्येवं वर्तमानो लुब्धोऽसीति ॥ ४२

स तथेत्युक्त्वा गा अरक्षद्रक्षित्वा च पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ ४३

तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच । वत्सोपमन्यो अहं ते सर्वं भैक्ष्यं गृह्णामि न चान्यच्चरसि पीवानसि भृशं केन वृत्तिं कल्पयसीति ॥ ४४

स एवमुक्तस्तमुपाध्यायं प्रत्युवाच । भो एतासां गवां पयसा वृत्तिं कल्पयामीति। तमुवाचोपाध्यायो नैतन्न्याय्यं पय उपयोक्तुं भवतो मया नाभ्यनुज्ञातमिति ॥ ४५

स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः स्थित्वा नमश्चक्रे ॥४६

तमुपाध्यायः पीवानमेव दृष्ट्वोवाच । वत्सोपमन्यो भैक्ष्यं नाश्नासि न चान्यच्चरसि पयो न पिबसि पीवानसि भृशं केनेदानीं वृत्तिं कल्पयसीति ॥ ४७

स एवमुक्त उपाध्यायं प्रत्युवाच। भोः फेनं पिबामि यमिमे वत्सा मातॄणां स्तनात्पिबन्त उद्गिरन्ति ॥ ४८

तमुपाध्यायः प्रत्युवाच । एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति । तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्तमानः। फेनमपि भवान्न पातुमर्हतीति स तथेति प्रतिश्रुत्य निराहारः पुनररक्षद्गाः ॥ ४९

तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति नचान्यच्चरति पयो न पिबति फेनं नोपयुङ्क्ते स कदाचिदरण्ये क्षुधार्तोऽर्कपत्राण्यभक्षयत् ॥ ५०

स तैरर्कपत्रैर्भक्षितैः क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव। ततः सोऽन्धोऽपि चङ्क्रम्यमाणः कूपेऽपतत् ॥ ५१

तिः तं ॥ ३२ ॥ पीवानं पुष्टं । वृत्तिं जीविकां ॥ ३६ ॥ वृत्त्युपरोधं वृत्तिप्रतिबन्धं ॥ ४२ ॥ चरसि भक्षयसि ॥ ४४ ॥

तीक्ष्णविपाकैः पाककाले उदरेऽग्निज्वालोत्थापकैः ॥ ५१ ॥

अथ तस्मिन्ननागच्छति सूर्ये चास्ताचलावलम्बिनि उपाध्यायः शिष्यानवोचत् ॥ ५२

मयोपमन्युः सर्वतः प्रतिषिद्धः स नियतं कुपितस्ततो नागच्छति चिरगतस्त्विति । ततोऽन्वेष्य इत्येवमुक्त्वा शिष्यैः सार्धमरण्यं गत्वा तस्याह्वानाय शब्दं चकार भो उपमन्यो कासि वत्सैहीति ॥ ५३

स उपाध्यायस्य आह्वानवचनं श्रुत्वा प्रत्युवाचोच्चैरयमस्मिन्कूपे पतितोऽहमिति । तमुपाध्यायः प्रत्युवाच कथं त्वमस्मिन्कूपे पतित इति ॥ ५४

स उपाध्यायं प्रत्युवाच अर्कपत्राणि भक्षयित्वान्धीभूतोस्म्यतश्चङ्क्रम्यमाणः कूपे पतित इति । तमुपाध्यायः प्रत्युवाच ॥ ५५

अश्विनौ स्तुहि तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्ताराविति । स एवमुक्त उपाध्यायेनोपमन्युः स्तोतुमुपचक्रमे देवावश्विनौ वाग्भिर्ऋग्भिः ॥ ५६

प्रपूर्वगौ पूर्वजौ चित्रभानू
गिरा वां शंसामि तपसा ह्यनन्तौ ।
दिव्यौ सुपर्णौ विरजौ विमाना-
वधिक्षिपन्तौ भुवनानि विश्वा ॥ ५७

हिरण्मयौ शकुनी सांपरायौ
नासत्यदस्रौ सुनसौ वैजयन्तौ ।
शुक्रं वयन्तौ तरसा सुवेमा-
वधिव्ययन्तावसितं विवस्वतः ॥ ५८

ग्रस्तां सुपर्णस्य बलेन वर्तिका-
ममुञ्चतामश्विनौ सौभगाय ।
तावत्सुवृत्तावनमं तमाय या-
वसत्तमा गा अरुणा उदावहत् ॥ ५९

षष्टिश्च गावस्त्रिशताश्च धेनव
एकं वत्सं सुवते तं दुहन्ति ।
नानागोष्ठा विहिता एकदोहना-
स्तावश्विनौ दुहतो घर्ममुक्थ्यम् ॥ ६०

---

कर्ताराविति लुडन्तं ॥ ५६ ॥ **प्रपूर्वगाविति** । अस्य श्लोकस्यानन्वयादुत्तरश्लोकस्थं संबोधनमिह योज्यम् । हे नासत्यदस्रौ गिरा वाण्या । वां युवां शंसामि स्तौमि । व्यवहिताश्चेति गतिसंज्ञत्वात्प्रशंसामीति वाऽन्वयः । किंभूतौ वां । प्रपूर्वगौ प्रकर्षेणान्यदेवताभ्यः पूर्वं यज्ञं गच्छन्तौ । पूर्वजौ अश्वजात्यां हि पूर्वं मुखसंयोगः । ततः संयोगाद्गर्भोत्पत्तिरिति तत्र गर्भोत्पत्तेः पूर्वं मुखयोगमात्राज्जातौ । चित्रभानू अग्नितुल्यौ । तपसा सामर्थ्येन । अनन्तौ अनन्तरूपधरौ । दिव्यौ दिवः द्योतमानात्सूर्याद्भवौ । सुपर्णौ शोभनगमनौ । विरजौ विगतरजोगुणौ । विश्वा विश्वानि । भुवनानि अधि । विमानौ खविमानौ । क्षिपन्तौ प्रेरयन्तौ ॥ ५७ ॥ **हिरण्मयाविति** । किंभूतौ विमानौ । हिरण्मयौ सुवर्णमयौ । शकुनी । लुप्तोपममेतत् । शीघ्रगामित्वात्पक्षिणाविव । यद्वा पदद्वयमप्यश्विनोरेव विशेषणं । हिरण्मयौ सुवर्णालङ्कृतौ । शकुनी आरोग्यकरणेन शकुं शक्तिं नयतः प्रापयत इति शकुनी । सांपरायौ संपरायः परलोकस्तस्मै हितौ । यद्वा सांपरायामापदि अयः प्राप्तिर्ययोस्तौ । भक्तानामापदि तद्रक्षणायागच्छन्तौ । नासत्यदस्रौ । नासत्यौ असत्यरहितौ । नासापुटजातौ वा । दस्रौ दर्शनीयौ । सुनसौ सुनासिकौ । विशेषेण जयन्तौ विजयन्तौ । विजयन्तावेव वैजयन्तौ । विवस्वतः सूर्यस्य तरसा बलेन असितं श्यामकुष्ठं अधिव्ययन्तौ निराकुर्वन्तौ । शुक्रं दीप्तियुक्तं वर्णं चक्षुर्वा । वयन्तौ कुर्वन्तौ । सूर्यस्य पितृत्वात् तद्बलेन युवयोरेतत्सामर्थ्यं युज्यत इति स्तुतिः । सुवेमौ । लुप्तोपममेतत् । यथा वेमधारिणौ तन्तुवायौ पटादसितकेशादि दूरीकुरुतः शुक्रं च तन्तुं वयतस्तथेत्यर्थः ॥ ५८ ॥ **ग्रस्तामिति** । हे अश्विनौ । सुपर्णस्य लुप्तोपममेतत् । सुपर्णतुल्यपराक्रमस्य गतेर्वा वृकस्य बलेन ग्रस्तां अभिभूतां । वर्तिकां वर्तिकाख्यां पक्षिणीं । तस्याः सौभगाय जीवनरूपसुखाय । अमुञ्चतं भवन्ताविति शेषः । आस्नो वृकस्येत्यस्यामृचि इयं कथा प्रसिद्धा । अहं तौ युवां तावत् कार्त्स्न्येन अनमं नमस्कृतवानस्मि । तौ कौ । यौ प्रति । सुष्ठु वर्तत इति सुवृत् सोमयागकर्ता । तमाय तमु ग्लानाविति धातोः ग्लानये । असत्तमाः असमीचीना अपि गाः उदावहत् प्रार्थनाविषयत्वेन प्रापयामास । गोविषयप्रार्थनां कृतवानित्यर्थः । किंभूतौ यौ । अरुणा अरुणौ । डादेशश्छान्दसः । लुप्तोपममेतत् । सोमयागे हि प्रातरनुवाकादावश्विनोः स्तुतत्वात् यथा दिनारम्भे अरुणस्तथा सोमयागारम्भे युवामित्यर्थः । अत्रायमाशयः । सोमयागे इन्द्रादिषु देवताभूतेषु सत्स्वपि असमीचीनगोरक्षणस्यानन्यसाध्यत्वज्ञानेन यजमानेन भवन्तावेव प्रार्थितावित्यहमपि युवामेव स्तौमीति ॥ ५९ ॥ **षष्टिश्च गाव इति** । ज्योतिष्टोमे सन्त्युपसदस्तिस्रः । ताश्च सत्रेऽधिका भवन्ति । उपसत्सु च प्रवर्ग्य उक्तः । तत्र महावीराख्यपात्रेषु तप्ते घृते दुग्धं प्रक्षिप्यते तदर्था चास्ति धेनुः । ततो घृतं दुग्धं च मिश्रमश्विभ्यां हूयते । एवं सति यदा गवामयनादिसत्रेषु संवत्सरमुपसदः क्रियन्ते तत्र घर्मे सर्वोत्कृष्टे अश्विनावेव यष्टव्याविति स्तुतिरत्र क्रियते । तावश्विनावनममिति गतेन संबन्धः । तौ कौ यत्तदोर्नित्यसंबन्धाद्यौ तं घर्मं दुहतः साधयतः । प्रसिद्धोपि

एकां नाभिं सप्त शता अराः श्रिताः
प्रधिष्वन्या विंशतिरर्पिता अराः ।
अनेमि चक्रं परिवर्ततेऽजरं
मायाऽश्विनौ समनक्ति चर्षणी ॥ ६१

एकं चक्रं वर्तते द्वादशारं
षण्णाभिमेकाक्षममृतस्य धारणम् ।
यस्मिन्देवा अधि विश्वे विषक्ता-
स्तावश्विनौ मुञ्चतो मा विषीदतम् ॥ ६२

अश्विनाविन्दुममृतं वृत्तभूयौ
तिरोधत्तामश्विनौ दासपत्नी ।
हित्वा गिरिमश्विनौ गामुदाचरन्तौ
तद्वृष्टिमह्नात्प्रस्थितौ बलस्य ॥ ६३

युवां दिशो जनयथो दशाग्रे
समानं मूर्ध्नि रथयानं वियन्ति ।
तासां यातमृषयोऽनुप्रयान्ति
देवा मनुष्याः क्षितिमाचरन्ति ॥ ६४

युवां वर्णान्विकुरुथो विश्वरूपां-
स्तेऽधिक्षियन्ते भुवनानि विश्वा ।
ते भानवोऽप्यनुसृताश्चरन्ति
देवा मनुष्याः क्षितिमाचरन्ति ॥ ६५

तौ नासत्यावश्विनौ वां महेऽहं
स्रजं च यां बिभृथः पुष्करस्य ।

घर्मो भवतोर्भवति । भवतोरेव देवतात्वादित्याशयः । तं कं यत्तदोर्नित्यसंबन्धाद्यं घर्मं त्रिशताः षष्टिश्च धेनवो दुग्धदात्र्यो गावः । घर्मे दुग्धरहितानां गवामनुपयोगात् । एकं वत्सं वत्सरं । अत्यन्तसंयोगे द्वितीया । वत्सरावधीत्यर्थः । सुवते साधयन्ति । घृतेन । दुहन्ति दुग्धेन साधयन्ति । यज्ञादौ सावनः स्मृत इति वाक्यादत्र सावनवर्षग्रहणेन षष्ट्यधिकशतत्रयदिनानि भवन्ति । तेन तावत्य एव गावः घृतदुग्धाभ्यां घर्मं साधयन्तीत्यर्थः । कथंभूता गावः । नानागोष्ठाः लुप्तोपममेतत् । दिनानां गोष्ठोपमाया विवक्षितत्वात् नानागोष्ठनिष्ठा इत्यर्थः । एकदोहना विहिताः एकोऽध्वर्युर्दोहनकर्ता यासामेवंभूताः श्रुतायुक्ता इत्यर्थः । किंभूतं घर्मं उक्थ्यं प्रशस्यम् ॥ ६० ॥ **एकां नाभिमिति** । सूर्यरथचालकत्वेनाश्विनावत्र स्तूयेते । श्लोकद्वयस्यैकान्वयः । हे अश्विनौ युवां । विषीदतं विषीदन्तं । छान्दसो नुमभावः । मां मुञ्चतः । लकारव्यत्ययेन मुञ्चतमित्याशंसा । तौ कौ । यावश्विनौ । चर्षणी लुप्तोपमं चैतत् । चर्षणिशब्दो निघण्टुषु मनुष्यपर्यायः पठितः । मनुष्याविवेत्यर्थः । सूर्यरथचालकत्वेन अश्विनोः शोभां वक्तुं सूर्यरथसंबन्धिचक्रद्वयगतिं वर्णयति पादत्रिकद्वयेन । एकपदमावृत्य योज्यं । एकं चक्रं ईदृशं परिवर्तते भ्रमति । अन्यदेकं चक्रं ईदृशं वर्तते चलतीत्यर्थः । कीदृशमेकं चक्रं आद्यस्य एकां नाभिं सप्तशताः सप्तशतसङ्ख्याः अराः अन्याश्च विंशतिसङ्ख्या अराः श्रिताः संलग्नाः । चक्रमध्यस्थनाभौ विंशत्यधिकसप्तशतसंख्याः अराः तिर्यक् संलग्ना इत्यर्थः । किंभूता अराः । प्रधिषु बाह्यचक्रावयवेषु अर्पिता अधिनिवेशिता इत्यर्थः । कीदृशमन्यचक्रं द्वादशारं षण्णाभि । पुंस्त्वं छान्दसम् । कीदृशं प्रथमचक्रं । अनेमि चलनेमिरहितमित्यर्थः । अजरं न जीर्यत इत्यजरम् । जीर्णं न भवतीत्यर्थः । एकं चक्रं मध्यशङ्कुनिहितपाशवत्स्वस्थल एव परिभ्रमत् । द्वितीयं तु समन्ततश्चरतीत्याशयः । द्वितीयचक्रविशेषणमेकाक्षमिति । एक उत्कृष्टोऽक्षोऽस्य अतिदृढ इत्यर्थः । अमृतस्य स्वर्गस्य धारणं रक्षणसाधनम् । यस्मिन्स्वचक्रे विश्वे सर्वे देवाः अधिविषक्ताः । प्राधान्याद्देवग्रहणम् । तेन तदुपलक्षिताः सर्वे जीवा इत्यर्थः । सर्वेषां सूर्यचक्रनियोगोदितत्वादित्यर्थः । अत्र "पञ्चारे चक्रे" इत्यादिश्रुतयो मानम् ॥ ६१—६२ ॥ **अश्विनाविति** । हे अश्विनौ दासपत्नी । सुपांसुलुगिति लुप्तसप्तमीबहुवचनत्वेन दासपत्नीषु अप्सु । इन्दुं अमृतं सोमाख्यममृतं । तिरोधत्तां कृतवन्तौ । किंभूतावश्विनौ वृत्तभूयौ भूयोवृत्तौ । नानाकर्माणावित्यर्थः । हित्वेति । अश्विनौ यत् यदा गिरिं मेरुं हित्वा त्यक्त्वा गां भुवं उदाचरन्तौ गच्छन्तौ । तत् तदा बलस्य प्राणिनां सामर्थ्यस्य संबन्धिनीं तज्जनिकां वृष्टिं प्रति । अह्नात् शीघ्रम् । अह्नादिति सुबन्तप्रतिरूपकमव्ययं । प्रस्थितौ कृतप्रस्थानौ भवथः । सुमेरोः सकाशाद्भुवमागत्य प्राणिनामन्नादिद्वारेण बलजनिकां वृष्टिं कुरुथ इत्यर्थः ॥ ६३ ॥ **युवामिति** । हे अश्विनौ युवां अग्रे प्रथमं समानं सम्यक् आनः आगतं गमनं यस्मिन्कर्मणि तथा । सोमयागे प्रथमं गच्छन्ताविति यावत् । दश दिशो जनयथः । दिक्शब्देन इन्द्रादयो दिक्पाला लक्ष्यन्ते । जनिः प्रादुर्भावार्थः । सोमयागे प्रथमगामित्वेन इन्द्रादिदेवताप्रादुर्भावकत्वं । अथ तदनन्तरं याः दिशः दिग्देवताः मूर्ध्नि यागस्य मूर्ध्नि प्रधाने वियन्ति संबध्यन्ते । तासां दिग्देवतानां यातं यानमनु पश्चात् ऋषयः प्रयान्ति मूर्ध्नीति पूर्वेणान्वयः । अतएव युवयोः देवा मनुष्याश्च क्षितिमैश्वर्यं ऐश्वर्ययुक्तां स्तुतिमाचरन्ति कुर्वन्ति ॥ ६४ ॥ **युवां वर्णानिति** । त इति तच्छब्दात् यच्छब्दो द्रष्टव्यः । हे अश्विनौ युवां वर्णान्नानावर्णान् विश्वरूपान् सृष्ट्यादिहेतुत्वेन अनेकरूपान् यान् भानून् विकुरुथः विशेषेण कुरुथः सूर्यरथप्रकाशयितृत्वादित्याशयः । ते भानवः सूर्यकिरणाः विश्वा विश्वानि सर्वाणि भुवनानि अधिक्षियन्ते आवृण्वन्ति । त एव भानवोऽनुसृताश्चरन्त्यपि विचरन्ति चेत्यर्थः । अतएव देवा मनुष्याश्च युवयोः क्षितिं स्तुतिमाचरन्तीति पूर्ववदर्थः ॥ ६५ ॥ **तौ नासत्याविति** ।

तौ नासत्यावमृतावृतावृधा-
वृते देवास्तत्प्रपदे न सूते ॥ ६६

मुखेन गर्भं लभतां युवानौ
गतासुरेतत्प्रपदेन सूते ।
सद्यो जातो मातरमत्ति गर्भ-
स्तावश्विनौ मुञ्चथो जीवसे गाम् ॥ ६७

स्तोतुं न शक्नोमि गुणैर्भवन्तौ
चक्षुर्विहीनः पथि संप्रमोहः ।
दुर्गेऽहमस्मिन्पतितोऽस्मि कूपे
युवां शरण्यौ शरणं प्रपद्ये ॥ ६८

सौतिरुवाच ।

एवमृग्भिश्चान्यैरस्तुवत् । इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैनं प्रीतौ स्व एष तेऽपूपोशानैनमिति ॥ ६९

स एवमुक्तः प्रत्युवाच नानृतमूचतुर्भगवन्तौ नत्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्येति ७०

ततस्तमश्विनावूचतुः । आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपो दत्त उपयुक्तः स तेनानिवेद्य गुरवे त्वमपि तथैव कुरुष्व यथा कृतमुपाध्यायेनेति ॥ ७१

स एवमुक्तः प्रत्युवाच एतत्प्रत्यनुनये भवन्तावश्विनौ नोत्सहेऽहमनिवेद्य गुरवेऽपूपमुपयोक्तुमिति ॥ ७२

तमश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या। उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतोऽपि हिरण्मया भविष्यन्ति चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति ॥ ७३

स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्याभ्यवादयत् ॥ ७४

आचचक्षे च स चास्य प्रीतिमान्बभूव ॥ ७५

आह चैनं यथाऽश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति ॥ ७६

सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति । एषा तस्यापि परीक्षोपमन्योः ७७

अथापरः शिष्यस्तस्यैवापोदस्य धौम्यस्य वेदो नाम तमुपाध्यायः समादिदेश वत्स वेद इहास्यतां तावन्मम गृहे कंचित्कालं शुश्रूषुणा च भवितव्यं श्रेयस्ते भविष्यतीति ॥ ७८

स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत् । गौरिव नित्यं गुरुणा धूर्षु नियोज्यमानः शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलस्तस्य महता कालेन गुरुः परितोषं जगाम ७९

तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप । एषा तस्यापि परीक्षा वेदस्य ॥ ८०

स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं प्रत्यपद्यत । तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः स शिष्यान्न किंचिदुवाच कर्म वा क्रियतां गुरुशुश्रूषा वेति । दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष ॥ ८१

---

हे नासत्यावश्विनौ अहं तौ वां युवां महे पूजयामि । मनसा पूजयामीत्यर्थः । यां छान्दसत्वेन जात्यभिप्रायेणैकवचनम् । ये । पुष्करस्य जात्यभिप्रायैकवचनं । पुष्कराणां पद्मानां स्रजं जात्येकवचनेन स्रजौ माले बिभृथो धारयथः । तौ प्रसिद्धौ अमृतौ नास्ति मृतं मरणं ययोस्तौ तथोक्तौ ऋतावृधौ ऋतं सत्यं यज्ञमुदकं वा वर्धयत इति तथा तौ नासत्यौ ऋते विना देवा इन्द्रादयः पदे स्थाने सोमयागादौ तद्देवसंबन्धित्वेन प्रसिद्धं हविः न प्रसूते वचनव्यत्ययेन न प्राप्नुवन्ति । सोमयागे अश्विनोः प्रथमगामित्वेन तौ विना देवाः स्वांशं न स्वीकुर्वन्तीत्यर्थः ॥ ६६ ॥ **मुखेन गर्भमिति** । हे अश्विनौ तौ युवां जीवसे जीवितुं । असेन्प्रत्ययान्तमेतत् । गां दृष्टिं मुञ्चथः लकारव्यत्ययेन मुञ्चतमित्याशंसा । तौ कौ यौ मुखेन कृत्वा युवानौ तरुणावेव गर्भं भावप्रधानो निर्देशः । गर्भत्वं लभतां अलभतां । बहुलं छन्दसीत्यडभावः । ननु नवमासगर्भधारणाभावे कथमाकस्मिकोत्पत्तिः कथं च स्तन्यपानाद्यभावे आकस्मिकं तारुण्यमित्यत आह । गतासुरित्यादि । गता असवः प्राणा यस्येति गतासुर्मनुष्यादिः । एतत् छान्दसो लिङ्गव्यत्ययः । एनं गर्भं । प्रपदेन प्रकृष्टेन पदेन गमनेन नवमासरूपेण प्रसूते जातः उत्पन्नः स गर्भः सद्यः तत्काले जननीं अत्ति पिबति । मनुष्यदेहे एतदुचितम् । अश्विनोस्तु मरणधर्मत्वाभावान्नैवमित्याशयः ॥ ६७ ॥ एषा तस्येति सूतवाक्यं ॥ ७७ ॥ गौर्बलीवर्दः ॥ ७९ ॥ नेयेष न कामितवान् ॥ ८१ ॥

अथ कस्मिंश्चित्काले वेदं ब्राह्मणं जनमेजयः पौष्यश्च क्षत्रियावुपेत्योपाध्यायं वरयाञ्चक्रतुः ८२

स कदाचिद्याज्यकार्येणाभिप्रस्थित उत्तङ्कनामानं शिष्यं नियोजयामास ॥ ८३

भो यत्किंचिदस्मद्गृहे परिहीयते तदिच्छाम्यहमपरिहीयमानं भवता क्रियमाणमिति स एवं प्रतिसंदिश्योत्तङ्कं वेदः प्रवासं जगाम ॥ ८४

अथोत्तङ्कः शुश्रूषुर्गुरुनियोगमनुतिष्ठमानो गुरुकुले वसति स्म। स तत्र वसमान उपाध्यायस्त्रीभिः सहिताभिराहूयोक्तः ॥ ८५

उपाध्यायानी ते ऋतुमती उपाध्यायश्च प्रोषितोऽस्या यथाऽयमृतुर्वन्ध्यो न भवति तथा क्रियतामेषा विषीदतीति ॥ ८६

एवमुक्तस्ताः स्त्रियः प्रत्युवाच। न मया स्त्रीणां वचनादिदमकार्यं करणीयम्। न ह्यहमुपाध्यायेन संदिष्टोऽकार्यमपि त्वया कार्यमिति ८७

तस्य पुनरुपाध्यायः कालान्तरेण गृहमाजगाम तस्मात्प्रवासात्। स तु तद्वृत्तं तस्याशेषमुपलभ्य प्रीतिमानभूत् ॥ ८८

उवाच चैनं वत्सोत्तङ्क किं ते प्रियं करवाणीति। धर्मतो हि शुश्रूषितोऽस्मि भवता तेन प्रीतिः परस्परेण नौ संवृद्धा तदनुजाने भवन्तं सर्वानेव कामानवाप्स्यसि गम्यतामिति ॥ ८९

स एवमुक्तः प्रत्युवाच किं ते प्रियं करवाणीति एवं ह्याहुः ॥ ९०

यश्चाधर्मेण वै ब्रूयाद्यश्चाधर्मेण पृच्छति।
तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ॥ ९१

सोहमनुज्ञातो भवता इच्छामीष्टं गुर्वर्थमुपहर्तुमिति। तेनैवमुक्त उपाध्यायः प्रत्युवाच वत्सोत्तङ्क उष्यतां तावदिति ॥ ९२

स कदाचित्तमुपाध्यायमाहोत्तङ्क आज्ञापयतु भवान्किं ते प्रियमुपाहरामि गुर्वर्थमिति ॥ ९३

तमुपाध्यायः प्रत्युवाच वत्सोत्तङ्क बहुशो मां चोदयसि गुर्वर्थमुपाहरामीति तद्गच्छैनां प्रविश्योपाध्यायानीं पृच्छ किमुपाहरामीति एषा यद्ब्रवीति तदुपाहरस्वेति ॥ ९४

स एवमुक्त उपाध्यायेनोपाध्यायानीमपृच्छद्भवत्युपाध्यायेनास्म्यनुज्ञातो गृहं गन्तुमिच्छामीष्टं ते गुर्वर्थमुपहृत्यानृणो गन्तुं तदाज्ञापयतु भवती किमुपाहरामि गुर्वर्थमिति ॥ ९५

सैवमुक्तोपाध्यायानी तमुत्तङ्कं प्रत्युवाच गच्छ पौष्यं प्रति राजानं कुण्डले भिक्षितुं तस्य क्षत्रियया पिनद्धे ॥ ९६

आनयस्वेतश्चतुर्थेऽहनि पुण्यकर्म भविता ताभ्यामाबद्धाभ्यां शोभमाना ब्राह्मणान्परिवेष्टुमिच्छामि। तत्संपादयस्व एवं हि कुर्वतः श्रेयो भविताऽन्यथा कुतः श्रेय इति ॥ ९७

स एवमुक्तस्तयोपाध्यायान्या प्रातिष्ठतोत्तङ्कः स पथि गच्छन्नपश्यदृषभमतिप्रमाणं तमधिरूढं च पुरुषमतिप्रमाणमेव स पुरुष उत्तङ्कमभ्यभाषत ९८

भोउत्तङ्कैतत्पुरीषमस्य ऋषभस्य भक्षयस्वेति स एवमुक्तो नैच्छत् ॥ ९९

तमाह पुरुषो भूयो भक्षयस्वोत्तङ्क मा विचारयोपाध्यायेनापि ते भक्षितं पूर्वमिति ॥ १००

स एवमुक्तो बाढमित्युक्त्वा तदा तदृषभस्य मूत्रं पुरीषं च भक्षयित्वोत्तङ्कः संभ्रमादुत्थित एवापोऽनुपस्पृश्य प्रतस्थे ॥ १०१

यत्र स क्षत्रियः पौष्यस्तमुपेत्यासीनमपश्यदुत्तङ्कः। स उत्तङ्कस्तमुपेत्याशीर्भिरभिनन्द्योवाच॥

अर्थी भवन्तमुपागतोऽस्मीति स एनमभिवाद्योवाच। भगवन्पौष्यः खल्वहं किं करवाणीति॥

स तमुवाच गुर्वर्थं कुण्डलयोरर्थेनाभ्यागतोऽस्मि। ये वै ते क्षत्रियया पिनद्धे कुण्डले ते भवान्दातुमर्हतीति ॥ १०४

---

नियोजयामास अग्निशुश्रूषादाविति शेषः ॥ ८३ ॥ परिहीयते न्यूनं भवति ॥ ८४ ॥ आहुः वृद्धा इति शेषः ॥ ९० ॥ ब्रूयात् अध्यापयेत्। पृच्छति अधीते। अधर्मेण गुरुदक्षिणादिव्यतिरेकेण ॥ ९१ ॥ पिनद्धे धृते ॥ ९६ ॥ अनुपस्पृश्य अनाच-

तं प्रत्युवाच पौष्यः प्रविश्यान्तःपुरं क्षत्रिया याच्यतामिति। स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत् ॥ १०५

स पौष्यं पुनरुवाच न युक्तं भवताऽहमनृतेनोपचरितुं न हि तेऽन्तःपुरे क्षत्रिया सन्निहिता नैनां पश्यामि ॥ १०६

स एवमुक्तः पौष्यः क्षणमात्रं विमृश्योत्तङ्कं प्रत्युवाच। नियतं भवानुच्छिष्टः स्मर तावन्न हि सा क्षत्रिया उच्छिष्टेनाशुचिना शक्या द्रष्टुं पतिव्रतात्वात्सैषा नाशुचेर्दर्शनमुपैतीति ॥ १०७

अथैवमुक्त उत्तङ्कः स्मृत्वोवाचास्ति खलु मया तु भक्षितं नोपस्पृष्टमागच्छतेति। तं पौष्यः प्रत्युवाच एष ते व्यतिक्रमो नोत्थितेनोपस्पृष्टं भवति शीघ्रमागच्छतेति ॥ १०८

अथोत्तङ्कस्तं तथेत्युक्त्वा प्राङ्मुख उपविश्य सुप्रक्षालितपाणिपादवदनो निःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिस्त्रिः पीत्वा द्विः परिमृज्य खान्यद्भिरुपस्पृश्य चान्तःपुरं प्रविवेश १०९

ततस्तां क्षत्रियामपश्यत्सा च दृष्ट्वैवोत्तङ्कं प्रत्युत्थायाभिवाद्योवाच स्वागतं ते भगवन्नाज्ञापय किं करवाणीति ॥ ११०

स तामुवाचैते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति। सा प्रीता तेन तस्य सद्भावेन पात्रमयमनतिक्रमणीयश्चेति मत्वा ते कुण्डले अवमुच्यास्मै प्रायच्छदाह चैनमेते कुण्डले तक्षको नागराजः सुभृशं प्रार्थयत्यप्रमत्तो नेतुमर्हसीति ॥ १११

स एवमुक्तस्तां क्षत्रियां प्रत्युवाच भवती सुनिर्वृता भवतु। न मां शक्तस्तक्षको नागराजो धर्षयितुमिति ॥ ११२

स एवमुक्त्वा तां क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छत्। आह चैनं भोः पौष्य प्रीतोऽस्मीति तमुत्तङ्कं पौष्यः प्रत्युवाच ॥ ११३

भगवंश्चिरेण पात्रमासाद्यते भवांश्च गुणवानतिथिस्तदिच्छे श्राद्धं कर्तुं क्रियतां क्षण इति ११४

तमुत्तङ्कः प्रत्युवाच कृतक्षण एवास्मि शीघ्रमिच्छामि यथोपपन्नमन्नमुपस्कृतं भवतेति स तथेत्युक्त्वा यथोपपन्नेनान्नेनैनं भोजयामास ॥ ११५

अथोत्तङ्कः सकेशं शीतमन्नं दृष्ट्वा अशुच्येतदिति मत्वा तं पौष्यमुवाच। यस्मान्मे अशुच्यन्नं ददासि तस्मादन्धो भविष्यसीति ॥ ११६

तं पौष्यः प्रत्युवाच। यस्मात्त्वमदुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति तमुत्तङ्कः प्रत्युवाच ॥

न युक्तं भवताऽन्नमशुचि दत्त्वा प्रतिशापं दातुं तस्मादन्नमेव प्रत्यक्षीकुरु। ततः पौष्यस्तदन्नमशुचि दृष्ट्वा तस्याशुचिभावमपरोक्षयामास ॥

अथ तदन्नं मुक्तकेश्या स्त्रियोपहृतमनुष्णं सकेशं चाशुच्येतदिति मत्वा तमृषिमुत्तङ्कं प्रसादयामास ॥ ११९

भगवन्नेतदज्ञानादन्नं सकेशमुपाहृतं शीतं च। तत्क्षामये भवन्तं न भवेयमन्ध इति। तमुत्तङ्कः प्रत्युवाच ॥ १२०

न मृषा ब्रवीमि भूत्वा त्वमन्धो नचिरादनन्धो भविष्यसीति। ममापि शापो भवता दत्तो न भवेदिति ॥ १२१

तं पौष्यः प्रत्युवाच न चाहं शक्तः शापं प्रत्यादातुं न हि मे मन्युरद्याप्युपशमं गच्छति किं चैतद्भवता न ज्ञायते। यथा ॥ १२२

नवनीतं हृदयं ब्राह्मणस्य
वाचि क्षुरो निहितस्तीक्ष्णधारः।
तदुभयमेतद्विपरीतं क्षत्रियस्य
वाङ्नवनीतं हृदयं तीक्ष्णधारम् ॥ इति ॥ १२३

तदेवंगते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं शापमन्यथाकर्तुं गम्यतामिति। तमुत्तङ्कः प्रत्युवाच ॥ १२४

भवताऽहमन्नस्याशुचिभावमालक्ष्य प्रत्यनुनीतः। प्राक् च तेऽभिहितं यस्माददुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति। दुष्टे चान्ने नैष मम शापो भविष्यतीति ॥ १२५

'म्य ॥ १०१ ॥ अनृतेनोपचरितुं वञ्चयितुं ॥ १०६ ॥

साधयामस्तावदित्युक्त्वा प्रातिष्ठतोत्तङ्कस्ते कुण्डले गृहीत्वा । सोऽपश्यदथ पथि नग्नं क्षपणकमागच्छन्तं मुहुर्मुहुर्दृश्यमानमदृश्यमानं च १२६

अथोत्तङ्कस्ते कुण्डले संन्यस्य भूमावुदकार्थं प्रचक्रमे । एतस्मिन्नन्तरे स क्षपणकस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत् ॥ १२७

तमुत्तङ्कोऽभिसृत्य कृतोदककार्यः शुचिः प्रयतो नमो देवेभ्यो गुरुभ्यश्च कृत्वा महता जवेन तमन्वयात् ॥ १२८

तस्य तक्षको दृढमासन्नः स तं जग्राह । गृहीतमात्रः स तद्रूपं विहाय तक्षकस्वरूपं कृत्वा सहसा धरण्यां विवृतं महाबिलं प्रविवेश ॥१२९

प्रविश्य च नागलोकं स्वभवनमगच्छत् । अथोत्तङ्कस्तस्याः क्षत्रियाया वचः स्मृत्वा तं तक्षकमन्वगच्छत् ॥ १३०

स तद्बिलं दण्डकाष्ठेन चखान न चाशकत् । तं क्लिश्यमानमिन्द्रोऽपश्यत्स वज्रं प्रेषयामास । गच्छास्य ब्राह्मणस्य साहाय्यं कुरुष्वेति ॥ १३१

अथ वज्रं दण्डकाष्ठमनुप्रविश्य तद्बिलमदारयत् ॥ १३२

तमुत्तङ्कोऽनुविवेश तेनैव बिलेन प्रविश्य च तं नागलोकमपर्यन्तमनेकविधप्रासादहर्म्यवलभीनिर्यूहशतसंकुलमुच्चावचक्रीडाश्चर्यस्थानावकीर्णमपश्यत् ॥ १३३

स तत्र नागांस्तानस्तुवदेभिः श्लोकैः ।
य ऐरावतराजानः सर्पाः समितिशोभनाः ।
क्षरन्त इव जीमूताः सविद्युत्पवनेरिताः ॥ १३४
सुरूपा बहुरूपाश्च तथा कल्माषकुण्डलाः ।
आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः ॥ १३५
बहूनि नागवेश्मानि गङ्गायास्तीर उत्तरे ।
तत्रस्थानपि संस्तौमि महतः पन्नगानहम् ॥ १३६
इच्छेत्कोऽर्कांशुसेनायां चर्तुमैरावतं विना ।
शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः ॥ १३७
सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रो यदेजति ।
ये चैनमुपसर्पन्ति ये च दूरपथं गताः ॥ १३८
अहमैरावतज्येष्ठभ्रातृभ्योऽकरवं नमः ।
यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत्पुरा ॥ १३९
तं नागराजमस्तौषं कुण्डलार्थाय तक्षकम् ।
तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ ॥ १४०
कुरुक्षेत्रं च वसतां नदीमिक्षुमतीमनु ।
जघन्यजस्तक्षकस्य श्रुतसेनेति यः सुतः ॥ १४१
अवसद्यो महद्द्युम्नि प्रार्थयन्नागमुख्यताम् ।
करवाणि सदा चाहं नमस्तस्मै महात्मने ॥ १४२

सौतिरुवाच ।

एवं स्तुत्वा स विप्रर्षिरुत्तङ्को भुजगोत्तमान् ।
नैव ते कुण्डले लेभे ततश्चिन्तामुपागमत् ॥ १४३

एवं स्तुवन्नपि नागान्यदा ते कुण्डले नालभत्तदाऽपश्यत्स्त्रियौ तन्त्रे अधिरोप्य सुवेमे पटं वयन्त्यौ । तस्मिंस्तन्त्रे कृष्णाः सिताश्च तन्तवश्चक्रं चापश्यद्द्वादशारं षड्भिः कुमारैः परिवर्त्यमानं पुरुषं चापश्यदश्वं च दर्शनीयम् ॥ १४४

स तान्सर्वांस्तुष्टाव एभिर्मन्त्रवादश्लोकैः ॥ १४५

त्रीण्यर्पितान्यत्र शतानि मध्ये
षष्टिश्च नित्यं चरति ध्रुवेऽस्मिन् ।
चक्रे चतुर्विंशतिपर्वयोगे
षड् वै कुमाराः परिवर्तयन्ति ॥ १४६
तन्त्रं चेदं विश्वरूपे युवत्यौ
वयतस्तन्तून्सततं वर्तयन्त्यौ ।

---

उदकार्थं शौचाचमनादि कर्तुं ॥ १२७ ॥ दृढमासन्नः अत्यन्तसन्निहितः ॥ १२९ ॥ कल्माषकुण्डलाः चित्रकुण्डलाः ॥ १३५ ॥ अर्कांशुसेनायां सेनावद्दुःसहरश्मिजाले ॥ १३७ ॥ महद्द्युम्नि तीर्थविशेषे ॥ १४२ ॥ मन्त्रवादश्लोकैः मन्त्रस्वरूपश्लोकैः ॥ १४५ ॥ **त्रीण्यर्पितानीति** । मन्त्रलिङ्गमात्रावगमात्तुष्टाव । विशेषज्ञानं तु तस्य गुरुमुखादेव भविष्यति । अत्र चक्रे । नित्यं चरति भ्रमति । ध्रुवे प्रवाहरूपेण नित्ये कालरूपे । शतानि षष्टिश्च अहोरात्राणामिति शेषः । चतुर्विंशतिपर्वणां शुक्लकृष्णपक्षरूपाणां योगो यस्मिन्तथाभूते । मध्येऽर्पितानि । यच्च षट् कुमाराः ऋतवः परिवर्तयन्ति ॥ १४६ ॥ **तन्त्रं चेदमिति** । तन्त्रं आतानवितानरूपं तन्तुसमुदायं । विश्वरूपे समयभेदेन स्त्रीपुरुषादिरूपे । युवत्यौ धाताविधातारौ ।

जग्मतुः परया प्रीत्या परं पारं महोदधेः ॥ ४
कद्रूश्च विनता चैव दाक्षायण्यौ विहायसा ।
आलोकयन्त्यावक्षोभ्यं समुद्रं निधिमम्भसाम्॥५
वायुनाऽतीव सहसा क्षोभ्यमाणं महास्वनम् ।
तिमिंगिलसमाकीर्णं मकरैरावृतं तथा ॥ ६
संयुतं बहुसाहस्रैः सत्त्वैर्नानाविधैरपि ।
घोरैर्घोरमनाधृष्यं गम्भीरमतिभैरवम् ॥ ७
आकरं सर्वरत्नानामालयं वरुणस्य च ।
नागानामालयं चापि सुरम्यं सरितां पतिम् ॥८
पातालज्वलनावासमसुराणां तथालयम् ।
भयंकराणां सत्त्वानां पयसो निधिमव्ययम् ॥ ९
शुभ्रं दिव्यममर्त्यानाममृतस्याकरं परम् ।
अप्रमेयमचिन्त्यं च सुपुण्यजलसंमितम् ॥ १०
महानदीभिर्बह्वीभिस्तत्र तत्र सहस्रशः ।
आपूर्यमाणमत्यर्थं नृत्यन्तमिव चोर्मिभिः ॥ ११
इत्येवं तरलतरोर्मिसंकुलं ते
गम्भीरं विकसितमम्बरप्रकाशम् ।
पातालज्वलनशिखाविदीपिताङ्गं
गर्जन्तं द्रुतमभिजग्मतुस्ततस्ते ॥ १२

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः ॥ २३ ॥

गरुडोत्पत्तिः ॥ १ ॥ देवकृतस्तुत्या गरुडकृतं स्वतेजस्संहरणम् ॥ २ ॥

सौतिरुवाच ।
तं समुद्रमतिक्रम्य कद्रूर्विनतया सह ।
न्यपतत्तुरगाभ्याशे न चिरादिव शीघ्रगा ॥ १
ततस्ते तं हयश्रेष्ठं ददृशाते महाजवम् ।
शशाङ्ककिरणप्रख्यं कालवालमुभे तदा ॥ २
निशाम्य च बहून्वालान्कृष्णान्पुच्छसमाश्रितान् ।
विषण्णरूपां विनतां कद्रूर्दास्ये न्ययोजयत् ॥ ३
ततः सा विनता तस्मिन्पणितेन पराजिता ।
अभवद्दुःखसंतप्ता दासीभावं समास्थिता ॥ ४
एतस्मिन्नन्तरे चापि गरुडः काल आगते ।
विना मात्रा महातेजा विदार्याण्डमजायत ॥ ५
महासत्त्वबलोपेतः सर्वा विद्योतयन्दिशः ।
कामरूपः कामगमः कामवीर्यो विहंगमः ॥ ६
अग्निराशिरिवोद्भासन्समिद्धोऽतिभयंकरः ।
विद्युद्विस्पष्टपिङ्गाक्षो युगान्ताग्निसमप्रभः ॥ ७
प्रवृद्धः सहसा पक्षी महाकायो नभोगतः ।
घोरो घोरस्वनो रौद्रो वह्निरौर्व इवापरः ॥ ८
तं दृष्ट्वा शरणं जग्मुर्देवाः सर्वे विभावसुम् ।
प्रणिपत्याब्रुवंश्चैनमासीनं विश्वरूपिणम् ॥ ९
अग्ने मा त्वं प्रवर्धिष्ठाः कच्चिन्नो न दिधक्षसि ।
असौ हि राशिः सुमहान्समिद्धस्तव सर्पति॥ १०
अग्निरुवाच ।
नैतदेवं यथा यूयं मन्यध्वमसुरार्दनाः ।
गरुडो बलवानेष मम तुल्यश्च तेजसा ॥ ११
जातः परमतेजस्वी विनतानन्दवर्धनः ।
तेजोराशिमिमं दृष्ट्वा युष्मान्मोहः समाविशत्१२
नागक्षयकरश्चैव काश्यपेयो महाबलः ।
देवानां च हिते युक्तस्त्वहितो दैत्यरक्षसाम्॥१३
न भीः कार्या कथं चात्र पश्यध्वं सहिता मया ।
सौतिरुवाच ।
एवमुक्तास्तदा गत्वा गरुडं वाग्भिरस्तुवन् ॥१४
ते दूरादभ्युपेत्यैनं देवाः सर्षिगणास्तदा ।
देवा ऊचुः ।
त्वमृषिस्त्वं महाभागस्त्वं देवः पतगेश्वरः ॥ १५
त्वं प्रभुस्तपनः सूर्यः परमेष्ठी प्रजापतिः ।
त्वमिन्द्रस्त्वं हयमुखस्त्वं शर्वस्त्वं जगत्पतिः॥१६

वत्यौ ॥ ३ ॥ द्वाविंशोऽध्यायः ॥ २२ ॥
शशाङ्ककिरणवत्प्रख्या दीप्तिर्यस्य तं तादृशमपि कालवालं
कृष्णकेशम् ॥ २ ॥ और्वो वडवाग्निः ॥ ८ ॥ विभावसुं अग्निम्
॥९॥ अग्ने मा त्वमिति देवानां भ्रमवर्णनं अग्निगरुडयोरति सादृश्य-

त्वं मुखं पद्मजो विप्रस्त्वमग्निः पवनस्तथा ।
त्वं हि धाता विधाता च त्वं विष्णुः सुरसत्तमः ॥
त्वं महानभिभूः शश्वदमृतं त्वं महद्यशः ।
त्वं प्रभास्त्वमभिप्रेतं त्वं नस्त्राणमनुत्तमम् ॥ १८
'त्वं गतिः सततं त्वत्तः कथं नः प्राप्नुयाद्भयम् ।'
बलोर्मिमान्साधुरदीनसत्त्वः
समृद्धिमान्दुर्विषहस्त्वमेव ।
त्वत्तः सृतं सर्वमहीनकीर्ते
ह्यनागतं चोपगतं च सर्वम् ॥ १९
त्वमुत्तमः सर्वमिदं चराचरं
गभस्तिभिर्भानुरिवावभाससे ।
समाक्षिपन्भानुमतः प्रभां मुहु-
स्त्वमन्तकः सर्वमिदं ध्रुवाध्रुवम् ॥ २०
दिवाकरः परिकुपितो यथा दहे-
त्प्रजास्तथा दहसि हुताशनप्रभ ।
भयंकरः प्रलय इवाग्निरुत्थितो
विनाशयन्युगपरिवर्तनान्तकृत् ॥ २१
खगेश्वरं शरणमुपागता वयं
महौजसं ज्वलनसमानवर्चसम् ।
तडित्प्रभं वितिमिरमभ्रगोचरं
महाबलं गरुडमुपेत्य खेचरम् ॥ २२
परावरं वरदमजय्यविक्रमं
तवौजसा सर्वमिदं प्रतापितम् ।
जगत्प्रभो तप्तसुवर्णवर्चसा
त्वं पाहि सर्वांश्च सुरान्महात्मनः ॥ २३
भयान्विता नभसि विमानगामिनो
विमानिता विपथगतिं प्रयान्ति ते ।
ऋषेः सुतस्त्वमसि दयावतः प्रभो
महात्मनः खगवर कश्यपस्य ह ॥ २४
स मा क्रुधः कुरु जगतो दयां परां
त्वमीश्वरः प्रशममुपैहि पाहि नः ।
महाशनिस्फुरितसमस्वनेन ते
दिशोऽम्बरं त्रिदिवमियं च मेदिनी ॥२५
चलन्ति नः खग हृदयानि चानिशं
निगृह्यतां वपुरिदमग्निसन्निभम् ।
तव द्युतिं कुपितकृतान्तसन्निभां
निशाम्य नश्चलति मनोऽव्यवस्थितम् ।
प्रसीद नः पतगपते प्रयाचतां
शिवश्च नो भव भगवन्सुखावहः ॥ २६

सौतिरुवाच

एवं स्तुतः सुपर्णस्तु देवैः सर्षिगणैस्तदा ।
तेजसः प्रतिसंहारमात्मनः स चकार ह ॥ २७

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशोऽध्यायः ॥ २४ ॥

राहुणा कृतोपद्रवस्य सूर्यस्य क्रोधः ॥ १ ॥ ब्रह्माज्ञयाऽरुणस्य सूर्यसारथ्यकरणम् ॥ २ ॥

सौतिरुवाच ।

स श्रुत्वाऽथात्मनो देहं सुपर्णः प्रेक्ष्य च स्वयम् ।
शरीरप्रतिसंहारमात्मनः संप्रचक्रमे ॥ १

सुपर्ण उवाच ।

न मे सर्वाणि भूतानि विभियुर्देहदर्शनात् ।
भीमरूपात्समुद्विग्नास्तस्मात्तेजस्तु संहरे ॥ २

सौतिरुवाच ।

ततः कामगमः पक्षी कामवीर्यो विहंगमः ।
अरुणं चात्मनः पृष्ठमारोप्य स पितुर्गृहात् ॥ ३
मातुरन्तिकमागच्छत्परं तीरं महोदधेः ।
तत्रारुणश्च निक्षिप्तो पुरोदेशे महाद्युतेः ॥ ४
सूर्यस्तेजोभिरत्युग्रैर्लोकान्दग्धुमना यदा ।

कथनार्थम् ॥ १० ॥ चलन्तीत्युत्तरादपकृष्यते ॥ २५ ॥ निगृह्यतां संक्षिप्यताम् ॥ २६ ॥ त्रयोविंशोऽध्यायः ॥ २३ ॥

समुद्विग्नाः समुद्विग्नानि ॥ २ ॥

रुरुरुवाच ।
किमर्थं भगवान्सूर्यो लोकान्दग्धुमनास्तदा ॥ ५
किमस्यापहृतं देवैर्येनेमं मन्युराविशत् ।
प्रमतिरुवाच ।
चन्द्रार्काभ्यां यदा राहुराख्यातो ह्यमृतं पिबन् ॥६
वैरानुबन्धं कृतवांश्चन्द्रादित्यौ तदाऽनघ ।
बाध्यमानं ग्रहेणाथ ह्यादित्यं मन्युराविशत् ॥ ७
सुरार्थाय समुत्पन्नो रोषो राहोस्तु मां प्रति ।
बह्वनर्थकरं पापमेकोऽहं समवाप्नुयाम् ॥ ८
सहाय एव कार्येषु न च कृच्छ्रेषु दृश्यते ।
पश्यन्ति ग्रस्यमानं मां सहन्ते वै दिवौकसः ॥ ९
तस्माल्लोकविनाशार्थं ह्यवतिष्ठे न संशयः ।
एवं कृतमतिः सूर्यो ह्यस्तमभ्यगमद्गिरिम् ॥ १०
तस्माल्लोकविनाशाय संतापयत भास्करः ।
ततो देवानुपागम्य प्रोचुरेवं महर्षयः ॥ ११
अद्यार्धरात्रसमये सर्वलोकभयावहः ।
उत्पत्स्यते महान्दाहस्त्रैलोक्यस्य विनाशनः ॥ १२
ततो देवाः सर्षिगणा उपगम्य पितामहम् ।
अब्रुवन्किमिवेहाद्य महद्दाहकृतं भयम् ॥ १३
न तावद्दृश्यते सूर्यः क्षयोऽयं प्रतिभाति च ।
उदिते भगवन्भानौ कथमेतद्भविष्यति ॥ १४
पितामह उवाच ।
एष लोकविनाशाय रविरुद्यन्तुमुद्यतः ।
दृश्यन्नेव हि लोकान्स भस्मराशीकरिष्यति ॥ १५
तस्य प्रतिविधानं च विहितं पूर्वमेव हि ।
कश्यपस्य सुतो धीमानरुणेत्यभिविश्रुतः ॥ १६
महाकायो महातेजाः स स्थास्यति पुरो रवेः ।
करिष्यति च सारथ्यं तेजश्चास्य हरिष्यति ॥ १७
लोकानां स्वस्ति चैवं स्यादृषीणां च दिवौकसाम् ।
प्रमतिरुवाच ।
ततः पितामहाज्ञातः सर्वं चक्रे तदाऽरुणः ॥ १८
उदितश्चैव सविता ह्यरुणेन समावृतः ।
एतत्ते सर्वमाख्यातं यत्सूर्यं मन्युराविशत् ॥ १९
अरुणश्च यथैवास्य सारथ्यमकरोत्प्रभुः ।
भूय एवापरं प्रश्नं शृणु पूर्वमुदाहृतम् ॥ २०

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः ॥ २५ ॥

विनतया कद्रूवहनं गरुडेन सर्पवहनं च ॥ १ ॥ सूर्यातपतप्तस्वपुत्ररक्षार्थं कद्रूकृत इन्द्रस्तवः ॥ २ ॥

सौतिरुवाच ।
ततः कामगमः पक्षी महावीर्यो महाबलः ।
मातुरन्तिकमागच्छत्परं पारं महोदधेः ॥ १
यत्र सा विनता तस्मिन्पणितेन पराजिता ।
अतीव दुःखसंतप्ता दासीभावमुपागता ॥ २
ततः कदाचिद्विनतां प्रणतां पुत्रसन्निधौ ।
काले चाहूय वचनं कद्रूरिदमभाषत ॥ ३
नागानामालयं भद्रे सुरम्यं चारुदर्शनम् ।
समुद्रकुक्षावेकान्ते तत्र मां विनते नय ॥ ४
सौतिरुवाच ।
ततः सुपर्णमाता तामवहत्सर्पमातरम् ।
पन्नगान्गरुडश्चापि मातुर्वचनचोदितः ॥ ५
स सूर्यमभितो याति वैनतेयो विहंगमः ।
सूर्यरश्मिप्रतप्ताश्च मूर्च्छिताः पन्नगाऽभवन् ॥ ६
तदवस्थान्सुतान्दृष्ट्वा कद्रूः शक्रमथास्तुवत् ।
नमस्ते सर्वदेवेश नमस्ते बलसूदन ॥ ७
नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते ।
सर्पाणां सूर्यतप्तानां वारिणा त्वं प्लवो भव ॥ ८
त्वमेव परमं त्राणमस्माकममरोत्तम ।

चन्द्रादित्यौ प्रतीति शेषः ॥ ७ ॥ किमुत सूर्ये उदिते इति शेषः ॥ १२ ॥ चतुर्विंशोऽध्यायः ॥ २४ ॥

अभितः संमुखम् ॥ ६ ॥

ईशो ह्यसि पयः स्रष्टुं त्वमनल्पं पुरंदर ॥ ९
त्वमेव मेघस्त्वं वायुस्त्वमग्निर्विद्युतोऽम्बरे ।
त्वमभ्रगणविक्षेप्ता त्वामेवाहुर्महाघनम् ॥ १०
त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः ।
स्रष्टा त्वमेव लोकानां संहर्ता चापराजितः ॥ ११
त्वं ज्योतिः सर्वभूतानां त्वमादित्यो विभावसुः ।
त्वं महद्भूतमाश्चर्यं त्वं राजा त्वं सुरोत्तमः ॥ १२
त्वं विष्णुस्त्वं सहस्राक्षस्त्वं देवस्त्वं परायणम् ।
त्वं सर्वममृतं देव त्वं सोमः परमार्चितः ॥ १३
त्वं मुहूर्तस्तिथिस्त्वं च त्वं लवस्त्वं पुनः क्षणः ।
शुक्लस्त्वं बहुलस्त्वं च कला काष्ठा त्रुटिस्तथा ।
संवत्सरर्तवो मासा रजन्यश्च दिनानि च ॥ १४

त्वमुत्तमा सगिरिवना वसुंधरा
सभास्करं वितिमिरमम्बरं तथा ।
महोदधिः सतिमितिमिङ्गिलस्तथा
महोर्मिमान्बहुमकरो झषाकुलः ॥ १५
महायशास्त्वमिति सदाऽभिपूज्यसे
मनीषिभिर्मुदितमना महर्षिभिः ।
अभिष्टुतः पिबसि च सोममध्वरे
वषट्कृतान्यपि च हवींषि भूतये ॥ १६
त्वं विप्रैः सततमिहेज्यसे फलार्थं
वेदाङ्गेष्वतुलबलौघ गीयसे च ।
त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा
वेदाङ्गान्यभिगमयन्ति सर्वयत्नैः ॥ १७

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ॥ २६ ॥

स्तुत्या तुष्टेन इन्द्रेण कृतं जलवर्षणम् ॥ १ ॥

सौतिरुवाच ।
एवं स्तुतस्तदा कद्र्वा भगवान्हरिवाहनः ।
नीलजीमूतसंघातैः सर्वमम्बरमावृणोत् ॥ १
मेघानाज्ञापयामास वर्षध्वममृतं शुभम् ।
ते मेघा मुमुचुस्तोयं प्रभूतं विद्युदुज्ज्वलाः ॥ २
परस्परमिवात्यर्थं गर्जन्तः सततं दिवि ।
संवर्तितमिवाकाशं जलदैः सुमहाद्भुतैः ॥ ३
सृजद्भिरतुलं तोयमजस्रं सुमहारवैः ।
संप्रनृत्तमिवाकाशं धारोर्मिभिरनेकशः ॥ ४
मेघस्तनितनिर्घोषैर्विद्युत्पवनकम्पितैः ।
तैर्मेघैः सततासारं वर्षद्भिरनिशं तदा ॥ ५
नष्टचन्द्रार्ककिरणमम्बरं समपद्यत ।
नागानामुत्तमो हर्षस्तथा वर्षति वासवे ॥ ६
आपूर्यत मही चापि सलिलेन समन्ततः ।
रसातलमनुप्राप्तं शीतलं विमलं जलम् ॥ ७
तदा भूरभवच्छन्ना जलोर्मिभिरनेकशः ।
रामणीयकमागच्छन्मात्रा सह भुजंगमाः ॥ ८

॥ इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

गरुडस्य विनतां प्रति दास्यकारणप्रश्नः ॥ १ ॥ सर्पैः दास्यमोचनोपायकथनम् ॥ २ ॥

सौतिरुवाच ।
संप्रहृष्टास्ततो नागा जलधाराप्लुतास्तदा ।
सुपर्णेनोह्यमानास्ते जग्मुस्तं द्वीपमाशु वै ॥ १
तं द्वीपं मकरावासं विहितं विश्वकर्मणा ।
तत्र ते लवणं घोरं ददृशुः पूर्वमागताः ॥ २
सुपर्णसहिताः सर्पाः काननं च मनोरमम् ।

बहुलः कृष्णपक्षः ॥ १४ ॥ पञ्चविंशोऽध्यायः ॥ २५ ॥
संवर्तः कल्पान्तः संजातोस्मिन्निति संवर्तितम् ॥ ३ ॥ राम-
णीयकं रमणकसंज्ञं द्वीपम् ॥ ८ ॥ षड्विंशोऽध्यायः ॥ २६ ॥
लवणं लवणासुरं पूर्वं ददृशुः ॥ २ ॥

सागराम्बुपरिक्षिप्तं पक्षिसङ्घनिनादितम् ॥ ३
विचित्रफलपुष्पाभिर्वनराजिभिरावृतम् ।
भवनैरावृतं रम्यैस्तथा पद्माकरैरपि ॥ ४
प्रसन्नसलिलैश्चापि ह्रदैर्दिव्यैर्विभूषितम् ।
दिव्यगन्धवहैः पुण्यैर्मारुतैरुपवीजितम् ॥ ५
उत्पतद्भिरिवाकाशं वृक्षैर्मलयजैरपि ।
शोभितं पुष्पवर्षाणि मुञ्चद्भिर्मारुतोद्धतैः ॥ ६
वायुविक्षिप्तकुसुमैस्तथाऽन्यैरपि पादपैः ।
किरद्भिरिव तत्रस्थान्नागान्पुष्पाम्बुवृष्टिभिः ॥ ७
मनःसंहर्षजं दिव्यं गन्धर्वाप्सरसां प्रियम् ।
मत्तभ्रमरसंघुष्टं मनोज्ञाकृतिदर्शनम् ॥ ८
रमणीयं शिवं पुण्यं सर्वैर्जनमनोहरैः ।
नानापक्षिरुतं रम्यं कद्रूपुत्रप्रहर्षणम् ॥ ९
तत्ते वनं समासाद्य विजह्रुः पन्नगास्तदा ।
अब्रुवंश्च महावीर्यं सुपर्णं पतगेश्वरम् ॥ १०
वहास्मानपरं द्वीपं सुरम्यं विमलोदकम् ।
त्वं हि देशान्बहून्रम्यान्व्रजन्पश्यसि खेचर ॥ ११

सौतिरुवाच ।

स विचिन्त्याब्रवीत्पक्षी मातरं विनतां तदा ।
किं कारणं मया मातः कर्तव्यं सर्पभाषितम् १२

विनतोवाच ।

दासीभूतास्मि दुर्योगात्सपत्न्याः पतगोत्तम ।
पणं वितथमास्थाय सर्पैरुपधिना कृतम् ॥ १३

सौतिरुवाच ।

तस्मिंस्तु कथिते मात्रा कारणे गगनेचरः ।
उवाच वचनं सर्पांस्तेन दुःखेन दुःखितः ॥ १४
किमाहृत्य विदित्वा वा किं वा कृत्वेह पौरुषम् ।
दास्याद्वो विप्रमुच्येयं तथ्यं वदत लेलिहाः ॥१५

सौतिरुवाच ।

श्रुत्वा तमब्रुवन्सर्पा आहरामृतमोजसा ।
ततो दास्याद्विप्रमोक्षो भविता तव खेचर ॥ १६

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः ॥ २८ ॥

अमृताहरणार्थं गच्छतो गरुडस्य भक्ष्ययाचनम् ॥ १ ॥ ब्राह्मणवर्जं समुद्रकुक्षिस्थनिषादभक्षणे विनताया अनुज्ञा॥२॥

सौतिरुवाच ।

इत्युक्तो गरुडः सर्पैस्ततो मातरमब्रवीत् ।
गच्छाम्यमृतमाहर्तुं भक्ष्यमिच्छामि वेदितुम् ॥ १

विनतोवाच ।

समुद्रकुक्षावेकान्ते निषादालयमुत्तमम् ।
'भवनानि निषादानां तत्र सन्ति द्विजोत्तम॥ २
पापिनां नष्टलोकानां निर्घृणानां दुरात्मनाम्' ।
निषादानां सहस्राणि तान्भुक्त्वाऽमृतमानय ॥ ३
न च ते ब्राह्मणं हन्तुं कार्या बुद्धिः कथंचन ।
अवध्यः सर्वभूतानां ब्राह्मणो ह्यनलोपमः ॥ ४
अग्निरर्को विषं शस्त्रं विप्रो भवति कोपितः ।
गुरुर्हि सर्वभूतानां ब्राह्मणः परिकीर्तितः ॥ ५
एवमादिस्वरूपैस्तु सतां वै ब्राह्मणो मतः ।
स ते तात न हन्तव्यः संक्रुद्धेनापि सर्वथा ॥ ६
ब्राह्मणानामभिद्रोहो न कर्तव्यः कथंचन ।
न ह्येवमग्निर्नादित्यो भस्म कुर्यात्तथानघ ॥ ७
यथा कुर्यादभिक्रुद्धो ब्राह्मणः संशितव्रतः ।
तदेतैर्विविधैर्लिङ्गैस्त्वं विद्यास्तं द्विजोत्तमम् ॥ ८
भूतानामग्रभूर्विप्रो वर्णश्रेष्ठः पिता गुरुः ।

गरुड उवाच ।

किंरूपो ब्राह्मणो मातः किंशीलः किंपराक्रमः ९
किंस्विदग्निनिभो भाति किंस्वित्सौम्यप्रदर्शनः ।
यथाहमभिजानीयां ब्राह्मणं लक्षणैः शुभैः ॥ १०
तन्मे कारणतो मातः पृच्छतो वक्तुमर्हसि ।

विनतोवाच ।

यस्ते कण्ठमनुप्राप्तो निगीर्णं बडिशं यथा ॥ ११

---

मनः संहर्षजं मनसः संहर्षाय जातम् ॥ ८ ॥ लेलिहाः भोसर्पाः ॥ १५ ॥ सप्तविंशोऽध्यायः ॥ २७ ॥

दहेदङ्गारवत्पुत्र तं विद्याद्ब्राह्मणर्षभम् ।
विप्रस्त्वया न हन्तव्यः संक्रुद्धेनापि सर्वदा ॥ १२
प्रोवाच चैनं विनता पुत्रहार्दादिदं वचः ।
जठरे न च जीर्येद्यस्तं जानीहि द्विजोत्तमम् ॥ १३
पुनः प्रोवाच विनता पुत्रहार्दादिदं वचः ।
जानन्त्यप्यतुलं वीर्यमाशीर्वादपरायणा ॥ १४
प्रीता परमदुःखार्ता नागैर्विप्रकृता सती ।
विनतोवाच ।
पक्षौ ते मारुतः पातु चन्द्रसूर्यौ च पृष्ठतः ॥ १५
शिरश्च पातु वह्निस्ते वसवः सर्वतस्तनुम् ।
'विष्णुः सर्वगतः सर्वमङ्गानि तव चैव ह ।'
अहं च ते सदा पुत्र शान्तिस्वस्तिपरायणा ॥ १६
इहासीना भविष्यामि स्वस्तिकारे रता सदा ।
अरिष्टं व्रज पन्थानं पुत्र कार्यार्थसिद्धये ॥ १७
सौतिरुवाच ।
ततः स मातुर्वचनं निशम्य
वितत्य पक्षौ नभ उत्पपात ।
ततो निषादान्बलवानुपागतो
बुभुक्षितः काल इवान्तकोऽपरः ॥ १८
स तान्निषादानुपसंहरंस्तदा
रजः समुद्धूय नभःस्पृशं महत् ।
समुद्रकुक्षौ च विशोषयन्पयः
समीपजान्भूधरजान्विचालयन् ॥ १९
ततः स चक्रे महदाननं तदा
निषादमार्गं प्रतिरुध्य पक्षिराट् ।
ततो निषादास्त्वरिताः प्रवव्रजु-
र्यतो मुखं तस्य भुजंगभोजिनः ॥ २०
तदाननं विवृतमतिप्रमाणव-
त्समभ्ययुर्गगनमिवार्दिताः खगाः ।
सहस्रशः पवनरजोविमोहिता
यथाऽनिलप्रचलितपादपे वने ॥ २१
ततः खगो वदनममित्रतापनः
समाहरत्परिचपलो महाबलः ।
निषूदयन्बहुविधमत्स्यजीविनो
बुभुक्षितो गगनचरेश्वरस्तदा ॥ २२

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

कण्ठं दहतो ब्राह्मणस्य निषादीसहितस्य परित्राणम् ॥ १ ॥ गरुडस्य कश्यपेन संवादः ॥ २ ॥ गजकच्छपपूर्ववृत्तान्तकथनम् ॥ ३ ॥ कश्यपाज्ञया गरुडस्य गजकच्छपग्रहणम् ॥ ४ ॥ रोहिणवृक्षशाखाभङ्गः ॥ ५ ॥

सौतिरुवाच ।
तस्य कण्ठमनुप्राप्तो ब्राह्मणः सह भार्यया ।
दहन्दीप्त इवाङ्गारस्तमुवाचान्तरिक्षगः ॥ १
द्विजोत्तम विनिर्गच्छ तूर्णमास्यादपावृतात् ।
न हि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा ॥ २
सौतिरुवाच ।
ब्रुवाणमेवं गरुडं ब्राह्मणः प्रत्यभाषत ।
निषादी मम भार्येयं निर्गच्छतु मया सह ॥ ३
गरुड उवाच ।
एतामपि निषादीं त्वं परिगृह्याशु निष्पत ।
तूर्णं संभावयात्मानमजीर्णं मम तेजसा ॥ ४
सौतिरुवाच ।
ततः स विप्रो निष्क्रान्तो निषादीसहितस्तदा ।
वर्धयित्वा च गरुडमिष्टं देशं जगाम ह ॥ ५
सहभार्ये विनिष्क्रान्ते तस्मिन्विप्रे स पक्षिराट् ।
वितत्य पक्षावाकाशमुत्पपात मनोजवः ॥ ६
ततोऽपश्यत्स पितरं पृष्टश्चाख्यातवान्पितुः ।

काले समये ॥ १८ ॥ भूधरजान् पर्वतजान्वृक्षान् ॥ १९ ॥ परिचपलः तेषां ग्रहणाय सर्वतो भ्रमन् ॥ २२ ॥ अष्टाविंशोध्यायः ॥ २८ ॥

संभावय संजीवय ॥ ४ ॥ ततोऽपश्यत्स पितरं काश्यपं दी-

यथान्यायममेयात्मा तं चोवाच महानृषिः ॥ ७
कश्यप उवाच ।
कच्चिद्वः कुशलं नित्यं भोजने बहुलं सुत ।
कच्चिच्च मानुषे लोके तवान्नं विद्यते बहु ॥
'क्व गन्तास्यतिवेगेन मम त्वं वक्तुमर्हसि ॥' ८
गरुड उवाच ।
माता मे कुशला शश्वत्तथा भ्राता तथा ह्यहम् ।
न हि मे कुशलं तात भोजने बहुले सदा ॥ ९
अहं हि सर्पैः प्रहितः सोममाहर्तुमुत्तमम् ।
मातुर्दास्यविमोक्षार्थमाहरिष्ये तमद्य वै ॥ १०
मात्रा चात्र समादिष्टो निषादान्भक्षयेति ह ।
न च मे तृप्तिरभवद्भक्षयित्वा सहस्रशः ॥ ११
तस्माद्भक्ष्यं त्वमपरं भगवन्प्रदिशस्व मे ।
यद्भुक्त्वाऽमृतमाहर्तुं समर्थः स्यामहं प्रभो ॥ १२
क्षुत्पिपासाविघातार्थं भक्ष्यमाख्यातु मे भवान् ।
कश्यप उवाच ।
इदं सरो महापुण्यं देवलोकेऽपि विश्रुतम् ॥ १३
यत्र कूर्मोग्रजं हस्ती सदा कर्षत्यवाङ्मुखः ।
तयोर्जन्मान्तरे वैरं संप्रवक्ष्याम्यशेषतः ॥ १४
तन्मे तत्त्वं निबोधस्व यत्प्रमाणौ च तावुभौ।
'शृणु त्वं वत्स भद्रं ते कथां वैराग्यवर्धिनीम् १५
पित्रोरर्थविभागे वै समुत्पन्नां पुराण्डज ।'
आसीद्विभावसुर्नाम महर्षिः कोपनो भृशम् ॥ १६
भ्राता तस्यानुजश्चासीत्सुप्रतीको महातपाः ।
स नेच्छति धनं भ्रात्रा सहैकस्थं महामुनिः ॥१७
विभागं कीर्तयत्येव सुप्रतीको हि नित्यशः ।
अथाब्रवीच्च तं भ्राता सुप्रतीकं विभावसुः ॥१८
'विभागे बहवो दोषा भविष्यन्ति महातपः ।'
विभागं बहवो मोहात्कर्तुमिच्छन्ति नित्यशः ।
ततो विभक्तास्त्वन्योन्यं नाद्रियन्तेऽर्थमोहिताः॥
ततः स्वार्थपरान्मूढान्पृथग्भूतान्स्वकैर्धनैः ।
विदित्वा भेदयन्त्येतानमित्रा मित्ररूपिणः ॥२०
विदित्वा चापरे भिन्नानन्तरेषु पतन्त्यथ ।
भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्तते ॥ २१
तस्माद्विभागं भ्रातृणां न प्रशंसन्ति साधवः ।
'एवमुक्तः सुप्रतीको भागं कीर्तयतेऽनिशम्॥२२
एवं निर्बध्यमानस्तु शशापैनं विभावसुः ।'
गुरुशास्त्रेऽनिबद्धानामन्योन्येनाभिशङ्किनाम् २३
नियन्तु न हि शक्यस्त्वं भेदतो धनमिच्छसि ।
यस्मात्तस्मात्सुप्रतीक हस्तित्वं समवाप्स्यसि॥२४
कश्यप उवाच ।
शप्तस्त्वेवं सुप्रतीको विभावसुमथाब्रवीत् ।
त्वमप्यन्तर्जलचरः कच्छपः संभविष्यसि ॥ २५
एवमन्योन्यशापात्तौ सुप्रतीकविभावसू ।
गजकच्छपतां प्राप्तावर्थार्थं मूढचेतसौ ॥ २६
रोषदोषानुषङ्गेण तिर्यग्योनिगतावपि ।
परस्परद्वेषरतौ प्रमाणबलदर्पितौ ॥ २७
सरस्यस्मिन्महाकायौ पूर्ववैरानुसारिणौ ।
तयोरन्यतरः श्रीमान्समुपैति महागजः ॥ २८
यस्य बृंहितशब्देन कूर्मोऽप्यन्तर्जलेशयः ।
उत्थितोऽसौ महाकायः कृत्स्नं विक्षोभयन्सरः२९
तं दृष्ट्वाऽऽवेष्टितकरः पतत्येष गजो जलम् ।
दन्तहस्ताग्रलाङ्गूलपादवेगेन वीर्यवान् ॥ ३०
विक्षोभयंस्ततो नागः सरो बहुझषाकुलम् ।
कूर्मोऽप्यभ्युद्यतशिरा युद्धायाभ्येति वीर्यवान् ३१
षडुच्छ्रितो योजनानि गजस्तद्द्विगुणायतः ।
कूर्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः ॥ ३२
तावुभौ युद्धसंमत्तौ परस्परवधैषिणौ ।
उपयुज्याशु कर्मेदं साधये हितमात्मनः ॥ ३३
महाभ्रघनसंकाशं तं भुक्त्वामृतमानय ।
महागिरिसमप्रख्यं घोररूपं च हस्तिनम् ॥ ३४
सौतिरुवाच ।
इत्युक्त्वा गरुडं सोऽथ माङ्गल्यमकरोत्तदा ।
युध्यतः सह देवैस्ते युद्धे भवतु मङ्गलम् ॥ ३५

स्वतेजसम् । तं श्रेष्ठं पततां श्रेष्ठो ब्रह्म ब्रह्मविदां वरम् । पृष्टश्च पित्रा बलवान्वैनतेयः प्रतापवान् । इति पाठान्तरम् ॥७॥ भोजने बहुले मम कुशलं न हि ॥ ९ ॥ सोमं अमृतम् ॥ १० ॥ कूर्मोग्रजं कूर्मभूतं ज्येष्ठभ्रातरम् ॥ १४ ॥ अन्तरेषु छिद्रेषु ॥ २१ ॥ आवेष्टितकरः कुण्डलीकृतशुण्डादण्डः ॥ ३० ॥ उपयुज्य भुक्त्वा ॥ ३३ ॥

पूर्णकुम्भो द्विजा गावो यच्चान्यत्किंचिदुत्तमम् ।
शुभं स्वस्त्ययनं चापि भविष्यति तवाण्डज॥३६
युध्यमानस्य सङ्ग्रामे देवैः सार्धं महाबल ।
ऋचो यजूंषि सामानि पवित्राणि हवींषि च ॥३७
रहस्यानि च सर्वाणि सर्वे वेदाश्च ते बलम् ।
'वर्धयिष्यन्ति समरे भविष्यति खगोत्तम ।'
इत्युक्तो गरुडः पित्रा गतस्तं ह्रदमन्तिकात् ॥३८
अपश्यन्निर्मलजलं नानापक्षिसमाकुलम् ।
स तत्स्मृत्वा पितुर्वाक्यं भीमवेगोऽन्तरिक्षगः॥३९
नखेन गजमेकेन कूर्ममेकेन चाक्षिपत् ।
समुत्पपात चाकाशं तत उच्चैर्विहङ्गमः ॥ ४०
सोऽलम्बं तीर्थमासाद्य देववृक्षानुपागमत् ।
ते भीताः समकम्पन्त तस्य पक्षानिलाहताः॥४१
न नो भज्यादिति तदा दिव्याः कनकशाखिनः ।
प्रचलाङ्गान्स तान्दृष्ट्वा मनोरथफलद्रुमान् ॥ ४२
अन्यानतुलरूपाङ्गानुपचक्राम खेचरः ।
काञ्चनै राजतैश्चैव फलैर्वैदूर्यशाखिनः ।
सागराम्बुपरिक्षिप्तान्भ्राजमानान्महाद्रुमान् ॥४३
'तेषां मध्ये महानासीत्पादपः सुमनोहरः ।
सहस्रयोजनोत्सेधो बहुशाखासमन्वितः ॥ ४४
खगानामालयो दिव्यो नाम्ना रौहिणपादपः ।
यस्य छायां समाश्रित्य सद्यो भवति निर्वृतः'॥४५
तमुवाच खगश्रेष्ठं तत्र रौहिणपादपः ।
अतिप्रवृद्धः सुमहानापतन्तं मनोजवम् ॥ ४६
रौहिण उवाच ।
यैषा मम महाशाखा शतयोजनमायता ।
एतामास्थाय शाखां त्वं खादेमौ गजकच्छपौ४७
सौतिरुवाच ।
ततो द्रुमं पतगसहस्रसेवितं
महीधरप्रतिमवपुः प्रकम्पयन् ।
खगोत्तमो द्रुतमभिपत्य वेगवा-
न्बभञ्ज तामविरलपत्रसंचयाम् ॥ ४८

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

भग्नशाखाया अधोभागे लम्बमानवालखिल्यरक्षणार्थं मुखेन शाखाग्रहणम् ॥ १ ॥ कश्यपाज्ञया हिमालयं गत्वा तत्र शाखां परित्यज्य तत्रैव स्थित्वा गजकच्छपभक्षणम् ॥ २ ॥ उत्पातान्दृष्ट्वा देवैः कृतोऽमृतरक्षणोपायः ॥ ३ ॥

सौतिरुवाच ।
स्पृष्टमात्रा तु पद्भ्यां सा गरुडेन बलीयसा ।
अभज्यत तरोः शाखा भग्नां चैकामधारयत् ॥१
तां भङ्क्त्वा स महाशाखां स्मयमानो विलोकयन् ।
अथात्र लम्बतोऽपश्यद्वालखिल्यानधोमुखान्॥२
ऋषयो ह्यत्र लम्बन्ते न हन्यामिति तानृषीन् ।
तपोरतांल्लम्बमानान्ब्रह्मर्षीनभिवीक्ष्य सः ॥ ३
हन्यादेतान्संपतन्ती शाखेत्यथ विचिन्त्य सः ।
नखैर्दृढतरं वीरः संगृह्य गजकच्छपौ ॥ ४
स तद्विनाशसंत्रासादभिपत्य खगाधिपः ।
शाखामास्येन जग्राह तेषामेवान्ववेक्षया ॥ ५
अतिदैवं तु तत्तस्य कर्म दृष्ट्वा महर्षयः ।
विस्मयोत्कम्पहृदया नाम चक्रुर्महाखगे ॥ ६
गुरुं भारं समासाद्योड्डीन एष विहङ्गमः ।
गरुडस्तु खगश्रेष्ठस्तस्मात्पन्नगभोजनः ॥ ७
ततः शनैः पर्यपतत्पक्षैः शैलान्प्रकम्पयन् ।
एवं सोऽभ्यपतद्देशान्बहून्सगजकच्छपः ॥ ८
दयार्थं वालखिल्यानां न च स्थानमविन्दत ।
स गत्वा पर्वतश्रेष्ठं गन्धमादनमञ्जसा ॥ ९
ददर्श कश्यपं तत्र पितरं तपसि स्थितम् ।
ददर्श तं पिता चापि दिव्यरूपं विहङ्गमम् ॥१०
तेजोवीर्यबलोपेतं मनोमारुतरंहसम् ।
शैलशृङ्गप्रतीकाशं ब्रह्मदण्डमिवोद्यतम् ॥ ११
अचिन्त्यमनभिध्येयं सर्वभूतभयंकरम् ।

भविष्यति समरे ॥ ३८ ॥ एकोनत्रिंशोऽध्यायः ॥ २९ ॥

अतिदैवं देवैरपि कर्तुमशक्यम् ॥ ६ ॥ गुरुशब्दपूर्वाड्डीङ्विहा-

यथ वीर्यधरं रौद्रं साक्षादग्निमिवोद्यतम् ॥ १२
कधृष्यमजेयं च देवदानवराक्षसैः ।
भेत्तारं गिरिशृङ्गाणां समुद्रजलशोषणम् ॥ १३
लोकसंलोडनं घोरं कृतान्तसमदर्शनम् ।
तमागतमभिप्रेक्ष्य भगवान्कश्यपस्तदा ।
विदित्वा चास्य संकल्पमिदं वचनमब्रवीत् ॥१४
कश्यप उवाच ।
पुत्र मा साहसं कार्षीर्मा सद्यो लप्स्यसे व्यथाम्।
मा त्वां दहेयुः संक्रुद्धा वालखिल्या मरीचिपाः१५
सौतिरुवाच ।
ततः प्रसादयामास कश्यपः पुत्रकारणात् ।
वालखिल्यान्महाभागांस्तपसा हतकल्मषान्॥१६
कश्यप उवाच ।
प्रजाहितार्थमारम्भो गरुडस्य तपोधनाः ।
चिकीर्षति महत्कर्म तदनुज्ञातुमर्हथ ॥ १७
सौतिरुवाच ।
एवमुक्ता भगवता मुनयस्ते समभ्ययुः ।
मुक्त्वा शाखां गिरिं पुण्यं हिमवन्तं तपोऽर्थिनः१८
ततस्तेष्वपयातेषु पितरं विनतासुतः ।
शाखाव्याक्षिप्तवदनः पर्यपृच्छत कश्यपम् ॥ १९
भगवन्क विमुञ्चामि तरोः शाखामिमामहम् ।
वर्जितं मानुषैर्देशमाख्यातु भगवान्मम ॥ २०
सौतिरुवाच ।
ततो निःपुरुषं शैलं हिमसंरुद्धकन्दरम् ।
अगम्यं मनसाप्यन्यैस्तस्याचख्यौ स कश्यपः२१
तं पर्वतं महाकुक्षिमुद्दिश्य स महाखगः ।
जवेनाभ्यपतत्तार्क्ष्यः सशाखागजकच्छपः ॥ २२
न तां वध्री परिणहेच्छतचर्मा महातनुम् ।
शाखिनो महतीं शाखां यां प्रगृह्य ययौ खगः २३
स ततः शतसाहस्रं योजनान्तरमागतः ।
कालेन नातिमहता गरुडः पतगेश्वरः ॥ २४
स तं गत्वा क्षणेनैव पर्वतं वचनात्पितुः ।
अमुञ्चन्महतीं शाखां सस्वनं तत्र खेचरः ॥ २५
पक्षानिलहतश्चास्य प्राकम्पत स शैलराट् ।
मुमोच पुष्पवर्षं च समागलितपादपः ॥ २६
शृङ्गाणि च व्यशीर्यन्त गिरेस्तस्य समन्ततः ।
मणिकाञ्चनचित्राणि शोभयन्ति महागिरिम् २७
शाखिनो बहवश्चापि शाखयाऽभिहतास्तया ।
काञ्चनैः कुसुमैर्भान्ति विद्युत्वन्त इवाम्बुदाः २८
ते हेमविकचा भूमौ युताः पर्वतधातुभिः ।
व्यराजञ्छाखिनस्तत्र सूर्यांशुप्रतिरञ्जिताः ॥२९
ततस्तस्य गिरेः शृङ्गमास्थाय स खगोत्तमः ।
भक्षयामास गरुडस्तावुभौ गजकच्छपौ ॥ ३०
तावुभौ भक्षयित्वा तु स तार्क्ष्यः कूर्मकुञ्जरौ ।
ततः पर्वतकूटाग्रादुत्पपात महाजवः ॥ ३१
प्रावर्तन्ताथ देवानामुत्पाता भयशंसिनः ।
इन्द्रस्य वज्रं दयितं प्रजज्वाल भयात्ततः ॥ ३२
सधूमा न्यपतत्सार्चिर्दिवोल्का नभसश्च्युता ।
तथा वसूनां रुद्राणामादित्यानां च सर्वशः॥३३
साध्यानां मरुतां चैव ये चान्ये देवतागणाः ।
स्वं स्वं प्रहरणं तेषां परस्परमुपाद्रवत् ॥ ३४
अभूतपूर्वं संग्रामे तदा देवासुरेऽपि च ।
ववुर्वाताः सनिर्घाताः पेतुरुल्काः सहस्रशः॥ ३५
निरभ्रमेव चाकाशं प्रजगर्ज महास्वनम् ।
देवानामपि यो देवः सोऽप्यवर्षत शोणितम्॥३६
मम्लुर्माल्यानि देवानां नेशुस्तेजांसि चैव हि ।
उत्पातमेघा रौद्राश्च ववृषुः शोणितं बहु ॥ ३७
रजांसि मुकुटान्येषामुत्थितानि व्यधर्षयन् ।
ततस्त्राससमुद्विग्नः सह देवैः शतक्रतुः ।
उत्पातान्दारुणान्पश्यन्नित्युवाच बृहस्पतिम् ३८
किमर्थं भगवन्घोरा उत्पाताः सहसोत्थिताः ।
न च शत्रुं प्रपश्यामि युधि यो नः प्रधर्षयेत् ॥३९
बृहस्पतिरुवाच ।
तवापराधाद्देवेन्द्र प्रमादाच्च शतक्रतो ।

---

यसागताविलस्माड्डः आदेरकारश्च पृषोदरादित्वात् गरुडशब्दो निष्पन्न इत्यर्थः ॥ ७ ॥ शाखां मुक्त्वा गिरिं समभ्ययुरिति संबन्धः ॥ १८ ॥ शाखया मुखस्थया व्याक्षिप्तं वदनं वचनक्रियाय-स्य स तथा ॥ १९ ॥ शतचर्मा शतगोचर्मणा कृता । वध्री रज्जुः । न परिणह्येत् परितो न बध्नीयात् ॥ २३ ॥ विकचाः हेमवदुज्वलाः ॥ २९ ॥ दिवा अह्नि ॥ ३३ ॥ देवानां देवः

तपसा वालखिल्यानां महर्षीणां महात्मनाम् ४०
कश्यपस्य मुनेः पुत्रो विनतायाश्च खेचरः ।
हर्तुं सोममभिप्राप्तो बलवान्कामरूपधृक् ॥ ४१
समर्थो बलिनां श्रेष्ठो हर्तुं सोमं विहंगमः ।
सर्वं संभावयाम्यस्मिन्नसाध्यमपि साधयेत्॥ ४२
सौतिरुवाच ।
श्रुत्वैतद्वचनं शक्रः प्रोवाचामृतरक्षिणः ।
महावीर्यबलः पक्षी हर्तुं सोममिहोद्यतः ॥ ४३
युष्मान्संबोधयाम्येष 'गृहीत्वावरणायुधान् ।
परिवार्यामृतं सर्वे यूयं मद्वचनादिह ॥ ४४
रक्षध्वं विबुधा वीरा' यथा न स हरेद्बलात् ।
अतुलं हि बलं तस्य बृहस्पतिरुवाच ह ॥ ४५
सौतिरुवाच ।
तच्छ्रुत्वा विबुधा वाक्यं विस्मिता यत्नमास्थिताः ।
परिवार्यामृतं तस्थुर्वज्री चेन्द्रः प्रतापवान् ॥४६
धारयन्तो विचित्राणि काञ्चनानि मनस्विनः ।
कवचानि महार्हाणि वैदूर्यविकृतानि च ॥ ४७
चर्माण्यपि च गात्रेषु भानुमन्ति दृढानि च ।
विविधानि च शस्त्राणि घोररूपाण्यनेकशः ॥४८
शिततीक्ष्णाग्रधाराणि समुद्यम्य सुरोत्तमाः ।
सविस्फुलिङ्गज्वालानि सधूमानि च सर्वशः॥४९
चक्राणि परिघांश्चैव त्रिशूलानि परश्वधान् ।
शक्तीश्च विविधास्तीक्ष्णाः करवालांश्च निर्मलान् ।
स्वदेहरूपाण्यादाय गदाश्चोग्रप्रदर्शनाः ॥ ५०
तैः शस्त्रैर्भानुमद्भिस्ते दिव्याभरणभूषिताः ।
भानुमन्तः सुरगणास्तस्थुर्विगतकल्मषाः ॥ ५१
अनुपमबलवीर्यतेजसो
धृतमनसः परिरक्षणेऽमृतस्य ।
असुरपुरविदारणाः सुरा
ज्वलनसमिद्धवपुःप्रकाशिनः ॥ ५२
इति समरवरं सुराः स्थितास्ते
परिघसहस्रशतैः समाकुलम् ।
विगलितमिव चाम्बरान्तरं
तपनमरीचिविकाशितं बभासे ॥ ५३

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

वालखिल्यतपसा गरुडोत्पत्तिकथनपूर्वकं तस्य पक्षीन्द्रत्वेऽभिषेचनम् ॥ १ ॥

शौनक उवाच ।
कोऽपराधो महेन्द्रस्य कः प्रमादश्च सूतज ।
तपसा वालखिल्यानां संभूतो गरुडः कथम् ॥१
कश्यपस्य द्विजातेश्च कथं वै पक्षिराट् सुतः ।
अधृष्यः सर्वभूतानामवध्यश्चाभवत्कथम् ॥ २
कथं च कामचारी स कामवीर्यश्च खेचरः ।
एतदिच्छाम्यहं श्रोतुं पुराणे यदि पठ्यते ॥ ३
सौतिरुवाच ।
विषयोऽयं पुराणस्य यन्मां त्वं परिपृच्छसि ।
शृणु मे वदतः सर्वमेतत्संक्षेपतो द्विज ॥ ४
यजतः पुत्रकामस्य कश्यपस्य प्रजापतेः ।
साहाय्यमृषयो देवा गन्धर्वाश्च ददुः किल ॥ ५
तत्रेध्मानयने शक्रो नियुक्तः कश्यपेन ह ।
मुनयो वालखिल्याश्च ये चान्ये देवतागणाः॥ ६
शक्रस्तु वीर्यसदृशमिध्मभारं गिरिप्रभम् ।
समुद्यम्यानयामास नातिकृच्छ्रादिव प्रभुः ॥ ७
अथापश्यदृषीन्ह्रस्वानङ्गुष्ठोदरवर्ष्मणः ।
पलाशवर्तिकामेकां वहतः संहतान्पथि ॥ ८
प्रलीनान्स्वेष्विवाङ्गेषु निराहारांस्तपोधनान् ।
क्लिश्यमानान्मन्दबलान्गोष्पदे संप्लुतोदके ॥ ९

पर्जन्यः ॥ ३६ ॥ अन्येषामसाध्यमप्ययं साधयेत् ॥ ४२ ॥ भानुमन्ति दीप्तिमन्ति ॥ ४८ ॥ स्वदेहरूपाणि स्वदेहानुरूपाणि ॥ ५० ॥ ज्वलनवत्समिद्धैर्दीप्यमानैर्वपुर्भिः प्रकाशिनः ॥ ५२ ॥

त्रिंशोऽध्यायः ॥ ३० ॥
अङ्गुष्ठोदरप्रमाणं वर्ष्म शरीरं येषां तान् । वर्तिकां यष्टिम् ॥ ८ ॥ स्वेष्वङ्गेषु प्रलीनानिव अतिकृशानित्यर्थः ।

तान्सर्वान्विस्मयाविष्टो वीर्योन्मत्तः पुरन्दरः।
अपहास्याभ्यगाच्छीघ्रं लङ्घयित्वाऽवमन्य च॥१०
तेऽथ रोषसमाविष्टाः सुभृशं जातमन्यवः।
आरेभिरे महत्कर्म तदा शक्रभयंकरम्॥ ११
जुहुवुस्ते सुतपसो विधिवज्जातवेदसम्।
मन्त्रैरुच्चावचैर्विप्रा येन कामेन तच्छृणु॥ १२
कामवीर्यः कामगमो देवराजभयप्रदः।
इन्द्रोऽन्यः सर्वदेवानां भवेदिति यतव्रताः॥ १३
इन्द्राच्छतगुणः शौर्ये वीर्ये चैव मनोजवः।
तपसो नः फलेनाद्य दारुणः संभवत्विति॥ १४
तद्बुद्ध्वा भृशसंतप्तो देवराजः शतक्रतुः।
जगाम शरणं तत्र कश्यपं संशितव्रतम्॥ १५
तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः।
वालखिल्यानुपागम्य कर्मसिद्धिमपृच्छत॥ १६
'कश्यप उवाच।
केन कामेन चारब्धं भवद्भिर्होमकर्म च।
याथातथ्येन मे ब्रूत श्रोतुं कौतूहलं हि मे॥ १७
वालखिल्या ऊचुः।
अवज्ञाताः सुरेन्द्रेण मूढेनाकृतबुद्धिना।
ऐश्वर्यमदमत्तेन सदाचारान्निरस्यता॥ १८
तद्विघातार्थमारम्भो विधिवत्तस्य कश्यप॥ १९
सौतिरुवाच।'
एवमस्त्विति तं चापि प्रत्यूचुः सत्यवादिनः।
तान्कश्यप उवाचेदं सान्त्वपूर्वं प्रजापतिः॥ २०
अयमिन्द्रस्त्रिभुवने नियोगाद्ब्रह्मणः कृतः।
इन्द्रार्थे च भवन्तोऽपि यत्नवन्तस्तपोधनाः॥२१
न मिथ्या ब्रह्मणो वाक्यं कर्तुमर्हथ सत्तमाः।
भवतां हि न मिथ्याऽयं संकल्पो वै चिकीर्षितः
भवत्वेष पतत्रीणामिन्द्रोऽतिबलसत्त्ववान्।
प्रसादः क्रियतामस्य देवराजस्य याचतः॥ २३

सौतिरुवाच।
एवमुक्ताः कश्यपेन वालखिल्यास्तपोधनाः।
प्रत्यूचुरभिसंपूज्य मुनिश्रेष्ठं प्रजापतिम्॥ २४
वालखिल्या ऊचुः।
इन्द्रार्थोऽयं समारम्भः सर्वेषां नः प्रजापते।
अपत्यार्थं समारम्भो भवतश्चायमीप्सितः॥ २५
तदिदं सफलं कर्म त्वयैव प्रतिगृह्यताम्।
तथा चैवं विधत्स्वात्र यथा श्रेयोऽनुपश्यसि २६
सौतिरुवाच।
एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा।
विनता नाम कल्याणी पुत्रकामा यशस्विनी २७
तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः।
उपचक्राम भर्तारं तामुवाचाथ कश्यपः॥ २८
आरम्भः सफलो देवि भविता यस्त्वयेप्सितः।
जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ॥ २९
तपसा वालखिल्यानां मम संकल्पतस्तथा।
भविष्यतो महाभागौ पुत्रौ त्रैलोक्यपूजितौ॥३०
उवाच चैनां भगवान्कश्यपः पुनरेव ह।
धार्यतामप्रमादेन गर्भोऽयं सुमहोदयः॥ ३१
एकः सर्वपतत्रीणामिन्द्रत्वं कारयिष्यति।
लोकसंभावितो वीरः कामरूपो विहङ्गमः॥ ३२
सौतिरुवाच।
शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः।
त्वत्सहायौ महावीर्यौ भ्रातरौ ते भविष्यतः ३३
नैताभ्यां भविता दोषः सकाशात्ते पुरंदर।
व्येतु ते शक्र संतापस्त्वमेवेन्द्रो भविष्यसि॥३४
न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः।
न चावमान्या दर्पात्ते वाग्वज्रा भृशकोपनाः॥३५
सौतिरुवाच।
एवमुक्तो जगामेन्द्रो निर्विशङ्कस्त्रिविष्टपम्।
विनता चापि सिद्धार्था बभूव मुदिता तथा ३६

क्लिश्यमानान् गोष्पदमात्रेपि जले मज्जनेनेत्यर्थः॥ ९॥ जातमन्यवः दीनाः। मन्युर्दैन्ये क्रतौ क्रुधीति कोशः॥११॥ दारुणः इन्द्रं प्रत्येव॥ १४॥ कर्मसिद्धिमपृच्छत सिद्धं वः कर्मेत्यपृच्छत्॥ १६॥ एवमस्तु सिद्धमस्तु॥ २०॥ पुंसवने ऋतुकाले॥२८॥ कारयिष्यति स्वार्थे णिच्॥ ३२॥ एकत्रिंशोऽध्यायः॥ ३१॥

जनयामास पुत्रौ द्वावरुणं गरुडं तथा ।
विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः ॥ ३७
पतत्रीणां च गरुडमिन्द्रत्वेनाभ्यषिञ्चत ।
तस्यैतत्कर्म सुमहच्छ्रूयतां भृगुनन्दन ॥ ३८

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

देवगरुडयुद्धं तत्र देवानां पराजयः ॥ १ ॥

सौतिरुवाच ।
'ततस्तस्मिन्द्विरिवरात्समुदीर्णमहाबलः ।'
गरुडः पक्षिराट् तूर्णं संप्राप्तो विबुधान्प्रति ॥ १
तं दृष्ट्वातिबलं चैव प्राकम्पन्त सुरास्ततः ।
परस्परं च प्रत्यघ्नन्सर्वप्रहरणान्युत ॥ २
तत्र चासीदमेयात्मा विद्युदग्निसमप्रभः ।
भौमनः सुमहावीर्यः सोमस्य परिरक्षिता ॥ ३
स तेन पतगेन्द्रेण पक्षतुण्डनखैः क्षतः ।
मुहूर्तमतुलं युद्धं कृत्वा विनिहतो युधि ॥ ४
रजश्चोद्धूय सुमहत्पक्षवातेन खेचरः ।
कृत्वा लोकान्निरालोकांस्तेन देवानवाकिरत् ॥ ५
तेनावकीर्णा रजसा देवा मोहमुपागमन् ।
न चैवं ददृशुश्छन्ना रजसाऽमृतरक्षिणः ॥ ६
एवं संलोडयामास गरुडस्त्रिदिवालयम् ।
पक्षतुण्डप्रहारैस्तु देवान्स विददार ह ॥ ७
ततो देवः सहस्राक्षस्तूर्णं वायुमचोदयत् ।
विक्षिपेमां रजोवृष्टिं तवेदं कर्म मारुत ॥ ८
सौतिरुवाच ।
अथ वायुरपोवाह तद्रजस्तरसा बली ।
ततो वितिमिरे जाते देवाः शकुनिमार्दयन् ॥ ९
ननादोच्चैः स बलवान्महामेघ इवाम्बरे ।
वध्यमानः सुरगणैः सर्वभूतानि भीषयन् ॥ १०
उत्पपात महावीर्यः पक्षिराट् परवीरहा ।
समुत्पत्यान्तरिक्षस्थं देवानामुपरि स्थितम् ॥ ११
वर्मिणो विबुधाः सर्वे नानाशस्त्रैरवाकिरन् ।
पट्टिशैः परिघैः शूलैर्गदाभिश्च सवासवाः ॥ १२
क्षुरप्रैर्ज्वलितैश्चापि चक्रैरादित्यरूपिभिः ।
नानाशस्त्रविसर्गैस्तैर्वध्यमानः समन्ततः ॥ १३
कुर्वन्सुतुमुलं युद्धं पक्षिराण्ण व्यकम्पत ।
निर्दहन्निव चाकाशे वैनतेयः प्रतापवान् ।
पक्षाभ्यामुरसा चैव समन्ताद्व्यक्षिपत्सुरान् ॥ १४
ते विक्षिप्तास्ततो देवा दुद्रुवुर्गरुडार्दिताः ।
नखतुण्डक्षताश्चैव सुस्रुवुः शोणितं बहु ॥ १५
साध्याः प्राचीं सगन्धर्वा वसवो दक्षिणां दिशम् ।
प्रजग्मुः सहिता रुद्राः पतगेन्द्रप्रधर्षिताः ॥ १६
दिशं प्रतीचीमादित्या नासत्यावुत्तरां दिशम् ।
मुहुर्मुहुः प्रेक्षमाणा युध्यमानं महौजसः ॥ १७
अश्वक्रन्देन वीरेण रेणुकेन च पक्षिराट् ।
क्रथनेन च शूरेण तपनेन च खेचरः ॥ १८
उलूकश्वसनाभ्यां च निमेषेण च पक्षिराट् ।
प्ररुजेन च संग्रामं चकार पुलिनेन च ॥ १९
तान्पक्षनखतुण्डाग्रैरभिनद्विनतासुतः ।
युगान्तकाले संक्रुद्धः पिनाकीव परंतप ॥ २०
महाबला महोत्साहास्तेन ते बहुधा क्षताः ।
रेजुरभ्रघनप्रख्या रुधिरौघप्रवर्षिणः ॥ २१
तान्कृत्वा पतगश्रेष्ठः सर्वानुत्क्रान्तजीवितान् ।
अतिक्रान्तोऽमृतस्यार्थे सर्वतोऽग्निमपश्यत ॥ २२
आवृण्वानं महाज्वालमर्चिर्भिः सर्वतोऽम्बरम् ।
दहन्तमिव तीक्ष्णांशुं चण्डवायुसमीरितम् ॥ २३
'नभः स्पृशन्तं ज्वालाभिः सर्वभूतभयंकरम् ।'
ततो नवत्या नवतीर्मुखानां
कृत्वा महात्मा गरुडस्तरस्वी ।
नदीः समापीय मुखैस्ततस्तैः
सुशीघ्रमागम्य पुनर्जवेन ॥ २४

भौमनः विश्वकर्मा ॥ ३ ॥ विनिहतः मृतकल्पः कृतः ॥ ४ ॥ अपोवाह अपसारितवान् ॥ ९ ॥ नवत्याः नवतीः शताधिकाष्ट॰

ज्वलन्तमग्निं तममित्रतापनः
समास्तरत्पत्ररथो नदीभिः ।
ततः प्रचक्रे वपुरन्यदल्पं
प्रवेष्टुकामोऽग्निमभिप्रशाम्य ॥ २५

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

अमृतसमीपे गरुडस्य गमनम् ॥ १ ॥ अमृतं गृहीत्वा गच्छतो गरुडस्य विष्णुदर्शनम् ॥ २ ॥ विष्णुगरुडयोः परस्परं वरदानम् ॥ ३ ॥ गरुडस्य सुपर्णनामप्राप्तिः ॥ ४ ॥

सौतिरुवाच ।
जाम्बूनदमयो भूत्वा मरीचिनिकरोज्ज्वलः ।
प्रविवेश बलात्पक्षी वारिवेग इवार्णवम् ॥ १
स चक्रं क्षुरपर्यन्तमपश्यदमृतान्तिके ।
परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयम् ॥ २
ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणाम् ।
घोररूपं तदत्यर्थं यन्त्रं देवैः सुनिर्मितम् ॥ ३
तस्यान्तरं स दृष्ट्वैव पर्यवर्तत खेचरः ।
अरान्तरेणाभ्यपतत्संक्षिप्याङ्गं क्षणेन ह ॥ ४
अधश्चक्रस्य चैवात्र दीप्तानलसमद्युती ।
विद्युज्जिह्वौ महावीर्यौ दीप्तास्यौ दीप्तलोचनौ ॥५
चक्षुर्विषौ महाघोरौ नित्यं क्रुद्धौ तरस्विनौ ।
अमृतस्यैव रक्षार्थं ददर्श भुजगोत्तमौ ॥ ६
सदा संरब्धनयनौ सदा चानिमिषेक्षणौ ।
तयोरेकोऽपि यं पश्येत्स तूर्णं भस्मसाद्भवेत् ॥ ७
'तौ दृष्ट्वा सहसा खेदं जगाम विनतात्मजः ।
कथमेतौ महावीर्यौ जेतव्यौ हरिभोजिनौ ॥ ८
इति संचिन्त्य गरुडस्तयोस्तूर्णं निराकरः ।'
तयोश्चक्षूंषि रजसा सुपर्णः सहसाऽऽवृणोत् ।
ताभ्यामदृष्टरूपोऽसौ सर्वतः समताडयत् ॥ ९
तयोरङ्गे समाक्रम्य वैनतेयोऽन्तरिक्षगः ।
आच्छिनत्तरसा मध्ये सोममभ्यद्रवत्ततः ॥ १०
समुत्पाट्यामृतं तत्र वैनतेयस्ततो बली ।
उत्पपात जवेनैव यन्त्रमुन्मथ्य वीर्यवान् ॥ ११
अपीत्वैवामृतं पक्षी परिगृह्याशु निःसृतः ।
आगच्छदपरिश्रान्त आवार्यार्कप्रभां ततः ॥ १२
विष्णुना च तदाकाशे वैनतेयः समेयिवान् ।
तस्य नारायणस्तुष्टस्तेनालौल्येन कर्मणा ॥ १३
तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् ।
स वव्रे तव तिष्ठेयमुपरीत्यन्तरिक्षगः ॥ १४
उवाच चैनं भूयोऽपि नारायणमिदं वचः ।
अजरश्चामरश्च स्याममृतेन विनाऽप्यहम् ॥ १५
सौतिरुवाच ।
एवमस्त्विति तं विष्णुरुवाच विनतासुतम् ।
प्रतिगृह्य वरौ तौ च गरुडो विष्णुमब्रवीत् १६
भवतेपि वरं दद्यां वृणोतु भगवानपि ।
तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलम् ॥ १७
ध्वजं च चक्रे भगवानुपरि स्थास्यसीति तम् ।
एवमस्त्विति तं देवमुक्त्वा नारायणं खगः ॥१८
वव्राज तरसा वेगाद्वायुं स्पर्धन्महाजवः ।
तं व्रजन्तं खगश्रेष्ठं वज्रेणेन्द्रोऽभ्यताडयत् ॥ १९
हरन्तममृतं रोषाद्गरुडं पक्षिणां वरम् ।
तमुवाचेन्द्रमाक्रन्दे गरुडः पततां वरः ॥ २०
प्रहसञ्श्लक्ष्णया वाचा तथा वज्रसमाहतः ।
ऋषेर्मानं करिष्यामि वज्रं यस्यास्थिसंभवम् ॥२१
वज्रस्य च करिष्यामि तवैव च शतक्रतो ।
एतत्पत्रं त्यजाम्येकं यस्यान्तं नोपलप्स्यसे ॥ २२
न च वज्रनिपातेन रुजा मेऽस्तीह काचन ।

साहस्रीः ॥ २४ ॥ समास्तरत् आच्छादितवान् शामितवानित्यर्थः ॥ २५ ॥ द्वात्रिंशोऽध्यायः ॥ ३२ ॥

संक्षिप्य अणुतरं कृत्वा ॥ ४ ॥ तयोः अङ्गे देहौ आच्छिनत् खण्डशः कृतवान् ॥ १० ॥ यन्त्रमुन्मथ्य अमृतं अमृतकुम्भं समुत्पाट्य उत्पपातेत्यन्वयः ॥ ११ ॥ आवार्य वारयित्वा तिरस्कृत्येत्यर्थः ॥ १२ ॥ अलौल्येन अमृतपानलोभराहित्येन ॥ १३ ॥ उपरि ध्वजे इत्यर्थः ॥ १४ ॥ स्पर्धावानिवाचरतीति स्पर्धन् ॥ १९ ॥ आक्रन्दे कलकले ॥ २० ॥ ऋषेः दधी-

एवमुक्त्वा ततः पत्रमुत्ससर्ज स पक्षिराट् ॥ २३
तदुत्सृष्टमभिप्रेक्ष्य तस्य पर्णमनुत्तमम् ।
हृष्टानि सर्वभूतानि नाम चक्रुर्गरुत्मतः ॥ २४
सुरूपं पत्रमालक्ष्य सुपर्णोऽयं भवत्विति ।
तद्दृष्ट्वा महदाश्चर्यं सहस्राक्षः पुरंदरः ।
खगो महदिदं भूतमिति मत्वाऽभ्यभाषत ॥ २५
बलं विज्ञातुमिच्छामि यत्ते परमनुत्तमम् ।
सख्यं चानन्तमिच्छामि त्वया सह खगोत्तम२६

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

इन्द्रस्य गरुडसख्यलाभः ॥ १ ॥ इन्द्राद्गरुडस्य वरलाभः ॥ २ ॥ विनताया दास्यमोचनम् ॥ ३ ॥ सर्पाणां द्विजिह्वत्वप्राप्तिः ॥ ४ ॥

सौतिरुवाच ।
'इत्येवमुक्तो गरुडः प्रत्युवाच शचीपतिम् ।'
गरुड उवाच ।
सख्यं मेऽस्तु त्वया देव यथेच्छसि पुरंदर ।
बलं तु मम जानीहि महच्चासह्यमेव च ॥ १
कामं नैतत्प्रशंसन्ति सन्तः स्वबलसंस्तवम् ।
'अनिमित्तं सुरश्रेष्ठ सद्यः प्राप्नोति गर्हणाम् ॥ २
गुणसंकीर्तनं चापि पृष्टेनान्येन गोपते ।
वक्तव्यं न तु वक्तव्यं स्वयमेव शतक्रतो ॥' ३
सखेति कृत्वा तु सखे पृष्टो वक्ष्याम्यहं त्वया ।
न ह्यात्मस्तवसंयुक्तं वक्तव्यमनिमित्ततः ॥ ४
सपर्वतवनामुर्वीं ससागरजलामिमाम् ।
वहे पक्षेण वै शक्र त्वामप्यत्रावलम्बिनम् ॥ ५
सर्वान्संपिण्डितान्वापि लोकान्सस्थाणुजङ्गमान् ।
वहेयमपरिश्रान्तो विद्धीदं मे महद्बलम् ॥ ६
सौतिरुवाच ।
इत्युक्तवचनं वीरं किरीटी श्रीमतां वरः ।
आह शौनक देवेन्द्रः सर्वलोकहितः प्रभुः ॥ ७
एवमेव यथात्थ त्वं सर्वं संभाव्यते त्वयि ।
संगृह्यतामिदानीं मे सख्यमत्यन्तमुत्तमम् ॥ ८
न कार्यं यदि सोमेन मम सोमः प्रदीयताम् ।
अस्मांस्ते हि प्रबाधेयुर्येभ्यो दद्याद्भवानिमम् ॥ ९
गरुड उवाच ।
किंचित्कारणमुद्दिश्य सोमोऽयं नीयते मया ।
न दास्यामि समापातुं सोमं कस्मैचिदप्यहम् १०
यत्रेमं तु सहस्राक्ष निक्षिपेयमहं स्वयम् ।
त्वमादाय ततस्तूर्णं हरेथास्त्रिदिवेश्वर ॥ ११
शक्र उवाच ।
वाक्येनानेन तुष्टोऽहं यत्त्वयोक्तमिहाण्डज ।
यमिच्छसि वरं मत्तस्तं गृहाण खगोत्तम ॥ १२
सौतिरुवाच ।
इत्युक्तः प्रत्युवाचेदं कद्रूपुत्राननुसरन् ।
स्मृत्वा चैवोपधिकृतं मातुर्दास्यनिमित्ततः ॥१३
गरुड उवाच ।
ईशोऽहमपि सर्वस्य करिष्यामि तु तेऽर्थिताम् ।
भवेयुर्भुजगाः शक्र मम भक्ष्या महाबलाः ॥१४
सौतिरुवाच ।
तथेत्युक्त्वाऽन्वगच्छत्तं ततो दानवसूदनः ।
देवदेवं महात्मानं योगिनामीश्वरं हरिम् ॥ १५
स चान्वमोदत्तं चार्थं यथोक्तं गरुडेन वै ।
इदं भूयो वचः प्राह भगवांस्त्रिदशेश्वरः ॥ १६
हरिष्यामि विनिक्षिप्तं सोममित्यनुभाष्य तम् ।
आजगाम ततस्तूर्णं सुपर्णो मातुरन्तिकम् ॥ १७
'विनयावनतो भूत्वा वचनं चेदमब्रवीत् ।
इदमानीतममृतं देवानां भवनान्मया ॥ १८

चेः ॥ २१ ॥ त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
संपिण्डितान् एकीकृतान् । स्थाणु स्थावरम् ॥ ६ ॥ किरीटी इन्द्रः ॥७॥ उपधिकृतं छलकृतम् ॥ १३ ॥ ईशः समर्थः । अर्थितां अन्यस्मै अमृतं न देयमित्यर्थेप्सुताम् ॥१४॥ अनुभाष्य

प्रशाधि किमितो मातः करिष्यामि शुभव्रते ।
विनतोवाच ।
परितुष्टाऽहमेतेन कर्मणा तव पुत्रक ॥ १९
अजरश्चामरश्चैव देवानां सुप्रियो भव ।
सौतिरुवाच ।'
अथ सर्पानुवाचेदं सर्वान्परमहृष्टवत् ।
गरुड उवाच ।
इदमानीतममृतं निक्षेप्स्यामि कुशेषु वः ॥ २०
स्नाता मङ्गलसंयुक्तास्ततः प्राश्नीत पन्नगाः ।
भवद्भिरिदमासीनैर्यदुक्तं तद्वचस्तदा ॥ २१
अदासी चैव मातेयमद्यप्रभृति चास्तु मे ।
यथोक्तं भवतामेतद्वचो मे प्रतिपादितम् ॥ २२
सौतिरुवाच ।
ततः स्नातुं गताः सर्पाः प्रत्युक्त्वा तं तथेत्युत ।
शक्रोऽप्यमृतमाक्षिप्य जगाम त्रिदिवं पुनः ॥२३
अथागतास्तमुद्देशं सर्पाः सोमार्थिनस्तदा ।
स्नाताश्च कृतजप्याश्च प्रहृष्टाः कृतमङ्गलाः ॥ २४
'परस्परकृतद्वेषाः सोमप्राशनकर्मणि ।
अहं पूर्वमहं पूर्वमित्युक्त्वा ते समाद्रवन् ॥' २५
यत्रैतदमृतं चापि स्थापितं कुशसंस्तरे ।
तद्विज्ञाय हृतं सर्पाः प्रतिमायाकृतं च तत् २६
सोमस्थानमिदं चेति दर्भास्ते लिलिहुस्तदा ।
ततो द्विधा कृता जिह्वाः सर्पाणां तेन कर्मणा२७
अभवंश्चामृतस्पर्शाद्दर्भास्तेऽथ पवित्रिणः ।
'नागाश्च वञ्चिता भूत्वा विसृज्य विनतां ततः ।
विषादमगमंस्तीव्रं गरुडस्य बलात्प्रभो ॥' २८
एवं तदमृतं तेन हृतमाहृतमेव च ।
द्विजिह्वाश्च कृताः सर्पा गरुडेन महात्मना ॥२९
ततः सुपर्णः परमप्रहर्षवा-
न्विहृत्य मात्रा सह तत्र कानने ।
भुजंगभक्षः परमार्चितः खगै-
रहीनकीर्तिर्विनतामनन्दयत् ॥ ३०
इमां कथां यः शृणुयान्नरः सदा
पठेत वा द्विजगणमुख्यसंसदि ।
असंशयं त्रिदिवमियात्स पुण्यभा-
ङ्महात्मनः पतगपतेः प्रकीर्तनात् ॥ ३१

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

सर्पनामकथनम् ॥ १ ॥

शौनक उवाच ।
भुजङ्गमानां शापस्य मात्रा चैव सुतेन च ।
विनतायास्त्वया प्रोक्तं कारणं सूतनन्दन ॥ १
वरप्रदानं भर्त्रा च कद्रूविनतयोस्तथा ।
नामनी चैव ते प्रोक्ते पक्षिणोर्वैनतेययोः ॥ २
पन्नगानां तु नामानि न कीर्तयसि सूतज ।
प्राधान्येनापि नामानि श्रोतुमिच्छामहे वयम् ३
सौतिरुवाच ।
बहुत्वान्नामधेयानि पन्नगानां तपोधन ।
न कीर्तयिष्ये सर्वेषां प्राधान्येन तु मे शृणु ॥ ४
शेषः प्रथमतो जातो वासुकिस्तदनन्तरम् ।
ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ ॥ ५
कालियो मणिनागश्च नागश्चापूरणस्तथा ।
नागस्तथा पिञ्जरक एलापत्रोऽथ वामनः ॥ ६
नीलानीलौ तथा नागौ कल्माषशबलौ तथा ।
आर्यकश्चोग्रकश्चैव नागः कलशपोतकः ॥ ७
सुमनाख्यो दधिमुखस्तथा विमलपिण्डकः ।
आप्तः कोटरकश्चैव शङ्खो वालिशिखस्तथा ॥ ८

हे गरुडेति संबोध्य ॥ १७ ॥ इदं वः युष्माकममृतं न तु मम ॥ २० ॥ प्रतिमायाकृतं यथा दास्यं मायाकृतं तथा अमृतदानमपि इतरेण कृतमित्यर्थः ॥ २६ ॥ चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

भुजङ्गमानां मात्रा शापो दत्तस्तस्य कारणं अवज्ञया मातुराज्ञाकारित्वं । विनतायाः सुतेन अरुणेन शापो दत्तस्तस्य कारणं

निष्ठानको हेमगुहो नहुषः पिङ्गलस्तथा ।
बाह्यकर्णो हस्तिपदस्तथा मुद्गरपिण्डकः ॥ ९
कम्बलाश्वतरौ चापि नागः कालीयकस्तथा ।
वृत्तसंवर्तकौ नागौ द्वौ च पद्माविति श्रुतौ ॥१०
नागः शङ्खमुखश्चैव तथा कूष्माण्डकोऽपरः ।
क्षेमकश्च तथा नागो नागः पिण्डारकस्तथा॥११
करवीरः पुष्पदंष्ट्रो बिल्वको बिल्वपाण्डुरः ।
मूषकादः शङ्खशिराः पूर्णभद्रो हरिद्रकः ॥ १२
अपराजितो ज्योतिकश्च पन्नगः श्रीवहस्तथा ।
कौरव्यो धृतराष्ट्रश्च शङ्खपिण्डश्च वीर्यवान् ॥ १३
विरजाश्च सुबाहुश्च शालिपिण्डश्च वीर्यवान् ।
हस्तिपिण्डः पिठरकः सुमुखः कौणपाशनः॥ १४
कुठरः कुञ्जरश्चैव तथा नागः प्रभाकरः ।
कुमुदः कुमुदाक्षश्च तित्तिरिर्हलिकस्तथा ॥ १५
कर्दमश्च महानागो नागश्च बहुमूलकः ।
कर्कराकर्करौ नागौ कुण्डोदरमहोदरौ ॥ १६
एते प्राधान्यतो नागाः कीर्तिता द्विजसत्तम ।
बहुत्वान्नामधेयानामितरे नानुकीर्तिताः ॥ १७
एतेषां प्रसवो यश्च प्रसवस्य च संततिः ।
असङ्ख्येयेति मत्वा तान्न ब्रवीमि तपोधन ॥ १८
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
अशक्यान्येव सङ्ख्यातुं पन्नगानां तपोधन ॥ १९

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ॥ ३६ ॥

शेषस्य ब्रह्मणो वरलाभः पृथ्वीधारणाज्ञा च ॥ १ ॥

शौनक उवाच ।
आख्याता भुजगास्तात वीर्यवन्तो दुरासदाः ।
शापं तं तेऽभिविज्ञाय कृतवन्तः किमुत्तरम् ॥ १
सौतिरुवाच ।
तेषां तु भगवाञ्छेषः कद्रूं त्यक्त्वा महायशाः ।
उग्रं तपः समातस्थे वायुभक्षो यतव्रतः ॥ २
गन्धमादनमासाद्य बदर्यां च तपोरतः ।
गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ॥ ३
तेषु तेषु च पुण्येषु तीर्थेष्वायतनेषु च ।
एकान्तशीलो नियतः सततं विजितेन्द्रियः॥ ४
तप्यमानं तपो घोरं तं ददर्श पितामहः ।
संशुष्कमांसत्वक्स्नायुं जटाचीरधरं मुनिम् ॥ ५
तमब्रवीत्सत्यधृतिं तप्यमानं पितामहः ।
किमिदं कुरुषे शेष प्रजानां स्वस्ति वै कुरु ॥ ६
त्वं हि तीव्रेण तपसा प्रजास्तापयसेऽनघ ।
ब्रूहि कामं च मे शेष यस्ते हृदि व्यवस्थितः ॥७
शेष उवाच ।
सोदर्या मम सर्वे हि भ्रातरो मन्दचेतसः ।
सह तैर्नोत्सहे वस्तुं तद्भवाननुमन्यताम् ॥ ८
अभ्यसूयन्ति सततं परस्परममित्रवत् ।
ततोऽहं तप आतिष्ठे नैतान्पश्येयमित्युत ॥ ९
न मर्षयन्ति ससुतां सततं विनतां च ते ।
अस्माकं चापरो भ्राता वैनतेयोऽन्तरिक्षगः ॥१०
तं च द्विषन्ति सततं स चापि बलवत्तरः ।
वरप्रदानात्स पितुः कश्यपस्य महात्मनः ॥ ११
सोऽहं तपः समास्थाय मोक्ष्यामीदं कलेवरम् ।
कथं मे प्रेत्यभावेऽपि न तैः स्यात्सह सङ्गमः ॥१२
तमेवं वादिनं शेषं पितामह उवाच ह ।
जानामि शेष सर्वेषां भ्रातॄणां ते विचेष्टितम् ॥ १३
मातुश्चाप्यपराधाद्वै भ्रातॄणां ते महद्भयम् ।
कृतोऽत्र परिहारश्च पूर्वमेव भुजङ्गम ॥ १४
भ्रातॄणां तव सर्वेषां न शोकं कर्तुमर्हसि ।
वृणीष्व च वरं मत्तः शेष यत्तेऽभिकाङ्क्षितम्॥१५
दास्यामि हि वरं तेऽद्य प्रीतिर्मे परमा त्वयि ।
दिष्ट्या बुद्धिश्च ते धर्मे निविष्टा पन्नगोत्तम ।
भूयो भूयश्च ते बुद्धिर्धर्मे भवतु सुस्थिरा ॥ १६

सपत्नीर्ष्या ॥ १ ॥ पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

उत्तरं अनन्तरम् ॥ १ ॥

शेष उवाच ।
एष एव वरो देव काङ्क्षितो मे पितामह ।
धर्मे मे रमतां बुद्धिः शमे तपसि चेश्वर ॥ १७
ब्रह्मोवाच ।
प्रीतोऽस्म्यनेन ते शेष दमेन च शमेन च ।
त्वया त्विदं वचः कार्यं मन्नियोगात्प्रजाहितम् १८
इमां महीं शैलवनोपपन्नां
ससागरग्रामविहारपत्तनाम् ।
त्वं शेष सम्यक् चलितां यथाव-
त्संगृह्य तिष्ठस्व यथाऽचला स्यात् ॥ १९
शेष उवाच ।
यथाऽऽह देवो वरदः प्रजापति-
र्महीपतिर्भूतपतिर्जगत्पतिः ।
तथा महीं धारयिताऽस्मि निश्चलां
प्रयच्छतां मे विवरं प्रजापते ॥ २०
ब्रह्मोवाच ।
अधो महीं गच्छ भुजङ्गमोत्तम
स्वयं तवैषा विवरं प्रदास्यति ।
इमां धरां धारयता त्वया हि मे
महत्प्रियं शेष कृतं भविष्यति ॥ २१
सौतिरुवाच ।
तथैव कृत्वा विवरं प्रविश्य स
प्रभुर्भुवो भुजगवराग्रजः स्थितः ।
बिभर्ति देवीं शिरसा महीमिमां
समुद्रनेमिं परिगृह्य सर्वतः ॥ २२
ब्रह्मोवाच ।
शेषोऽसि नागोत्तम धर्मदेवो
महीमिमां धारयसे यदेकः ।
अनन्तभोगैः परिगृह्य सर्वां
यथाहमेवं बलभिद्यथा वा ॥ २३
सौतिरुवाच ।
अधो भूमौ वसत्येवं नागोऽनन्तः प्रतापवान् ।
धारयन्वसुधामेकः शासनाद्ब्रह्मणो विभोः ॥ २४
सुपर्णं च सहायं वै भगवानमरोत्तमः ।
प्रादादनन्ताय तदा वैनतेयं पितामहः ॥ २५
'अनन्तेऽभिप्रयाते तु वासुकिः स महाबलः ।
अभ्यषिच्यत नागैस्तु दैवतैरिव वासवः ॥' २६

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

मातृशापपरिहारार्थं सर्पाणां मन्त्रालोचनम् ॥ १ ॥

सौतिरुवाच ।
मातुः सकाशात्तं शापं श्रुत्वा वै पन्नगोत्तमः ।
वासुकिश्चिन्तयामास शापोऽयं न भवेत्कथम् ॥ १
ततः स मन्त्रयामास भ्रातृभिः सह सर्वशः ।
ऐरावतप्रभृतिभिः सर्वैर्धर्मपरायणैः ॥ २
वासुकिरुवाच ।
अयं शापो यथोद्दिष्टो विदितं वस्तथाऽनघाः ।
तस्य शापस्य मोक्षार्थं मन्त्रयित्वा यतामहे ॥ ३
सर्वेषामेव शापानां प्रतिघातो हि विद्यते ।
न तु मात्राऽभिशप्तानां मोक्षः क्वचन विद्यते ॥ ४
अव्ययस्याप्रमेयस्य सत्यस्य च तथाग्रतः ।
शप्ता इत्येव मे श्रुत्वा जायते हृदि वेपथुः ॥ ५
नूनं सर्वविनाशोऽयमस्माकं समुपागतः ।
'शापः सृष्टो महाघोरो मात्रा खल्वविनीतया ।'
न ह्येतां सोऽव्ययो देवः शपन्तीं प्रत्यषेधयत् ॥ ६
तस्मात्संमन्त्रयामोऽद्य भुजङ्गानामनामयम् ।
यथा भवेद्धि सर्वेषां मा नः कालोऽत्यगादयम् ७
सर्वे एव हि नस्तावद्बुद्धिमन्तो विचक्षणाः ।
अपि मन्त्रयमाणा हि हेतुं पश्याम मोक्षणे ॥ ८
यथा नष्टं पुरा देवा गूढमग्निं गुहागतम् ।
यथा स यज्ञो न भवेद्यथा वाऽपि पराभवः ।
जनमेजयस्य सर्पाणां विनाशकरणाय वै ॥ ९

अनन्तभोगैः अनन्तफणाभिः ॥ २३ ॥ षट्त्रिंशोऽध्यायः ॥ ३६ ॥

सत्यस्य सत्यलोकाधिपतेर्ब्रह्मणः ॥ ५ ॥

सौतिरुवाच ।
तथेत्युक्त्वा ततः सर्वे काद्रवेयाः समागताः ।
समयं चक्रिरे तत्र मन्त्रबुद्धिविशारदाः ॥ १०
एके तत्राब्रुवन्नागा वयं भूत्वा द्विजर्षभाः ।
जनमेजयं तु भिक्षामो यज्ञस्ते न भवेदिति ॥ ११
अपरे त्वब्रुवन्नागास्तत्र पण्डितमानिनः ।
मन्त्रिणोऽस्य वयं सर्वे भविष्यामः सुसंमताः ॥ १२
स नः प्रक्ष्यति सर्वेषु कार्येष्वर्थविनिश्चयम् ।
तत्र बुद्धिं प्रदास्यामो यथा यज्ञो निवर्त्स्यति १३
स नो बहुमतान्राजा बुद्ध्या बुद्धिमतां वरः ।
यज्ञार्थं प्रक्ष्यति व्यक्तं नेति वक्ष्यामहे वयम् १४
दर्शयन्तो बहून्दोषान्प्रेत्य चेह च दारुणान् ।
हेतुभिः कारणैश्चैव यथा यज्ञो भवेन्न सः ॥ १५
अथवा य उपाध्यायः क्रतोस्तस्य भविष्यति ।
सर्पसत्रविधानज्ञो राजकार्यहिते रतः ॥ १६
तं गत्वा दशतां कश्चिद्भुजङ्गः स मरिष्यति ।
तस्मिन्मृते यज्ञकारे क्रतुः स न भविष्यति ॥ १७
ये चान्ये सर्पसत्रज्ञा भविष्यन्त्यस्य चर्त्विजः ।
तांश्च सर्वान्दशिष्यामः कृतमेवं भविष्यति ॥ १८
अपरे त्वब्रुवन्नागा धर्मात्मानो दयालवः ।
अबुद्धिरेषा भवतां ब्रह्महत्या न शोभनम् ॥ १९
सम्यक्सद्धर्ममूला वै व्यसने शान्तिरुत्तमा ।
अधर्मोत्तरता नाम कृत्स्नं व्यापादयेज्जगत् ॥ २०
अपरे त्वब्रुवन्नागाः समिद्धं जातवेदसम् ।
वर्षैर्निर्वापयिष्यामो मेघा भूत्वा सविद्युतः ॥ २१
स्रुग्भाण्डं निशि गत्वा च अपरे भुजगोत्तमाः ।
प्रमत्तानां हरन्त्वाशु विघ्न एवं भविष्यति ॥ २२
यज्ञे वा भुजगास्तस्मिञ्शतशोऽथ सहस्रशः ।
जनान्दशन्तु वै सर्वे नैवं त्रासो भविष्यति ॥ २३
अथवा संस्कृतं भोज्यं दूषयन्तु भुजङ्गमाः ।
स्वेन मूत्रपुरीषेण सर्वभोज्यविनाशिना ॥ २४
अपरे त्वब्रुवंस्तत्र ऋत्विजोऽस्य भवामहे ।
यज्ञविघ्नं करिष्यामो दक्षिणा दीयतामिति ॥ २५
वश्यतां च गतोऽसौ नः करिष्यति यथेप्सितम् ।
अपरे त्वब्रुवंस्तत्र जले प्रक्रीडितं नृपम् ॥ २६
गृहमानीय बध्नीमः क्रतुरेवं भवेन्न सः ।
अपरे त्वब्रुवंस्तत्र नागाः पण्डितमानिनः ॥ २७
दशामस्तं प्रगृह्याशु कृतमेवं भविष्यति ।
छिन्नं मूलमनर्थानां मृते तस्मिन्भविष्यति ॥ २८
एषा नो नैष्ठिकी बुद्धिः सर्वेषामीक्षणश्रवः ।
अथ यन्मन्यसे राजन्द्रुतं तत्संविधीयताम् ॥ २९
इत्युक्त्वा समुदैक्षन्त वासुकिं पन्नगोत्तमम् ।
वासुकिश्चापि संचिन्त्य तानुवाच भुजङ्गमान् ॥ ३०
नैषा वो नैष्ठिकी बुद्धिर्मता कर्तुं भुजङ्गमाः ।
सर्वेषामेव मे बुद्धिः पन्नगानां न रोचते ॥ ३१
किं तत्र संविधातव्यं भवतां स्याद्धितं तु यत् ।
श्रेयः प्रसादनं मन्ये कश्यपस्य महात्मनः ॥ ३२
ज्ञातिवर्गस्य सौहार्दादात्मनश्च भुजङ्गमाः ।
न च जानाति मे बुद्धिः किंचित्कर्तुं वचो हि वः ३३
मया हीदं विधातव्यं भवतां यद्धितं भवेत् ।
अनेनाहं भृशं तप्ये गुणदोषौ मदाश्रयौ ॥ ३४

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

एलापत्रभाषणम् ॥ १ ॥ देवब्रह्मसंवादमुखेनास्तीकोत्पत्तिकथनम् ॥ २ ॥

सौतिरुवाच ।
सर्पाणां तु वचः श्रुत्वा सर्वेषामिति चेति च ।
वासुकेश्च वचः श्रुत्वा एलापत्रोऽब्रवीदिदम् ॥ १
'प्रागेव दर्शिता बुद्धिर्मयैषा भुजगोत्तमाः ।

---

मन्त्रबुद्धिविशारदाः नीतिनिश्चयनिपुणाः ॥ १० ॥ निवर्त्स्यति निवृत्तो भविष्यति ॥ १३ ॥ कृतं प्रतिकृतम् ॥ १८ ॥ व्यसने आपदि शान्तिः आपन्नाशः। सद्धर्ममूला सतां धर्मो देवब्राह्मणप्रार्थना तन्मूला ॥ २० ॥ नैष्ठिकी आत्यन्तिकी। ईक्षणमेव श्रवः श्रोत्रं यस्य स तथाभूत हे वासुके ॥ २९ ॥ मता संमता ॥ ३१ ॥ ज्ञातिरक्षानाशनिमित्तौ गुणदोषौ मदाश्रयौ ज्येष्ठत्वान्ममेत्यर्थः ॥ ३४ ॥ सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

इतिचेतिचेति तत्तद्वचनाभिनयप्रदर्शनम् ॥ १ ॥

हयेति यदि वो बुद्धिस्तवापि च तथा प्रभो ॥२
अस्तु कामं ममाद्यापि बुद्धिः स्मरणमागता ।
तां शृणुध्वं प्रवक्ष्यामि याथातथ्येन पन्नगाः ॥'३
न स यज्ञो न भविता न स राजा तथाविधः ।
जनमेजयः पाण्डवेयो यतोऽस्माकं महद्भयम् ॥ ४
दैवेनोपहतो राजन्यो भवेदिह पूरुषः ।
स दैवमेवाश्रयेत नान्यत्तत्र परायणम् ॥ ५
तदिदं चैवमस्माकं भयं पन्नगसत्तमाः ।
दैवमेवाश्रयामोऽत्र शृणुध्वं च वचो मम ॥ ६
अहं शापे समुत्सृष्टे समश्रौषं वचस्तदा ।
मातुरुत्सङ्गमारूढो भयात्पन्नगसत्तमाः ।
देवानां पन्नगश्रेष्ठास्तीक्ष्णास्तीक्ष्णा इति प्रभो ॥७
'शापदुःखाग्नितप्तानां पन्नगानामनामयम् ।
कृपया परयाऽऽविष्टाः प्रार्थयन्तो दिवौकसः ॥'८
पितामहमुपागम्य देवा वचनमब्रुवन् ।
देवा ऊचुः ।
का हि लब्ध्वा प्रियान्पुत्राञ्शपेदेवं पितामह ।
ऋते कद्रूं तीक्ष्णरूपां देवदेव तवाग्रतः ॥ ९
तथेति च वचस्तस्यास्त्वयाप्युक्तं पितामह ।
इच्छाम एतद्विज्ञातुं कारणं यन्न वारिता ॥ १०
ब्रह्मोवाच ।
बहवः पन्नगास्तीक्ष्णा घोररूपा विषोल्बणाः ।
प्रजानां हितकामोऽहं न च वारितवांस्तदा ॥ ११
ये दन्दशूकाः क्षुद्राश्च पापाचारा विषोल्बणाः ।
तेषां विनाशो भविता न तु ये धर्मचारिणः ॥ १२
यन्निमित्तं च भविता मोक्षस्तेषां महाभयात् ।
पन्नगानां निबोधध्वं तस्मिन्काले समागते ॥ १३
यायावरकुले धीमान्भविष्यति महानृषिः ।
जरत्कारुरिति ख्यातस्तपस्वी नियतेन्द्रियः ॥ १४
तस्य पुत्रो जरत्कारोर्भविष्यति तपोधनः ।
आस्तीको नाम यज्ञं स प्रतिषेत्स्यति तं तदा ।
तत्र मोक्ष्यन्ति भुजगा ये भविष्यन्ति धार्मिकाः १५
देवा ऊचुः ।
स मुनिप्रवरो ब्रह्मञ्जरत्कारुर्महातपाः ।
कस्यां पुत्रं महात्मानं जनयिष्यति वीर्यवान् ॥१६
ब्रह्मोवाच ।
'वासुकेर्भगिनी कन्या समुत्पन्ना सुशोभना ।
तस्मै दास्यति तां कन्यां वासुकिर्भुजगोत्तमः ॥ १७
तस्यां जनयिता पुत्रं वेदवेदाङ्गपारगम् ।'
सनामायां सनामा स कन्यायां द्विजसत्तमः ॥ १८
एलापत्र उवाच ।
एवमस्त्विति तं देवाः पितामहमथाब्रुवन् ।
उक्त्वैवं वचनं देवान्विरिञ्चिस्त्रिदिवं ययौ ॥ १९
सोऽहमेवं प्रपश्यामि वासुके भगिनी तव ।
जरत्कारुरिति ख्याता तां तस्मै प्रतिपादय ॥ २०
भैक्षवद्भिक्षमाणाय नागानां भयशान्तये ।
ऋषये सुव्रतायैनामेष मोक्षः श्रुतो मया ॥ २१

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

एलापत्रोपदेशेन वासुकिभगिन्या जरत्कार्वा रक्षणम् ॥ १ ॥

सौतिरुवाच ।
एलापत्रवचः श्रुत्वा ते नागा द्विजसत्तम ।
सर्वे प्रहृष्टमनसः साधुसाध्वित्यपूजयन् ॥ १
ततःप्रभृति तां कन्यां वासुकिः पर्यरक्षत ।
जरत्कारुं स्वसारं वै परं हर्षमवाप च ॥ २
ततो नातिमहान्कालः समतीत इवाभवत् ।

न भवितेति न भवितैवेत्यर्थः । न तथाविधः यस्य राष्ट्रमृत्विजः स्वरूपं वा द्रष्टुं शक्यं तादृशो न भवति मन्त्रवीर्यसंपन्नत्वात् ॥ ४ ॥ तीक्ष्णास्तीक्ष्णाः अत्यन्तं तीक्ष्णाः स्त्रिय इति शेषः ॥ ७ ॥ दन्दशूकाः दंशनशीलाः । क्षुद्राः अल्पेपि निमित्ते प्राणग्राहकाः ॥ १२ ॥ अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

वासुकिरुवाच ।
आस्तीक परिघूर्णामि हृदयं मे विदीर्यते ।
दिशो न प्रतिजानामि ब्रह्मदण्डनिपीडितः ॥२३
आस्तीक उवाच ।
न सन्तापस्त्वया कार्यः कथंचित्पन्नगोत्तम ।
प्रदीप्ताग्नेः समुत्पन्नं नाशयिष्यामि ते भयम् ॥ २४
ब्रह्मदण्डं महाघोरं कालाग्निसमतेजसम् ।
नाशयिष्यामि माऽत्र त्वं भयं कार्षीः कथंचन ॥२५
सौतिरुवाच ।
ततः स वासुकेर्घोरमपनीय मनोज्वरम् ।
आधाय चात्मनोऽङ्गेषु जगाम त्वरितो भृशम् ॥२६
जनमेजयस्य तं यज्ञं सर्वैः समुदितं गुणैः ।
मोक्षाय भुजगेन्द्राणामास्तीको द्विजसत्तमः ॥ २७
स गत्वाऽपश्यदास्तीको यज्ञायतनमुत्तमम् ।
वृतं सदस्यैर्बहुभिः सूर्यवह्निसमप्रभैः ॥ २८
स तत्र वारितो द्वाःस्थैः प्रविशन्द्विजसत्तमः ।
अभितुष्टाव तं यज्ञं प्रवेशार्थी परंतपः ॥ २९
स प्राप्य यज्ञायतनं वरिष्ठं
द्विजोत्तमः पुण्यकृतां वरिष्ठः ।
तुष्टाव राजानमनन्तकीर्ति-
मृत्विक्सदस्यांश्च तथैव चाग्निम् ॥ ३०

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

आस्तीककृता जनमेजययज्ञप्रशंसा ॥ १ ॥

आस्तीक उवाच ।
सोमस्य यज्ञो वरुणस्य यज्ञः
प्रजापतेर्यज्ञ आसीत्प्रयागे ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ १
शक्रस्य यज्ञः शतसङ्ख्य उक्त-
स्तथापरं तुल्यसङ्ख्यं शतं वै ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ २
यमस्य यज्ञो हरिमेधसश्च
यथा यज्ञो रन्तिदेवस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ३
गयस्य यज्ञः शशबिन्दोश्च राज्ञो
यज्ञस्तथा वैश्रवणस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ४
नृगस्य यज्ञस्त्वजमीढस्य चासी-
द्यथा यज्ञो दाशरथेश्च राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्यं
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ५
यज्ञः श्रुतो दिवि देवस्य सूनो-
र्युधिष्ठिरस्याजमीढस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ६
कृष्णस्य यज्ञः सत्यवत्याः सुतस्य
स्वयं च कर्म प्रचकार यत्र ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ ७
इमे च ते सूर्यसमानवर्चसः
समासते वृत्रहणः क्रतुं यथा ।
नैषां ज्ञातुं विद्यते ज्ञानमद्य
दत्तं येभ्यो न प्रणश्येत्कदाचित् ॥ ८

ब्रह्म वेदः मातृदेवो भवेति मातुराज्ञाकरत्वविधानपरस्तद-न्यथाकरणप्रयुक्तो दण्डो मातृशापरूपो ब्रह्मदण्डः ॥ २३ ॥ वासुकेश्चिन्ताज्वरं स्वयं गृहीत्वेत्यर्थः ॥ २६ ॥ चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

देवस्य धर्मराजस्य ॥६॥ ज्ञानशब्दः कर्मव्युत्पन्नो ज्ञेयवचनः। अद्य संप्रति ज्ञातुं ज्ञेयं न विद्यते सर्वस्य ज्ञातत्वादित्यर्थः ॥ ८ ॥

ऋत्विक्समो नास्ति लोकेषु चैव
द्वैपायनेनेति विनिश्चितं मे ।
एतस्य शिष्या हि क्षितिं संचरन्ति
सर्वर्त्विजः कर्मसु स्वेषु दक्षाः ॥ ९

विभावसुश्चित्रभानुर्महात्मा
हिरण्यरेता हुतभुक्कृष्णवर्त्मा ।
प्रदक्षिणावर्तशिखः प्रदीप्तो
हव्यं तवेदं हुतभुग्वष्टि देवः ॥ १०

नेह त्वदन्यो विद्यते जीवलोके
समो नृपः पालयिता प्रजानाम् ।
धृत्या च ते प्रीतमनाः सदाहं
त्वं वा वरुणो धर्मराजो यमो वा ॥ ११

शक्रः साक्षाद्वज्रपाणिर्यथेह
त्राता लोकेऽस्मिंस्त्वं तथेह प्रजानाम् ।
मतस्त्वं नः पुरुषेन्द्रेह लोके
न च त्वदन्यो भूपतिरस्ति जज्ञे ॥ १२

खट्वाङ्गनाभागदिलीपकल्प
ययातिमान्धातृसमप्रभाव ।
आदित्यतेजःप्रतिमानतेजा
भीष्मो यथा राजसि सुव्रतस्त्वम् ॥ १३

वाल्मीकिवत्ते निभृतं स्ववीर्यं
वसिष्ठवत्ते नियतश्च कोपः ।
प्रभुत्वमिन्द्रत्वसमं मतं मे
द्युतिश्च नारायणवद्विभाति ॥ १४

यमो यथा धर्मविनिश्चयज्ञः
कृष्णो यथा सर्वगुणोपपन्नः ।
श्रियां निवासोऽसि यथा वसूनां
निधानभूतोऽसि तथा क्रतूनाम् ॥ १५

दम्भोद्भवेनासि समो बलेन
रामो यथा शस्त्रविदस्त्रविच्च ।
और्वत्रिताभ्यामसि तुल्यतेजा
दुष्प्रेक्षणीयोऽसि भगीरथेन ॥ १६

सौतिरुवाच ।

एवं स्तुताः सर्व एव प्रसन्ना
राजा सदस्या ऋत्विजो हव्यवाहः ।
तेषां दृष्ट्वा भावितानीङ्गितानि
प्रोवाच राजा जनमेजयोऽथ ॥ १७

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

प्रशंसया तुष्टस्य जनमेजयस्य ऋत्विग्भिः संवादः ॥१॥ ऋत्विगाह्वानेन सतक्षकस्येन्द्रस्यागमनम् ॥२॥ भयेनेन्द्रे पलायितेऽग्निसमीपे तक्षकागमनम् ॥ ३ ॥ आस्तीकस्य यज्ञसमाप्तिवरयाचनम् ॥ ४ ॥

जनमेजय उवाच ।

बालोऽप्ययं स्थविर इवावभाषते
नायं बालः स्थविरोऽयं मतो मे ।
इच्छाम्यहं वरमस्मै प्रदातुं
तन्मे विप्राः संविदध्वं यथावत् ॥ १

सदस्या ऊचुः ।

बालोऽपि विप्रो मान्य एवेह राज्ञा
'यश्चाविद्वान्यश्च विद्वान्यथावत् ।
प्रसादयैनं त्वरितो नरेन्द्र
द्विजातिवर्यं सकलार्थसिद्धये ।'
सर्वान्कामांस्त्वत्त एवार्हतेऽद्य
यथा च नस्तक्षक एति शीघ्रम् ॥ २

सौतिरुवाच ।

व्याहर्तुकामे वरदे नृपे द्विजं
वरं वृणीष्वेति ततोऽभ्युवाच ।

अग्निं स्तौति विभावसुरिति । वष्टि कामयते॥१०॥ न च त्वदन्यस्त्राता भूपतिरस्ति इदानीं न च जज्ञे प्रागपि ॥ १२ ॥ निभृतं गुप्तं । नियतो निगृहीतः ॥ १४ ॥ वसवोऽष्टौ तत्संबन्धिनीनां श्रियाम् ॥ १५ ॥ रामो भार्गवः । और्वत्रितावृषी ॥१६॥ भावितानि मनसि संकल्पितानि । भारतस्त्विङ्गितानीति पाठे भारतो राजा भरतवंशजत्वात् ॥१७॥ पञ्चपञ्चाशत्तमोऽध्यायः ॥५५॥

संविदध्वमैकमत्यं कुरुध्वम् । संवदध्वमित्यपि पाठः ॥ १ ॥

होता वाक्यं नातिहृष्टान्तरात्मा
कर्मण्यस्मिंस्तक्षको नैति तावत् ॥ ३

जनमेजय उवाच ।

यथा चेदं कर्म समाप्यते मे
यथा च वै तक्षक एति शीघ्रम् ।
तथा भवन्तः प्रयतन्तु सर्वे
परं शक्त्या स हि मे विद्विषाणः ॥ ४

ऋत्विज ऊचुः ।

यथा शास्त्राणि नः प्राहुर्यथा शंसति पावकः ।
इन्द्रस्य भवने राजंस्तक्षको भयपीडितः ॥ ५

यथा सूतो लोहिताक्षो महात्मा
पौराणिको वेदितवान्पुरस्तात् ।
स राजानं प्राह पृष्टस्तदानीं
यथाहुर्विप्रास्तद्वदेतन्नृदेव ॥ ६

पुराणमागम्य ततो ब्रवीम्यहं
दत्तं तस्मै वरमिन्द्रेण राजन् ।
वसेह त्वं मत्सकाशे सुगुप्तो
न पावकस्त्वां प्रदहिष्यतीति ॥ ७

एतच्छ्रुत्वा दीक्षितस्तप्यमान
आस्ते होतारं चोदयन्कर्म काले ।
'इन्द्रेण सार्धं तक्षकं पातयध्वं
विभावसौ न विमुच्येत नागः ।'
होता च यत्तोऽस्याजुहावाथ मन्त्रै-
रथो महेन्द्रः स्वयमाजगाम ॥ ८

'आयातु चेन्द्रोऽपि सतक्षकः पते-
द्विभावसौ नागराजेन तूर्णम् ।
जम्भस्य हन्तेति जुहाव होता
तदा जगामाहिदत्ताभयः प्रभुः ॥' ९

विमानमारुह्य महानुभावः
सर्वैर्देवैः परिसंस्तूयमानः ।
बलाहकैश्चाप्यनुगम्यमानो
विद्याधरैरप्सरसां गणैश्च

'नागस्य नाशो मम चैव नाशो
भविष्यतीत्येव विचिन्तयानः ॥' १०

तस्योत्तरीये निहितः स नागो
भयोद्विग्नः शर्म नैवाभ्यगच्छत् ।
ततो राजा मन्त्रविदोऽब्रवीत्पुनः
क्रुद्धो वाक्यं तक्षकस्यान्तमिच्छन् ॥ ११

जनमेजय उवाच ।

इन्द्रस्य भवने विप्रा यदि नागः स तक्षकः ।
तमिन्द्रेणैव सहितं पातयध्वं विभावसौ ॥ १२

सौतिरुवाच ।

जनमेजयेन राज्ञा तु नोदितस्तक्षकं प्रति ।
होता जुहाव तत्रस्थं तक्षकं पन्नगं तथा ॥ १३
हूयमाने तथा चैव तक्षकः सपुरन्दरः ।
आकाशे ददृशे तत्र क्षणेन व्यथितस्तदा ॥ १४
पुरन्दरस्तु तं यज्ञं दृष्ट्वोरुभयमाविशत् ।
हित्वा तु तक्षकं त्रस्तः स्वमेव भवनं ययौ ॥ १५
इन्द्रे गते तु राजेन्द्र तक्षको भयमोहितः ।
मन्त्रशक्त्या पावकार्चिस्समीपमवशो गतः ।
'तं दृष्ट्वा ऋत्विजस्तत्र वचनं चेदमब्रुवन्' ॥ १६

ऋत्विज ऊचुः ।

अयमायाति तूर्णं स तक्षकस्ते वशं नृप ।
श्रूयतेऽस्य महान्नादो नदतो भैरवं रवम् ॥ १७

नूनं मुक्तो वज्रभृता स नागो
भ्रष्टो नाकान्मन्त्रवित्रस्तकायः ।
घूर्णन्नाकाशे नष्टसंज्ञोऽभ्युपैति
तीव्रान्निश्वासान्निश्वसन्पन्नगेन्द्रः ॥ १८

वर्तते तव राजेन्द्र कर्मैतद्विधिवत्प्रभो ।
अस्मै तु द्विजमुख्याय वरं त्वं दातुमर्हसि ॥ १९

जनमेजय उवाच ।

बालाभिरूपस्य तवाप्रमेय
वरं प्रयच्छामि यथानुरूपम् ।
वृणीष्व यत्तेऽभिमतं हृदि स्थितं
तत्ते प्रदास्याम्यपि चेददेयम् ॥ २०

---

विद्विषाणः विद्वेषं कृतवान् । लिटः कानच् । अभ्यासलोप आर्षः ॥ ४ ॥ शास्त्राणि शंसनमन्त्रदेवताः ॥ ५ ॥ पुराणं पूर्वकल्पी-यवृत्तान्तम् । आगम्य ज्ञात्वा ॥ ७ ॥ भयं आविशत् प्राप्तवान् ॥ १५ ॥ हे बाल ॥ २० ॥ षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

सौतिरुवाच ।
पतिष्यमाणे नागेन्द्रे तक्षके जातवेदसि ।
इदमन्तरमित्येवं तदास्तीकोऽभ्यचोदयत् ॥ २१
आस्तीक उवाच ।
वरं ददासि चेन्मह्यं वृणोमि जनमेजय ।
सत्रं ते विरमत्वेतन्न पतेयुरिहोरगाः ॥ २२
एवमुक्तस्तदा तेन ब्रह्मन्पारिक्षितस्तु सः ।
नातिहृष्टमनाश्चेदमास्तीकं वाक्यमब्रवीत् ॥ २३
सुवर्णं रजतं गाश्च यच्चान्यन्मन्यसे विभो ।
तत्ते दद्यां वरं विप्र न निवर्तेत्क्रतुर्मम ॥ २४
आस्तीक उवाच ।
सुवर्णं रजतं गाश्च न त्वां राजन्वृणोम्यहम् ।
सत्रं ते विरमत्वेतत्स्वस्ति मातृकुलस्य नः ॥ २५
सौतिरुवाच ।
आस्तीकेनैवमुक्तस्तु राजा पारिक्षितस्तदा ।
पुनःपुनरुवाचेदमास्तीकं वदतां वरः ॥ २६
अन्यं वरय भद्रं ते वरं द्विजवरोत्तम ।
अयाचत न चाप्यन्यं वरं स भृगुनन्दन ॥ २७
ततो वेदविदस्तात सदस्याः सर्व एव तम् ।
राजानमूचुः सहिता लभतां ब्राह्मणो वरम् ॥ २८

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

सर्पसत्रे हतानां नागानां नामकथनम् ॥ १ ॥

शौनक उवाच ।
ये सर्पाः सर्पसत्रेऽस्मिन्पतिता हव्यवाहने ।
तेषां नामानि सर्वेषां श्रोतुमिच्छामि सूतज ॥ १
सौतिरुवाच ।
सहस्राणि बहून्यस्मिन्प्रयुतान्यर्बुदानि च ।
न शक्यं परिसंख्यातुं बहुत्वाद्द्विजसत्तम ॥ २
यथास्मृति तु नामानि पन्नगानां निबोध मे ।
उच्यमानानि मुख्यानां हुतानां जातवेदसि ॥ ३
वासुकेः कुलजातांस्तु प्राधान्येन निबोध मे ।
नीलरक्तान्सितान्घोरान्महाकायान्विषोल्बणान् ॥ ४
अवशान्मातृवाग्दण्डपीडितान्कृपणान्हुतान् ।
कोटिशो मानसः पूर्णः शलः पालो हलीमकः ॥ ५
पिच्छलः कौणपश्चक्रः कालवेगः प्रकालनः ।
हिरण्यबाहुः शरणः कक्षकः कालदन्तकः ॥ ६
एते वासुकिजा नागाः प्रविष्टा हव्यवाहने ।
अन्ये च बहवो विप्र तथा वै कुलसंभवाः ।
प्रदीप्ताग्नौ हुताः सर्वे घोररूपा महाबलाः ॥ ७
तक्षकस्य कुले जातान्प्रवक्ष्यामि निबोध तान् ।
पुच्छाण्डको मण्डलकः पिण्डसेक्ता रभेणकः ॥ ८
उच्छिखः शरभो भङ्गो बिल्वतेजा विरोहणः ।
शिली शलकरो मूकः सुकुमारः प्रवेपनः ॥ ९
मुद्गरः शिशुरोमा च सुरोमा च महाहनुः ।
एते तक्षकजा नागाः प्रविष्टा हव्यवाहनम् ॥ १०
पारावतः पारियात्रः पाण्डरो हरिणः कृशः ।
विहङ्गः शरभो मोदः प्रमोदः संहतापनः ॥ ११
ऐरावतकुलादेते प्रविष्टा हव्यवाहनम् ।
कौरव्यकुलजान्नागाञ्शृणु मे त्वं द्विजोत्तम ॥ १२
एरकः कुण्डलो वेणी वेणीस्कन्धः कुमारकः ।
बाहुकः शृङ्गबेरश्च धूर्तकः प्रातरातकौ ॥ १३
कौरव्यकुलजास्त्वेते प्रविष्टा हव्यवाहनम् ।
धृतराष्ट्रकुले जाताञ्शृणु नागान्यथातथम् ॥ १४
कीर्त्यमानान्मया ब्रह्मन्वातवेगान्विषोल्बणान् ।
शङ्कुकर्णः पिठरकः कुठारमुखसेचकौ ॥ १५
पूर्णाङ्गदः पूर्णमुखः प्रहासः शकुनिर्दरिः ।
अमाहठः कामठकः सुषेणो मानसोऽव्ययः ॥ १६
'अष्टावक्रः कोमलकः श्वसनो मौनवेपगः ।'
भैरवो मुण्डवेदाङ्गः पिशङ्गश्चोदपारकः ।
ऋषभो वेगवान्नागः पिण्डारकमहाहनू ॥ १७
रक्ताङ्गः सर्वसारङ्गः समृद्धपटवासकौ ।
वराहको वीरणकः सुचित्रश्चित्रवेगिकः ॥ १८

पराशरस्तरुणको मणिः स्कन्धस्तथाऽऽरुणिः ।
इति नागा मया ब्रह्मन्कीर्तिताः कीर्तिवर्धनाः१९
प्राधान्येन बहुत्वात्तु न सर्वे परिकीर्तिताः ।
एतेषां प्रसवो यश्च प्रसवस्य च सन्ततिः ॥ २०
न शक्यं परिसंख्यातुं ये दीप्तं पावकं गताः ।
'द्विशीर्षाः पञ्चशीर्षाश्च सप्तशीर्षास्तथाऽपरे ।
दशशीर्षाः शतशीर्षास्तथान्ये बहुशीर्षकाः' ॥ २१
कालानलविषा घोरा हुताः शतसहस्रशः ।
महाकाया महावेगाः शैलशृङ्गसमुच्छ्रयाः ॥ २२
योजनायामविस्तारा द्वियोजनसमायताः ।
कामरूपाः कामबला दीप्तानलविषोल्बणाः ॥२३
दग्धास्तत्र महासत्रे ब्रह्मदण्डनिपीडिताः ॥ २४

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

---

## अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

आस्तीकवरप्रदानेन यज्ञसमाप्तिः ॥ १ ॥ प्रत्यागतस्यास्तीकस्य सर्पेभ्यो वरलाभः ॥ २ ॥

सौतिरुवाच ।
इदमत्यद्भुतं चान्यदास्तीकस्यानुशुश्रुम ।
तथा वरैश्छन्द्यमाने राज्ञा पारिक्षितेन हि ॥ १
इन्द्रहस्ताच्च्युतो नागः ख एव यदतिष्ठत ।
ततश्चिन्तापरो राजा बभूव जनमेजयः ॥ २
हूयमाने भृशं दीप्ते विधिवद्वसुरेतसि ।
न स्म स प्रापतद्वह्नौ तक्षको भयपीडितः ॥ ३
शौनक उवाच ।
किं सूत तेषां विप्राणां मन्त्रग्रामो मनीषिणाम् ।
न प्रत्यभात्तदाऽग्नौ यत्स पपात न तक्षकः ॥ ४
सौतिरुवाच ।
तमिन्द्रहस्ताद्विस्रस्तं विसंज्ञं पन्नगोत्तमम् ।
आस्तीकस्तिष्ठ तिष्ठेति वाचस्तिस्रोऽभ्युदैरयत् ॥५
वितस्थे सोऽन्तरिक्षे च हृदयेन विदूयता ।
यथा तिष्ठति वै कश्चित्खं च गां चान्तरा नरः ॥६
ततो राजाब्रवीद्वाक्यं सदस्यैश्चोदितो भृशम् ।
काममेतद्भवत्वेवं यथास्तीकस्य भाषितम् ॥ ७
समाप्यतामिदं कर्म पन्नगाः सन्त्वनामयाः ।
प्रीयतामयमास्तीकः सत्यं सूतवचोऽस्तु तत् ॥ ८
ततो हलहलाशब्दः प्रीतिजः समजायत ।
आस्तीकस्य वरे दत्ते तथैवोपरराम च ॥ ९
स यज्ञः पाण्डवेयस्य राज्ञः पारिक्षितस्य ह ।
प्रीतिमांश्चाभवद्राजा भारतो जनमेजयः ॥ १०
ऋत्विग्भ्यः ससदस्येभ्यो ये तत्रासन्समागताः ।
तेभ्यश्च प्रददौ वित्तं शतशोऽथ सहस्रशः ॥ ११
लोहिताक्षाय सूताय तथा स्थपतये विभुः ।
येनोक्तं तस्य तत्राग्रे सर्पसत्रनिवर्तने ॥ १२
निमित्तं ब्राह्मण इति तस्मै वित्तं ददौ बहु ।
दत्त्वा द्रव्यं यथान्यायं भोजनाच्छादनान्वितम् १३
प्रीतस्तस्मै नरपतिरप्रमेयपराक्रमः ।
ततश्चकारावभृथं विधिदृष्टेन कर्मणा ॥ १४
आस्तीकं प्रेषयामास गृहानेव सुसंस्कृतम् ।
राजा प्रीतमनाः प्रीतं कृतकृत्यं मनीषिणम् ॥ १५
पुनरागमनं कार्यमिति चैनं वचोऽब्रवीत् ।
भविष्यसि सदस्यो मे वाजिमेधे महाक्रतौ ॥ १६
तथेत्युक्त्वा प्रदुद्राव तदास्तीको मुदा युतः ।
कृत्वा स्वकार्यमतुलं तोषयित्वा च पार्थिवम् १७
स गत्वा परमप्रीतो मातुलं मातरं च ताम् ।
अभिगम्योपसंगृह्य तथा वृत्तं न्यवेदयत् ॥ १८
सौतिरुवाच ।
एतच्छ्रुत्वा प्रीयमाणाः समेता
ये तत्रासन्पन्नगा वीतमोहाः ।

---

योजनायामविस्तारा अपि मन्त्रसामर्थ्यात्स्वल्पप्रमाणाः अगस्त्यकरगतसमुद्रवद्वह्नौ प्रवेशयोग्या भवन्ति ॥ २३ ॥ सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

खं च गां चान्तरा द्यावापृथिव्योर्मध्ये अन्तरिक्ष इत्यर्थः ॥६॥ स यज्ञ उपरराभेति पूर्वेणान्वयः ॥१०॥ स्थपतये शिल्पिने ॥१२ अवभृथं यज्ञसमाप्तिं ॥१४॥ सुसंस्कृतं वस्त्रालङ्करणादिभिः शो-

आस्तीके वै प्रीतिमन्तो बभूवु-
रूचुश्चैनं वरमिष्टं वृणीष्व ॥ १९
भूयोभूयः सर्वशस्तेऽब्रुवंस्तं
किं ते प्रियं करवामाद्य विद्वन् ।
प्रीता वयं मोक्षिताश्चैव सर्वे
कामं किं ते करवामाद्य वत्स ॥ २०
आस्तीक उवाच ।
सायं प्रातर्ये प्रसन्नात्मरूपा
लोके विप्रा मानवा ये परेऽपि ।
धर्माख्यानं ये पठेयुर्ममेदं
तेषां युष्मन्नैव किंचिद्भयं स्यात् ॥ २१
तैश्चाप्युक्तो भागिनेयः प्रसन्नै-
रेतत्सत्यं काममेवं वरं ते ।
प्रीत्या युक्ताः कामितं सर्वशस्ते
कर्तारः स्म प्रवणा भागिनेय ॥ २२
असितं चार्तिमन्तं च सुनीथं चापि यः स्मरेत् ।
दिवा वा यदि वा रात्रौ नास्य सर्पभयं भवेत् २३
यो जरत्कारुणा जातो जरत्कारौ महायशाः ।
आस्तीकः सर्पसत्रे वः पन्नगान्योऽभ्यरक्षत ।
तं स्मरन्तं महाभागा न मां हिंसितुमर्हथ ॥ २४
सर्पापसर्प भद्रं ते गच्छ सर्प महाविष ।
जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ॥ २५
आस्तीकस्य वचः श्रुत्वा यः सर्पो न निवर्तते ।
शतधा भिद्यते मूर्धा शिंशवृक्षफलं यथा ॥ २६
सौतिरुवाच ।
स एवमुक्तस्तु तदा द्विजेन्द्रः
समागतैस्तैर्भुजगेन्द्रमुख्यैः ।
संप्राप्य प्रीतिं विपुलां महात्मा
ततो मनो गमनायाथ दध्रे ॥ २७
'इत्येवं नागराजोऽथ नागानां मध्यगस्तदा ।
उक्त्वा सहैव तैः सर्पैः स्वमेव भवनं ययौ ॥' २८
मोक्षयित्वा तु भुजगान्सर्पसत्राद्द्विजोत्तमः ।
जगाम काले धर्मात्मा दिष्टान्तं पुत्रपौत्रवान् २९
इत्याख्यानं मयास्तीकं यथावत्तव कीर्तितम् ।
यत्कीर्तयित्वा सर्पेभ्यो न भयं विद्यते क्वचित् ३०
सौतिरुवाच ।
यथा कथितवान्ब्रह्मन्प्रमतिः पूर्वजस्तव ।
पुत्राय रुरवे प्रीतः पृच्छते भार्गवोत्तम ॥ ३१
यद्वाक्यं श्रुतवांश्चाहं तथा च कथितं मया ।
आस्तीकस्य कवेर्विप्र श्रीमच्चरितमादितः ॥ ३२
यन्मां त्वं पृष्टवान्ब्रह्मञ्श्रुत्वा डुण्डुभभाषितम् ।
व्येतु ते सुमहद्ब्रह्मन्कौतूहलमरिन्दम ॥ ३३
श्रुत्वा धर्मिष्ठमाख्यानमास्तीकं पुण्यवर्धनम् ।
'सर्वपापविनिर्मुक्तो दीर्घमायुरवाप्नुयात् ॥' ३४

॥ इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

**समाप्तं चास्तीकपर्व ॥**

---

# (अथांशावतरणपर्व ॥ ६ ॥)

## एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

सौतेर्भारतकथनप्रतिज्ञा ॥ १ ॥

शौनक उवाच ।
भृगुवंशात्प्रभृत्येव त्वया मे कीर्तितं महत् ।
आख्यानमखिलं तात सौते प्रीतोऽस्मि तेन ते ॥१
प्रक्ष्यामि चैव भूयस्त्वां यथावत्सूतनन्दन ।
याः कथा व्याससंपन्नास्ताश्च भूयो विचक्ष्व मे ॥ २
तस्मिन्परमदुष्पारे सर्पसत्रे महात्मनाम् ।
कर्मान्तरेषु यज्ञस्य सदस्यानां तथाऽध्वरे ॥ ३
या बभूवुः कथाश्चित्रा येष्वर्थेषु यथातथम् ।

---

भितम् ॥ १५ ॥ प्रवणा नम्राः ॥ २२ ॥ दिष्टान्तं मरणम् ॥२९॥

अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

त्वत्त इच्छामहे श्रोतुं सौते त्वं वै प्रचक्ष्व नः ॥ ४
सौतिरुवाच ।
कर्मान्तरेष्वकथयन्द्विजा वेदाश्रयाः कथाः ।
व्यासस्त्वकथयच्चित्रमाख्यानं भारतं महत् ॥ ५
शौनक उवाच ।
महाभारतमाख्यानं पाण्डवानां यशस्करम् ।
जनमेजयेन पृष्टः सन्कृष्णद्वैपायनस्तदा ॥ ६
श्रावयामास विधिवत्तदा कर्मान्तरे तु सः ।
तामहं विधिवत्पुण्यां श्रोतुमिच्छामि वै कथाम् ७
मनःसागरसंभूतां महर्षेर्भावितात्मनः ।
कथयस्व सतां श्रेष्ठ सर्वरत्नमयीमिमाम् ॥ ८
सौतिरुवाच ।
हन्त ते कथयिष्यामि महदाख्यानमुत्तमम् ।
कृष्णद्वैपायनमतं महाभारतमादितः ॥ ९
शृणु सर्वमशेषेण कथ्यमानं मया द्विज ।
शंसितुं तन्महान्हर्षो ममापीह प्रवर्तते ॥ १०

॥ इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

## षष्टितमोऽध्यायः ॥ ६० ॥

भारतकथानुबन्धः ॥ १ ॥

सौतिरुवाच ।
श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयम् ।
अभ्यगच्छदृषिर्विद्वान्कृष्णद्वैपायनस्तदा ॥ १
जनयामास यं काली शक्तेः पुत्रात्पराशरात् ।
कन्यैव यमुनाद्वीपे पाण्डवानां पितामहम् ॥ २
जातमात्रश्च यः सद्य इष्ट्या देहमवीवृधत् ।
वेदांश्चाधिजगे साङ्गान्सेतिहासान्महायशाः ॥ ३
यं नाति तपसा कश्चिन्न वेदाध्ययनेन च ।
न व्रतैर्नोपवासैश्च न प्रसूत्या न मन्युना ॥ ४
विव्यासैकं चतुर्धा यो वेदं वेदविदां वरः ।
परावरज्ञो ब्रह्मर्षिः कविः सत्यव्रतः शुचिः ॥ ५
यः पाण्डुं धृतराष्ट्रं च विदुरं चाप्यजीजनत् ।
शन्तनोः संततिं तन्वन्पुण्यकीर्तिर्महायशाः ॥ ६
जनमेजयस्य राजर्षेः स महात्मा सदस्तथा ।
विवेश सहितः शिष्यैर्वेदवेदाङ्गपारगैः ॥ ७
तत्र राजानमासीनं ददर्श जनमेजयम् ।
वृतं सदस्यैर्बहुभिर्देवैरिव पुरन्दरम् ॥ ८
तथा मूर्धाभिषिक्तैश्च नानाजनपदेश्वरैः ।
ऋत्विग्भिर्ब्रह्मकल्पैश्च कुशलैर्यज्ञसंस्तरे ॥ ९
जनमेजयस्तु राजर्षिर्दृष्ट्वा तमृषिमागतम् ।
सगणोऽभ्युद्ययौ तूर्णं प्रीत्या भरतसत्तमः ॥ १०
काञ्चनं विष्टरं तस्मै सदस्यानुमतः प्रभुः ।
आसनं कल्पयामास यथा शक्रो बृहस्पतेः ॥ ११
तत्रोपविष्टं वरदं देवर्षिगणपूजितम् ।
पूजयामास राजेन्द्रः शास्त्रदृष्टेन कर्मणा ॥ १२
पाद्यमाचमनीयं च अर्घ्यं गां च विधानतः ।
पितामहाय कृष्णाय तदर्हाय न्यवेदयत् ॥ १३
प्रतिगृह्य तु तां पूजां पाण्डवाज्जनमेजयात् ।
गां चैव समनुज्ञाय व्यासः प्रीतोऽभवत्तदा ॥ १४
तथा च पूजयित्वा तं प्रणयात्प्रपितामहम् ।
उपोपविश्य प्रीतात्मा पर्यपृच्छदनामयम् ॥ १५
भगवानपि तं दृष्ट्वा कुशलं प्रतिवेद्य च ।
सदस्यैः पूजितः सर्वैः सदस्यान्प्रत्यपूजयत् ॥ १६
ततस्तु सहितः सर्वैः सदस्यैर्जनमेजयः ।
इदं पश्चाद्द्विजश्रेष्ठं पर्यपृच्छत्कृताञ्जलिः ॥ १७
जनमेजय उवाच ।
कुरूणां पाण्डवानां च भवान्प्रत्यक्षदर्शिवान् ।
तेषां चरितमिच्छामि कथ्यमानं त्वया द्विज १८

काली सत्यवती ॥ २ ॥ इष्ट्या इच्छया देहं सद्योऽवीवृधत् वर्धितवान् ॥ ३ ॥ यं व्यासम् । तपआदिना कश्चिन्नाति नात्येति नातिशेते ॥ ४ ॥ उपोपविश्य समीपे उपविश्य ॥ १५ ॥ प्रतिवेद्य प्रतिख्याप्य । अत्र पूजा स्तुतिरेव ॥ १६ ॥ इदं वक्ष्यमाणम् ॥ १७ ॥ प्रत्यक्षदर्शिवान् प्रत्यक्षदर्शी ॥ १८ ॥

कथं समभवद्भेदस्तेषामक्लिष्टकर्मणाम् ।
तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत् ॥ १९
पितामहानां सर्वेषां दैवेनाविष्टचेतसाम् ।
कार्त्स्न्येनैतन्ममाचक्ष्व यथा वृत्तं द्विजोत्तम ।
'इच्छामि तत्त्वतः श्रोतुं भगवन्कुशलो ह्यसि' २०
सौतिरुवाच ।
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ।
शशास शिष्यमासीनं वैशंपायनमन्तिके ॥ २१
व्यास उवाच ।
कुरूणां पाण्डवानां च यथा भेदोऽभवत्पुरा ।
तदस्मै सर्वमाचक्ष्व यन्मत्तः श्रुतवानसि ॥ २२
गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ।
आचचक्षे ततः सर्वमितिहासं पुरातनम् ॥ २३
राज्ञे तस्मै सदस्येभ्यः पार्थिवेभ्यश्च सर्वशः ।
भेदं सर्वविनाशं च कुरुपाण्डवयोस्तदा ॥ २४

॥ इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ॥ ६१ ॥

वैशंपायनेन जनमेजयाय संक्षिप्य भारतकथाकथनम् ॥ १ ॥

वैशंपायन उवाच ।
'शृणु राजन्यथा वीरा भ्रातरः पञ्च पाण्डवाः ।
विरोधमन्वगच्छन्त धार्तराष्ट्रैर्दुरात्मभिः ॥' १
गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः ।
संपूज्य च द्विजान्सर्वांस्तथान्यान्विदुषो जनान् २
महर्षेर्विश्रुतस्येह सर्वलोकेषु धीमतः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः ॥ ३
श्रोतुं पात्रं च राजंस्त्वं प्राप्येमां भारतीं कथाम् ।
गुरोर्वक्त्रपरिस्पन्दो मनः प्रोत्साहतीव मे ॥ ४
शृणु राजन्यथा भेदः कुरुपाण्डवयोरभूत् ।
राज्यार्थे द्यूतसंभूतो वनवासस्तथैव च ॥ ५
यथा च युद्धमभवत्पृथिवीक्षयकारकम् ।
तत्तेऽहं कथयिष्यामि पृच्छते भरतर्षभ ॥ ६
मृते पितरि ते वीरा वनादेत्य स्वमन्दिरम् ।
नचिरादेव विद्वांसो वेदे धनुषि चाभवन् ॥ ७
तांस्तथा सत्त्ववीर्यौजःसंपन्नान्पौरसंमतान् ।
नामृष्यन्कुरवो दृष्ट्वा पाण्डवाञ्श्रीयशोभृतः ॥ ८
ततो दुर्योधनः क्रूरः कर्णश्च सहसौबलः ।
तेषां निग्रहनिर्वासान्विविधांस्ते समारभन् ॥ ९
ततो दुर्योधनः क्रूरः कुलिङ्गस्य मते स्थितः ।
पाण्डवान्विविधोपायै राज्यहेतोरपीडयत् ॥ १०
ददावथ विषं पापो भीमाय धृतराष्ट्रजः ।
जरयामास तद्वीरः सहान्नेन वृकोदरः ॥ ११
प्रमाणकोट्यां संसुप्तं पुनर्बद्ध्वा वृकोदरम् ।
तोयेषु भीमं गङ्गायाः प्रक्षिप्य पुरमाव्रजत् ॥ १२
यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम् ।
उदतिष्ठन्महाबाहुर्भीमसेनो गतव्यथः ॥ १३
आशीविषैः कृष्णसर्पैः सुप्तं चैनमदंशयत् ।
सर्वेष्वेवाङ्गदेशेषु न ममार स शत्रुहा ॥ १४
तेषां तु विप्रकारेषु तेषु तेषु महामतिः ।
मोक्षणे प्रतिकारे च विदुरोऽवहितोऽभवत् ॥ १५
स्वर्गस्थो जीवलोकस्य यथा शक्रः सुखावहः ।
पाण्डवानां तथा नित्यं विदुरोऽपि सुखावहः ॥ १६
यदा तु विविधोपायैः संवृतैर्विवृतैरपि ।
नाशकद्विनिहन्तुं तान्दैवभाव्यर्थरक्षितान् ॥ १७
ततः संमन्त्र्य सचिवैर्वृषदुःशासनादिभिः ।

---

भेदो वैरम् ॥ १९ ॥ पितामहानां प्रपितामहानाम् ॥ २० ॥ षष्टितमोऽध्यायः ॥ ६० ॥

प्रोत्साहतीव प्रोत्साहयतीव । परिस्पन्दमुदुत्साहयतीव मे इति पाठे गुरोर्वक्त्रपरिस्पन्दस्त्वं कथां कथयेत्याज्ञावचनं तज्जन्या मुत्प्रीतिः सा प्रोत्साहयति ॥ ४ ॥ नचिरात् शीघ्रं । विद्वांसोऽभवन् ॥ ७ ॥ प्रमाणकोट्यां गङ्गायास्तीर्थविशेषे । वृकनामा बहुभक्षोऽग्निरुदरे यस्य स वृकोदरः ॥ १२ ॥ संवृतैर्गुप्तैः । विवृतैः प्रकाशैः । दैवभाव्यर्थरक्षितान् दैवेनादृष्टेन भावी कुरुक्षयपाण्डवराज्यलाभादिरर्थस्तस्मै रक्षितान् ॥ १७ ॥ वृषः कर्णः ।

धृतराष्ट्रमनुज्ञाप्य जातुषं गृहमादिशत् ॥　१८
'तत्र तान्वासयामास पाण्डवानमितौजसः ।'
सुतप्रियैषी तान्राजा पाण्डवानम्बिकासुतः ।
ततो विवासयामास राज्यभोगबुभुक्षया ॥　१९
ते प्रातिष्ठन्त सहिता नगरान्नागसाह्वयात् ।
प्रस्थाने चाभवन्मन्त्री क्षत्ता तेषां महात्मनाम् २०
तेन मुक्ता जतुगृहान्निशीथे प्राद्रवन्वनम् ।
ततः संप्राप्य कौन्तेया नगरं वारणावतम् ॥ २१
न्यवसन्त महात्मानो मात्रा सह परन्तपाः ।
धृतराष्ट्रेण चाज्ञप्ता उषिता जातुषे गृहे ॥　२२
पुरोचनाद्रक्षमाणाः संवत्सरमतन्द्रिताः ।
सुरुङ्गां कारयित्वा तु विदुरेण प्रचोदिताः ॥ २३
आदीप्य जातुषं वेश्म दग्ध्वा चैव पुरोचनम् ।
प्राद्रवन्भयसंविग्ना मात्रा सह परन्तपाः ॥　२४
ददृशुर्दारुणं रक्षो हिडिम्बं वननिर्झरे ।
हत्वा च तं राक्षसेन्द्रं भीताः समवबोधनात्॥ २५
निशि संप्राद्रवन्पार्था धार्तराष्ट्रभयार्दिताः ।
प्राप्ता हिडिम्बा भीमेन यत्र जातो घटोत्कचः॥२६
एकचक्रां ततो गत्वा पाण्डवाः संशितव्रताः ।
वेदाध्ययनसंपन्नास्तेऽभवन्ब्रह्मचारिणः ॥　२७
ते तत्र नियताः कालं कंचिदूषुर्नरर्षभाः ।
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने ॥　२८
तत्राससाद क्षुधितं पुरुषादं वृकोदरः ।
भीमसेनो महाबाहुर्बकं नाम महाबलम् ॥　२९
तं चापि पुरुषव्याघ्रो बाहुवीर्येण पाण्डवः ।
निहत्य तरसा वीरो नागरान्पर्यसान्त्वयत् ॥ ३०
ततस्ते शुश्रुवुः कृष्णां पञ्चालेषु स्वयंवराम् ।
श्रुत्वा चैवाभ्यगच्छन्त गत्वा चैवालभन्त ताम् ॥
ते तत्र द्रौपदीं लब्ध्वा परिसंवत्सरोषिताः ।
विदिता हास्तिनपुरं प्रत्याजग्मुररिन्दमाः ॥ ३२
ते उक्ता धृतराष्ट्रेण राज्ञा शान्तनवेन च ।
भ्रातृभिर्विग्रहस्तात कथं वो न भवेदिति ॥　३३

अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽनुचिन्तितः ।
तस्माज्जनपदोपेतं सुविभक्तमहापथम् ॥　३४
वासाय खाण्डवप्रस्थं व्रजध्वं गतमत्सराः ।
तयोस्ते वचनाज्जग्मुः सह सर्वैः सुहृज्जनैः ॥ ३५
नगरं खाण्डवप्रस्थं रत्नान्यादाय सर्वशः ।
तत्र ते न्यवसन्पार्थाः संवत्सरगणान्बहून् ॥ ३६
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीभृतः ।
एवं धर्मप्रधानास्ते सत्यव्रतपरायणाः ॥　३७
अप्रमत्तोत्थिताः क्षान्ताः प्रतपन्तोऽहितान्बहून् ।
अजयद्भीमसेनस्तु दिशं प्राचीं महायशाः ॥ ३८
उदीचीमर्जुनो वीरः प्रतीचीं नकुलस्तथा ।
दक्षिणां सहदेवस्तु विजिग्ये परवीरहा ॥　३९
एवं चक्रुरिमां सर्वे वशे कृत्स्नां वसुन्धराम् ।
पञ्चभिः सूर्यसङ्काशैः सूर्येण च विराजता ॥ ४०
षट्सूर्येवाभवत्पृथ्वी पाण्डवैः सत्यविक्रमैः ।
ततो निमित्ते कस्मिंश्चिद्धर्मराजो युधिष्ठिरः । ४१
वनं प्रस्थापयामास तेजस्वी सत्यविक्रमः ।
प्राणेभ्योऽपि प्रियतरं भ्रातरं सव्यसाचिनम्॥४२
अर्जुनं पुरुषव्याघ्रं स्थिरात्मानं गुणैर्युतम् ।
स वै संवत्सरं पूर्णं मासं चैकं वने वसन् ॥ ४३
'तीर्थयात्रां च कृतवान्नागकन्यामवाप च ।
पाण्ड्यस्य तनयां लब्ध्वा तत्र ताभ्यांसहोषितः' ४४
ततोऽगच्छद्धृषीकेशं द्वारवत्यां कदाचन ।
लब्धवांस्तत्र बीभत्सुर्भार्यां राजीवलोचनाम् ॥४५
अनुजां वासुदेवस्य सुभद्रां भद्रभाषिणीम् ।
सा शचीव महेन्द्रेण श्रीः कृष्णेनेव सङ्गता ॥ ४६
सुभद्रा युयुजे प्रीत्या पाण्डवेनार्जुनेन ह ।
अतर्पयच्च कौन्तेयः खाण्डवे हव्यवाहनम् ॥ ४७
बीभत्सुर्वासुदेवेन सहितो नृपसत्तम ।
नातिभारो हि पार्थस्य केशवेन सहाभवत् ॥ ४८
व्यवसायसहायस्य विष्णोः शत्रुवधेष्विव ।
पार्थायाग्निर्ददौ चापि गाण्डीवं धनुरुत्तमम् ॥ ४९

---

जातुषं लाक्षामयम् ॥ १८ ॥ अभवन्मित्रमित्यपि पाठः । क्षत्ता विदुरः ॥ २० ॥ तेन क्षत्तुर्मन्त्रेण ॥ २१ ॥ स्वयं वृणुते इति स्वयंवरा ताम् ॥ ३१ ॥ शान्तनवेन भीष्मेण ॥ ३३ ॥ आदाय भागश इत्यपि पाठः ॥ ३६ ॥ नातीति खाण्डवदाह इति शेषः ॥ ४८ ॥ व्यवसायो बुद्धिः ॥ ४९ ॥

इषुधी चाक्षयैर्बाणै रथं च कपिलक्षणम् ।
मोक्षयामास बीभत्सुर्मयं यत्र महासुरम् ॥ ५०
स चकार सभां दिव्यां सर्वरत्नसमाचिताम् ।
तस्यां दुर्योधनो मन्दो लोभं चक्रे सुदुर्मतिः ५१
ततोऽक्षैर्वञ्चयित्वा च सौबलेन युधिष्ठिरम् ।
वनं प्रस्थापयामास सप्तवर्षाणि पञ्च च ॥ ५२
अज्ञातमेकं राष्ट्रे च ततो वर्षं त्रयोदशम् ।
ततश्चतुर्दशे वर्षे याचमानाः स्वकं वसु ॥ ५३
नालभन्त महाराज ततो युद्धमवर्तत ।
ततस्ते क्षत्रमुत्साद्य हत्वा दुर्योधनं नृपम् ॥ ५४
राज्यं विहतभूयिष्ठं प्रत्यपद्यन्त पाण्डवाः ।
'इष्ट्वा क्रतूंश्च विविधानश्वमेधादिकान्बहून् ॥ ५५
धृतराष्ट्रे गते स्वर्गं विदुरे पञ्चतां गते ।
गमयित्वा क्रियां स्वर्ग्यां राज्ञाममिततेजसाम् ५६
स्वं धाम याते वार्ष्णेये कृष्णदारान्प्ररक्ष्य च ।
महाप्रस्थानिकं कृत्वा गताः स्वर्गमनुत्तमम्' ५७
एवमेतत्पुरावृत्तं तेषामक्लिष्टकर्मणाम् ।
भेदो राज्यविनाशश्च जयश्च जयतांवर ॥ ५८

॥ इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः ॥ ६२ ॥

भारतप्रशंसा ॥ १ ॥ तच्छ्रवणादिफलकथनम् ॥ २ ॥

जनमेजय उवाच ।
कथितं वै समासेन त्वया सर्वं द्विजोत्तम ।
महाभारतमाख्यानं कुरूणां चरितं महत् ॥ १
कथां त्वनघ चित्रार्थां कथयस्व तपोधन ।
विस्तरश्रवणे जातं कौतूहलमतीव मे ॥ २
स भवान्विस्तरेणेमां पुनराख्यातुमर्हति ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ ३
न तत्कारणमल्पं वै धर्मज्ञा यत्र पाण्डवाः ।
अवध्यान्सर्वशो जघ्नुः प्रशस्यन्ते च मानवैः ॥ ४
किमर्थं ते नरव्याघ्राः शक्ताः सन्तो ह्यनागसः ।
प्रयुज्यमानान्संक्लेशान्क्षान्तवन्तो दुरात्मनाम् ॥५
कथं नागायुतप्राणो बाहुशाली वृकोदरः ।
परिक्लिश्यन्नपि क्रोधं धृतवान्वै द्विजोत्तम ॥ ६
कथं सा द्रौपदी कृष्णा क्लिश्यमाना दुरात्मभिः ।
शक्ता सती धार्तराष्ट्रान्नादहत्क्रोधचक्षुषा ॥ ७
कथं व्यसनिनं द्यूते पार्थौ माद्रीसुतौ तदा ।
अन्वयुस्ते नरव्याघ्रा बाध्यमाना दुरात्मभिः ॥८
कथं धर्मभृतां श्रेष्ठः सुतो धर्मस्य धर्मवित् ।
अनर्हः परमं क्लेशं सोढवान्स युधिष्ठिरः ॥ ९
कथं च बहुलाः सेनाः पाण्डवः कृष्णसारथिः ।
अस्यन्नेकोऽनयत्सर्वाः पितृलोकं धनंजयः ॥ १०
एतदाचक्ष्व मे सर्वं यथावृत्तं तपोधन ।
यद्यच्च कृतवन्तस्ते तत्रतत्र महारथाः ॥ ११
वैशंपायन उवाच ।
क्षणं कुरु महाराज विपुलोऽयमनुक्रमः ।
पुण्याख्यानस्य वक्तव्यः कृष्णद्वैपायनेरितः ॥ १२
महर्षेः सर्वलोकेषु पूजितस्य महात्मनः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः ॥ १३
इदं शतसहस्रं हि श्लोकानां पुण्यकर्मणाम् ।
सत्यवत्यात्मजेनेह व्याख्यातममितौजसा ॥ १४
'उपाख्यानैः सह ज्ञेयं श्राव्यं भारतमुत्तमम् ।
संक्षेपेण तु वक्ष्यामि सर्वमेतन्नराधिप । १५
अध्यायानां सहस्रे द्वे पर्वणां शतमेव च ।
श्लोकानां तु सहस्राणि नवतिश्च दशैव च ।
ततोऽष्टादशभिः पर्वैः संगृहीतं महर्षिणा' ॥ १६
य इदं श्रावयेद्विद्वान्ये चेदं शृणुयुर्नराः ।
ते ब्रह्मणः स्थानमेत्य प्राप्नुयुर्देवतुल्यताम् ॥ १७

---

बाणैर्युक्ताविति शेषः । कपिलक्षणं वानरध्वजं । यत्र खाण्डवदाहे ॥ ५० ॥ एकषष्टितमोऽध्यायः ॥ ६१ ॥

अवध्यान् भीष्मद्रोणादीन् ॥ ४ ॥ क्रोधं धृतवान् निरुद्धवान् ॥ ६ ॥ अस्यन् शरान् क्षिपन् स कथं क्लेशं सोढवानित्यनुषज्यते

इदं हि वेदैः समितं पवित्रमपि चोत्तमम् ।
श्राव्याणामुत्तमं चेदं पुराणमृषिसंस्तुतम् ॥ १८
अस्मिन्नर्थश्च कामश्च निखिलेनोपदेक्ष्यते ।
इतिहासे महापुण्ये बुद्धिश्च परिनैष्ठिकी ॥ १९
अक्षुद्रान्दानशीलांश्च सत्यशीलाननास्तिकान् ।
कार्ष्णं वेदमिमं विद्वाञ्छ्रावयित्वाऽर्थमश्नुते ॥२०
भ्रूणहत्याकृतं चापि पापं जह्यादसंशयम् ।
इतिहासमिमं श्रुत्वा पुरुषोऽपि सुदारुणः ॥ २१
मुच्यते सर्वपापेभ्यो राहुणा चन्द्रमा यथा ।
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा २२
महीं विजयते राजा शत्रूंश्चापि पराजयेत् ।
इदं पुंसवनं श्रेष्ठमिदं स्वस्त्ययनं महत् ॥ २३
महिषीयुवराजाभ्यां श्रोतव्यं बहुशस्तथा ।
वीरं जनयते पुत्रं कन्यां वा राज्यभागिनीम् ॥२४
धर्मशास्त्रमिदं पुण्यमर्थशास्त्रमिदं परम् ।
मोक्षशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥२५
'धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ।
इदं हि ब्राह्मणैर्लोके आख्यातं ब्राह्मणेष्विह' ॥२६
संप्रत्याचक्षते चेदं तथा श्रोष्यन्ति चापरे ।
पुत्राः शुश्रूषवः सन्ति प्रेष्याश्च प्रियकारिणः ॥२७
भरतानां महज्जन्म शृण्वतामनसूयताम् ।
नास्ति व्याधिभयं तेषां परलोकभयं कुतः ॥२८
शरीरेण कृतं पापं वाचा च मनसैव च ।
सर्वं संत्यजति क्षिप्रं य इदं शृणुयान्नरः ॥ २९
धन्यं यशस्यमायुष्यं पुण्यं स्वर्ग्यं तथैव च ।
कृष्णद्वैपायनेनेदं कृतं पुण्यचिकीर्षुणा ॥ ३०
कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम् ।
अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम् ॥३१
सर्वविद्यावदातानां लोके प्रथितकर्मणाम् ।
य इदं मानवो लोके पुण्यार्थे ब्राह्मणाञ्छुचीन् ३२
श्रावयेत महापुण्यं तस्य धर्मः सनातनः ।
कुरूणां प्रथितं वंशं कीर्तयन्सततं शुचिः ॥ ३३
वंशमाप्नोति विपुलं लोके पूज्यतमो भवेत् ।
योऽधीते भारतं पुण्यं ब्राह्मणो नियतव्रतः ॥३४
चतुरो वार्षिकान्मासान्सर्वपापैः प्रमुच्यते ।
विज्ञेयः स च वेदानां पारगो भारतं पठन् ॥३५
देवा राजर्षयो ह्यत्र पुण्या ब्रह्मर्षयस्तथा ।
कीर्त्यन्ते धूतपाप्मानः कीर्त्यते केशवस्तथा ॥ ३६
भगवांश्चापि देवेशो यत्र देवी च कीर्त्यते ।
अनेकजननो यत्र कार्तिकेयस्य संभवः ॥ ३७
ब्राह्मणानां गवां चैव माहात्म्यं यत्र कीर्त्यते ।
सर्वश्रुतिसमूहोऽयं श्रोतव्यो धर्मबुद्धिभिः ॥ ३८
य इदं श्रावयेद्विद्वान्ब्राह्मणानिह पर्वसु ।
धूतपाप्मा जितस्वर्गो ब्रह्म गच्छति शाश्वतम् ३९
श्रावयेद्ब्राह्मणाञ्श्राद्धे यश्चेमं पादमन्ततः ।
अक्षय्यं तस्य तच्छ्राद्धमुपावर्तेत्पितॄनिह ॥ ४०
अह्ना यदेनः क्रियते इन्द्रियैर्मनसाऽपि वा ।
ज्ञानादज्ञानतो वापि प्रकरोति नरश्च यत् ॥ ४१
तन्महाभारताख्यानं श्रुत्वैव प्रविलीयते ।
भरतानां महज्जन्म महाभारतमुच्यते ॥ ४२
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।
भरतानां यतश्चायमितिहासो महाद्भुतः ॥ ४३
महतो ह्येनसो मर्त्यान्मोचयेदनुकीर्तितः ।
त्रिभिर्वर्षैर्महाभागः कृष्णद्वैपायनोऽब्रवीत् ॥ ४४
नित्योत्थितः शुचिः शक्तो महाभारतमादितः ।
तपोनियममास्थाय कृतमेतन्महर्षिणा ॥ ४५
तस्मान्नियमसंयुक्तैः श्रोतव्यं ब्राह्मणैरिदम् ।
कृष्णप्रोक्तामिमां पुण्यां भारतीमुत्तमां कथाम् ४६
श्रावयिष्यन्ति ये विप्रा ये च श्रोष्यन्ति मानवाः ।
सर्वथा वर्तमाना वै न ते शोच्याः कृताकृतैः ॥४७
नरेण धर्मकामेन सर्वः श्रोतव्य इत्यपि ।
निखिलेनेतिहासोऽयं ततः सिद्धिमवाप्नुयात् ४८
न तां स्वर्गगतिं प्राप्य तुष्टिं प्राप्नोति मानवः ।

---

॥१०॥ऋषिभिर्मन्त्रैस्तद्द्रष्टृभिर्वा संस्तुतं समं स्तुतं वा ॥१८॥ परिनैष्ठिकी परिनिष्ठा मोक्षस्तदुचिता ॥१९॥ अनास्तिकान् नास्तिका न भवन्तीत्यनास्तिकास्तान् ॥२०॥ पुंसवनं पुमांसः सूयन्तेऽस्मिन् श्रुते ॥ २३ ॥ महिषी पट्टराज्ञी ॥ २४ ॥ सर्वथा साधुनाऽसाधुना वा वर्त्मना वर्तमाना अपि कृताकृतैः क्रमेण पापपुण्यैस्ते न शोच्याः । एतच्छ्रवणादेव सर्वप्रत्यवायपरिहारो भवतीति भा-

यां श्रुत्वैवं महापुण्यमितिहासमुपाश्नुते ॥ ४९
शृण्वञ्श्राद्धः पुण्यशीलः श्रावयंश्चेदमद्भुतम् ।
नरः फलमवाप्नोति राजसूयाश्वमेधयोः ॥ ५०
यथा समुद्रो भगवान्यथा मेरुर्महागिरिः ।
उभौ ख्यातौ रत्ननिधी तथा भारतमुच्यते ॥५१
इदं हि वेदैः समितं पवित्रमपि चोत्तमम् ।
श्राव्यं श्रुतिसुखं चैव पावनं शीलवर्धनम् ॥५२
य इदं भारतं राजन्वाचकाय प्रयच्छति ।
तेन सर्वा मही दत्ता भवेत्सागरमेखला ॥ ५३
पारिक्षित कथां दिव्यां पुण्याय विजयाय च ।
कथ्यमानां मया कृत्स्नां शृणु हर्षकरीमिमाम् ५४
त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ।
महाभारतमाख्यानं कृतवानिदमद्भुतम् ॥ ५५
शृणु कीर्तयतस्तन्म इतिहासं पुरातनम् ॥ ५६

॥ इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

पूरुवंशकथनम् ॥ १ ॥

वैशंपायन उवाच ।
पूरोर्वंशमहं धन्यं राज्ञाममिततेजसाम् ।
प्रवक्ष्यामि पितॄणां ते तेषां नामानि मे शृणु ॥ १
अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मान्मरीचिः संजज्ञे दक्षश्चैव प्रजापतिः ॥ २
अङ्गुष्ठाद्दक्षमसृजच्चक्षुर्भ्यां च मरीचिनम् ।
मरीचेः कश्यपः पुत्रो दक्षस्य दुहिताऽऽदितिः॥ ३

अदित्यां कश्यपाद्विवस्वान् । विवस्वतो मनुर्मनोरिला ॥ ४

इलायाः पुरूरवाः। पुरूरवस आयुः । आयुषो नहुषः। नहुषस्य ययातिः ॥ ५

ययातेर्द्वे भार्ये बभूवतुः । उशनसो दुहिता देवयानी वृषपर्वणश्च दुहिता शर्मिष्ठा नाम ॥ ६

तत्रानुवंशो भवति ।
यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ७

तत्र यदोर्यादवाः। पूरोः पौरवाः। पूरोर्भार्या कौसल्या बभूव । तस्यामस्य जज्ञे जनमेजयः ॥८

स त्रीन्हयमेधानाजहार। विश्वजिता चेष्ट्वा वनं प्रविवेश ॥ ९

जनमेजयस्तु सुनन्दां नामोपयेमे मागधीं । तस्यामस्य जज्ञे प्राचीन्वान् ॥ १०

यः प्राचीं दिशं जिगाय । यावत्सूर्योदयात् तत्तस्य प्राचीनत्वम् ॥ ११

प्राचीन्वांस्तु खल्वाश्मकीमुपयेमे यादवीम् । तस्यामस्य जज्ञे शय्यातिः ॥ १२

शय्यातिस्तु त्रिशङ्कोर्दुहितरं वराङ्गीं नामोपयेमे तस्यामस्य जज्ञेऽहंयातिः ॥ १३

अहंयातिस्तु खलु कृतवीर्यदुहितरं भानुमतीं नामोपयेमे। तस्यामस्य जज्ञे सार्वभौमः ॥ १४

सार्वभौमस्तु खलु जित्वाऽऽजहार कैकयीं सुन्दरां नाम तामुपयेमे । तस्यामस्य जज्ञे जयत्सेनः ॥ १५

जयत्सेनस्तु खलु वैदर्भीमुपयेमे सुश्रवां नाम। तस्यामस्य जज्ञेऽपराचीनः ॥ १६

अपराचीनस्तु खलु वैदर्भीमपरामुपयेमे मर्यादां नाम । तस्यामस्य जज्ञेऽरिहः ॥ १७

अरिहः खल्वाङ्गीमुपयेमे । तस्यामस्य जज्ञे महाभौमः ॥ १८

महाभौमस्तु खलु प्रसेनजिद्दुहितरमुपयेमे सुयज्ञां नाम । तस्यामस्य जज्ञे अयुतानायी ॥ १९

यः पुरुषमेधे पुरुषाणामयुतमानयत्तत्तस्यायुतानायित्वम् ॥ २०

वः ॥ ४७ ॥ स्वर्गादप्येतच्छ्रवणं सुखकरं मुक्तिहेतुत्वादिति भावः ॥ ४९ ॥ श्राद्धः श्रद्धावान् ॥ ५० ॥ श्राव्यमर्थतो रम्यम् ॥ ५२ ॥ सदोत्थायी सदोद्युक्तः ॥ ५५॥ द्विषष्टितमोऽध्यायः ॥ ६२ ॥

अयुतानायी तु खलु पृथुश्रवसो दुहितरमुपयेमे भासां नाम। तस्यामस्य जज्ञेऽक्रोधनः॥२१

अक्रोधनस्तु खलु कालिङ्गीं कण्डूं नामोपयेमे। तस्यामस्य जज्ञे देवातिथिः॥ २२

देवातिथिस्तु खलु वैदर्भीमुपयेमे मर्यादां नाम तस्यामस्य जज्ञे ऋचः॥ २३

ऋचस्तु खलु वामदेव्यामङ्गराजकन्यायामृक्षं पुत्रमजीजनत्॥ २४

ऋक्षस्तु खलु तक्षकदुहितरं ज्वलन्तीं नामोपयेमे। तस्यामन्त्यनारमुत्पादयामास॥ २५

अन्त्यनारस्तु खलु सरस्वत्यां द्वादशवार्षिकं सत्रमाजहार। तमुदवसाने सरस्वत्यभिगम्य भर्तारं वरयामास॥ २६

तस्यां पुत्रं जनयामास त्रसुं नाम। अत्रानुवंशो भवति॥ २७

त्रसुं सरस्वती पुत्रमन्त्यनारादजीजनत्।
इलिलं जनयामास कालिन्द्यां त्रसुरात्मजम्॥ २८

इलिलस्तु रथन्तर्यां दुष्यन्तादीन्पञ्च पुत्रानजीजनत्॥ २९

दुष्यन्तस्तु लाक्षीं नाम भागीरथीमुपयेमे तस्यामस्य जज्ञे जनमेजयः॥ ३०

सएव दुष्यन्तो विश्वामित्रदुहितरं शकुन्तलां नामोपयेमे। तस्यामस्य जज्ञे भरतः॥ ३१

तत्रेमौ श्लोकौ भवतः।

माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः।
भरस्व पुत्रं दौष्यन्तिं सत्यमाह शकुन्तला॥ ३२
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात्।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला॥३३

ततोऽस्य भरतत्वम्। भरतस्तु खलु काशेयीं सार्वसेनीमुपयेमे सुनन्दां नाम। तस्यामस्य जज्ञे भुमन्युः॥ ३४

भुमन्युस्तु खलु दाशार्हीमुपयेमे सुवर्णां नाम। तस्यामस्य जज्ञे सुहोत्रः॥ ३५

सुहोत्रस्तु खल्वैक्ष्वाकीमुपयेमे जयन्तीं नाम। तस्यामस्य जज्ञे हस्ती। य इदं पुरं निर्मापयामास॥ ३६

तस्माद्धास्तिनपुरत्वम्। हस्ती खलु त्रैगर्तीमुपयेमे यशोदां नाम तस्यामस्य जज्ञे विकुञ्जनः ३७

विकुञ्जनस्तु खलु दाशार्हीमुपयेमे सुन्दरां नाम। तस्यामस्य जज्ञेऽजमीढः॥ ३८

अजमीढस्य तु चतुर्विंशतिपुत्रशतं बभूव। कैकय्यां नागायां गान्धार्यां विमलायामृक्षायामिति॥ ३९

पृथग्वंशकर्तारो नृपतयः।तत्र अजमीढादृक्षायां संवरणो जज्ञे स वंशकरः॥ ४०

संवरणस्तु वैवस्वतीं तपतीं नामोपयेमे। तस्यामस्य जज्ञे कुरुः॥ ४१

कुरुस्तु खलु दाशार्हीमुपयेमे शुभाङ्गीं नाम। तस्यामस्य जज्ञे विदूरथः॥ ४२

विदूरथस्तु खलु मागधीमुपयेमे संप्रियां नाम। तस्यामस्य जज्ञेऽनश्वान्॥ ४३

अनश्वांस्तु खलु मागधीमुपयेमेऽमृतां नाम। तस्यामस्य जज्ञे परिक्षित्॥ ४४

परिक्षित्खलु बाहुकामुपयेमे सुवेषां नाम। तस्यामस्य जज्ञे भीमसेनः॥ ४५

भीमसेनस्तु खलु कैकयीमुपयेमे सुकुमारीं नाम। तस्यामस्य जज्ञे परिश्रवाः॥ ४६

यमाहुः प्रतीप इति। प्रतीपस्तु खलु शैब्यामुपयेमे सुनन्दीं नाम। तस्यां त्रीन्पुत्रानुत्पादयामास देवापिं शन्तनुं बाह्लीकं चेति॥ ४७

देवापिस्तु खलु बाल एवारण्यं प्रविवेश। शन्तनुस्तु महीपालोऽभवत्॥ ४८

तत्र श्लोको भवति।

यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते।
पुनर्युवा च भवति तस्मात्तं शन्तनुं विदुः॥ ४९

तदस्य शन्तनुत्वं। शन्तनुस्तु खलु गङ्गां

---

भस्त्रा चर्मकोशः तत्र निहितं बीजं यथा तदीयं न भवति एवं मातापि भस्त्रेव। येन हेतुना यो जातः स एव सः। कार्यस्य कारणानन्यत्वात्॥ ३२॥ पुत्रः रेतोधाः रेतोधातारं पितरं उन्नयति ऊर्ध्वं नयति। यमक्षयात् नरकात्॥ ३३॥

भागीरथीमुपयेमे तस्यामस्य जज्ञे देवव्रतः। यमाहुर्भीष्म इति ॥ ५०

भीष्मस्तु खलु पितुः प्रियचिकीर्षया सत्यवतीमानयामास मातरं। यामाहुः कालीति ॥ ५१

तस्यां पूर्वं पराशरात्कन्यागर्भो द्वैपायनः। तस्यामेव शन्तनोर्द्वौ पुत्रौ बभूवतुः चित्राङ्गदो विचित्रवीर्यश्च ॥ ५२

चित्राङ्गदस्तु प्राप्तराज्य एव गन्धर्वेण निहतः। ततो विचित्रवीर्यो राजा बभूव ॥ ५३

विचित्रवीर्यस्तु खलु काशिराजस्य सुते अम्बिकाम्बालिके उदवहत्। विचित्रवीर्योऽनुत्पन्नापत्य एव विदेहत्वं प्राप्तः ॥ ५४

ततः सत्यवती चिन्तयामास कथं नु खलु शन्तनोः पिण्डविच्छेदो न स्यादिति ॥ ५५

साथ द्वैपायनं चिन्तयामास सोऽग्रतः स्थितः किं करवाणीति। तं सत्यवत्युवाच भ्राता तेऽनपत्य एव स्वर्गतः तस्यार्थेऽपत्यमुत्पादयेति ॥५६

स परमित्युवाच स तत्र त्रीन्पुत्रानुत्पादयामास धृतराष्ट्रं पाण्डुं विदुरं चेति ॥ ५७

धृतराष्ट्रात्पुत्रशतं बभूव गान्धार्यां वरदानाद्वैपायनस्य तेषां च धार्तराष्ट्राणां चत्वारः प्रधानाः दुर्योधनो दुश्शासनो विकर्णश्चित्रसेनश्चेति ॥ ५८

पाण्डोस्तु कुन्ती माद्रीति स्त्रीरत्ने बभूवतुः। स मृगयां चरन्मैथुनगतमृषिं मृगचारिणं बाणेन जघान ॥ ५९

स बाणविद्ध उवाच पाण्डुम् । अत्र श्लोको भवति ॥ ६०

योऽकृतार्थं हि मां क्रूर बाणेनाघ्ना मृगव्रतम्।
त्वामप्येतादृशो भावः क्षिप्रमेवागमिष्यति ॥ ६१

इति मृगव्रतचारिणा ऋषिणा शप्तः। स विषण्णरूपः पाण्डुस्तं शापं परिहरन्नोपसर्पति भार्ये ६२

कदाचित्स आह। स्वचापल्यादिदं प्राप्तवानहम्। पुराणेषु पठ्यमानं शृणोमि नानपत्यस्य लोकाः सन्तीति ॥ ६३

सा त्वं मदर्थे पुत्रानुत्पादयेति कुन्तीमुवाच ६४

सा कुन्ती पुत्रानुत्पादयामास धर्माद्युधिष्ठिरं मारुताद्भीमसेनमिन्द्रादर्जुनमिति। स हृष्टरूपः पाण्डुरुवाच।

इयं ते सपत्नी भवति माद्र्यनपत्या व्रीडिता साध्वी अस्यामपत्यमुत्पाद्यतामिति ॥ ६५

सा कुन्ती तस्यै माद्र्यै तथेति व्रतमादिदेश। ततस्तस्यां नकुलसहदेवौ यमावश्विभ्यां जज्ञाते ६६

माद्रीं तु खलु स्वलङ्कृतां दृष्ट्वा पाण्डुर्भावं चक्रे। स तां प्राप्यैव विदेहत्वं प्राप्तः ॥ ६७

ततस्तेन सह चितामन्वारुरोह माद्री। कुन्तीं चोवाच यमयोरार्ययाऽप्रमत्तया भवितव्यमिति॥

ततः पञ्चपाण्डवान्सह कुन्त्या हास्तिनपुरं नयन्ति स्म तपस्विनः ॥ ६९

तत्र भीष्माय धृतराष्ट्रविदुरयोः पाण्डोः स्वर्गगमनं याथातथ्यं निवेदयन्तिस्म तपस्विनः॥ ७०

पाण्डवान्सह कुन्त्या जतुगृहे दाहयितुकामो धृतराष्ट्रात्मजोऽभूत् ॥ ७१

तांश्च विदुरो मोक्षयामास । ततो भीमो हिडिम्बं हत्वा पुत्रमुत्पादयामास हिडिम्बायां घटोत्कचं नाम ॥ ७२

ततश्चैकचक्रां जग्मुः कुशलिनः। ततः पाञ्चालविषयं गत्वा स्वयंवरे द्रौपदीं लब्ध्वाऽर्धराज्यं प्राप्येन्द्रप्रस्थनिवासिनस्तस्यां पुत्रानुत्पादयामासुर्द्रौपद्याम् ॥ ७३

प्रतिविन्ध्यं युधिष्ठिरः। सुतसोमं वृकोदरः। श्रुतकीर्तिमर्जुनः। शतानीकं नकुलः। श्रुतसेनं सहदेव इति ॥ ७४

शैब्यस्य कन्यां देवकीं नामोपयेमे युधिष्ठिरः। तस्यां पुत्रं जनयामास यौधेयं नाम ॥ ७५

भीमसेनस्तु वाराणस्यां काशिराजकन्यां जलन्धरां नामोपयेमे स्वयंवरस्थां । तस्यामस्य जज्ञे शर्वत्रातः ॥ ७६

अर्जुनस्तु खलु द्वारवतीं गत्वा भगवतो वासुदेवस्य भगिनीं सुभद्रां नामोदवहद्भार्यां। तस्यामभिमन्युं नाम पुत्रं जनयामास ॥ ७७

नकुलस्तु खलु चैद्यां रेणुमतीं नामोदवहत् । तस्यां पुत्रं जनयामास निरमित्रं नाम ॥ ७८

सहदेवस्तु खलु माद्रीमेव स्वयंवरे विजयां नामोदवहद्भार्याम् । तस्यां पुत्रं जनयामास सुहोत्रं नाम ॥ ७९

भीमसेनश्च पूर्वमेव हिडिम्बायां राक्षस्यां पुत्रमुत्पादयामास घटोत्कचं नाम । अर्जुनस्तु नागकन्यायामुलूप्यामिरावन्तं नाम पुत्रं जनयामास ॥ ८०

ततो मणलूरुपतिकन्यायां चित्राङ्गदायामर्जुनः पुत्रमुत्पादयामास बभ्रुवाहनं नाम । एते त्रयोदश पुत्राः पाण्डवानाम् ॥ ८१

विराटस्य दुहितरमुत्तरां नामाभिमन्युरुपयेमे । तस्यामस्य परासुर्गर्भोऽजायत ॥ ८२

तमुत्सङ्गे प्रतिजग्राह पृथा नियोगात्पुरुषोत्तमस्य । षाण्मासिकं गर्भमहं जीवयामि पादस्पर्शादिति वासुदेव उवाच ॥ ८३

अहं जीवयामि कुमारमनन्तवीर्यं जात एवायमजायत । अभिमन्योः सत्येन चेयं पृथिवी धारयत्विति वासुदेवस्य पादस्पर्शात्सजीवोऽजायत । नाम तस्याकरोत्सुभद्रा ॥ ८४

परिक्षीणे कुले जात उत्तरायां परंतपः ।
परिक्षिदभवत्तस्मात्सौभद्रात्तु यशस्विनः ॥ ८५

परीक्षित्तु खलु भद्रवतीं नामोपयेमे । तस्यां तत्र भवाञ्जनमेजयः ॥ ८६

जनमेजयात्तु भवतः खलु वपुष्टमायां पुत्रौ द्वौ शतानीकः शङ्कुकर्णश्च ॥ ८७

शतानीकस्तु खलु वैदेहीमुपयेमे । तस्यामस्य जज्ञे पुत्रोऽश्वमेधदत्तः ॥ ८८

इत्येष पूरोर्वंशस्तु पाण्डवानां च कीर्तितः ।
पूरोर्वंशमिमं श्रुत्वा सर्वपापैः प्रमुच्यते ॥ ८९

॥ इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

उपरिचरराजोपाख्यानम् ॥ १ ॥ इन्द्रध्वजोत्सववृत्तान्तः ॥ २ ॥ गिरिकाया उत्पत्तिः । उपरिचरस्य तया विवाहश्च ॥ ३ ॥ मृगयार्थं गतेनोपरिचरेण स्वपत्नीस्मरणात्स्कन्नस्य श्येनद्वारा प्रेषितस्य रेतसो यमुनाजले पतनम् ॥ ४ ॥ ब्रह्मशापान्मत्स्यभावं प्राप्तयाऽद्रिकया तद्रेतःपानम् ॥ ५ ॥ तदुदरे मिथुनोत्पत्तिः ॥ ६ ॥ तत्र पुत्रस्य उपरिचरवसुना ग्रहणम् । कन्याया दाशगृहे स्थितिः ॥ ७ ॥ नावं वाहयमानायां सत्यवतीनाम्न्यां दाशकन्यायां पराशराद्द्वैपायनस्योत्पत्तिः । तस्य व्यासनामप्राप्तिश्च॥८॥ पाठान्तरे पराशरसत्यवतीविवाहादि ॥ ९ ॥ भीष्मादीनां संक्षेपतो जन्मवृत्तान्तकथनम् ॥ १० ॥

वैशंपायन उवाच ।
राजोपरिचरो नाम धर्मनित्यो महीपतिः ।
बभूव मृगयाशीलः शश्वत्स्वाध्यायवाञ्छुचिः॥ १
स चेदिविषयं रम्यं वसुः पौरवनन्दनः ।
इन्द्रोपदेशाज्जग्राह रमणीयं महीपतिः ॥ २
तमाश्रमे न्यस्तशस्त्रं निवसन्तं तपोनिधिम् ।
देवाः शक्रपुरोगा वै राजानमुपतस्थिरे ॥ ३
इन्द्रत्वमर्हो राजायं तपसेत्यनुचिन्त्य वै ।
तं सान्त्वेन नृपं साक्षात्तपसः संन्यवर्तयन् ॥ ४

देवा ऊचुः ।
न संकीर्येत धर्मोऽयं पृथिव्यां पृथिवीपते ।
त्वया हि धर्मो विधृतः कृत्स्नं धारयते जगत्॥ ५

इन्द्र उवाच ।
'देवानहं पालयिता पालय त्वं हि मानुषान् ।'
लोके धर्मं पालय त्वं नित्ययुक्तः समाहितः ।
धर्मयुक्तस्ततो लोकान्पुण्यान्प्राप्स्यसि शाश्वतान् ६
दिविष्ठस्य भुविष्ठस्त्वं सखाभूतो मम प्रियः ।
ऊधः पृथिव्या यो देशस्तमावस नराधिप ॥ ७

रञ्जकत्वाद्राजा । महीपतिः पृथ्वीपालकः ॥ १ ॥ वसुः उपरिचरः ॥ २ ॥ साक्षात्प्रत्यक्षीभूय ॥ ४ ॥ न संकीर्येत निर्णा-

पशव्यश्चैव पुण्यश्च प्रभूतधनधान्यवान् ।
स्वारक्ष्यश्चैव सौम्यश्च भोग्यैर्भूमिगुणैर्युतः ॥ ८
अर्थवानेष देशो हि धनरत्नादिभिर्युतः ।
वसुपूर्णा च वसुधा वस चेदिषु चेदिप ॥ ९
धर्मशीला जनपदाः सुसंतोषाश्च साधवः ।
न च मिथ्या प्रलापोऽत्र स्वैरेष्वपि कुतोऽन्यथा १०
न च पित्रा विभज्यन्ते पुत्रा गुरुहिते रताः ।
युञ्जते धुरि नो गाश्च कृशान्संधुक्षयन्ति च ॥ ११
सर्वे वर्णाः स्वधर्मस्थाः सदा चेदिषु मानद ।
न तेऽस्त्यविदितं किंचित्त्रिषु लोकेषु यद्भवेत् १२
दैवोपभोग्यं दिव्यं त्वामाकाशे स्फाटिकं महत् ।
आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते ॥ १३
त्वमेकः सर्वमर्त्येषु विमानवरमास्थितः ।
चरिष्यस्युपरिस्थो हि देवो विग्रहवानिव ॥ १४
ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम् ।
धारयिष्यति सङ्ग्रामे या त्वां शस्त्रैरविक्षतम् ॥ १५
लक्षणं चैतदेवेह भविता ते नराधिप ।
इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत् ॥ १६
यष्टिं च वैणवीं तस्मै ददौ वृत्रनिषूदनः ।
इष्टप्रदानमुद्दिश्य शिष्टानां प्रतिपालिनीम् ॥ १७
'एवं संसान्त्व्य नृपतिं तपसः संन्यवर्तयत् ।
प्रययौ दैवतैः सार्धं कृत्वा कार्यं दिवौकसाम् १८
ततस्तु राजा चेदीनामिन्द्राभरणभूषितः ।
इन्द्रदत्तं विमानं तदास्थाय प्रययौ पुरीम् ॥' १९
तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा ।
प्रवेशं कारयामास सर्वोत्सववरं तदा ॥ २०
'मार्गशीर्षे महाराज पूर्वपक्षे महामखम् ।
ततःप्रभृति चाद्यापि यष्टेः क्षितिपसत्तमैः ॥' २१
प्रवेशः क्रियते राजन्यथा तेन प्रवर्तितः ।
अपरेद्युस्ततस्तस्याः क्रियतेऽत्युच्छ्रयो नृपैः ॥ २२
अलङ्कृतायाः पिटकैर्गन्धमाल्यैश्च भूषणैः ।
'माल्यदामपरिक्षिप्तां द्वात्रिंशत्किष्कुसंमिताम् २३
उद्धृत्य पिटके चापि द्वादशारत्निकोच्छ्रये ।
महारजनवासांसि परिक्षिप्य ध्वजोत्तमम् ॥ २४
वासोभिरन्नपानैश्च पूजितैर्ब्राह्मणर्षभैः ।
पुण्याहं वाचयित्वाथ ध्वज उच्छ्रियते तदा ॥ २५
शङ्खभेरीमृदङ्गैश्च संनादः क्रियते तदा' ।
भगवान्पूज्यते चात्र यष्टिरूपेण वासवः ॥ २६
स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः ।
'मणिभद्रादयो यक्षाः पूज्यन्ते दैवतैः सह ॥ २७
नानाविधानि दानानि दत्त्वार्थिभ्यः सुहृज्जनैः ।
अलङ्कृत्वा माल्यदामैर्वस्त्रैर्नानाविधैस्तथा ॥ २८
दृतिभिः सजलैः सर्वैः क्रीडित्वा नृपशासनात् ।
सभाजयित्वा राजानं कृत्वा नर्माश्रयाः कथाः २९
रमन्ते नागराः सर्वे तथा जानपदैः सह ।
सूताश्च मागधाश्चैव रमन्ते नटनर्तकाः ॥ ३०
प्रीत्या तु नृपशार्दूल सर्वे चक्रुर्महोत्सवम् ।
सान्तःपुरः सहामात्यः सर्वाभरणभूषितः ॥ ३१
महारजनवासांसि वसित्वा चेदिराट् तदा ।
जातिहिङ्गुलकेनाक्तः सदारो मुमुदे तदा ॥ ३२
एवं जानपदाः सर्वे चक्रुरिन्द्रमहं तथा ।
यथा चेदिपतिः प्रीतश्चकारेन्द्रमहं वसुः ॥' ३३
एतां पूजां महेन्द्रस्तु दृष्ट्वा वसुकृतां शुभाम् ।
'हरिभिर्वाजिभिर्युक्तमन्तरिक्षगतं रथम् ॥ ३४
आस्थाय सह शच्या च वृतो ह्यप्सरसां गणैः ।'
वसुना राजमुख्येन समागम्याब्रवीद्वचः ॥ ३५
ये पूजयिष्यन्ति नरा राजानश्च महं मम ।
कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः ॥ ३६
तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति ।
तथा स्फीतो जनपदो मुदितश्च भविष्यति ॥ ३७

---

यकत्वात् ॥ ५ ॥ पशव्यः पशुभ्यो हितः ॥ ८ ॥ गाः बलीवर्दान् । वृषभान्कृशान्न धुरि युञ्जते प्रत्युत संधुक्षयन्ति पुष्टान्कुर्वन्ति । अन्ये तु गाः स्त्रीगवीः तासामप्यान्ध्रादिदुर्देशेषु धुरि योजनं दृष्टं तदिह नास्तीत्याहुः ॥ ११ ॥ न त इति । आत्मज्ञानात्सर्वज्ञो भविष्यसीत्यर्थः ॥ १२ ॥ उपपत्स्यते उपस्थास्यते ॥ १३ ॥ वैजयन्तीं विजयहेतुं । अविक्षतमेव धारयिष्यति पालयिष्यति नतु विक्षतम् ॥ १५ ॥ लक्षणं चिह्नम् ॥ १६ ॥ इष्टप्रदानं प्रीतिदायमुद्दिश्य यष्टिं ददौ ॥ १७ ॥ शक्रस्य पूजार्थे तस्या यष्टेः प्रवेशं स्थापनम् ॥ २० ॥ पिटकैः मञ्जूषारूपैर्वस्त्रमयैः कोशैः ॥ २३ ॥

'निरीतिकानि सस्यानि भवन्ति बहुधा नृप ।
राक्षसाश्च पिशाचाश्च न लुम्पन्ते कथंचन ॥ ३८
वैशंपायन उवाच ।'
एवं महात्मना तेन महेन्द्रेण नराधिप ।
वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः ।
एवं कृत्वा महेन्द्रस्तु जगाम स्वं निवेशनम् ॥ ३९
उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः ।
भूमिरत्नादिभिर्दानैस्तथा पूज्या भवन्ति ते ।
वरदानमहायज्ञैस्तथा शक्रोत्सवेन च ॥ ४०
संपूजितो मघवता वसुश्चेदीश्वरो नृपः ।
पालयामास धर्मेण चेदिस्थः पृथिवीमिमाम् ४१
इन्द्रप्रीत्या चेदिपतिश्चकारेन्द्रमहं वसुः ।
पुत्राश्चास्य महावीर्याः पञ्चासन्नमितौजसः ॥ ४२
नानाराज्येषु च सुतान्स सम्राडभ्यषेचयत् ।
महारथो मागधानां विश्रुतो यो बृहद्रथः ॥ ४३
प्रत्यग्रहः कुशाम्बश्च यमाहुर्मणिवाहनम् ।
मत्सिल्लश्च यदुश्चैव राजन्यश्चापराजितः ॥ ४४
एते तस्य सुता राजन्राजर्षेर्भूरितेजसः ।
न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च ॥ ४५
वासवाः पञ्च राजानः पृथग्वंशाश्च शाश्वताः ।
वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके च तम् ४६
उपतस्थुर्महात्मानं गन्धर्वाप्सरसो नृपम् ।
राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम् ॥ ४७
पुरोपवाहिनीं तस्य नदीं शुक्तिमतीं गिरिः ।
अरौत्सीच्चेतनायुक्तः कामात्कोलाहलः किल ४८
गिरिं कोलाहलं तं तु पदा वसुरताडयत् ।
निश्चक्राम ततस्तेन प्रहारविवरेण सा ॥ ४९
तस्यां नद्यां स जनयन्मिथुनं पर्वतः स्वयम् ।
तस्माद्विमोक्षणात्प्रीता नदी राज्ञे न्यवेदयत् ॥ ५०
'महिषी भविता कन्या पुमान्सेनापतिर्भवेत् ।
शुक्तिमत्या वचः श्रुत्वा दृष्ट्वा तौ राजसत्तमः' ५१
यः पुमानभवत्तत्र तं स राजर्षिसत्तमः ।
वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमः ॥ ५२
चकार पत्नीं कन्यां तु तथा तां गिरिकां नृपः ।
वसोः पत्नी तु गिरिका कामकालं न्यवेदयत् ५३
ऋतुकालमनुप्राप्ता स्नाता पुंसवने शुचिः ।
तदहः पितरश्चैनमूचुर्जहि मृगानिति ॥ ५४
तं राजसत्तमं प्रीतास्तदा मतिमतां वरः ।
स पितॄणां नियोगेन तामतिक्रम्य पार्थिवः ॥ ५५
चकार मृगयां कामी गिरिकामेव संस्मरन् ।
अतीव रूपसंपन्नां साक्षाच्छ्रियमिवापराम् ॥ ५६
अशोकैश्चम्पकैश्चूतैरनेकैरतिमुक्तकैः ।
पुन्नागैः कर्णिकारैश्च वकुलैर्दिव्यपाटलैः ॥ ५७
पनसैर्नारिकेलैश्च चन्दनैश्चार्जुनैस्तथा ।
एतै रम्यैर्महावृक्षैः पुण्यैः स्वादुफलैर्युतम् ॥ ५८
कोकिलाकुलसन्नादं मत्तभ्रमरनादितम् ।
वसन्तकाले तत्पश्यन्वनं चैत्ररथोपमम् ॥ ५९
मन्मथाभिपरीतात्मा नापश्यद्गिरिकां तदा ।
अपश्यन्कामसंतप्तश्चरमाणो यदृच्छया ॥ ६०
पुष्पसंछन्नशाखाग्रं पल्लवैरुपशोभितम् ।
अशोकस्तबकैश्छन्नं रमणीयमपश्यत ॥ ६१
अधस्तात्तस्य छायायां सुखासीनो नराधिपः ।
मधुगन्धैश्च संयुक्तं पुष्पगन्धमनोहरम् ॥ ६२
वायुना प्रेर्यमाणस्तु धूम्राय मुदमन्वगात् ।
'भार्यां चिन्तयमानस्य मन्मथाग्निरवर्धत ।'
तस्य रेतः प्रचस्कन्द चरतो गहने वने ॥ ६३
स्कन्नमात्रं च तद्रेतो वृक्षपत्रेण भूमिपः ।
प्रतिजग्राह मिथ्या मे न पतेद्रेत इत्युत ॥ ६४
'अङ्गुलीयेन शुक्रस्य रक्षां च विदधे नृपः ।
अशोकस्तवकै रक्तैः पल्लवैश्चाप्यवन्धयत् ॥' ६५
इदं मिथ्या परिस्कन्नं रेतो मे न भवेदिति ।
ऋतुश्च तस्याः पत्न्या मे न मोघः स्यादिति प्रभुः ६६
संचिन्त्यैवं तदा राजा विचार्य च पुनःपुनः ।
अमोघत्वं च विज्ञाय रेतसो राजसत्तमः ॥ ६७

वासवाः वसुपुत्राः ॥ ४६ ॥ पुरोपवाहिनीं पुरसमीपे वहन्तीं ॥ ४८ ॥ नदी राज्ञे न्यवेदयन्मिथुनमित्यनुषज्यते ॥ ५० ॥ तदहस्तस्मिन् दिने ॥ ५४ ॥ वायुना कामोद्दीपकेन । धूम्रं मलिनं रतिकर्म तदर्थं । मुदं स्त्रीविषयां प्रीतिमनुसृत्य तामेव मनसाऽगात् । तया सह मानसं सुरतमकरोदित्यर्थः । प्रचस्कन्द पपात ॥ ६३ ॥ मिथ्या प्रसवशून्यत्वेनालीकप्रायम्

शुक्रप्रस्थापने कालं महिष्याः प्रसमीक्ष्य वै ।
अभिमन्त्र्याथ तच्छुक्रमारात्तिष्ठन्तमाशुगम् ॥६८
सूक्ष्मधर्मार्थतत्त्वज्ञो गत्वा श्येनं ततोऽब्रवीत् ।
मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय ॥ ६९
गिरिकायाः प्रयच्छाशु तस्या ह्यार्तवमद्य वै ।
वैशंपायन उवाच ।
गृहीत्वा तत्तदा श्येनस्तूर्णमुत्पत्य वेगवान् ॥७०
जवं परममास्थाय प्रदुद्राव विहंगमः ।
तमपश्यदथायान्तं श्येनं श्येनस्तथाऽपरः ॥ ७१
अभ्यद्रवच्च तं सद्यो दृष्ट्वामिपशङ्कया ।
तुण्डयुद्धमथाकाशे तावुभौ संप्रचक्रतुः ॥ ७२
युद्ध्यतोरपतद्रेतस्तच्चापि यमुनाम्भसि ।
तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सरा ॥७३
मीनभावमनुप्राप्ता बभूव यमुनाचरी ।
श्येनपादपरिभ्रष्टं तद्वीर्यमथ वासवम् ॥ ७४
जग्राह तरसोपेत्य साऽद्रिका मत्स्यरूपिणी ।
कदाचिदपि मत्सीं तां बबन्धुर्मत्स्यजीविनः ७५
मासे च दशमे प्राप्ते तदा भरतसत्तम ॥
उज्जह्रुरुदरात्तस्याः स्त्रीं पुमांसं च मानुषौ ॥ ७६
आश्चर्यभूतं तद्गत्वा राज्ञेऽथ प्रत्यवेदयन् ।
काये मत्स्या इमौ राजन्संभूतौ मानुषाविति ७७
तयोः पुमांसं जग्राह राजोपरिचरस्तदा ।
स मत्स्यो नाम राजासीद्धार्मिकः सत्यसङ्गरः ७८
साऽप्सरा मुक्तशापा च क्षणेन समपद्यत ।
या पुरोक्ता भगवता तिर्यग्योनिगता शुभा ७९
मानुषौ जनयित्वा त्वं शापमोक्षमवाप्स्यसि ।
ततः सा जनयित्वा तौ विशस्ता मत्स्यघातिभिः ८०
संत्यज्य मत्स्यरूपं सा दिव्यं रूपमवाप्य च ।
सिद्धर्षिचारणपथं जगामाथ वराप्सराः ॥ ८१
सा कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी ।
राज्ञा दत्ता च दाशाय कन्येयं ते भवत्विति ८२
रूपसत्वसमायुक्ता सर्वैः समुदिता गुणैः ।
सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात् ८३
आसीत्सा मत्स्यगन्धैव कंचित्कालं शुचिस्मिता ।
शुश्रूषार्थं पितुर्नावं वाहयन्तीं जले च ताम् ॥८४
तीर्थयात्रां परिक्रामन्नपश्यद्वै पराशरः ।
अतीव रूपसंपन्नां सिद्धानामपि काङ्क्षिताम् ॥८५
दृष्ट्वैव स च तां धीमांश्चकमे चारुहासिनीम् ।
दिव्यां तां वासवीं कन्यां रम्भोरूं मुनिपुङ्गवः ८६
संभवं चिन्तयित्वा तां ज्ञात्वा प्रोवाच शक्तिजः ।
क्व कर्णधारो नौर्येन नीयते ब्रूहि भामिनि ॥ ८७
मत्स्यगन्धोवाच ।
अनपत्यस्य दाशस्य सुता तत्प्रियकाम्यया ।
सहस्रजनसंपन्ना नौर्मया वाह्यते द्विज ॥ ८८
पराशर उवाच ।
शोभनं वासवि शुभे किं चिरायसि वाह्यताम् ।
कलशं भविता भद्रे सहस्रार्धेन संमितम् ॥ ८९
अहं शेषो भविष्यामि नीयतामचिरेण वै ।
वैशंपायन उवाच ।
मत्स्यगन्धा तथेत्युक्त्वा नावं वाहयतां जले ९०
वीक्षमाणं मुनिं दृष्ट्वा प्रोवाचेदं वचस्तदा ।
मत्स्यगन्धेति मामाहुर्दाशराजसुतां जनाः ॥९१
जन्म शोकाभितप्तायाः कथं ज्ञास्यसि कथ्यताम् ।
पराशर उवाच ।
दिव्यज्ञानेन दृष्टं हि दृष्टमात्रेण ते वपुः ॥ ९२
प्रणयग्रहणार्थाय वक्ष्ये वासवि तच्छृणु ।
बर्हिषद इति ख्याताः पितरः सोमपास्तु ते ॥ ९३
तेषां त्वं मानसी कन्या अच्छोदा नाम विश्रुता ।
अच्छोदं नाम तद्दिव्यं सरो यस्मात्समुत्थितम् ९४
त्वया न दृष्टपूर्वास्तु पितरस्ते कदाचन ।
संभूता मनसा तेषां पितॄन्स्वान्नाभिजानती ॥९५
सा त्वन्यं पितरं वव्रे स्वानतिक्रम्य तान्पितॄन् ।
नाम्ना वसुरिति ख्यातं मनुपुत्रं दिवि स्थितम् ९६
अद्रिकाऽप्सरसा युक्तं विमाने दिवि विष्ठितम् ।
सा तेन व्यभिचारेण मनसा कामचारिणी ॥९७
पितरं प्रार्थयित्वाऽन्यं योगाद्भ्रष्टा पपात सा ।

॥ ६४ ॥ अभिमन्त्र्य पुत्रोत्पत्तिलिङ्गैर्मन्त्रैः स्पृष्ट्वा ॥ ६८ ॥ आर्तवमृतुकालीनं स्नानम् ॥ ७० ॥ युध्यतोः सतोः ॥ ७३ ॥ मासे दशमे प्राप्ते बबन्धुरिति संबन्धः । उज्जह्रुः उद्धृतवन्तः ॥ ७६ ॥ काये देहे । मत्स्याः मत्स्ययोषायाः ॥ ७७ ॥

अपश्यत्पतमाना सा विमानत्रयमन्तिकात् ९८
त्रसरेणुप्रमाणांस्तांस्तत्रापश्यत्स्वकान्पितॄन् ।
सुसूक्ष्मानपरिव्यक्तानङ्गैरङ्गेष्विवाहितान् ॥ ९९
तातेति तानुवाचार्ता पतन्ती सा ह्यधोमुखी ।
तैरुक्ता सा तु माभैषीस्तेन सा संस्थिता दिवि १००
ततः प्रसादयामास स्वान्पितॄन्दीनया गिरा ।
तामूचुः पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात् १०१
भ्रष्टैश्वर्या स्वदोषेण पतसि त्वं शुचिस्मिते ।
यैरारभन्ते कर्माणि शरीरै रिह देवताः ॥ १०२
तैरेव तत्कर्मफलं प्राप्नुवन्ति स्म देवताः ।
मनुष्यास्त्वन्यदेहेन शुभाशुभमिति स्थितिः १०३
सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे ।
तस्मात्त्वं पतसे पुत्रि प्रेत्यत्वं प्राप्स्यसे फलम् १०४
पितृहीना तु कन्या त्वं वसोर्हि त्वं सुता मता ।
मत्स्ययोनौ समुत्पन्ना सुता राज्ञो भविष्यसि १०५
अद्रिका मत्स्यरूपाऽभूद्गङ्गायमुनसङ्गमे ।
पराशरस्य दायादं त्वं पुत्रं जनयिष्यसि ॥ १०६
यो वेदमेकं ब्रह्मर्षिश्चतुर्धा विभजिष्यति ।
महाभिषक्सुतस्यैव शन्तनोः कीर्तिवर्धनम् ॥ १०७
ज्येष्ठं चित्राङ्गदं वीरं चित्रवीरं च विश्रुतम् ।
एतान्सूत्वा सुपुत्रांस्त्वं पुनरेव गमिष्यसि ॥ १०८
व्यतिक्रमात्पितॄणां च प्राप्स्यसे जन्म कुत्सितम् ।
अस्यैव राज्ञस्त्वं कन्या ह्यद्रिकायां भविष्यसि १०९
अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा ।
एवमुक्ता पुरा तैस्त्वं जाता सत्यवती शुभा ११०
अद्रिकेत्यभिविख्याता ब्रह्मशापाद्वराप्सरा ।
मीनभावमनुप्राप्ता त्वां जनित्वा गता दिवम् १११
तस्यां जातासि सा कन्या राज्ञो वीर्येण चैव हि ।
तस्माद्वासवि भद्रं ते याचे वंशकरं सुतम् ॥ ११२
संगमं मम कल्याणि कुरुष्वेत्यभ्यभाषत ॥ ११३
वैशंपायन उवाच ।
विस्मयाविष्टसर्वाङ्गी जातिस्मरणतां गता ।
साब्रवीत्पश्य भगवन्परपारे स्थितानृषीन् ॥ ११४
आवयोर्दृष्टयोरेभिः कथं नु स्यात्समागमः ।
एवं तयोक्तो भगवान्नीहारमसृजत्प्रभुः ॥ ११५
येन देशः स सर्वस्तु तमोभूत इवाभवत् ।
दृष्ट्वा सृष्टं तु नीहारं ततस्तं परमर्षिणा ॥ ११६
विस्मिता साभवत्कन्या व्रीडिता च तपस्विनी ।
सत्यवत्युवाच ।
विद्धि मां भगवन्कन्यां सदा पितृवशानुगाम् ११७
त्वत्संयोगाच्च दुष्येत कन्याभावो ममाऽनघ ।
कन्यात्वे दूषिते वापि कथं शक्ष्ये द्विजोत्तम ११८
गृहं गन्तुमृषे चाहं धीमन्न स्थातुमुत्सहे ।
एतत्संचिन्त्य भगवन्विधत्स्व यदनन्तरम् ॥ ११९
वैशंपायन उवाच ।
एवमुक्तवतीं तां तु प्रीतिमानृषिसत्तमः ।
उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यसि ॥ १२०
वृणीष्व च वरं भीरु यं त्वमिच्छसि भामिनि ।
वृथा हि न प्रसादो मे भूतपूर्वः शुचिस्मिते ॥ १२१
एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम् ।
स चास्यै भगवान्प्रादान्मनसः काङ्क्षितं प्रभुः १२२
ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता ।
जगाम सह संसर्गमृषिणाऽद्भुतकर्मणा ॥ १२३
तेन गन्धवतीत्येवं नामास्याः प्रथितं भुवि ।
तस्यास्तु योजनाद्गन्धमाजिघ्रन्त नरा भुवि ॥ १२४
तस्या योजनगन्धेति ततो नामापरं स्मृतम् ।
इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम् ॥ १२५
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ।
जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ॥ १२६
स मातरमनुज्ञाप्य तपस्येव मनो दधे ।
स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ॥
एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ।
न्यस्तो द्वीपे स यद्बालस्तस्माद्द्वैपायनः स्मृतः ॥ १२८
पादापसारिणं धर्मं स तु विद्वान्युगे युगे ।

नीहारं धूमिकाम् ॥ ११५ ॥ स्थातुं जीवितुं नोत्सहे कन्यात्वदूषणादित्यर्थः ॥ ११९ ॥ द्वीपमेवाऽयनं न्यासस्थानं यस्य द्वीपायनः स्वार्थे तद्धितः द्वीपायन एव द्वैपायन इति नाम निर्वक्ति न्यस्त इति ॥ १२८ ॥ पादापसारिणं युगेयुगे पादशः

आयुः शक्तिं च मर्त्यानां युगावस्थामवेक्ष्य च १२९
ब्रह्मणो ब्राह्मणानां च तथानुग्रहकाङ्क्षया ।
विव्यास वेदान्यस्मात्स तस्माद्व्यास इति स्मृतः १३०
वेदानध्यापयामास महाभारतपञ्चमान् ।
सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ॥ १३१
प्रभुर्वरिष्ठो वरदो वैशंपायनमेव च ।
संहितास्तैः पृथक्त्वेन भारतस्य प्रकाशिताः॥१३२
[*तो रम्ये वनोद्देशे दिव्यास्तरणसंयुते ।
वीरासनमुपास्थाय योगी ध्यानपरोऽभवत् ॥ १
श्वेतपट्टगृहे रम्ये पर्यङ्के सोत्तरच्छदे ।
तूर्णींभूतां तदा कन्यां ज्वलन्तीं योगतेजसा ॥ २
दृष्ट्वा तां तु समाधाय विचार्य च पुनः पुनः ।
स चिन्तयामास मुनिः किं कृतं सुकृतं भवेत् ॥३
शिष्टानां तु समाचारः शिष्टाचार इति स्मृतः ।
श्रुतिस्मृतिविदो विप्रा धर्मज्ञा ज्ञानिनः स्मृताः॥४
धर्मज्ञैर्विहितो धर्मः श्रौतः स्मार्तो द्विधा द्विजैः ।
दानाग्निहोत्रमिज्या च श्रौतस्यैतद्धि लक्षणम् ॥ ५
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ।
धर्मे तु धारणे धातुः सहत्वे चापि पठ्यते ॥ ६
तत्रेष्टफलभाग्धर्म आचार्यैरुपदिश्यते ।
अनिष्टफलभाक्केति तैरधर्मोऽपि भाष्यते ॥ ७
तस्मादिष्टफलार्थाय धर्ममेव समाश्रयेत् ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यश्च धार्मिकः ॥ ८
विवाहा ब्राह्मणानां तु गान्धर्वो नैव धार्मिकः ।
त्रिवर्णेतरजातीनां गान्धर्वासुरराक्षसाः ॥ ९
पैशाचो नैव कर्तव्यः पैशाचश्चाष्टमोऽधमः ।
सामर्षां व्यङ्गिकां कन्यां मातुश्च कुलजां तथा १०
वृद्धां प्रव्राजितां वन्ध्यां पतितां च रजस्वलाम् ।
अपस्मारकुले जातां पिङ्गलां कुष्ठिनीं व्रणीम् ॥११
न चास्नातां स्त्रियं गच्छेदिति धर्मानुशासनम् ।
पिता पितामहो भ्राता माता मातुल एव च १२
उपाध्यायर्त्विजश्चैव कन्यादाने प्रभूत्तमाः ।
एतैर्दत्तां निषेवेत नादत्तामाददीत च ॥ १३
इत्येव ऋषयः प्राहुर्विवाहे धर्मवित्तमाः ।
अस्या नास्ति पिता भ्राता माता मातुल एव च १४
गान्धर्वेण विवाहेन न स्पृशामि यदृच्छया ।
क्रियाहीनं तु गान्धर्वं न कर्तव्यमनापदि ॥ १५
यदस्यां जायते पुत्रो वेदव्यासो भवेदृषिः ।
क्रियाहीनः कथं विप्रो भवेदृषिरुदारधीः ॥ १६
वैशंपायन उवाच ।
एवं चिन्तयतो भावं महर्षेर्भावितात्मनः ।
ज्ञात्वा चैवाभ्यवर्तन्त पितरो बर्हिषस्तदा ॥ १७
तस्मिन्क्षणे ब्रह्मपुत्रो वसिष्ठोऽपि समेयिवान् ।
पूर्वं स्वागतमित्युक्त्वा वसिष्ठः प्रत्यभाषत ॥१८
पितृगणा ऊचुः ।
अस्माकं मानसीं कन्यामस्मच्छापेन वासवीम् ।
यदिचेच्छसि पुत्रार्थं कन्यां गृह्णीष्व मा चिरम्॥१९
पितॄणां वचनं श्रुत्वा वसिष्ठः प्रत्यभाषत ।
महर्षीणां वचः सत्यं पुराणेपि मया श्रुतम्॥ २०
पराशरो ब्रह्मचारी प्रजार्थी मम वंशधृत् ।
एवं संभाषमाणे तु वसिष्ठे पितृभिः सह ॥ २१
ऋषयोऽभ्यागमंस्तत्र नैमिशारण्यवासिनः ।
विवाहं द्रष्टुमिच्छन्तः शक्तिपुत्रस्य धीमतः ॥ २२
अरुन्धती महाभागा अदृश्यन्त्या सहैव सा ।
विश्वकर्मकृतां दिव्यां पर्णशालां प्रविश्य सा ॥ २३
वैवाहिकांस्तु संभारान्संकल्प्य च यथाक्रमम् ।
अरुन्धती सत्यवतीं वधूं संगृह्य पाणिना ॥ २४
भद्रासने प्रतिष्ठाप्य इन्द्राणीं समकल्पयत् ।
आपूर्यमाणपक्षे तु वैशाखे सोमदैवते ॥ २५
शुभग्रहे त्रयोदश्यां मुहूर्ते मैत्र आगते ।
विवाहकाल इत्युक्त्वा वसिष्ठो मुनिभिः सह २६
यमुनाद्वीपमासाद्य शिष्यैश्च मुनिपङ्क्तिभिः ।

क्षीयमाणं । कलेरादौ पादमात्रमवशिष्टमित्यर्थः । एवमायुरादि-हासं चावेक्ष्य ॥ १२९ ॥ ब्रह्मणो वेदस्य अनुग्रहो रक्षणं । विव्यास शाखाभेदेन विस्तारितवान् । अतो व्यास इत्यपि तस्य नामेत्यर्थः ॥ १३० ॥

* १२५ तमश्लोकपूर्वार्धात्परं 'इति सत्यवती हृष्टा' इत्यादि 'भारतस्य प्रकाशिताः' इत्यन्तसार्धश्लोकसप्तकस्थाने इमे कुण्डलिताः ८८ श्लोकाः केषुचित्कोशेषूपलभ्यन्ते ।

स्थण्डिलं चतुरश्रं च गोमयेनोपलिप्य च ॥ २७
अक्षतैः फलपुष्पैश्च स्वस्तिकैराम्रपल्लवैः ।
जलपूर्णघटैश्चैव सर्वतः परिशोभितम् ॥ २८
तस्य मध्ये प्रतिष्ठाप्य बृस्यां मुनिवरं तदा ।
सिद्धार्थयवकल्कैश्च स्नातं सर्वौषधैरपि ॥ २९
कृत्वार्जुनानि वस्त्राणि परिधाप्य महामुनिम् ।
वाचयित्वा तु पुण्याहमक्षतैस्तु समर्चितः ॥ ३०
गन्धानुलिप्तः स्रग्वी च सप्रतोदो वधूगृहे ।
अपदातिस्ततो गत्वा वधूज्ञातिभिरर्चितः ॥ ३१
स्नातामहतसंवीतां गन्धलिप्तां स्रगुज्ज्वलाम् ।
वधूं मङ्गलसंयुक्तामिषुहस्तां समीक्ष्य च ॥ ३२
उवाच वचनं काले कालज्ञः सर्वधर्मवित् ।
प्रतिग्रहो दातृवशः श्रुतमेवं मया पुरा ॥ ३३
यथा वक्ष्यन्ति पितरस्तत्करिष्यामहे वयम् ।

वैशंपायन उवाच ।

तद्धर्मिष्ठं यशस्यं च वचनं सत्यवादिनः ॥ ३४
श्रुत्वा तु पितरः सर्वे निःसङ्गा निष्परिग्रहाः ।
वसुं परमधर्मिष्ठमानीयेदं वचोऽब्रुवन् ॥ ३५
मत्स्ययोनौ समुत्पन्ना तव पुत्री विशेषतः ।
पराशराय मुनये दातुमर्हसि धर्मतः ॥ ३६

वसुरुवाच ।

सत्यं मम सुता सा हि दाशराजेन वर्धिता ।
अहं प्रभुः प्रदाने तु प्रजापालः प्रजार्थिनाम् ३७

पितर ऊचुः ।

निराशिषो वयं सर्वे निःसङ्गा निष्परिग्रहाः ।
कन्यादानेन संबन्धो दक्षिणाबन्ध उच्यते ॥ ३८
कर्मभूमिस्तु मानुष्यं भोगभूमिस्त्रिविष्टपम् ।
इह पुण्यकृतो यान्ति स्वर्गलोकं न संशयः ॥३९
इह लोके दुष्कृतिनो नरकं यान्ति निर्घृणाः ।
दक्षिणाबन्ध इत्युक्ते उभे सुकृतदुष्कृते ॥ ४०
दक्षिणाबन्धसंयुक्ता योगिनः प्रपतन्ति ते ।
तस्मान्नो मानसीं कन्यां योगाद्भ्रष्टां विशांपते ४१
सुतात्वं तव संप्राप्तां सतीं भिक्षां ददस्व वै ।
इत्युक्त्वा पितरः सर्वे क्षणादन्तर्हितास्तदा ॥४२

वैशंपायन उवाच ।

याज्ञवल्क्यं समाहूय विवाहाचार्यमित्युत ।
वसुं चापि समाहूय वसिष्ठो मुनिभिः सह ॥४३
विवाहं कारयामास विधिदृष्टेन कर्मणा ।

वसुरुवाच ।

पराशर महाप्राज्ञ तव दास्याम्यहं सुताम् ॥ ४४
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ।

वैशंपायन उवाच ।

वसोस्तु वचनं श्रुत्वा याज्ञवल्क्यमते स्थितः ॥४५
कृतकौतुकमङ्गल्यः पाणिना पाणिमस्पृशत् ।
प्रभूताज्येन हविषा हुत्वा मन्त्रैर्हुताशनम् ॥ ४६
त्रिरग्निं तु परिक्रम्य समभ्यर्च्य हुताशनम् ।
महर्षीन्याज्ञवल्क्यादीन्दक्षिणाभिः प्रतर्प्य च॥४७
लब्धानुज्ञोऽभिवाद्याशु प्रदक्षिणमथाकरोत् ।
पराशरे कृतोद्वाहे देवाः सर्षिगणास्तदा ॥ ४८
हृष्टा जग्मुः क्षणादेव वेदव्यासो भवत्विति ।
एवं सत्यवती हृष्टा पूजां लब्ध्वा यथेष्टतः ॥ ४९
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ।
जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ॥५०
जातमात्रः स ववृधे सप्तवर्षोऽभवत्तदा ।
स्नात्वाभिवाद्य पितरं तस्थौ व्यासः समाहितः५१
स्वस्तीति वचनं चोक्त्वा ददौ कलशमुत्तमम् ।
गृहीत्वा कलशं प्राप्ते तस्थौ व्यासः समाहितः ५२
ततो दाशभयात्पत्नी स्नात्वा कन्या बभूव सा ।
अभिवाद्य मुनेः पादौ पुत्रं जग्राह पाणिना ॥ ५३
स्पृष्टमात्रे तु निर्भर्त्स्य मातरं वाक्यमब्रवीत् ।
मम पित्रा तु संस्पर्शान्मातस्त्वमभवः शुचिः ५४
अद्य दाशसुता कन्या न स्पृशेर्मामनिन्दिते ।

वैशंपायन उवाच ।

व्यासस्य वचनं श्रुत्वा बाष्पपूर्णमुखी तदा ॥५५
मनुष्यभावात्सा योषित्पपात मुनिपादयोः ।
महाप्रसादो भगवान्पुत्रं प्रोवाच धर्मवित् ॥ ५६
मा त्वमेवंविधं कार्षीर्नैतद्धर्म्यं मतं हि नः ।
दूष्यौ न मातापितरौ तथा पूर्वोपकारिणौ॥ ५७

धारणाद्दुःखसहनात्तयोर्माता गरीयसी ।
बीजक्षेत्रसमायोगे सस्यं जायेत लौकिकम् ॥ ५८
जायते च सुतस्तद्वत्पुरुषस्त्रीसमागमे ।
मृगीणां पक्षिणां चैव अप्सराणां तथैव च ॥ ५९
शूद्रयोन्यां च जायन्ते मुनयो वेदपारगाः ।
ऋष्यशृङ्गो मृगीपुत्रः कण्वो बर्हिसुतस्तथा ॥ ६०
अगस्त्यश्च वसिष्ठश्च उर्वश्यां जनितावुभौ ।
सोमश्रवास्तु सर्प्यां तु अश्विनावश्विसंभवौ । ६१
स्कन्दः स्कन्नेन शुक्रेन जातः शरवणे पुरा ।
एवमेव च देवानामृषीणां चैव संभवः ॥ ६२
लोकवेदप्रवृत्तिर्हि न मीमांस्या बुधैः सदा ।
वेदव्यास इति प्रोक्तः पुराणे च स्वयंभुवा । ६३
धर्मनेता महर्षीणां मनुष्याणां त्वमेव च ।
तस्मात्पुत्र न दूष्येत वासवी योगचारिणी ॥ ६४
मत्प्रीत्यर्थं महाप्राज्ञ सस्नेहं वक्तुमर्हसि ।
प्रजाहितार्थं संभूतो विष्णोर्भागो महानृषिः ॥ ६५
तस्मात्स्वमातरं स्नेहात्प्रब्रवीहि तपोधन ।

वैशंपायन उवाच ।

गुरोर्वचनमाज्ञाय व्यासः प्रीतोऽभवत्तदा ॥ ६६
चिन्तयित्वा लोकवृत्तं मातुरङ्कमथाविशत् ।
पुत्रस्पर्शात्तु लोकेषु नान्यत्सुखमतीव हि ॥ ६७
व्यासं कमलपत्राक्षं परिष्वज्याश्ववर्तयत् ।
स्तन्यासारैः क्लिद्यमाना पुत्रमाघ्राय मूर्धनि ॥ ६८

वासव्युवाच ।

पुत्रलाभात्परं लोके नास्तीह प्रसवार्थिनाम् ।
दुर्लभं चेति मन्येऽहं मया प्राप्तं महत्तपः ॥ ६९
महता तपसा तात महायोगबलेन च ।
मया त्वं हि महाप्राज्ञ लब्धोऽमृतमिवामरैः ॥ ७०
तस्मात्त्वं मामृषेः पुत्र त्यक्तुं नार्हसि सांप्रतम् ।

वैशंपायन उवाच ।

एवमुक्तस्ततः स्नेहाद्व्यासो मातरमब्रवीत् ॥ ७१
त्वया स्पृष्टः परिष्वक्तो मूर्ध्नि चाघ्रायितो मुहुः ।
एतावन्मात्रया प्रीतो भविष्येषु नृपात्मजे ॥ ७२
स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ।
स मातरमनुज्ञाप्य तपस्येव मनो दधे ॥ ७३
ततः कन्यामनुज्ञाय पुनः कन्या भवत्विति ।
पराशरोऽपि भगवान्पुत्रेण सहितो ययौ ॥ ७४
गत्वाश्रमपदं पुण्यमदृश्यन्त्या पराशरः ।
जातकर्मादिसंस्कारं कारयामास धर्मतः ॥ ७५
कृतोपनयनो व्यासो याज्ञवल्क्येन भारत ।
वेदानधिजगौ साङ्गानोङ्कारेण त्रिमात्रया ॥ ७६
गुरवे दक्षिणां दत्त्वा तपः कर्तुं प्रचक्रमे ।
एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ॥ ७७
द्वीपे न्यस्तः स यद्बालस्तस्माद्द्वैपायनोऽभवत् ।
पादापसारिणं धर्मं विद्वान्स तु युगे युगे ॥ ७८
आयुः शक्तिं च मर्त्यानां युगाद्युगमवेक्ष्य च ।
ब्रह्मर्षिर्ब्राह्मणानां च तथाऽनुग्रहकाङ्क्षया ॥ ७९
विव्यास वेदान्यस्माच्च वेदव्यास इति स्मृतः ।
ततः स महर्षिर्विद्वाञ्शिष्यानाहूय धर्मतः ॥ ८०
सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ।
प्रभुर्वरिष्ठो वरदो वैशंपायनमेव च ॥ ८१
वेदानध्यापयामास महाभारतपञ्चमान् ।
संहितास्तैः पृथक्त्वेन भारतस्य प्रकीर्तिताः ॥ ८२
ततः सत्यवती हृष्टा जगाम स्वं निवेशनम् ।
तस्यास्तु योजनाद्गन्धमाजिघ्रन्ति नरा भुवि ८३
दाशराजस्तु तद्गन्धमाजिघ्रन्प्रीतिमावहत् ।

दाशराज उवाच ।

त्वामाहुर्मत्स्यगन्धेति कथं बाले सुगन्धता ॥ ८४
अपास्य मत्स्यगन्धत्वं केन दत्ता सुगन्धता ।

सत्यवत्युवाच ।

शक्तेः पुत्रो महाप्राज्ञः पराशर इति श्रुतः ॥ ८५
नावं वाहयमानाया मम दृष्ट्वा सुशिक्षितम् ।
अपास्य मत्स्यगन्धत्वं योजनाद्गन्धतां ददौ ॥ ८६
ऋषेः प्रसादं दृष्ट्वा तु जनाः प्रीतिमुपागमन् ।
एवं लब्धो मया गन्धो न रोषं कर्तुमर्हसि ८७
दाशराजस्तु तद्वाक्यं प्रशशंस ननन्द च ।
एतत्पवित्रं पुण्यं च व्याससंभवमुत्तमम् ।
इतिहासमिमं श्रुत्वा प्रजावन्तो भवन्ति च ८८]

तथा भीष्मः शान्तनवो गङ्गायाममितद्युतिः ।
वसुवीर्यात्समभवन्महावीर्यो महायशाः ॥ १३३
वेदार्थविच्च भगवानृषिर्विप्रो महायशाः ।
शूले प्रोतः पुराणर्षिरचोरश्चोरशङ्कया ॥ १३४
अणीमाण्डव्य इत्येवं विख्यातः स महायशाः ।
स धर्ममाहूय पुरा महर्षिरिदमुक्तवान् ॥ १३५
इषीकया मया बाल्यादिद्धा ह्येका शकुन्तिका ।
तत्किल्बिषं स्मरे धर्म नान्यत्पापमहं स्मरे ॥१३६
तन्मे सहस्रममितं कस्मान्नेहाजयत्तपः ।
गरीयान्ब्राह्मणवधः सर्वभूतवधाद्यतः ॥ १३७
तस्मात्त्वं किल्बिषादस्माच्छूद्रयोनौ जनिष्यसि ।
वैशंपायन उवाच ।
तेन शापेन धर्मोऽपि शूद्रयोनावजायत ॥ १३८
विद्वान्विदुररूपेण धार्मिकः किल्बिषात्ततः ।
संजयो मुनिकल्पस्तु जज्ञे सूतो गवल्गणात् १३९
सूर्याच्च कुन्तिकन्यायां जज्ञे कर्णो महाबलः ।
सहजं कवचं बिभ्रत्कुण्डलोद्योतितराननः ॥१४०
अनुग्रहार्थं लोकानां विष्णुर्लोकनमस्कृतः ।
वसुदेवात्तु देवक्यां प्रादुर्भूतो महायशाः ॥१४१
अनादिनिधनो देवः स कर्ता जगतः प्रभुः ।
अव्यक्तमक्षरं ब्रह्म प्रधानं त्रिगुणात्मकम् ॥ १४२
आत्मानमव्ययं चैव प्रकृतिं प्रभवं प्रभुम् ।
पुरुषं विश्वकर्माणं सत्वयोगं ध्रुवाक्षरम् ॥ १४३
अनन्तमचलं देवं हंसं नारायणं प्रभुम् ।
धातारमजमव्यक्तं यमाहुः परमव्ययम् ॥ १४४
कैवल्यं निर्गुणं विश्वमनादिमजमव्ययम् ।
पुरुषः स विभुः कर्ता सर्वभूतपितामहः ॥ १४५
धर्मसंस्थापनार्थाय प्रजज्ञेऽन्धकवृष्णिषु ।
अस्त्रज्ञौ तु महावीर्यौ सर्वशास्त्रविशारदौ ॥१४६
सात्यकिः कृतवर्मा च नारायणमनुव्रतौ ।
सत्यकाद्धृदिकाच्चैव जज्ञातेऽस्त्रविशारदौ ॥ १४७
भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्धत ।
महर्षेरुग्रतपसस्तस्माद्द्रोणो व्यजायत ॥ १४८
गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः ।
अश्वत्थाम्नश्च जननी कृपश्चैव महाबलः ॥ १४९
अश्वत्थामा ततो जज्ञे द्रोणादेव महाबलः ।
तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युतिः ॥ १५०
वैताने कर्मणि तते पावकात्समजायत ।
वीरो द्रोणविनाशाय धनुरादाय वीर्यवान् १५१
तथैव वेद्यां कृष्णापि जज्ञे तेजस्विनी शुभा ।
विभ्राजमाना वपुषा बिभ्रती रूपमुत्तमम् ॥१५२
प्रह्लादशिष्यो नग्नजित्सुबलश्चाभवत्ततः ।
तस्य प्रजा धर्महन्त्री जज्ञे देवप्रकोपनात् ॥ १५३
गान्धारराजपुत्रोऽभूच्छकुनिः सौबलस्तथा ।
दुर्योधनस्य जननी जज्ञातेऽर्थविशारदौ ॥ १५४
कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः ।
क्षेत्रे विचित्रवीर्यस्य पाण्डुश्चैव महाबलः ॥ १५५
धर्मार्थकुशलो धीमान्मेधावी धूतकल्मषः ।
विदुरः शूद्रयोनौ तु जज्ञे द्वैपायनादपि ॥ १५६
पाण्डोस्तु जज्ञिरे पञ्च पुत्रा देवसमाः पृथक् ।
द्वयोः स्त्रियोर्गुणज्येष्ठस्तेषामासीद्युधिष्ठिरः ॥१५७
धर्माद्युधिष्ठिरो जज्ञे मारुताच्च वृकोदरः ।
इन्द्राद्धनंजयः श्रीमान्सर्वशस्त्रभृतां वरः ॥ १५८
जज्ञाते रूपसंपन्नावश्विभ्यां च यमावपि ।
नकुलः सहदेवश्च गुरुशुश्रूषणे रतौ ॥ १५९
तथा पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ।
दुर्योधनप्रभृतयो युयुत्सुः करणस्तथा ॥ १६०
ततो दुःशासनश्चैव दुःसहश्चापि भारत ।
दुर्मर्षणो विकर्णश्च चित्रसेनो विविंशतिः ॥१६१
जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत ।
वैश्यापुत्रो युयुत्सुश्च एकादश महारथाः ॥ १६२
अभिमन्युः सुभद्रायामर्जुनादभ्यजायत ।
स्वस्रीयो वासुदेवस्य पौत्रः पाण्डोर्महात्मनः ॥१६३
पाण्डवेभ्यो हि पाञ्चाल्यां द्रौपद्यां पञ्च जज्ञिरे ।
कुमारा रूपसंपन्नाः सर्वशास्त्रविशारदाः ॥ १६४
प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः १६५
तथैव सहदेवाच्च श्रुतसेनः प्रतापवान् ।

वसुवीर्यात् वस्वंशात् ॥ १३३ ॥ शकुन्तिका मक्षिका ॥ १३६ ॥ कुन्तिभोजस्य कन्यायां कुन्त्याम् ॥ १४० ॥

हिडिम्बायां च भीमेन वने जज्ञे घटोत्कचः॥१६६
शिखण्डी द्रुपदाज्जज्ञे कन्या पुत्रत्वमागता ।
यां यक्षः पुरुषं चक्रे स्थूणः प्रियचिकीर्षया॥१६७
कुरूणां विग्रहे तस्मिन्समागच्छन्बहून्यथ ।
राज्ञां शतसहस्राणि योत्स्यमानानि संयुगे॥१६८
तेषामपरिमेयानां नामधेयानि सर्वशः ।
न शक्यानि समाख्यातुं वर्षाणामयुतैरपि ।
एते तु कीर्तिता मुख्या यैराख्यानमिदं ततम्१६९

॥ इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

विस्तरश्रवणेच्छया जनमेजयस्य प्रश्नः ॥ १ ॥ परशुरामेण लोके निःक्षत्रिये कृते ब्राह्मणेभ्यः क्षत्रस्य पुनरुत्पत्तिः ॥ २ ॥ तत्कालस्य धर्मभूयिष्ठत्वम् ॥ ३ ॥ देवैर्निर्जितानां दानवानां भूमावुत्पत्तिः ॥ ४ ॥ तद्भूरिभारार्तया पृथ्व्या प्रार्थितस्य ब्रह्मणो देवान्प्रत्यंशावतरणाज्ञापनम् ॥ ५ ॥ अवतारार्थं इन्द्रेण नारायणप्रार्थना ॥ ६ ॥

जनमेजय उवाच ।
य एते कीर्तिता ब्रह्मन्ये चान्ये नानुकीर्तिताः ।
सम्यक्ताञ्श्रोतुमिच्छामि राज्ञश्चान्यान्सहस्रशः॥१
यदर्थमिह संभूता देवकल्पा महारथाः ।
भुवि तन्मे महाभाग सम्यगाख्यातुमर्हसि ॥ २
वैशम्पायन उवाच ।
रहस्यं खल्विदं राजन्देवानामिति नः श्रुतम् ।
तत्तु ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ॥ ३
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा ।
जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे ॥ ४
तदा निःक्षत्रिये लोके भार्गवेण कृते सति ।
ब्राह्मणान्क्षत्रिया राजन्सुतार्थिन्योऽभिचक्रमुः ॥५
ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः ।
ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा ॥ ६
तेभ्यश्च लेभिरे गर्भं क्षत्रियास्ताः सहस्रशः ।
ततः सुषुविरे राजन्क्षत्रियान्वीर्यवत्तरान् ॥ ७
कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये ।
एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः ॥ ८
जातं वृद्धं च धर्मेण सुदीर्घेणायुषान्वितम् ।
चत्वारोऽपि ततो वर्णा बभूवुर्ब्राह्मणोत्तराः ॥ ९
अभ्यगच्छन्नृतौ नारीं न कामान्नानृतौ तथा ।
तथैवान्यानि भूतानि तिर्यग्योनिगतान्यपि॥१०
ऋतौ दारांश्च गच्छन्ति तत्तथा भरतर्षभ ।
ततोऽवर्धन्त धर्मेण सहस्रशतजीविनः ॥ ११
ताः प्रजाः पृथिवीपाल धर्मव्रतपरायणाः ।
आधिभिर्व्याधिभिश्चैव विमुक्ताः सर्वशो नराः१२
अथेमां सागरोपान्तां गां गजेन्द्रगताखिलाम् ।
अध्यतिष्ठत्पुनः क्षत्रं सशैलवनपत्तनाम् ॥ १३
प्रशासति पुनः क्षत्रे धर्मेणेमां वसुन्धराम् ।
ब्राह्मणाद्यास्ततो वर्णा लेभिरे मुदमुत्तमाम् ॥ १४
कामक्रोधोद्भवान्दोषान्निरस्य च नराधिपाः ।
धर्मेण दण्डं दण्ड्येषु प्रणयन्तोऽन्वपालयन् १५
तथा धर्मपरे क्षत्रे सहस्राक्षः शतक्रतुः ।
स्वादु देशे च काले च ववर्षाप्याययन्प्रजाः॥१६
न बाल एव म्रियते तदा कश्चिज्जनाधिप ।
न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनाम् ॥ १७
एवमायुष्मतीभिस्तु प्रजाभिर्भरतर्षभ ।
इयं सागरपर्यन्ता समापूर्यत मेदिनी ॥ १८
ईजिरे च महायज्ञैः क्षत्रिया बहुदक्षिणैः ।
साङ्गोपनिषदान्वेदान्विप्राश्चाधीयते तदा ॥ १९
न च विक्रीणते ब्रह्म ब्राह्मणाश्च तदा नृप ।
न च शूद्रसमभ्याशे वेदानुच्चारयन्त्युत ॥ २०
कारयन्तः कृषिं गोभिस्तथा वैश्याः क्षिताविह ।
युञ्जते धुरि नो गाश्च कृशाङ्गांश्चाप्यजीवयन् ॥ २१

---

स्थूणो नाम्ना ॥ १६७ ॥ चतुःषष्टितमोऽध्यायः ॥ ६४ ॥
त्रिःसप्तकृत्व एकविंशतिवारान् ॥ ४ ॥ हे गजेन्द्रगत हे गजेन्द्रगमन ॥ १३ ॥ ब्रह्म वेदं न विक्रीणते भृतकाध्यापनं न कुर्वत इत्यर्थः ॥ २० ॥ वैश्याः स्वयं धुरि गा बलीवर्दान् न युञ्जते ॥ २१ ॥

फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः ।
न कूटमानैर्वणिजः पण्यं विक्रीणते तदा ॥ २२
कर्माणि च नरव्याघ्र धर्मोपेतानि मानवाः ।
धर्ममेवानुपश्यन्तश्चक्रुर्धर्मपरायणाः ॥ २३
स्वकर्मनिरताश्चासन्सर्वे वर्णा नराधिप ।
एवं तदा नरव्याघ्र धर्मो न ह्रसते क्वचित् ॥२४
काले गावः प्रसूयन्ते नार्यश्च भरतर्षभ ।
भवन्त्यृतुषु वृक्षाणां पुष्पाणि च फलानि च॥२५
एवं कृतयुगे सम्यग्वर्तमाने तदा नृप ।
आपूर्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशम् ॥२६
एवं समुदिते लोके मानुषे भरतर्षभ ।
असुरा जज्ञिरे क्षेत्रे राज्ञां तु मनुजेश्वर ॥ २७
आदित्यैर्हि तदा दैत्या बहुशो निर्जिता युधि ।
ऐश्वर्याद्भ्रंशिताः स्वर्गात्संबभूवुः क्षिताविह ॥२८
इह देवत्वमिच्छन्तो मानुषेषु तपस्विनः ।
जज्ञिरे भुवि भूतेषु तेषु तेष्वसुरा विभो ॥ २९
गोष्वश्वेषु च राजेन्द्र खरोष्ट्रमहिषेषु च ।
क्रव्यात्सु चैव भूतेषु गजेषु च मृगेषु च ॥ ३०
जातैरिह महीपाल जायमानैश्च तैर्मही ।
न शशाकात्मनात्मानमियं धारयितुं धरा ॥ ३१
अथ जाता महीपालाः केचिद्बहुमदान्विताः ।
दितेः पुत्रा दनोश्चैव तदा लोकादिह च्युताः॥३२
वीर्यवन्तोऽवलिप्तास्ते नानारूपधरा महीम् ।
इमां सागरपर्यन्तां परीयुररिमर्दनाः ॥ ३३
ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्चैवाप्यपीडयन् ।
अन्यानि चैव सत्वानि पीडयामासुरोजसा ॥३४
त्रासयन्तोऽभिनिघ्नन्तः सर्वभूतगणांश्च ते ।
विचेरुः सर्वशो राजन्महीं शतसहस्रशः ॥ ३५
आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः ।
अब्रह्मण्या वीर्यमदा मत्ता मदबलेन च ॥ ३६
एवं वीर्यबलोत्सिक्तैर्भूरियं तैर्महासुरैः ।
पीड्यमाना मही राजन्ब्रह्माणमुपचक्रमे ॥ ३७
न ह्यमी भूतसत्वौघाः पन्नगाः सनगां महीम् ।
तदा धारयितुं शेकुराक्रान्तां दानवैर्बलात् ॥ ३८

ततो मही महीपाल भारार्ता भयपीडिता ।
जगाम शरणं देवं सर्वभूतपितामहम् ॥ ३९
सा संवृतं महाभागैर्देवद्विजमहर्षिभिः ।
ददर्श देवं ब्रह्माणं लोककर्तारमव्ययम् ॥ ४०
गन्धर्वैरप्सरोभिश्च वन्दिकर्मसु निष्ठितैः ।
वन्द्यमानं मुदोपेतैर्ववन्दे चैनमेत्य सा ॥ ४१
अथ विज्ञापयामास भूमिस्तं शरणार्थिनी ।
सन्निधौ लोकपालानां सर्वेषामेव भारत ॥ ४२
तत्प्रधानात्मनस्तस्य भूमेः कृत्यं स्वयंभुवः ।
पूर्वमेवाभवद्राजन्विदितं परमेष्ठिनः ॥ ४३
स्रष्टा हि जगतः कस्मान्न संबुध्येत भारत ।
ससुरासुरलोकानामशेषेण मनोगतम् ॥ ४४
तामुवाच महाराज भूमिं भूमिपतिः प्रभुः ।
प्रभवः सर्वभूतानामीशः शंभुः प्रजापतिः ॥ ४५
ब्रह्मोवाच ।
यदर्थमभिसंप्राप्ता मत्सकाशं वसुन्धरे ।
तदर्थं सन्नियोक्ष्यामि सर्वानेव दिवौकसः ॥ ४६
'उत्तिष्ठ गच्छ वसुधे स्वस्थानमिति साऽगमत् ।'
वैशंपायन उवाच ।
इत्युक्त्वा स महीं देवो ब्रह्मा राजन्विसृज्य च ।
आदिदेश तदा सर्वान्विबुधान्भूतकृत्स्वयम् ॥४७
अस्या भूमेर्निरसितुं भारं भागैः पृथक्पृथक् ।
अस्यामेव प्रसूयध्वं तिरोधायेति चाब्रवीत् ॥ ४८
तथैव च समानीय गन्धर्वाप्सरसां गणान् ।
उवाच भगवान्सर्वानिदं वचनमर्थवत् ॥ ४९
ब्रह्मोवाच ।
स्वैः स्वैरंशैः प्रसूयध्वं यथेष्टं मानुषेषु च ।
वैशम्पायन उवाच ।
अथ शक्रादयः सर्वे श्रुत्वा सुरगुरोर्वचः ।
तथ्यमर्थ्यं च पथ्यं च तस्य ते जगृहुस्तदा ॥ ५०
अथ ते सर्वशोंऽशैः स्वैर्गन्तुं भूमिं कृतक्षणाः ।
नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः ॥ ५१
यः स चक्रगदापाणिः पीतवासाः शितिप्रभः ।
पद्मनाभः सुरारिघ्नः पृथुचार्वञ्चितेक्षणः ॥ ५२

फेनपान् अतृणादानभिलक्ष्य न दुहन्ति धेनूरिति शेषः । कूटमानैः कपटतुलाप्रस्थादिभिः ॥ २२॥ देवत्वं राजत्वम् ॥ २९ ॥

मही उपचक्रमे गन्तुमिति शेषः ॥ ३७ ॥ तिरोधाय स्वंस्वं रूपं प्रच्छाद्य ॥ ४८ ॥

प्रजापतिपतिर्देवः सुरनाथो महाबलः ।
श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः ॥ ५३
तं भुवः शोधनायेन्द्र उवाच पुरुषोत्तमम् ।
अंशेनावतरेत्येवं तथेत्याह च तं हरिः ॥ ५४

॥ इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

समाप्तमंशावतरणपर्व ॥

# (अथ संभवपर्व ॥ ७ ॥)

## षट्षष्टितमोऽध्यायः ॥ ६६ ॥

अदित्यादिदक्षकन्यावंशकथनम् ॥ १ ॥

वैशंपायन उवाच ।
अथ नारायणेनेन्द्रश्चकार सह संविदम् ।
अवतर्तुं महीं स्वर्गादंशतः सहितः सुरैः ॥ १
आदिश्य च स्वयं शक्रः सर्वानेव दिवौकसः ।
निर्जगाम पुनस्तस्मात्क्षयान्नारायणस्य ह ॥ २
तेऽमरारिविनाशाय सर्वलोकहिताय च ।
अवतेरुः क्रमेणैव महीं स्वर्गाद्दिवौकसः ॥ ३
ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च ।
जज्ञिरे राजशार्दूल यथाकामं दिवौकसः ॥ ४
दानवान्राक्षसांश्चैव गन्धर्वान्पन्नगांस्तथा ।
पुरुषादानि चान्यानि जघ्नुः सत्वान्यनेकशः ॥५
दानवा राक्षसाश्चैव गन्धर्वाः पन्नगास्तथा ।
न तान्बलस्थान्बाल्येऽपि जघ्नुर्भरतसत्तम ॥ ६
जनमेजय उवाच ।
देवदानवसङ्घानां गन्धर्वाप्सरसां तथा ।
मानवानां च सर्वेषां तथा वै यक्षरक्षसाम् ॥ ७
श्रोतुमिच्छामि तत्त्वेन संभवं कृत्स्नमादितः ।
प्राणिनां चैव सर्वेषां संभवं वक्तुमर्हसि ॥ ८
वैशम्पायन उवाच ।
हन्त ते कथयिष्यामि नमस्कृत्य स्वयंभुवे ।
सुरादीनामहं सम्यग्लोकानां प्रभवाप्ययम् ॥ ९
ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ १०
मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः ।
प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ॥ ११
अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा ।
क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः ॥
कद्रूश्च मनुजव्याघ्र दक्षकन्यैव भारत ।
एतासां वीर्यसंपन्नं पुत्रपौत्रमनन्तकम् ॥ १३
अदित्यां द्वादशादित्याः संभूता भुवनेश्वराः ।
ये राजन्नामतस्तांस्ते कीर्तयिष्यामि भारत ॥ १४
धाता मित्रोऽर्यमा शक्रो वरुणस्त्वंश एव च ।
भगो विवस्वान्पूषा च सविता दशमस्तथा ॥ १५
एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ।
जघन्यजस्तु सर्वेषामादित्यानां गुणाधिकः ॥ १६
एक एव दितेः पुत्रो हिरण्यकशिपुः स्मृतः ।
नाम्ना ख्यातास्तु तस्येमे पञ्च पुत्रा महात्मनः १७
प्रह्लादः पूर्वजस्तेषां संह्लादस्तदनन्तरम् ।
अनुह्लादस्तृतीयोऽभूत्तस्माच्च शिबिबाष्कलौ ॥ १८
प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्वत्र भारत ।
विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत ॥ १९
विरोचनस्य पुत्रोऽभूद्बलिरेकः प्रतापवान् ।
बलेश्च प्रथितः पुत्रो बाणो नाम महासुरः ॥ २०
रुद्रस्यानुचरः श्रीमान्महाकालेति यं विदुः ।
चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारत २१
तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः ।
शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः ॥ २२
असिलोमा च केशी च दुर्जयश्चैव दानवः ।
अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्यवान् ॥ २३
तथा गगनमूर्धा च वेगवान्केतुमांश्च सः ।

शोधनाय कण्टकभूतखलोन्मूलनाय ॥ ५४ पञ्चषष्टितमोऽध्यायः ६५

क्षयात् स्थानात् ॥ २ ॥ जघन्यजः पश्चाज्जातः ॥ १६ ॥

स्वर्भानुरश्वोऽश्वपतिर्वृषपर्वाऽजकस्तथा ॥ २४
अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः ।
इषुपादेकचक्रश्च विरूपाक्षहराहरौ ॥ २५
निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा ।
शरभः शलभश्चैव सूर्याचन्द्रमसौ तथा ।
एते ख्याता दनोर्वंशे दानवाः परिकीर्तिताः॥२६
अन्यौ तु खलु देवानां सूर्याचन्द्रमसौ स्मृतौ ।
अन्यौ दानवमुख्यानां सूर्याचन्द्रमसौ तथा॥२७
इमे च वंशाः प्रथिताः सत्ववन्तो महाबलाः ।
दनुपुत्रा महाराज दश दानववंशजाः ॥ २८
एकाक्षो मृतपो वीरः प्रलम्बनरकावपि ।
वातापिः शत्रुतपनः शठश्चैव महासुरः ॥ २९
गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः ।
असङ्ख्येयाः स्मृतास्तेषां पुत्राः पौत्राश्च भारत॥३०
सिंहिका सुषुवे पुत्रं राहुं चन्द्रार्कमर्दनम् ।
सुचन्द्रं चन्द्रहर्तारं तथा चन्द्रप्रमर्दनम् ॥ ३१
क्रूरस्वभावं क्रूरायाः पुत्रपौत्रमनन्तकम् ।
गणः क्रोधवशो नाम क्रूरकर्माऽरिमर्दनः ॥ ३२
दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुंगवाः ।
विक्षरो बलवीरौ च वृत्रश्चैव महासुरः ॥ ३३
कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः।
प्रविख्याता महावीर्या दानवेषु परन्तपाः ॥ ३४
विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च ।
क्रोधशत्रुस्तथैवान्ये कालकेया इति श्रुताः ॥ ३५
असुराणामुपाध्यायः शुक्रस्त्वृषिसुतोऽभवत् ।
ख्याताश्चोशनसः पुत्राश्चत्वारोऽसुरयाजकाः॥३६
त्वष्टा धरस्तथात्रिश्च द्वावन्यौ रौद्रकर्मिणौ ।
तेजसा सूर्यसंकाशा ब्रह्मलोकपरायणाः ॥ ३७
इत्येष वंशप्रभवः कथितस्ते तरस्विनाम् ।
असुराणां सुराणां च पुराणे संश्रुतो मया ॥ ३८
एतेषां यदपत्यं तु न शक्यं तदशेषतः ॥
प्रसंख्यातुं महीपाल गुणभूतमनन्तकम् ॥ ३९
तार्क्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ ।

क्रूरायाः क्रोधायाः ॥ ३२ ॥ गुणभूतमप्रधानरूपम् ॥ ३९ ॥

आरुणिर्वारुणिश्चैव वैनतेयाः प्रकीर्तिताः ॥ ४०
शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः ।
कूर्मश्च कुलिकश्चैव काद्रवेयाः प्रकीर्तिताः ॥ ४१
भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा ।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः ॥ ४२
सत्यवागर्कपर्णश्च प्रयुतश्चापि विश्रुतः ।
भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी ॥ ४३
तथा शालिशिरा राजन्पर्जन्यश्च चतुर्दशः ।
कलिः पञ्चदशस्तेषां नारदश्चैव षोडशः ॥
इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ॥ ४४
अथ प्रभूतान्यन्यानि कीर्तयिष्यामि भारत ।
अनवद्यां मनुं वंशामसुरां मार्गणप्रियाम् ॥ ४५
अरूपां सुभगां भासीमिति प्राधा व्यजायत ।
सिद्धः पूर्णश्च बर्हिश्च पूर्णायुश्च महायशाः ॥ ४६
ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः ।
विश्वावसुश्च भानुश्च सुचन्द्रो दशमस्तथा ॥ ४७
इत्येते देवगन्धर्वाः प्राधेयाः परिकीर्तिताः ।
इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम् ॥ ४८
अरिष्टाऽसूत सुभगा देवी देवर्षितः पुरा ।
अलम्बुषा मिश्रकेशी विद्युत्पर्णा तिलोत्तमा॥४९
अरुणा रक्षिता चैव रम्भा तद्वन्मनोरमा ।
केशिनी च सुबाहुश्च सुरता सुरजा तथा ॥ ५०
सुप्रिया चातिबाहुश्च विख्यातौ च हाहा हूहूः ।
तुम्बुरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः ॥५१
अमृतं ब्राह्मणा गावो गन्धर्वाप्सरसस्तथा ।
अपत्यं कपिलायास्तु पुराणे परिकीर्तितम् ॥५२
इति ते सर्वभूतानां संभवः कथितो मया ।
यथावत्संपरिख्यातो गन्धर्वाप्सरसां तथा ॥५३
भुजंगानां सुपर्णानां रुद्राणां मरुतां तथा ।
गवां च ब्राह्मणानां च श्रीमतां पुण्यकर्मणाम्॥५४
आयुष्यश्चैव पुण्यश्च धन्यः श्रुतिसुखावहः ।
श्रोतव्यश्चैव सततं श्राव्यश्चैवानसूयता ॥ ५५

षट्षष्टितमोऽध्यायः ॥ ६६ ॥

इमं तु वंशं नियमेन यः पठे-
न्महात्मनां ब्राह्मणदेवसन्निधौ ।
अपत्यलाभं लभते स पुष्कलं
श्रियं यशः प्रेत्य च शोभनां गतिम् ॥५६

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

ऋष्यादिवंशकथनम् ॥ १ ॥

वैशंपायन उवाच ।
ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
एकादश सुताः स्थाणोः ख्याताः परमतेजसः ॥१
मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परन्तपः ॥ २
दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः ।
स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः ॥३
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ।
षडेते ब्रह्मणः पुत्रा वीर्यवन्तो महर्षयः ॥ ४
त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः ।
बृहस्पतिरुतथ्यश्च संवर्तश्च धृतव्रताः ॥ ५
अत्रेस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिप ।
सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः ॥६
राक्षसाश्च पुलस्त्यस्य वानराः किन्नरास्तथा ।
यक्षाश्च मनुजव्याघ्र पुत्रास्तस्य च धीमतः ॥ ७
पुलहस्य सुता राजञ्शरभाश्च प्रकीर्तिताः ।
सिंहाः किंपुरुषा व्याघ्रा ऋक्षा ईहामृगास्तथा ८
क्रतोः क्रतुसमाः पुत्राः पतङ्गसहचारिणः ।
विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः ॥ ९
दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः ।
ब्रह्मणः पृथिवीपाल शान्तात्मा सुमहातपाः १०
वामादजायताङ्गुष्ठाद्भार्या तस्य महात्मनः ।
तस्यां पञ्चाशतं कन्याः स एवाजनयन्मुनिः ११
ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः ।
पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजापतिः ॥१२
ददौ स दश धर्माय सप्तविंशतिमिन्दवे ।
दिव्येन विधिना राजन्कश्यपाय त्रयोदश ॥ १३
नामतो धर्मपत्न्यस्ताः कीर्त्यमाना निबोध मे ।
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा १४
बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश ।
द्वाराण्येतानि धर्मस्य विहितानि स्वयंभुवा ॥ १५
सप्तविंशतिः सोमस्य पत्न्यो लोकस्य विश्रुताः ।
कालस्य नयने युक्ताः सोमपत्न्यः शुचिव्रताः १६
सर्वा नक्षत्रयोगिन्यो लोकयात्राविधानतः ।
पैतामहो मुनिर्देवस्तस्य पुत्रः प्रजापतिः ।
तस्याष्टौ वसवः पुत्रास्तेषां वक्ष्यामि विस्तरम् १७
धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ १८
धूम्रायास्तु धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा ।
चन्द्रमास्तु मनस्विन्याः श्वासायाः श्वसनस्तथा १९
रतायाश्चाप्यहः पुत्रः शाण्डिल्याश्च हुताशनः ।
प्रत्यूषश्च प्रभासश्च प्रभातायाः सुतौ स्मृतौ ॥ २०
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ।
'आपस्य पुत्रो वैतण्ड्यः श्रमः शान्तो मुनिस्तथा'।
ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः ॥ २१
सोमस्य तु सुतो वर्चा वर्चस्वी येन जायते ।
मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा ॥२२
अह्नः सुतस्तथा ज्योतिः शमः शान्तस्तथा मुनिः ।

---

ब्रह्मण इति षण्महर्षयः स्थाणुश्च सप्तम इति बोध्यम् । तत्रादौ स्थाणुसंततिमेवाह एकादशेति । एकादश तथा रुद्राः स्थाणोश्चैव हि मानसाः इति पाठान्तरम् । अत्र स्थिरत्वात्स्थाणुर्ब्रह्मा ॥ १ ॥ बृहस्पतिरुचथ्यश्चेति पाठान्तरम् ॥ ५ ॥ ईहामृगाः वृकाः ॥ ८ ॥ पतङ्गसहचारिणः सूर्यसहचरा वालखिल्याः ॥ ९ ॥ नयने ज्ञापने ॥ १६ ॥ नक्षत्रयोगिन्यो नक्षत्रनामयुक्ताः । विधानतः विधानार्थमभवन् । पैतामहो देवो धर्मः पितामहस्तनाज्जातत्वात् । तस्य पितामहस्य पुत्रो दक्षः तदङ्गुष्ठाज्जातत्वात् । तस्य संबन्धिनी वसुनाम्नी कन्या तस्यां धर्माद्वसवोऽष्टौ जाता इत्यर्थः । वसोस्तु वसवः पुत्रा इत्यन्यत्रोक्तेः ॥ १७ ॥ धूम्राया इति वसोरेव धूम्रादी-

अग्नेः पुत्रः कुमारस्तु श्रीमाञ्छरवणालयः ॥ २३
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ।
कृत्तिकाभ्युपपत्तेश्च कार्तिकेय इति स्मृतः ॥ २४
अनिलस्य शिवा भार्या तस्याः पुत्रो मनोजवः ।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ २५
प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाऽथ देवलम् ।
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ।
बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मवादिनी ॥ २६
योगसिद्धा जगत्कृत्स्नमसक्ता विचचार ह ।
प्रभासस्य तु भार्या सा वसूनामष्टमस्य ह ॥ २७
विश्वकर्मा महाभागो जज्ञे शिल्पप्रजापतिः ।
कर्ता शिल्पसहस्राणां त्रिदशानां च वर्धकिः ॥२८
भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः ।
यो दिव्यानि विमानानि त्रिदशानां चकार ह ॥२९
मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः ।
पूजयन्ति च यं नित्यं विश्वकर्माणमव्ययम् ॥३०
स्तनं तु दक्षिणं भित्त्वा ब्रह्मणो नरविग्रहः ।
निःसृतो भगवान्धर्मः सर्वलोकसुखावहः ॥ ३१
त्रयस्तस्य वराः पुत्राः सर्वभूतमनोहराः ।
शमः कामश्च हर्षश्च तेजसा लोकधारिणः ॥ ३२
कामस्य तु रतिर्भार्या शमस्य प्राप्तिरङ्गना ।
नन्दा तु भार्या हर्षस्य यासु लोकाः प्रतिष्ठिताः ३३
मरीचेः कश्यपः पुत्रः कश्यपस्य सुरासुराः ।
जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः ॥ ३४
त्वाष्ट्री तु सवितुर्भार्या वडवारूपधारिणी ।
असूयत महाभागा सान्तरिक्षेऽश्विनावुभौ ॥ ३५
द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप ।
तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः ॥ ३६
त्रयस्त्रिंशत इत्येते देवास्तेषामहं तव ।
अन्वयं संप्रवक्ष्यामि पक्षैश्च कुलतो गणान् ॥३७
रुद्राणामपरः पक्षः साध्यानां मरुतां तथा ।
वसूनां भार्गवं विद्याद्विश्वेदेवांस्तथैव च ॥ ३८
वैनतेयस्तु गरुडो बलवानरुणस्तथा ।
बृहस्पतिश्च भगवानादित्येष्वेव गण्यते ॥ ३९
अश्विनौ गुह्यकान्विद्धि सर्वौषध्यस्तथा पशून् ।
एते देवगणा राजन्कीर्तितास्तेऽनुपूर्वशः ॥ ४०
यान्कीर्तयित्वा मनुजः सर्वपापैः प्रमुच्यते ।
ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान्भृगुः ॥४१
भृगोः पुत्रः कविर्विद्वाञ्छुक्रः कविसुतो ग्रहः ।
त्रैलोक्यप्राणयात्रार्थं वर्षावर्षे भयाभये ।
स्वयंभुवा नियुक्तः सन्भुवनं परिधावति ॥ ४२
योगाचार्यो महाबुद्धिर्दैत्यानामभवद्गुरुः ।
सुराणां चापि मेधावी ब्रह्मचारी यतव्रतः ॥ ४३
तस्मिन्नियुक्ते विधिना योगक्षेमाय भार्गवे ।
अन्यमुत्पादयामास पुत्रं भृगुरनिन्दितम् ॥ ४४
च्यवनं दीप्ततपसं धर्मात्मानं यशस्विनम् ।
यः स रोषाच्च्युतो गर्भान्मातुर्मोक्षाय भारत ॥ ४५
आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः ।
और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः ॥ ४६
महातेजा महावीर्यो बाल एव गुणैर्युतः ।
ऋचीकस्तस्य पुत्रस्तु जमदग्निस्ततोऽभवत् ॥ ४७
जमदग्नेस्तु चत्वार आसन्पुत्रा महात्मनः ।
रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः ।
सर्वशस्त्रेषु कुशलः क्षत्रियान्तकरो वशी ॥ ४८
और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमम् ।
तेषां पुत्रसहस्राणि बभूवुर्भुवि विस्तरः ॥ ४९
द्वौ पुत्रौ ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम् ।
लोके धाता विधाता च यौ स्थितौ मनुना सह ॥५०
तयोरेव स्वसा देवी लक्ष्मीः पद्मगृहा शुभा ।
तस्यास्तु मानसाः पुत्रास्तुरगा व्योमचारिणः ५१
वरुणस्य भार्या या ज्येष्ठा शुक्राद्देवी व्यजायत ।
तस्याः पुत्रं बलं विद्धि सुरां च सुरनन्दिनीम् ५२

---

नि नामान्तराणि कल्पभेदात् । अन्या एता न दक्षकन्या इति वा ॥ १९ ॥ कृत्तिकानां षण्णां मातृत्वेनाभ्युपपत्तेरङ्गीकारात् ॥ २४ ॥ वडवा अश्वा अन्तरिक्षे अश्विनावसूत नासिकायां शुक्रप्रक्षेपात् ॥ ३५ ॥ त्रयस्त्रिंशत् अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च ॥ ३७ ॥ योगाचार्य इति । चापी व्यस्तौ । सुराणामपि च गुरुरिति संबन्धः । देवानां गुरुरेव योगाचार्यो योगबलेन कायद्वयं कृत्वा दैत्यानामप्याचार्योऽभवदित्यर्थः ॥ ४३ ॥

प्रजानामन्नकामानामन्योन्यपरिभक्षणात् ।
अधर्मस्तत्र संजातः सर्वभूतविनाशकः ॥ ५३
तस्यापि निर्ऋतिर्भार्या नैर्ऋता येन राक्षसाः ।
घोरास्तस्यास्त्रयः पुत्राः पापकर्मरताः सदा ॥ ५४
भयो महाभयश्चैव मृत्युर्भूतान्तकस्तथा ।
न तस्य भार्या पुत्रो वा कश्चिदस्त्यन्तको हि सः ॥ ५५
काकीं श्येनीं तथा भासीं धृतराष्ट्रीं तथा शुकीम् ।
ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुताः ॥ ५६
उलूकान्सुषुवे काकी श्येनी श्येनान्व्यजायत ।
भासी भासानजनयद्गृध्रांश्चैव जनाधिप ॥ ५७
धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ।
चक्रवाकांश्च भद्रा तु जनयामास सैव तु ॥ ५८
शुकी च जनयामास शुकानेव यशस्विनी ।
कल्याणगुणसंपन्ना सर्वलक्षणपूजिता ॥ ५९
नव क्रोधवशा नारीः प्रजज्ञे क्रोधसंभवाः ।
मृगी च मृगमन्दा च हरी भद्रमना अपि ॥ ६०
मातङ्गी त्वथ शार्दूली श्वेता सुरभिरेव च ।
सर्वलक्षणसंपन्ना सुरसा चैव भामिनी ॥ ६१
अपत्यं तु मृगाः सर्वे मृग्या नरवरोत्तम ।
ऋक्षाश्च मृगमन्दायाः सृमराश्च परंतप ॥ ६२
ततस्त्वैरावतं नागं जज्ञे भद्रमनाः सुतम् ।
ऐरावतः सुतस्तस्या देवनागो महागजः ॥ ६३
हर्याश्च हरयोऽपत्यं वानराश्च तरस्विनः ।
गोलाङ्गूलांश्च भद्रं ते हर्याः पुत्रान्प्रचक्षते ॥ ६४
प्रजज्ञे त्वथ शार्दूली सिंहान्व्याघ्राननेकशः ।
द्वीपिनश्च महासत्वान्सर्वानेव न संशयः ॥ ६५
मातङ्ग्यपि च मातङ्गानपत्यानि नराधिप ।
दिशां गजं तु श्वेताख्यं श्वेताऽजनयदाशुगम् ६६
तथा दुहितरौ राजन्सुरभिर्वै व्यजायत ।
रोहिणीं चैव भद्रं ते गन्धर्वीं तु यशस्विनीं ॥ ६७
विमलामपि भद्रं ते अनलामपि भारत ।
रोहिण्यां जज्ञिरे गावो गन्धर्व्यां वाजिनः सुताः ६८
'इरायाः कन्यका जातास्तिस्रः कमललोचनाः ।
वनस्पतीनां वृक्षाणां वीरुधां चैव मातरः ॥ ६९
लतारुहे च द्वे प्रोक्ते वीरुधां चैव ताः स्मृताः ।
गृह्णन्ति ये विना पुष्पं फलानि तरवः पृथक् ॥ ७०
लतासुतास्ते विज्ञेयास्तानेवाहुर्वनस्पतीन् ।
पुष्पैः फलग्रहान्वृक्षान्रुहायाः प्रसवं विदुः ॥ ७१
लतागुल्मानि वृक्षाश्च त्वक्सारतृणजन्तवः ।
वीरुधो याः प्रजास्तस्यास्तत्र वंशः समाप्यते ॥ ७२
सप्तपिण्डफलान्वृक्षाननलापि व्यजायत ॥ ७३
अनलायाः शुकी पुत्री कंकस्तु सुरसासुतः ।
अरुणस्य भार्या श्येनी तु वीर्यवन्तौ महाबलौ ७४
संपातिं जनयामास वीर्यवन्तं जटायुषम् ।
सुरसाऽजनयन्नागान्कद्रूः पुत्रांस्तु पन्नगान् ॥ ७५
द्वौ पुत्रौ विनतायास्तु विख्यातौ गरुडारुणौ ।
इत्येष सर्वभूतानां महतां मनुजाधिप ।
प्रभवः कीर्तितः सम्यङ्मया मतिमतां वर ॥ ७६
यं श्रुत्वा पुरुषः सम्यङ्मुक्तो भवति पाप्मनः ।
सर्वज्ञतां च लभते रतिमग्र्यां च विन्दति ॥ ७७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

जरासन्धादीनां संभवः ॥ १ ॥ द्रोणादीनां संभवः ॥ २ ॥ धृतराष्ट्रादीनां संभवः ॥ ३ ॥ दुर्योधनादीनां संभवः ॥ ४ ॥ युधिष्ठिरादीनां संभवः ॥ ५ ॥ धृष्टद्युम्नादीनां संभवः ॥ ६ ॥ पृथाचरित्रं । कर्णोत्पत्तिश्च ॥ ७ ॥ बलरामादीनां संभवः ॥ ८ ॥ द्रौपदीसंभवः ॥ ९ ॥ कुन्तीमाद्र्योः संभवः ॥ १० ॥

जनमेजय उवाच ।
देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
सिंहव्याघ्रमृगाणां च पन्नगानां पतत्रिणाम् ॥ १
अन्येषां चैव भूतानां संभवं भगवन्नहम् ।

पिण्डफलान्सप्त । खर्जूरतालहिंताला ताली खर्जूरिका तथा । गुवाका नारिकेलश्च सप्त पिण्डफला द्रुमाः इत्युक्तरूपान् । इह पुराणान्तरविरोधो नामभेदात्कल्पभेदाद्वापनेयः ॥ ७३ ॥ सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनाम् ।
जन्म कर्म च भूतानामेतेषामनुपूर्वशः ॥ २

वैशंपायन उवाच ।

मानुषेषु मनुष्येन्द्र संभूता ये दिवौकसः ।
प्रथमं दानवांश्चैव तांस्ते वक्ष्यामि सर्वशः ॥ ३
विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः ।
जरासन्ध इति ख्यातः स आसीन्मनुजर्षभः ॥ ४
दितेः पुत्रस्तु यो राजन्हिरण्यकशिपुः स्मृतः ।
स जज्ञे मानुषे लोके शिशुपालो नरर्षभः ॥ ५
संह्लाद इति विख्यातः प्रह्लादस्यानुजस्तु यः ।
स शल्य इति विख्यातो जज्ञे बाह्लीकपुङ्गवः ॥६
अनुह्लादस्तु तेजस्वी योऽभूत्ख्यातो जघन्यजः ।
धृष्टकेतुरिति ख्यातः स बभूव नरेश्वरः ॥ ७
यस्तु राजञ्शिबिर्नाम दैतेयः परिकीर्तितः ।
द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः ८
बाष्कलो नाम यस्तेषामासीदसुरसत्तमः ।
भगदत्त इति ख्यातः स जज्ञे पुरुषर्षभः ॥ ९
अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्यवान् ।
तथा गगनमूर्धा च वेगवांश्चात्र पञ्चमः ॥ १०
पञ्चैते जज्ञिरे राजन्वीर्यवन्तो महासुराः ।
केकयेषु महात्मानः पार्थिवर्षभसत्तमाः ।
केतुमानिति विख्यातो यस्ततोऽन्यः प्रतापवान् ११
अमितौजा इति ख्यातः सोग्रकर्मा नराधिपः ।
स्वर्भानुरिति विख्यातः श्रीमान्यस्तु महासुरः १२
उग्रसेन इति ख्यात उग्रकर्मा नराधिपः ।
यस्त्वश्व इति विख्यातः श्रीमानासीन्महासुरः १३
अशोको नाम राजाऽभून्महावीर्योऽपराजितः ।
तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः ॥ १४
दैतेयः सोऽभवद्राजा हार्दिक्यो मनुजर्षभः ।
वृषपर्वेति विख्यातः श्रीमान्यस्तु महासुरः ॥१५
दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः ।
अजकस्त्ववरो राजन्य आसीद्वृषपर्वणः ॥ १६
स शाल्व इति विख्यातः पृथिव्यामभवन्नृपः ।
अश्वग्रीव इति ख्यातः सत्त्ववान्यो महासुरः ॥ १७
रोचमान इति ख्यातः पृथिव्यां सोऽभवन्नृपः ।
सूक्ष्मस्तु मतिमान्राजन्कीर्तिमान्यः प्रकीर्तितः ॥
बृहद्रथ इति ख्यातः क्षितावासीत्स पार्थिवः ।
तुहुण्ड इति विख्यातो य आसीदसुरोत्तमः ॥१९
सेनाबिन्दुरिति ख्यातः स बभूव नराधिपः ।
इषुमान्नाम यस्तेषामसुराणां बलाधिकः ॥ २०
नग्नजिन्नाम राजासीद्भुवि विख्यातविक्रमः ।
एकचक्र इति ख्यात आसीद्यस्तु महासुरः ॥२१
प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ ।
विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः ॥ २२
चित्रधर्मेति विख्यातः क्षितावासीत्स पार्थिवः ।
हरस्त्वरिहरो वीर आसीद्यो दानवोत्तमः ॥ २३
सुबाहुरिति विख्यातः श्रीमानासीत्स पार्थिवः ।
अहरस्तु महातेजाः शत्रुपक्षक्षयंकरः ॥ २४
बाह्लिको नाम राजा स बभूव प्रथितः क्षितौ ।
निचन्द्रश्चन्द्रवक्रस्तु य आसीदसुरोत्तमः ॥ २५
मुञ्जकेश इति ख्यातः श्रीमानासीत्स पार्थिवः ।
निकुम्भस्त्वजितः संख्ये महामतिरजायत ॥ २६
भूमौ भूमिपतिश्रेष्ठो देवाधिप इति स्मृतः ।
शरभो नाम यस्तेषां दैतेयानां महासुरः ॥ २७
पौरवो नाम राजर्षिः स बभूव नरोत्तमः ।
कुपटस्तु महावीर्यः श्रीमान्राजन्महासुरः ॥ २८
सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः ।
कपटस्तु राजन्राजर्षिः क्षितौ जज्ञे महासुरः ॥ २९
पार्वतेय इति ख्यातः काञ्चनाचलसन्निभः ।
द्वितीयः शलभस्तेषामसुराणां बभूव ह ॥ ३०
प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः ।
चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोपमः ॥३१
चन्द्रवर्मेति विख्यातः काम्बोजानां नराधिपः ।
अर्क इत्यभिविख्यातो यस्तु दानवपुङ्गवः ॥ ३२
ऋषिको नाम राजर्षिर्बभूव नृपसत्तमः ।
मृतपा इति विख्यातो य आसीदसुरोत्तमः ॥३३
पश्चिमानूपकं विद्धि तं नृपं नृपसत्तम ।
गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः ॥३४

द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः ।
मयूर इति विख्यातः श्रीमान्यस्तु महासुरः ॥ ३५
स विश्व इति विख्यातो बभूव पृथिवीपतिः ।
सुपर्ण इति विख्यातस्तस्मादवरजस्तु यः ॥ ३६
कालकीर्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः ।
चन्द्रहन्तेति यस्तेषां कीर्तितः प्रवरोऽसुरः ॥ ३७
शुनको नाम राजर्षिः स बभूव नराधिपः ।
विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः ३८
जानकिर्नाम विख्यातः सोऽभवन्मनुजाधिपः ।
दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभः ॥ ३९
काशिराजः स विख्यातः पृथिव्यां पृथिवीपते ।
ग्रहं तु सुषुवे यं तु सिंहिकार्केन्दुमर्दनम् ।
स क्राथ इति विख्यातो बभूव मनुजाधिपः ॥४०
दनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः ।
विक्षरो नाम तेजस्वी वसुमित्रो नृपः स्मृतः ॥४१
द्वितीयो विक्षराद्यस्तु नराधिप महासुरः ।
पाण्ड्यराष्ट्राधिप इति विख्यातः सोऽभवन्नृपः४२
बली वीर इति ख्यातो यस्त्वासीदसुरोत्तमः ।
पौण्ड्रमात्स्यक इत्येवं बभूव स नराधिपः ॥ ४३
वृत्र इत्यभिविख्यातो यस्तु राजन्महासुरः ।
मणिमान्नाम राजर्षिः स बभूव नराधिपः ॥ ४४
क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुरः ।
दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ ४५
क्रोधवर्धन इत्येवं यस्त्वन्यः परिकीर्तितः ।
दण्डधार इति ख्यातः सोऽभवन्मनुजर्षभः ॥४६
कालेयानां तु ये पुत्रास्तेषामष्टौ नराधिपाः ।
जज्ञिरे राजशार्दूल शार्दूलसमविक्रमाः ॥ ४७
मगधेषु जयत्सेनस्तेषामासीत्स पार्थिवः ।
अष्टानां प्रवरस्तेषां कालेयानां महासुरः ॥ ४८
द्वितीयस्तु ततस्तेषां श्रीमान्हरिहयोपमः ।
अपराजित इत्येवं स बभूव नराधिपः ॥ ४९
तृतीयस्तु महातेजा महामायो महासुरः ।
निषादाधिपतिर्जज्ञे भुवि भीमपराक्रमः ॥ ५०
तेषामन्यतमो यस्तु चतुर्थः परिकीर्तितः ।
श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः ५१
पञ्चमस्त्वभवत्तेषां प्रवरो यो महासुरः ।
महौजा इति विख्यातो बभूवेह परन्तपः ॥ ५२
षष्ठस्तु मतिमान्यो वै तेषामासीन्महासुरः ।
अभीरुरिति विख्यातः क्षितौ राजर्षिसत्तमः ५३
समुद्रसेनस्तु नृपस्तेषामेवाभवद्गणात् ।
विश्रुतः सागरान्तायां क्षितौ धर्मार्थतत्त्ववित् ५४
बृहन्नामाष्टमस्तेषां कालेयानां नराधिप ।
बभूव राजा धर्मात्मा सर्वभूतहिते रतः ॥ ५५
कुक्षिस्तु राजन्विख्यातो दानवानां महाबलः ।
पार्वतीय इति ख्यातः काञ्चनाचलसन्निभः ॥५६
क्रथनश्च महावीर्यः श्रीमान्राजा महासुरः ।
सूर्याक्ष इति विख्यातः क्षितौ जज्ञे महीपतिः ५७
असुराणां तु यः सूर्यः श्रीमांश्चैव महासुरः ।
दरदो नाम बाह्लीको वरः सर्वमहीक्षिताम् ॥ ५८
गणः क्रोधवशो नाम यस्ते राजन्प्रकीर्तितः ।
ततः संजज्ञिरे वीराः क्षिताविह नराधिपाः ॥५९
मद्रकः कर्णवेष्टश्च सिद्धार्थः कीटकस्तथा ।
सुवीरश्च सुबाहुश्च महावीरोऽथ बाह्लिकः ॥ ६०
क्रथो विचित्रः सुरथः श्रीमान्नीलश्च भूमिपः ।
चीरवासाश्च कौरव्य भूमिपालश्च नामतः ॥ ६१
दन्तवक्त्रश्च नामासीद्दुर्जयश्चैव दानवः ।
रुक्मी च नृपशार्दूलो राजा च जनमेजयः ॥६२
आषाढो वायुवेगश्च भूरितेजास्तथैव च ।
एकलव्यः सुमित्रश्च वाटधानोऽथ गोमुखः ॥६३
कारूषकाश्च राजानः क्षेमधूर्तिस्तथैव च ।
श्रुतायुरुद्वहश्चैव बृहत्सेनस्तथैव च ॥ ६४
क्षेमोग्रतीर्थः कुहरः कलिङ्गेषु नराधिपः ।
मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुतः ॥ ६५
गणात्क्रोधवशादेष राजपूगोऽभवत्क्षितौ ।
जातः पुरा महाभागो महाकीर्तिर्महाबलः ॥ ६६
कालनेमिरिति ख्यातो दानवानां महाबलः ।
स कंस इति विख्यात उग्रसेनसुतो बली ॥ ६७
यस्त्वासीद्देवको नाम देवराजसमद्युतिः ।

स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः ॥६८
बृहस्पतेर्बृहत्कीर्तेर्देवर्षेर्विद्धि भारत ।
अंशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् ॥ ६९
धन्विनां नृपशार्दूल यः सर्वास्त्रविदुत्तमः ।
महाकीर्तिर्महातेजाः स जज्ञे मनुजेश्वर ॥ ७०
धनुर्वेदे च वेदे च यं तं वेदविदो विदुः ।
वरिष्ठं चित्रकर्माणं द्रोणं स्वकुलवर्धनम् ॥ ७१
महादेवान्तकाभ्यां च कामात्क्रोधाच्च भारत ।
एकत्वमुपसंपद्य जज्ञे शूरः परन्तपः ॥ ७२
अश्वत्थामा महावीर्यः शत्रुपक्षभयावहः ।
वीरः कमलपत्राक्षः क्षितावासीन्नराधिपः ॥ ७३
जज्ञिरे वसवस्त्वष्टौ गङ्गायां शन्तनोः सुताः ।
वसिष्ठस्य च शापेन नियोगाद्वासवस्य च ॥ ७४
तेषामवरजो भीष्मः कुरूणामभयङ्करः ।
मतिमान्वेदविद्वाग्मी शत्रुपक्षक्षयङ्करः ॥ ७५
जामदग्न्येन रामेण सर्वास्त्रविदुषां वरः ।
योऽयुध्यत महातेजा भार्गवेण महात्मना ॥ ७६
यस्तु राजन्कृपो नाम ब्रह्मर्षिरभवत्क्षितौ ।
रुद्राणां तु गणाद्विद्धि संभूतमतिपौरुषम् ॥ ७७
शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः ।
द्वापरं विद्धि तं राजन्संभूतमरिमर्दनम् ॥ ७८
सात्यकिः सत्यसन्धश्च योऽसौ वृष्णिकुलोद्वहः ।
पक्षात्स जज्ञे मरुतां देवानामरिमर्दनः ॥ ७९
द्रुपदश्चैव राजर्षिस्तत एवाभवद्गणात् ।
मानुषे नृप लोकेऽस्मिन्सर्वशस्त्रभृतां वरः ॥ ८०
ततश्च कृतवर्माणं विद्धि राजञ्जनाधिपम् ।
तमप्रतिमकर्माणं क्षत्रियर्षभसत्तमम् ॥ ८१
मरुतां तु गणाद्विद्धि संजातमरिमर्दनम् ।
विराटं नाम राजानं परराष्ट्रप्रतापनम् ॥ ८२
अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः ।
स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः ॥ ८३
धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः ।
दीर्घबाहुर्महातेजाः प्रज्ञाचक्षुर्नराधिपः ॥
मातुर्दोषादृषेः कोपादन्ध एव व्यजायत ॥ ८४
'मरुतां तु गणाद्वीरः सर्वशस्त्रभृतां वरः ।
पाण्डुर्जज्ञे महाबाहुस्तव पूर्वपितामहः ।'
तस्यैवावरजो भ्राता महासत्त्वो महाबलः ॥ ८५
धर्मात्तु सुमहाभागं पुत्रं पुत्रवतां वरम् ।
विदुरं विद्धि तं लोके जातं बुद्धिमतां वरम् ॥८६
कलेरंशस्तु संजज्ञे भुवि दुर्योधनो नृपः ।
दुर्बुद्धिर्दुर्मतिश्चैव कुरूणामयशस्करः ॥ ८७
जगतो यस्तु सर्वस्य विद्विष्टः कलिपूरुषः ।
यः सर्वां घातयामास पृथिवीं पृथिवीपते ॥ ८८
उद्दीपितं येन वैरं भूतान्तकरणं महत् ।
पौलस्त्या भ्रातरश्चास्य जज्ञिरे मनुजेष्विह ॥ ८९
शतं दुःशासनादीनां सर्वेषां क्रूरकर्मणाम् ।
दुर्मुखो दुःसहश्चैव ये चान्ये नानुकीर्तिताः ॥९०
दुर्योधनसहायास्ते पौलस्त्या भरतर्षभ ।
वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः॥९१

जनमेजय उवाच ।

ज्येष्ठानुज्येष्ठतामेषां नामधेयानि वा विभो ।
धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय ॥ ९२

वैशंपायन उवाच ।

दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा ।
दुःसहो दुःशलश्चैव दुर्मुखश्च तथापरः ॥ ९३
विविंशतिर्विकर्णश्च जलसन्धः सुलोचनः ।
विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ॥ ९४
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ।
चत्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह ॥ ९५
दुर्मदो दुष्प्रहर्षश्च विवित्सुर्विकटः समः ।
ऊर्णनाभः पद्मनाभस्तथा नन्दोपनन्दकौ ॥ ९६
सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ ।
चित्रबाहुश्चित्रवर्मा सुवर्मा दुर्विरोचनः ॥ ९७
अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ ।
भीमवेगो भीमबलो बलाकी भीमविक्रमः ॥ ९८
उग्रायुधो भीमशरः कनकायुर्दृढायुधः ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ॥ ९९
जरासन्धो दृढसन्धः सत्यसन्धः सहस्रवाक् ।

उग्रश्रवा उग्रसेनः क्षेममूर्तिस्तथैव च ॥ १००
अपराजितः पण्डितको विशालाक्षो दुराधनः१०१
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ।
आदित्यकेतुर्बह्वाशी नागदत्तानुयायिनौ ॥ १०२
कवची निषङ्गी दण्डी दण्डधारो धनुर्ग्रहः ।
उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ॥ १०३
अभयो रौद्रकर्मा च तथा दृढरथश्च यः ।
अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः१०४
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकाङ्गदः ।
कुण्डजश्चित्रकश्चैव दुःशला च शताधिका ॥१०५
वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ।
एतदेकशतं राजन्कन्या चैका प्रकीर्तिता ॥१०६
नामधेयानुपूर्व्या च ज्येष्ठानुज्येष्ठतां विदुः ।
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः॥१०७
सर्वे वेदविदश्चैव राजञ्शास्त्रे च पारगाः ।
सर्वे सङ्ग्रामविद्यासु विद्याभिजनशोभिनः॥१०८
सर्वेषामनुरूपाश्च कृता दारा महीपते ।
दुःशलां समये राजसिन्धुराजाय कौरवः ॥१०९
जयद्रथाय प्रददौ सौबलानुमते तदा ।
धर्मस्यांशं तु राजानं विद्धि राजन्युधिष्ठिरम् ॥११०
भीमसेनं तु वातस्य देवराजस्य चार्जुनम् ।
अश्विनोस्तु तथैवांशौ रूपेणाप्रतिमौ भुवि ॥१११
नकुलः सहदेवश्च सर्वभूतमनोहरौ ।
यस्तु वर्चा इति ख्यातः सोमपुत्रः प्रतापवान् ११२
सोऽभिमन्युर्बृहत्कीर्तिरर्जुनस्य सुतोऽभवत् ।
यस्यावतरणे राजन्सुरान्सोमोऽब्रवीदिदम् ॥११३
नाहं दद्यां प्रियं पुत्रं मम प्राणैर्गरीयसम् ।
समयः क्रियतामेष न शक्यमतिवर्तितुम् ॥ ११४
सुरकार्यं हि नः कार्यमसुराणां क्षितौ वधः ।
तत्र यास्यत्ययं वर्चा न च स्थास्यति वै चिरम् ११५
ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा ।
सोऽर्जुनेत्यभिविख्यातः पाण्डोः पुत्रः प्रतापवान्॥
तस्यायं भविता पुत्रो बालो भुवि महारथः ।
ततः षोडशवर्षाणि स्थास्यत्यमरसत्तमाः ॥ ११७
अस्य षोडशवर्षस्य स सङ्ग्रामो भविष्यति ।
यत्रांशा वः करिष्यन्ति कर्म वीरनिषूदनम् ११८
नरनारायणाभ्यां तु स सङ्ग्रामो विनाकृतः ।
चक्रव्यूहं समास्थाय योधयिष्यन्ति वः सुराः ११९
विमुखाञ्छात्रवान्सर्वान्कारयिष्यति मे सुतः ।
बालः प्रविश्य च व्यूहमभेद्यं विचरिष्यति ॥१२०
महारथानां वीराणां कदनं च करिष्यति ।
सर्वेषामेव शत्रूणां चतुर्थांशं नयिष्यति ॥ १२१
दिनार्धेन महाबाहुः प्रेतराजपुरं प्रति ।
ततो महारथैर्वीरैः समेत्य बहुशो रणे ॥ १२२
दिनक्षये महाबाहुर्मया भूयः समेष्यति ।
एकं वंशकरं पुत्रं वीरं वै जनयिष्यति ॥ १२३
प्रनष्टं भारतं वंशं स भूयो धारयिष्यति ।
वैशंपायन उवाच ।
एतत्सोमवचः श्रुत्वा तथास्त्विति दिवौकसः१२४
प्रत्यूचुः सहिताः सर्वे ताराधिपमपूजयन् ।
एवं ते कथितं राजंस्तव जन्म पितुः पितुः॥१२५
अग्नेर्भागं तु विद्धि त्वं धृष्टद्युम्नं महारथम् ।
शिखण्डिनमथो राजंस्त्रीपूर्वं विद्धि राक्षसम् १२६
द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ ।
विश्वान्देवगणान्विद्धि संजातान्भरतर्षभ ॥ १२७
प्रतिविन्ध्यः सुतसोमः श्रुतकीर्तिस्तथापरः ।
नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्यवान् १२८
शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत् ।
तस्य कन्या पृथा नाम रूपेणासदृशी भुवि १२९
पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्यवान् ।
अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वै तदा ॥ १३०
अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया ।
अददत्कुन्तिभोजाय स तां दुहितरं तदा ॥१३१
सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने ।
उग्रं पर्यचरद्घोरं ब्राह्मणं संशितव्रतम् ॥ १३२
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमुग्रं शंसितात्मानं सर्वयत्नैरतोषयत् ॥ १३३
तुष्टोऽभिचारसंयुक्तमाचचक्षे यथाविधि ।
उवाच चैनां भगवान्प्रीतोऽस्मि सुभगे तव १३४

यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तस्य तस्य प्रसादात्त्वं देवि पुत्राञ्जनिष्यसि ॥ १३५
एवमुक्ता च सा बाला तदा कौतूहलान्विता ।
कन्या सती देवमर्कमाजुहाव यशस्विनी ॥ १३६
प्रकाशकर्ता भगवांस्तस्यां गर्भं दधौ तदा ।
अजीजनत्सुतं चास्यां सर्वशस्त्रभृतांवरम् ॥ १३७
सकुण्डलं सकवचं देवगर्भं श्रियान्वितम् ।
दिवाकरसमं दीप्त्या चारुसर्वाङ्गभूषितम् ॥ १३८
निगूहमाना जातं वै बन्धुपक्षभयात्तदा ।
उत्ससर्ज जले कुन्ती तं कुमारं यशस्विनम् ॥ १३९
तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः ।
राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा १४०
चक्रतुर्नामधेयं च तस्य बालस्य तावुभौ ।
दंपती वसुषेणेति दिक्षु सर्वासु विश्रुतम् ॥ १४१
संवर्धमानो बलवान्सर्वास्त्रेषूत्तमोऽभवत् ।
वेदाङ्गानि च सर्वाणि जजाप जपतां वरः॥ १४२
यस्मिन्काले जपन्नास्ते धीमान्सत्यपराक्रमः ।
नादेयं ब्राह्मणेष्वासीत्तस्मिन्काले महात्मनः १४३
तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूतभावनः ।
ययाचे कुण्डले वीरं कवचं च सहाङ्गजम् ॥ १४४
उत्कृत्य कर्णो ह्यददत्कवचं कुण्डले तथा ॥
शक्तिं शक्रो ददौ तस्मै विस्मितश्चेदमब्रवीत् १४५
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
यस्मिन्क्षेप्स्यसि दुर्धर्ष स एको न भविष्यति ॥ १४६
वैशंपायन उवाच ।
पुरा नाम च तस्यासीद्वसुषेण इति क्षितौ ।
ततो वैकर्तनः कर्णः कर्मणा तेन सोऽभवत् ॥ १४७
आमुक्तकवचो वीरो यस्तु जज्ञे महायशाः ।
स कर्ण इति विख्यातः पृथायाः प्रथमः सुतः १४८
स तु सूतकुले वीरो ववृधे राजसत्तम ।
कर्णं नरवरश्रेष्ठं सर्वशस्त्रभृतां वरम् ॥ १४९
दुर्योधनस्य सचिवं मित्रं शत्रुविनाशनम् ।
दिवाकरस्य तं विद्धि राजन्नंशमनुत्तमम् ॥ १५०
यस्तु नारायणो नाम देवदेवः सनातनः ।
तस्यांशो मानुषेष्वासीद्वासुदेवः प्रतापवान् १५१
शेषस्यांशश्च नागस्य बलदेवो महाबलः ।
सनत्कुमारं प्रद्युम्नं विद्धि राजन्महौजसम् ॥ १५२
एवमन्ये मनुष्येन्द्रा बहवोंशा दिवौकसाम् ।
जज्ञिरे वसुदेवस्य कुले कुलविवर्धनाः ॥ १५३
गणस्त्वप्सरसां यो वै मया राजन्प्रकीर्तितः ।
तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य ह ॥ १५४
तानि षोडशदेवीनां सहस्राणि नराधिप ।
बभूवुर्मानुषे लोके वासुदेवपरिग्रहाः ॥ १५५
श्रियस्तु भागः संजज्ञे रत्यर्थं पृथिवीतले ।
[भीष्मकस्य कुले साध्वी रुक्मिणी नाम नामतः ॥
द्रौपदी त्वथ संजज्ञे शची भागादनिन्दिता ।]
द्रुपदस्य कुले जाता वेदिमध्यादनिन्दिता ॥ १५७
नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी ।
पद्मायताक्षी सुश्रोणी स्वसिताञ्चितमूर्धजा ॥ १५८
सर्वलक्षणसंपन्ना वैदूर्यमणिसंनिभा ।
पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी रहः ॥ १५९
सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते ।
कुन्ती माद्री च जज्ञाते मतिस्तु सुबलात्मजा १६०
इति देवासुराणां ते गन्धर्वाप्सरसां तथा ।
अंशावतरणं राजन्राक्षसानां च कीर्तितम् ॥ १६१
ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः ।
महात्मानो यदूनां च ये जाता विपुले कुले ॥ १६२
ब्राह्मणाः क्षत्रिया वैश्या मया ते परिकीर्तिताः ।
धन्यं यशस्यं पुत्रीयमायुष्यं विजयावहम् ॥ १६३
इदमंशावतरणं श्रोतव्यमनसूयता ।
अंशावतरणं श्रुत्वा देवगन्धर्वरक्षसाम् ॥ १६४
प्रभवाप्ययवित्प्राज्ञो न कृच्छ्रेष्ववसीदति ॥ १६५

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

* कुण्डलितोयं पाठः क्वचिन्न दृश्यते ।

## एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

कुरुवंशकथनम् ॥ १ ॥ संक्षेपेण ययात्युपाख्यानम् ॥ २ ॥

जनमेजय उवाच ।
त्वत्तः श्रुतमिदं ब्रह्मन्देवदानवरक्षसाम् ।
अंशावतरणं सम्यग्गन्धर्वाप्सरसां तथा ॥ १
इमं तु भूय इच्छामि कुरूणां वंशमादितः ।
कथ्यमानं त्वया विप्र विप्रर्षिगणसन्निधौ ॥ २
वैशंपायन उवाच ।
धर्मार्थकामसहितं राजर्षीणां प्रकीर्तितम् ।
पवित्रं कीर्त्यमानं मे निबोधेदं मनीषिणाम् ॥ ३
प्रजापतेस्तु दक्षस्य मनोर्वैवस्वतस्य च ।
भरतस्य कुरोः पूरोराजमीढस्य चानघ ॥ ४
यादवानामिमं वंशं कौरवाणां च सर्वशः ।
तथैव भरतानां च पुण्यं स्वस्त्ययनं महत् ॥ ५
धन्यं यशस्यमायुष्यं कीर्तयिष्यामि तेऽनघ ।
तेजोभिरुदिताः सर्वे महर्षिसमतेजसः ॥ ६
दश प्राचेतसः पुत्राः सन्तः पुण्यजनाः स्मृताः ।
मुखजेनाग्निना यैस्ते पूर्वं दग्धा महौजसः ॥ ७
तेभ्यः प्राचेतसो जज्ञे दक्षो दक्षादिमाः प्रजाः ।
संभूताः पुरुषव्याघ्र स हि लोकपितामहः ॥ ८
वीरिण्या सह सङ्गम्य दक्षः प्राचेतसो-मुनिः ।
आत्मतुल्यानजनयत्सहस्रं संशितव्रतान् ॥ ९
सहस्रसङ्ख्यान्संभूतान्दक्षपुत्रांश्च नारदः ।
मोक्षमध्यापयामास साङ्ख्यज्ञानमनुत्तमम् ॥ १०
'नाशार्थं योजयामास दिगन्तज्ञानकर्मसु' ।
ततः पञ्चाशतं कन्याः पुत्रिका अभिसन्दधे ।
प्रजापतिः प्रजा दक्षः सिसृक्षुर्जनमेजय ॥ ११
ददौ दश स धर्माय कश्यपाय त्रयोदश ।
कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ॥ १२
त्रयोदशानां पत्नीनां या तु दाक्षायणी वरा ।
मारीचः कश्यपस्तस्यामादित्यान्समजीजनत् १३
इन्द्रादीन्वीर्यसंपन्नान्विवस्वन्तमथापि च ।
विवस्वतः सुतो जज्ञे यमो वैवस्वतः प्रभुः ॥ १४
'मार्ताण्डस्य यमी चापि सुता राजन्नजायत' ।
मार्तण्डस्य मनुर्धीमानजायत सुतः प्रभुः ॥ १५
धर्मात्मा स मनुर्धीमान्यत्र वंशः प्रतिष्ठितः ।
मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत् १६
ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः ।
ततोऽभवन्महाराज ब्रह्म क्षत्रेण सङ्गतम् ॥ १७
ब्राह्मणा मानवास्तेषां साङ्गं वेदमधारयन् ।
वेनं धृष्णुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च ॥ १८
कारूषमथ शर्यातिं तथा चैवाष्टमीमिलाम् ।
पृषध्रं नवमं प्राहुः क्षत्रधर्मपरायणम् ॥ १९
नाभागारिष्टदशमान्मनोः पुत्रान्प्रचक्षते ।
पञ्चाशत्तु मनोः पुत्रास्तथैवान्येऽभवन्क्षितौ ॥२०
अन्योन्यभेदात्ते सर्वे विनेशुरिति नः श्रुतम् ।
पुरूरवास्ततो विद्वानिलायां समपद्यत ॥ २१
सा वै तस्याभवन्माता पिता चैवेति नः श्रुतम् ।
त्रयोदश समुद्रस्य द्वीपानश्नन्पुरूरवाः ॥ २२
अमानुषैर्वृतः सत्त्वैर्मानुषः सन्महायशाः ।
विप्रैः स विग्रहं चक्रे वीर्योन्मत्तः पुरूरवाः ॥२३
जहार च स विप्राणां रत्नान्युत्क्रोशतामपि ।
सनत्कुमारस्तं राजन्ब्रह्मलोकादुपेत्य ह ॥ २४
अनुदर्शं ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ ।
ततो महर्षिभिः क्रुद्धैः सद्यः शप्तो व्यनश्यत २५
लोभान्वितो बलमदान्नष्टसंज्ञो नराधिपः ।
स हि गन्धर्वलोकस्थानुर्वश्या सहितो विराट् २६
आनिनाय क्रियार्थेऽग्नीन्यथावद्विहितांस्त्रिधा ।

---

प्राचेतसः प्राचे देशाय यज्ञक्रियया अतति सततं गच्छतीति प्राचेताः तस्य प्राचेतसः प्राचीनबर्हिषः । पुण्यजनाः पुण्योत्पादकास्तपःशीला इत्यर्थः । यैस्ते महौजसो महाप्रभावा वृक्षौषधयो दग्धाः ॥ ७ ॥ वीरिण्या वीरणपुत्र्या ॥ ९ ॥ मोक्षं मोक्षहेतुं । सांख्यज्ञानं विवेकजं विज्ञानम् ॥ १० ॥ यमी यमुना ॥ १५ ॥

अन्योन्यभेदात्परस्परवैरात् ॥ २१ ॥ मातैव लब्धपुंभावा राज्यदानात्पिताप्यभूत् । मुख्यः पिता तु बुध एव ॥ २२ ॥ अनुदर्शं दर्शो दर्शनं स पश्चाद्यस्य स श्रुतियुक्त्युपदेशोऽनुदर्शस्तं ततस्तदुपदेशमित्यर्थः ॥ २५ ॥ विराड्विराजमानः ॥ २६ ॥ त्रिधा गार्हपत्यदक्षिणाग्न्याहवनीयभेदेन । आयुःशब्दः उका-

षट् सुता जज्ञिरे चैलादायुर्धीमानमावसुः ॥ २७
दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुताः ।
नहुषं वृद्धशर्माणं रजिं गयमनेनसम् ॥ २८
स्वर्भानवी सुतानेतानायोः पुत्रान्प्रचक्षते ।
आयुषो नहुषः पुत्रो धीमान्सत्यपराक्रमः ॥ २९
राज्यं शशास सुमहद्धर्मेण पृथिवीपते ।
पितॄन्देवानृषीन्विप्रान्गन्धर्वोरगराक्षसान् ॥ ३०
नहुषः पालयामास ब्रह्मक्षत्रमथो विशः ।
स हत्वा दस्युसंघातानृषीन्करमदापयत् ॥ ३१
पशुवच्चैव तान्पृष्ठे वाहयामास वीर्यवान् ।
कारयामास चेन्द्रत्वमभिभूय दिवौकसः ॥ ३२
तेजसा तपसा चैव विक्रमेणौजसा तथा ।
'विश्लिष्टो नहुषः शप्तः सद्यो ह्यजगरोऽभवत्' ।
यतिं ययातिं संयातिमायातिमयतिं ध्रुवम् ॥ ३३
नहुषो जनयामास षट् सुतान्प्रियवादिनः ।
यतिस्तु योगमास्थाय ब्रह्मीभूतोऽभवन्मुनिः ॥ ३४
ययातिर्नाहुषः सम्राडासीत्सत्यपराक्रमः ।
स पालयामास महीमीजे च बहुभिर्मखैः ॥ ३५
अतिभक्त्या पितॄनर्चन्देवांश्च प्रयतः सदा ।
अन्वगृह्णात्प्रजाः सर्वा ययातिरपराजितः ॥ ३६
तस्य पुत्रा महेष्वासाः सर्वैः समुदिता गुणैः ।
देवयान्यां महाराज शर्मिष्ठायां च जज्ञिरे ॥ ३७
देवयान्यामजायेतां यदुस्तुर्वसुरेव च ।
द्रुह्युश्चानुश्च पूरुश्च शर्मिष्ठायां च जज्ञिरे ॥ ३८
स शाश्वतीः समा राजन्प्रजा धर्मेण पालयन् ।
जरामार्च्छन्महाघोरां नाहुषो रूपनाशिनीम् ॥ ३९
जराऽभिभूतः पुत्रान्स राजा वचनमब्रवीत् ।
यदुं पूरुं तुर्वसुं च द्रुह्युं चानुं च भारत ॥ ४०
यौवनेन चरन्कामान्युवा युवतिभिः सह ।
विहर्तुमहमिच्छामि साह्यं कुरुत पुत्रकाः ॥ ४१
तं पुत्रो दैवयानेयः पूर्वजो वाक्यमब्रवीत् ।
किं कार्यं भवतः कार्यमस्माकं यौवनेन ते ॥ ४२
ययातिरब्रवीत्तं वै जरा मे प्रतिगृह्यताम् ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ ४३
यजतो दीर्घसत्रैर्मे शापाच्चोशनसो मुनेः ।
कामार्थः परिहीणोऽयं तप्येयं तेन पुत्रकाः ॥ ४४
मामकेन शरीरेण राज्यमेकः प्रशास्तु वः ।
अहं तन्वाऽभिनवया युवा काममवाप्नुयाम् ॥ ४५
वैशंपायन उवाच ।
ते न तस्य प्रत्यगृह्णन्यदुप्रभृतयो जराम् ।
तमब्रवीत्ततः पूरुः कनीयान्सत्यविक्रमः ॥ ४६
राजंश्चराभिनवया तन्वा यौवनगोचरः ।
अहं जरां समादाय राज्ये स्थास्यामि तेऽज्ञया ॥ ४७
एवमुक्तः स राजर्षिस्तपोवीर्यसमाश्रयात् ।
संचारयामास जरां तदा पुत्रे महात्मनि ॥ ४८
पौरवेणाथ वयसा राजा यौवनमास्थितः ।
यायातेनापि वयसा राज्यं पूरुरकारयत् ॥ ४९
ततो वर्षसहस्राणि ययातिरपराजितः ।
स्थितः स नृपशार्दूलः शार्दूलसमविक्रमः ॥ ५०
ययातिरपि पत्नीभ्यां दीर्घकालं विहृत्य च ।
विश्वाच्या सहितो रेमे पुनश्चैत्ररथे वने ॥ ५१
नाध्यगच्छत्तदा तृप्तिं कामानां स महायशाः ।
अवेत्य मनसा राजन्निमां गाथां तदा जगौ ॥ ५२
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ५३
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ ५४
यदा न कुरुते पापं सर्वभूतेषु कर्हिचित् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ ५५
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥ ५६
इत्यवेक्ष्य महाप्राज्ञः कामानां फल्गुतां नृप ।
समाधाय मनो बुद्ध्या प्रत्यगृह्णाज्जरां सुतात् ॥ ५७

राम्तः सान्तश्च ॥ २७ ॥ कार्यं प्रयोजनम् । कार्यं कर्तव्यम् ॥ ४२ ॥ व्रतनिर्बन्धाच्छुक्रशापाच्च कामरूपः पुरुषार्थो हीनः ॥ ४४ ॥ तेऽज्ञया तव आज्ञया । पूर्वरूपमाकारलोपो वार्षः ॥ ४७ ॥ कामानां कामभोगेन । अवेत्य कामसेवया तृप्त्यभावं ज्ञात्वा ॥ ५२ ॥ हविषा समिदाज्यादिना ॥ ५३ ॥ एकस्य कामिनः सर्वं नालमपर्याप्तम् । शमं कामशान्तिम् ॥ ५४ ॥

'ततो वर्षसहस्रान्ते ययातिरपराजितः ।'
दत्वा च यौवनं राजा पूरुं राज्येऽभिषिच्य च ।
अतृप्त एव कामानां पूरुं पुत्रमुवाच ह ॥ ५८
त्वया दायादवानस्मि त्वं मे वंशकरः सुतः ।
पौरवो वंश इति ते ख्यातिं लोके गमिष्यति ॥५९
वैशंपायन उवाच ।
ततः स नृपशार्दूल पूरुं राज्येऽभिषिच्य च ।
ततः सुचरितं कृत्वा भृगुतुङ्गे महातपाः ॥ ६०
कालेन महता पश्चात्कालधर्ममुपेयिवान् ।
कारयित्वा त्वनशनं सदारः स्वर्गमाप्तवान् ॥६१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ॥ ७० ॥

ययात्युपाख्यानारम्भः ॥ १ ॥ सञ्जीवनीविद्यालाभार्थं देवैः शुक्रसमीपे कचस्य प्रेषणम् ॥ २ ॥ कचस्य शिष्यत्वेनाङ्गीकारः ॥ ३ ॥ दैत्यैर्हतस्य कचस्योज्जीवनम् ॥ ४ ॥ दैत्यैर्भस्मीकृत्य तन्मिश्रितसुराद्वारा स्वकुक्षिं प्रापितस्य कचस्य शुक्रेण विद्यादानपूर्वकमुज्जीवनम् ॥ ५ ॥ शुक्रेण सुरापाननिषेधः ॥ ६ ॥

जनमेजय उवाच ।
ययातिः पूर्वजोऽस्माकं दशमो यः प्रजापतेः ।
कथं स शुक्रतनयां लेभे परमदुर्लभाम् ॥ १
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
आनुपूर्व्या च मे शंस राज्ञो वंशकरान्पृथक् ॥२
वैशंपायन उवाच ।
ययातिरासीन्नृपतिर्देवराजसमद्युतिः ।
तं शुक्रवृषपर्वाणौ वव्राते वै यथा पुरा ॥ ३
तत्तेऽहं संप्रवक्ष्यामि पृच्छते जनमेजय ।
देवयान्याश्च संयोगं ययातेर्नाहुषस्य च ॥ ४
सुराणामसुराणां च समजायत वै मिथः ।
ऐश्वर्यं प्रति संघर्षस्त्रैलोक्ये सचराचरे ॥ ५
जिगीषया ततो देवा वव्रिरेऽङ्गिरसं मुनिम् ।
पौरोहित्येन याज्यार्थे काव्यं तूशनसं परे ॥ ६
ब्राह्मणौ तावुभौ नित्यमन्योन्यस्पर्धिनौ भृशम् ।
तत्र देवा निजघ्नुर्यान्दानवान्युधि संगतान् ॥ ७
तान्पुनर्जीवयामास काव्यो विद्याबलाश्रयात् ।
ततस्ते पुनरुत्थाय योधयांचक्रिरे सुरान् ॥ ८
असुरास्तु निजघ्नुर्यान्सुरान्समरमूर्धनि ।
न तान्सञ्जीवयामास बृहस्पतिरुदारधीः ॥ ९
न हि वेद स तां विद्यां यां काव्यो वेत्ति वीर्यवान् ।
सञ्जीविनीं ततो देवा विषादमगमन्परम् ॥ १०
ते तु देवा भयोद्विग्नाः काव्यादुशनसस्तदा ।
ऊचुः कचमुपागम्य ज्येष्ठं पुत्रं बृहस्पतेः ॥ ११
भजमानान्भजस्वास्मान्कुरु नः साह्यमुत्तमम् ।
या सा विद्या निवसति ब्राह्मणेऽमिततेजसि ॥१२
शुक्रे तामाहर क्षिप्रं भागभाङ्नो भविष्यसि ।
वृषपर्वसमीपे हि शक्यो द्रष्टुं त्वया द्विजः ॥ १३
रक्षते दानवांस्तत्र न स रक्षत्यदानवान् ।
तमाराधयितुं शक्तो भवान्पूर्ववयाः कविम् ॥१४
देवयानीं च दयितां सुतां तस्य महात्मनः ।
त्वमाराधयितुं शक्तो नान्यः कश्चन विद्यते ॥ १५
शीलदाक्षिण्यमाधुर्यैराचारेण दमेन च ।
देवयान्यां हि तुष्टायां विद्यां तां प्राप्स्यसि ध्रुवम् ॥
वैशंपायन उवाच ।
तथेत्युक्त्वा ततः प्रायाद्बृहस्पतिसुतः कचः ।
तदाऽभिपूजितो देवैः समीपे वृषपर्वणः ॥ १७
स गत्वा त्वरितो राजन्देवैः संप्रेषितः कचः ।
असुरेन्द्रपुरे शुक्रं दृष्ट्वा वाक्यमुवाच ह ॥ १८
ऋषेरङ्गिरसः पौत्रं पुत्रं साक्षाद्बृहस्पतेः ।
नाम्ना कच इति ख्यातं शिष्यं गृह्णातु मां भवान् ॥
ब्रह्मचर्यं चरिष्यामि त्वय्यहं परमं गुरौ ।

दायादवान् पुत्रवान् ॥ ५९ ॥ कारयित्वा कृत्वा ॥ ६१ ॥ एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

विप्रदानवौ वव्राते जामातृत्वेनेति शेषः ॥ ३ ॥

अनुमन्यस्व मां ब्रह्मन्सहस्रं परिवत्सरान् ॥ २०
शुक्र उवाच ।
कच सुस्वागतं तेऽस्तु प्रतिगृह्णामि ते वचः ।
अर्चयिष्येऽहमर्च्यं त्वामर्चितोऽस्तु बृहस्पतिः२१
वैशंपायन उवाच ।
कचस्तु तं तथेत्युक्त्वा प्रतिजग्राह तद्व्रतम् ।
आदिष्टं कविपुत्रेण शुक्रेणोशनसा स्वयम् ॥ २२
व्रतस्य प्राप्तकालं स यथोक्तं प्रत्यगृह्णत ।
आराधयन्नुपाध्यायं देवयानीं च भारत ॥ २३
नित्यमाराधयिष्यंस्तां युवा यौवनगां मुनिः ।
गायन्नृत्यन्वादयंश्च देवयानीमतोषयत् ॥ २४
स शीलयन्देवयानीं कन्यां संप्राप्तयौवनाम् ।
पुष्पैः फलैः प्रेषणैश्च तोषयामास भारत ॥ २५
देवयान्यपि तं विप्रं नियमव्रतधारिणम् ।
गायन्ती च ललन्ती च रहः पर्यचरत्तथा ॥ २६
'गायन्तं चैव शुल्कं च दातारं प्रियवादिनम् ।
नार्यो नरं कामयन्ते रूपिणं स्रग्विणं तथा॥' २७
पञ्चवर्षशतान्येवं कचस्य चरतो व्रतम् ।
तत्रातीयुरथो बुद्ध्वा दानवास्तं ततः कचम् ॥२८
गा रक्षन्तं वने दृष्ट्वा रहस्येकममर्षिताः ।
जघ्नुर्बृहस्पतेर्द्वेषाद्विद्यारक्षार्थमेव च ॥ २९
हत्वा शालावृकेभ्यश्च प्रायच्छँल्लवशः कृतम् ।
ततो गावो निवृत्तास्ता अगोपाः स्वं निवेशनम्३०
सा दृष्ट्वा रहिता गाश्च कचेनाभ्यागता वनात् ।
उवाच वचनं काले देवयान्यथ भारत ॥ ३१
देवयान्युवाच ।
आहुतं चाग्निहोत्रं ते सूर्यश्चास्तं गतः प्रभो ।
अगोपाश्चागता गावः कचस्तात न दृश्यते ॥३२
व्यक्तं हतो मृतो वापि कचस्तात भविष्यति ।
तं विना न च जीवेयमिति सत्यं ब्रवीमि ते॥३३
शुक्र उवाच ।
अयमेहीति संशब्द्य मृतं संजीवयाम्यहम् ।

वैशंपायन उवाच ।
ततः संजीविनीं विद्यां प्रयुज्य कचमाह्वयत् ॥३४
भित्त्वा भित्त्वा शरीराणि वृकाणां स विनिर्गतः।
आहूतः प्रादुरभवत्कचो हृष्टोऽथ विद्यया ॥ ३५
कस्माच्चिरायितोऽसीति पृष्टस्तामाह भार्गवीम् ।
कच उवाच ।
समिधश्च कुशादीनि काष्ठभारं च भामिनि ॥३६
गृहीत्वा श्रमभारार्तो वटवृक्षं समाश्रितः ।
गावश्च सहिताः सर्वा वृक्षच्छायामुपाश्रिताः ३७
असुरास्तत्र मां दृष्ट्वा कस्त्वमित्यभ्यचोदयन् ।
बृहस्पतिसुतश्चाहं कच इत्यभिविश्रुतः ॥ ३८
इत्युक्तमात्रे मां हत्वा पेषीकृत्वा तु दानवाः ।
दत्त्वा शालावृकेभ्यस्तु सुखं जग्मुः स्वमालयं ३९
आहूतो विद्यया भद्रे भार्गवेण महात्मना ।
त्वत्समीपमिहायातः कथंचित्प्राप्तजीवितः ॥४०
हतोऽहमिति चाचख्यौ पृष्टो ब्राह्मणकन्यया ।
स पुनर्देवयान्योक्तः पुष्पाण्याहर मे द्विज ॥ ४१
वनं ययौ कचो विप्रो ददृशुर्दानवाश्च तम् ।
पुनस्तं पेषयित्वा तु समुद्राम्भस्यमिश्रयन् ॥४२
चिरं गतं पुनः कन्या पित्रे तं संन्यवेदयत् ।
विप्रेण पुनराहूतो विद्यया गुरुदेहजः ।
पुनरावृत्य तद्वृत्तं न्यवेदयत तद्यथा ॥ ४३
ततस्तृतीयं हत्वा तं दग्ध्वा कृत्वा च चूर्णशः ।
प्रायच्छन्ब्राह्मणायैव सुरायामसुरास्तथा ॥ ४४
'अपिबत्सुरया सार्धं कचभस्म भृगूद्वहः ।
सा सायन्तनवेलायामगोपा गाः समागताः॥४५
देवयानी शङ्कमाना दृष्ट्वा पितरमब्रवीत् ।'
पुष्पाहारः प्रेषणकृत्कचस्तात न दृश्यते ॥ ४६
व्यक्तं हतो मृतो वापि कचस्तात भविष्यति ।
तं विना न च जीवेयं कचं सत्यं ब्रवीमि ते ४७
'वैशंपायन उवाच ।
श्रुत्वा पुत्रीवचः काव्यो मन्त्रेणाहूतवान्कचम् ।
ज्ञात्वा बहिष्ठमज्ञात्वा स्वकुक्षिस्थं कचं नृप'॥४८

---

प्रेषणैः प्रेष्यत्वादिभिः ॥ २५ ॥ उवाच शुक्रं प्रति ॥ ३१ ॥ पेषः पिष्टम् । पिष्टीकृत्येत्यर्थः ॥ ३९ ॥ गुरुदेहजः कचः । आवृत्य आगत्य । तद्वृत्तमसुरचेष्टितम् ॥ ४३ ॥ ब्राह्मणाय शुक्राय ॥ ४४ ॥

शुक्र उवाच ।
बृहस्पतेः सुतः पुत्रि कचः प्रेतगतिं गतः ।
विद्यया जीवितोऽप्येवं हन्यते करवाम किम् ४९
मैवं शुचो मा रुद देवयानि
न त्वादृशी मर्त्यमनुप्रशोचते ।
यस्यास्तव ब्रह्म च ब्राह्मणाश्च
सेन्द्रा देवा वसवोऽथाश्विनौ च ॥ ५०
सुरद्विषश्चैव जगच्च सर्व-
मुपस्थाने सन्नमन्ति प्रभावात् ।
अशक्योऽसौ जीवयितुं द्विजातिः
संजीवितो वध्यते चैव भूयः ॥ ५१
देवयान्युवाच ।
यस्याङ्गिरा वृद्धतमः पितामहो
बृहस्पतिश्चापि पिता तपोनिधिः।
ऋषेः पुत्रं तमथो वापि पौत्रं
कथं न शोचेयमहं न रुद्याम् ॥ ५२
स ब्रह्मचारी च तपोधनश्च
सदोत्थितः कर्मसु चैव दक्षः ।
कचस्य मार्गं प्रतिपत्स्ये न भोक्ष्ये
प्रियो हि मे तात कचोऽभिरूपः॥ ५३
शुक्र उवाच ।
असंशयं मामसुरा द्विषन्ति
ये शिष्यं मेऽनागसं सूदयन्ति ।
अब्राह्मणं कर्तुमिच्छन्ति रौद्रा-
स्ते मां यथा व्यभिचरन्ति नित्यम् ।
अप्यस्य पापस्य भवेदिहान्तः
कं ब्रह्महत्या न दहेदपीन्द्रम् ॥ ५४
'वैशंपायन उवाच ।
संचोदितो देवयान्या महर्षिः पुनराह्वयत् ।
संरम्भेणैव काव्यो हि बृहस्पतिसुतं कचम् ॥५५
कचोऽपि राजन्स महानुभावो
विद्याबलाल्लब्धमतिर्महात्मा ।
गुरोर्हि भीतो विद्यया चोपहूतः ।
शनैर्वाक्यं जठरे व्याजहार ॥ ५६
'प्रसीद भगवन्मह्यं कचोऽहमभिवादये ।
यथा बहुमतः पुत्रस्तथा मन्यतु मां भवान् ॥'५७
वैशंपायन उवाच ।
तमब्रवीत्केन पथोपनीत-
स्त्वं चोदरे तिष्ठसि ब्रूहि विप्र ।
अस्मिन्मुहूर्ते ह्यसुरान्विनाश्य
गच्छामि देवानहमद्य विप्र ॥ ५८
कच उवाच ।
तव प्रसादान्न जहाति मां स्मृतिः
स्मरामि सर्वं यच्च यथा च वृत्तम् ।
नत्वेवं स्यात्तपसः संक्षयो मे
ततः क्लेशं घोरमिमं सहामि ॥ ५९
असुरैः सुरायां भवतोऽस्मि दत्तो
हत्वा दग्ध्वा चूर्णयित्वा च काव्य ।
ब्राह्मीं मायां चासुरीं विप्र मायां
त्वयि स्थिते कथमेवातिवर्तेत् ॥ ६०
शुक्र उवाच ।
किं ते प्रियं करवाण्यद्य वत्से
वधेन मे जीवितं स्यात्कचस्य ।
नान्यत्र कुक्षेर्मम भेदनेन
दृश्येत्कचो मद्गतो देवयानि ॥ ६१
देवयान्युवाच ।
द्वौ मां शोकावग्निकल्पौ दहेतां
कचस्य नाशस्तव चैवोपघातः ।
कचस्य नाशे मम शर्म नास्ति
तवोपघाते जीवितुं नास्मि शक्ता ॥ ६२
शुक्र उवाच ।
संसिद्धरूपोऽसि बृहस्पतेः सुत
यत्त्वां भक्तं भजते देवयानी ।
विद्यामिमां प्राप्नुहि जीवनीं त्वं
न चेदिन्द्रः कचरूपी त्वमद्य ॥ ६३

मर्त्यं त्वं तु मत्प्रभावादमरकल्पासि । ब्रह्म वेदः तस्य नमनं स्वार्थप्रकाशेन ॥ ५० ॥ चाद्दैवीं मायां । मायात्रयविदि त्वयि सति को देवोऽसुरो ब्राह्मणो वाऽतिक्रामेदतस्त्वदुदरभेदनं मम दुःसाध्यमेवेति भावः ॥ ६० ॥

न निवर्तेत्पुनर्जीवन्कश्चिदन्यो ममोदरात् ।
ब्राह्मणं वर्जयित्वैकं तस्माद्विद्यामवाप्नुहि ॥ ६४
पुत्रो भूत्वा भावय भावितो मा-
मस्माद्देहादुपनिष्क्रम्य तात ।
समीक्षेथा धर्मवतीमवेक्षां
गुरोः सकाशात्प्राप्य विद्यां सविद्यः॥ ६५

वैशंपायन उवाच ।

गुरोः सकाशात्समवाप्य विद्यां
भित्त्वा कुक्षिं निर्विचक्राम विप्रः ।
कचोऽभिरूपस्तत्क्षणाद्ब्राह्मणस्य
शुक्रात्यये पौर्णमास्यामिवेन्दुः ॥ ६६
दृष्ट्वा च तं पतितं ब्रह्मराशि-
मुत्थापयामास मृतं कचोऽपि ।
विद्यां सिद्धां तामवाप्याभिवाद्य
ततः कचस्तं गुरुमित्युवाच ॥ ६७
यः श्रोत्रयोरमृतं सन्निषिञ्चे-
द्विद्यामविद्यस्य यथा त्वमार्यः ।
तं मन्येऽहं पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ ६८
ऋतस्य दातारमनुत्तमस्य
निधिं निधीनामपि लब्धविद्याः ।
ये नाद्रियन्ते गुरुमर्चनीयं
पापाँल्लोकांस्ते व्रजन्त्यप्रतिष्ठाः ॥ ६९

वैशंपायन उवाच ।

सुरापानाद्वञ्चनां प्राप्य विद्वा-
न्संज्ञानाशं चैव महातिघोरम् ।
दृष्ट्वा कचं चापि तथाभिरूपं
पीतं तदा सुरया मोहितेन ॥ ७०
समन्युरुत्थाय महानुभाव-
स्तदोशना विप्रहितं चिकीर्षुः ।
सुरापानं प्रति संजातमन्युः
काव्यः स्वयं वाक्यमिदं जगाद ॥ ७१
यो ब्राह्मणोऽद्यप्रभृतीह कश्चि-
न्मोहात्सुरां पास्यति मन्दबुद्धिः ।
अपेतधर्मा ब्रह्महा चैव स स्या-
दस्मिँल्लोके गर्हितः स्यात्परे च ॥ ७२
मया चैतां विप्रधर्मोक्तिसीमां
मर्यादां वै स्थापितां सर्वलोके ।
सन्तो विप्राः शुश्रुवांसो गुरूणां
देवा लोकाश्चोपशृण्वन्तु सर्वे ॥ ७३

वैशंपायन उवाच ।

इतीदमुक्त्वा स महानुभाव-
स्तपोनिधीनां निधिरप्रमेयः ।
तान्दानवान्दैवविमूढबुद्धी-
निदं समाहूय वचोऽभ्युवाच ॥ ७४
आचक्षे वो दानवा बालिशाः स्थ
सिद्धः कचो वत्स्यति मत्सकाशे ।
सञ्जीविनीं प्राप्य विद्यां महात्मा
तुल्यप्रभावो ब्राह्मणो ब्रह्मभूतः ॥ ७५
'योऽकार्षीद्दुष्करं कर्म देवानां कारणात्कचः ।
न तत्कीर्तिर्जरां गच्छेद्याज्ञीयश्च भविष्यति ७६
वैशंपायन उवाच ।'
एतावदुक्त्वा वचनं विरराम स भार्गवः ।
दानवा विस्मयाविष्टाः प्रययुः स्वं निवेशनम् ७७
गुरोरुष्य सकाशे तु दश वर्षशतानि सः ।
अनुज्ञातः कचो गन्तुमियेष त्रिदशालयम् ॥ ७८

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

---

भावय जीवय । भावितो मया जीवितः । कृतघ्नो मा भूरिति भावः ॥ ६५ ॥ शुक्रस्याह्नो रवेर्वा अत्यये शुक्रात्यये ॥ ६६ ॥ ऋतस्य वेदस्य । निधीनां विद्यानां निधिमाश्रयम् । प्रतिष्ठा विद्याफलं तच्छून्या अप्रतिष्ठाः ॥६९॥ सप्ततितमोऽध्यायः ॥७०॥

## एकसप्ततितमोऽध्यायः ॥ ७१ ॥

स्वपाणिग्रहणार्थं प्रार्थितवत्या देवयान्या कचस्य विवादः ॥ १ ॥ कचदेवयान्योः परस्परशापदानम् ॥ २ ॥

वैशंपायन उवाच ।
समावृत्तव्रतं तं तु विसृष्टं गुरुणा कचम् ।
प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् ॥ १
ऋषेरङ्गिरसः पौत्र वृत्तेनाभिजनेन च ।
भ्राजसे विद्यया चैव तपसा च दमेन च ॥ २
ऋषिर्यथाङ्गिरा मान्यः पितुर्मम महायशाः ।
तथा मान्यश्च पूज्यश्च मम भूयो बृहस्पतिः ॥ ३
एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन ।
व्रतस्थे नियमोपेते यथा वर्ताम्यहं त्वयि ॥ ४
स समावृत्तविद्यो मां भक्तां भजितुमर्हसि ।
गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतम् ॥ ५
कच उवाच ।
पूज्यो मान्यश्च भगवान्यथा तव पिता मम।
तथा त्वमनवद्याङ्गि पूजनीयतरा मम ॥ ६
प्राणेभ्योऽपि प्रियतरा भार्गवस्य महात्मनः ।
त्वं भद्रे धर्मतः पूज्या गुरुपुत्री सदा मम ॥ ७
यथा मम गुरुर्नित्यं मान्यः शुक्रः पिता तव ।
देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि ॥ ८
देवयान्युवाच ।
गुरुपुत्रस्य पुत्रो वै न त्वं पुत्रश्च मे पितुः ।
तस्मात्पूज्यश्च मान्यश्च ममापि त्वं द्विजोत्तम ॥ ९
असुरैर्हन्यमाने च कच त्वयि पुनःपुनः ।
तदाप्रभृति या प्रीतिस्तां त्वमद्य स्मरस्व मे ॥ १०
सौहार्दे चानुरागे च वेत्थ मे भक्तिमुत्तमाम् ।
न मामर्हसि धर्मज्ञ त्यक्तुं भक्तामनागसम् ॥ ११
कच उवाच ।
अनियोज्ये नियोक्तुं मां देवयानि न चार्हसि ।
प्रसीद सुभ्रु त्वं मह्यं गुरोर्गुरुतरा शुभे ॥ १२
यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने ।
तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनि ॥ १३
भगिनी धर्मतो मे त्वं मैवं वोचः सुमध्यमे ।
सुखमस्म्युषितो भद्रे न मन्युर्विद्यते मम ॥ १४
आपृच्छे त्वां गमिष्यामि शिवमाशंस मे पथि ।
अविरोधेन धर्मस्य स्मर्तव्योऽस्मि कथान्तरे ।
अप्रमत्तोत्थिता नित्यमाराधय गुरुं मम ॥ १५
देवयान्युवाच ।
यदि मां धर्मकामार्थे प्रत्याख्यास्यसि याचितः ।
ततः कच न ते विद्या सिद्धिमेषा गमिष्यति १६
कच उवाच ।
गुरुपुत्रीति कृत्वाऽहं प्रत्याचक्षे न दोषतः ।
गुरुणा चाननुज्ञातः काममेवं शपस्व माम् ॥ १७
आर्षं धर्मं ब्रुवाणोऽहं देवयानि यथा त्वया ।
शप्तो ह्यनर्हः शापस्य कामतोऽद्य न धर्मतः ॥ १८
तस्माद्भवत्या यः कामो न तथा स भविष्यति ।
ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति १९
फलिष्यति न ते विद्या यत्त्वं मामात्थ तत्तथा ।
अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति २०
वैशंपायन उवाच ।
एवमुक्त्वा द्विजश्रेष्ठो देवयानीं कचस्तदा ।
त्रिदशेशालयं शीघ्रं जगाम द्विजसत्तमः ॥ २१
तमागतमभिप्रेक्ष्य देवा इन्द्रपुरोगमाः ।
बृहस्पतिं सभाज्येदं कचं वचनमब्रुवन् ॥ २२
देवा ऊचुः ।
यत्त्वयास्मद्धितं कर्म कृतं वै परमाद्भुतम् ।
न ते यशः प्रणशिता भागभाक्च भविष्यसि २३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

समावृत्तव्रतं समाप्तव्रतम् ॥ १ ॥ गुरुः पुत्रो यस्य अङ्गिरसः पुत्रः पौत्रः ॥ ९ ॥ उत्थिता अनलसा ॥ १५ ॥ अननुज्ञातस्त्वदुक्तकार्ये ॥ १७ ॥ प्रणशिता प्रणङ्क्ष्यति ॥ २३ ॥ एकसप्ततितमोऽध्यायः ॥ ७१ ॥

## द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

स्वर्गप्रत्यागतात्कचात्संजीविन्यध्ययनेन देवानां कृतार्थता ॥ १ ॥ शुक्रवृषपर्वणोर्विरोधोत्पादनार्थमिन्द्रकृतं कन्यानां वस्त्रमिश्रणम् ॥ २ ॥ वस्त्रमिश्रणेन शर्मिष्ठादेवयान्योर्विरोधः ॥ ३ ॥ शर्मिष्ठया कूपे प्रक्षिप्ताया देवयान्या ययातिना कूपादुद्धरणम् ॥ ४ ॥ शुक्रस्य कूपसमीपागमनं देवयानीसान्त्वनं च ॥ ५ ॥

---

वैशंपायन उवाच ।
कृतविद्ये कचे प्राप्ते हृष्टरूपा दिवौकसः ।
कचादधीत्य तां विद्यां कृतार्था भरतर्षभ ॥ १
सर्व एव समागम्य शतक्रतुमथाब्रुवन् ।
कालस्ते विक्रमस्याद्य जहि शत्रून्पुरन्दर ॥ २
वैशंपायन उवाच ।
एवमुक्तस्तु सहितैस्त्रिदशैर्मघवांस्तदा ।
तथेत्युक्त्वा प्रचक्राम सोऽपश्यत वने स्त्रियः ॥३
क्रीडन्तीनां तु कन्यानां वने चैत्ररथोपमे ।
वायुभूतः स वस्त्राणि सर्वाण्येव व्यमिश्रयत् ॥ ४
ततो जलात्समुत्तीर्य कन्यास्ताः सहितास्तदा ।
वस्त्राणि जगृहुस्तानि यथाऽऽसन्नान्यनेकशः ॥५
तत्र वासो देवयान्याः शर्मिष्ठा जगृहे तदा ।
व्यतिमिश्रमजानन्ती दुहिता वृषपर्वणः ॥ ६
ततस्तयोर्मिथस्तत्र विरोधः समजायत ।
देवयान्याश्च राजेन्द्र शर्मिष्ठायाश्च तत्कृते ॥ ७
देवयान्युवाच ।
कस्माद्गृह्णासि मे वस्त्रं शिष्या भूत्वा ममासुरि ।
समुदाचारहीनाया न ते साधु भविष्यति ॥ ८
शर्मिष्ठोवाच ।
आसीनं च शयानं च पिता ते पितरं मम ।
स्तौति बन्दीव चाभीक्ष्णं नीचैः स्थित्वा विनीतवत्
याचतस्त्वं हि दुहिता स्तुवतः प्रतिगृह्णतः ।
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥ १०
आदुन्वस्व विदुन्वस्व द्रुह्य कुप्यस्व याचकि ।
अनायुधा सायुधाया रिक्ता क्षुभ्यसि भिक्षुकि ११
लप्स्यसे प्रतियोद्धारं न हि त्वां गणयाम्यहम् ।
'प्रतिकूलं वदसि चेदितःप्रभृति याचकि ॥' १२
वैशंपायन उवाच ।
समुच्छ्रयं देवयानीं गतां सक्तां च वाससि ।
शर्मिष्ठा प्राक्षिपत्कूपे ततः स्वपुरमागमत् ।
हतेयमिति विज्ञाय शर्मिष्ठा पापनिश्चया ॥ १३
अनवेक्ष्य ययौ वेश्म क्रोधवेगपरायणा ।
'प्रविश्य स्वगृहं स्वस्था धर्ममासुरमास्थिता ।'
अथ तं देशमभ्यागाद्ययातिर्नहुषात्मजः ॥ १४
श्रान्तयुग्यः श्रान्तहयो मृगलिप्सुः पिपासितः ।
स नाहुषः प्रेक्षमाण उदपानं गतोदकम् ॥ १५
ददर्श राजा तां तत्र कन्यामग्निशिखामिव ।
तामपृच्छत्स दृष्ट्वैव कन्याममरवर्णिनीम् ॥ १६
सान्त्वयित्वा नृपश्रेष्ठः साम्ना परमवल्गुना ।
का त्वं ताम्रनखी श्यामा सुमृष्टमणिकुण्डला १७
दीर्घं ध्यायसि चात्यर्थं कस्माच्छ्वसिषि चातुरा ।
कथं च पतिताऽस्यस्मिन्कूपे वीरुत्तृणावृते ॥ १८
दुहिता चैव कस्य त्वं वद सत्यं सुमध्यमे ।
देवयान्युवाच ।
योऽसौ देवैर्हतान्दैत्यानुत्थापयति विद्यया ॥१९
तस्य शुक्रस्य कन्याहं स मां नूनं न बुध्यते ।
एष मे दक्षिणो राजन्पाणिस्ताम्रनखाङ्गुलिः ॥२०
समुद्धर गृहीत्वा मां कुलीनस्त्वं हि मे मतः ।
जानामि हि त्वां संशान्तं वीर्यवन्तं यशस्विनम् २१
तस्मान्मां पतितामस्मात्कूपादुद्धर्तुमर्हसि ।
वैशंपायन उवाच ।
तामथो ब्राह्मणीं कन्यां विज्ञाय नहुषात्मजः ॥२२

---

प्रचक्राम भूतलं प्रतीति शेषः ॥ ३ ॥ समुदाचारः सदाचारः ॥ ८ ॥ आदुन्वस्व आभिमुख्येन वक्षस्ताडनादिना संतापं प्राप्नुहि । विदुन्वस्व पांसुषु लुण्ठनादिना । द्रुह्य द्रोहं चिरकालिकं क्रोधं कुरु । कुप्यस्व सद्यः परानिष्टफलो यत्नः कोपस्तं कुरु । रिक्ता दरिद्रा ॥ ११ ॥ प्रतियोद्धारं प्रहर्तारम् ॥ १२ ॥ युग्या रथवाहकाः । हयाः केवलाश्वाः । उदकं पीयतेऽस्मादित्युदपानं

गृहीत्वा दक्षिणे पाणावुज्जहार ततोऽवटात् ।
उद्धृत्य चैनां तरसा तस्मात्कूपान्नराधिपः ॥ २३
'ययातिरुवाच ।
गच्छ भद्रे यथाकामं न भयं विद्यते तव ।
इत्युच्यमाना नृपतिं देवयानीदमुत्तरम् ॥ २४
उवाच मामुपादाय गच्छ शीघ्रं प्रियो हि मे ।
गृहीताहं त्वया पाणौ तस्माद्भर्ता भविष्यसि॥२५
इत्येवमुक्तो नृपतिराह क्षत्रकुलोद्भवः ।
त्वं भद्रे ब्राह्मणी तस्मान्मया नार्हसि सङ्गमम् २६
सर्वलोकगुरुः काव्यस्त्वं तस्य दुहिता शुभे ।
तस्मादपि भयं मेऽद्य ततः कल्याणि नार्हसि॥२७
देवयान्युवाच ।
यदि मद्वचनान्नाद्य मां नेच्छसि नराधिप ।
त्वामेव वरये पित्रा तस्माल्लप्स्यसि गच्छ हि॥२८
वैशंपायन उवाच ।
आमन्त्रयित्वा सुश्रोणीं ययातिः स्वपुरं ययौ ।
गते तु नाहुषे तस्मिन्देवयान्यप्यनिन्दिता ॥ २९
क्वचिद्गत्वा च रुदती वृक्षमाश्रित्य धिष्ठिता ।
ततश्चिरायमाणायां दुहितर्यथ भार्गवः ॥ ३०
संस्मृत्योवाच धात्रीं तां दुहितुः स्नेहविक्लवः ।
धात्रि त्वमानय क्षिप्रं देवयानीं सुमध्यमाम् ३१
इत्युक्तमात्रे सा धात्री त्वरिताऽऽनयितुं गता ।
यत्रयत्र सखीभिः सा गता पदममार्गत ॥ ३२
सा ददर्श तथा दीनां श्रमार्तां रुदतीं स्थिताम् ।
वृत्तान्तं किमिदं भद्रे शीघ्रं वद पिताह्वयत् ॥३३
एवमुक्ताह धात्रीं तां शर्मिष्ठावृजिनं कृतम् ।
उवाच शोकसंतप्ता घूर्णिकामागतां पुरः' ॥ ३४
देवयान्युवाच ।
त्वरितं घूर्णिके गच्छ शीघ्रमाचक्ष्व मे पितुः ३५
नेदानीं संप्रवेक्ष्यामि नगरं वृषपर्वणः ।
वैशंपायन उवाच ।
सा तत्र त्वरितं गत्वा घूर्णिकाऽसुरमन्दिरम् ॥३६
दृष्ट्वा काव्यमुवाचेदं संभ्रमाविष्टचेतना ।
आचचक्षे महाप्राज्ञं देवयानीं वने हताम् ॥ ३७
शर्मिष्ठया महाभाग दुहित्रा वृषपर्वणः ।
श्रुत्वा दुहितरं काव्यस्तत्र शर्मिष्ठया हताम् ॥३८
त्वरया निर्ययौ दुःखान्मार्गमाणः सुतां वने ।
दृष्ट्वा दुहितरं काव्यो देवयानीं ततो वने॥ ३९
बाहुभ्यां संपरिष्वज्य दुःखितो वाक्यमब्रवीत् ।
आत्मदोषैर्नियच्छन्ति सर्वे दुःखसुखे जनाः ॥४०
मन्ये दुश्चरितं तेऽस्ति यस्येयं निष्कृतिः कृता ।
देवयान्युवाच ।
निष्कृतिर्मेऽस्तु वा मास्तु शृणुष्वावहितो मम ४१
शर्मिष्ठया यदुक्ताऽस्मि दुहित्रा वृषपर्वणः ॥
सत्यं किलैतत्सा प्राह दैत्यानामसि गायनः ॥४२
एवं हि मे कथयति शर्मिष्ठा वार्षपर्वणी ।
वचनं तीक्ष्णपरुषं क्रोधरक्तेक्षणा भृशम् ॥ ४३
स्तुवतो दुहिता नित्यं याचतः प्रतिगृह्णतः ।
अहं तु स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥ ४४
इदं मामाह शर्मिष्ठा दुहिता वृषपर्वणः ।
क्रोधसंरक्तनयना दर्पपूर्णा पुनः पुनः ॥ ४५
यद्यहं स्तुवतस्तात दुहिता प्रतिगृह्णतः ।
प्रसादयिष्ये शर्मिष्ठामित्युक्ता तु सखी मया ४६
'उक्ताप्येवं भृशं मां सा निगृह्य विजने वने ।
कूपे प्रक्षेपयामास प्रक्षिप्य गृहमागमत् ॥' ४७
शुक्र उवाच ।
स्तुवतो दुहिता न त्वं याचतः प्रतिगृह्णतः ।
अस्तोतुः स्तूयमानस्य दुहिता देवयान्यसि ॥ ४८
वृषपर्वैव तद्वेद शक्रो राजा च नाहुषः ।
अचिन्त्यं ब्रह्म निर्द्वन्द्वमैश्वरं हि बलं मम ॥ ४९
'जानामि जीविनीं विद्यां लोकेस्मिञ्शाश्वतीं ध्रुवम्
मृतः संजीवते जन्तुर्यया कमललोचने ॥ ५०
कत्थनं स्वगुणानां च कृत्वा तप्यति सज्जनः ।

कूपः ॥ १५ ॥ अवटाद्गर्तात् ॥ २३ ॥ घूर्णिकां दासीम् ॥३४॥ हतां ताडिताम् ॥ ३७ ॥ नियच्छन्ति प्रयच्छन्ति प्राप्नुवन्तीति भावः ॥ ४० ॥ एतदेवाह मन्ये इति । निष्कृतिः फलभोगेन निरसनम् ॥ ४१ ॥ इदं पूर्वोक्तम् ॥ ४५ ॥ नाहुषो ययातिः । मम ऐश्वरं निर्द्वन्द्वमप्रतिपक्षं बलमस्ति ॥ ४९ ॥ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

ततो वक्तुमशक्तोऽस्मि त्वं मे जानासि यद्बलम् ५१
तस्मादुत्तिष्ठ गच्छामः स्वगृहं कुलनन्दिनि ।
क्षमां कृत्वा विशालाक्षि क्षमासारा हि साधवः'५२
यच्च किंचित्सर्वगतं भूमौ वा यदि वा दिवि ।
तस्याहमीश्वरो नित्यं तुष्टेनोक्तः स्वयंभुवा ॥ ५३
अहं जलं विमुञ्चामि प्रजानां हितकाम्यया ।
पुष्णाम्यौषधयः सर्वा इति सत्यं ब्रवीमि ते ॥ ५४
वैशंपायन उवाच ।
एवं विषादमापन्नां मन्युना संप्रपीडिताम् ।
वचनैर्मधुरैः श्लक्ष्णैः सान्त्वयामास तां पिता५५

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

शुक्रदेवयानीसंवादः ॥ १ ॥

शुक्र उवाच ।
यः परेषां नरो नित्यमतिवादांस्तितिक्षते ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ १
यः समुत्पतितं क्रोधं निगृह्णाति हयं यथा ।
स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते ॥ २
यः समुत्पतितं क्रोधमक्रोधेन निरस्यति ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ ३
यः समुत्पतितं क्रोधं क्षमयेह निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ ४
यः संधारयते मन्युं योऽतिवादांस्तितिक्षते ।
यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम् ॥५
यो यजेदपरिश्रान्तो मासिमासि शतं समाः ।
न क्रुध्येद्यश्च सर्वस्य तयोरक्रोधनोऽधिकः ॥ ६
'तस्मादक्रोधनः श्रेष्ठः कामक्रोधौ विगर्हितौ ।
क्रुद्धस्य निष्फलान्येव दानयज्ञतपांसि च ॥ ७
तस्मादक्रोधने यज्ञतपोदानफलं महत् ।
भवेदसंशयं भद्रे नेतरस्मिन्कदाचन ॥ ८
न यतिर्न तपस्वी च न यज्वा न च धर्मभाक् ।
क्रोधस्य यो वशं गच्छेत्तस्य लोकद्वयं न च ॥९
पुत्रो भृत्यः सुहृद्भ्राता भार्या धर्मश्च सत्यता ।
तस्यैतान्यपयास्यन्ति क्रोधशीलस्य निश्चितम्॥१०
यत्कुमाराः कुमार्यश्च वैरं कुर्युरचेतसः ।
न तत्प्राज्ञोऽनुकुर्वीत न विदुस्ते बलाबलम् ॥११

देवयान्युवाच ।
वेदाहं तात बालाऽपि धर्माणां यदिहान्तरम् ।
अक्रोधे चातिवादे च वेद चापि बलाबलम्॥१२
'स्ववृत्तिमननुष्ठाय धर्ममुत्सृज्य तत्त्वतः ।'
शिष्यस्याशिष्यवृत्तेस्तु न क्षन्तव्यं बुभूषता ॥१३
'प्रेष्यः शिष्यः स्ववृत्तिं हि विसृज्य विफलं गतः ।'
तस्मात्संकीर्णवृत्तेषु वासो मम न रोचते ॥ १४
पुमांसो ये हि निन्दन्ति वृत्तेनाभिजनेन च ।
न तेषु निवसेत्प्राज्ञः श्रेयोऽर्थी पापबुद्धिषु ॥१५
ये त्वेनमभिजानन्ति वृत्तेनाभिजनेन वा ।
तेषु साधुषु वस्तव्यं स वासः श्रेष्ठ उच्यते ॥ १६
'सुयन्त्रितपरा नित्यं विहीनाश्च धनैर्वराः ।
दुर्वृत्ताः पापकर्माणश्चण्डाला धनिनोपि च ॥१७
नैव जात्या हि चण्डालाः स्वकर्मविहितैर्विना ।
धनाभिजनविद्यासु सक्ताश्चण्डालधर्मिणः ॥ १८
अकारणाश्च द्वेष्यन्ति परिवादं वदन्ति ते ।
साधोस्तत्र न वासोस्ति पापिभिः पापतां व्रजेत्॥
सुकृते दुष्कृते वापि यत्र सज्जति यो नरः ।
ध्रुवं रतिर्भवेत्तस्य तस्माद्द्वेषं न रोचयेत् ॥' २०
वाग्दुरुक्तं महाघोरं दुहितुर्वृषपर्वणः ।
मम मथ्नाति हृदयमग्निकाम इवारणिम् ॥ २१
न ह्यतो दुष्करतरं मन्ये लोकेष्वपि त्रिषु ।

रश्मिषु क्रोधफलभूताख्यापत्सु । पक्षे स्पष्टोऽर्थः ॥ २ ॥ अक्रोधेन क्रोधविरोधिना सहनेन ॥ ३ ॥ त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

यः सपत्नश्रियं दीप्तां हीनश्रीः पर्युपासते ॥ २२
मरणं शोभनं तस्य इति विद्वज्जना विदुः ।
'अवमानमवाप्नोति शनैर्नीचसमागमात् ॥ २३
अतिवादा वक्रतो निःसरन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य वै मर्मसु ते पतन्ति
तस्माद्धीरो नैव मुच्येत्परेषु ॥ २४
निरोहेदायुधैश्छिन्नं संरोहेद्दग्धमग्निना ।
वाक्क्षतं च न संरोहेदाशरीरं शरीरिणाम् ॥ २५
संरोहति शरैर्विद्धं नवं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहेत वाक्क्षतम्' ॥ २६

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

---

## चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

शुक्रवृषपर्वणोः संवादः ॥ १ ॥ शुक्रकोपशान्तये वृषपर्वनियोगात् शर्मिष्ठया देवयानीदास्याङ्गीकारः ॥ २ ॥ प्रसन्नया देवयान्या सह शुक्रस्य पुरप्रवेशनम् ॥ ३ ॥

वैशंपायन उवाच ।
ततः काव्यो भृगुश्रेष्ठः समन्युरुपगम्य ह ।
वृषपर्वाणमासीनमित्युवाचाविचारयन् ॥ १
नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
शनैरावर्त्यमानो हि कर्तुर्मूलानि कृन्तति ॥ २
पुत्रेषु वा नप्तृषु वा न चेदात्मनि पश्यति ।
फलत्येव ध्रुवं पापं गुरुभुक्तमिवोदरे ॥ ३
'अधीयानं हितं राजन्क्षमावन्तं जितेन्द्रियम् ।'
यदघातयथा विप्रं कचमाङ्गिरसं तदा ।
अपापशीलं धर्मज्ञं शुश्रूषुं मद्गृहे रतम् ॥ ४
'शर्मिष्ठया देवयानी क्रूरमुक्ता बहु प्रभो ।
विप्रकृत्य च संरम्भात्कूपे क्षिप्ता मनस्विनी ॥ ५
सा न कल्पेत वासाय तयाहं रहितः कथम् ।
वसेयमिह तस्मात्ते त्यजामि विषयं नृप ॥' ६
वधादनर्हतस्तस्य वधाच्च दुहितुर्मम ।
वृषपर्वन्निबोधेदं त्यक्ष्यामि त्वां सबान्धवम् ।
स्थातुं त्वद्विषये राजन्न शक्ष्यामि त्वया सह ॥७
'मा शोच वृषपर्वंस्त्वं मा क्रुध्यस्व विशांपते ।
स्थातुं ते विषये राजन्न शक्ष्यामि तया विना।
अस्या गतिर्गतिर्मह्यं प्रियमस्याः प्रियं मम ॥ ८
वृषपर्वोवाच ।
यदि ब्रह्मन्घातयामि यदि वा क्रोशयाम्यहम् ।
शर्मिष्ठया देवयानीं तेन गच्छाम्यसद्गतिम् ॥ ९
शुक्र उवाच ।'
अहो मामभिजानासि दैत्य मिथ्याप्रलापिनम् ।
यथेममात्मनो दोषं न नियच्छस्युपेक्षसे ॥ १०
वृषपर्वोवाच ।
नाधर्मं न मृषावादं त्वयि जानामि भार्गव ।
त्वयि धर्मश्च सत्यं च तत्प्रसीदतु नो भवान् ॥ ११
यद्यस्मानपहाय त्वमितो गच्छसि भार्गव ।
समुद्रं संप्रवेक्ष्यामि पूर्वं मद्बान्धवैः सह ॥ १२
पातालमथवा चाग्निं नान्यदस्ति परायणम् ।
यद्येव देवान्गच्छेस्त्वं मां च त्यक्त्वा ग्रहाधिप ।
सर्वत्यागं ततः कृत्वा प्रविशामि हुताशनम्' ॥ १३
शुक्र उवाच ।
समुद्रं प्रविशध्वं वा दिशो वा द्रवतासुराः ।
दुहितुर्नाप्रियं सोढुं शक्तोऽहं दयिता हि मे ॥ १४
प्रसाद्यतां देवयानी जीवितं यत्र मे स्थितम् ।
योगक्षेमकरस्तेऽहमिन्द्रस्येव बृहस्पतिः ॥ १५
वृषपर्वोवाच ।
यत्किंचिदसुरेन्द्राणां विद्यते वसु भार्गव ।
भुवि हस्तिगवाश्वं च तस्य त्वं मम चेश्वरः ॥ १६
शुक्र उवाच ।
यत्किंचिदस्ति द्रविणं दैत्येन्द्राणां महासुर ।
तस्येश्वरोस्मि यद्येषा देवयानी प्रसाद्यताम् ॥ १७

वैशंपायन उवाच ।
एवमुक्तस्तथेत्याह वृषपर्वा महाकविम् ।
देवयान्यन्तिकं गत्वा तमर्थं प्राह भार्गवः ॥१८
देवयान्युवाच ।
यदि त्वमीश्वरस्तात राज्ञो वित्तस्य भार्गव ।
नाभिजानामि तत्तेऽहं राजा तु वदतु स्वयम् १९
'वैशंपायन उवाच ।
शुक्रस्य वचनं श्रुत्वा वृषपर्वा सबान्धवः ।
देवयानि प्रसीदेति पपात भुवि पादयोः ॥ २०
वृषपर्वोवाच ।
स्तुत्यो वन्द्यश्च सततं मया तातश्च ते शुभे ।'
यं काममभिकामाऽसि देवयानि शुचिस्मिते ।
तत्तेऽहं संप्रदास्यामि यदि वापि हि दुर्लभम् २१
देवयान्युवाच ।
दासीं कन्यासहस्रेण शर्मिष्ठामभिकामये ।
अनु मां तत्र गच्छेत्सा यत्र दद्याच्च मे पिता ॥ २२
वृषपर्वोवाच ।
उत्तिष्ठ त्वं गच्छ धात्रि शर्मिष्ठां शीघ्रमानय ।
यं च कामयते कामं देवयानी करोतु तम् ॥२३
'त्यजेदेकं कुलस्यार्थे ग्रामार्थे च कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्'॥२४
वैशंपायन उवाच ।
ततो धात्री तत्र गत्वा शर्मिष्ठां वाक्यमब्रवीत् ।
उत्तिष्ठ भद्रे शर्मिष्ठे ज्ञातीनां सुखमावह ॥ २५
त्यजति ब्राह्मणः शिष्यान्देवयान्या प्रचोदितः ।
सा यं कामयते कामं स कार्योऽद्य त्वयाऽनघे ॥२६
शर्मिष्ठोवाच ।
यं सा कामयते कामं करवाण्यहमद्य तम् ।
यद्येवमाह्वयेच्छुक्रो देवयानीकृते हि माम् ।
मद्दोषान्मागमच्छुक्रो देवयानी च मत्कृते ॥ २७
वैशंपायन उवाच ।
ततः कन्यासहस्रेण वृता शिबिकया तदा ।
पितुर्नियोगात्त्वरिता निश्चक्राम पुरोत्तमात् ॥२८
शर्मिष्ठोवाच ।
अहं दासीसहस्रेण दासी ते परिचारिका ।
अनु त्वां तत्र यास्यामि यत्र दास्यति ते पिता २९
देवयान्युवाच ।
स्तुवतो दुहिताऽहं ते याचतः प्रतिगृह्णतः ।
स्तूयमानस्य दुहिता कथं दासी भविष्यसि ॥३०
शर्मिष्ठोवाच ।
येनकेनचिदार्तानां ज्ञातीनां सुखमावहेत् ।
अतस्त्वामनुयास्यामि यत्र दास्यति ते पिता ३१
वैशंपायन उवाच ।
प्रतिश्रुते दासभावे दुहित्रा वृषपर्वणः ।
देवयानी नृपश्रेष्ठ पितरं वाक्यमब्रवीत् ॥ ३२
देवयान्युवाच ।
प्रविशामि पुरं तात तुष्टाऽस्मि द्विजसत्तम ।
अमोघं तव विज्ञानमस्ति विद्याबलं च ते ॥ ३३
वैशंपायन उवाच ।
एवमुक्तो दुहित्रा स द्विजश्रेष्ठो महायशाः ।
प्रविवेश पुरं हृष्टः पूजितः सर्वदानवैः ॥ ३४

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

मृगयार्थं गतस्य ययातेः पुनर्देवयानीसमागमः ॥ १ ॥ शुक्राज्ञया तयोर्विवाहः ॥ २ ॥ देवयानीशर्मिष्ठाभ्यां सह ययातेः स्वपुरप्रवेशः ॥ ३ ॥

वैशंपायन उवाच ।
अथ दीर्घस्य कालस्य देवयानी नृपोत्तम ।
वनं तदेव निर्याता क्रीडार्थं वरवर्णिनी ॥ १
तेन दासीसहस्रेण सार्धं शर्मिष्ठया तदा ।
तमेव देशं संप्राप्ता यथाकामं चचार सा ॥ २
ताभिः सखीभिः सहिता सर्वाभिर्मुदिता भृशम् ।

क्रीडन्त्योऽभिरताः सर्वाः पिबन्त्यो मधुमाधवीं३
खादन्त्यो विविधान्भक्ष्यान्विदशन्त्यः फलानि च
पुनश्च नाहुषो राजा मृगलिप्सुर्यदृच्छया ॥ ४
तमेव देशं संप्राप्तो जलार्थी श्रमकर्शितः ।
ददर्श देवयानीं स शर्मिष्ठां ताश्च योषितः ॥ ५
पिबन्तीर्ललमानाश्च दिव्याभरणभूषिताः ।
आसनप्रवरे दिव्ये सर्वरत्नविभूषिते ।
उपविष्टां च ददृशे देवयानीं शुचिस्मिताम् ॥ ६
रूपेणाप्रतिमां तासां स्त्रीणां मध्ये वराङ्गनाम् ।
'आसनाच्च ततः किंचिद्विहीनां हेमभूषिताम् ॥७
असुरेन्द्रसुतां चापि निषण्णां चारुहासिनीम् ।
ददर्श पादौ विप्रायाः संवहन्तीमनिन्दिताम् ॥८
गायन्त्योऽथ प्रनृत्यन्त्यो वादयन्त्योऽथ भारत ।
दृष्ट्वा ययातिमतुलं लज्जयाऽवनताः स्थिताः ॥' ९
ययातिरुवाच ।
द्वाभ्यां कन्यासहस्राभ्यां द्वे कन्ये परिवारिते ।
गोत्रे च नामनी चैव द्वयोः पृच्छाम्यहं शुभे १०
देवयान्युवाच ।
आख्यास्याम्यहमादत्स्व वचनं मे नराधिप ।
शुक्रो नामासुरगुरुः सुतां जानीहि तस्य माम् ११
इयं च मे सखी दासी यत्राहं तत्र गामिनी ।
दुहिता दानवेन्द्रस्य शर्मिष्ठा वृषपर्वणः ॥ १२
ययातिरुवाच ।
कथं तु ते सखी दासी कन्येयं वरवर्णिनी ।
असुरेन्द्रसुता सुभ्रूः परं कौतूहलं हि मे ॥ १३
'नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ।
नैवंरूपा मया नारी दृष्टपूर्वा महीतले ॥ १४
श्रीरिवायतपद्माक्षी सर्वलक्षणशोभना ।
असुरेन्द्रसुता कन्या सर्वालङ्कारभूषिता ॥ १५
दैवेनोपहता सुभ्रूरुताहो तपसापि वा ।
अन्यथैषाऽनवद्याङ्गी दासी नेह भविष्यति १६
अस्या रूपेण ते रूपं न किंचित्सदृशं भवेत् ।
पुरा दुश्चरितेनेयं तव दासी भवत्यहो ॥' १७
देवयान्युवाच ।
सर्वं एव नरश्रेष्ठ विधानमनुवर्तते ।
विधानविहितं मत्वा मा विचित्राः कथाःकृथाः१८
राजवद्रूपवेषौ ते ब्राह्मीं वाचं बिभर्षि च ।
को नाम त्वं कुतश्चासि कस्य पुत्रश्च शंस मे॥१९
ययातिरुवाच ।
ब्रह्मचर्येण वेदो मे कृत्स्नः श्रुतिपथं गतः ।
राजाहं राजपुत्रश्च ययातिरिति विश्रुतः ॥ २०
देवयान्युवाच ।
केनास्यर्थेन नृपते इमं देशमुपागतः ।
जिघृक्षुर्वारिजं किंचिदथवा मृगलिप्सया ॥ २१
ययातिरुवाच ।
मृगलिप्सुरहं भद्रे पानीयार्थमुपागतः ।
बहुधाऽप्यनुयुक्तोऽस्मि तदनुज्ञातुमर्हसि ॥ २२
देवयान्युवाच ।
द्वाभ्यां कन्यासहस्राभ्यां दास्या शर्मिष्ठया सह ।
त्वदधीनाऽस्मि भद्रं ते सखा भर्ता च मे भव॥२३
'वैशंपायन उवाच ।
असुरेन्द्रसुतामीक्ष्य तस्यां सक्तेन चेतसा ।
शर्मिष्ठा महिषी मह्यमिति मत्वा वचोऽब्रवीत्'२४
ययातिरुवाच ।
विद्ध्यौशनसि भद्रं ते न त्वामर्होऽस्मि भामिनि ।
अविवाह्या हि राजानो देवयानि पितुस्तव ॥ २५
'परभार्या स्वसा श्रेष्ठा सगोत्रा पतिता स्नुषा ।
अवरा भिक्षुकाऽस्वस्था अगम्याः कीर्तिता बुधैः'
देवयान्युवाच ।
संसृष्टं ब्रह्मणा क्षत्रं क्षत्रेण ब्रह्म संहितम् ।
'अन्यत्वमस्ति न तयोरेकान्ततरमाश्रिते ।'
ऋषिश्चाप्यृषिपुत्रश्च नाहुषाङ्ग वहस्व माम् ॥ २७

---

मधुमाधवीं मधुवृक्षमदिराम् ॥ ३ ॥ विधानं दैवं अनुवर्तते अनुसृत्यास्ति ॥ १८ ॥ अर्थेन कार्येण । वारिजं मीनं पद्मादि वा ॥ २१ ॥ अनुयुक्तोस्मि पलायिते मृगे श्रान्तोस्मि ॥ २२ ॥ संसृष्टं उच्छिन्नस्य क्षत्रस्य ब्राह्मणवीर्यादेव पुनरुद्भवाद्ब्रह्मणा क्षत्रं संसृष्टम् । क्षत्रियकन्यासु लोपामुद्रादिषु ब्राह्मणानामुत्पत्तिदर्शनात्क्षत्रेण ब्रह्म संहितं मिश्रम् ॥ २७ ॥

यया‍तिरुवाच ।
एकदेहोद्भवा वर्णाश्चत्वारोऽपि वराङ्गने ।
पृथग्धर्माः पृथक्शौचास्तेषां तु ब्राह्मणो वरः २८
देवयान्युवाच ।
पाणिधर्मो नाहुषाऽयं न पुंभिः सेवितः पुरा ।
तं मे त्वमग्रहीरग्रे वृणोमि त्वामहं ततः ॥ २९
कथं नु मे मनस्विन्याः पाणिमन्यः पुमान्स्पृशेत् ।
गृहीतमृषिपुत्रेण स्वयं वाप्यृषिणा त्वया ॥ ३०
ययातिरुवाच ।
क्रुद्धादाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्रो ज्ञेयः पुंसा विजानता ॥ ३१
देवयान्युवाच ।
कथमाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्र इत्यात्थ पुरुषर्षभ ॥ ३२
ययातिरुवाच ।
एकमाशीविषो हन्ति शस्त्रेणैकश्च वध्यते ।
हन्ति विप्रः सराष्ट्राणि पुराण्यपि हि कोपितः॥३३
दुराधर्षतरो विप्रस्तस्माद्भीरु मतो मम ।
अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम् ३४
देवयान्युवाच ।
दत्तां वहस्व तन्मा त्वं पित्रा राजन्वृतो मया ।
अयाचतो भयं नास्ति दत्तां च प्रतिगृह्णतः॥३५
'तिष्ठ राजन्मुहूर्तं च प्रेषयिष्याम्यहं पितुः ।
गच्छ त्वं धात्रिके शीघ्रं ब्रह्मकल्पमिहानय ।
स्वयंवरे वृतं शीघ्रं निवेदय च नाहुषम्' ॥ ३६
वैशंपायन उवाच ।
त्वरितं देवयान्याथ संदिष्टं पितुरात्मनः ।
सर्वं निवेदयामास धात्री तस्मै यथातथम् ॥ ३७
श्रुत्वैव च स राजानं दर्शयामास भार्गवः ।
दृष्ट्वैव चागतं शुक्रं ययातिः पृथिवीपतिः ।
ववन्दे ब्राह्मणं काव्यं प्राञ्जलिः प्रणतः स्थितः ३८
देवयान्युवाच ।
राजायं नाहुषस्तात दुर्गमे पाणिमग्रहीत् ।
नान्यपूर्वगृहीतं मे तेनाहमभया कृता ।
नमस्ते देहि मामस्मै लोके नान्यं पतिं वृणे ॥३९
शुक्र उवाच ।
अन्यो धर्मः प्रियस्त्वन्यो वृतस्ते नाहुषः पतिः ।
कचशापात्त्वया पूर्वं नान्यद्भवितुमर्हति ॥ ४०
वृतोऽनया पतिर्वीर सुतया त्वं ममेष्टया ।
स्वयं ग्रहे महान्दोषो ब्राह्मण्या वर्णसंकरात् ।
गृहाणेमां मया दत्तां महिषीं नहुषात्मज ॥ ४१
ययातिरुवाच ।
अधर्मो न स्पृशेदेष महान्मामिह भार्गव ।
वर्णसंकरजो ब्रह्मन्निति त्वां प्रवृणोम्यहम् ॥ ४२
शुक्र उवाच ।
अधर्मात्त्वां विमुञ्चामि शृणु त्वं वरमीप्सितम् ।
अस्मिन्विवाहे मा म्लासीरहं पापं नुदामि ते ४३
वहस्व भार्यां धर्मेण देवयानीं सुमध्यमाम् ।
अनया सह संप्रीतिमतुलां समवाप्नुहि ॥ ४४
इयं चापि कुमारी ते शर्मिष्ठा वार्षपर्वणी ।
संपूज्या सततं राजन्मा चैनां शयने ह्वयेः ॥ ४५
रहस्येनां समाहूय न वदेर्न च संस्पृशेः ।
वहस्व भार्यां भद्रं ते यथा काममवाप्स्यसि ॥ ४६
वैशंपायन उवाच ।
एवमुक्तो ययातिस्तु शुक्रं कृत्वा प्रदक्षिणम् ।
शास्त्रोक्तविधिना राजा विवाहमकरोच्छुभम्॥४७
लब्ध्वा शुक्रान्महद्वित्तं देवयानीं तदोत्तमाम् ।
द्विसहस्रेण कन्यानां तथा शर्मिष्ठया सह ॥ ४८
संपूजितश्च शुक्रेण दैत्यैश्च नृपसत्तमः ।
जगाम स्वपुरं हृष्टोऽनुज्ञातोऽथ महात्मना ॥ ४९

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

एकस्येश्वरस्य देहो देहावयवाः मुखबाहूरुपादास्तदुद्भवाः ॥२८॥ मा मां भयं क्षत्रियेण ब्राह्मणीपरिणयनदोषजम् ॥ ३५ ॥ दुर्गमे संकटे ॥ ३९ ॥ ईप्सितं वरं च वृणीष्वेत्युक्तोऽपीदानीं न वृतवान् पश्चात्त्वन्यत्र जरासंक्रमणसामर्थ्यरूपः शुक्रेणैव स्वप्रतिज्ञासिद्धये दत्त इति ध्येयम् ॥ ४३ ॥ पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

देवयान्याः पुत्रोत्पत्तिः ॥ १ ॥ अशोकवनिकायां शर्मिष्ठाया ययातिसमागमात्पुत्रोत्पत्तिः ॥ २ ॥

वैशंपायन उवाच ।

ययातिः स्वपुरं प्राप्य महेन्द्रपुरसंनिभम् ।
प्रविश्यान्तःपुरं तत्र देवयानीं न्यवेशयत् ॥ १
देवयान्याश्चानुमते सुतां तां वृषपर्वणः ।
अशोकवनिकाभ्याशे गृहं कृत्वा न्यवेशयत् ॥ २
वृतां दासीसहस्रेण शर्मिष्ठां वार्षपर्वणीम् ।
वासोभिरन्नपानैश्च संविभज्य सुसत्कृताम् ॥ ३
देवयान्या तु सहितः स नृपो नहुषात्मजः ।
'प्रीत्या परमया युक्तो मुमुदे शाश्वतीः समाः॥४
अशोकवनिकामध्ये देवयानी समागता ।
शर्मिष्ठया सा क्रीडित्वा रमणीये मनोरमे ॥ ५
तत्रैव तां तु निर्दिश्य राज्ञा सह ययौ गृहम् ।
एवमेव सह प्रीत्या बहु कालं मुमोद च ॥' ६
विजहार बहूनब्दान्देववन्मुदितः सुखी ॥ ७
ऋतुकाले तु संप्राप्ते देवयानी वराङ्गना ।
लेभे गर्भं प्रथमतः कुमारं च व्यजायत ॥ ८
गते वर्षसहस्रे तु शर्मिष्ठा वार्षपर्वणी ।
ददर्श यौवनं प्राप्ता ऋतुं सा चान्वचिन्तयत् ॥९
'शुद्धा स्नाता तु शर्मिष्ठा सर्वालङ्कारशोभिता ।
अशोकशाखामालम्ब्य सुपुष्पस्तबकैर्वृताम् ॥ १०
आदर्शे मुखमुद्वीक्ष्य भर्तुर्दर्शनलालसा ।
शोकमोहसमाविष्टा वचनं चेदमब्रवीत् ॥ ११
अशोक शोकापनुद शोकोपहतचेतसाम् ।
त्वन्नामानं कुरुष्वाद्य प्रियसंदर्शनेन माम् ।
एवमुक्तवती सा तु शर्मिष्ठा पुनरब्रवीत् ॥' १२
ऋतुकालश्च संप्राप्तो न च मेऽस्ति वृतः पतिः ।
किं प्राप्तं किं नु कर्तव्यं किं वा कृत्वा सुखं भवेत् १३
देवयानी प्रजाताऽसौ वृथाऽहं प्राप्तयौवना ।
यथा तया वृतो भर्ता तथैवाहं वृणोमि तम्॥१४
राज्ञा पुत्रफलं देयमिति मे निश्चिता मतिः ।
अपीदानीं स धर्मात्मा ईयान्मे दर्शनं रहः ॥१५
'केशैर्बध्वा तु राजानं याचेऽहं सदृशं पतिम् ।
स्पृहेदिदं देवयानी पुत्रमीक्ष्य पुनःपुनः ।
क्रीडन्नन्तःपुरे तस्याः कचित्क्षणमवाप्य च ॥ १६
वैशंपायन उवाच ।'
अथ निष्क्रम्य राजाऽसौ तस्मिन्काले यदृच्छया ।
अशोकवनिकाभ्याशे शर्मिष्ठां प्राप तिष्ठतीम् १७
तमेकं रहिते दृष्ट्वा शर्मिष्ठा चारुहासिनी ।
प्रत्युद्गम्याञ्जलिं कृत्वा राजानं वाक्यमब्रवीत्॥१८

शर्मिष्ठोवाच ।

सोमस्येन्द्रस्य विष्णोर्वा यमस्य वरुणस्य वा ।
तव वा नाहुष गृहे कः स्त्रियं द्रष्टुमर्हति ॥ १९
रूपाभिजनशीलैर्हि त्वं राजन्वेत्थ मां सदा ।
सा त्वां याचे प्रसाद्याहमृतुं देहि नराधिप॥ २०

ययातिरुवाच ।

वेद्मि त्वां शीलसंपन्नां दैत्यकन्यामनिन्दिताम् ।
रूपं च ते न पश्यामि सूच्यग्रमपि निन्दितम् २१
'तदाप्रभृति दृष्ट्वा त्वां स्मराम्यनिशमुत्तमे' ।
अब्रवीदुशना काव्यो देवयानीं यदाऽवहम् ।
नेयमाह्वयितव्या ते शयने वार्षपर्वणी ॥ २२
'देवयान्याः प्रियं कृत्वा शर्मिष्ठामपि पोषय ॥' २३

शर्मिष्ठोवाच ।

न नर्मयुक्तमनृतं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ २४
पृष्टं तु साक्ष्ये प्रवदन्तमन्यथा
वदन्ति मिथ्या पतितं नरेन्द्र ।
एकार्थतायां तु समाहितायां
मिथ्या वदन्तं ह्यनृतं हिनस्ति ॥ २५
'अनृतं नानृतं स्त्रीषु परिहासविवाहयोः ।
आत्मप्राणार्थघाते च तदेवोत्तमतां व्रजेत् ॥' २६

ययातिरुवाच ।

राजा प्रमाणं भूतानां स नश्येत मृषा वदन् ।

अर्थकृच्छ्रमपि प्राप्य न मिथ्या कर्तुमुत्सहे ॥ २७
शर्मिष्ठोवाच ।
समावेतौ मतौ राजन्पतिः सख्याश्च यः पतिः ।
समं विवाहमित्याहुः सख्या मेऽसि वृतः पतिः॥
'सह दत्तासि काव्येन देवयान्या मनीषिणा ।
पूज्या पोषयितव्येति न मृषा कर्तुमर्हसि ॥' २९
सुवर्णमणिमुक्तानि वस्त्राण्याभरणानि च ।
याचितृणां ददासि त्वं गोभूम्यादीनि यानि च३०
बहिःस्थं दानमित्युक्तं न शरीराश्रितं नृप ।
दुष्करं पुत्रदानं च आत्मदानं च दुष्करम् ॥३१
शरीरदानात्तत्सर्वं दत्तं भवति मारिष ।
यस्य यस्य यथा कामस्तस्य तस्य ददाम्यहम् ३२
इत्युक्त्वा नगरे राजंस्त्रिकालं घोषितं त्वया ।
त्वयोक्तमनृतं राजन्वृथा घोषितमेव वा ।
तत्सत्यं कुरु राजेन्द्र यथा वैश्रवणस्तथा ॥ ३३
ययातिरुवाच ।
दातव्यं याचमानेभ्य इति मे व्रतमाहितम् ।
त्वं च याचसि मां कामं ब्रूहि किं करवाणि ते ॥ ३४
'धनं वा यदि वा किंचिद्राज्यं वाऽपि शुचिस्मिते ।'
शर्मिष्ठोवाच ।
अधर्मात्पाहि मां राजन्धर्मं च प्रतिपादय ॥ ३५
'नान्यं वृणे पुत्रकामा पुत्रात्परतरं न च ।'
त्वत्तोऽपत्यवती लोके चरेयं धर्ममुत्तमम् ॥ ३६
त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ ३७
'पुत्रार्थं भर्तृपोषार्थं स्त्रियः सृष्टाः स्वयंभुवा ।
अपतिर्वापि या कन्या अनपत्या च या भवेत् ।
तासां जन्म वृथा लोके गतिस्तासां न विद्यते ॥'३८
देवयान्या भुजिष्याऽस्मि वश्या च तव भार्गवी ।
सा चाहं च त्वया राजन्भजनीये भजस्व माम् ३९
वैशंपायन उवाच ।
एवमुक्तस्तु राजा स तथ्यमित्यभिजज्ञिवान् ।
पूजयामास शर्मिष्ठां धर्मं च प्रत्यपादयत् ॥ ४०
स समागम्य शर्मिष्ठां यथा काममवाप्य च ।
अन्योन्यं चाभिसंपूज्य जग्मतुस्तौ यथागतम्॥४१
तस्मिन्समागमे सुभ्रूः शर्मिष्ठा चारुहासिनी ।
लेभे गर्भं प्रथमतस्तस्मान्नृपतिसत्तमात् ॥ ४२
प्रजज्ञे च ततः काले राजन्राजीवलोचना ।
कुमारं देवगर्भाभं राजीवनिभलोचनम् ॥ ४३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

शर्मिष्ठापुत्रदर्शनेन देवयान्याः शर्मिष्ठया सह संवादः ॥ १ ॥ देवयानीशर्मिष्ठयोः पुत्रान्तरोत्पत्तिः ॥ २ ॥ शर्मिष्ठापुत्रान्ययातिजाञ्ज्ञात्वा कुपितायाः देवयान्याः शुक्रसमीपे गमनम् ॥ ३ ॥ ययातेः शुक्रशापाज्जराप्राप्तिः ॥ ४ ॥ तस्या अन्यस्मिन्संक्रमणरूपवरप्राप्तिः ॥ ५ ॥

वैशंपायन उवाच ।
'तस्मिन्नक्षत्रसंयोगे शुक्रे पुण्यर्क्षगेन्दुना ।
स राजा मुमुदे सम्राट् तया शर्मिष्ठया सह ॥ १
प्रजानां श्रीरिवाभ्याशे शर्मिष्ठा ह्यभवद्वधूः ।
पन्नगीवोग्ररूपा वै देवयानी ममाप्यभूत् ॥ २
पर्जन्य इव सस्यानां देवानाममृतं यथा ।
तद्वन्ममापि संभूता शर्मिष्ठा वार्षपर्वणी ।
इत्येवं मनसा ज्ञात्वा देवयानीमवर्जयत् ॥' ३
श्रुत्वा कुमारं जातं तु देवयानी शुचिस्मिता ।
चिन्तयामास दुःखार्ता शर्मिष्ठां प्रति भारत ॥ ४
अभिगम्य च शर्मिष्ठां देवयान्यब्रवीदिदम् ।
देवयान्युवाच ।
किमिदं वृजिनं सुभ्रु कृतं वै कामलुब्धया ॥ ५
शर्मिष्ठोवाच ।
ऋषिरभ्यागतः कश्चिद्धर्मात्मा वेदपारगः ।
स मया वरदः कामं याचितो धर्मसंहितम् ॥ ६

'अपत्यार्थे स तु मया वृतो वै चारुहासिनि' ।
नाहमन्यायतः काममाचरामि शुचिस्मिते ।
तस्माद्दषेर्ममापत्यमिति सत्यं ब्रवीमि ते ॥ ७
देवयान्युवाच ।
शोभनं भीरु यद्येवमथ स ज्ञायते द्विजः ।
गोत्रनामाभिजनतो वेत्तुमिच्छामि तं द्विजम् ॥८
शर्मिष्ठोवाच ।
तपसा तेजसा चैव दीप्यमानं यथा रविम् ।
तं दृष्ट्वा मम संप्रष्टुं शक्तिर्नासीच्छुचिस्मिते ॥ ९
देवयान्युवाच ।
यद्येतदेवं शर्मिष्ठे न मन्युर्विद्यते मम ।
अपत्यं यदि ते लब्धं ज्येष्ठाच्छ्रेष्ठाच्च वै द्विजात् १०
वैशंपायन उवाच ।
अन्योन्यमेवमुक्त्वा तु संप्रहस्य च ते मिथः ।
जगाम भार्गवी वेश्म तथ्यमित्यवजग्मुषी ॥ ११
ययातिर्देवयान्यां तु पुत्रावजनयन्नृपः ।
यदुं च तुर्वसुं चैव शक्रविष्णू इवापरौ ॥ १२
'तस्मिन्काले तु राजर्षिर्ययातिः पृथिवीपतिः ।
माध्वीकरससंयुक्तां मदिरां मदवर्धनीम् ॥ १३
पाययामास शुक्रस्य तनयां रक्तपिङ्गलाम् ।
पीत्वा पीत्वा च मदिरां देवयानी मुमोह सा १४
रुदती गायमाना च नृत्यन्ती च मुहुर्मुहुः ।
बहु प्रलपती देवी राजानमिदमब्रवीत् ॥ १५
राजवद्रूपवेषौ ते किमर्थं त्वमिहागतः ।
केन कार्येण संप्राप्तो निर्जनं गहनं वनम् ॥ १६
द्विजश्रेष्ठ नृपश्रेष्ठो ययातिश्चोग्रदर्शनः ।
तस्मादितः पलायस्व हितमिच्छसि चेद्द्विज ॥ १७
इत्येवं प्रलपन्तीं तां देवयानीं तु नाहुषः ।
भर्त्सयामास वचनैरनर्हां पापवर्धनीम् ॥ १८
ततो वर्षवरान्मूकान्व्यङ्गान्वृद्धांश्च पङ्गुकान् ।
रक्षणे देवयान्याः स पोषणे च शशास तान् १९
ततस्तु नाहुषो राजा शर्मिष्ठां प्राप्य बुद्धिमान् ।
रेमे च सुचिरं कालं तया शर्मिष्ठया सह ॥' २०
तस्मादेव तु राजर्षेः शर्मिष्ठा वार्षपर्वणी ।
द्रुह्युं चानुं च पूरुं च त्रीन्कुमारानजीजनत् ॥२१
ततः काले तु कस्मिंश्चिद्देवयानी शुचिस्मिता ।
ययातिसहिता राजञ्जगाम रहितं वनम् ॥ २२
ददर्श च तदा तत्र कुमारान्देवरूपिणः ।
क्रीडमानान्सुविश्रब्धान्विस्मिता चेदमब्रवीत् २३
देवयान्युवाच ।
'कस्यैते दारका राजन्देवपुत्रोपमाः शुभाः ।
वर्चसा रूपतश्चैव सदृशा मे मतास्तव ॥ २४
वैशंपायन उवाच ।
एवं पृष्ट्वा तु राजानं कुमारान्पर्यपृच्छत ॥ २५
तस्मिन्काले तु तच्छ्रुत्वा धात्री तेषां वचोऽब्रवीत् ।
किं न ब्रूत कुमारा वः पितरं वै द्विजर्षभम् ॥२६
कुमारा ऊचुः ।
ऋषिश्च ब्राह्मणश्चैव द्विजातिश्चैव नः पिता ।
शर्मिष्ठा नानृतं ब्रूते देवयानि क्षमस्व नः ॥'२७
देवयान्युवाच ।
किंनामधेयगोत्रो वः पुत्रका ब्राह्मणः पिता ।
प्रब्रूत तत्त्वतः क्षिप्रं कश्चासौ क्व च वर्तते ॥ २८
प्रब्रूत मे यथा तथ्यं श्रोतुमिच्छामि तं ह्यहम् ।
एवमुक्ताः कुमारास्ते देवयान्या सुमध्यया ॥२९
तेऽदर्शयन्प्रदेशिन्या तमेव नृपसत्तमम् ।
शर्मिष्ठां मातरं चैव तथाऽऽचख्युश्च दारकाः ॥३०
वैशंपायन उवाच ।
इत्युक्त्वा सहितास्ते तु राजानमुपचक्रमुः ।
नाभ्यनन्दत तान्राजा देवयान्यास्तदान्तिके ॥३१
रुदन्तस्तेऽथ शर्मिष्ठामभ्ययुर्बालकास्ततः ।
'अविब्रुवन्ती किंचिच्च राजानं चारुलोचना ॥३२
नातिदूराच्च राजानं सा चातिष्ठदवाङ्मुखी ।
श्रुत्वा तेषां तु बालानां सव्रीड इव पार्थिवः ॥३३
प्रतिवक्तुमशक्तोऽभूत्तूष्णींभूतोऽभवन्नृपः ।
दृष्ट्वा तु तेषां बालानां प्रणयं पार्थिवं प्रति ॥३४
बुद्ध्वा तु तत्त्वतो देवी शर्मिष्ठामिदमब्रवीत् ।
अभ्यागच्छति मां कश्चिदृषिरित्येवमब्रवीः ॥ ३५
ययातिमेवं राजानं त्वं गोपायसि भामिनि ।

पूर्वमेव मया प्रोक्तं त्वया तु वृजिनं कृतम् ॥३६
मदधीना सती कस्मादकार्षीर्विप्रियं मम ।
तमेवाऽऽसुरधर्मं त्वमास्थिता न बिभेषि मे॥'३७
शर्मिष्ठोवाच ।
यदुक्तमृषिरित्येव तत्सत्यं चारुहासिनि ।
न्यायतो धर्मतश्चैव चरन्ती न बिभेमि ते ॥ ३८
यदा त्वया वृतो भर्ता वृत एव तदा मया ।
सखीभर्ता हि धर्मेण भर्ता भवति शोभने ॥ ३९
पूज्यासि मम मान्या च ज्येष्ठा च ब्राह्मणी ह्यसि।
त्वत्तोपि मे पूज्यतमो राजर्षिः किं न वेत्थ तत्॥४०
'त्वत्पित्रा मम गुरुणा सह दत्ते उभे शुभे ।
ततो भर्ता च पूज्यश्च पोष्यां पोषयतीह माम् ४१
वैशंपायन उवाच ।
श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदम् ।
रमस्वेह यथाकामं देव्या शर्मिष्ठया सह ॥ ४२
राजन्नाद्येह वत्स्यामि विप्रियं मे कृतं त्वया ।
इति जज्वाल कोपेन देवयानी ततो भृशम् ॥ ४३
निर्दहन्तीव सव्रीडां शर्मिष्ठां समुदीक्ष्य च ।
अपविध्य च सर्वाणि भूषणान्यसितेक्षणा ॥' ४४
सहसोत्पतितां श्यामां दृष्ट्वा तां साश्रुलोचनाम् ।
तूर्णं सकाशं काव्यस्य प्रस्थितां व्यथितस्तदा ४५
अनुवव्राज संभ्रान्तः पृष्ठतः सान्त्वयन्नृपः ।
न्यवर्तत नचैव स्म क्रोधसंरक्तलोचना ॥ ४६
अविब्रुवन्ती किंचित्सा राजानं साश्रुलोचना ।
अचिरादेव संप्राप्ता काव्यस्योशनसोऽन्तिकम् ४७
सा तु दृष्ट्वैव पितरमभिवाद्याग्रतः स्थिता ।
अनन्तरं ययातिस्तु पूजयामास भार्गवम् ॥ ४८
देवयान्युवाच ।
अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम् ।
शर्मिष्ठयाऽतिवृत्ताऽस्मि दुहित्रा वृषपर्वणः ॥ ४९
त्रयोऽस्यां जनिताः पुत्रा राज्ञाऽनेन ययातिना ।
दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते ॥ ५०
धर्मज्ञ इति विख्यात एष राजा भृगूद्वह ।
अतिक्रान्तश्च मर्यादां काव्यैतत्कथयामि ते ॥५१
शुक्र उवाच ।
धर्मज्ञः सन्महाराज योऽधर्ममकृथाः प्रियम् ।
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्जया ॥ ५२
ययातिरुवाच ।
ऋतुं वै याचमानाया भगवन्नान्यचेतसा ।
दुहितुर्दानवेन्द्रस्य धर्म्यमेतत्कृतं मया ॥ ५३
ऋतुं वै याचमानाया न ददाति पुमानृतुम् ।
भ्रूणहेत्युच्यते ब्रह्मन् स इह ब्रह्मवादिभिः ॥ ५४
अभिकामां स्त्रियं यश्च गम्यां रहसि याचितः ।
नोपैति स च धर्मेषु भ्रूणहेत्युच्यते बुधैः ॥ ५५
'यद्यद्वृणोति मां कश्चित्तत्तद्देयमिति व्रतम् ।
त्वया च सापि दत्ता मे नान्यं नाथमिहेच्छति'५६
इत्येतानि समीक्ष्याहं कारणानि भृगूद्वह ।
अधर्मभयसंविग्नः शर्मिष्ठामुपजग्मिवान् ।
'मत्वैतन्मे धर्म इति कृतं ब्रह्मन्क्षमस्व माम्॥'५७
शुक्र उवाच ।
नन्वहं प्रत्यवेक्ष्यस्ते मदधीनोऽसि पार्थिव ।
मिथ्याचारस्य धर्मेषु चौर्यं भवति नाहुष ॥ ५८
वैशंपायन उवाच ।
क्रुद्धेनोशनसा शप्तो ययातिर्नाहुषस्तदा ।
पूर्वं वयः परित्यज्य जरां सद्योऽन्वपद्यत ॥ ५९
ययातिरुवाच ।
अतृप्तो यौवनस्याहं देवयान्यां भृगूद्वह ।
प्रसादं कुरु मे ब्रह्मञ्जरेयं न विशेच्च माम् ॥ ६०
शुक्र उवाच ।
नाहं मृषा ब्रवीम्येतज्जरां प्राप्तोऽसि भूमिप ।
जरां त्वेतां त्वमन्यस्मिन्संक्रामय यदीच्छसि ॥६१
ययातिरुवाच ।
राज्यभाक्स भवेद्ब्रह्मन्पुण्यभाक्कीर्तिभाक्तथा ।
यो मे दद्याद्वयः पुत्रस्तद्भवाननुमन्यताम् ॥ ६२

---

अधरोत्तरं नीचस्याभिवृद्धिरुत्तमस्य ह्रासः । अतिवृत्तास्मि राज्ञः संकाशादपत्यत्रयाधिगमेनातिक्रान्तोल्लङ्घिताऽस्मि ॥ ४९ ॥ अधर्ममेव प्रियमकृथाः ॥ ५२ ॥ नान्यचेतसा न कामलोभेन ॥ ५३ ॥ प्रत्यवेक्ष्यः अस्मिन्मकर्मणि मदाज्ञापि त्वया प्रार्थनीयेति भावः ॥ ५८ ॥ ज्येष्ठस्य राज्याप्रदानजं पापम् ॥ ६२ ॥ सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

शुक्र उवाच ।
संक्रामयिष्यसि जरां यथेष्टं नहुषात्मज ।
मामनुध्याय भावेन न च पापमवाप्स्यसि ॥ ६३
वयो दास्यति ते पुत्रो यः स राजा भविष्यति ।
आयुष्मान्कीर्तिमांश्चैव बह्वपत्यस्तथैव च ॥ ६४

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

स्वजरामनङ्गीकुर्वतां यदुप्रभृतीनां ययातिना शापः ॥ १ ॥ तामङ्गीकुर्वतः पूरोर्वरदानम् ॥ २ ॥

वैशंपायन उवाच ।
जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव हि ।
पुत्रं ज्येष्ठं वरिष्ठं च यदुमित्यब्रवीद्वचः ॥ १
ययातिरुवाच ।
जरावली च मां तात पलितानि च पर्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥ २
त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ ३
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा स्वं प्रतिपत्स्यामि पाप्मानं जरया सह ॥४
यदुरुवाच ।
जरायां बहवो दोषाः पानभोजनकारिताः ।
तस्माज्जरां न ते राजन्ग्रहीष्य इति मे मतिः ॥ ५
सितश्मश्रुर्निरानन्दो जरया शिथिलीकृतः ।
वलीसङ्गतगात्रस्तु दुर्दर्शो दुर्बलः कृशः ॥ ६
अशक्तः कार्यकरणे परिभूतः स यौवतैः ।
सहोपजीविभिश्चैव तां जरां नाभिकामये ॥ ७
सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप ।
जरां ग्रहीतुं धर्मज्ञ तस्मादन्यं वृणीष्व वै ॥ ८
ययातिरुवाच ।
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मादराज्यभाक्तात प्रजा तव भविष्यति ॥ ९
'प्रत्याख्यातस्तु राजा स तुर्वसुं प्रत्युवाच ह ।'
तुर्वसो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन चरेयं वै विषयांस्तव पुत्रक ॥ १०
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥११
तुर्वसुरुवाच ।
न कामये जरां तात कामभोगप्रणाशिनीम् ।
बलरूपान्तकरणीं बुद्धिप्राणप्रणाशिनीम् ॥ १२
ययातिरुवाच ।
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मात्प्रजा समुच्छेदं तुर्वसो तव यास्यति ॥ १३
संकीर्णाचारधर्मेषु प्रतिलोमचरेषु च ।
पिशिताशिषु चान्त्येषु मूढ राजा भविष्यसि १४
गुरुदारप्रसक्तेषु तिर्यग्योनिगतेषु च ।
पशुधर्मेषु पापेषु म्लेच्छेषु त्वं भविष्यसि ॥ १५
वैशंपायन उवाच ।
एवं स तुर्वसुं शप्त्वा ययातिः सुतमात्मनः ।
शर्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत् ॥ १६
ययातिरुवाच ।
द्रुह्यो त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम् ।
जरां वर्षसहस्रं मे यौवनं स्वं ददस्व च ॥ १७
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह१८
द्रुह्युरुवाच ।
न गजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम् ।
वाग्भङ्गश्चास्य भवति तां जरां नाभिकामये ॥१९

वली त्वचःसंवलनम् । पलितानि केशरोम्णां शौक्ल्यम् । पर्यगुः परितः शरीरे गतानि प्राप्तानि। यौवने यौवनसाध्ये कामभोगे ॥ २ ॥ पाप्मानं भोगसामर्थ्येऽपि तदिच्छारूपं चित्तस्य दौस्थ्यम् । चरेयं भुञ्जीय ॥ ३ ॥ दोषाः कफाद्याधिक्याद्वमनादयः ॥ ५ ॥ तिर्यग्योनीनामिव गतं प्रकाशं मैथुनाद्याचरणं येषु तेषु ॥ १५ ॥

ययातिरुवाच ।
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्माद्द्रुह्यो प्रियः कामो न ते संपत्स्यते क्वचित् ॥
यत्राश्वरथमुख्यानामश्वानां स्याद्गतं न च ।
हस्तिनां पीठकानां च गर्दभानां तथैव च ॥२१
बस्तानां च गवां चैव शिबिकायास्तथैव च ।
उडुपप्लवसंतारो यत्र नित्यं भविष्यति ।
अराजा भोजशब्दं त्वं तत्र प्राप्स्यसि सान्वयः२२
ययातिरुवाच ।
अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
एकं वर्षसहस्रं तु चरेयं यौवनेन ते ॥ २३
अनुरुवाच ।
जीर्णः शिशुवदादत्ते कालेऽन्नमशुचिर्यथा ।
न जुहोति च कालेऽग्निं तां जरां नाभिकामये ॥
ययातिरुवाच ।
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
जरादोषस्त्वया प्रोक्तस्तस्मात्त्वं प्रतिलप्स्यसे ॥२५
प्रजाश्च यौवनप्राप्ता विनशिष्यन्त्यनो तव ।
अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि ॥ २६
वैशंपायन उवाच ।
प्रत्याख्यातश्चतुर्भिश्च शप्त्वा तान्यदुपूर्वकान् ।
पूरोः सकाशमगमन्मत्त्वा पूरुमलङ्घनम् ॥ २७
ययातिरुवाच ।
पूरो त्वं मे प्रियः पुत्रस्त्वं वरीयान्भविष्यसि ।
जरा वली च मां तात पलितानि च पर्यगुः ॥२८
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ।
पूरो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
कंचित्कालं चरेयं वै विषयान्वयसा तव ॥ २९
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥३०
वैशंपायन उवाच ।
एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा ।
यदात्थ मां महाराज तत्करिष्यामि ते वचः ॥३१
'गुरोर्वै वचनं पुण्यं स्वर्ग्यमायुष्करं नृणाम् ।
गुरुप्रसादात्त्रैलोक्यमन्वशासच्छतक्रतुः ॥ ३२
गुरोरनुमतं प्राप्य सर्वान्कामानवाप्नुयात् ।
यावदिच्छसि तावच्च धारयिष्यामि ते जराम्' ३३
प्रतिपत्स्यामि ते राजन्पाप्मानं जरया सह ।
गृहाण यौवनं मत्तश्चर कामान्यथेप्सितान् ॥३४
जरयाहं प्रतिच्छन्नो वयोरूपधरस्तव ।
यौवनं भवते दत्त्वा चरिष्यामि यथात्थ माम् ३५
ययातिरुवाच ।
पूरो प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते ।
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥ ३६
वैशंपायन उवाच ।
एवमुक्त्वा ययातिस्तु स्मृत्वा काव्यं महातपाः ।
संक्रामयामास जरां तदा पूरौ महात्मनि ॥ ३७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

## ऊनाशीतितमोऽध्यायः ॥ ७९ ॥

विषयानुभवेन ययातेर्वैराग्यप्राप्तिः ॥ १ ॥ पूरोः ययातिना यौवनप्रत्यर्पणम् ॥ २ ॥ तस्य राज्याभिषेकः ॥ ३ ॥ ययातेर्वनं प्रति गमनम् ॥ ४ ॥ यदुप्रभृतीनां वंशकथनम् ॥ ५ ॥

वैशंपायन उवाच ।
पौरवेणाथ वयसा ययातिर्नहुषात्मजः ।
'रूपयौवनसंपन्नः कुमारः समपद्यत ।'
प्रीतियुक्तो नृपश्रेष्ठश्चचार विषयान्प्रियान् ॥ १

पीठकानां राजयोग्यानां नरयानविशेषाणां तखतरावा इति म्लेच्छेषु प्रसिद्धानाम् ॥ २१ ॥ अग्निप्रस्कन्दनं श्रौतस्मार्तायग्निसाध्यकर्मत्यागस्तत्परः ॥ २६ ॥ वरीयान्स्वभ्रातृभ्यो महान् ।
जरा देहेन्द्रियशक्तिघातः ॥ २८ ॥ अञ्जसा आर्जवेन ॥ ३१ ॥ यथेप्सितान् यावज्जीवम् ॥ ३४ ॥ अष्टसप्ततितमोऽध्यायः ॥७८॥
चचार बुभोज ॥ १ ॥

यथाकामं यथोत्साहं यथाकालं यथासुखम् ।
धर्माविरुद्धं राजेन्द्रो यथा भवति सोऽन्वभूत्॥ २
देवानतर्पयद्यज्ञैः श्राद्धैस्तद्वत्पितॄनपि ।
दीनाननुग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ॥ ३
अतिथीनन्नपानैश्च विशश्च परिपालनैः ।
आनृशंस्येन शूद्रांश्च दस्यून्संनिग्रहेण च ॥ ४
धर्मेण च प्रजाः सर्वा यथावदनुरञ्जयन् ।
ययातिः पालयामास साक्षादिन्द्र इवापरः ॥ ५
स राजा सिंहविक्रान्तो युवा विषयगोचरः ।
अविरोधेन धर्मस्य चचार सुखमुत्तमम् ॥ ६
स संप्राप्य शुभान्कामांस्तृप्तः खिन्नश्च पार्थिवः ।
कालं वर्षसहस्रान्तं सस्मार मनुजाधिपः ॥ ७
परिसंख्याय कालज्ञः कलाः काष्ठाश्च वीर्यवान् ।
यौवनं प्राप्य राजर्षिः सहस्रपरिवत्सरान् ॥ ८
विश्वाच्या सहितो रेमे व्यभ्राजन्नन्दने वने ।
अलकायां स कालं तु मेरुशृङ्गे तथोत्तरे ॥ ९
यदा स पश्यते कालं धर्मात्मा तं महीपतिः ।
पूर्णं मत्वा ततः कालं पूरुं पुत्रमुवाच ह ॥ १०
यथाकामं यथोत्साहं यथाकालमरिन्दम ।
सेविता विषयाः पुत्र यौवनेन मया तव ॥ ११
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १२
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् १३
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम्॥
पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः ।
तथाप्यनुदिनं तृष्णा ममैतेष्वभिजायते ॥ १५
तस्मादेनामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह१६
पूरो प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौवनम् ।
राज्यं चेदं गृहाण त्वं 'यावदिच्छसि यौवनम् ।
तावद्दीर्घायुषा भुङ्क्ष्व' त्वं हि मे प्रियकृत्सुतः॥१७

वैशंपायन उवाच ।'
प्रतिपेदे जरां राजा ययातिर्नाहुषस्तदा ।
यौवनं प्रतिपेदे च पूरुः स्वं पुनरात्मवान् ॥ १८
अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसम् ।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥ १९
कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो ।
ज्येष्ठं यदुमतिक्रम्य राज्यं पूरोः प्रयच्छसि ॥ २०
यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्वसुः ।
शर्मिष्ठायाः सुतो द्रुह्युस्ततोऽनुः पूरुरेव च॥ २१
कथं ज्येष्ठानतिक्रम्य कनीयान्राज्यमर्हति ।
एतत्संबोधयामस्त्वां धर्मं त्वं प्रतिपालय ॥ २२

ययातिरुवाच ।
ब्राह्मणप्रमुखा वर्णाः सर्वे शृण्वन्तु मे वचः ।
ज्येष्ठं प्रति यथा राज्यं न देयं मे कथंचन ॥२३
मम ज्येष्ठेन यदुना नियोगो नानुपालितः ।
प्रतिकूलः पितुर्यश्च न स पुत्रः सतां मतः ॥ २४
मातापित्रोर्वचनकृद्धितः पथ्यश्च यः सुतः ।
स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु ॥ २५
'पुदिति नरकस्याख्या दुःखं च नरकं विदुः ।
पुतस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च ॥ २६
आत्मनः सदृशः पुत्रः पितृदेवर्षिपूजने ।
यो बहूनां गुणकरः स पुत्रो ज्येष्ठ उच्यते॥ २७
मूकोऽन्धो बधिरः श्वित्री स्वधर्मं नानुतिष्ठति ।
चोरः किल्बिषिकः पुत्रो ज्येष्ठो न ज्येष्ठ उच्यते २८
ज्येष्ठांशहारी गुणकृदिह लोके परत्र च ।
श्रेयान्पुत्रो गुणोपेतः स पुत्रो नेतरो वृथा ।
वदन्ति धर्मं धर्मज्ञाः पितॄणां पुत्रकारणात् ॥ २९
वेदोक्तं संभवं मह्यमनेन हृदयोद्भवम् ।
तस्य जातमिदं कृत्स्नमात्मा पुत्र इति श्रुतिः'३०
यदुनाऽहमवज्ञातस्तथा तुर्वसुनापि च ।
द्रुह्युना चानुना चैव मय्यवज्ञा कृता भृशम्॥३१
पूरुणा तु कृतं वाक्यं मानितं च विशेषतः ।

विषया दिव्यगन्धादयो गोचरे वशे यस्य स विषयगोचरः ॥ ६ ॥ अलकायां कुबेरपुर्याम् ॥ ९ ॥

कनीयसं कनीयांसम् ॥ १९ ॥

कनीयान्मम दायादो धृता येन जरा मम ॥ ३२
मम कामः स च कृतः पूरुणा मित्ररूपिणा ।
शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम् ॥३३
पुत्रो यस्त्वाऽनुवर्तेत स राजा पृथिवीपतिः ।
'यो वानुवर्ती पुत्राणां स पुत्रो दायभाग्भवेत्' ३४
भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम् ।

प्रकृतय ऊचुः ।

यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा ॥३५
सर्वमर्हति कल्याणं कनीयानपि सत्तमः ।
'वेदे धमार्थशास्त्रेषु मुनिभिः कथितं पुरा' ॥ ३६
अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव ।
वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् ॥ ३७

वैशंपायन उवाच ।

पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा ।
अभ्यषिञ्चत्ततः पूरुं राज्ये स्वे सुतमात्मनः ॥३८
'यदुं च तुर्वसुं चोभौ द्रुह्युं चैव महानुजम् ।
अन्तेषु स विनिक्षिप्य नाहुषः स्वात्मजान्सुतान्' ॥
दत्त्वा च पूरवे राज्यं वनवासाय दीक्षितः ।
पुरात्स निर्ययौ राजा ब्राह्मणैस्तापसैः सह ॥४०
'देवयान्या च सहितः शर्मिष्ठया च भारत ।
अकरोत्स वने राजा सभार्यस्तप उत्तमम्' ॥ ४१
यदोस्तु यादवा जातास्तुर्वसोर्यवनाः स्मृताः ।
द्रुह्योः सुतास्तु वै भोजा अनोस्तु म्लेच्छजातयः ४२
पूरोस्तु पौरवो वंशो यत्र जातोऽसि पार्थिव ।
इदं वर्षसहस्राणि राज्यं कारयितुं वशी ॥ ४३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि ऊनाशीतितमोऽध्यायः ॥ ७९ ॥

## ॥ उत्तरयायातारम्भः ॥

### अशीतितमोऽध्यायः ॥ ८० ॥

ययातेः स्वर्गगमनम् ॥ १ ॥

वैशंपायन उवाच ।

एवं स नाहुषो राजा ययातिः पुत्रमीप्सितम् ।
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः ॥१
उषित्वा च वने वासं ब्राह्मणैः संशितव्रतः ।
फलमूलाशनो दान्तस्ततः स्वर्गमितो गतः ॥ २
स गतः स्वर्निवासं तं निवसन्मुदितः सुखी ।
कालेन नातिमहता पुनः शक्रेण पातितः ॥ ३
'साधुभिः संगतिं लब्ध्वा पुनः स्वर्गमुपेयिवान् ।

जनमेजय उवाच ।

स्वर्गतश्च पुनर्ब्रह्मन्निवसन्देववेश्मनि ।
कालेन नातिमहता कथं शक्रेण पातितः' ॥ ४
निपतन्प्रच्युतः स्वर्गादप्राप्तो मेदिनीतलम् ।
स्थित आसीदन्तरिक्षे स तदेति श्रुतं मया ॥ ५
तत एव पुनश्चापि गतः स्वर्गमिति श्रुतम् ।
राज्ञा वसुमता सार्धमष्टकेन च वीर्यवान् ॥ ६
प्रतर्दनेन शिबिना समेत्य किल संसदि ।
कर्मणा केन स दिवं पुनः प्राप्तो महीपतिः ॥७
सर्वमेतदशेषेण श्रोतुमिच्छामि तत्त्वतः ।
कथ्यमानं त्वया विप्र विप्रर्षिगणसंनिधौ ॥ ८
देवराजसमो ह्यासीद्ययातिः पृथिवीपतिः ।
वर्धनः कुरुवंशस्य विभावसुसमद्युतिः ॥ ९
तस्य विस्तीर्णयशसः सत्यकीर्तेर्महात्मनः ।
चरितं श्रोतुमिच्छामि दिवि चेह च सर्वशः १०

वैशंपायन उवाच ।

हन्त ते कथयिष्यामि ययातेरुत्तरां कथाम् ।
दिवि चेह च पुण्यार्थां सर्वपापप्रणाशिनीम् ११
ययातिर्नाहुषो राजा पूरुं पुत्रं कनीयसम् ।
राज्येऽभिषिच्य मुदितः प्रावव्राज वनं तदा १२
अन्त्येषु स विनिक्षिप्य पुत्रान्यदुपुरोगमान् ।
फलमूलाशनो राजा वने संन्यवसच्चिरम् ॥ १३
शंसितात्मा जितक्रोधस्तर्पयन्पितृदेवताः ।
अग्नींश्च विधिवज्जुह्वन्वानप्रस्थविधानतः ॥ १४

अन्त्येषु म्लेच्छेषु ॥ १३ ॥

अथितीन्पूजयामास वन्येन हविषा विभुः ।
शिलोञ्छवृत्तिमास्थाय शेषान्नकृतभोजनः ॥ १५
पूर्णं वर्षसहस्रं च एवंवृत्तिरभून्नृपः ।
अब्भक्षः शरदस्त्रिंशदासीन्नियतवाङ्मनाः ॥ १६
ततश्च वायुभक्षोऽभूत्संवत्सरमतन्द्रितः ।
तथा पञ्चाग्निमध्ये च तपस्तेपे स वत्सरम् ॥ १७
एकपादः स्थितश्चासीत्षण्मासाननिलाशनः ।
पुण्यकीर्तिस्ततः स्वर्गं जगामावृत्य रोदसी ॥ १८

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

## एकाशीतितमोऽध्यायः ॥ ८१ ॥

इन्द्रययातिसंवादः ॥ १ ॥

वैशंपायन उवाच ।
स्वर्गतः स तु राजेन्द्रो निवसन्देववेश्मनि ।
पूजितस्त्रिदशैः साध्यैर्मरुद्भिर्वसुभिस्तथा ॥ १
देवलोकं ब्रह्मलोकं संचरन्पुण्यकृद्वशी ।
अवसत्पृथिवीपालो दीर्घकालमिति श्रुतिः ॥ २
स कदाचिन्नृपश्रेष्ठो ययातिः शक्रमागमत् ।
कथान्ते तत्र शक्रेण स पृष्टः पृथिवीपतिः ॥ ३
शक्र उवाच ।
यदा स पूरुस्तव रूपेण राज-
ञ्जरां गृहीत्वा प्रचचार भूमौ ।
तदा च राज्यं संप्रदायैव तस्मै
त्वया किमुक्तः कथयेह सत्यम् ॥ ४
ययातिरुवाच ।
गङ्गायमुनयोर्मध्ये कृत्स्नोयं विषयस्तव ।
मध्ये पृथिव्यास्त्वं राजा भ्रातरोऽन्त्याधिपास्तव ५
'न च कुर्यान्नरो दैन्यं शाठ्यं क्रोधं तथैव च ।
जैह्यं च मत्सरं वैरं सर्वत्रेदं न कारयेत् ॥ ६
मातरं पितरं ज्येष्ठं विद्वांसं च तपोधनम् ।
क्षमावन्तं च राजेन्द्र नावमन्येत बुद्धिमान् ॥ ७
शक्तस्तु क्षमते नित्यमशक्तः क्रुध्यते नरः ।
दुर्जनः सुजनं द्वेष्टि दुर्बलो बलवत्तरम् ॥ ८
रूपवन्तमरूपी च धनवन्तं च निर्धनः ।
अकर्मी कर्मिणं द्वेष्टि धार्मिकं च नधार्मिकः ॥९
निर्गुणो गुणवन्तं च पुत्रैतत्कलिलक्षणम् ।
विपरीतं च राजेन्द्र एतेषु कृतलक्षणम् ॥ १०
ब्राह्मणो वाथ वा राजा वैश्यो वा शूद्र एव वा ।
प्रशस्तेषु प्रसक्ताश्चेत्प्रशस्यन्ते यशस्विनः ॥ ११
तस्मात्प्रशस्ते राजेन्द्र नरः सक्तमना भवेत् ।
अलोकज्ञा ह्यप्रशस्ता भ्रातरस्ते ह्यबुद्धयः ॥ १२
अन्त्याधिपतयः सर्वे ह्यभवन्गुरुशासनात् ।
इन्द्र उवाच ।
त्वं हि धर्मविदो राजन्कत्थसे धर्ममुत्तमम् ।
कथयस्व पुनर्मेऽद्य लोकवृत्तान्तमुत्तमम् ॥ १३
ययातिरुवाच'
अक्रोधनः क्रोधनेभ्यो विशिष्ट-
स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषेभ्यो मानुषाश्च प्रधाना
विद्वांस्तथैवाविदुषः प्रधानः ॥ १४
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥१५
नारुन्तुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत ।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ १६
अरुन्तुदं परुषं तीक्ष्णवाचं
वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।

---

पञ्चाग्नयश्चत्वारोऽग्नयः पञ्चमः सूर्यः ॥ १७ ॥ आवृत्य व्याप्य । रोदसी द्यावाभूमी । पृथिव्यामिव स्वर्गेपि मुख्योऽभूदित्यर्थः ॥ १८ ॥ अशीतितमोऽध्यायः ॥ ८० ॥

अस्य आक्रोष्टुः सुकृतं तितिक्षुर्विन्दति । रुशतीं अकल्याणीं॥ १६॥

विद्यादलक्ष्मीकतमं जनानां
मुखे निबद्धां निर्ऋतिं वहन्तम् ॥ १७
सद्भिः पुरस्तादभिपूजितः स्या-
त्सद्भिस्तथा पृष्ठतो रक्षितः स्यात् ।
सदाऽसतामतिवादांस्तितिक्षे-
त्सतां वृत्तं चाददीतार्यवृत्तः ॥ १८
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य ये मर्मसु संपतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ १९
नहीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् २०
तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं क्वचित् ।
पूज्यान्संपूजयेद्दद्यान्न च याचेत्कदाचन ॥ २१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

## द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

स्वर्गतो ययातेः पतनं । अष्टकप्रश्नश्च ॥ १ ॥

इन्द्र उवाच ।
सर्वाणि कर्माणि समाप्य राजन्
गृहं परित्यज्य वनं गतोऽसि ।
तत्त्वां पृच्छामि नहुषस्य पुत्र
केनासि तुल्यस्तपसा ययाते ॥ १
ययातिरुवाच
नाहं देवमनुष्येषु गन्धर्वेषु महर्षिषु ।
आत्मनस्तपसा तुल्यं कंचित्पश्यामि वासव ॥ २
इन्द्र उवाच ।
यदाऽवमंस्थाः सदृशः श्रेयसश्च
अल्पीयसश्चाविदितप्रभावः ।
तस्माल्लोकास्त्वन्तवन्तस्तवेमे
क्षीणे पुण्ये पतिताऽस्यद्य राजन् ॥ ३
ययातिरुवाच ।
सुरर्षिगन्धर्वनरावमाना-
त्क्षयं गता मे यदि शक्रलोकाः ।
इच्छाम्यहं सुरलोकाद्विहीनः
सतां मध्ये पतितुं देवराज ॥ ४
इन्द्र उवाच ।
सतां सकाशे पतिताऽसि राजं-
श्च्युतः प्रतिष्ठां यत्र लब्धासि भूयः ।
एतद्विदित्वा च पुनर्ययाते
त्वं माऽवमंस्थाः सदृशः श्रेयसश्च ॥ ५
वैशंपायन उवाच ।
ततः प्रहायामरराजजुष्टा-
न्पुण्याँल्लोकान्पतमानं ययातिम् ।
संप्रेक्ष्य राजर्षिवरोऽष्टकस्त-
मुवाच सद्धर्मविधानगोप्ता ॥ ६
अष्टक उवाच ।
कस्त्वं युवा वासवतुल्यरूपः
स्वतेजसा दीप्यमानो यथाऽग्निः ।
पतस्युदीर्णाम्बुधरान्धकारा-
त्खात्खेचराणां प्रवरो यथाऽर्कः ॥ ७
दृष्ट्वा च त्वां सूर्यपथात्पतन्तं
वैश्वानरार्कद्युतिमप्रमेयम् ।
किं नु स्विदेतत्पततीति सर्वे
वितर्कयन्तः परिमोहिताः स्मः ॥ ८
दृष्ट्वा च त्वां धिष्ठितं देवमार्गे
शक्रार्कविष्णुप्रतिमप्रभावम् ।
अभ्युद्गतास्त्वां वयमद्य सर्वे
तत्त्वं प्रपाते तव जिज्ञासमानाः ॥ ९

निर्ऋतिं दुर्दैवताम् ॥ १७ ॥ संवननं वशीकरणम् ॥ २० ॥ एकाशीतितमोऽध्यायः ॥ ८१ ॥

अवमंस्थाः सर्वेभ्य आत्मन आधिक्योक्त्या । सदृशः सदृशान् ॥ ३ ॥ यत्र पतिता प्रतिष्ठां लब्धासि लप्स्यसि ॥ ५ ॥

न चापि त्वां धृष्णुमः प्रष्टुमग्रे
न च त्वमस्मान्पृच्छसि ये वयं स्मः ।
तत्त्वां पृच्छामि स्पृहणीयरूप
कस्य त्वं वा किंनिमित्तं त्वमागाः ॥ १०
भयं तु ते व्येतु विषादमोहौ
त्यजाशु चैवेन्द्रसमप्रभाव ।
त्वां वर्तमानं हि सतां सकाशे
नालं प्रसोढुं बलहाऽपि शक्रः ॥ ११
सन्तः प्रतिष्ठा हि सुखच्युतानां
सतां सदैवामरराजकल्प ।
ते सङ्गताः स्थावरजङ्गमेशाः
प्रतिष्ठितस्त्वं सदृशेषु सत्सु ॥ १२
प्रभुरग्निः प्रतपने भूमिरावपने प्रभुः ।
प्रभुः सूर्यः प्रकाशित्वे सतां चाभ्यागतः प्रभुः १३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

ययातेः स्वनामकथनपूर्वकं अष्टकेन सह संवादः ॥ १ ॥ तत्र ययातिना स्वस्य स्वर्गादधःपतनकारणकथनम् ॥ २ ॥

ययातिरुवाच ।
अहं ययातिर्नहुषस्य पुत्रः
पूरोः पिता सर्वभूतावमानात् ।
प्रभ्रंशितः सुरसिद्धर्षिलोका-
त्परिच्युतः प्रपताम्यल्पपुण्यः ॥ १
अहं हि पूर्वो वयसा भवद्भ्य-
स्तेनाभिवादं भवतां न प्रयुञ्जे ।
यो विद्यया तपसा जन्मना वा
वृद्धः स पूज्यो भवति द्विजानाम् ॥ २

अष्टक उवाच ।
अवादीस्त्वं वयसा यः प्रवृद्धः
स वै राजन्नाभ्यधिकः कथ्यते च ।
यो विद्यया तपसा संप्रवृद्धः
स एव पूज्यो भवति द्विजानाम् ॥ ३

ययातिरुवाच ।
प्रतिकूलं कर्मणां पापमाहु-
स्तद्वर्ततेऽप्रवणे पापलोक्यम् ।
सन्तोऽसतां नानुवर्तन्ति चैत-
द्यथा चैषामनुकूलास्तथाऽऽसन् ॥ ४
अभूद्धनं मे विपुलं गतं त-
द्विचेष्टमानो नाधिगन्ता तदस्मि ।
एवं प्रधार्यात्महिते निविष्टो
यो वर्तते स विजानाति जीवः ॥ ५
महाधनो यो यजते सुयज्ञै-
र्यः सर्वविद्यासु विनीतबुद्धिः ।
वेदानधीत्य तपसा योज्य देहं
दिवं स यायात्पुरुषो वीतमोहः ॥ ६
न जातु हृष्येन्महता धनेन
वेदानधीयीतानहंकृतः स्यात् ।

धृष्णुमः प्रगल्भामहे ॥ १० ॥ आवपने संग्रहे बीजावापे वा ॥ १३ ॥ द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

ययातिरपनीततपोविद्यागर्वत्वाद्वयोज्यैष्ठ्यमेव पुरस्कृत्याह । अहं हीति । तदेवोपपादयत्युत्तरार्धेन ॥ २ ॥ तदसहमानोऽष्टक आह । अवादीरिति । त्वं च विद्यातपःसंप्रवृद्ध इति भावः ॥ ३ ॥ विद्यातपसोः श्रैष्ठ्ये अष्टकेन स्तुते तत्र स्वानुभूतं विघ्नं दर्शयन्ययातिरुवाच । प्रतिकूलमिति । कर्मणां पुण्यानां प्रतिकूलं नाशकं पापं गर्वस्तच्चाप्रवणेऽनम्रे दर्पवति वर्तते । पापलोक्यं नरकप्रदम् । एतत्पापमसतां संबन्धि सन्तो नानुवर्तन्ते इदानीमपि । किंच प्राञ्चोपि सन्तो यथैषां कर्मणामनुकूला उपबृंहकाः स्युस्तथा तेन प्रकारेण दम्भदर्पादिराहित्येन आसन् । अहं त्वतद्विधत्वात्स्वर्गादिन्द्रेण च्यावित इत्याशयः ॥ ४ ॥ तद्दम्भादिराहित्येन प्रसिद्धं धनं पुण्यं मे मम विपुलं यदभूत्तद्गतं नष्टं दर्पादित्यर्थः । पुनरिदानीं तच्चेष्टमानोऽपि तत्पुनर्नाधिगन्तास्मि । एवं प्रधार्य मामिकां गतिं ज्ञात्वा य आत्महिते निविष्टो यो वर्तते स धीरो जानाति नान्य इत्यर्थः ॥ ५ ॥ एतदेवाह । न जात्विति

नानाभावा बहवो जीवलोके
　दैवाधीना नष्टचेष्टाधिकाराः ।
तत्तत्प्राप्य न विहन्येत धीरो
　दिष्टं बलीय इति मत्वाऽऽत्मबुद्ध्या ॥ ७
सुखं हि जन्तुर्यदि वाऽपि दुःखं
　दैवाधीनं विन्दते नात्मशक्त्या ।
तस्माद्दिष्टं बलवन्मन्यमानो
　न संज्वरेन्नापि हृष्येत्कथंचित् ॥ ८
दुःखैर्न तप्येन्न सुखैः प्रहृष्ये-
　त्समेन वर्तेत सदैव धीरः ।
दिष्टं बलीय इति मन्यमानो
　न संज्वरेन्नापि हृष्येत्कथंचित् ॥ ९
भये न मुह्याम्यष्टकाहं कदाचि-
　त्सन्तापो मे मानसो नास्ति कश्चित् ।
धाता यथा मां विदधीत लोके
　ध्रुवं तथाऽहं भवितेति मत्वा ॥ १०
संस्वेदजा अण्डजाश्चोद्भिदश्च
　सरीसृपाः कृमयोऽथाप्सु मत्स्याः ।
तथाश्मनस्तृणकाष्ठं च सर्वे
　दिष्टक्षये स्वां प्रकृतिं भजन्ति ॥ ११
अनित्यतां सुखदुःखस्य बुद्ध्वा
　कस्मात्संतापमष्टकाहं भजेयम् ।
किं कुर्यां वै किं च कृत्वा न तप्ये
　तस्मात्सन्तापं वर्जयाम्यप्रमत्तः ॥ १२

वैशंपायन उवाच ।

एवं ब्रुवाणं नृपतिं ययाति-
　मथाष्टकः पुनरेवान्वपृच्छत् ।
मातामहं सर्वगुणोपपन्नं
　तत्रस्थितं स्वर्गलोके यथावत् ॥ १३

अष्टक उवाच ।

ये ये लोकाः पार्थिवेन्द्रप्रधाना-
　स्त्वया भुक्ता यं च कालं यथावत् ।
तान्मे राजन्ब्रूहि सर्वान्यथाव-
　त्क्षेत्रज्ञवद्भाषसे त्वं हि धर्मान् ॥ १४

ययातिरुवाच ।

राजाऽहमासमिह सार्वभौम-
　स्ततो लोकान्महतश्चाजयं वै ।
तत्रावसं वर्षसहस्रमात्रं
　ततो लोकं परमस्म्यभ्युपेतः ॥ १५
ततः पुरीं पुरुहूतस्य रम्यां
　सहस्रद्वारां शतयोजनायताम् ।
अध्यावसं वर्षसहस्रमात्रं
　ततो लोकं परमस्म्यभ्युपेतः ॥ १६
ततो दिव्यमजरं प्राप्य लोकं
　प्रजापतेर्लोकपतेर्दुरापम् ।
तत्रावसं वर्षसहस्रमात्रं
　ततो लोकं परमस्म्यभ्युपेतः ॥ १७
स देवदेवस्य निवेशने च
　विहृत्य लोकानवसं यथेष्टम् ।
संपूज्यमानस्त्रिदशैः समस्तै-
　स्तुल्यप्रभावद्युतिरीश्वराणाम् ॥ १८
तथाऽऽवसं नन्दने कामरूपी
　संवत्सराणामयुतं शतानाम् ।
सहाप्सरोभिर्विहरन्पुण्यगन्धा-
　न्पश्यन्नगान्पुष्पितांश्चारुरूपान् ॥ १९
तत्र स्थितं मां देव सुखेषु सक्तं
　कालेऽतीते महति ततोऽतिमात्रम् ।

---

धनेन तपसा तर्हि त्वमेव कुतोऽहंकारं कृतवानित्यत आह । नानेति । जीवलोकेऽस्मिन् जीवा नानाभावाः पृथक्स्वभावाः केचिद्धर्मरुचयः केचिद्विपरीताः । यतो दैवाधीनाः । अतएव नष्टा वृथाभूता चेष्टा उद्योगोऽधिकारः सामर्थ्यं च येषां ते तथा । दृष्टा इति शेषः । मूढानां पुण्ये पण्डितानां पापे च प्रवृत्तिकरं दैवमेव बलवदित्यर्थः । एवं विद्वांस्तत्तत्प्राप्य तत्सुखं दुःखं वा प्राप्य न विहन्येत । हर्षविषादाभ्यामात्मानं न हिंस्यादित्यर्थः ॥ ७ ॥ एतदेव विवृणोति । सुखं हीति द्वाभ्याम् ॥ ८ ॥ भयं तु ते व्येतु विषादमोहाविति यदष्टकेनोक्तं तत्रोत्तरमाह । भये इति । धाता दिष्टं॥१०॥ अहमिवान्येऽपि दिष्टाधीना एवेत्याह । संस्वेदजा इति । एतेपि दिष्टक्षये पुण्यपापानुभवानन्तरम् । स्वां प्रकृतिं स्वकर्मशेषानुगुणां योनिं भजन्ति प्राप्नुवन्ति ॥ ११ ॥ अहं तु दिष्टक्षयाभावात्प्राप्तेपि दुःखे न तप्ये इत्याह । अनित्यतामिति ॥ १२ ॥ क्षेत्रज्ञवत् ज्ञानिवत् ॥ १४ ॥

दूतो देवानामब्रवीदुग्ररूपो
ध्वंसेत्युच्चैस्त्रिः प्लुतेन स्वरेण ॥ २०
एतावन्मे विदितं राजसिंह
ततो भ्रष्टोऽहं नन्दनात्क्षीणपुण्यः ।
वाचोऽश्रौषं चान्तरिक्षे सुराणां
सानुक्रोशाः शोचतां मां नरेन्द्र ॥ २१
अहो कष्टं क्षीणपुण्यो ययातिः
पतत्यसौ पुण्यकृत्पुण्यकीर्तिः ।
तानब्रुवं पतमानस्ततोऽहं
सतां मध्ये निपतेयं कथं नु ॥ २२
तैराख्याता भवतां यज्ञभूमिः
समीक्ष्य चेमां त्वरितमुपागतोऽस्मि ।
हविर्गन्धं देशिकं यज्ञभूमे-
र्धूमापाङ्गं प्रतिगृह्य प्रतीतः ॥ २३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## चतुरशीतितमोऽध्यायः ॥ ८४ ॥

मृतस्य स्वर्गादिभोगानन्तरं पुनर्जननप्रकारकथनम् ॥ १ ॥

अष्टक उवाच ।
यदाऽवसो नन्दने कामरूपी
संवत्सराणामयुतं शतानाम् ।
किं कारणं कार्तयुगप्रधान
हित्वा च त्वं वसुधामन्वपद्यः ॥ १
ययातिरुवाच ।
ज्ञातिः सुहृत्स्वजनो वा यथेह
क्षीणे वित्ते त्यज्यते मानवैर्हि ।
तथा तत्र क्षीणपुण्यं मनुष्यं
त्यजन्ति सद्यः सेश्वरा देवसङ्घाः ॥ २
अष्टक उवाच ।
तस्मिन्कथं क्षीणपुण्या भवन्ति
संमुह्यते मेऽत्र मनोऽतिमात्रम् ।
किं वा विशिष्टाः कस्य धामोपयान्ति
तद्वै ब्रूहि क्षेत्रवित्त्वं मतो मे ॥ ३
ययातिरुवाच ।
इमं भौमं नरकं ते पतन्ति
लालप्यमाना नरदेव सर्वे ।
ते कङ्कगोमायुबलाशनार्थे
क्षीणे पुण्ये बहुधा प्रव्रजन्ति ॥ ४
तस्मादेतद्वर्जनीयं नरेन्द्र
दुष्टं लोके गर्हणीयं च कर्म ।
आख्यातं ते पार्थिव सर्वमेव
भूयश्चेदानीं वद किं ते वदामि ॥ ५
अष्टक उवाच ।
यदा तु तान्वितुदन्ते वयांसि
तथा गृध्राः शितिकण्ठाः पतङ्गाः ।
कथं भवन्ति कथमाभवन्ति
न भौममन्यं नरकं शृणोमि ॥ ६

तैरिति । देशिकमुपदेष्टारमिव स्थितं । हविषां गन्धो यत्र तं धूमापाङ्गं धूमप्रान्तं प्रतिगृह्य आघ्राय प्रतीतः जातप्रत्ययः । ॥ २३ ॥ त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

कार्तयुगप्रधाना कृतयुगे भवाः कार्तयुगा अत्यन्तनिष्पापास्तेषां मुख्यतमेत्यर्थः ॥ १ ॥ तत्र क्षीणपुण्याः कथं किंप्रकारा भवन्ति । ततश्च किंविशिष्टाः कीदृशाः सन्तः कस्य धाम स्थानं यान्ति कं लोकं यान्तीत्यर्थः ॥ ३ ॥ तत्र कस्य धामेत्यस्योत्तरं इमं भौममिति । पुण्ये क्षीणे सति नरकं नरकोपमं भौमं भूसम्बन्धिनं इमं लोकं प्रति पतन्ति । कथं भवन्तीत्यस्योत्तरं ते कङ्केति । कङ्काश्च गोमायवश्च तेषां बलं सङ्घः तस्याशनार्थे अशनविषयीभूतैतद्देहरक्षणार्थे बहुधा प्रव्रजन्ति पर्यटन्ति ॥ ४ ॥ तस्मादेतत्काम्यकर्म दुष्टं निषिद्धं गर्हणीयम् ॥५॥ ननु कङ्कादिभक्षितस्य कथं स्वरूपसत्ता कथं वा शरीरान्तरेणाविर्भाव इति देहात्मवादमाश्रित्य शङ्कते । भौमो नरकश्च क इति

ययातिरुवाच ।

ऊर्ध्वं देहात्कर्मणो जृम्भमाणा-
व्यक्तं पृथिव्यामनुसंचरन्ति ।
इमं भौमं नरकं ते पतन्ति
नावेक्षन्ते वर्षपूगाननेकान् ॥ ७

षष्टिं सहस्राणि पतन्ति व्योम्नि
तथा अशीतिं परिवत्सराणि ।
तान्वै तुदन्ति पततः प्रपातं
भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ॥ ८

अष्टक उवाच ।

यदेनसस्ते पततस्तुदन्ति
भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ।
कथं भवन्ति कथमाभवन्ति
कथंभूता गर्भभूता भवन्ति ॥ ९

ययातिरुवाच ।

अस्रं रेतः पुष्पफलानुपृक्त-
मन्वेति तद्वै पुरुषेण सृष्टम् ।
स वै तस्या रज आपद्यते वै
स गर्भभूतः समुपैति तत्र ॥ १०

वनस्पतीनोषधीश्चाविशन्ति
आपो वायुं पृथिवीं चान्तरिक्षम् ।
चतुष्पदं द्विपदं चाति सर्व-
मेवंभूता गर्भभूता भवन्ति ॥ ११

अष्टक उवाच ।

अन्यद्वपुर्विदधातीह गर्भ-
मुताहोस्वित्स्वेन कायेन याति ।
आपद्यमानो नरयोनिमेता-
माचक्ष्व मे संशयात्प्रब्रवीमि ॥ १२

शरीरदेहातिसमुच्छ्रयं च
चक्षुःश्रोत्रे लभते केन संज्ञाम् ।
एतत्तत्त्वं सर्वमाचक्ष्व पृष्टः
क्षेत्रज्ञं त्वां तात मन्याम सर्वे ॥ १३

ययातिरुवाच ।

वायुः समुत्कर्षति गर्भयोनि-
मृतौ रेतः पुष्पफलानुपृक्तम् ।
स तत्र तन्मात्रकृताधिकारः
क्रमेण संवर्धयतीह गर्भम् ॥ १४

स जायमानो विगृहीतमात्रः
संज्ञामधिष्ठाय ततो मनुष्यः ।
स श्रोत्राभ्यां वेदयतीह शब्दं
स वै रूपं पश्यति चक्षुषा च ॥ १५

घ्राणेन गन्धं जिह्वयाऽथो रसं च
त्वचा स्पर्शं मनसा वेदभावम् ।
इत्यष्टकेहोपहितं हि विद्धि
महात्मनः प्राणभृतः शरीरे ॥ १६

---

पृच्छति च । यदा तु तानिति ॥ ६ ॥ ऊर्ध्वं देहात् देहक्षयानन्तरम् । जृम्भमाणात्प्रवृद्धात्कर्मणो हेतोः व्यक्तं स्थूलं शरीरं अनु अनुप्रविश्य जीवाः संचरन्ति कर्मफलानि भुञ्जते इति यत् तदेव भौमो नरकः । कुतोऽस्य नरकत्वमत आह । नावेक्षन्ते वर्षपूगाननेकान् यस्मादत्र पतिता गतं वयो न बुध्यन्ते कर्मभूमिं प्राप्यापि स्वहिताय न यतन्तेऽत इत्यर्थः । एतेन कङ्कादिभक्षितस्यापि सत्वं देहयोगश्चास्तीत्युक्तम् ॥ ७ ॥ षष्टिं सहस्राण्यशीतिं च सहस्राणि परिवत्सराणि व्योम्नि स्वर्गे स्थित्वा पतन्ति । दारादयो भौमा राक्षसाः । पातं भूमिस्थितिं प्रपततः अनुभवतः ॥ ८ ॥ यत् यान् एनसः पापाद्धेतोः पततः स्वर्गाच्च्यवमानान् ते राक्षसास्तुदन्ति ते पुरुषाः कथं भवन्ति प्रपातभ्रष्टा इव कथं न शीर्यन्ते । कथं वा आभवन्ति इन्द्रियादिमन्तो भवन्ति । कथं वा गर्भत्वं प्राप्नुवन्तीति प्रश्नत्रयम् ॥ ९ ॥ रेतः कर्तृ । अस्रं स्त्रीरजः कर्मभूतं अन्वेति । तद्द्वयं पुष्पफलादिभावेनानुपृक्तं कललादिरूपं भवति । तत् आहारादिवत्कथं न जीर्यत इत्यत आह । पुरुषेणेति । ईश्वरेणेत्यर्थः । रजः तदुपलक्षितान् धातून् । समुपैति दुःखादीनीति शेषः ॥ १० ॥ मातृउदरपर्यन्तं प्रवेशक्रममाह । वनस्पतीति ॥ ११ ॥ नरयोनिमापद्यमानो जीवः स्वेन कायेन जैवेनैव रूपेण गर्भं मातुरुदरं याति उत तत्र प्रवेष्टुमन्यद्वपुर्विदधाति ॥ १२ ॥ शरीरदेहातिसमुच्छ्रयं मातुः शरीरे गर्भदेहस्यातिसमुच्छ्रयं वृद्धिम् । चक्षुःश्रोत्रे इतीन्द्रियमात्रोपलक्षणम् ॥ १३ ॥ देहसमुच्छ्रयक्रममाह । वायुरिति । ऋतौ तत्काले वायुः गर्भयोनिं अस्रं प्रति रेतः समुत्कर्षति प्रापयति । ततश्च पुष्पफलानुपृक्तं कललादिरूपगर्भं सएव तत्र गर्भाशये क्रमेण संवर्धयति । कथंभूतः तन्मात्रे वृद्धिमात्रएव कृताधिकारः समर्थः ॥ १४ ॥ स जीवः विगृहीता मात्रा सूक्ष्मशरीरं येन सः ॥ १५ ॥ श्रोत्रादिकं इत्युपहितं संबद्धं विद्धि ॥ १६ ॥

अष्टक उवाच ।

यः संस्थितः पुरुषो दह्यते वा
निखन्यते वापि निकृष्यते वा ।
अभावभूतः स विनाशमेत्य
केनात्मानं चेतयते परस्तात् ॥ १७

ययातिरुवाच ।

हित्वा सोऽसून्सुप्तवन्निष्ठनित्वा
पुरोधाय सुकृतं दुष्कृतं वा ।
अन्यां योनिं पवनाग्रानुसारी
हित्वा देहं भजते राजसिंह ॥ १८

पुण्यां योनिं पुण्यकृतो व्रजन्ति
पापां योनिं पापकृतो व्रजन्ति ।
कीटाः पतङ्गाश्च भवन्ति पापा
न मे विवक्षास्ति महानुभाव ॥ १९

चतुष्पदा द्विपदाः षट्पदाश्च
तथाभूता गर्भभूता भवन्ति ।
आख्यातमेतन्निखिलेन सर्वं
भूयस्तु किं पृच्छसि राजसिंह ॥ २०

अष्टक उवाच ।

किंस्वित्कृत्वा लभते तात लोका-
न्मर्त्यः श्रेष्ठांस्तपसा विद्यया च ।
तन्मे पृष्टः शंस सर्वं यथाव-
च्छुभाँल्लोकान्येन गच्छेत्क्रमेण ॥ २१

ययातिरुवाच ।

तपश्च दानं च शमो दमश्च
ह्रीरार्जवं सर्वभूतानुकम्पा ।
स्वर्गस्य लोकस्य वदन्ति सन्तो
द्वाराणि सप्तैव महान्ति पुंसाम् ।
नश्यन्ति मानेन तमोऽभिभूताः
पुंसः सदैवेति वदन्ति सन्तः ॥ २२

अधीयानः पण्डितंमन्यमानो
यो विद्यया हन्ति यशः परेषाम् ।
तस्यान्तवन्तश्च भवन्ति लोका
न चास्य तद्ब्रह्म फलं ददाति ॥ २३

चत्वारि कर्माण्यभयङ्कराणि
भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ॥ २४

न मानमान्यो मुदमाददीत
न सन्तापं प्राप्नुयाच्चावमानात् ।
सन्तः सतः पूजयन्तीह लोके
नासाधवः साधुबुद्धिं लभन्ते ॥ २५

इति दद्यामिति यज इत्यधीय इति व्रतम् ।
इत्येतानि भयान्याहुस्तानि वर्ज्यानि सर्वशः॥२६

ये चाश्रयं वेदयन्ते पुराणं
मनीषिणो मानसमार्गरुद्धम् ।
तन्निःश्रेयस्तेन संयोगमेत्य
परां शान्तिं प्राप्नुयुः प्रेत्य चेह ॥ २७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

देहात्मवादेन पुनः शङ्कते । यः संस्थित इति । परस्तात् आत्मानं केन कारणेन चेतयते जानाति । देहातिरिक्तजीवाभावादिति भावः ॥ १७ ॥ जीवो देहाद्भिन्नः पूर्वदेहं त्यक्त्वा सूक्ष्मदेहेन देहान्तरं प्राप्नोतीत्याह । हित्वेति । पवनाग्रानुसारी आतिवाहिकपवनानुसारी ॥ १८ ॥ कर्मानुसारेण योनिप्राप्तिमाह । पुण्यामिति ॥ १९ ॥ किंस्वित्कृत्वेति सामान्यप्रश्नः । तपसा विद्ययेति विशेषप्रश्नः । चो वार्थे ॥ २१ ॥ पुंसः पुमांसः ॥२२॥ दर्पवता कृतमध्ययनादि न मोक्षोपयोगि नापि स्वर्गदं प्रत्युत भयावहमित्याह द्वाभ्याम् । अधीयान इति ॥ २३ ॥ अतो मानापमानादिद्वन्द्वसहिष्णुर्भवेदित्याह । न मानमान्य इति॥२५॥ इति दद्यामिति दाम्भिकस्य स्वधर्मप्रकाशनाभिनयः ॥ २६ ॥ मानसमार्गरुद्धं ध्यानविषयीभूतं । वेदयन्ते जानन्ति । तद्वेदनं निःश्रेयः सुखसाधनम् ॥ २७ ॥ चतुरशीतितमोऽध्यायः॥८४॥

## पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

ब्रह्मचर्याद्याश्रमविषयकाष्टकययातिप्रश्नप्रतिवचनम् ॥ १ ॥

अष्टक उवाच ।

चरन्गृहस्थः कथमेति धर्मा-
न्कथं भिक्षुः कथमाचार्यकर्मा ।
वानप्रस्थः सत्पथे सन्निविष्टो
बहून्यस्मिन्संप्रति वेदयन्ति ॥ १

ययातिरुवाच ।

आहूताध्यायी गुरुकर्मस्वचोद्यः
पूर्वोत्थायी चरमं चोपशायी ।
मृदुर्दान्तो धृतिमानप्रमत्तः
स्वाध्यायशीलः सिध्यति ब्रह्मचारी ॥ २

धर्मागतं प्राप्य धनं यजेत
दद्यात्सदैवातिथीन्भोजयेच्च ।
अनाददानश्च परैरदत्तं
सैषा गृहस्थोपनिषत्पुराणी ॥ ३

स्ववीर्यजीवी वृजिनान्निवृत्तो
दाता परेभ्यो न परोपतापी ।
तादृङ्मुनिः सिद्धिमुपैति मुख्यां
वसन्नरण्ये नियताहारचेष्टः ॥ ४

अशिल्पजीवी गुणवांश्चैव नित्यं
जितेन्द्रियः सर्वतो विप्रयुक्तः ।
अनोकशायी लघुरल्पप्रचार-
श्चरन्देशानेकचरः स भिक्षुः ॥ ५

रात्र्या यया वाऽभिजिताश्च लोका
भवन्ति कामाभिजिताः सुखाश्च ।
तामेव रात्रिं प्रयतेत विद्वा-
नरण्यसंस्थो भवितुं यतात्मा ॥ ६

दशैव पूर्वान्दश चापरांश्च
ज्ञातीनथात्मानमथैकविंशम् ।
अरण्यवासी सुकृते दधाति
विमुच्यारण्ये स्वशरीरधातून् ॥ ७

अष्टक उवाच ।

कतिस्विदेव मुनयः कति मौनानि चाप्युत ।
भवन्तीति तदाचक्ष्व श्रोतुमिच्छामहे वयम् ॥ ८

ययातिरुवाच ।

अरण्ये वसतो यस्य ग्रामो भवति पृष्ठतः ।
ग्रामे वा वसतोऽरण्यं स मुनिः स्याज्जनाधिप ९

अष्टक उवाच ।

कथंस्विद्वसतोऽरण्ये ग्रामो भवति पृष्ठतः ।
ग्रामे वा वसतोऽरण्यं कथं भवति पृष्ठतः ॥ १०

ययातिरुवाच ।

न ग्राम्यमुपयुञ्जीत य आरण्यो मुनिर्भवेत् ।
तथास्य वसतोऽरण्ये ग्रामो भवति पृष्ठतः ॥ ११
अनग्निरनिकेतश्चाप्यगोत्रचरणो मुनिः ।
कौपीनाच्छादनं यावत्तावदिच्छेच्च चीवरम् ॥ १२
यावत्प्राणाभिसन्धानं तावदिच्छेच्च भोजनम् ।
तथाऽस्य वसतो ग्रामेऽरण्यं भवति पृष्ठतः ॥ १३
यस्तु कामान्परित्यज्य त्यक्तकर्मा जितेन्द्रियः ।
आतिष्ठेच्च मुनिर्मौनं स लोके सिद्धिमाप्नुयात् १४
धौतदन्तं कृत्तनखं सदा स्नातमलङ्कृतम् ।
असितं सितकर्माणं कस्तमर्हति नार्चितुम् ॥ १५
तपसा कर्शितः क्षामः क्षीणमांसास्थिशोणितः ।
स च लोकमिमं जित्वा लोकं विजयते परम् १६

---

अस्मिन्धर्मे विषये बहूनि प्राप्तिद्वाराणि वेदयन्ति वैदिकाः ॥ १ ॥ स्ववीर्यजीवी स्वप्रयत्नलब्धजीविकः ॥ ४ ॥ अनोकशायी यत्र क्वचनशायी । लघुः परिग्रहशून्यः ॥ ५ ॥ तामेव रात्रिं तदैव सर्वपरिग्रहं संन्यस्य अरण्यसंस्थो भवितुं प्रयतेत ॥ ६ ॥ संन्यासः कतिधेति पृच्छति । कतिस्विदिति ॥ ८ ॥ संन्यासं चतुष्प्रकारमभिप्रेत्य प्रथमं कुटीचकबहूदकरूपं भेदद्वयमाह । अरण्येति ॥ ९ ॥ ग्रामारण्ययोः पृष्ठतःकरणं कथमिति पृच्छति । कथमिति ॥ १० ॥ कुटीचकं विशिनष्टि । न ग्राम्यमिति ॥ ११ ॥ बहूदकं विशिनष्टि । अनग्निरिति ॥ १२ ॥ हंसपरमहंसौ प्रस्तौति । यस्त्विति ॥ १४ ॥ धौतदन्तं शुद्धाहारम् । कृत्तनखं त्यक्तहिंसासाधनम् । सदा स्नातं नित्यं शुद्धचित्तम् । अलंकृतं शमादिना । असितं बन्धरहितम् । सितकर्माणं शुद्धकर्माणम् ॥

यदा भवति निर्द्वन्द्वो मुनिर्मौनं समास्थितः ।
अथ लोकमिमं जित्वा लोकं विजयते परम् ॥१७
आस्येन तु यदाऽहारं गोवन्मृगयते मुनिः ।
अथास्य लोकः सर्वोऽयं सोऽमृतत्वाय कल्पते१८
सामान्यधर्मः सर्वेषां क्रोधो लोभो द्रुहाऽक्षमा ।
विहाय मत्सरं शाठ्यं दर्पं दम्भं च पैशुनम् ।
क्रोधं लोभं ममत्वं च यस्य नास्ति स धर्मवित् १९

अष्टक उवाच ।
नित्याशनो ब्रह्मचारी गृहस्थो वनगो मुनिः ।
नाधर्ममशनात्प्राप्येत्कथं ब्रूहीह पृच्छते ॥ २०
ययातिरुवाच ।
अष्टौ ग्रासा मुनेः प्रोक्ताः षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥ २१
इत्येवं कारणैर्ज्ञेयमष्टकैतच्छुभाशुभम् ॥ २२

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## षडशीतितमोऽध्यायः ॥ ८६ ॥

स्वर्गाच्च्युतस्य ययातेरष्टकादियज्ञभूमिं प्रत्यागमननिमित्तकथनम् ॥ १ ॥ अष्टकप्रतर्दनयोर्ययातिना संवादः ॥ २ ॥

अष्टक उवाच ।
कतरस्त्वनयोः पूर्वं देवानामेति साम्यताम् ।
उभयोर्धावतो राजन्सूर्याचन्द्रमसोरिव ॥ १
ययातिरुवाच
अनिकेतो गृहस्थेषु कामवृत्तेषु संयतः ।
ग्राम एव वसन्भिक्षुस्तयोः पूर्वतरं गतः ॥ २
अप्राप्य दीर्घमायुस्तु यः प्राप्तो विकृतिं चरेत् ।
तप्यते यदि तत्कृत्वा चरेत्सोऽन्यत्तपस्ततः ॥ ३
पापानां कर्मणां नित्यं बिभीयाद्यस्तु मानवः ।
सुखमप्याचरन्नित्यं सोऽत्यन्तं सुखमेधते ॥ ४
यद्वै नृशंसं तदसत्यमाहु-
र्यः सेवते धर्ममनर्थबुद्धिः ।
अस्वोऽप्यनीशश्च तथैव राजं-
स्तदार्जवं स समाधिस्तदार्यम् ॥ ५
अष्टक उवाच ।
केनासि दूतः प्रहितोऽसि राज-
न्युवा स्रग्वी दर्शनीयः सुवर्चाः ।
कुत आयातः कतरस्यां दिशि त्व-
मुताहोस्वित्पार्थिवं स्थानमस्ति ॥ ६

ययातिरुवाच ।
इमं भौमं नरकं क्षीणपुण्यः
प्रवेष्टुमुर्वीं गगनाद्विप्रहीणः ।
'विद्वांश्चैवं मतिमानार्यबुद्धि-
र्ममाभवत्कर्मलोक्यं च सर्वम्' ।
उक्त्वाऽहं वः प्रपतिष्याम्यनन्तरं
त्वरन्ति मां लोकपा ब्राह्मणा ये ॥ ७
सतां सकाशे तु वृतः प्रपात-
स्ते सङ्गता गुणवन्तश्च सर्वे ।
शक्राच्च लब्धो हि वरो मयैष
पतिष्यता भूमितलं नरेन्द्र ॥ ८
अष्टक उवाच ।
पृच्छामि त्वां मा प्रपत प्रपातं
यदि लोकाः पार्थिव सन्ति मेऽत्र ।
यद्यन्तरिक्षे यदि वा दिवि स्थिताः
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ ९
ययातिरुवाच ।
यावत्पृथिव्यां विहितं गवाश्वं
सहारण्यैः पशुभिः पार्वतैश्च ।

---

॥ १५ ॥ आस्यस्य यावदपेक्षितं तावदेव मृगयते नतु परदिनार्थमार्जयतीत्यर्थः ॥ १८ ॥ पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

अनयोः कुटीचकबहूदकयोः ॥ १ ॥ गृहस्थेषु शरीरस्थेष्विन्द्रियेषु ॥ २ ॥ दीर्घमायुः प्राप्तः सिद्धिमप्राप्य यो विकृतिं पापं चरेत्। तत्कृत्वा तप्येत यदि सोन्यत्तपः प्रायश्चित्तं चरेत् ॥ ३ ॥ कर्मणां सकाशात् विभीयात् । सुखं यथेच्छम् ॥४॥ नृशंसं हिंस्रं यत्कर्म तदसत्यं असत्संबन्धि । अनर्थबुद्धिः फलेच्छारहितः । अनीशः ईशत्वबुद्धिरहितः ॥ ५ ॥ केन कतरस्यां दिशि प्रहितोसीत्यन्वयः ॥ ६ ॥ विप्रहीणश्च्युतः । उक्त्वा आपृच्छय । वो युष्मान् । ब्राह्मणाः ब्रह्मनियुक्ताः ॥ ७ ॥

तावल्लोका दिवि ते संस्थिता वै
तथा विजानीहि नरेन्द्रसिंह ॥ १०

अष्टक उवाच ।

तांस्ते ददामि मा प्रपत प्रपातं
ये मे लोका दिवि राजेन्द्र सन्ति ।
यद्यन्तरिक्षे यदि वा दिवि श्रिता-
स्तानाक्रम क्षिप्रमपेतमोहः ॥ ११

ययातिरुवाच ।

नास्मद्विधोऽब्राह्मणो ब्रह्मविच्च
प्रतिग्रहे वर्तते राजमुख्य ।
यथा प्रदेयं सततं द्विजेभ्य-
स्तथाऽददं पूर्वमहं नरेन्द्र ॥ १२

नाब्राह्मणः कृपणो जातु जीवे-
द्या चाप्यस्याऽब्राह्मणी वीरपत्नी ।
सोऽहं नैवाकृतपूर्वं चरेयं
विधित्समानः किमु तत्र साधुः ॥ १३

प्रतर्दन उवाच ।

पृच्छामि त्वां स्पृहणीयरूप
प्रतर्दनोऽहं यदि मे सन्ति लोकाः ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ १४

ययातिरुवाच ।

सन्ति लोका बहवस्ते नरेन्द्र
अप्येकैकः सप्तसप्ताप्यहानि ।
मधुच्युतो घृतपृक्ता विशोका-
स्ते नान्तवन्तः प्रतिपालयन्ति ॥ १५

प्रतर्दन उवाच ।

तांस्ते ददानि मा प्रपत प्रपातं
ये मे लोकास्तव ते वै भवन्तु ।
यद्यन्तरिक्षे यदि वा दिवि श्रिता-
स्तानाक्रम क्षिप्रमपेतमोहः ॥ १६

ययातिरुवाच ।

न तुल्यतेजाः सुकृतं कामयेत
योगक्षेमं पार्थिव पार्थिवः सन् ।
दैवादेशादापदं प्राप्य विद्वां-
श्चरेन्नृशंसं न हि जातु राजा ॥ १७

धर्म्यं मार्गं यतमानो यशस्यं
कुर्यान्नृपो धर्ममवेक्षमाणः ।
न मद्विधो धर्मबुद्धिः प्रजान-
न्कुर्यादेवं कृपणं मां यथाऽऽत्थ ॥ १८

कुर्यादपूर्वं न कृतं यदन्यै-
र्विधित्समानः किमु तत्र साधु ।
'धर्माधर्मौ सुविनिश्चित्य सम्य-
क्कार्याकार्येष्वप्रमत्तश्चरेद्यः ॥ १९

स वै धीमान्सत्यसन्धः कृतात्मा
राजा भवेल्लोकपालो महिम्ना ।
यदा भवेत्संशयो धर्मकार्ये
कामार्थौ वा यत्र विन्दन्ति सम्यक् ॥ २०

कार्यं तत्र प्रथमं धर्मकार्यं
यन्नो विरुध्यादर्थकामौ स धर्मः

वैशंपायन उवाच ।'

ब्रुवाणमेवं नृपतिं ययातिं
नृपोत्तमो वसुमानब्रवीत्तम् ॥ २१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

---

अब्राह्मणः ब्राह्मणेतरः ब्राह्मणस्यैव भिक्षावृत्तित्वात् । ब्रह्मविद्वेदार्थवित् । न वर्तते न प्रवर्तते। प्रत्युत पूर्वमददमेव॥ १२॥ कृपणो याचकः। या चाप्यस्य क्षत्रियस्य अब्राह्मणी क्षत्रिया सापि कृपणा नजीवेत्। तद्विधित्समानः कर्तुमिच्छुः तत्र तदा किमु साधुः स्यां अपितु नैवेत्यर्थः ॥ १३ ॥ प्रत्येकं सप्तसप्ताप्यहानि सेविताः सन्तो नान्तवन्तः। मधुच्युतः सुखस्रवाः । घृतपृक्तास्तेजोयुक्ताः । ते त्वां प्रतिपालयन्ति प्रतीक्षन्ते ॥ १५ ॥ नृशंसं निन्द्यं ॥ १७ ॥ अन्यै राजभिर्यत्प्रतिग्रहाख्यं न कृतं तदपूर्वम्॥ १९॥ षडशीतितमोऽध्यायः॥ ८६

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

वसुमतः शिबेश्च ययातिना संवादः ॥ १ ॥ पुनरष्टकययातिसंवादः ॥ २ ॥ तत्रागतया माधव्या स्वपुत्रान्प्रति ययातेर्मातामहत्वकथनम् ॥ ३ ॥ तद्वचनेन ययातेरष्टकादिदत्तपुण्यस्वीकारपूर्वकमष्टकादिभिः सह स्वर्गगमनम् ॥ ४ ॥ ययातिना मार्गे अष्टकादीन्प्रति विस्तरेण स्ववृत्तान्तकथनम् ॥ ५ ॥ ययात्युपाख्यानश्रवणादिफलकथनम् ॥ ६ ॥

वसुमानुवाच ।
पृच्छामि त्वां वसुमानौपदश्वि-
र्यद्यस्ति लोको दिवि मे नरेन्द्र ।
यद्यन्तरिक्षे प्रथितो महात्मन्
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ १

ययातिरुवाच ।
यदन्तरिक्षं पृथिवी दिशश्च
यत्तेजसा तपते भानुमांश्च ।
लोकास्तावन्तो दिवि संस्थिता वै
तेनान्तवन्तः प्रतिपालयन्ति ॥ २

वसुमानुवाच ।
तांस्ते ददानि मा प्रपत प्रपातं
ये मे लोकास्तव ते वै भवन्तु ।
क्रीणीष्वैतांस्तृणकेनापि राज-
न्प्रतिग्रहस्ते यदि धीमन्प्रदुष्टः ॥ ३

ययातिरुवाच ।
न मिथ्याऽहं विक्रयं वै स्मरामि
वृथा गृहीतं शिशुकाच्छङ्कमानः ।
कुर्या न चैवाकृतपूर्वमन्यै-
र्विधित्समानः किमु तत्र साधुः ॥ ४

वसुमानुवाच ।
तांस्त्वं लोकान्प्रतिपद्यस्व राज-
न्मया दत्तान्यदि नेष्टः क्रयस्ते ।
अहं न तान्वै प्रतिगन्ता नरेन्द्र
सर्वे लोकास्तव ते वै भवन्तु ॥ ५

शिबिरुवाच ।
पृच्छामि त्वां शिबिरौशीनरोऽहं
ममापि लोका यदि सन्तीह तात ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ ६

ययातिरुवाच ।
यत्त्वं वाचा हृदयेनापि साधू-
न्परीप्समानान्नावमंस्था नरेन्द्र ।
तेनानन्ता दिवि लोकाः श्रितास्ते
विद्युद्रूपाः स्वनवन्तो महान्तः ॥ ७

शिबिरुवाच ।
तांस्त्वं लोकान्प्रतिपद्यस्व राज-
न्मया दत्तान्यदि नेष्टः क्रयस्ते ।
न चाहं तान्प्रतिपत्स्ये ह दत्त्वा
यत्र गत्वा नानुशोचन्ति धीराः ॥ ८

ययातिरुवाच ।
यथा त्वमिन्द्रप्रतिमप्रभाव-
स्ते चाप्यनन्ता नरदेव लोकाः ।
तथाऽद्य लोके न रमेऽन्यदत्ते
तस्माच्छिबे नाभिनन्दामि दायम् ॥ ९

अष्टक उवाच ।
न चेदेकैकशो राजँल्लोकान्नः प्रतिनन्दसि ।
सर्वे प्रदाय भवते गन्तारो नरकं वयम् ॥ १०

ययातिरुवाच ।
यदर्होऽहं तद्यतध्वं सन्तः सत्याभिनन्दिनः ।
अहं तन्नाभिजानामि यत्कृतं न मया पुरा ॥ ११

अष्टक उवाच ।
कस्यैते प्रतिदृश्यन्ते रथाः पञ्च हिरण्मयाः ।
यानारुह्य नरो लोकानभिवाञ्छति शाश्वतान् ॥ १२

ययातिरुवाच ।
युष्मानेते वहिष्यन्ति रथाः पञ्च हिरण्मयाः ।

---

यत् यत् तपते प्रकाशयति ॥२॥ शिशुकात् शैशवमारभ्य ॥४॥ परीप्समानान् याचकान् । नावमंस्था नावमानं कृतवानसि । स्वनवन्तः संगीतादिध्वनियुक्ताः ॥७॥ गन्तारो मृत्वा प्राप्स्यामः । नरकं भूलोकम् ॥ १० ॥ यतध्वं कर्तुम् । नाभिजानामि नाङ्गीकरोमि ॥

उच्चैः सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव १३
'वैशंपायन उवाच ।
अश्वमेधे महायज्ञे स्वयंभुविहिते पुरा ।
हयस्य यानि चाङ्गानि संनिकृत्य यथाक्रमम् १४
होताऽध्वर्युरथोद्गाता ब्रह्मणा सह भारत ।
अग्नौ प्रास्यन्ति विधिवत्समस्ताः षोडशर्त्विजः १५
धूमगन्धं च पापिष्ठा ये जिघ्रन्ति नरा भुवि ।
विमुक्तपापाः पूतास्ते तत्क्षणेनाभवन्नराः ॥ १६
एतस्मिन्नन्तरे चैव माधवी सा तपोधना ।
मृगचर्मपरीताङ्गी परिधाय मृगत्वचम् ॥ १७
मृगैः परिचरन्ती सा मृगाहारविचेष्टिता ।
यज्ञवाटं मृगगणैः प्रविश्य भृशविस्मिता ॥ १८
आघ्रायन्ती धूमगन्धं मृगैरेव चचार सा ।
यज्ञवाटमटन्ती सा पुत्रांस्तानपराजितान् ॥ १९
पश्यन्ती यज्ञमाहात्म्यं मुदं लेभे च माधवी ।
असंस्पृशन्तं वसुधां ययातिं नाहुषं यदा ॥ २०
दिविष्ठं प्राप्तमाज्ञाय ववन्दे पितरं तदा ।
तदा वसुमनाः पृच्छन्मातरं वै तपस्विनीम् ॥ २१
भवत्या यत्कृतमिदं वन्दनं पादयोरिह ।
कोयं देवोपमो राजा याऽभिवन्दसि मे वद २२
माधव्युवाच ।
शृणुध्वं सहिताः पुत्रा नाहुषोयं पिता मम ।
ययातिर्मम पुत्राणां मातामह इति स्मृतः ॥ २३
पूरुं मे भ्रातरं राज्ये समावेश्य दिवं गतः ।
केन वा कारणेनैवमिह प्राप्तो महायशाः ॥ २४
वैशंपायन उवाच ।
तस्यास्तद्वचनं श्रुत्वा स्वर्गाद्भ्रष्टेति चाब्रवीत् ।
सा पुत्रस्य वचः श्रुत्वा संभ्रमाविष्टचेतना ॥ २५
माधवी पितरं प्राह दौहित्रपरिवारितम् ।
तपसा निर्जिताँल्लोकान्प्रतिगृह्णीष्व मामकान् २६
पुत्राणामिव पौत्राणां धर्मादधिगतं धनम् ।
स्वार्थमेव वदन्तीह ऋषयो धर्मपाठकाः ।
तस्माद्दानेन तपसा चास्माकं दिवमाव्रज ॥ २७
ययातिरुवाच ।
यदि धर्मफलं ह्येतच्छोभनं भविता तव ।
दुहित्रा चैव दौहित्रैस्तारितोऽहं महात्मभिः ॥ २८
तस्मात्पवित्रं दौहित्रमद्यप्रभृति पैतृके ।
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः २९
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ।
भोक्तारः परिवेष्टारः श्रावितारः पवित्रकाः ॥ ३०
दिवसस्याष्टमे भागे मन्दीभवति भास्करे ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥ ३१
तिलाः पिशाचाद्रक्षन्ति दर्भा रक्षन्ति राक्षसात् ।
रक्षन्ति श्रोत्रियाः पङ्क्तिं यतिभिर्भुक्तमक्षयम् ॥ ३२
लब्ध्वा पात्रं तु विद्वांसं श्रोत्रियं सुव्रतं शुचिम् ।
स कालः कालतो दत्तं नान्यथा काल इष्यते ३३
वैशंपायन उवाच ।
एवमुक्त्वा ययातिस्तु पुनः प्रोवाच बुद्धिमान् ।
सर्वे ह्यवभृथस्नातास्त्वरध्वं कार्यगौरवात् ॥' ३४
अष्टक उवाच ।
आतिष्ठ स्वरथं राजन्विक्रमस्व विहायसम् ।
वयमप्यनुयास्यामो यदा कालो भविष्यति ॥ ३५
ययातिरुवाच ।
सर्वैरिदानीं गन्तव्यं सह स्वर्गजितो वयम् ।
एष नो विरजाः पन्था दृश्यते देवसद्मनः ॥ ३६
वैशंपायन उवाच ।
'अष्टकश्च शिबिश्चैव काशेयश्च प्रतर्दनः ।
ऐक्ष्वाकवो वसुमनाश्चत्वारो भूमिपास्तदा ।
सर्वे ह्यवभृथस्नाताः स्वर्गताः साधवः सह ॥' ३७
तेऽधिरुह्य रथान्सर्वे प्रयाता नृपसत्तमाः ।
आक्रमन्तो दिवं भाभिर्धर्मेणावृत्य रोदसी ॥ ३८
अष्टक उवाच ।
अहं मन्ये पूर्वमेकोऽस्मि गन्ता
सखा चेन्द्रः सर्वथा मे महात्मा ।

---

॥ ११ ॥ प्रकाशन्ते दृश्यन्ते । ज्वलन्तो दीप्यमानाः ॥ १३ ॥ अश्वमेध इति । पुरा स्वयंभुविहिते कर्तव्यतया विहिते अश्वमेधे अष्टकादिभिः क्रियमाणे ॥ १४ ॥ अकृतहोमसमाप्तीनामवभृथायोगात् होमोपि समापित इत्याह ।

कस्मादेवं शिविरौशीनरोऽय-
मेकोऽत्यगात्सर्ववेगेन वाहान् ॥ ३९

ययातिरुवाच ।

अददद्याचमानाय यावद्वित्तमविन्दत ।
उशीनरस्य पुत्रोऽयं तस्माच्छ्रेष्ठो हि वः शिबिः ४०

दानं तपः सत्यमथाऽपि धर्मो
ह्रीः श्रीः क्षमा सौम्यमथो विधित्सा ।
राजन्नेतान्यप्रमेयाणि राज्ञः
शिबेः स्थितान्यप्रतिमस्य बुद्ध्या ॥ ४१

एवं वृत्तो ह्रीनिषेवश्च यस्मा-
त्तस्माच्छिबिरत्यगाद्वै रथेन ।

वैशंपायन उवाच ।

अथाष्टकः पुनरेवान्वपृच्छ-
न्मातामहं कौतुकेनेन्द्रकल्पम् ॥ ४२

पृच्छामि त्वां नृपते ब्रूहि सत्यं
कुतश्च कश्चासि सुतश्च कस्य ।
कृतं त्वया यद्धि न तस्य कर्ता
लोके त्वदन्यः क्षत्रियो ब्राह्मणो वा ॥४३

ययातिरुवाच ।

ययातिरस्मि नहुषस्य पुत्रः
पूरोः पिता सार्वभौमस्त्विहासम् ।
गुह्यं चार्थं मामकेभ्यो ब्रवीमि
मातामहोऽहं भवतां प्रकाशम् ॥ ४४

सर्वामिमां पृथिवीं निर्जिगाय
दत्त्वा प्रतस्थे विपिनं ब्राह्मणेभ्यः ।
मेध्यानश्वानेकशतान्सुरूपां-
स्तदा देवाः पुण्यभाजो भवन्ति ॥ ४५

अदामहं पृथिवीं ब्राह्मणेभ्यः
पूर्णामिमामखिलां वाहनेन ।
गोभिः सुवर्णेन धनैश्च मुख्यै-
स्तदाऽददं गाः शतमर्बुदानि ॥ ४६

सत्येन मे द्यौश्च वसुन्धरा च
तथैवाग्निर्ज्वलते मानुषेषु ।
न मे वृथा व्याहृतमेव वाक्यं
सत्यं हि सन्तः प्रतिपूजयन्ति ॥ ४७

यदष्टक प्रब्रवीमीह सत्यं
प्रतर्दनं चौषदश्विं तथैव ।
सर्वे च लोका मुनयश्च देवाः
सत्येन पूज्या इति मे मनोगतम् ॥ ४८

यो नः स्वर्गजितः सर्वान्यथावृत्तं निवेदयेत् ।
अनसूयुर्द्विजाग्र्येभ्यः स लभेन्नः सलोकताम् ॥४९

वैशंपायन उवाच ।

एवं राजा स महात्मा ह्यतीव
स्वैर्दौहित्रैस्तारितोऽमित्रसाहः ।
त्यक्त्वा महीं परमोदारकर्मा
स्वर्गं गतः कर्मभिर्व्याप्य पृथ्वीम् ॥ ५०

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

## अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

पूरुवंशकथनम् ॥ १ ॥

जनमेजय उवाच ।

पुत्रं ययातेः प्रब्रूहि पूरुं धर्मभृतां वरम् ।
आनुपूर्व्येण ये चान्ये पूरोर्वंशविवर्धनाः ॥ १

विस्तरेण पुनर्ब्रूहि दौष्यन्तेर्जनमेजयात् ।
संबभूव यथा राजा भरतो द्विजसत्तम ॥ २

वैशंपायन उवाच ।

पूरुर्नृपतिशार्दूलो यथैवास्य पिता नृप ।
धर्मनित्यः स्थितो राज्ये शक्रतुल्यपराक्रमः ॥ ३

प्रवीरेश्वररौद्राश्वास्त्रयः पुत्रा महारथाः ।
पूरोः पौष्ट्यामजायन्त प्रवीरो वंशकृत्ततः ॥ ४

सौम्यमक्रूरत्वम् । विधित्सा पालनेच्छा ॥४१॥ सत्यमेव श्रेयःसाधनमिति विधातुं पूर्वोक्तप्रश्नोत्तरे अनुवदति । अथाष्टक इत्यादिना ॥४२॥ प्रकाशं प्रागुक्तमपि स्पष्टतरम् ॥४४॥ एवं कृते सति पुण्यभाजः सन्तः देवा भवन्ति ॥४५॥ सप्ताशीतितमोऽध्यायः ॥८७॥

मनस्युरभवत्तस्माच्छूरसेनीसुतः प्रभुः ।
पृथिव्याश्चतुरन्ताया गोप्ता राजीवलोचनः ॥ ५
शक्तः संहननो वाग्मी सौवीरीतनयास्त्रयः ।
मनस्योरभवन्पुत्राः शूराः सर्वे महारथाः ॥ ६
अन्वग्भानुप्रभृतयो मिश्रकेश्यां मनस्विनः ।
रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः ॥ ७
यज्वानो जज्ञिरे शूराः प्रजावन्तो बहुश्रुताः ।
सर्वे सर्वास्त्रविद्वांसः सर्वे धर्मपरायणाः ॥ ८
ऋचेयुरथ कक्षेयुः कृकणेयुश्च वीर्यवान् ।
स्थण्डिलेयुर्वनेयुश्च जलेयुश्च महायशाः ॥ ९
तेजेयुर्बलवान्धीमान्सत्येयुश्चन्द्रविक्रमः ।
धर्मेयुः सन्नतेयुश्च दशमो देवविक्रमः ॥ १०
अनाधृष्टिरभूत्तेषां विद्वान्भुवि तथैकराट् ।
ऋचेयुरथ विक्रान्तो देवानामिव वासवः ॥ ११
अनाधृष्टिसुतस्त्वासीद्राजसूयाश्वमेधकृत् ।
मतिनार इति ख्यातो राजा परमधार्मिकः ॥१२
मतिनारसुता राजंश्चत्वारोऽमितविक्रमाः ।
तंसुर्महानतिरथो द्रुह्युश्चाप्रतिमद्युतिः ॥ १३
तेषां तंसुर्महावीर्यः पौरवं वंशमुद्वहन् ।
आजहार यशो दीप्तं जिगाय च वसुंधराम् ॥१४
ईलिनं तु सुतं तंसुर्जनयामास वीर्यवान् ।
सोऽपि कृत्स्नामिमां भूमिं विजिग्ये जयतां वरः १५
रथन्तर्यां सुतान्पञ्च पञ्चभूतोपमांस्ततः ।
ईलिनो जनयामास दुष्यन्तप्रभृतीन्नृपान् ॥ १६
दुष्यन्तं शूरभीमौ च प्रवसुं वसुमेव च ।
तेषां श्रेष्ठोऽभवद्राजा दुष्यन्तो दुर्जयो युधि ॥१७
दुष्यन्ताल्लक्षणायां तु जज्ञे वै जनमेजयः ।
शकुन्तलायां भरतो दौष्यन्तिरभवत्सुतः ॥ १८
तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः ॥ १९

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

## एकोननवतितमोऽध्यायः ॥ ८९ ॥

शकुन्तलोपाख्यानारम्भः ॥ १ ॥

जनमेजय उवाच ।
भगवन्विस्तरेणेह भरतस्य महात्मनः ।
जन्म कर्म च शुश्रूषोस्तन्मे शंसितुमर्हसि ॥ १
वैशंपायन उवाच ।
पौरवाणां वंशकरो दुष्यन्तो नाम वीर्यवान् ।
पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ॥ २
चतुर्भागं भुवः कृत्स्नं यो भुङ्क्ते मनुजेश्वरः ।
समुद्रावरणांश्चापि देशान्स समितिंजयः ॥ ३
आम्लेच्छावधिकान्सर्वान्स भुङ्क्ते रिपुमर्दनः ।
रत्नाकरसमुद्रान्तांश्चातुर्वर्ण्यजनावृतान् ॥ ४
न वर्णसङ्करकरो न कृष्याकरकृज्जनः ।
न पापकृत्कश्चिदासीत्तस्मिन्राजनि शासति ॥ ५
धर्मे रतिं सेवमाना धर्मार्थावभिपेदिरे ।
तदा नरा नरव्याघ्र तस्मिञ्जनपदेश्वरे ॥ ६
नासीच्चोरभयं तात न क्षुधाभयमण्वपि ।
नासीद्व्याधिभयं चापि तस्मिञ्जनपदेश्वरे ॥ ७
स्वधर्मे रेमिरे वर्णा दैवे कर्मणि निःस्पृहाः ।
तमाश्रित्य महीपालमासंश्चैवाकुतोभयाः ॥ ८
कालवर्षी च पर्जन्यः सस्यानि रसवन्ति च ।
सर्वरत्नसमृद्धा च मही पशुमती तथा ॥ ९
स्वकर्मनिरता विप्रा नानृतं तेषु विद्यते ।
स चाद्भुतमहावीर्यो वज्रसंहननो युवा ॥ १०
उद्यम्य मन्दरं दोर्भ्यां वहेत्सवनकाननम् ।
चतुष्पथगदायुद्धे सर्वप्रहरणेषु च ॥ ११

---

न कृष्याकरकृत् ,कृषिकृन्न भुवोऽकृष्टपच्यत्वात् । आकरः सुवर्णादिधातूत्पत्तिस्थानं तत्रापि यत्नं न करोति पृथिव्या रत्नैर्धातुभिश्च पूर्णत्वात् ॥ ५ ॥ दैवे कर्मणि वृष्ट्याद्यर्थे कारीर्यादिकाम्यकर्मणि ॥ ८ ॥ तदेवाह । कालेति ॥ ९ ॥ वज्रसंहननो दृढदेहः ॥ १० ॥ सवनकाननं वनं जलमुपवनं वा ॥ ११ ॥

नागपृष्ठेऽश्वपृष्ठे च बभूव परिनिष्ठितः ।
बले विष्णुसमश्चासीत्तेजसा भास्करोपमः ॥ १२
अक्षोभ्यत्वेऽर्णवसमः सहिष्णुत्वे धरासमः ।
संमतः स महीपालः प्रसन्नपुरराष्ट्रवान् ॥ १३
भूयो धर्मपरैर्भावैर्मुदितं जनमादिशत् ॥ १४

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

## नवतितमोऽध्यायः ॥ ९० ॥

मृगयार्थं दुष्यन्तस्यारण्यगमनम् ॥ १ ॥

जनमेजय उवाच ।
संभवं भरतस्याहं चरितं च महामतेः ।
शकुन्तलायाश्चोत्पत्तिं श्रोतुमिच्छामि तत्त्वतः ॥१
दुष्यन्तेन च वीरेण यथा प्राप्ता शकुन्तला ।
तं वै पुरुषसिंहस्य भगवन्विस्तरं त्वहम् ॥ २
श्रोतुमिच्छामि तत्त्वज्ञ सर्वं मतिमतां वर ।
वैशंपायन उवाच ।
स कदाचिन्महाबाहुः प्रभूतबलवाहनः ॥ ३
वनं जगाम गहनं हयनागशतैर्वृतः ।
बलेन चतुरङ्गेण वृतः परमवल्गुना ॥ ४
खड्गशक्तिधरैर्वीरैर्गदामुसलपाणिभिः ।
प्रासतोमरहस्तैश्च ययौ योधशतैर्वृतः ॥ ५
सिंहनादैश्च योधानां शङ्खदुन्दुभिनिःस्वनैः ।
रथनेमिस्वनैश्चैव सनागवरबृंहितैः ॥ ६
नानायुधधरैश्चापि नानावेषधरैस्तथा ।
ह्रेषितस्वनमिश्रैश्च क्ष्वेडितास्फोटितस्वनैः ॥ ७
आसीत्किलकिलाशब्दस्तस्मिन्गच्छति पार्थिवे ।
प्रासादवरशृङ्गस्थाः परया नृपशोभया ॥ ८
ददृशुस्तं स्त्रियस्तत्र शूरमात्मयशस्करम् ।
शक्रोपमममित्रघ्नं परवारणवारणम् ॥ ९
पश्यन्तः स्त्रीगणास्तत्र वज्रपाणिं स्म मेनिरे ।
अयं स पुरुषव्याघ्रो रणे वसुपराक्रमः ॥ १०
यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ।
इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा नराधिपं ११
तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्धनि ।
तत्रतत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः ॥ १२
निर्ययौ परमप्रीत्या वनं मृगजिघांसया ।
तं देवराजप्रतिमं मत्तवारणधूर्गतम् ॥ १३
द्विजक्षत्रियविट्शूद्रा निर्यान्तमनुजग्मिरे ।
ददृशुर्वर्धमानास्ते आशीर्भिश्च जयेन च ॥ १४
सुदूरमनुजग्मुस्तं पौरजानपदास्तथा ।
न्यवर्तन्त ततः पश्चादनुज्ञाता नृपेण ह ॥ १५
सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः ।
महीमापूरयामास घोषेण त्रिदिवं तथा ॥ १६
स गच्छन्ददृशे धीमान्नन्दनप्रतिमं वनम् ।
बिल्वार्कखदिराकीर्णं कपित्थधवसंकुलम् ॥ १७
विषमं पर्वतप्रस्थैः रश्मभिश्च समावृतम् ।
निर्जलं निर्मनुष्यं च बहुयोजनमायतम् ॥ १८
मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः ।
तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः ॥ १९
लोडयामास दुष्यन्तः सूदयन्विविधान्मृगान् ।
बाणगोचरसंप्राप्तांस्तत्र व्याघ्रगणान्बहून् ॥ २०
पातयामास दुष्यन्तो निर्बिभेद च सायकैः ।
दूरस्थान्सायकैः कांश्चिदभिनत्स नराधिपः ॥२१
अभ्याशमागतांश्चान्यान्खड्गेन निरकृन्तत ।
कांश्चिदेणान्समाजघ्ने शक्त्या शक्तिमतां वरः २२
गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः ।
तोमरैरसिभिश्चापि गदामुसलकम्पनैः ॥ २३
चचार स विनिघ्नन्वै वन्यांस्तत्र मृगद्विजान् ।
राज्ञा चाद्भुतवीर्येण योधैश्च समरप्रियैः ॥ २४
लोड्यमानं महारण्यं तत्यजुः स्म मृगाधिपाः ।

आदिशत् शशास ॥ १४ ॥ एकोननवतितमोऽध्यायः ॥ ८९ ॥

परवारणवारणं शत्रुगजानां निवारकम् ॥ ९ ॥ धूर्गतं

तत्र विद्रुतयूथानि हतयूथपतीनि च ॥ २५
मृगयूथान्यथौत्सुक्याच्छब्दं चक्रुस्ततस्ततः ।
शुष्कांश्चापि नदीर्गत्वा जलनैराश्यकर्शिताः ॥२६
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः ।
क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि ॥२७
केचित्तत्र नरव्याघ्रैरभक्ष्यन्त बुभुक्षितैः ।
केचिदग्निमथोत्पाद्य संसाध्य च वनेचराः ॥ २८
भक्षयन्ति स्म मांसानि प्रकुट्य विधिवत्तदा ।
तत्र केचिद्गजा मत्ता बलिनः शस्त्रविक्षताः ॥२९
संकोच्याग्रकरान्भीताः प्राद्रवन्ति स्म वेगिताः ।
शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं बहु ॥ ३०
वन्या गजवरास्तत्र ममृदुर्मनुजान्बहून् ।
तद्वनं बलमेघेन शरधारेण संवृतम् ।
व्यरोचत मृगाकीर्णं राज्ञा हतमृगाधिपम् ॥ ३१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

## एकनवतितमोऽध्यायः ॥ ९१ ॥

मृगयाप्रसङ्गेन दुष्यन्तस्य कण्वाश्रमगमनम् ॥ १ ॥

वैशंपायन उवाच ।
ततो मृगसहस्राणि हत्वा सबलवाहनः ।
तत्र मेघघनप्रख्यं सिद्धचारणसेवितम् ॥ १
वनमालोकयामास नगराद्योजनद्वये ।
मृगाननुचरन्वन्यान्श्रमेण परिपीडितः ॥ २
मृगाननुचरन्राजा वेगेनाश्वानचोदयत् ।
राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह ॥ ३
एक एवोत्तमबलः क्षुत्पिपासाश्रमान्वितः ।
स वनस्यान्तमासाद्य महच्छून्यं समासदत् ॥ ४
तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम् ।
मनःप्रह्लादजननं दृष्टिकान्तमतीव च ॥ ५
शीतमारुतसंयुक्तं जगामान्यन्महद्वनम् ।
पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ॥ ६
विपुलं मधुरारावैर्नादितं विहगैस्तथा ।
पुंस्कोकिलनिनादैश्च झिल्लीकगणनादितम् ॥ ७
प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतम् ।
षट्पदाघूर्णिततलं लक्ष्म्या परमया युतम् ॥ ८
नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी ।
षट्पदैर्नाप्यपाकीर्णस्तस्मिन्वै काननेऽभवत् ॥ ९
विहगैर्नादितं पुष्पैरलङ्कृतमतीव च ।
सर्वर्तुकुसुमैर्वृक्षैः सुखच्छायैः समावृतम् ॥ १०
मनोरमं महेष्वासो विवेश वनमुत्तमम् ।
मारुता कलितास्तत्र द्रुमाः कुसुमशाखिनः ॥ ११
पुष्पवृष्टिं विचित्रां तु व्यसृजंस्ते पुनः पुनः ।
दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुरस्वनैः ॥ १२
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः ।
तेषां तत्र प्रवालेषु पुष्पभारावनामिषु ॥ १३
रुवन्ति रावान्मधुरान्षट्पदा मधुलिप्सवः ।
तत्र प्रदेशांश्च बहून्कुसुमोत्करमण्डितान् ॥ १४
लतागृहपरिक्षिप्तान्मनसः प्रीतिवर्धनान् ।
संपश्यन्सुमहातेजा बभूव मुदितस्तदा ॥ १५
परस्पराश्लिष्टशाखैः पादपैः कुसुमान्वितैः ।
अशोभत वनं तत्तु महेन्द्रध्वजसन्निभैः ॥ १६
सिद्धचारणसङ्घैश्च गन्धर्वाप्सरसां गणैः ।
सेवितं वनमत्यर्थं मत्तवानरकिन्नरैः ॥ १७
सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः ।
परिक्रामन्वने वृक्षानुपैतीव रिरंसया ॥ १८
एवंगुणसमायुक्तं ददर्श स वनं नृपः ।
नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसन्निभम् ॥१९
प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम् ।
आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥ २०
नानावृक्षसमाकीर्णं संप्रज्वलितपावकम् ।

---

स्कन्धारूढम् ॥ १३ ॥ संसाध्य पाकादिना संस्कृत्य ॥ २८ ॥ प्रकुट्य चूर्णीकृत्य। गजा वनगजाः॥२९॥ नवतितमोऽध्यायः ९०

शून्यं वृक्षादिरहितमूषरम् ॥ ४ ॥ रिरंसया रमयितुमिच्छया ॥ १८ ॥ नदीकच्छोद्भवं कच्छः सजलोऽनूपप्रदेशः ॥ १९ ॥

तं तदाऽप्रतिमं श्रीमानाश्रमं प्रत्यपूजयत् ॥ २१
यतिभिर्वालखिल्यैश्च वृतं मुनिगणान्वितम् ।
अग्न्यगारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम् ॥ २२
महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च ।
मालिनीमभितो राजन्नदीं पुण्यां सुखोदकाम् ॥ २३
नैकपक्षिगणाकीर्णां तपोवनमनोरमाम् ।
तत्र व्यालमृगान्सौम्यान्पश्यन्प्रीतिमवाप सः ॥ २४
तं चाप्रतिरथः श्रीमानाश्रमं प्रत्यपद्यत ।
देवलोकप्रतीकाशं सर्वतः सुमनोहरम् ॥ २५
नदीं चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः ।
सर्वप्राणभृतां तत्र जननीमिव धिष्ठिताम् ॥ २६
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम् ।
सकिन्नरगणावासां वानरर्क्षनिषेविताम् ॥ २७
पुण्यस्वाध्यायसंघुष्टां पुलिनैरुपशोभिताम् ।
मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् ॥ २८
तस्यास्तीरे भगवतः काश्यपस्य महात्मनः ।
आश्रमप्रवरं रम्यं महर्षिगणसेवितम् ॥ २९
नदीमाश्रमसंबद्धां दृष्ट्वाश्रमपदं तथा ।
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥ ३०
अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया ।
नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥ ३१
मत्तबर्हिणसंघुष्टं प्रविवेश महद्वनम् ।
तत्स चैत्ररथप्रख्यं समुपेत्य नरर्षभः ॥ ३२
अतीव गुणसंपन्नमनिर्देश्यं च वर्चसा ।
महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम् ॥ ३३
ध्वजिनीमश्वसंबाधां पदातिगजसङ्कुलाम् ।
अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥ ३४
मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम् ।
काश्यपं स्थीयतामत्र यावदागमनं मम ॥ ३५
तद्वनं नन्दनप्रख्यमासाद्य मनुजेश्वरः ॥
क्षुत्पिपासे जहौ राजा मुदं चावाप पुष्कलाम् ॥ ३६
सामात्यो राजलिङ्गानि सोपनीय नराधिपः ।
पुरोहितसहायश्च जगामाश्रममुत्तमम् ॥ ३७
दिदृक्षुस्तत्र तमृषिं तपोराशिमथाव्ययम् ।
ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य ह ।
षट्पदोद्गीतसंघुष्टं नानाद्विजगणायुतम् ॥ ३८
विस्मयोत्फुल्लनयनो राजा प्रीतो बभूवह ।
ऋचो बह्वृचमुख्यैश्च प्रेर्यमाणाः पदक्रमैः ।
शुश्राव मनुजव्याघ्रो विततेष्विह कर्मसु ॥ ३९
यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च शोभितम् ।
मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः ॥ ४०
भारुण्डसामगीताभिरथर्वशिरसोद्गतैः ।
यतात्मभिः सुनियतैः शुशुभे स तदाश्रमः ॥ ४१
अथर्ववेदप्रवराः पूगयज्ञियसामगाः ।
संहितामीरयन्ति स्म पदक्रमयुतां तु ते ॥ ४२
शब्दसंस्कारसंयुक्तैर्ब्रुवद्भिश्चापरैर्द्विजैः ।
नादितः स बभौ श्रीमान्ब्रह्मलोक इवापरः ॥ ४३
यज्ञसंस्तरविद्भिश्च क्रमशिक्षाविशारदैः ।
न्यायतत्त्वात्मविज्ञानसंपन्नैर्वेदपारगैः ॥ ४४
नानावाक्यसमाहारसमवायविशारदैः ।
विशेषकार्यविद्भिश्च मोक्षधर्मपरायणैः ॥ ४५
स्थापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः ।
शब्दच्छन्दोनिरुक्तज्ञैः कालज्ञानविशारदैः ॥ ४६
द्रव्यकर्मगुणज्ञैश्च कार्यकारणवेदिभिः ।
पक्षिवानररुतज्ञैश्च व्यासग्रन्थसमाश्रितैः ॥ ४७
नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम् ।
लोकायतिकमुख्यैश्च समन्तादनुनादितम् ॥ ४८
तत्रतत्र च विप्रेन्द्रान्नियतान्संशितव्रतान् ।
जपहोमपरान्विप्रान्ददर्श परवीरहा ॥ ४९
आसनानि विचित्राणि रुचिराणि महीपतिः ।
प्रयत्नोपहितानि स दृष्ट्वा विस्मयमागमत् ॥ ५०

काश्यपस्य कश्यपगोत्रस्य कण्वस्य ॥ २९ ॥ विततेषु वैतानिकेषु इष्टिपशुसोमादिषु प्रवर्तमानेषु ॥ ३९ ॥ यज्ञविद्यायामङ्गभूतानि कल्पसूत्रादीनि ॥ ४० ॥ भारुण्डसामानि पूगयज्ञियसामानि च साम्नामवान्तरभेदाः ॥ ४१ ॥ स्थापनं प्रथमं स्वसिद्धान्तव्यवस्था ततस्तत्र शङ्काऽऽक्षेपः तस्याः परिहारः सिद्धान्तस्तैर्या परमार्थज्ञता तां गतैः ॥ ४६ ॥ लोके एव आयतन्ते ते लोकायतिकाः तेषु लोकरञ्जनपरेषु मुख्यैः ॥ ४८ ॥ एकनवतितमोऽध्यायः ॥ ९१ ॥

देवतायतनानां च प्रेक्ष्य पूजां कृतां द्विजैः ।
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥ ५१
स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् ।
नातृप्यत्प्रेक्षमाणो वै तपोवनगुणैर्युतम् ॥ ५२
स काश्यपस्यायतनं महाव्रतै-
र्वृतं समन्तादृषिभिस्तपोधनैः ।
विवेश सामात्यपुरोहितोऽरिहा
विविक्तमत्यर्थमनोहरं शुभम् ॥ ५३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

## द्विनवतितमोऽध्यायः ॥ ९२ ॥

कण्वाश्रमे दुष्यन्तशकुन्तलासंवादः ॥ १ ॥ शकुन्तलायाः स्वजन्मवृत्तान्तकथनारम्भः ॥ २ ॥

वैशंपायन उवाच ।
ततो गच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान् ।
नापश्यच्चाश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥ १
सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तथाऽऽश्रमम् ।
उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव ॥ २
श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी ।
निश्चक्रामाश्रमात्तस्मात्तापसीवेषधारिणी ॥ ३
सा तं दृष्ट्वैव राजानं दुष्यन्तमसितेक्षणा ।
'सुप्रीताऽभ्यागतं तं तु पूज्यं प्राप्तमथेश्वरम् ॥ ४
रूपयौवनसंपन्ना शीलाचारवती शुभा ।
सा तमायतपद्माक्षं व्यूढोरस्कं महाभुजम् ॥ ५
सिंहस्कन्धं दीर्घबाहुं सर्वलक्षणपूजितम् ।
स्पष्टं मधुरया वाचा साऽब्रवीज्जनमेजय ॥' ६
स्वागतं त इति क्षिप्रमुवाच प्रतिपूज्य च ।
आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि ॥ ७
पप्रच्छानामयं राजन्कुशलं च नराधिपम् ।
यथावदर्चयित्वाऽथ पृष्ट्वा चानामयं तदा ॥ ८
उवाच स्मयमानेव किं कार्यं क्रियतामिति ।
'आश्रमस्याभिगमने किं त्वं कार्यं चिकीर्षसि ॥ ९
कस्त्वमद्येह संप्राप्तो महर्षेराश्रमं शुभम् ।'
तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम् ॥ १०
दृष्ट्वा सर्वानवद्याङ्गीं यथावत्प्रतिपूजितः ।
'राजर्षेस्तस्य पुत्रोऽहमिलिनस्य महात्मनः ॥ ११
दुष्यन्त इति मे नाम सत्यं पुष्करलोचने ।'
आगतोऽहं महाभागमृषिं कण्वमुपासितुम् ॥ १२
क्व गतो भगवान्भद्रे तन्ममाचक्ष्व शोभने ।
शकुन्तलोवाच ।
गतः पिता मे भगवान्फलान्याहर्तुमाश्रमात् ।
मुहूर्तं संप्रतीक्षस्व द्रष्टास्येनमुपागतम् ॥ १३
वैशंपायन उवाच ।
अपश्यमानस्तमृषिं तथा चोक्तस्तया च सः ।
तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम् ॥ १४
विभ्राजमानां वपुषा तपसा च दमेन च ।
रूपयौवनसंपन्नामित्युवाच महीपतिः ॥ १५
का त्वं कस्यासि सुश्रोणि किमर्थं चागता वनम् ।
एवंरूपगुणोपेता कुतस्त्वमसि शोभने ॥ १६
दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः ।
इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने ॥ १७
'स्थितोस्म्यमितसौभाग्ये विवक्षुश्चास्मि किंचन ।
शृणु मे नागनासोरु वचनं मत्तकाशिनि ॥ १८
राजर्षेरन्वये जातः पूरोरस्मि विशेषतः ।
वृण्वे त्वामद्य सुश्रोणि दुष्यन्तो वरवर्णिनि ॥ १९
न मेऽन्यत्र क्षत्रियाया मनो जातु प्रवर्तते ।
ऋषिपुत्रीषु चान्यासु नावरासु परासु च ॥ २०
तस्मात्प्रणिहितात्मानं विद्धि मां कलभाषिणि ।
यस्यां मे त्वयि भावोऽस्ति क्षत्रिया ह्यसि का वद ॥
न हि मे भीरु विप्रायां मनः प्रसहते गतिम् ।
भजे त्वामायतापाङ्गे भक्तं भजितुमर्हसि ।
भुङ्क्ष्व राज्यं विशालाक्षि बुद्धिं मात्वन्यथा कृथाः'
एवमुक्ता तु सा कन्या तेन राज्ञा तमाश्रमे ।

उवाच हसती वाक्यमिदं सुमधुराक्षरम् ॥ २३
कण्वस्याहं भगवतो दुष्यन्त दुहिता मता ।
तपस्विनो धृतिमतो धर्मज्ञस्य महात्मनः । २४
'अस्वतन्त्रास्मि राजेन्द्र काश्यपो मे गुरुः पिता ।
तमेव प्रार्थय स्वार्थे नायुक्तं कर्तुमर्हसि ॥' २५
दुष्यन्त उवाच ।
ऊर्ध्वरेता महाभागे भगवाँल्लोकपूजितः ।
चलेद्धि वृत्ताद्धर्मोपि न चलेत्संशितव्रतः ॥ २६
कथं त्वं तस्य दुहिता संभूता वरवर्णिनी ।
संशयो मे महानत्र तन्मे छेत्तुमिहार्हसि ॥ २७
शकुन्तलोवाच ।
यथाऽयमागमो मह्यं यथा चेदमभूत्पुरा ।
'अन्यथा सन्तमात्मानमन्यथा सत्सु भाषते २८
स पापेनावृतो मूर्खस्तेन आत्मापहारकः ।'
शृणु राजन्यथातत्त्वं यथाऽस्मि दुहिता मुनेः॥२९
ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत् ।
'ऊर्ध्वरेता यथासि त्वं कुतस्त्वेयं शकुन्तला॥३०
पुत्री त्वत्तः कथं जाता तत्त्वं मे ब्रूहि काश्यप ।'
तस्मै प्रोवाच भगवान्यथा तच्छृणु पार्थिव॥ ३१
कण्व उवाच ।
तप्यमानः किल पुरा विश्वामित्रो महत्तपः ।
सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥ ३२
तपसा दीप्तवीर्योऽयं स्थानान्मां च्यावयेदिति ।
भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत् ॥ ३३
गुणैरप्सरसां दिव्यैर्मेनके त्वं विशिष्यसे ।
श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु ॥
असावादित्यसङ्काशो विश्वामित्रो महातपाः ।
तप्यमानस्तपो घोरं मम कम्पयते मनः ॥ ३५
मेनके तव भारोऽयं विश्वामित्रः सुमध्यमे ।
शंसितात्मा सुदुर्धर्ष उग्रे तपसि वर्तते ॥ ३६
स मां न च्यावयेत्स्थानात्तं वै गत्वा प्रलोभय ।
चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम् ॥ ३७
रूपयौवनमाधुर्यचेष्टितस्मितभाषणैः ।
लोभयित्वा वरारोहे तपसस्तं निवर्तय ॥ ३८
मेनकोवाच ।
महातेजाः स भगवांस्तथैव च महातपाः ।
कोपनश्च तथा ह्येनं जानाति भगवानपि ॥ ३९
तेजसस्तपसश्चैव कोपस्य च महात्मनः ।
त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् ॥ ४०
महाभागं वसिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत् ।
क्षत्रजातश्च यः पूर्वमभवद्ब्राह्मणो बलात् ॥ ४१
शौचार्थं यो नदीं चक्रे दुर्गमां बहुभिर्जलैः ।
यां तां पुण्यतमां लोके कौशिकीति विदुर्जनाः४२
बभार यत्रास्य पुरा काले दुर्गे महात्मनः ।
दारान्मतङ्गो धर्मात्मा राजर्षिर्व्याधतां गतः ४३
अतीतकाले दुर्भिक्षे अभ्येत्य पुनराश्रमम् ।
मुनिः पारेति नद्या वै नाम चक्रे तदा प्रभुः॥४४
मतङ्गं याजयाश्चक्रे यत्र प्रीतमनाः स्वयम् ।
त्वं च सोमं भयाद्यस्य गतः पातुं सुरेश्वर ॥ ४५
चकारान्यं च लोकं वै क्रुद्धो नक्षत्रसंपदा ।
प्रतिश्रवणपूर्वाणि नक्षत्राणि चकार यः ।
गुरुशापहतस्यापि त्रिशङ्कोः शरणं ददौ ॥ ४६
ब्रह्मर्षिशापं राजर्षिः कथं मोक्ष्यति कौशिकः ।
अवमत्य तदा देवैर्यज्ञाङ्गं तद्विनाशितम् ॥ ४७
अन्यानि च महातेजा यज्ञाङ्गान्यसृजत्प्रभुः ।
निनाय च तदा स्वर्गं त्रिशङ्कुं स महातपाः॥४८
एतानि यस्य कर्माणि तस्याहं भृशमुद्विजे ।
यथाऽसौ न दहेत्क्रुद्धस्तथाऽऽज्ञापय मां विभो ४९
तेजसा निर्दहेल्लोकान्कम्पयेद्धरणीं पदा ।
संक्षिपेच्च महामेरुं तूर्णमावर्तयेद्दिशः ॥ ५०
तादृशं तपसा युक्तं प्रदीप्तमिव पावकम् ।
कथमस्मद्विधा नारी जितेन्द्रियमभिस्पृशेत् ॥५१
हुताशनमुखं दीप्तं सूर्यचन्द्राक्षितारकम् ।
कालजिह्वं सुरश्रेष्ठ कथमस्मद्विधा स्पृशेत् ॥ ५२

हसती हसन्ती ॥ २३ ॥ अभ्यचोदयत् पृष्टवान् ॥ ३० ॥ बभार पोषितवान् । मतङ्गस्त्रिशङ्कुः ॥ ४३ ॥ आश्रममभ्येत्य तपस्तप्त्वेति शेषः । नद्याः कौशिक्याः ॥ ४४ ॥ तस्य तस्मात् ॥ ४९ ॥ आवर्तयेदेकीकुर्यात् ॥ ५० ॥ सूर्यचन्द्रावेवाक्ष्णोः संबन्धिनी तारके यस्य तावपि भ्रूभङ्गमात्रेण स्रष्टुं समर्थ इत्यर्थः ॥ ५२ ॥

यमश्च सोमश्च महर्षयश्च
साध्या विश्वे वालखिल्याश्च सर्वे ।
एतेऽपि यस्योद्विजन्ते प्रभावा-
त्तस्मात्कस्मान्मादृशी नोद्विजेत ॥ ५३
त्वयैवमुक्ता च कथं समीप-
मृषेर्न गच्छेयमहं सुरेन्द्र ।
रक्षां च मे चिन्तय देवराज
यथा त्वदर्थं रक्षिताऽहं चरेयम् ॥ ५४
कामं तु मे मारुतस्तत्र वासः
प्रक्रीडितायां विवृणोतु देव ।
भवेच्च मे मन्मथस्तत्र कार्ये
सहायभूतस्तु तव प्रसादात् ॥ ५५
वनाच्च वायुः सुरभिः प्रवाया-
त्तस्मिन्काले तमृषिं लोभयन्त्याः ।
तथेत्युक्त्वा विहिते चैव तस्मिं-
स्ततो ययौ साऽऽश्रमं कौशिकस्य ॥ ५६

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

## त्रिनवतितमोऽध्यायः ॥ ९३ ॥

विश्वामित्रान्मेनकायां शकुन्तलाया जन्मकथनम् ॥ १ ॥

कण्व उवाच ।
एवमुक्तस्तया शक्रः संदिदेश सदागतिम् ।
प्रातिष्ठत तदा काले मेनका वायुना सह ॥ १
अथापश्यद्वरारोहा तपसा दग्धकिल्बिषम् ।
विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे ॥ २
अभिवाद्य ततः सा तं प्राक्रीडदृषिसन्निधौ ।
अपोवाह च वासोऽस्या मारुतः शशिसंनिभम् ३
सागच्छत्त्वरिता भूमिं वासस्तदभिलिप्सती ।
कुत्सयन्तीव सव्रीडं मारुतं वरवर्णिनी ॥ ४
पश्यतस्तस्य राजर्षेरप्यग्निसमतेजसः ।
विश्वामित्रस्ततस्तां तु विषमस्थामनिन्दिताम् ॥ ५
गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः ।
अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा ॥ ६
तस्या रूपगुणान्दृष्ट्वा स तु विप्रर्षभस्तदा ।
चकार भावं संसर्गे तया कामवशं गतः ॥ ७
न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता ।
तौ तत्र सुचिरं कालमुभौ व्यहरतां तदा ॥ ८
रममाणौ यथाकामं यथैकदिवसं तथा ।
'एवं वर्षसहस्राणामतीतं नान्वचिन्तयत् ॥ ९
कामक्रोधावजितवान्मुनिर्नित्यं समाहितः ।
चिरार्जितस्य तपसः क्षयं स कृतवान्मुनिः ॥१०
तपसः संक्षयादेव मुनिर्मोहं समाविशत् ।
मोहाभिभूतः क्रोधात्मा ग्रसन्मूलफलान्मुनिः ११
पादैर्जलरवं कृत्वा अन्तर्द्वीपे कुटीं गतः ।
मेनका गन्तुकामा तु शुश्राव जलनिस्वनम् ॥१२
तपसा दीप्तवीर्योऽसावाकाशादेति याति च ।
अद्य संज्ञां विजानामि ययाऽद्य तपसः क्षयः १३
गन्तुं न युक्तमित्युक्त्वा ऋतुस्नाताथ मेनका ।
कामरागाभिभूतस्य मुनेः पार्श्वं जगाम ह ॥' १४
जनयामास स मुनिर्मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥ १५
'देवगर्भोपमां बालां सर्वाभरणभूषिताम् ।
शयानां शयने रम्ये मेनका वाक्यमब्रवीत् ॥१६
महर्षेरुग्रतपसस्तेजस्त्वमसि भामिनि ।
तस्मात्स्वर्गं गमिष्यामि देवकार्यार्थमागता ॥'१७
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥ १८
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात्पर्यवारयन् ।
नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः १९

प्रक्रीडितायाः प्रकृष्टं क्रीडितं यस्याः । विवृणोतु अपसारयतु ॥ ५५ ॥ द्विनवतितमोऽध्यायः ॥ ९२ ॥

सदागतिम् वायुम् ॥ १ ॥ गृद्धां सक्ताम् । विवृतामनाच्छादिताम् ॥ ६ ॥ न्यमन्त्रयत एहीत्याकारितवान् । व्यहरतां

पर्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ।
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ॥ २०
निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् ।
'मां दृष्ट्वैवाभ्यपद्यन्त पादयोः पतिता द्विजाः।
अब्रुवञ्शकुनाः सर्वे कलं मधुरभाषिणः ॥ २१
विश्वामित्रसुतां ब्रह्मन्न्यासभूतां भरस्व वै ।
कामक्रोधावजितवान्सखा ते कौशिकीं गतः॥२२
तस्मात्पोषय तत्पुत्रीं दयावानिति तेऽब्रुवन् ।
सर्वभूतरुतज्ञोऽहं दयावान्सर्वजन्तुषु ॥' २३
आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ॥ २४
शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते ।
क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने ॥ २५
निर्जने तु वने यस्माच्छकुन्तैः परिवारिता ।
शकुन्तलेति नामास्याः कृतं चापि ततो मया २६
एवं दुहितरं विद्धि मम विप्र शकुन्तलाम् ।
शकुन्तला च पितरं मन्यते मामनिन्दिता ॥२७
शकुन्तलोवाच ।
एतदाचष्ट पृष्टः सन्मम जन्म महर्षये ।
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप॥२८
कण्वं हि पितरं मन्ये पितरं स्वमजानती ।
इति ते कथितं राजन्यथावृत्तं श्रुतं मया ॥ २९

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

---

## चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

समयबन्धपूर्वकं गान्धर्वेण विवाहेन शकुन्तलापाणिग्रहणम् ॥ १ ॥ कण्वस्य स्वाश्रमं प्रति प्रत्यागमनम् ॥ २ ॥ कण्वशकुन्तलासंवादः ॥ ३ ॥ कण्वाच्छकुन्तलाया वरलाभः ॥ ४ ॥

दुष्यन्त उवाच ।
सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे ।
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते॥१
सुवर्णमालां वासांसि कुण्डले परिहाटके ।
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥ २
आहरामि तवाद्याहं निष्कादीन्यजिनानि च ।
सर्वं राज्यं तवाद्यास्तु भार्या मे भव शोभने ॥३
गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि ।
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते॥४
शकुन्तलोवाच ।
फलाहारो गतो राजन्पिता मे इत आश्रमात् ।
मुहूर्तं संप्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥ ५
'पिता हि मे प्रभुर्नित्यं दैवतं परमं मम ।
यस्मै मां दास्यति पिता स मे भर्ता भविष्यति ॥ ६
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥७
अमन्यमाना राजेन्द्र पितरं मे तपस्विनम् ।
अधर्मेण हि धर्मिष्ठ कथं वरमुपास्महे ॥ ८
दुष्यन्त उवाच ।
मामैवं वद कल्याणि तपोराशिं दमात्मकम् ।
शकुन्तलोवाच ।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः ॥ ९
मन्युना घ्नन्ति ते शत्रून्वज्रेणेन्द्र इवासुरान् ।
अग्निर्दहति तेजोभिः सूर्यो दहति रश्मिभिः॥१०
राजा दहति दण्डेन ब्राह्मणो मन्युना दहेत् ।
क्रोधिता मन्युना घ्नन्ति वज्रपाणिरिवासुरान्११
दुष्यन्त उवाच ।
जाने भद्रे महर्षिं तं तस्य मन्युर्न विद्यते ।'
इच्छामि त्वां वरारोहे भजमानामनिन्दिते ।
त्वदर्थे मां स्थितं विद्धि त्वद्गतं हि मनो मम १२
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ॥ १३

---

विहारं चक्रतुः ॥ ८ ॥ उपस्प्रष्टुं आचमनादिकं कर्तुम् ॥ २० ॥ शरीरकृन्निषेक्ता । प्राणदाताऽभयप्रदः ॥ २५ ॥

त्रिनवतितमोऽध्यायः ॥ ९३ ॥
गान्धर्वो वरवध्वोरैकमत्येन कृतः ॥ ४ ॥ फलाहारः फल

अष्टावेव समासेन विवाहा धर्मतः स्मृताः ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ॥१४
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ।
तेषां धर्म्यान्यथापूर्वं मनुः स्वायंभुवोऽब्रवीत्॥१५
प्रशस्तांश्चतुरः पूर्वान्ब्राह्मणस्योपधारय ।
षडानुपूर्व्या क्षत्रस्य विद्धि धर्म्याननिन्दिते ॥१६
राज्ञां तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः।
पञ्चानां तु त्रयो धर्म्या अधर्म्यौ द्वौ स्मृताविह १७
पैशाच आसुरश्चैव न कर्तव्यौ कदाचन ।
अनेन विधिना कार्यो धर्मस्यैषा गतिः स्मृता १८
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः ।
पृथग्वा यदि वा मिश्रौ कर्तव्यौ नात्र संशयः॥१९
सा त्वं मम सकामस्य सकामा वरवर्णिनी ।
गान्धर्वेण विवाहेन भार्या भवितुमर्हसि ॥ २०
शकुन्तलोवाच ।
यदि धर्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥ २१
सत्यं मे प्रतिजानीहि यथा वक्ष्याम्यहं रहः ।
मयि जायेत यः पुत्रः स भवेत्त्वदनन्तरः ॥ २२
युवराजो महाराज सत्यमेतद्ब्रवीमि ते ।
यद्येतदेवं दुष्यन्त अस्तु मे सङ्गमस्त्वया ॥ २३
वैशंपायन उवाच ।
'तस्यास्तु सर्वं संश्रुत्य यथोक्तं स विशांपतिः ।
दुष्यन्तः पुनरेवाह यद्यदिच्छसि तद्वद ॥ २४
शकुन्तलोवाच ।
ख्यातो लोकप्रवादोयं विवाह इति शाश्वतः ।
वैवाहिकीं क्रियां सन्तः प्रशंसन्ति प्रजाहिताम् २५
लोकप्रवादशान्त्यर्थं विवाहं विधिना कुरु ।
सन्त्यत्र यज्ञपात्राणि दर्भाः सुमनसोऽक्षताः ॥२६
यथा युक्तो विवाहः स्यात्तथा युक्ता प्रजा भवेत् ।
तस्मादाज्यं हविर्लाजाः सिकता ब्राह्मणास्तव २७
वैवाहिकानि चान्यानि समस्तानीह पार्थिव ।
दुरुक्तमपि राजेन्द्र क्षन्तव्यं धर्मकारणात् ॥ २८
वैशंपायन उवाच ।'
एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् ।
अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ॥२९
यथा त्वमर्हा सुश्रोणि मन्यसे तद्ब्रवीमि ते ।
एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम्॥३०
'पुरोहितं समाहूय वचनं युक्तमब्रवीत् ।
राजपुत्र्या यदुक्तं वै न वृथा कर्तुमुत्सहे ॥ ३१
क्रियाहीनो हि न भवेन्मम पुत्रो महाद्युतिः ।
तथा कुरुष्व शास्त्रोक्तं विवाहं मा चिरं कुरु ॥३२
एवमुक्तो नृपतिना द्विजः परमयन्त्रितः ।
शोभनं राजराजेति विधिना कृतवान्द्विजः ॥ ३३
शासनाद्विप्रमुख्यस्य कृतकौतुकमङ्गलः ।'
जग्राह विधिवत्पाणावुवास च तया सह ॥ ३४
विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ।
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् ॥ ३५
'त्रैविद्यवृद्धैः सहितां नानाराजजनैः सह ।
शिबिकासहस्रैः सहिता वयमायान्ति बान्धवाः३६
मूकाश्चैव किराताश्च कुब्जा वामनकैः सह ।
सहिताः कञ्चुकिवरैर्वाहिनी सूतमागधैः ॥ ३७
शङ्खदुन्दुभिनिर्घोषैर्वनं च समुपैष्यति ।
तथा त्वामानयिष्यामि नगरं स्वं शुचिस्मिते ॥३८
अन्यथा त्वां न नेष्यामि स्वनिवेशमसत्कृताम् ।
सर्वमङ्गलसत्कारैः सुभ्रु सत्यं करोमि ते ॥ ३९
वैशंपायन उवाच ।
एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ।
परिष्वज्य च बाहुभ्यां स्मितपूर्वमुदैक्षत ॥ ४०
प्रदक्षिणीकृतां देवीं पुनस्तां परिषस्वजे ।
शकुन्तला सा सुमुखी पपात नृपपादयोः ॥ ४१
तां देवीं पुनरुत्थाप्य मा शुचेति पुनः पुनः ।
शपेयं सुकृतेनैव प्रापयिष्ये नृपात्मजे ॥' ४२
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय ।

---

न्यादृष्टौ गतः ॥ ५ ॥ पञ्चानां ब्राह्मादीनां त्रयो ब्राह्मदैवप्राजापत्या धर्म्याः । द्वावार्षासुरौ कन्याशुल्कग्रहणादधर्म्यौ ॥ १७ ॥ तयोरप्यासुरः पैशाचवदत्यन्तं हेय इत्याह । पैशाच इति ॥ १८ ॥ परिशेषाद्गान्धर्वराक्षसौ क्षत्रियस्य धर्म्यावित्याह । गान्धर्वेति ॥ १९ ॥ शपेयं शपथं कुर्याम् ॥ ४२ ॥ चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

मनसा चिन्तयन्प्रायात्काश्यपं प्रति पार्थिव ॥४३
भगवांस्तपसा युक्तः श्रुत्वा किं नु करिष्यति ।
तं न प्रसाद्यागतोऽहं प्रसीदेति द्विजोत्तमम् ।
एवं संचिन्तयन्नेव प्रविवेश स्वकं पुरम् ॥ ४४
ततो मुहूर्ते याते तु कण्वोऽप्याश्रममागमत् ।
शकुन्तला च पितरं ह्रिया नोपजगाम तम् ॥४५
'शङ्कितेव च विप्रर्षिमुपचक्राम सा शनैः ।
ततोऽस्य भारं जग्राह आसनं चाप्यकल्पयत् ॥ ४६
प्राक्षालयच्च सा पादौ काश्यपस्य महात्मनः ।
न चैनं लज्जयाऽशक्नोदक्षिभ्यामभिवीक्षितुम् ४७
शकुन्तला च सव्रीडा तमृषिं नाभ्यभाषत ।
तस्मात्स्वधर्मात्स्खलिता भीता सा भरतर्षभ ॥४८
अभवद्दोषदर्शित्वाद्ब्रह्मचारिण्ययन्त्रिता ।
स तदा व्रीडितां दृष्ट्वा ऋषिस्तां प्रत्यभाषत ॥४९
कण्व उवाच ।
सव्रीडैव च दीर्घायुः पुरेव भविता न च ।
वृत्तं कथय रम्भोरु मा त्रासं च प्रकल्पय ॥५०
वैशंपायन उवाच ।
ततः प्रक्षाल्य पादौ सा विश्रान्तं पुनरब्रवीत् ।
निधाय कामं तस्यर्षेः कन्दानि च फलानि च ५१
ततः संवाह्य पादौ सा विश्रान्तं वेदिमध्यमा ।
शकुन्तला पौरवाणां दुष्यन्तं जग्मुषी पतिम् ॥५२
ततः कृच्छ्रादतिशुभा सव्रीडा श्रीमती तदा ।
सगद्गदमुवाचेदं काश्यपं सा शुचिस्मिता ॥ ५३
शकुन्तलोवाच ।
राजा ताताजगामेह दुष्यन्त इलिलात्मजः ।
मया पतिर्वृतो योऽसौ दैवयोगादिहागतः ॥५४
तस्य तात प्रसीद त्वं भर्ता मे सुमहायशाः ।
अतः सर्वं तु यद्वृत्तं दिव्यज्ञानेन पश्यसि ॥ ५५
अभयं क्षत्रियकुले प्रसादं कर्तुमर्हसि ।
वैशंपायन उवाच ।
चक्षुषा स तु दिव्येन सर्वं विज्ञाय काश्यपः ५६
ततो धर्मिष्ठतां मत्वा धर्मे चास्खलितं मनः ।
उवाच भगवान्प्रीतस्तद्वृत्तं सुमहातपाः ॥ ५७
कण्व उवाच ।
एवमेतन्मया ज्ञातं दृष्टं दिव्येन चक्षुषा ।
त्वयाऽद्य राजान्वयया मामनादृत्य यत्कृतम्' ५८
पुंसा सह समायोगो न स धर्मोपघातकः ।
न भयं विद्यते भद्रे मा शुचः सुकृतं कृतम् ॥५९
क्षत्रियस्य तु गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायाः सकामेन निमन्त्रः श्रेष्ठ उच्यते ॥ ६०
'किं पुनर्विधिवत्कृत्वा सुप्रजस्त्वमवाप्स्यसि ।'
धर्मात्मा च महात्मा च दुष्यन्तः पुरुषोत्तमः६१
अभ्यागच्छत्पतिर्यस्त्वां भजमानां शकुन्तले ।
महात्मा जनिता लोके पुत्रस्तव महायशाः ॥६२
स च सर्वां समुद्रान्तां कृत्स्नां भोक्ष्यति मेदिनीम् ।
परं चाभिप्रयातस्य चक्रं तस्य महात्मनः ॥ ६३
भविष्यत्यप्रतिहतं सततं चक्रवर्तिनः ।
प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि ॥ ६४
ऋतवो बहवस्ते वै गता व्यर्थाः शुचिस्मिते ।
सार्थकं सांप्रतं ह्येतन्न च पाप्मास्ति तेऽनघे ।
गृहाण च वरं मत्तस्तत्कृते यदभीप्सितम् ॥ ६५
शकुन्तलोवाच ।
मया पतिर्वृतो योऽसौ दुष्यन्तः पुरुषोत्तमः ।
मम चैव पतिर्दृष्टो देवतानां समक्षतः ।
तस्मै ससचिवाय त्वं प्रसादं कर्तुमर्हसि ॥ ६६
वैशंपायन उवाच ।
इत्येवमुक्त्वा मनसा प्रणिधाय मनस्विनी ।
ततो धर्मिष्ठतां वव्रे राज्ये चास्खलनं तथा ॥६७
शकुन्तलां पौरवाणां दुष्यन्तहितकाम्यया ।
'एवमस्त्विति तां प्राह कण्वो धर्मभृतां वरः ॥६८
पस्पर्श चापि पाणिभ्यां सुतां श्रीमिव रूपिणीम्६९
कण्व उवाच ।
अद्यप्रभृति देवी त्वं दुष्यन्तस्य महात्मनः ।
पतिव्रतानां या वृत्तिस्तां वृत्तिमनुपालय ॥ ७०
वैशंपायन उवाच ।
इत्येवमुक्त्वा धर्मात्मा तां विशुद्ध्यर्थमस्पृशत् ।
स्पृष्टमात्रे शरीरे तु परं हर्षमवाप सा ॥' ७१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

## पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

शकुन्तलायाः पुत्रोत्पत्तिः ॥ १ ॥ तस्य सर्वदमनेतिनामप्राप्तिः ॥ २ ॥

---

वैशंपायन उवाच ।
प्रतिज्ञाय च दुष्यन्ते प्रतियाते दिने दिने ।
'गर्भश्च ववृधे तस्यां राजपुत्र्यां महात्मनः ॥' १
शकुन्तला चिन्तयन्ती राजानं कार्यगौरवात् ।
दिवारात्रमनिद्रैव स्नानभोजनवर्जिता ॥ २
राजप्रेषणिका विप्राश्चतुरङ्गबलान्विताः ।
अद्य श्वो वा परश्वो वा समायान्तीति निश्चिता ३
दिनान्पक्षानृतून्मासानयनानि च सर्वशः ।
गण्यमानानि वर्षाणि व्यतीयुस्त्रीणि भारत ॥ ४
त्रिषु वर्षेषु पूर्णेषु ऋषेर्वचनगौरवात् ।
ऋषिपत्न्यः सुबहुशो हेतुमद्वाक्यमब्रुवन् ॥ ५
ऋषिपत्न्य ऊचुः ।
शृणु भद्रे लोकवृत्तं श्रुत्वा यद्रोचते तव ।
तत्कुरुष्व हितं देवि नावमान्यं गुरोर्वचः ॥ ६
देवानां दैवतं विष्णुर्विप्राणामग्निर्ब्रह्म च ।
नारीणां दैवतं भर्ता लोकानां ब्राह्मणो गुरुः ॥ ७
सूतिकाले प्रसूष्वेति भगवांस्ते पिताऽब्रवीत् ।
करिष्यामीति कर्तव्यं तदा ते सुकृतं भवेत् ॥ ८
वैशंपायन उवाच ।
पत्नीनां वचनं श्रुत्वा साधु साध्वित्यचिन्तयत् ।'
गर्भं सुषाव वामोरूः कुमारममितौजसम् ॥ ९
त्रिषु वर्षेषु पूर्णेषु प्राजायत शकुन्तला ।
रूपौदार्यगुणोपेतं दौष्यन्तिं जनमेजय ॥ १०
'जाते तस्मिन्नन्तरिक्षात्पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः ॥ ११
गायद्भिर्मधुरं तत्र देवैः शक्रोऽभ्युवाच ह ।
शकुन्तले तव सुतश्चक्रवर्ती भविष्यति ॥ १२
बलं तेजश्च रूपं च न समं भुवि केनचित् ।
आहर्ता वाजिमेधस्य शतसङ्ख्यस्य पौरवः ॥ १३
अनेकैरपि साहस्रै राजसूयादिभिर्मखैः ।
स्वार्थं ब्राह्मणसात्कृत्वा दक्षिणाममितां ददत् १४
देवतानां वचः श्रुत्वा कण्वाश्रमनिवासिनः ।
सभाजयन्तः कण्वस्य सुतां सर्वे महर्षयः ॥ १५
शकुन्तला च तच्छ्रुत्वा परं हर्षमवाप सा ।
द्विजानाहूय मुनिभिः सत्कृत्य च महायशाः ॥' १६
जातकर्मादिसंस्कारं कण्वः पुण्यवतां वरः ।
तस्याथ कारयामास वर्धमानस्य चासकृत् ॥ १७
यथाविधि यथान्यायं क्रियाः सर्वास्त्वकारयत् ।
दन्तैः शुक्लैः शिखरिभिः सिंहसंहननोऽभवत् ॥ १८
चक्राङ्कितकरः श्रीमान्स्वयं विष्णुरिवापरः ।
'चतुष्किष्कुर्महातेजा महामूर्धा महाबलः ॥' १९
कुमारो देवगर्भाभः स तत्राशु व्यवर्धत ।
'ऋषेर्भयात्तु दुष्यन्तः स्मरन्नैवाह्वयत्तदा ॥ २०
गते काले तु महति न सस्मार तपोधनाम् ।'
षड्वर्षेषु ततो बालः कण्वाश्रमपदं प्रति ॥ २१
व्याघ्रान्सिंहान्वराहांश्च वृकांश्च महिषांस्तथा ।
'ऋक्षांश्चाभ्यहनद्व्यालान्पद्भ्यामाश्रमपीडकान् २२
बलाद्भुजाभ्यां संगृह्य बलवान्संनियम्य च ।'
बद्ध्वा वृक्षेषु दौष्यन्तिराश्रमस्य समन्ततः ॥ २३
आरुरोह द्रुमांश्चैव क्रीडन्स परिधावति ।
'वनं च लोडयामास सिंहव्याघ्रगणैर्वृतम् ॥ २४
ततश्च राक्षसान्सर्वान्पिशाचांश्च रिपून्रणे ।
मुष्टियुद्धेन तान्हत्वा ऋषीनाराधयत्तदा ॥ २५
कश्चिदितिसुतस्तं तु हन्तुकामो महाबलः ।
वध्यमानांस्तु दैतेयानमर्षी तं समभ्ययात् ॥ २६
तमागतं प्रहस्यैव बाहुभ्यां परिगृह्य च ।
दृढं चावध्य बाहुभ्यां पीडयामास तं तदा २७
मर्दितो न शशाकासान्मोचितुं बलवत्तया ।
प्राक्रोशच्छब्दैरवं तत्र द्वारेभ्यो निःसृतं त्वसृक् २८
तेन शब्देन वित्रस्ता मृगाः सिंहादयो गणाः ।
सुस्रुवुश्च शकृन्मूत्रमाश्रमस्थाश्च सुस्रुवुः ॥ २९
निरसुं जानुभिः कृत्वा विससर्ज च सोऽपतत् ।
तद्दृष्ट्वा विस्मयं जग्मुः कुमारस्य विचेष्टितम् ॥ ३०

नित्यकालं बध्यमाना दैतेया राक्षसैः सह ।
कुमारस्य भयादेव नैव जग्मुस्तदाश्रमम् ॥' ३१
ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ।
कण्वेन सहिताः सर्वे दृष्ट्वा कर्मातिमानुषम् ॥३२
अस्त्वयं सर्वदमनः सर्वं हि दमयत्यसौ ।
स सर्वदमनो नाम कुमारः समपद्यत ॥ ३३

विक्रमेणौजसा चैव बलेन च समन्वितः ।
'अप्रेषयति दुष्यन्ते महिष्यास्तनयस्य च ॥ ३४
पाण्डुभावपरीताङ्गीं चिन्तया समभिप्लुताम् ।
लम्बालकां कृशां दीनां तथा मलिनवाससम् ३५
'शकुन्तलां च संप्रेक्ष्य प्रदध्यौ स मुनिस्तदा ।
शास्त्राणि सर्ववेदाश्च द्वादशाब्दस्य चाभवन्' ३६

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

## षण्णवतितमोऽध्यायः ॥ ९६ ॥

शकुन्तलाया दुष्यन्तं प्रति प्रेषयितुं कण्वकृत उपदेशः ॥ १ ॥ हास्तिनपुरगमनविषये कण्वशकुन्तलासर्वदमनानां विवादः ॥ २ ॥ कण्वेन स्वशिष्यद्वारा शकुन्तलासर्वदमनयोर्हास्तिनपुरप्रेषणम् ॥ ३ ॥ पुरप्रवेशान्निर्विण्णैः शिष्यैः कण्वाश्रमं प्रति निवर्तनम् ॥ ४ ॥

वैशंपायन उवाच ।
तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम् ।
समयो यौवराज्याय इत्यनुध्याय स द्विजः ॥ १
'शकुन्तलां समाहूय कण्वो वचनमब्रवीत् ।
कण्व उवाच ।
शृणु भद्रे मम सुते मम वाक्यं शुचिस्मिते ॥ २
पतिव्रतानां नारीणां विशिष्टमिति चोच्यते ।
पतिशुश्रूषणं पूर्वं मनोवाक्कायचेष्टितैः ॥ ३
अनुज्ञाता मया पूर्वं पूजयैतद्व्रतं तव ।
एतेनैव च वृत्तेन पुण्याँल्लोकानवाप्य च ॥ ४
तस्मान्ते मानुषे लोके विशिष्टां लप्स्यसे श्रियम् ।
तस्माद्भद्रेऽद्य यातव्यं समीपं पौरवस्य ह ॥ ५
स्वयं नायाति मत्वा ते गतं कालं शुचिस्मिते ।
गत्वाऽऽराधय राजानं दुष्यन्तं हितकाम्यया ॥६
दौष्यन्तिं यौवराज्यस्थं दृष्ट्वा प्रीतिमवाप्स्यसि ।
देवतानां गुरूणां च क्षत्रियाणां च भामिनि ॥७
भर्तॄणां च विशेषेण हितं संगमनं भवेत् ।
तस्मात्पुत्रि कुमारेण गन्तव्यं मत्प्रियेप्सया ॥ ८
प्रतिवाक्यं न दद्यास्त्वं शपिता मम पादयोः ॥९
वैशंपायन उवाच ।
एवमुक्त्वा सुतां तत्र पौत्रं कण्वोऽभ्यभाषत ।

पुत्र्याः पुत्रः पौत्रः दौहित्र इत्यर्थः ॥ १० ॥

परिष्वज्य च बाहुभ्यां मूर्ध्न्युपाघ्राय पौरवम् १०
सोमवंशोद्भवो राजा दुष्यन्त इति विश्रुतः ।
तस्याग्रमहिषी चैषा तव माता शुचिव्रता ॥ ११
गन्तुकामा भर्तृपार्श्वं त्वया सह सुमध्यमा ।
गत्वाऽभिवाद्य राजनं यौवराज्यमवाप्स्यसि ॥१२
स पिता तव राजेन्द्रस्तस्य त्वं वशगो भव ।
पितृपैतामहं राज्यमातिष्ठस्व स्वभावतः ॥ १३
तस्मिन्काले स्वराज्यस्थो मामनुस्मर पौरव ॥ १४
वैशंपायन उवाच ।
अभिवाद्य मुनेः पादौ पौरवो वाक्यमब्रवीत् ।
त्वं पिता मम विप्रर्षे त्वं माता त्वं गतिश्च मे॥१५
न चान्यं पितरं मन्ये त्वामृते तु महातपः ।
तव शुश्रूषणं पुण्यमिह लोके परत्र च ॥ १६
शकुन्तला भर्तृकामा स्वयं यातु यथेष्टतः ।
अहं शुश्रूषणपरः पादमूले वसामि वः ॥ १७
क्रीडां व्यालमृगैः सार्धं करिष्ये न पुरा यथा ।
त्वच्छासनपरो नित्यं स्वाध्यायं च करोम्यहम् १८
एवमुक्त्वा तु संश्लिष्य पादौ कण्वस्य तिष्ठतः ।
तस्य तद्वचनं श्रुत्वा प्ररुरोद शकुन्तला ॥ १९
स्नेहात्पितुश्च पुत्रस्य हर्षशोकसमन्विता ।
निशाम्य रुदतीमार्तां दौष्यन्तिर्वाक्यमब्रवीत् २०
श्रुत्वा भगवतो वाक्यं किं रोदिषि शकुन्तले ।

गन्तव्यं काल्य उत्थाय भर्तृप्रीतिस्तवास्ति चेत् २१
शकुन्तलोवाच ।
एकस्तु कुरुते पापं फलं भुङ्क्ते महाजनः ।
मया निवारितो नित्यं न करोषि वचो मम २२
निःसृतान्कुञ्जरान्नित्यं बाहुभ्यां संप्रमथ्य वै ।
वनं च लोडयन्नित्यं सिंहव्याघ्रगणैर्वृतम् ॥ २३
एवंविधानि चान्यानि कृत्वा वै पुरुनन्दन ।
रुषितो भगवांस्तात तस्मादावां विवासितौ ॥२४
नाहं गच्छामि दुष्यन्तं नास्मि पुत्र हितैषिणी ।
पादमूले वसिष्यामि महर्षेर्भावितात्मनः ॥ २५
वैशंपायन उवाच ।
एवमुक्त्वा तु रुदती पपात मुनिपादयोः ।
एवं विलपतीं कण्वश्चानुनीय च हेतुभिः ।
पुनः प्रोवाच भगवानानृशंस्याद्धितं वचः ॥ २६
कण्व उवाच ।
शकुन्तले शृणुष्वेदं हितं पथ्यं च भामिनि ।
पतिव्रताभावगुणान्हित्वा साध्यं न किंचन ॥२७
पतिव्रतानां देवा वै तुष्टाः सर्ववरप्रदाः ।
प्रसादं च करिष्यन्ति आपदो मोक्षयन्ति च॥२८
पतिप्रसादात्पुण्यं च प्राप्नुवन्ति न चाशुभम् ।
तस्माद्गत्वा तु राजानमाराधय शुचिस्मिते ॥ २९
वैशंपायन उवाच ।
शकुन्तलां तथोक्त्वा वै शाकुन्तलमथाब्रवीत् ।
दौहित्रो मम पौत्रस्त्वमिलिलस्य महात्मनः॥३०
शृणुष्व वचनं सत्यं प्रब्रवीमि तवानघ ।
मनसा भर्तृकामा वै वाग्भिरुक्त्वा पृथग्विधम्३१
गन्तुं नेच्छति कल्याणी तस्मात्तात वहस्व वै ।
शक्तस्त्वं प्रतिगन्तुं च मुनिभिः सह पौरव॥'३२
इत्युक्त्वा सर्वदमनं कण्वः शिष्यानथाब्रवीत् ।
शकुन्तलामिमां शीघ्रं सपुत्रामाश्रमादितः॥ ३३
भर्तुः प्रापयताभ्याशं सर्वलक्षणपूजिताम् ।
नारीणां चिरवासो हि बान्धवेषु न रोचते॥ ३४
कीर्तिचारित्रधर्मघ्नस्तस्मान्नयत मा चिरम् ॥ ३५
'वैशंपायन उवाच ।
धर्माभिपूजितं पुत्रं काश्यपेन निशाम्य तु ।
काश्यपात्प्राप्य चानुज्ञां मुमुदे च शकुन्तला ३६
कण्वस्य वचनं श्रुत्वा प्रतिगच्छेति चासकृत् ।
तथेत्युक्त्वा तु कण्वं च मातरं पौरवोऽब्रवीत् ।
किं चिरायसि मातस्त्वं गमिष्यामो नृपालयम्३७
एवमुक्त्वा तु तां देवीं दुष्यन्तस्य महात्मनः ।
अभिवाद्य मुनेः पादौ गन्तुमैच्छत्स पौरवः॥३८
शकुन्तला च पितरमभिवाद्य कृताञ्जलिः ।
प्रदक्षिणीकृत्य तदा पितरं वाक्यमब्रवीत् ॥ ३९
अज्ञानान्मे पिता चेति दुरुक्तं वापि चानृतम् ।
अकार्यं वाप्यनिष्टं वा क्षन्तुमर्हति तद्भवान् ॥४०
एवमुक्तो नतशिरा मुनिर्नोवाच किंचन ।
मनुष्यभावात्कण्वोऽपि मुनिरश्रूण्यवर्तयत् ॥ ४१
अब्भक्षान्वायुभक्षांश्च शीर्णपर्णाशनान्मुनीन् ।
फलमूलाशिनो दान्तान्कृशान्धमनिसंततान् ४२
व्रतिनो जटिलान्मुण्डान्वल्कलाजिनसंवृतान् ।
समाहूय मुनिः कण्वः कारुण्यादिदमब्रवीत्॥४३
मया तु लालिता नित्यं मम पुत्री यशस्विनी ।
वने जाता विवृद्धा च न च जानाति किंचन ४४
आश्रमात्तु पथा सर्वैर्नीयतां क्षत्रियालयम् ।
द्वितीययोजने विप्राः प्रतिष्ठानं प्रतिष्ठितम् ॥४५
प्रतिष्ठाने पुरे राजा शाकुन्तलपितामहः ।
अध्युवास चिरं कालमुर्वश्या सहितः पुरा ॥ ४६
अनूपजाङ्गलयुतं धनधान्यसमाकुलम् ।
प्रतिष्ठितं पुरवरं गङ्गायामुनसङ्गमे ॥ ४७
तत्र सङ्गममासाद्य स्नात्वा हुतहुताशनाः ।
शाकमूलफलाहारा निवर्तध्वं तपोधनाः ।
अन्यथा तु भवेद्विप्रा अध्वनो गमने श्रमः॥'४८
तथेत्युक्त्वा च ते सर्वे प्रातिष्ठन्त महौजसः ।
'शकुन्तलां पुरस्कृत्य दुष्यन्तस्य पुरं प्रति ॥ ४९
गृहीत्वा चामरप्रख्यं पुत्रं कमललोचनम् ।
आजग्मुश्च पुरं रम्यं दुष्यन्ताध्युषितं वनात् ॥५०
शकुन्तलां समादाय मुनयो धर्मवत्सलाः ।
ते वनानि नदीः शैलान्गिरिप्रस्रवणानि च ॥५१
कन्दराणि नितम्बांश्च राष्ट्राणि नगराणि च ।

आश्रमाणि च पुण्यानि गत्वा चैव गतश्रमाः ॥५२
शनैर्मध्याह्नवेलायां प्रतिष्ठानं समाययुः ।
तां पुरीं पुरुहूतेन ऐलस्यार्थे विनिर्मिताम् ॥ ५३
परिघाट्टालकैर्मुख्यैरुपकल्पशतैरपि ।
शतघ्नीचक्रयन्त्रैश्च गुप्तामन्यैर्दुरासदाम् ॥ ५४
हर्म्यप्रासादसंबाधां नानापण्यविभूषिताम् ।
मण्टपैः ससभै रम्यैः प्रपाभिश्च समावृताम् ॥५५
राजमार्गेण महता सुविभक्तेन शोभिताम् ।
कैलासशिखराकारैर्गोपुरैः समलङ्कृताम् ॥ ५६
द्वारतोरणनिर्यूहैर्मङ्गलैरुपशोभिताम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ ५७
सर्वपुष्करिणीभिश्च उद्यानैश्च समावृताम् ।
वर्णाश्रमैः स्वधर्मस्थैर्नित्योत्सवसमाहितैः ॥ ५८
धनधान्यसमृद्धैश्च संतुष्टै रत्नपूजितैः ।
कृतयज्ञैश्च विद्वद्भिरग्निहोत्रपरैः सदा ॥ ५९
वर्जिता कार्यकरणैर्दानशीलैर्दयापरैः
अधर्मभीरुभिः सर्वैः स्वर्गलोकजिगीषुभिः ॥ ६०
एवंविधजनोपेतमिन्द्रलोकमिवापरम् ।
तस्मिन्नगरमध्ये तु राजवेश्म प्रतिष्ठितम् ॥ ६१
इन्द्रसद्मप्रतीकाशं संपूर्णं वित्तसंचयैः ।
तस्य मध्ये सभा दिव्या नानारत्नविभूषिता ॥६२
तस्यां सभायां राजर्षिः सर्वालङ्कारभूषितः ।
ब्राह्मणैः क्षत्रियैश्चापि मन्त्रिभिश्चापि संवृतः ॥ ६३
संस्तूयमानो राजेन्द्रः सूतमागधबन्दिभिः ।
कार्यार्थिषु तदाऽभ्येत्य कृत्वा कार्यं गतेषु सः ६४
सुखासीनोऽभवद्राजा तस्मिन्काले महर्षयः ।
शकुन्तानां स्वनं श्रुत्वा निमित्तज्ञास्त्वलक्षयन् ६५
शकुन्तले निमित्तानि शोभनानि भवन्ति नः ।
कार्यसिद्धिं वदन्त्येते ध्रुवं राज्ञी भविष्यसि ।
अस्मिंस्तु दिवसे पुत्रो युवराजो भविष्यति ॥६६

वैशंपायन उवाच ।

वर्धमानपुरद्वारं तूर्यघोषनिनादितम् ।
शकुन्तलां पुरस्कृत्य विविशुस्ते महर्षयः ॥ ६७
प्रविशन्तं नृपसुतं प्रशशंसुश्च वीक्षकाः ।
वर्धमानपुरद्वारं प्रविशन्नेव पौरवः ॥ ६८
इन्द्रलोकस्थमात्मानं मेने हर्षसमन्वितः ॥ ६९
ततो वै नागराः सर्वे समाहूय परस्परम् ।
द्रष्टुकामा नृपसुतं समपद्यन्त भारत ॥ ७०

नागरा ऊचुः ।

देवतेव जनस्याग्रे भ्राजते श्रीरिवागता ।
जयन्तेनेव पौलोमी इन्द्रलोकादिहागता ॥ ७१
इति ब्रुवन्तस्ते सर्वे महर्षीनिदमब्रुवन् ।
अभिवादयन्तः सहिता महर्षीन्देववर्चसः ॥ ७२
अद्य नः सफलं जन्म कृतार्थाश्च ततो वयम् ।
एवं ये स्म प्रपश्यामो महर्षीन्सूर्यवर्चसः ॥ ७३

वैशंपायन उवाच ।

इत्युक्त्वा सहिताः केचिदन्वगच्छन्त पौरवम् ।
हैमवत्याः सुतमिव कुमारं पुष्करेक्षणम् ॥ ७४
ये केचिद्ब्रुवन्मूढाः शाकुन्तलदिदृक्षवः ।
कृष्णाजिनेन संछन्नाननिच्छन्तो ह्यवेक्षितुम् ॥७५
पिशाचा इव दृश्यन्ते नागराणां विरूपिणः ।
विना सन्ध्यां पिशाचास्ते प्रविशन्ति पुरोत्तमम् ७६
क्षुत्पिपासार्दितान्दीनान्वल्कलाजिनवाससः ।
त्वगस्थिभूतान्निर्मांसान्धमनीसन्ततानपि ॥ ७७
पिङ्गलाक्षान्पिङ्गजटान्दीर्घदन्तान्निरूदरान् ।
विशीर्षकानूर्ध्वहस्तान्दृष्ट्वा हास्यन्ति नागराः ॥७८
एवमुक्तवतां तेषां गिरं श्रुत्वा महर्षयः ।
अन्योन्यं ते समाहूय इदं वचनमब्रुवन् ॥ ७९
उक्तं भगवता वाक्यं न कृतं सत्यवादिना ।
पुरप्रवेशनं नात्र कर्तव्यमिति शासनम् ॥ ८०
किं कारणं प्रवेक्ष्यामो नगरं दुर्जनैर्वृतम् ।
त्यक्तसङ्गस्य च मुनेर्नगरे किं प्रयोजनम् ॥ ८१
गमिष्यामो वनं तस्माद्गङ्गायामुनसङ्गमम् ।
एवमुक्त्वा मुनिगणाः प्रतिजग्मुर्यथागतम् ॥८२

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

## सप्तनवतितमोऽध्यायः ॥ ९७ ॥

सपुत्रायाः शकुन्तलाया दुष्यन्तसमीपगमनं ॥ १ ॥ तयोः संवादश्च ॥ २ ॥

वैशंपायन उवाच ।
गतान्मुनिगणान्दृष्ट्वा पुत्रं संगृह्य पाणिना ।
मातापितृभ्यां रहिता यथा शोचन्ति दारकाः ॥ १
तथा शोकपरीताङ्गी धृतिमालम्ब्य दुःखिता ।
गतेषु तेषु विप्रेषु राजमार्गेण भामिनी ॥ २
पुत्रेणैव सहायेन सा जगाम शनैः शनैः ।
अदृष्टपूर्वान्पश्यन्वै राजमार्गेण पौरवः ॥ ३
हर्म्यप्रासादचैत्यांश्च सभा दिव्या विचित्रिताः ।
कौतूहलसमाविष्टो दृष्ट्वा विस्मयमागतः ॥ ४
सर्वे ब्रुवन्ति तां दृष्ट्वा पद्महीनामिव श्रियम् ।
गत्या च हंसीसदृशीं कोकिलेन स्वरे समाम् ॥ ५
मुखेन चन्द्रसदृशीं श्रिया पद्मालयासमाम् ।
स्मितेन कुन्दसदृशीं पद्मगर्भसमत्वचम् ॥ ६
पद्मपत्रविशालाक्षीं तप्तजाम्बूनदप्रभाम् ।
करान्तमितमध्यैषा सुकेशी संहतस्तनी ॥ ७
जघनं सुविशालं वै ऊरू करिकरोपमौ ।
रक्ततुङ्गतलौ पादौ धरण्यां सुप्रतिष्ठितौ ॥ ८
एवं रूपसमायुक्ता स्वर्गलोकादिवागता ।
इति स्म सर्वेऽमन्यन्त दुष्यन्तनगरे जनाः ॥ ९
पुनः पुनरवोचंस्ते शाकुन्तलगुणानपि ।
सिंहेक्षणः सिंहदंष्ट्रः सिंहस्कन्धो महाभुजः ॥ १०
सिंहोरस्कः सिंहबलः सिंहविक्रान्तगाम्ययम् ।
पृथ्वंसः पृथुवक्षाश्च छत्राकारशिरा महान् ॥ ११
पाणिपादतले रक्तो रक्तास्यो दुन्दुभिस्वनः ।
राजलक्षणयुक्तश्च राजश्रीश्चास्य लक्ष्यते ॥ १२
आकारेण च रूपेण शरीरेणापि तेजसा ।
दुष्यन्तेन समो ह्येष कस्य पुत्रो भविष्यति ॥ १३
एवं ब्रुवन्तस्ते सर्वे प्रशशंसुः सहस्रशः ।
युक्तिवादानवोचन्त सर्वाः प्राणभृतः स्त्रियः ॥ १४
बान्धवा इव सस्नेहा अनुजग्मुः शकुन्तलाम् ।
पौराणां तद्वचः श्रुत्वा तूष्णींभूता शकुन्तला ॥ १५
वेश्मद्वारं समासाद्य विह्वला सा नृपात्मजा ।
चिन्तयामास सहसा कार्यगौरवकारणात् ॥ १६
लज्जया च परीताङ्गी राजन्राजसमक्षतः ।
अघृणा किं नु वक्ष्यामि दुष्यन्तं मम कारणात् १७
एवमुक्त्वा तु कृपणा चिन्तयन्ती शकुन्तला ।'
अभिसृत्य च राजानं वेदिता सा प्रवेशिता ॥ १८
सह तेन कुमारेण तरुणादित्यवर्चसा ।
'सिंहासनस्थं राजानं महेन्द्रसदृशद्युतिम् ॥ १९
शकुन्तला नतशिराः परं हर्षमवाप्य च ।'
पूजयित्वा यथान्यायमब्रवीत्तं शकुन्तला ॥ २०
'अभिवादय राजानं पितरं ते दृढव्रतम् ।
एवमुक्त्वा सुतं तत्र लज्जानतमुखी स्थिता ॥ २१
स्तम्भमालिङ्ग्य राजानं प्रसीदस्वेत्युवाच सा ।
शाकुन्तलोपि राजानमभिवाद्य कृताञ्जलिः ॥ २२
हर्षेणोत्फुल्लनयनो राजानं चान्ववैक्षत ।
दुष्यन्तो धर्मबुद्ध्या तु चिन्तयन्नेव सोऽब्रवीत् ॥ २३
किमागमनकार्यं ते ब्रूहि त्वं वरवर्णिनि ।
करिष्यामि न संदेहः सपुत्राया विशेषतः ॥ २४
शकुन्तलोवाच ।
प्रसीदस्व महाराज वक्ष्यामि पुरुषोत्तम ।
एष पुत्रो हि ते राजन्मय्युत्पन्नः परंतप ॥ २५
तस्मात्पुत्रस्त्वया राजन्यौवराज्येऽभिषिच्यताम् ।
यथोक्तमाश्रमे तस्मिन्वर्तस्व पुरुषोत्तम ॥ २६
मया समागमे पूर्वं कृतः स समयस्त्वया ।
तत्त्वं स्मर महाबाहो कण्वाश्रमपदं प्रति ॥ २७
वैशंपायन उवाच ।
तस्योपभोगसक्तस्य स्त्रीषु चान्यासु भारत ।
शकुन्तला सपुत्रा च मनस्यन्तरधीयत ॥ २८
स धारयन्मनस्येनां सपुत्रां सस्मितां तदा ।
तदोपगृह्य मनसा चिरं सुखमवाप सः ॥ २९
सोऽथ श्रुत्वापि तद्वाक्यं तस्या राजा स्मरन्नपि ।
अब्रवीन्न स्मरामीति त्वया भद्रे समागमम् ॥ ३०

मैथुनं च वृथा नाहं गच्छेयमिति मे मतिः ।
नाभिजानामि कल्याणि त्वया सह समागमम्' ३१
धर्मार्थकामसंबन्धं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ३२

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

## अष्टनवतितमोऽध्यायः ॥ ९८ ॥

शकुन्तलायाः स्वपाणिग्रहणमनङ्गीकुर्वता दुष्यन्तेन सह विवादः ॥ १ ॥

एवमुक्ता वरारोहा व्रीडितेव मनस्विनी ।
विसंज्ञेव च दुःखेन तस्थौ स्थूणेव निश्चला ॥ १
संरम्भामर्षताम्राक्षी स्फुरमाणोष्ठसंपुटा ।
कटाक्षैर्निर्दहन्तीव तिर्यग्राजानमैक्षत ॥ २
आकारं गूहमाना च मन्युना च समीरितम् ।
तपसा संभृतं तेजो धारयामास वै तदा ॥ ३
सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता ।
भर्तारमभिसंप्रेक्ष्य यथान्यायं वचोऽब्रवीत् ॥ ४
जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
न जानामीति निःशङ्कं यथान्यः प्राकृतस्तथा ॥५
तस्य ते हृदयं वेद सत्यस्यैवानृतस्य च ।
साक्षिणं बत कल्याणमात्मानमवमन्यसे ॥ ६
योऽन्यथा सन्तमात्मानन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ ७
एकोऽहमस्मीति च मन्यसे त्वं
न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य
तस्यान्तिके त्वं वृजिनं करोषि ॥ ८
'धर्म एव हि साधूनां सर्वेषां हितकारणम् ।
नित्यं मिथ्याविहीनानां न च दुःखावहो भवेत्' ९
मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति ।
विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः ॥ १०
आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥ ११
यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् ।
हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥१२
न तुष्यति च यस्यैष पुरुषस्य दुरात्मनः ।
तं यमः पापकर्माणं निर्भर्त्सयति दुष्कृतम् ॥१३
योऽवमत्यात्मनात्मानमन्यथा प्रतिपद्यते ।
न तस्य देवाः श्रेयांसो यस्यात्मापि न कारणम्१४
स्वयं प्राप्तेति मामेवं मावमंस्था पतिव्रताम् ।
अर्चार्हां नार्चयसि मां स्वयं भार्यामुपस्थिताम्१५
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि ।
नखल्वहमिदं शून्ये रौमि किं न शृणोषि मे॥१६
यदि मे याचमानाया वचनं न करिष्यसि ।
दुष्यन्त शतधा त्वद्य मूर्धा ते विफलिष्यति ॥ १७
जायां पतिः संप्रविश्य यदस्यां जायते पुनः ।
जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः१८
यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत्तारयति संतत्या पूर्वप्रेतान्पितामहान् ॥ १९
पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः पूर्वमेव स्वयंभुवा ॥ २०
'पुत्रेण लोकाञ्जयन्ति पौत्रेणानन्त्यमश्नुते ।
अथ पौत्रस्य पुत्रेण मोदन्ते प्रपितामहाः' ॥ २१
सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता२२
अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रिवर्गस्य यः सभार्यः स बन्धुमान्२३
भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियावृताः२४
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥ २५
कान्तारेष्वपि विश्रामो जनस्याध्वनि कस्य वै ।
यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥

संसरन्तमभिप्रेतं विषमेष्वेकपातिनम् ।
भार्यैवान्वेति भर्तारं सततं या पतिव्रता ॥ २७
प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते ।
पूर्वप्रेतं तु भर्तारं पश्चात्साप्यनुगच्छति ॥ २८
एतस्मात्कारणाद्राजन्पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्यामिह लोके परत्र च ॥ २९
'पोषणार्थं शरीरस्य पाथेयं स्वर्गतस्य वै ।'
आत्माऽऽत्मनैव जनितः पुत्र इत्युच्यते बुधैः ३०
तस्माद्भार्यां पतिः पश्येन्मातृवत्पुत्रमातरम् ।
'अन्तरात्मैव सर्वस्य पुत्रो नामोच्यते सदा ॥३१
गती रूपं च चेष्टा च आवर्ता लक्षणानि च ।
पितॄणां यानि दृश्यन्ते पुत्राणां सन्ति तानि च३२
तेषां शीलगुणाचारास्तत्संपर्काच्छुभाशुभात् ।'
भार्यायां जनितं पुत्रमादर्शे स्वमिवाननम् ॥ ३३
जनिता मोदते प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ।
'पतिव्रतारूपधराः परबीजस्य संग्रहात् ॥ ३४
कुलं विनाश्य भर्तॄणां नरकं यान्ति दारुणम् ।
परेण जनिताः पुत्राः स्वभार्यायां यथेष्टतः ॥ ३५
मम पुत्रा इति मतास्ते पुत्रा अपि शत्रवः ।
द्विषन्ति प्रतिकुर्वन्ति न ते वचनकारिणः ॥ ३६
द्वेष्टि तांश्च पिता चापि स्वबीजे न तथा नृप ।
न द्वेष्टि पितरं पुत्रो जनितारमथापि वा ॥ ३७
न द्वेष्टि जनिता पुत्रं तस्मादात्मा सुतो भवेत् ।'
दह्यमाना मनोदुःखैर्व्याधिभिस्तुमुलैर्जनाः ॥ ३८
ह्लादन्ते स्वेषु दारेषु घर्मार्ताः सलिलेष्विव ।
'विप्रवासकृशा दीना नरा मलिनवाससः ॥३९
तेऽपि स्वदारांस्तुष्यन्ति दरिद्रा धनलाभवत् ।'
अप्रियोक्तोपि दाराणां न ब्रूयादप्रियं बुधः ॥४०
रतिं प्रीतिं च धर्मं च तदायत्तमवेक्ष्य च ।
'आत्मनोऽर्धमिति श्रौतं सा रक्षति धनं प्रजाः४१
शरीरं लोकयात्रां वै धर्मं स्वर्गमृषीन्पितॄन् ।'
आत्मनो जन्मनः क्षेत्रं पुण्या रामाः सनातनाः॥
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ।
'देवानामपि का शक्तिः कर्तुं संभवमात्मनः ४३



पण्डितस्यापि लोकेषु स्त्रीषु सृष्टिः प्रतिष्ठिता ।
ऋषिभ्यो ह्यृषयः केचिच्चण्डालीष्वपि जज्ञिरे' ४४
परिसृत्य यथा सूनुर्धरणीरेणुकुण्ठितः ।
पितुरालिङ्गतेऽङ्गानि किमस्त्यभ्यधिकं ततः॥४५
स त्वं सूनुमनुप्राप्तं साभिलाषं मनस्विनम् ।
प्रेक्षमाणं कटाक्षेण किमर्थमवमन्यसे ॥ ४६
अण्डानि बिभ्रति स्वानि न त्यजन्ति पिपीलिकाः।
किं पुनस्त्वं न मन्येथाः सर्वथा पुत्रमीदृशम् ४७
न भरेथाः कथं नु त्वं मयि जातं स्वमात्मजम् ।
'ममाण्डानीति वर्धन्ते कोकिलाण्डानि वायसाः ॥
किं पुनस्त्वं न मन्येथाः सर्वज्ञः पुत्रमीदृशम् ।
मलयाच्चन्दनं जातमतिशीतं वदन्ति वै ॥ ४९
शिशोरालिङ्गनं तस्माच्चन्दनादधिकं भवेत् ।'
न वाससां न रामाणां नापां स्पर्शस्तथाविधः ५०
शिशुनालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ।
पुत्रस्पर्शात्प्रियतरः स्पर्शो लोके न विद्यते ॥ ५१
स्पृशतु त्वां समालिङ्ग्य पुत्रोऽयं प्रियदर्शनः ।
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ५२
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ।
त्रिषु वर्षेषु पूर्णेषु प्रजातोऽयमरिन्दमः ॥ ५३
'अद्यायं मन्नियोगात्तु तवाह्वानं प्रतीक्षते ।
कुमारो राजशार्दूल तव शोकप्रणाशनः ॥' ५४
आहर्ता वाजिमेधस्य शतसङ्ख्यस्य पौरवः ।
'राजसूयादिकानन्यान्क्रतूनमितदक्षिणान् ॥ ५५
इति गौरन्तरिक्षे मां सूतके ह्यवदत्पुरा ।
हन्त स्वमङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः ॥ ५६
मूर्ध्नि पुत्रानुपाघ्राय प्रतिनन्दन्ति मानवाः ।
वेदेष्वपि वदन्तीमं मन्त्रग्रामं द्विजातयः ॥ ५७
जातकर्मणि पुत्राणां तवापि विदितं ध्रुवम् ।
अङ्गादङ्गात्संभवसि हृदयादधिजायसे ॥ ५८
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ।
उपजिघ्रन्ति पितरो मन्त्रेणानेन मूर्धनि ॥ ५९
पोषणं त्वदधीनं मे सन्तानमपि चाक्षयम् ।
तस्मात्त्वं जीव मे पुत्र स सुखी शरदां शतम् ६०

एको भूत्वा द्विधा भूत इति वादः प्रवर्तते ।
त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात्पुरुषः परः ॥ ६१
सरसीवामलेऽऽत्मानं द्वितीयं पश्य ते सुतम् ।
'सरसीवामले सोमं प्रेक्षात्मानं त्वमात्मनि'॥ ६२
यथाचाहवनीयोऽग्निर्गार्हपत्यात्प्रणीयते ।
एवं त्वत्तः प्रणीतोऽयं त्वमेकः सन्द्विधा कृतः॥६३
मृगापकृष्टेन हि वै मृगयां परिधावता ।
अहमासादिता राजन्कुमारी पितुराश्रमे ॥ ६४
उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।
विश्वाची च घृताची च षडेवाप्सरसां वराः॥६५
तासां वै मेनका नाम ब्रह्मयोनिर्वराप्सराः ।
दिवः संप्राप्य जगतीं विश्वामित्रादजीजनत् ॥६६
'श्रीमानृषिर्धर्मपरो वैश्वानर इवापरः ।
ब्रह्मयोनिः कुशो नाम विश्वामित्रपितामहः ॥६७
कुशस्य पुत्रो बलवान्कुशनाभश्च धार्मिकः ।
गाधिस्तस्य सुतो राजन्विश्वामित्रस्तु गाधिजः६८
एवंविधो मम पिता मेनका जननी वरा ।'
सा मां हिमवतः पृष्ठे सुषुवे मेनकाऽप्सराः ॥६९
परित्यज्य च मां याता परात्मजमिवासती ।
'पक्षिणः पुण्यवन्तस्ते सहिता धर्मतस्तदा ॥ ७०
पक्षैस्तैरभिगुप्ता च तस्मादस्मि शकुन्तला ।
ततोऽहमृषिणा दृष्टा काश्यपेन महात्मना ॥ ७१
जलार्थमग्निहोत्रस्य गतं दृष्ट्वा तु पक्षिणः ।
न्यासभूतामिव मुनेः प्रददुर्मां दयावतः ॥ ७२
कण्वस्त्वालोक्य मां प्रीतो हसन्तीति हविर्भुजः।
स माऽरणिमिवादाय स्वमाश्रममुपागमत् ॥ ७३
सा वै संभाविता राजन्ननुक्रोशान्महर्षिणा ।
तेनैव स्वसुतेवाहं राजन्वै वरवर्णिनी ॥ ७४
विश्वामित्रसुता चाहं वर्धिता मुनिना नृप ।
यौवने वर्तमानां च दृष्टवानसि मां नृप ॥ ७२
आश्रमे पर्णशालायां कुमारीं विजने तदा ।
धात्रा प्रचोदितां शून्ये पित्रा विरहितां मिथः७६
वाग्भिस्त्वं सूनृताभिर्मामपत्यार्थमचूचुदः ।
अकार्षीस्त्वाश्रमे वासं धर्मकामार्थनिश्चितम् ७७
गान्धर्वेण विवाहेन विधिना पाणिमग्रहीः ।
साऽहं कुलं च शीलं च सत्यवादित्वमात्मनः ७८
स्वधर्मं च पुरस्कृत्य त्वामद्य शरणं गता ।
तस्मान्नार्हसि संश्रुत्य तथेति वितथं वचः ॥ ७९
स्वधर्मं पृष्ठतः कृत्वा परित्यक्तुमुपस्थिताम् ।
त्वन्नाथां लोकनाथस्त्वं नार्हसि त्वमनागसम्'८०
किं नु कर्माशुभं पूर्वं कृतवत्यस्मि पार्थिव ।
यदहं बान्धवैस्त्यक्ता बाल्ये संप्रति वै त्वया८१
कामं त्वया परित्यक्ता गमिष्याम्यहमाश्रमम् ।
इमं बालं तु संत्यक्तुं नार्हस्यात्मजमात्मना ॥८२
दुष्यन्त उवाच ।
न पुत्रमभिजानामि त्वयि जातं शकुन्तले ।
असत्यवचना नार्यः कस्ते श्रद्धास्यते वचः ॥ ८३
'अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ।
विशेषतो मत्सकाशे दुष्टतापसि गम्यताम्'॥ ८४
क्व महर्षिस्तपस्युग्रः क्वाप्सराः सा च मेनका ।
क्व च त्वमेवं कृपणा तापसीवेषधारिणी ॥ ८५
अतिकायश्च पुत्रस्ते बालोऽतिबलवानयम् ।
कथमल्पेन कालेन सालस्कन्ध इवोद्गतः ॥ ८६
सुनिकृष्टा च योनिस्ते पुंश्चली प्रतिभासि मे ।
यदृच्छया कामरागाज्जाता मेनकया ह्यसि ॥ ८७
सर्वमेव परोक्षं मे यत्त्वं वदसि तापसि ।
'सर्वा वामाः स्त्रियो लोके सर्वाः कामपरायणाः८८
सर्वाः स्त्रियः परवशाः सर्वाः क्रोधसमाकुलाः ।
असत्योक्ताः स्त्रियः सर्वा न कण्वं वक्तुमर्हसि'८९
मेनका निरनुक्रोशा वर्धकी जननी तव ।
यया हिमवतः पादे निर्माल्यवदुपेक्षिता ॥ ९०
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव ।
विश्वामित्रो ब्राह्मणत्वे लुब्धः कामपरायणः ९१
सुषाव सुरनारी मां विश्वामित्राद्यथेष्टतः ।
अहो जानामि ते जन्म कुत्सितं कुलटे जनैः ९२
मेनकाऽप्सरसां श्रेष्ठा महर्षिश्चापि ते पिता ।
तयोरपत्यं कस्मात्त्वं पुंश्चलीवाभिभाषसे ॥ ९३

जातिश्चापि निकृष्टा ते कुलीनेति विजल्पसे ।
जनयित्वा त्वमुत्सृष्टा कोकिलेव परैर्भृता ॥ ९४
अरिष्टैरिव दुर्बुद्धिः कण्वो वर्धयिता पिता ।
अश्रद्धेयमिदं वाक्यं यत्त्वं जल्पसि तापसि ॥९५
ब्रुवन्ती राजसान्निध्ये गम्यतां यत्र चेच्छसि ।
'सुवर्णमणिमुक्तानि वस्त्राण्याभरणानि च ॥ ९६
यदिहेच्छसि भोगार्थं तापसि प्रतिगृह्यताम् ।
नाहं त्वां द्रष्टुमिच्छामि यथेष्टं गम्यतामितः' ९७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

## एकोनशततमोऽध्यायः ॥ ९९ ॥

दुष्यन्तशकुन्तलाविवादः ॥ १ ॥

शकुन्तलोवाच ।
राजन्सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि १
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् ।
ममैवोद्रिच्यते जन्म दुष्यन्त तव जन्मतः ॥ २
क्षितौ चरसि राजंस्त्वमन्तरिक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥ ३
महेन्द्रस्य कुबेरस्य यमस्य वरुणस्य च ।
भवनान्यनुसंयामि प्रभावं पश्य मे नृप ॥ ४
'पुरा नरवरः पुत्र उर्वश्यां जनितस्तदा ।
आयुर्नाम महाराज तव पूर्वपितामहः ॥ ५
महर्षयश्च बहवः क्षत्रियाश्च परन्तपाः ।
अप्सरःसु रूपीणां च मातृदोषो न विद्यते ॥' ६
सत्यश्चापि प्रवादोऽयं प्रवक्ष्यामि च ते नृप ।
निदर्शनार्थं न द्वेषाच्छ्रुत्वा तत्क्षन्तुमर्हसि ॥ ७
विरूपो यावदादर्शे नात्मनो वीक्षते मुखम् ।
मन्यते तावदात्मानमन्येभ्यो रूपवत्तरम् ॥ ८
यदा तु रूपमादर्शे विरूपं सोऽभिवीक्षते ।
तदा ह्रीमांस्तु जानीयादन्तरं नेतरं जनम् ॥ ९
अतीव रूपसंपन्नो न कंचिदवमन्यते ।
अतीव जल्पन्दुर्वाचो भवतीह विहेतुकः ॥ १०
'पांसुपातेन हृष्यन्ति कुञ्जरा मदशालिनः ।
तथा परिवदन्नन्यान्हृष्टो भवति दुर्मतिः ॥ ११
सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव ।
सुनास्तिकोप्युद्विजते जनः किं पुनरास्तिकः ॥१२
स्वयमुत्पाद्य पुत्रं वै सदृशं योऽवमन्यते ।
तस्य देवाः श्रियं घ्नन्ति तत्रैनं कलिराविशेत् १३
अभव्येऽप्यनृतेऽशुद्धे नास्तिके पापकर्मणि ।
दुराचारे कलिर्ह्याशु न कलिर्धर्मचारिषु ॥' १४
मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥ १५
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसि ॥ १६
'आत्मनो दुष्टभावत्वं जानन्नीचोऽप्रसन्नधीः ।
परेषामपि जानाति स्वधर्मसदृशान्गुणान् ॥ १७
दह्यमानास्तु तीव्रेण नीचाः परयशोग्निना ।
अशक्तास्तद्गतिं गन्तुं ततो निन्दां प्रकुर्वते ॥'१८
अन्यान्परिवदन्साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यान्हृष्टो भवति दुर्जनः ॥ १९
'अपवादरता मूर्खा भवन्ति हि विशेषतः ।
नापवादरताः सन्तो भवन्ति स विशेषतः ॥'२०
अभिवाद्य यथा वृद्धान्साधुर्गच्छति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥ २१
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः ।
यथा वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥
अतो हास्यतरं लोके किंचिदन्यन्न विद्यते ।
यदि दुर्जन इत्याहुः सज्जनं दुर्जनाः स्वयम् ॥२३
'दारुणाल्लोकसंक्लेशाद्दुःखमाप्नोत्यसंशयम् ॥'
कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन् ॥ २४
उत्तमं सर्वधर्माणां तस्मात्पुत्रं तु न त्यजेत् ।
स्वपत्नीप्रभवाँल्लब्धान्कृतान्समयवर्धितान् ॥ २५
क्रीतान्कन्यासु चोत्पन्नान्पुत्रान्वै मनुरब्रवीत् ।

'ते च पङ्क्तिबन्धुदायादाः षडदायादबान्धवाः ॥२६
धर्मकृत्यवहा नृणां मनसः प्रीतिवर्धनाः ।
त्रायन्ते नरकाज्जाताः पुत्रा धर्मप्लवाः पितॄन् २७
स त्वं नृपतिशार्दूल न पुत्रं त्यक्तुमर्हसि ।
तस्मात्पुत्रं च सत्यं च पालयस्व महीपते ॥ २८
उभयं पालयस्वैतन्नानृतं वक्तुमर्हसि ।'
आत्मानं सत्यधर्मौ च पालयेथा महीपते ।
नरेन्द्रसिंह कपटं न हि वोढुं त्वमर्हसि ॥ २९
वरं कूपशताद्वापी वरं वापीशतात्क्रतुः ।
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥ ३०
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ३१
सर्ववेदाधिगमनं सर्वतीर्थावगाहनम् ।
सत्यस्यैव च राजेन्द्र कलां नार्हति षोडशीम् ३२
नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् ।
न हि तीव्रतरं पापमनृतादिह विद्यते ॥ ३३
राजन्सत्यं परो धर्मः सत्याच्च समयः परः ।
मात्याक्षीः समयं राजन्सत्यं सङ्गतमस्तु ते ॥३४
'यः पापो न विजानीयात्कर्म कृत्वा नराधिप ।
न हि तादृक्परं पापमनृतादिह विद्यते ॥ ३५
यस्य ते हृदयं वेद सत्यस्यैवानृतस्य च ।
कल्याणावेक्षणं तस्मात्कर्तुमर्हसि धर्मतः ॥ ३६
यो न कामान्न च क्रोधान्न द्रोहादतिवर्तते ।
अमित्रं वापि मित्रं वा स एवोत्तमपूरुषः ॥' ३७
अनृतश्चेत्प्रसङ्गस्ते श्रद्दधासि न चेत्स्वयम् ।
आश्रमं गन्तुमिच्छामि त्वादृशो नास्ति सङ्गतं ३८
'पुत्रत्वे शङ्कमानस्य त्वं बुद्ध्या निश्चयं कुरु ।
गतिः स्वरः स्मृतिः सत्त्वं शीलं विद्या च विक्रमः॥
धृष्णुप्रकृतिभावौ च आवर्तो रोमराजयः ।
समा यस्य यदा स्युस्ते तस्य पुत्रो न संशयः ४०
सादृश्येनोद्धृतं विम्बं तव देहाद्विशांपते ।
तातेति भाषमाणं वै मा स्म राजन्वृथा कृथाः ४१
ऋते च गर्दभीक्षीरात्पयः पास्यति मे सुतः ।'
ऋतेपि त्वां च दुष्यन्त शैलराजावतंसिकाम् ।
चतुरन्तामिमामुर्वीं पुत्रो मे पालयिष्यति ॥ ४२
'शकुन्तले तव सुतश्चक्रवर्ती भविष्यति ।
एवमुक्तं महेन्द्रेण भविष्यति न चान्यथा ॥ ४३
साक्षित्वे बहवो ह्युक्ता देवदूतादयो मया ।
न ब्रुवन्ति तथा सत्यमुताहो नानृतं किल ॥ ४४
असाक्षिणी मन्दभाग्या गमिष्यामि यथागतम् ॥'
वैशंपायन उवाच ।
एतावदुक्त्वा वचनं प्रातिष्ठत शकुन्तला ।
'तस्याः क्रोधसमुत्थोग्निः सधूमो मूर्ध्न्यदृश्यत ४६
संनियम्यात्मनोऽङ्गेषु ततः क्रोधाग्निमात्मजम् ।
प्रस्थितैवानवद्याङ्गी सह पुत्रेण वै वनम्' ॥ ४७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥

## शततमोऽध्यायः ॥ १०० ॥

आकाशवाणीश्रवणानन्तरं सपुत्रायाः शकुन्तलाया राज्ञाङ्गीकारः ॥ १ ॥ भरतेतिनामकरणपूर्वकं पुत्रस्य राज्येऽभिषेकः ॥ २ ॥

वैशंपायन उवाच ।
अथान्तरिक्षे दुष्यन्तं वागुवाचाशरीरिणी ।
ऋत्विक्पुरोहिताचार्यैर्मन्त्रिभिश्चाभिसंवृतम् ॥ १
माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः।
भरस्व पुत्रं दौष्यन्तिं सत्यमाह शकुन्तला ॥ २
'सर्वेभ्यो ह्यङ्गमङ्गेभ्यः साक्षादुत्पद्यते सुतः ।
आत्मा चैव सुतो नाम तेनैव तव पौरव ॥ ३
आहितं ह्यात्मनाऽऽत्मानं परिरक्ष इमं सुतम् ।
अनन्यां त्वं प्रतीक्षस्व मावमंस्थाः शकुन्तलाम् ४
स्त्रियः पवित्रमतुलमेतद्दुष्यन्त धर्मतः ।
मासि मासि रजो ह्यासां दुरितान्यपकर्षति ॥ ५
ततः सर्वाणि भूतानि व्याजह्रुस्तं समन्ततः ।

देवा ऊचुः ।
आहितस्त्वत्तनोरेष मावमंस्थाः शकुन्तलाम्' ॥ ६
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥७
'पतिर्जायां प्रविशति स तस्यां जायते पुनः ।
अन्योन्यप्रकृतिर्ह्येषा मावमंस्थाः शकुन्तलाम् ॥'८
जाया जनयते पुत्रमात्मनोऽङ्गाद्द्विधा कृतम् ।
तस्माद्भरस्व दुष्यन्त पुत्रं शाकुन्तलं नृप ॥ ९
सुभूतिरेषा न त्याज्या जीवितं जीवयात्मजम् ।
शाकुन्तलं महात्मानं दुष्यन्त भर पौरवम् ॥१०
भर्तव्योऽयं त्वया यस्मादस्माकं वचनादपि ।
तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः ॥११
'भरताद्भारती कीर्तिर्येनेदं भारतं कुलम् ।
अपरे ये च पूर्वे च भारता इति तेऽभवन् ॥ १२
वैशंपायन उवाच ।
एवमुक्त्वा ततो देवा ऋषयश्च तपोधनाः ।
पतिव्रतेति संहृष्टाः पुष्पवृष्टिं ववर्षिरे ॥' १३
तच्छ्रुत्वा पौरवो वाक्यं व्याहृतं वै दिवौकसाम् ।
'सिंहासनात्समुत्थाय प्रणम्य च दिवौकसः ॥'१४
पुरोहितममात्यांश्च संप्रहृष्टोऽब्रवीदिदम् ।
शृण्वन्त्वेतद्भवन्तोऽपि देवदूतस्य भाषितम् ॥१५
'शृण्वन्तु देवतानां च महर्षीणां च भाषितम्' ।
अहमप्येवमेवैनं जानामि सुतमात्मजम् ॥ १६
यद्यहं वचनादस्या गृह्णीयामिममात्मजम् ।
भवेद्धि शङ्का लोकस्य नैवं शुद्धो भवेदयम् ॥१७
वैशंपायन उवाच ।
तां विशोध्य तदा राजा देवैः सह महर्षिभिः ।
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥ १८
ततस्तस्य तदा राजा पितृकर्माणि सर्वशः ।
कारयामास मुदितः प्रीतिमानात्मजस्य ह ।
मूर्ध्नि चैनं समाघ्राय सस्नेहं परिषस्वजे ॥ १९
सभाज्यमानो विप्रैश्च स्तूयमानश्च बन्दिभिः ।
मुदं स परमां लेभे पुत्रस्पर्शनजां नृपः ॥ २०
स्वां चैव भार्यां धर्मज्ञः पूजयामास धर्मतः ।
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः ॥ २१
लोकस्यायं परोक्षस्तु संबन्धो नौ पुराऽभवत् ।
कृतो लोकसमक्षोऽद्य संबन्धो वै पुनः कृतः २२
तस्मादेतन्मया तस्य तन्निमित्तं प्रभाषितम् ॥२३
शङ्केत वाऽयं लोकोऽथ स्त्रीभावान्मयि संगतम् ।
तस्मादेतन्मया चापि तच्छुद्ध्यर्थं विचारितम् २४
'ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव पृथग्विधाः ।
त्वां देवि पूजयिष्यन्ति निर्विशङ्कां पतिव्रताम्' २५
पुत्रश्चायं वृतो राज्ये त्वमग्रमहिषी भव ॥ २६
यच्च कोपनयात्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये ।
प्रणयिन्या विशालाक्षि तत्क्षान्तं ते मया शुभे २७
'अनृतं वाप्यनिष्टं वा दुरुक्तं वातिदुष्कृतम् ।
त्वयाप्येवं विशालाक्षि क्षन्तव्यं मम दुर्वचः ।
क्षान्त्या पतिकृते नार्यः पातिव्रत्यं व्रजन्ति ताः ॥'
एवमुक्त्वा तु राजर्षिस्तामनिन्दितगामिनीम् ।
अन्तःपुरं प्रवेश्याथ दुष्यन्तो महिषीं प्रियाम् २९
वासोभिरन्नपानैश्च पूजयित्वा तु भारत ।
'स मातरमुपस्थाय रथन्तर्यामभाषत ॥ ३०
मम पुत्रो वने जातस्तव शोकप्रणाशनः ।
ऋणादद्य विमुक्तोऽहं तव पौत्रेण शोभने ॥ ३१
विश्वामित्रसुता चेयं कण्वेन च विवर्धिता ।
स्नुषा तव महाभागे प्रसीदस्व शकुन्तलाम् ॥ ३२
पुत्रस्य वचनं श्रुत्वा पौत्रं सा परिषस्वजे ।
पादयोः पतितां तत्र रथन्तर्या शकुन्तलाम् ॥३३
परिष्वज्य च बाहुभ्यां हर्षादश्रूण्यवर्तयत् ।
उवाच वचनं सत्यं लक्षये लक्षणानि च ॥ ३४
तव पुत्रो विशालाक्षि चक्रवर्ती भविष्यति ।
तव भर्ता विशालाक्षि त्रैलोक्यविजयी भवेत् ३५
दिव्यान्भोगाननुप्राप्ता भव त्वं वरवर्णिनि ।
एवमुक्ता रथन्तर्या परं हर्षमवाप सा ॥ ३६
शकुन्तलां तदा राजा शास्त्रोक्तेनैव कर्मणा ।
ततोऽग्रमहिषीं कृत्वा सर्वाभरणभूषिताम् ॥ ३७
ब्राह्मणेभ्यो धनं दत्त्वा सैनिकानां च भूपतिः ।
दौष्यन्तिं च ततो राजा पुत्रं शाकुन्तलं तदा' ३८

भरतं नामतः कृत्वा यौवराज्येऽभ्यपेचयत् ।
'भरते भारमावेश्य कृतकृत्योऽभवन्नृपः ॥ ३९
ततो वर्षशतं पूर्णं राज्यं कृत्वा नराधिपः ।
गत्वा वनानि दुष्यन्तः स्वर्गलोकमुपेयिवान् ॥' ४०

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि शततमोऽध्यायः ॥ १०० ॥

## एकोत्तरशततमोऽध्यायः ॥ १०१ ॥

भरतचरित्रकथनम् ॥ १ ॥ तद्वंशकथनं च ॥ २ ॥

'वैशंपायन उवाच ।
दुष्यन्ताद्भरतो राज्यं यथान्यायमवाप सः ।'
तस्य तत्प्रथितं कर्म प्रावर्तत महात्मनः ॥ १
भास्वरं दिव्यमजितं लोकसंनादनं महत् ।
स विजित्य महीपालांश्चकार वशवर्तिनः ॥ २
चचार च सतां धर्मं प्राप्य चानुत्तमं यशः ।
स राजा चक्रवर्त्यासीत्सार्वभौमः प्रतापवान् ॥ ३
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ।
याजयामास तं कण्वो दक्षवद्भूरिदक्षिणम् ॥ ४
श्रीमद्गोविततं नाम वाजिमेधमवाप सः ।
यस्मिन्सहस्रं पद्मानां कण्वाय भरतो ददौ ॥ ५
सोऽश्वमेधशतैरीजे यमुनामनु तीरगः ।
त्रिशतैश्च सरस्वत्यां गङ्गामनु चतुःशतैः ॥ ६
दौष्यन्तिर्भरतो यज्ञैरीजे शाकुन्तलो नृपः ।
तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः ॥ ७
भरतस्य वरस्त्रीषु पुत्राः संजज्ञिरे पृथक् ।
नाभ्यनन्दत्तदा राजा नानुरूपा ममेति तान् ॥ ८
ततस्तान्मातरः क्रुद्धाः पुत्रान्निन्युर्यमक्षयम् ।
ततस्तस्य नरेन्द्रस्य वितथं पुत्रजन्म तत् ॥ ९
ततो महद्भिः क्रतुभिरीजानो भरतस्तदा ।
लेभे पुत्रं भरद्वाजाद्भुमन्युं नाम भारत ॥ १०
ततः पुत्रिणमात्मानं ज्ञात्वा पौरवनन्दनः ।
भुमन्युं भरतश्रेष्ठ यौवराज्येऽभ्यपेचयत् ॥ ११
ततो दिविरथो नाम भुमन्योरभवत्सुतः ।
सुहोत्रश्च सुहोता च सुहविः सुयजुस्तथा ॥ १२
पुष्करिण्यामृचीकश्च भुमन्योरभवन्सुताः ।
तेषां ज्येष्ठः सुहोत्रस्तु राज्यमाप महीक्षिताम् ॥ १३
राजसूयाश्वमेधाद्यैः सोऽयजद्बहुभिः सवैः ।
सुहोत्रः पृथिवीं कृत्स्नां बुभुजे सागराम्बराम् ॥ १४
पूर्णां हस्तिगवाश्वैश्च बहुरत्नसमाकुलाम् ।
ममज्जेव मही तस्य भूरिभारावपीडिता ॥ १५
हस्त्यश्वरथसंपूर्णा मनुष्यकलिला भृशम् ।
सुहोत्रे राजनि तदा धर्मतः शासति प्रजाः ॥ १६
चैत्ययूपाङ्किता चासीद्भूमिः शतसहस्रशः ।
प्रवृद्धजनसस्या च सर्वदैव व्यरोचत ॥ १७
ऐक्ष्वाकी जनयामास सुहोत्रात्पृथिवीपतेः ।
अजमीढं सुमीढं च पुरुमीढं च भारत ॥ १८
अजमीढो वरस्तेषां तस्मिन्वंशः प्रतिष्ठितः ।
षट् पुत्रान्सोप्यजनयत्तिसृषु स्त्रीषु भारत ॥ १९
ऋक्षं धूमिन्यथो नीली दुष्यन्तपरमेष्ठिनौ ।
केशिन्यजनयज्जह्नुं सुतौ च जनरूपिणौ ॥ २०
विदुः संवरणं वीरमृक्षाद्राथन्तरीसुतम् ।
तथेमे सर्वपञ्चाला दुष्यन्तपरमेष्ठिनोः ।
अन्वयाः कुशिका राजञ्जह्नोरमिततेजसः ॥ २१
जनरूषणयोर्ज्येष्ठमृक्षमाहुर्जनाधिपम् ।
ऋक्षात्संवरणो जज्ञे राजन्वंशकरस्तव ॥ २२
आर्क्षे संवरणे राजन्प्रशासति वसुन्धराम् ।
संक्षयः सुमहानासीत्प्रजानामिति नः श्रुतम् ॥ २३
व्यशीर्यत ततो राष्ट्रं क्षयैर्नानाविधैस्तदा ।
क्षुन्मृत्युभ्यामनावृष्ट्या व्याधिभिश्च समाहतम् ॥ २४
अभ्यघ्नन्भारतांश्चैव सपत्नानां बलानि च ।
चालयन्वसुधां चेमां बलेन चतुरङ्गिणा ॥ २५

वितथं विगतस्तथाभावो जनकसादृश्यं यत्र तत्तादृशं पुत्रजन्म ॥ ९ ॥ आर्क्षे ऋक्षपुत्रे ॥ २३ ॥ क्षयैर्नाशहेतुभिः क्षुत्प्रभृतिभिः

अभ्ययात्तं च पाञ्चल्यो विजित्य तरसा महीम् ।
अक्षौहिणीभिर्दशभिः स एनं समरेऽजयत् ॥२६
ततः सदारः सामात्यः सपुत्रः ससुहृज्जनः ।
राजा संवरणस्तस्मात्पलायत महाभयात् ॥ २७
'ते प्रतीचीं पराभूताः प्रपन्ना भारता दिशम् ।'
सिन्धोर्नदस्य महतो निकुञ्जे न्यवसंस्तदा ।
नदीविषयपर्यन्ते पर्वतस्य समीपतः ॥ २८
तत्रावसन्बहून्कालान्भारता दुर्गमाश्रिताः ।
तेषां निवसतां तत्र सहस्रं परिवत्सरान् ॥ २९
अथाभ्यगच्छद्भरतान्वसिष्ठो भगवानृषिः ।
तमागतं प्रयत्नेन प्रत्युद्गम्याभिवाद्य च ॥ ३०
अर्घ्यमभ्याहरंस्तस्मै ते सर्वे भारतास्तदा ।
निवेद्य सर्वमृषये सत्कारेण सुवर्चसे ॥ ३१
तमासने चोपविष्टं राजा वव्रे स्वयं तदा ।
पुरोहितो भवान्नोऽस्तु राज्याय प्रयतेमहि ॥ ३२
ओमित्येवं वसिष्ठोऽपि भारतान्प्रत्यपद्यत ।
अथाभ्यषिञ्चत्साम्राज्ये सर्वक्षत्रस्य पौरवम् ॥३३
विषाणभूतं सर्वस्यां पृथिव्यामिति नः श्रुतम् ।
भरताध्युषितं पूर्वं सोऽध्यतिष्ठत्पुरोत्तमम् ॥ ३४
पुनर्बलिभृतश्चैव चक्रे सर्वमहीक्षितः ।
ततः स पृथिवीं प्राप्य पुनरीजे महाबलः ॥ ३५
आजमीढो महायज्ञैर्बहुभिर्भूरिदक्षिणैः ।
ततः संवरणात्सौरी तपती सुषुवे कुरुम् ॥ ३६
राजत्वे तं प्रजाः सर्वा धर्मज्ञ इति वव्रिरे ।
'महिम्ना तस्य कुरवो लेभिरे प्रत्ययं भृशम् ।'
तस्य नाम्नाऽभिविख्यातं पृथिव्यां कुरुजाङ्गलं ३७
कुरुक्षेत्रं स तपसा पुण्यं चक्रे महातपाः ।
अश्ववन्तमभिष्यन्तं तथा चैत्ररथं मुनिम् ॥ ३८
जनमेजयं च विख्यातं पुत्रांश्चास्यानुशुश्रुम ।
पञ्चैतान्वाहिनी पुत्रान्व्यजायत मनस्विनी ॥ ३९
अविक्षितः परिक्षित्तु शबलाश्वस्तु वीर्यवान् ।
आदिराजो विराजश्च शाल्मलिश्च महाबलः ॥४०
उच्चैःश्रवा भङ्गकारो जितारिश्चाष्टमः स्मृतः ।
एतेषामन्ववाये तु ख्यातास्ते कर्मजैर्गुणैः ।
जनमेजयादयः सप्त तथैवान्ये महारथाः ॥ ४१
परीक्षितोऽभवन्पुत्राः सर्वे धर्मार्थकोविदाः ।
कक्षसेनोग्रसेनौ तु चित्रसेनश्च वीर्यवान् ॥ ४२
इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः ।
जनमेजयस्य तनया भुवि ख्याता महाबलाः ४३
धृतराष्ट्रः प्रथमजः पाण्डुर्बाह्लीक एव च ।
निषधश्च महातेजास्तथा जाम्बूनदो बली ॥ ४४
कुण्डोदरः पदातिश्च वसातिश्चाष्टमः स्मृतः ।
सर्वे धर्मार्थकुशलाः सर्वभूतहिते रताः ॥ ४५
धृतराष्ट्रोऽथ राजासीत्तस्य पुत्रोऽथ कुण्डिकः ।
हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि पञ्चमः ॥४६
हविश्रवास्तथेन्द्राभो भुमन्युश्चापराजितः ।
धृतराष्ट्रसुतानां तु त्रीनेतान्प्रथितान्भुवि ॥ ४७
प्रतीपं धर्मनेत्रं च सुनेत्रं चापि भारत ।
प्रतीपः प्रथितस्तेषां बभूवाप्रतिमो भुवि ॥ ४८
प्रतीपस्य त्रयः पुत्रा जज्ञिरे भरतर्षभ ।
देवापिः शन्तनुश्चैव बाह्लीकश्च महारथः ॥ ४९
देवापिस्तु प्रवव्राज तेषां धर्महितेप्सया ।
शन्तनुश्च महीं लेभे बाह्लीकश्च महारथः ॥ ५०
भरतस्यान्वयास्त्वेते देवकल्पा महारथाः ।
बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः ॥ ५१
एवंविधा महाभागा देवरूपाः प्रहारिणः ।
अन्ववाये महाराज ऐलवंशविवर्धनाः ॥ ५२
'गङ्गातीरं समागम्य दीक्षितो जनमेजय ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥ ५३
पुनरीजे महायज्ञैः समाप्तवरदक्षिणैः ।
अग्निष्टोमातिरात्राणामुक्थानां सोमवत्पुनः ॥५४
वाजपेयेष्टिसत्राणां सहस्रैश्च सुसंभृतैः ।
दृष्ट्वा शाकुन्तलो राजा तर्पयित्वा द्विजान्धनैः ५५
पुनः सहस्रं पद्मानां कण्वाय भरतो ददौ ।
जम्बूनदस्य शुद्धस्य कनकस्य महायशाः ॥ ५६

॥ २४ ॥ अभ्ययात्तं संवरणम् । एनं संवरणमेव ॥ २६ ॥ बलिभृतः करदान् ॥ ३५ ॥ सौरी सूर्यकन्या ॥ ३६ ॥ अश्ववत एवाविक्षिदिति संज्ञान्तरम् ॥ ४० ॥ एकोत्तरशततमोऽध्यायः ॥ १०१ ॥

यस्य यूपाः शतव्यामाः परिणाहेऽथ काञ्चनाः ।
सहस्रव्याममुद्विद्धाः सेन्द्रैर्देवैः समुच्छ्रिताः ॥५७
स्वलङ्कृता भ्राजमानाः सर्वरत्नैर्मनोरमैः ।
हिरण्यं द्विरदानश्वान्महिषोष्ट्रगजाविकम् ॥ ५८
दासीदासं धनं धान्यं गाः सुशीलाः सवत्सकाः ।
भूमिं यूपसहस्राङ्कां कण्वाय बहुदक्षिणाम् ॥ ५९
बहूनां ब्रह्मकल्पानां धनं दत्त्वा क्रतून्बहून् ।
ग्रामान्गृहाणि शुभ्राणि कोटिशोथाददत्तदा॥६०
भरताद्भारती कीर्तिर्येनेदं भारतं कुलम् ।'
भरतस्यान्वये जाता देवकल्पा महारथाः ॥ ६१
बहवो ब्रह्मकल्पाश्च बभूवुः क्षत्रसत्तमाः ।
तेषामपरिमेयानि नामधेयानि सन्त्युत ॥ ६२
तेषां कुले यथा मुख्यान्कीर्तयिष्यामि भारत ।
महाभागान्देवकल्पान्सत्यार्जवपरायणान् ॥ ६३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकोत्तरशततमोऽध्यायः ॥ १०१ ॥

## द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

महाभिषगुपाख्यानम् ॥ १ ॥ महाभिषग्गङ्गयोः शापः ॥ २ ॥ अष्टवसूनां गङ्गायाश्च संवादः ॥ ३ ॥

वैशंपायन उवाच ।
इक्ष्वाकुवंशप्रभवो राजासीत्पृथिवीपतिः ।
महाभिषगिति ख्यातः सत्यवाक्सत्यविक्रमः॥१
सोऽश्वमेधसहस्रेण राजसूयशतेन च ।
तोषयामास देवेशं स्वर्गं लेभे ततः प्रभुः ॥ २
ततः कदाचिद्ब्रह्माणमुपासांचक्रिरे सुराः ।
तत्र राजर्षयो ह्यासन्स च राजा महाभिषक् ॥ ३
अथ गङ्गा सरिच्छ्रेष्ठा समुपायात्पितामहम् ।
तस्या वासः समुद्धूतं मारुतेन शशिप्रभम् ॥ ४
ततोऽभवन्सुरगणाः सहसाऽवाङ्मुखास्तदा ।
महाभिषक्तु राजर्षिरशङ्को दृष्टवान्नदीम् ॥ ५
सोपध्यातो भगवता ब्रह्मणा तु महाभिषक् ।
उक्तश्च जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ॥ ६
यया हृतमनाश्चासि गङ्गया त्वं हि दुर्मते ।
सा ते वै मानुषे लोके विप्रियाण्याचरिष्यति ॥७
यदा ते भविता मन्युस्तदा शापाद्विमोक्ष्यते ।
वैशंपायन उवाच ।
स चिन्तयित्वा नृपतिर्नृपानन्यांस्तपोधनान् ॥ ८
प्रतीपं रोचयामास पितरं भूरितेजसम् ।
सा महाभिषजं दृष्ट्वा नदी धैर्याच्च्युतं नृपम् ॥ ९
तमेव मनसा ध्यायन्त्युपावृत्ता सरिद्वरा ।
सा तु विध्वस्तवपुषः कश्मलाभिहतान्नृप ॥ १०
ददर्श पथि गच्छन्ती वसून्देवान्दिवौकसः ।
तथारूपांश्च तान्दृष्ट्वा प्रपच्छ सरितां वरा ॥ ११
किमिदं नष्टरूपाः स्थ कच्चित्क्षेमं दिवौकसाम् ।
तामूचुर्वसवो देवाः शप्ताः स्मो वै महानदि॥१२
अल्पेऽपराधे संरम्भाद्वसिष्ठेन महात्मना ।
विमूढा हि वयं सर्वे प्रच्छन्नमृषिसत्तमम् ॥ १३
सन्ध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा ।
तेन कोपाद्वयं शप्ता योनौ संभवतेति ह ॥ १४
न तच्छक्यं निवर्तयितुं यदुक्तं ब्रह्मवादिना ।
त्वमस्मान्मानुषी भूत्वा सूष्व पुत्रान्वसून्भुवि॥१५
न मानुषीणां जठरं प्रविशेम वयं शुभे ।
इत्युक्ता तैश्च वसुभिस्तथेत्युक्त्वाऽब्रवीदिदम् १६
गङ्गोवाच ।
मर्त्येषु पुरुषश्रेष्ठः को वः कर्ता भविष्यति ।
वसव ऊचुः ।
प्रतीपस्य सुतो राजा शान्तनुर्लोकविश्रुतः ।
भविता मानुषे लोके स नः कर्ता भविष्यति १७
गङ्गोवाच ।
ममाप्येवं मतं देवा यथा मां वदथानघाः ।
प्रियं तस्य करिष्यामि युष्माकं चैतदीप्सितम्१८

अपध्यातः शप्तः ॥ ६ ॥ विध्वस्तवपुषो दिवश्च्युतत्वात् ॥ १० ॥ अत्यभिसृता अतिक्रान्तवन्तः । वक्ष्यमाणेन तद्वेनुहर-

वसव ऊचुः ।

जातान्कुमारान्स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि ।
यथा नचिरकालं नो निष्कृतिः स्यात्त्रिलोकगे १९
जिघृक्षवो वयं सर्वे सुरभिं मन्दबुद्धयः ।
शप्ता ब्रह्मर्षिणा तेन तांस्त्वं मोचय चाशु नः॥२०

गङ्गोवाच ।

एवमेतत्करिष्यामि पुत्रस्तस्य विधीयताम् ।
नास्य मोघः सङ्गमः स्यात्पुत्रहेतोर्मया सह ॥२१

वसव ऊचुः ।

तुरीयार्धं प्रदास्यामो वीर्यस्यैकैकशो वयम् ।
तेन वीर्येण पुत्रस्ते भविता तस्य चेप्सितः ॥२२
न संपत्स्यति मर्त्येषु पुनस्तस्य तु सन्ततिः ।
तस्मादपुत्रः पुत्रस्ते भविष्यति स वीर्यवान् ॥२३
एवं ते समयं कृत्वा गङ्गया वसवः सह ।
जग्मुः संहृष्टमनसो यथासंकल्पमञ्जसा ॥ २४

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

प्रतीपेन गङ्गायाः स्नुषात्वेन परिग्रहः ॥ १ ॥ शान्तनूत्पत्तिः ॥ २ ॥ तस्य राज्येऽभिषेकः ॥ ३ ॥ मृगयार्थं गतस्य शान्तनोर्गङ्गया संवादः ॥ ४ ॥

वैशंपायन उवाच ।

ततः प्रतीपो राजाऽऽसीत्सर्वभूतहितः सदा ।
निषसाद समा बह्वीर्गङ्गाद्वारगतो जपन् ॥ १
तस्य रूपगुणोपेता गङ्गा स्त्रीरूपधारिणी ।
उत्तीर्य सलिलात्तस्माल्लोभनीयतमाकृतिः ॥ २
अधीयानस्य राजर्षेर्दिव्यरूपा मनस्विनी ।
दक्षिणं शालसङ्काशमूरुं भेजे शुभानना ॥ ३
प्रतीपस्तु महीपालस्तामुवाच यशस्विनीम् ।
'वाक्यं वाक्यविदां श्रेष्ठो धर्मनिश्चयतत्त्ववित् ।'
करोमि किं ते कल्याणि प्रियं यत्तेऽभिकाङ्क्षितम् ४

स्त्र्युवाच ।

त्वामहं कामये राजन्भजमानां भजस्व माम् ।
त्यागः कामवतीनां हि स्त्रीणां सद्भिर्विगर्हितः ५

प्रतीप उवाच ।

नाहं परस्त्रियं कामाद्गच्छेयं वरवर्णिनि ।
न चासवर्णां कल्याणि धर्म्यमेतद्धि मे व्रतम् ॥६
'यः स्वदारान्परित्यज्य पारक्यां सेवते स्त्रियम् ।
निरयान्नैव मुच्यते यावदाभूतसंप्लवम् ॥' ७

स्त्र्युवाच ।

नाश्रेयस्यास्मि नागम्या न वक्तव्या च कर्हिचित् ।
भजन्तीं भज मां राजन्दिव्यां कन्यां वरस्त्रियम् ८

प्रतीप उवाच ।

त्वया निवृत्तमेतत्तु यन्मां चोदयसि प्रियम् ।
अन्यथा प्रतिपन्नं मां नाशयेद्धर्मविप्लवः ॥ ९
प्राप्य दक्षिणमूरुं मे त्वमाश्लिष्टा वराङ्गने ।
अपत्यानां स्नुषाणां च भीरु विद्ध्येतदासनम् १०
सव्योरुः कामिनीभोग्यस्त्वया स च विवर्जितः ।
तस्मादहं नाचरिष्ये त्वयि कामं वराङ्गने ॥ ११
स्नुषा मे भव सुश्रोणि पुत्रार्थं त्वां वृणोम्यहम् ।
स्नुषापक्षं हि वामोरु त्वमागम्य समाश्रिता ॥१२

स्त्र्युवाच ।

एवमप्यस्तु धर्मज्ञ संयुज्येयं सुतेन ते ।
त्वद्भक्त्या तु भजिष्यामि प्रख्यातं भारतं कुलम् १३
पृथिव्यां पार्थिवा ये च तेषां यूयं परायणम् ।
गुणा न हि मया शक्या वक्तुं वर्षशतैरपि ॥ १४
कुलस्य ये वः प्रथितास्तत्साधुत्वमथोत्तमम् ।
समयेनेह धर्मज्ञ आचरेयं च यद्विभो ॥ १५

---

णेनेति शेषः ॥१४॥ नचिरकालं शीघ्रम् । नोऽस्माकम् ॥१९॥ तुरीयार्धमष्टमांशम् ॥ २२ ॥ द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

तत इति ॥ १ ॥ दिव्यां दिवि भवाम् ॥ ८ ॥ निवृत्तं निरस्तम् ॥९॥ आश्लिष्टा संगता ॥१०॥ समयेन नियमेन ॥१५॥

तन्सर्वमेव पुत्रस्ते न मीमांसेत कर्हिचित् ।
एवं वसन्ती पुत्रे ते वर्धयिष्याम्यहं रतिम् ॥१६
पुत्रैः पुण्यैः प्रियैश्चैव स्वर्गं प्राप्स्यति ते सुतः ।
वैशंपायन उवाच ।
तथेत्युक्त्वा तु सा राजंस्तत्रैवान्तरधीयत ।
'अदृश्या राजसिंहस्य पश्यतः साऽभवत्तदा ॥'१७
पुत्रजन्म प्रतीक्षन्वै स राजा तदधारयत् ।
एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः ॥ १८
तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन ।
'प्रतीपस्य तु भार्यायां गर्भः श्रीमानवर्धत ॥ १९
श्रिया परमया युक्तः शरच्छुक्ले यथा शशी ।
ततस्तु दशमे मासि प्राजायत रविप्रभम् ॥ २०
कुमारं देवगर्भाभं प्रतीपमहिषी तदा ।'
तयोः समभवत्पुत्रो वृद्धयोः स महाभिषक् ॥२१
शान्तस्य जज्ञे सन्तानस्तस्मादासीत्स शान्तनुः ।
'तस्य जातस्य कृत्यानि प्रतीपोऽकारयत्प्रभुः॥२२
जातकर्मादि विप्रेण वेदोक्तैः कर्मभिस्तदा ।
नामकर्म च विप्रास्तु चक्रुः परमसत्कृतम् ॥ २३
शान्तनोरवनीपाल वेदोक्तैः कर्मभिस्तदा ।
ततः संवर्धितो राजा शान्तनुर्लोकधार्मिकः ॥२४
स तु लेभे परां निष्ठां प्राप्य धर्मभृतां वरः ।
धनुर्वेदे च वेदे च गतिं स परमां गतः ॥ २५
यौवनं चापि संप्राप्तः कुमारो वदतां वरः ।'
संसरंश्चाक्षयाँल्लोकान्विजातान्स्वेन कर्मणा ॥ २६
पुण्यकर्मकृदेवासीच्छान्तनुः कुरुसत्तमः ।
प्रतीपः शान्तनुं पुत्रं यौवनस्थं ततोऽन्वशात् २७
पुरा स्त्री मां समभ्यागाच्छान्तनो भूतये तव ।
त्वामाव्रजेद्यदि रहः सा पुत्र वरवर्णिनी ॥ २८
कामयानाऽभिरूपाढ्या दिव्यस्त्री पुत्रकाम्यया ।
सा त्वया नानुयोक्तव्या कासि कस्यासि चाङ्गने२९
यच्च कुर्यान्न तत्कर्म सा प्रष्टव्या त्वयाऽनघ ।
मन्नियोगाद्भजन्तीं तां भजेथा इत्युवाच तम् ३०
एवं संदिश्य तनयं प्रतीपः शान्तनुं तदा ।
स्वे च राज्येऽभिषिच्यैनं वनं राजा विवेश ह ३१
स राजा शान्तनुर्धीमान्देवराजसमद्युतिः ।
'बभूव सर्वलोकस्य सत्यवागिति संमतः ॥ ३२
पीनस्कन्धो महाबाहुर्मत्तवारणविक्रमः ।
अन्वितः परिपूर्णार्थैः सर्वैर्नृपतिलक्षणैः ॥ ३३
अमात्यलक्षणोपेतः क्षत्रधर्मविशेषवित् ।
वशे चक्रे महीमेको विजित्य वसुधाधिपान् ॥३४
वेदानागमयत्कृत्स्नान्राजधर्मांश्च सर्वशः ।
ईजे च बहुभिः सत्रैः क्रतुभिर्भूरिदक्षिणैः ॥ ३५
तर्पयामास विप्रांश्च वेदाध्ययनकोविदान् ।
रत्नैरुच्चावचैर्गोभिर्ग्रामैरश्वैर्धनैरपि ॥ ३६
वयोरूपेण संपन्नः पौरुषेण बलेन च ।
ऐश्वर्येण प्रतापेन विक्रमेण धनेन च ॥ ३७
वर्तमानश्च सत्येन सर्वधर्मविशारदः ।
तं महीपं महीपाला राजराजमकुर्वत ॥ ३८
वीतशोकभयाबाधाः सुखस्वप्नप्रबोधनाः ।
श्रिया भरतशार्दूल समपद्यन्त भूमिपाः ॥ ३९
नियमैः सर्ववर्णानां ब्रह्मोत्तरमवर्तत ।
ब्राह्मणाभिमुखं क्षत्रं क्षत्रियाभिमुखा विशः ॥४०
ब्रह्मक्षत्रानुकूलांश्च शूद्राः पर्यचरन्विशः ।
एवं पशुवराहाणां तथैव मृगपक्षिणाम् ॥ ४१
शान्तनावथ राज्यस्थे नावर्तत वृथा वधः ।
असुखानामनाथानां तिर्यग्योनिषु वर्तताम् ॥४२
स एव राजा सर्वेषां भूतानामभवत्पिता ।
स हस्तिनाम्नि धर्मात्मा विहरन्कुरुनन्दनः ॥४३
तेजसा सूर्यकल्पोऽभूद्वायुना च समो बले ।
अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ॥ ४४
बभूव राजा सुमतिः प्रजानां सत्यविक्रमः ।
स वनेषु च रम्येषु शैलप्रस्रवणेषु च ॥' ४५
चचार मृगयाशीलः शान्तनुर्वनगोचरः ।
स मृगान्महिषांश्चैव विनिघ्नन्राजसत्तमः ॥ ४६
गङ्गामनु चचारैकः सिद्धचारणसेविताम् ।
स कदाचिन्महाराज ददर्श परमां स्त्रियम् ॥ ४७

न मीमांसेत न विचारयेत् ॥ १६ ॥ शान्तस्योपरतस्य वंशस्य संतानो विस्तार इति शान्ततनुः । तकारलोपेन शान्तनुरिति नाम ॥२२॥ संसरन्निति व्यवहितमपि ज्ञानबलेन जानातीत्यर्थः ॥२६॥नानुयोक्तव्या न प्रष्टव्या ॥२९॥ त्र्यधिकशततमोऽध्यायः॥१३

जाज्वल्यमानां वपुषा साक्षाच्छ्रियमिवापराम् ।
सर्वानवद्यां सुदतीं दिव्याभरणभूषिताम् ॥ ४८
सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम् ।
'स्नातगात्रां धौतवस्त्रां गङ्गातीररुहे वने ॥ ४९
प्रकीर्णकेशीं पाणिभ्यां संस्पृशन्तीं शिरोरुहान् ।
रूपेण वयसा कान्त्या शरीरावयवैस्तथा ॥ ५०
हावभावविलासैश्च लोचनाञ्चलविक्रियैः ।
श्रोणीभारेण मध्येन स्तनाभ्यामुरसा दृशा ॥ ५१
कबरीभरेण पादाभ्यामिङ्गितेन स्मितेन च ।
कोकिलालापसंल्लापैर्न्यक्कुर्वन्तीं त्रिलोकगाम् ॥ ५२
वाणीं च गिरिजां लक्ष्मीं योषितोन्याः सुराङ्गनाः ।
सा च शान्तनुमभ्यागादलक्ष्मीमपकर्षती ॥' ५३
तां दृष्ट्वा हृष्टरोमाऽभूद्विस्मितो रूपसंपदा ।
पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः ॥ ५४
सा च दृष्ट्वैव राजानं विचरन्तं महाद्युतिम् ।
स्नेहादागतसौहार्दा नातृप्यत विलासिनी ॥ ५५
'गङ्गा कामेन राजानं प्रेक्षमाणा विलासिनी ।
चक्षूर्यताग्रतस्तस्य किन्नरीवाप्सरोपमा ॥ ५६
दृष्ट्वा प्रहृष्टरूपोऽभूद्दर्शनादेव शान्तनुः ।
रूपेणातीत्य तिष्ठन्तीं सर्वा राजन्ययोषितः ॥' ५७
तामुवाच ततो राजा सान्त्वयञ्श्लक्ष्णया गिरा ।
देवी वा दानवी वा त्वं गन्धर्वी चाथवाऽप्सराः ५८
यक्षी वा पन्नगी वाऽपि मानुषी वा सुमध्यमे ।
'याऽसि काऽसि सुरप्रख्ये महिषी मे भवानघे ५९
त्वां गता हि मम प्राणा वसु यन्मेऽस्ति किंचन ।'
याचे त्वां सुरगर्भाभे भार्या मे भव शोभने ॥ ६०

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

समयबन्धपूर्वकं गङ्गाशान्तन्वोर्विवाहः ॥ १ ॥

वैशंपायन उवाच ।
एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च ।
यशस्विनी च साऽगच्छच्छान्तनोर्भूतये तदा ॥ १
सा तु दृष्ट्वा नृपश्रेष्ठं चरन्तं तीरमाश्रितम् ।
वसूनां समयं स्मृत्वाऽथाभ्यगच्छदनिन्दिता ॥ २
प्रजार्थिनी राजपुत्रं शान्तनुं पृथिवीपतिम् ।
प्रतीपवचनं चापि संस्मृत्यैव स्वयं नृपम् ॥ ३
कालोऽयमिति मत्वा सा वसूनां शापचोदिता ।
उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा ॥ ४
गङ्गोवाच ।
भविष्यामि महीपाल महिषी ते वशानुगा ।
न तु त्वं वा द्वितीयो वा ज्ञातुमिच्छेत्कथंचन ॥ ५
यत्तु कुर्यामहं राजञ्शुभं वा यदि वाऽशुभम् ।
न तद्वारयितव्याऽसि न वक्तव्या तथाऽप्रियम् ६
एवं हि वर्तमानेऽहं त्वयि वत्स्यामि पार्थिव ।
वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयम् ॥ ७
एष मे समयो राजन्भज मां त्वं यथेप्सितम् ।
अनुनीताऽसि ते पित्रा भर्ता मे त्वं भव प्रभो ॥ ८
वैशंपायन उवाच ।
तथेति सा यदा तूक्ता तदा भरतसत्तम ।
प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम् ॥ ९
प्रतिज्ञाय तु तत्तस्यास्तथेति मनुजाधिपः ।
रथमारोप्य तां देवीं जगाम स तया सह ॥ १०
सा च शान्तनुमभ्यागात्साक्षाल्लक्ष्मीरिवापरा ।
आसाद्य शान्तनुस्तां च बुभुजे कामतो वशी ॥ ११
न प्रष्टव्येति मन्वानो न स तां किंचिदूचिवान् ।
स तस्याः शीलवृत्तेन रूपौदार्यगुणेन च ॥ १२
उपचारेण च रहस्तुतोष जगतीपतिः ।
स राजा परमप्रीतः परमस्त्रीप्रलालितः ॥ १३
दिव्यरूपा हि सा देवी गङ्गा त्रिपथगामिनी ।
मानुषं विग्रहं कृत्वा श्रीमन्तं वरवर्णिनी ॥ १४
भाग्योपनतकामस्य भार्या चोपनताऽभवत् ।
शन्तनोर्नृपसिंहस्य देवराजसमद्युतेः ॥ १५
संभोगस्नेहचातुर्यैर्हावलास्यैर्मनोहरैः ।

राजानं रमयामास यथा रज्येत स प्रभुः ॥ १६
स राजा रतिसक्तोऽभूदुत्तमस्त्रीगुणैर्हृतः ॥ १७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

## पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

गङ्गया जातमात्रस्य पुत्रसप्तकस्य हननम् ॥ १ ॥ अष्टमपुत्रहननोद्युक्तां स्वभार्यां प्रति शान्तनुप्रश्नः ॥ २ ॥ पूर्ववृत्तकथनपूर्वकं गङ्गायाः प्रतिवचनम् ॥ ३ ॥

वैशंपायन उवाच ।
संवत्सरानृतून्मासान्नबुबुधे न बहून्गतान् ।
रममाणस्तया सार्धं यथाकामं नरेश्वरः ॥ १
'दिविष्ठान्मानुषांश्चैव भोगान्भुङ्क्ते स वै नृपः ।'
आसाद्य शान्तनुः श्रीमान्मुमुदे योषितां वराम् २
ऋतुकाले तु सा देवी दिव्यं गर्भमधारयत् ।
अष्टावजनयत्पुत्रांस्तस्मादमरसन्निभान् ॥ ३
जातं जातं च सा पुत्रं क्षिपत्यम्भसि भारत ।
सूतके कण्ठमाक्रम्य तान्निनाय यमक्षयम् ॥ ४
प्रीणाम्यहं त्वामित्युक्त्वा गङ्गास्रोतस्यमज्जयत् ।
तस्य तन्न प्रियं राज्ञः शान्तनोरभवत्तदा ॥ ५
न च तां किंचनोवाच त्यागाद्भीतो महीपतिः ।
'अमीमांस्या कर्मयोनिरागमश्चेति शान्तनुः ॥ ६
स्मरन्पितृवचश्चैव नापृच्छत्पुत्रकिल्बिषम् ।
जाताञ्जातांश्च वै हन्ति सा स्त्री सप्त वरान्सुतान् ७
शान्तनुर्धर्मभङ्गाच्च नापृच्छत्तां कथंचन ।
अष्टमं तु जिघांसन्त्यां चुक्षुभे शान्तनोर्धृतिः॥'८
अथैनामष्टमे पुत्रे जाते प्रहसतीमिव ।
उवाच राजा दुःखार्तः परीप्सन्पुत्रमात्मनः ॥९
'आलभन्तीं तदा दृष्ट्वा तां स कौरवनन्दनः ।
अब्रवीद्भरतश्रेष्ठो वाक्यं परमदुःखितः ॥' १०
मा वधीः कस्य काऽसीति किं हिनत्सि सुतानिति ।
पुत्रघ्नि सुमहत्पापं संप्राप्तं ते सुगर्हितम् ॥ ११
गङ्गोवाच ।
पुत्रकाम न ते हन्मि पुत्रं पुत्रवतां वर ।
जीर्णस्तु मम वासोऽयं यथा स समयः कृतः१२
अहं गङ्गा जह्नुसुता महर्षिगणसेविता ।
देवकार्यार्थसिद्ध्यर्थमुषिताऽहं त्वया सह ॥ १३
इमेऽष्टौ वसवो देवा महाभागा महौजसः ।
वसिष्ठशापदोषेण मानुषत्वमुपागताः ॥ १४
तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते ।
मद्विधा मानुषी धात्री लोके नास्तीह काचन॥१५
तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ।
जनयित्वा वसूनष्टौ जिता लोकास्त्वयाऽक्षयाः१६
देवानां समयस्त्वेष वसूनां संश्रुतो मया ।
जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति ॥१७
तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः ।
स्वस्ति तेस्तु गमिष्यामि पुत्रं पाहि महाव्रतम्॥१८
'अयं तव सुतस्तेषां वीर्येण कुलनन्दनः ।
संभूतोतिजनं कर्म करिष्यति न संशयः ॥' १९
एष पर्यायवासो मे वसूनां सन्निधौ कृतः ।
मत्प्रसूतिं विजानीहि गङ्गादत्तमिमं सुतम् ॥ २०

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

## षडधिकशततमोऽध्यायः ॥ १०६ ॥

स्वगोहर्तॄणां वसूनां वसिष्ठेन शापः ॥ १ ॥ पुनस्तत्प्रार्थनया तुष्टेन वसिष्ठेन शापसंकोचः ॥२॥ गङ्गाया भीष्मेण सह स्वलोकगमनम् ॥ ३ ॥

शान्तनुरुवाच ।
आपवो नाम कोन्वेष वसूनां किं च दुष्कृतम् ।
'शशाप यस्मात्कल्याणि स वसूंश्चारुदर्शने ।'
यस्याभिशापात्ते सर्वे मानुषीं योनिमागताः ॥१

ते त्वया ॥११॥ धात्री गर्भधारिणी ॥१५॥ संश्रुतोऽङ्गीकृतः॥१७॥ आपवस्य वसिष्ठस्य ॥१८॥ पञ्चाधिकशततमोऽध्यायः ॥१०५॥

अनेन च कुमारेण त्वया दत्तेन किं कृतम् ।
यस्य चैव कृतेनायं मानुषेषु निवत्स्यति ॥ २
ईशा वै सर्वलोकस्य वसवस्ते च वै कथम् ।
मानुषेषूदपद्यन्त तन्ममाचक्ष्व जाह्नवि ॥ ३
वैशंपायन उवाच ।
एवमुक्ता तदा गङ्गा राजानमिदमब्रवीत् ।
भर्तारं जाह्नवी देवी शान्तनुं पुरुषर्षभ ॥ ४
गङ्गोवाच ।
यं लेभे वरुणः पुत्रं पुरा भरतसत्तम ।
वसिष्ठनामा स मुनिः ख्यात आपव इत्युत ॥ ५
तस्याश्रमपदं पुण्यं मृगपक्षिसमन्वितम् ।
मेरोः पार्श्वे नगेन्द्रस्य सर्वर्तुकुसुमावृतम् ॥ ६
स वारुणिस्तपस्तेपे तस्मिन्भरतसत्तम ।
वने पुण्यकृतां श्रेष्ठः स्वादुमूलफलोदके ॥ ७
दक्षस्य दुहिता या तु सुरभीत्यभिशब्दिता ।
गां प्रजाता तु सा देवी कश्यपाद्भरतर्षभ ॥ ८
अनुग्रहार्थं जगतः सर्वकामदुहां वराम् ।
तां लेभे गां तु धर्मात्मा होमधेनुं स वारुणिः ९
सा तस्मिंस्तापसारण्ये वसन्ती मुनिसेविते ।
चचार पुण्ये रम्ये च गौरपेतभया तदा ॥ १०
अथ तद्वनमाजग्मुः कदाचिद्भरतर्षभ ।
पृथ्वाद्या वसवः सर्वे देवा देवर्षिसेवितम् ॥ ११
ते सदारा वनं तच्च व्यचरन्त समन्ततः ।
रेमिरे रमणीयेषु पर्वतेषु वनेषु च ॥ १२
तत्रैकस्याथ भार्या तु वसोर्वासवविक्रम ।
संचरन्ती वने तस्मिन्गां ददर्श सुमध्यमा ॥ १३
नन्दिनीं नाम राजेन्द्र सर्वकामधुगुत्तमाम् ।
सा विस्मयसमाविष्टा शीलद्रविणसंपदा ॥ १४
द्यवे वै दर्शयामास तां गां गोवृषभेक्षण ।
आपीनां च सुदोग्ध्रीं च सुवालधिखुरां शुभां १५
उपपन्नां गुणैः सर्वैः शीलेनानुत्तमेन च ।
एवंगुणसमायुक्तां वसवे वसुनन्दिनी ॥ १६
दर्शयामास राजेन्द्र पुरा पौरवनन्दन ।

गां प्रजाता नन्दिनीं जनितवती ॥ ८ ॥ द्यवे द्युसंज्ञाय वसवे। वालधिः पुच्छम् ॥ १५॥ वसुनन्दिनी वसुप्रिया ॥१६॥

द्यौस्तदा तां तु दृष्ट्वैव गां गजेन्द्रेन्द्रविक्रम ॥१७
उवाच राजंस्तां देवीं तस्या रूपगुणान्वदन् ।
एषा गौरुत्तमा देवी वारुणेरसितेक्षणा ॥ १८
ऋषेस्तस्य वरारोहे यस्येदं वनमुत्तमम् ।
अस्याः क्षीरं पिबेन्मर्त्यः स्वादु यो वै सुमध्यमे १९
दशवर्षसहस्राणि स जीवेत्स्थिरयौवनः ।
वैशंपायन उवाच ।
एतच्छ्रुत्वा तु सा देवी नृपोत्तम सुमध्यमा ॥२०
तमुवाचानवद्याङ्गी भर्तारं दीप्ततेजसम् ।
अस्ति मे मानुषे लोके नरदेवात्मजा सखी ॥२१
नाम्नाजितवती नाम रूपयौवनशालिनी ।
उशीनरस्य राजर्षेः सत्यसन्धस्य धीमतः ॥ २२
दुहिता प्रथिता लोके मानुषे रूपसंपदा ।
तस्या हेतोर्महाभाग सवत्सां गां ममेप्सिताम् २३
आनयस्वामरश्रेष्ठ त्वरितं पुण्यवर्धन ।
यावदस्याः पयः पीत्वा सा सखी मम मानद २४
मानुषेषु भवत्वेका जरारोगविवर्जिता ।
एतन्मम महाभाग कर्तुमर्हस्यनिन्दित ॥ २५
प्रियात्प्रियतरं ह्यस्मान्नास्ति मेऽन्यत्कथंचन ।
एतच्छ्रुत्वा वचस्तस्या देव्याः प्रियचिकीर्षया ॥२६
पृथ्वाद्यैर्भ्रातृभिः सार्धं द्यौस्तदा तां जहार गाम् ।
तया कमलपत्राक्ष्या नियुक्तो द्यौस्तदा नृप ॥२७
ऋषेस्तस्य तपस्तीव्रं न शशाक निरीक्षितुम् ।
हृता गौः सा तदा तेन प्रपातस्तु न तर्कितः २८
अथाश्रमपदं प्राप्तः फलान्यादाय वारुणिः ।
न चापश्यत्स गां तत्र सवत्सां काननोत्तमे ॥२९
ततः स मृगयामास वने तस्मिंस्तपोधनः ।
नाध्यागमच्च मृगयंस्तां गां मुनिरुदारधीः ॥ ३०
ज्ञात्वा तथाऽपनीतां तां वसुभिर्दिव्यदर्शनः ।
ययौ क्रोधवशं सद्यः शशाप च वसूंस्तदा ॥ ३१
यस्मान्मे वसवो जह्रुर्गां वै दोग्ध्रीं सुवालधिम् ।
तस्मात्सर्वे जनिष्यन्ति मानुषेषु न संशयः ॥३२
एवं शशाप भगवान्वसूंस्तान्भरतर्षभ ।

प्रपातो वसिष्ठशापरूपः ॥ २८ ॥

वशं क्रोधस्य संप्राप्त आपवो मुनिसत्तमः ॥ ३३
शप्त्वा च तान्महाभागस्तपस्येव मनो दधे ।
एवं स शप्तवान्राजन्वसून्नष्टौ तपोधनः ॥ ३४
महाप्रभावो ब्रह्मर्षिर्देवान्क्रोधसमन्वितः ।
'एवं शप्तास्ततस्तेन मुनिना यामुनेन वै ॥ ३५
अष्टौ समस्ता वसवो दिवो दोषेण सत्तम ।'
अथाश्रमपदं प्राप्तास्ते वै भूयो महात्मनः ॥ ३६
शप्ताः स इति जानन्त ऋषिं तमुपचक्रमुः ।
प्रसादयन्तस्तमृषिं वसवः पार्थिवर्षभ ॥ ३७
लेभिरे न च तस्मात्ते प्रसादमृषिसत्तमात् ।
आपवात्पुरुषव्याघ्र सर्वधर्मविशारदात् ॥ ३८
उवाच च स धर्मात्मा शप्ता यूयं धरादयः ।
अनुसंवत्सरात्सर्वे शापमोक्षमवाप्स्यथ ॥ ३९
अयं तु यत्कृते यूयं मया शप्ताः स वत्स्यति ।
द्यौस्तदा मानुषे लोके दीर्घकालं स्वकर्मणः ॥४०
नानृतं तच्चिकीर्षामि क्रुद्धो युष्मान्यदब्रुवम् ।
न प्रजास्यति चाप्येष मानुषेषु महामनाः ॥ ४१
भविष्यति च धर्मात्मा सर्वशास्त्रविशारदः ।
पितुः प्रियहिते युक्तः स्त्रीभोगान्वर्जयिष्यति ४२
एवमुक्त्वा वसून्सर्वान्सजगाम महानृषिः ।
ततो मामुपजग्मुस्ते समेता वसवस्तदा ॥ ४३
अयाचन्त च मां राजन्वरं तच्च मया कृतम् ।
जाताञ्जातान्प्रक्षिपास्मान्स्वयं गङ्गे त्वमम्भसि ४४
एवं तेषामहं सम्यक् शप्तानां राजसत्तम ।
मोक्षार्थं मानुषाल्लोकाद्यथावत्कृतवत्यहम् ॥ ४५
अयं शापादृषेस्तस्य एक एव नृपोत्तम ।
द्यौ राजन्मानुषे लोके चिरं वत्स्यति भारत ॥४६
अयं कुमारः पुत्रस्ते विवृद्धः पुनरेष्यति ।
अहं च ते भविष्यामि आह्वानोपगता नृप ॥४७
वैशंपायन उवाच ।
एतदाख्याय सा देवी तत्रैवान्तरधीयत ।
आदाय च कुमारं तं जगामाथ यथेप्सितम् ४८
स तु देवव्रतो नाम गाङ्गेय इति चाभवत् ।
द्युनामा शान्तनोः पुत्रः शान्तनोरधिको गुणैः ४९
शान्तनुश्चापि शोकार्तो जगाम स्वपुरं ततः ।
तस्याहं कीर्तयिष्यामि शान्तनोरधिकान्गुणान् ॥
महाभाग्यं च नृपतेर्भारतस्य महात्मनः ।
यस्येतिहासो द्युतिमान्महाभारतमुच्यते ॥ ५१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

## सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

शान्तनुभीष्मयोश्चरितम् ॥ १ ॥ शान्तनोः पुनर्गङ्गादर्शनं तया सह संवादश्च ॥ २ ॥ गङ्गादत्तेन भीष्मेण सह शान्तनोः स्वपुरप्रवेशः ॥ ३ ॥ भीष्मस्य यौवराज्येभिषेकः ॥४॥ शान्तनुभावं ज्ञात्वा दाशाशयानुसारेण प्रतिज्ञापूर्वकं भीष्मेण दाशकन्यानयनम् ॥ ५ ॥ तुष्टेन शान्तनुना भीष्माय स्वच्छन्दमरणवरदानम् ॥ ६ ॥

वैशंपायन उवाच ।
स राजा शान्तनुर्धीमान्देवराजर्षिसत्कृतः ।
धर्मात्मा सर्वलोकेषु सत्यवागिति विश्रुतः ॥ १
शान्तनोः कीर्तयिष्यामि सर्वानेव गुणानहम् ।
दमो दानं क्षमा बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम् ।
नित्यान्यासन्महासत्वे शान्तनौ पुरुषर्षभे ॥ २
एवं स गुणसंपन्नो धर्मार्थकुशलो नृपः ।
आसीद्भरतवंशस्य गोप्ता सर्वजनस्य च ॥ ३
कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः ।
अन्वितः परिपूर्णार्थैः सर्वैर्नृपतिलक्षणैः ॥ ४
तस्य कीर्तिमतो वृत्तमवेक्ष्य सततं नराः ।
धर्म एव परः कामादर्थाच्चेति व्यवस्थिताः ॥ ५
एवमासीन्महासत्वः शान्तनुर्भरतर्षभ ।
न चास्य सदृशः कश्चिद्धर्मतः पार्थिवोऽभवत् ॥६
वर्तमानं हि धर्मेषु सर्वधर्मभृतां वरम् ।
तं महीपा महीपालं राजराज्येऽभ्यषेचयन् ॥ ७

न प्रजास्यत्यात्मनः प्रजेच्छां न करिष्यति। क्यजन्तोयम्॥ ४१॥

षडधिकशततमोऽध्यायः ॥ १०६ ॥

वीतशोकभयाबाधाः सुखस्वप्ननिबोधनाः ।
पतिं भारतगोप्तारं समपद्यन्त भूमिपाः ॥ ८
तेन कीर्तिमता शिष्टाः शक्रप्रतिमतेजसा ।
यज्ञदानक्रियाशीलाः समपद्यन्त भूमिपाः ॥ ९
शान्तनुप्रमुखैर्गुप्ते लोके नृपतिभिस्तदा ।
नियमात्सर्ववर्णानां धर्मोत्तरमवर्तत ॥ १०
ब्रह्म पर्यचरत्क्षत्रं विशः क्षत्रमनुव्रताः ।
ब्रह्मक्षत्रानुरक्ताश्च शूद्राः पर्यचरन्विशः ॥ ११
स हास्तिनपुरे रम्ये कुरूणां पुटभेदने ।
वसन्सागरपर्यन्तामन्वशासद्वसुन्धराम् ॥ १२
स देवराजसदृशो धर्मज्ञः सत्यवागृजुः ।
दानधर्मतपोयोगाच्छ्रिया परमया युतः ॥ १३
अरागद्वेषसंयुक्तः सोमवत्प्रियदर्शनः ॥
तेजसा सूर्यकल्पोऽभूद्वायुवेगसमो जवे ।
अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ॥ १४
वधः पशुवराहाणां तथैव मृगपक्षिणाम् ।
शान्तनौ पृथिवीपाले नावर्तत तथा नृप ॥ १५
ब्रह्मधर्मोत्तरे राज्ये शान्तनुर्विनयात्मवान् ।
समं शशास भूतानि कामरागविवर्जितः ॥ १६
'चकोरनेत्रस्ताम्रास्यः सिंहर्षभगतिर्युवा ।
गुणैरनुपमैर्युक्तः समस्तैराभिगामिकैः ।
गम्भीरः सत्त्वसंपन्नः पूर्णचन्द्रनिभाननः ॥' १७
देवर्षिपितृयज्ञार्थमारभ्यन्त तदा क्रियाः ।
न चाधर्मेण केषांचित्प्राणिनामभवद्वधः ॥ १८
असुखानामनाथानां तिर्यग्योनिषु वर्तताम् ।
स एव राजा सर्वेषां भूतानामभवत्पिता ॥ १९
तस्मिन्कुरुपतिश्रेष्ठे राजराजेश्वरे सति ।
श्रिता वागभवत्सत्यं दानधर्माश्रितं मनः ॥ २०
'यज्ञार्थं पशवः सृष्टाः संतानार्थं च मैथुनम् ।'
स समाः षोडशाष्टौ च चतस्रोऽष्टौ तथाऽपराः ।
रतिमप्राप्नुवन्स्त्रीषु बभूव वनगोचरः ॥ २१
तथारूपस्तथाचारस्तथावृत्तस्तथाश्रुतः ।
गाङ्गेयस्तस्य पुत्रोऽभून्नाम्ना देवव्रतो वसुः ॥ २२
सर्वास्त्रेषु स निष्णातः पार्थिवेष्वितरेषु च ।
महाबलो महासत्त्वो महावीर्यो महारथः ॥ २३
स कदाचिन्मृगं विद्ध्वा गङ्गामनुसरन्नदीम् ।
भागीरथीमल्पजलां शान्तनुर्दृष्टवान्नृपः ॥ २४
तां दृष्ट्वा चिन्तयामास शान्तनुः पुरुषर्षभः ।
स्यन्दते किं न्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा २५
ततो निमित्तमन्विच्छन्ददर्श स महामनाः ।
कुमारं रूपसंपन्नं बृहन्तं चारुदर्शनम् ॥ २६
दिव्यमस्त्रं विकुर्वाणं यथा देवं पुरन्दरम् ।
कृत्स्नां गङ्गां समावृत्य शरैस्तीक्ष्णैरवस्थितम् ॥ २७
तां शरैराचितां दृष्ट्वा नदीं गङ्गां तदन्तिके ।
अभवद्विस्मितो राजा दृष्ट्वा कर्मातिमानुषम् ॥ २८
जातमात्रं पुरा दृष्टं तं पुत्रं शान्तनुस्तदा ।
नोपलेभे स्मृतिं धीमानभिज्ञातुं तमात्मजम् ॥ २९
स तु तं पितरं दृष्ट्वा मोहयामास मायया ।
संमोह्य तु ततः क्षिप्रं तत्रैवान्तरधीयत ॥ ३०
तदद्भुतं ततो दृष्ट्वा तत्र राजा स शान्तनुः ।
शङ्कमानः सुतं गङ्गामब्रवीद्दर्शयेति ह ॥ ३१
दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमम् ।
गृहीत्वा दक्षिणे पाणौ तं कुमारमलङ्कृतम् ॥ ३२
अलङ्कृतामाभरणैर्विरजोम्बरधारिणीम् ।
दृष्टपूर्वामपि स तां नाभ्यजानात्स शान्तनुः ३३

गङ्गोवाच ।

यं पुत्रमष्टमं राजंस्त्वं पुरा मय्यविन्दथाः ।
स चायं पुरुषव्याघ्र सर्वास्त्रविदनुत्तमः ॥ ३४
गृहाणेमं महाराज मया संवर्धितं सुतम् ।
आदाय पुरुषव्याघ्र नयस्वैनं गृहं विभो ॥ ३५
वेदानधिजगे साङ्गान्वसिष्ठादेष वीर्यवान् ।
कृतास्त्रः परमेष्वासो देवराजसमो युधि ॥ ३६
सुराणां संमतो नित्यमसुराणां च भारत ।
उशना वेद यच्छास्त्रमयं तद्वेद सर्वशः ॥ ३७
तथैवाङ्गिरसः पुत्रः सुरासुरनमस्कृतः ।
यद्वेद शास्त्रं तच्चापि कृत्स्नमस्मिन्प्रतिष्ठितम् ॥ ३८

पुटभेदने पत्तने ॥ १२ ॥ ब्रह्मधर्मोत्तरे अहिंसाधर्मप्रधाने ॥ १६ ॥ वाक् सत्यं श्रिताभवत् ॥ २० ॥ अधिजगे अधीत-

तव पुत्रे महाबाहौ साङ्गोपाङ्गं महात्मनि ।
ऋषिः परैरनाधृष्यो जामदग्न्यः प्रतापवान् ॥ ३९
यदस्त्रं वेद रामश्च तदेतस्मिन्प्रतिष्ठितम् ।
महेष्वासमिमं राजन्राजधर्मार्थकोविदम् ॥ ४०
मया दत्तं निजं पुत्रं वीरं वीर गृहं नय ।

वैशंपायन उवाच ।

'इत्युक्त्वा सा महाभागा तत्रैवान्तरधीयत ।'
तयैवं समनुज्ञातः पुत्रमादाय शान्तनुः ॥ ४१
भ्राजमानं यथाऽऽदित्यमाययौ स्वपुरं प्रति ।
पौरवस्तु पुरीं गत्वा पुरन्दरपुरोपमाम् ॥ ४२
सर्वकामसमृद्धार्थं मेने सोऽऽत्मानमात्मना ।
पौरवेषु ततः पुत्रं राज्यार्थमभयप्रदम् ॥ ४३
गुणवन्तं महात्मानं यौवराज्येऽभ्यषेचयत् ।
पौरवाञ्शान्तनोः पुत्रः पितरं च महायशाः ॥४४
राष्ट्रं च रञ्जयामास वृत्तेन भरतर्षभ ।
स तथा सह पुत्रेण रममाणो महीपतिः ॥ ४५
वर्तयामास वर्षाणि चत्वार्यमितविक्रमः ।
स कदाचिद्वनं यातो यमुनामभितो नदीम् ॥४६
महीपतिरनिर्देश्यमाजिघ्रद्गन्धमुत्तमम् ।
तस्य प्रभवमन्विच्छन्विचचार समन्ततः ॥ ४७
स ददर्श तदा कन्यां दाशानां देवरूपिणीम् ।
तामपृच्छत्स दृष्ट्वैव कन्यामसितलोचनाम् ॥ ४८
कस्य त्वमसि का चासि किं च भीरु चिकीर्षसि ।
साऽब्रवीद्दाशकन्याऽस्मि धर्मार्थं वाहये तरिम् ४९
पितुर्नियोगाद्भद्रं ते दाशराज्ञो महात्मनः ।
रूपमाधुर्यगन्धैस्तां संयुक्तां देवरूपिणीम् ॥ ५०
समीक्ष्य राजा दाशेयीं कामयामास शान्तनुः ।
स गत्वा पितरं तस्या वरयामास तां तदा ॥५१
पर्यपृच्छत्ततस्तस्याः पितरं सोऽऽत्मकारणात् ।
स च तं प्रत्युवाचेदं दाशराजो महीपतिम् ॥५२
जातमात्रैव मे देया वराय वरवर्णिनी ।
हृदि कामस्तु मे कश्चित्तं निबोध जनेश्वर ॥५३
यदीमां धर्मपत्नीं त्वं मत्तः प्रार्थयसेऽनघ ।
सत्यवागसि सत्येन समयं कुरु मे ततः ॥ ५४
समयेन प्रदद्यां ते कन्यामहमिमां नृप ।
न हि मे त्वत्समः कश्चिद्वरो जातु भविष्यति ५५

शान्तनुरुवाच ।

श्रुत्वा तव वरं दाश व्यवस्येयमहं तव ।
दातव्यं चेत्प्रदास्यामि न त्वदेयं कथंचन ॥५६

दाश उवाच ।

अस्यां जायेत यः पुत्रः स राजा पृथिवीपते ।
त्वदूर्ध्वमभिषेक्तव्यो नान्यः कश्चन पार्थिव ॥५७

वैशंपायन उवाच ।

नाकामयत तं दातुं वरं दाशाय शान्तनुः ।
शरीरजेन तीव्रेण दह्यमानोऽपि भारत ॥ ५८
स चिन्तयन्नेव तदा दाशकन्यां महीपतिः ।
प्रत्ययाद्धास्तिनपुरं कामोपहतचेतनः ॥ ५९
ततः कदाचिच्छोचन्तं शान्तनुं ध्यानमास्थितम् ।
पुत्रो देवव्रतोऽभ्येत्य पितरं वाक्यमब्रवीत् ॥६०
सर्वतो भवतः क्षेमं विधेयाः सर्वपार्थिवाः ।
तत्किमर्थमिहाभीक्ष्णं परिशोचसि दुःखितः ॥६१
ध्यायन्निव च मां राजन्नाभिभाषसि किंचन ।
न चाश्वेन विनिर्यासि विवर्णो हरिणः कृशः ॥६२
व्याधिमिच्छामि ते ज्ञातुं प्रतिकुर्यां हि तत्र वै ।

'वैशंपायन उवाच ।

स तं काममवाच्यं वै दाशकन्यां प्रतीदृशम् ॥६३
विवर्तुं नाशकत्तस्मै पिता पुत्रस्य शान्तनुः ।'
एवमुक्तः स पुत्रेण शान्तनुः प्रत्यभाषत ॥ ६४
असंशयं ध्यानपरो यथा वत्स तथा शृणु ।
अपत्यं नस्त्वमेवैकः कुले महति भारत ॥ ६५
शस्त्रनित्यश्च सततं पौरुषे पर्यवस्थितः
अनित्यतां च लोकानामनुशोचामि पुत्रक ॥६६
कथंचित्तव गाङ्गेय विपत्तौ नास्ति नः कुलम् ।
असंशयं त्वमेवैकः शतादपि वरः सुतः ॥ ६७
न चाप्यहं वृथा भूयो दारान्कर्तुमिहोत्सहे ।
संतानस्याविनाशाय कामये भद्रमस्तु ते ॥ ६८

---

वान् ॥ ३९ ॥ तरिं नावम् ॥ ४९ ॥ व्यवस्येयं विनिश्चिनुयम् ॥५६॥ शरीरजेन कामेन ॥५८॥ हरिणः पाण्डुगात्रः ॥६२॥

अनपत्यतैकपुत्रत्वमित्याहुर्धर्मवादिनः ।
'चक्षुरेकं च पुत्रश्च अस्ति नास्ति च भारत ।
चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ॥' ६९
अग्निहोत्रं त्रयी विद्या यज्ञाश्च सहदक्षिणाः ।
सर्वाण्येतान्यपत्यस्य कलां नार्हन्ति षोडशीम् ७०
एवमेतन्मनुष्येषु तच्च सर्वं प्रजास्विति ।
यदपत्यं महाप्राज्ञ तत्र मे नास्ति संशयः ॥ ७१
'अपत्येनानृणो लोके पितॄणां नास्ति संशयः ।'
एषा त्रयी पुराणानां देवतानां च शाश्वती ॥७२
'अपत्यं कर्म विद्या च त्रीणि ज्योतींषि भारत' ७३
त्वं च शूरः सदाऽमर्षी शस्त्रनित्यश्च भारत ।
नान्यत्र युद्धात्तस्मात्ते निधनं विद्यते क्वचित् ॥७४
सोऽस्मि संशयमापन्नस्त्वयि शान्ते कथं भवेत् ।
इति ते कारणं तात दुःखस्योक्तमशेषतः ॥ ७५
वैशंपायन उवाच ।
ततस्तत्कारणं राज्ञो ज्ञात्वा सर्वमशेषतः ।
देवव्रतो महाबुद्धिः प्रज्ञया चान्वचिन्तयत् ॥७६
अपत्यफलसंयुक्तमेतच्छ्रुत्वा पितुर्वचः ।
सूतं भूयोऽपि संतप्त आह्वयामास वै पितुः ॥७७
सूतस्तु कुरुमुख्यस्य उपयातस्तदाज्ञया ।
तमुवाच महाप्राज्ञो भीष्मो वै सारथिं पितुः ॥७८
त्वं सारथे पितुर्मह्यं सखासि रथधूर्गतः ।
अपि जानासि यदि वै कस्यां भावो नृपस्य तु ७९
तदाचक्ष्व भवान्पृष्टः करिष्ये न तदन्यथा ।
सूत उवाच ।
दाशकन्या कुरुश्रेष्ठ तत्र भावः पितुर्गतः ॥ ८०
वृतः स नरदेवेन तदा वचनमब्रवीत् ।
योऽस्यां पुमान्भवेज्जातः स राजा त्वदनन्तरम् ८१
नाकामयत तं दातुं पिता तव वरं तदा ।
स चापि निश्चयस्तस्य न च दद्यां ततोऽन्यथा ८२
एतत्ते कथितं वीर कुरुष्व यदनन्तरम् ।
वैशंपायन उवाच ।
ततः स पितुराज्ञाय मतं सम्यगवेक्ष्य च ।
ज्ञात्वा च मानसं पुत्रः प्रययौ यमुनां प्रति ॥८३
क्षत्रियैः सह धर्मात्मा पुराणैर्धर्मचारिभिः ।
उच्चैःश्रवसमागम्य कन्यां वव्रे पितुः स्वयम्' ॥८४
तं दाशः प्रतिजग्राह विधिवत्प्रतिपूज्य च ।
अब्रवीच्चैनमासीनं राजसंसदि भारत ॥ ८५
'राज्यशुल्का प्रदातव्या कन्येयं याचतां वर ।
अपत्यं यद्भवेदस्याः स राजाऽस्तु पितुः परम्' ८६
त्वमेवात्र महाबाहो शान्तनोर्वंशवर्धनः ।
पुत्रः शस्त्रभृतां श्रेष्ठः किं नु वक्ष्यामि ते वचः ॥
'कुमारिकायाः शुल्कार्थं किंचिद्वक्ष्यामि भारत ।'
कोहि संबन्धकं श्लाघ्यमीप्सितं यौनमीदृशम् ।
अतिक्रामन्न तप्येत साक्षादपि शतक्रतुः ॥ ८८
अपत्यं चैतदार्यस्य यो युष्माकं समो गुणैः ।
यस्य शुक्रात्सत्यवती संभूता वरवर्णिनी ॥ ८९
तेन मे बहुशस्तात पिता ते परिकीर्तितः ।
अर्हः सत्यवतीं वोढुं धर्मज्ञः स नराधिपः ॥९०
'इयं सत्यवती देवी पितरं तेऽब्रवीत्तथा ।
अर्थितश्चापि राजर्षिः प्रत्याख्यातः पुरा मया' ९१
कन्यापितृत्वात्किंचित्तु वक्ष्यामि त्वां नराधिप ।
बलवत्सपत्नतामत्र दोषं पश्यामि केवलम् ॥ ९२
'भूयांसं त्वयि पश्यामि तद्दोषमपराजित ।'
यस्य हि त्वं सपत्नः स्या गन्धर्वस्यासुरस्य वा ॥९३
न स जातु चिरं जीवेत्त्वयि क्रुद्धे परन्तप ।
एतावानत्र दोषो हि नान्यः कश्चन पार्थिव ॥ ९४
एतज्जानीहि भद्रं ते दानादाने परन्तप ॥ ९५
वैशंपायन उवाच ।
एवमुक्तस्तु गाङ्गेयस्तद्युक्तं प्रत्यभाषत ।
शृण्वतां भूमिपालानां पितुरर्थाय भारत ॥ ९६
'इदं वचनमाधत्स्व नास्ति वक्तास्य मत्समः ।
अन्यो जातो न जनिता न च कश्चन संप्रति' ॥९७
एवमेतत्करिष्यामि यथा त्वमनुभाषसे ।
योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति९८
इत्युक्तः पुनरेव स्म तं दाशः प्रत्यभाषत ।

पुराणानां पुरातनानाम् ॥ ७२ ॥ दाने वसुवचनं अदाने बलवत्सपत्नता अत्र कारणमिति शेषः ॥ ९५ ॥

सप्तोत्तरशततमोऽध्यायः ॥ १०७ ॥

चिकीर्षुर्दुष्करं कर्म राज्यार्थे भरतर्षभ ॥ ९९
त्वमेव नाथः संप्राप्तः शान्तनोरमितद्युते ।
कन्यायाश्चैव धर्मात्मन्प्रभुर्दानाय चेश्वरः ॥१००
इदं तु वचनं सौम्य कार्यं चैव निबोध मे ।
कौमारिकाणां शीलेन वक्ष्याम्यहमरिन्दम १०१
यत्त्वया सत्यवत्यर्थे सत्यधर्मपरायण ।
राजमध्ये प्रतिज्ञातमनुरूपं तवैव तत् ॥ १०२
नान्यथा तन्महाबाहो संशयोऽत्र न कश्चन ।
तवापत्यं भवेद्यत्तु तत्र नः संशयो महान् ॥१०३
वैशंपायन उवाच ।
तस्यैतन्मतमाज्ञाय सत्यधर्मपरायणः ।
प्रत्यजानात्तदा राजन्पितुः प्रियचिकीर्षया॥१०४
गाङ्गेय उवाच ।
'उच्चैःश्रवः समाधत्स्व प्रतिज्ञां जनसंसदि ।
ऋषयो वाथ वा देवा भूतान्यन्तर्हितानि च १०५
यानि यानीह शृण्वन्तु नास्ति वक्तास्य मत्समः'।
दाशराज निबोधेदं वचनं मे नृपोत्तम ॥ १०६
शृण्वतां भूमिपालानां यद्ब्रवीमि पितुः कृते ।
राज्यं तावत्पूर्वमेव मया त्यक्तं नराधिपाः॥१०७
अपत्यहेतोरपि च करिष्येऽद्य विनिश्चयम् ।
अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति ॥ १०८
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि ।
'न हि जन्मप्रभृत्युक्तं मया किंचिदिहानृतम्१०९
यावत्प्राणा ध्रियन्ते वै मम देहं समाश्रिताः ।
तावन्न जनयिष्यामि पित्रे कन्यां प्रयच्छ मे॥११०
परित्यजाम्यहं राज्यं मैथुनं चापि सर्वशः ।
ऊर्ध्वरेता भविष्यामि दाश सत्यं ब्रवीमि ते॥'१११
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा संप्रहृष्टतनूरुहः ।
ददानीत्येव तं दाशो धर्मात्मा प्रत्यभाषत ॥११२
ततोन्तरिक्षेऽप्सरसो देवाः सर्षिगणास्तदा ।
'तद्दृष्ट्वा दुष्करं कर्म प्रशशंसुश्च पार्थिवाः'॥ ११३
अभ्यवर्षन्त कुसुमैर्भीष्मोऽयमिति चाब्रुवन् ।
ततः स पितुरर्थाय तामुवाच यशस्विनीम् ॥११४
अधिरोह रथं मातर्गच्छावः स्वगृहानिति ।
एवमुक्त्वा तु भीष्मस्तां रथमारोप्य भामिनीं११५
आगम्य हास्तिनपुरं शान्तनोः संन्यवेदयत् ।
तस्य तद्दुष्करं कर्म प्रशशंसुर्नराधिपाः ॥ ११६
समेताश्च पृथक्चैव भीष्मोयमिति चाब्रुवन् ।
तच्छ्रुत्वा दुष्करं कर्म कृतं भीष्मेण शान्तनुः ११७
बभूव दुःखितो राजा चिररात्राय भारत ।
स तेन कर्मणा सूनोः प्रीतस्तस्मै वरं ददौ॥' ११८
स्वच्छन्दमरणं तुष्टो ददौ तस्मै महात्मने ।
न ते मृत्युः प्रभविता यावज्जीवितुमिच्छसि॥११९
त्वत्तो ह्यनुज्ञां संप्राप्य मृत्युः प्रभविताऽनघ१२०

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

## अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

शान्तनुसत्यवतीविवाहः ॥ १ ॥ चित्राङ्गदविचित्रवीर्ययोरुत्पत्तिः ॥ २ ॥ शान्तनुमरणम् ॥ ३ ॥ चित्राङ्गदमरणम् ॥४॥ विचित्रवीर्यस्य राज्येऽभिषेकः ॥ ५ ॥

---

वैशंपायन उवाच ।
'चेदिराजसुतां ज्ञात्वा दाशराजेन वर्धिताम् ।
विवाहं कारयामास शास्त्रदृष्टेन कर्मणा ॥' १
ततो विवाहे निर्वृत्ते स राजा शान्तनुर्नृपः ।
तां कन्यां रूपसंपन्नां स्वगृहे संन्यवेशयत् ॥ २
ततः शान्तनवो धीमान्सत्यवत्यामजायत ।
वीरश्चित्राङ्गदो नाम वीर्यवान्पुरुषेश्वरः ॥ ३
अथापरं महेष्वासं सत्यवत्यां सुतं प्रभुः ।
विचित्रवीर्यं राजानं जनयामास वीर्यवान् ॥ ४
अप्राप्तवति तस्मिंस्तु यौवनं पुरुषर्षभे ।
स राजा शान्तनुर्धीमान्कालधर्ममुपेयिवान् ॥ ५
स्वर्गते शान्तनौ भीष्मश्चित्राङ्गदमरिन्दमम् ।

स्थापयामास वै राज्ये सत्यवत्या मते स्थितः॥६
स तु चित्राङ्गदः शौर्यात्सर्वांश्चिक्षेप पार्थिवान् ।
मनुष्यं न हि मेने स कंचित्सदृशमात्मनः ॥ ७
तं क्षिपन्तं सुरांश्चैव मनुष्यानसुरांस्तथा ।
गन्धर्वराजो बलवांस्तुल्यनामाऽभ्ययात्तदा ॥ ८
गन्धर्व उवाच ।
'त्वं वै सदृशनामासि युद्धं देहि नृपात्मज ।
नाम वाऽन्यत्प्रगृह्णीष्व यदि युद्धं न दास्यसि॥९
त्वयाहं युद्धमिच्छामि त्वत्सकाशं तु नामतः ।
आगतोस्मि वृथाऽऽभाष्य न गच्छेन्नाम ते मम॥
इत्युक्त्वा गर्जमानौ तौ हिरण्वत्यास्तटं गतौ' ।
तेनास्य सुमहद्युद्धं कुरुक्षेत्रे बभूव ह ॥ ११
तयोर्बलवतोस्तत्र गन्धर्वकुरुमुख्ययोः ।
नद्यास्तीरे हिरण्वत्याः समास्तिस्रोऽभवद्रणः ॥१२
तस्मिन्विमर्दे तुमुले शस्त्रवर्षसमाकुले ।
मायाधिकोऽवधीद्वीरं गन्धर्वः कुरुसत्तमम् ॥१३
स हत्वा तु नरश्रेष्ठं चित्राङ्गदमरिन्दमम् ।
अन्ताय कृत्वा गन्धर्वो दिवमाचक्रमे ततः॥ १४
तस्मिन्पुरुषशार्दूले निहते भूरितेजसि ।
भीष्मः शान्तनवो राजा प्रेतकार्याण्यकारयत् १५
विचित्रवीर्यं च तदा बालमप्राप्तयौवनम् ।
कुरुराज्ये महाबाहुरभ्यषिञ्चदनन्तरम् ॥ १६
विचित्रवीर्यः स तदा भीष्मस्य वचने स्थितः ।
अन्वशासन्महाराज पितृपैतामहं पदम् ॥ १७
स धर्मशास्त्रकुशलं भीष्मं शान्तनवं नृपः ।
पूजयामास धर्मेण स चैनं प्रत्यपालयत् ॥ १८

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

---

## नवाधिकशततमोऽध्यायः ॥ १०९ ॥

भीष्मस्य काशिपतिकन्याहरणार्थं वाराणसीगमनम् ॥ १ ॥ कन्यां हृतवता भीष्मेण युद्धे राज्ञां पराजयः ॥ २ ॥ मध्येमार्गं साल्वपराजयः ॥ ३ ॥ विचित्रवीर्यविवाहोपक्रमे तमनिच्छन्त्या ज्येष्ठाया अम्बयाः साल्वं प्रति गमनम् ॥ ४ ॥ तेन प्रत्याख्यातायाः पुनर्भीष्मं प्राप्ताया अम्बायाः भीष्मेण निराकरणम् ॥ ५ ॥ भीष्मजिघांसया तपस्यन्त्या अम्बायाः प्रसन्नात्कुमारान्मालाप्राप्तिः ॥ ६ ॥

वैशंपायन उवाच ।
हते चित्राङ्गदे भीष्मो बाले भ्रातरि कौरव ।
पालयामास तद्राज्यं सत्यवत्या मते स्थितः ॥१
'तथा विचित्रवीर्यं तु वर्तमानं सुखेऽतुले ।'
संप्राप्तयौवनं दृष्ट्वा भ्रातरं धीमतां वरः ।
भीष्मो विचित्रवीर्यस्य विवाहायाकरोन्मतिम् ॥२
अथ काशिपतेर्भीष्मः कन्यास्तिस्रोऽप्सरोपमाः ।
शुश्राव सहिता राजन्वृण्वाना वै स्वयंवरम् ॥ ३
ततः स रथिनां श्रेष्ठो रथेनैकेन शत्रुजित् ।
जगामानुमते मातुः पुरीं वाराणसीं प्रभुः ॥ ४
तत्र राज्ञः समुदितान्सर्वतः समुपागतान् ।
ददर्श कन्यास्ताश्चैव भीष्मः शान्तनुनन्दनः ॥ ५
'तासां कामेन संमत्ताः सहिताः काशिकोसलाः।
वङ्गाः पुण्ड्राः कलिङ्गाश्च ते जग्मुस्तां पुरीं प्रति'६
कीर्त्यमानेषु राज्ञां तु तदा नामसु सर्वशः ।
एकाकिनं तदा भीष्मं वृद्धं शान्तनुनन्दनम् ॥७
सोद्वेगा इव तं दृष्ट्वा कन्याः परमशोभनाः ।
अपाक्रामन्त ताः सर्वा वृद्ध इत्येव चिन्तया ॥८
वृद्धः परमधर्मात्मा वलीपलितधारणः ।
किंकारणमिहायातो निर्लज्जो भरतर्षभः ॥ ९
मिथ्याप्रतिज्ञो लोकेषु किं वदिष्यति भारत ।
ब्रह्मचारीति भीष्मो हि वृथैव प्रथितो भुवि ॥१०
इत्येवं प्रब्रुवन्तस्ते हसन्ति स्म नृपाधमाः ।
वैशंपायन उवाच ।
क्षत्रियाणां वचः श्रुत्वा भीष्मश्चुक्रोध भारत ॥११
भीष्मस्तदा स्वयं कन्या वरयामास ताः प्रभुः ।
उवाच च महीपालान्राजञ्जलदनिःस्वनः ॥ १२
रथमारोप्य ताः कन्या भीष्मः प्रहरतां वरः ।

आहूय दानं कन्यानां गुणवद्भ्यः स्मृतं बुधैः॥१३
अलङ्कृत्य यथाशक्ति प्रदाय च धनान्यपि।
प्रयच्छन्त्यपरे कन्यां मिथुनेन गवामपि॥ १४
वित्तेन कथितेनान्ये बलेनान्येऽनुमान्य च।
प्रमत्तामुपयन्त्यन्ये स्वयमन्ये च विन्दते॥ १५
आर्षं विधिं पुरस्कृत्य दारान्विन्दन्ति चापरे।
अष्टमं तमथो वित्त विवाहं कविभिर्वृतम्॥ १६
स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च।
प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्मवादिनः॥१७
ता इमाः पृथिवीपाला जिहीर्षामि बलादितः।
ते यतध्वं परं शक्त्या विजयायेतराय वा॥ १८
स्थितोऽहं पृथिवीपाला युद्धाय कृतनिश्चयः।
वैशंपायन उवाच।
एवमुक्त्वा महीपालान्काशिराजं च वीर्यवान् १९
सर्वाः कन्याः स कौरव्यो रथमारोप्य च स्वकम्।
आमन्त्र्य च स तान्प्रायाच्छीघ्रं कन्याः प्रगृह्य ताः॥
ततस्ते पार्थिवाः सर्वे समुत्पेतुरमर्षिताः।
संस्पृशन्तः स्वकान्बाहून्दशन्तो दशनच्छदान् २१
तेषामाभरणान्याशु त्वरितानां विमुञ्चताम्।
आमुञ्चतां च वर्माणि संभ्रमः सुमहानभूत्॥२२
ताराणामिव संपातो बभूव जनमेजय।
भूषणानां च सर्वेषां कवचानां च सर्वशः॥२३
सवर्मभिर्भूषणैश्च प्रकीर्यद्भिरितस्ततः।
सक्रोधामर्षजिह्मभ्रूकषायीकृतलोचनाः॥ २४
सूतोपक्लृप्तान् रुचिरान्सदश्वैरुपकल्पितान्।
रथानास्थाय ते वीराः सर्वप्रहरणान्विताः॥ २५
प्रयान्तमथ कौरव्यमनुसस्रुरुदायुधाः।
ततः समभवद्युद्धं तेषां तस्य च भारत।
एकस्य च बहूनां च तुमुलं रोमहर्षणम्॥ २६
ते त्विषून्दशसाहस्रांस्तस्मिन्युगपदाक्षिपन्।
अप्राप्तांश्चैव तानाशु भीष्मः सर्वांस्तथाऽन्तरा २७
अच्छिनच्छरवर्षेण महता लोमवाहिना।
ततस्ते पार्थिवाः सर्वे सर्वतः परिवार्य तम्॥२८
ववृषुः शरवर्षेण वर्षेणेवाद्रिमम्बुदाः।
स तं बाणमयं वर्षं शरैरावार्य सर्वतः॥ २९
ततः सर्वान्महीपालान्पर्यविध्यत्त्रिभिस्त्रिभिः।
एकैकस्तु ततो भीष्मं राजन्विव्याध पञ्चभिः ३०
स च तान्प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमन्।
तद्युद्धमासीत्तुमुलं घोरं देवासुरोपमम्॥ ३१
पश्यतां लोकवीराणां शरशक्तिसमाकुलम्।
स धनूंषि ध्वजाग्राणि वर्माणि च शिरांसि च ३२
चिच्छेद समरे भीष्मः शतशोथ सहस्रशः।
तस्यातिपुरुषं कर्म लाघवं रथचारिणः॥ ३३
रक्षणं चात्मनः संख्ये शत्रवोऽप्यभ्यपूजयन्।
'अक्षतः क्षपयित्वान्यानसङ्ख्येयपराक्रमः॥ ३४
आनिनाय स काश्यस्य सुताः सागरगासुतः।'
तान्विनिर्जित्य तु रणे सर्वशस्त्रभृतां वरः॥ ३५
कन्याभिः सहितः प्रायाद्भारतो भारतान्प्रति।
ततस्तं पृष्ठतो राजञ्शाल्वराजो महारथः॥ ३६
अभ्यगच्छदमेयात्मा भीष्मं शान्तनवं रणे।
वारणं जघने भिन्दन्दन्ताभ्यामपरो यथा॥ ३७
वासितामनुसंप्राप्तो यूथपो बलिनां वरः।
स्त्रीकामस्तिष्ठतिष्ठेति भीष्ममाह स पार्थिवः॥३८
साल्वराजो महाबाहुरमर्षेण प्रचोदितः।
ततः स पुरुषव्याघ्रो भीष्मः परबलार्दनः॥ ३९
तद्वाक्याकुलितः क्रोधाद्विधूमोऽग्निरिव ज्वलन्।
विततेषुधनुष्पाणिर्विकुञ्चितललाटभृत्॥ ४०
क्षत्रधर्मं समास्थाय व्यपेतभयसंभ्रमः।
निवर्तयामास रथं साल्वं प्रति महारथः॥ ४१
निवर्तमानं तं दृष्ट्वा राजानः सर्व एव ते।
प्रेक्षकाः समपद्यन्त भीष्मसाल्वसमागमे॥ ४२
तौ वृषाविव नर्दन्तौ बलिनौ वासितान्तरे।
अन्योन्यमभिवर्तेतां बलविक्रमशालिनौ॥ ४३
ततो भीष्मं शान्तनवं शरैः शतसहस्रशः।

आहूयेति ब्राह्मः॥ १३॥ मिथुनेन गृहीतेनेत्यार्षः॥ १४॥ वित्तेनेत्यासुरः। बलेनेति राक्षसः। अनुमान्येति गान्धर्वः। प्रमत्तामिति पैशाचः। स्वयमन्ये इति प्राजापत्यः॥ १५॥ आर्षं विधिं यज्ञम्। तेन दैव उक्तः। अष्टमं राक्षसं विवाहम्॥ १६॥ प्रशंसति। स्वयंवरमिति॥ १७॥ प्रकीर्यद्भिर्भूषणैरुपलक्षिता अनुसस्रुरिति तृतीयेनान्वयः॥ २४॥ वृषौ रेतःसेककामौ

साल्वराजो नरश्रेष्ठः समवाकिरदाशुगैः ॥ ४४
पूर्वमभ्यर्दितं दृष्ट्वा भीष्मं साल्वेन ते नृपाः ।
विस्मिताः समपद्यन्त साधुसाध्विति चाब्रुवन् ४५
लाघवं तस्य ते दृष्ट्वा समरे सर्वपार्थिवाः ।
अपूजयन्त संहृष्टा वाग्भिः साल्वं नराधिपम् ४६
क्षत्रियाणां ततो वाचः श्रुत्वा परपुरञ्जयः ।
क्रुद्धः शान्तनवो भीष्मस्तिष्ठतिष्ठेत्यभाषत ॥ ४७
सारथिं चाब्रवीत्क्रुद्धो याहि यत्रैष पार्थिवः ।
यावदेनं निहन्म्यद्य भुजङ्गमिव पक्षिराट् ॥ ४८
ततोऽस्त्रं वारुणं सम्यग्योजयामास कौरवः ।
तेनाश्वांश्चतुरोऽमृद्नात्साल्वराजस्य भूपते ॥ ४९
अस्त्रैरस्त्राणि संवार्य साल्वराजस्य कौरवः ।
भीष्मो नृपतिशार्दूल न्यवधीत्तस्य सारथिम् ॥५०
अस्त्रेण चास्याथैन्द्रेण न्यवधीत्तुरगोत्तमान् ।
कन्याहेतोर्नरश्रेष्ठ भीष्मः शान्तनवस्तदा ॥ ५१
जित्वा विसर्जयामास जीवन्तं नृपसत्तमम् ।
ततः साल्वः स्वनगरं प्रययौ भरतर्षभ ॥ ५२
स्वराज्यमन्वशाच्चैव धर्मेण नृपतिस्तदा ।
राजानो ये च तत्रासन्स्वयंवरदिदृक्षवः ॥ ५३
स्वान्येव तेऽपि राष्ट्राणि जग्मुः परपुरञ्जयाः ।
एवं विजित्य ताः कन्या भीष्मः प्रहरतां वरः ५४
प्रययौ हास्तिनपुरं यत्र राजा स कौरवः ।
विचित्रवीर्यो धर्मात्मा प्रशास्ति वसुधामिमाम् ५५
यथा पितास्य कौरव्यः शान्तनुर्नृपसत्तमः ।
सोऽचिरेणैव कालेन अत्यक्रामन्नराधिप ॥ ५६
वनानि सरितश्चैव शैलांश्च विविधान्द्रुमान् ।
अक्षतः क्षपयित्वाऽरीन्सङ्ख्येऽसङ्ख्येयविक्रमः ॥५७
आनयामास काश्यस्य सुताः सागरगासुतः ।
स्नुषा इव स धर्मात्मा भगिनीरिव चानुजाः ॥५८
यथा दुहितरश्चैव परिगृह्य ययौ कुरून् ।
आनिन्ये स महाबाहुर्भ्रातुः प्रियचिकीर्षया ॥५९
ताः सर्वगुणसंपन्ना भ्राता भ्रात्रे यवीयसे ।
भीष्मो विचित्रवीर्याय प्रददौ विक्रमाहृताः ॥६०
एवं धर्मेण धर्मज्ञः कृत्वा कर्मातिमानुषम् ।
भ्रातुर्विचित्रवीर्यस्य विवाहायोपचक्रमे ॥ ६१
सत्यवत्या सह मिथः कृत्वा निश्चयमात्मवान् ।
विवाहं कारयिष्यन्तं भीष्मं काशिपतेः सुता ।
ज्येष्ठा तासामिदं वाक्यमब्रवीद्धसती तदा ॥६२
मया सौभपतिः पूर्वं मनसा हि वृतः पतिः ।
तेन चास्मि वृता पूर्वमेष कामश्च मे पितुः ॥ ६३
मया वरयितव्योऽभूत्साल्वस्तस्मिन्स्वयंवरे ।
एतद्विज्ञाय धर्मज्ञ धर्मतत्त्वं समाचर ॥ ६४
एवमुक्तस्तया भीष्मः कन्यया विप्रसंसदि ।
चिन्तामभ्यगमद्वीरो युक्तां तस्यैव कर्मणः ॥ ६५
'अन्यसक्ता त्वियं कन्या ज्येष्ठा त्वम्बा मया जिता
वाचा दत्ता मनोदत्ता कृतमङ्गलवाचना ॥ ६६
निर्दिष्टा तु परस्यैव सा त्याज्या परचिन्तिनी ।
इत्युक्त्वा चानुमान्यैव भ्रातरं स्ववशानुगम् ॥' ६७
विनिश्चित्य स धर्मज्ञो ब्राह्मणैर्वेदपारगैः ।
अनुजज्ञे तदा ज्येष्ठामम्बां काशिपतेः सुताम् ६८
अम्बिकाम्बालिके भार्ये प्रादाद्भ्रात्रे यवीयसे ।
भीष्मो विचित्रवीर्याय विधिदृष्टेन कर्मणा ॥ ६९
तयोः पाणी गृहीत्वा तु रूपयौवनदर्पितः ।
विचित्रवीर्यो धर्मात्मा नाम्बामैच्छत्कथंचन ॥७०
'अम्बामन्यस्य कीर्त्यन्तीमब्रवीच्चारुदर्शनाम् ।
विचित्रवीर्य उवाच ।
पापस्य फलमेवैष कामोऽसाधुर्निरर्थकः ।
परतन्त्रोपभोगे मामार्ये नाऽऽयोक्तुमर्हसि ॥ ७१
भीष्म उवाच ।
प्रातिष्ठच्छान्तनोर्वंशस्तात यस्य त्वमन्वयः ।
अकामवृत्तो धर्मात्मन्साधु मन्ये मतं तव ॥ ७२
इत्युक्त्वाम्बां समालोक्य विधिवद्वाक्यमब्रवीत् ।
विसृष्टा ह्यसि गच्छ त्वं यथाकाममनिन्दिते ॥७३
नानियोज्ये समर्थोऽहं नियोक्तुं भ्रातरं प्रियम् ।
अन्यभावगतां चापि को नारीं वासयेद्गृहे ॥७४
अतस्त्वां न नियोक्ष्यामि अन्यकामासि गम्यताम्

गजौ गोवृषावेव वा तत्साहचर्याद्वासिता पुष्पिणी गौस्तदन्तरे तन्निमित्तम् ॥४३॥ जीवन्तं प्राणमात्रावशेषितम् ॥५२॥ काश्यस्य काशिराजस्य । अनुजाः कनिष्ठाः ॥ ५८ ॥ अम्बां दृष्ट्वेति शेषः । अब्रवीत् भीष्ममिति शेषः ॥ ७१ ॥ नवाधिकशततमः ॥१०९

अहमप्यूर्ध्वरेता वै निवृत्तो दारकर्मणि ॥ ७५
न संबन्धस्तदावाभ्यां भविता वै कथंचन ।
वैशंपायन उवाच ।
इत्युक्ता सा गता तत्र सखीभिः परिवारिता ७६
निर्दिष्टा हि शनै राजन्साल्वराजपुरं प्रति ।
अथाम्बा साल्वमागम्य साऽब्रवीत्प्रतिपूज्य तं७७
पुरा निर्दिष्टभावा त्वामागतास्मि वरानन ।
देवव्रतं समुत्सृज्य सानुजं भरतर्षभम् ॥ ७८
प्रतिगृह्णीष्व भद्रं ते विधिवन्मां समुद्यताम् ॥७९
वैशंपायन उवाच ।
तथैवमुक्तः साल्वोपि प्रहसन्निदमब्रवीत् ।
निर्जिताऽसीह भीष्मेण मां विनिर्जित्य राजसु ॥
अन्येन निर्जितां भद्रे विसृष्टां तेन चालयात् ।
न गृह्णामि वरारोहे तत्र चैव तु गम्यताम् ॥८१
वैशंपायन उवाच ।
इत्युक्ता सा समागम्य कुरुराज्यमनुत्तमम् ।
अम्बाब्रवीत्ततो भीष्मं त्वयाऽहं सहसा हृता ॥८२
क्षत्रधर्ममवेक्षस्व त्वं भर्ता मम धर्मतः ।
यां यः स्वयंवरे कन्यां निर्जयेच्छौर्यसंपदा ॥८३
राज्ञः सर्वान्विनिर्जित्य स तामुद्वाहयेद्ध्रुवम् ।
अतस्त्वमेव भर्ता मे त्वयाऽहं निर्जिता यतः ८४
तस्माद्वहस्व मां भीष्म निर्जितां संसदि त्वया ।
ऊर्ध्वरेता ह्यहमिति प्रत्युवाच पुनःपुनः ॥ ८५
भीष्मं सा चाब्रवीदम्बा यथाजैषीस्तथा कुरु ।
एवमन्वगमद्भीष्मं षट्समाः पुष्करेक्षणा ॥ ८६
ऊर्ध्वरेतास्त्वहं भद्रे विवाहविमुखोऽभवम् ।
तमेव साल्वं गच्छ त्वं यः पुरा मनसा वृतः ८७
अन्यसक्तं किमर्थं त्वमात्मानमवदः पुरा ।
अन्यसक्तां वधूं कन्यां वासयेत्स्वगृहे न हि ॥८८
नाहमुद्वाहयिष्ये त्वां मम भ्रात्रे यवीयसे ।
विचित्रवीर्याय शुभे यथेष्टं गम्यतामिति ॥ ८९
भूयः साल्वं समभ्येत्य राजन्गृह्णीष्व मामिति ।
नाहं गृह्णाम्यन्यजितामिति साल्वनिराकृता ९०
ऊर्ध्वरेतास्त्वहमिति भीष्मेण च निराकृता ।
अम्बा भीष्मं पुनः साल्वं भीष्मं साल्वं पुनः पुनः॥
गमनागमनेनैवमनैषीत्षट् समा नृप ।
अश्रुभिर्भूमिमुक्षन्ती शोचन्ती सा मनस्विनी ९२
पीनोन्नतकुचद्वन्द्वा विशालजघनेक्षणा ।
श्रोणीभरालसगमा राकाचन्द्रनिभानना ॥ ९३
वर्षत्कादम्बिनीमूर्ध्नि स्फुरन्ती चञ्चलेव सा ।
सा ततो द्वादश समा बाहुदामभितो नदीम् ।
पार्श्वे हिमवतो रम्ये तपो घोरं समाददे ॥ ९४
संक्षिप्तकरणा तत्र तप आस्थाय सुव्रता ।
पादाङ्गुष्ठेन साऽतिष्ठदकम्पन्त ततः सुराः ॥९५
तस्यास्तत्तु तपो दृष्ट्वा सुराणां क्षोभकारकम् ।
विस्मितश्चैव हृष्टश्च तस्यानुग्रहबुद्धिमान् ॥ ९६
अनन्तसेनो भगवान्कुमारो वरदः प्रभुः ।
मानयन्राजपुत्रीं तां ददौ तस्यै शुभां स्रजम् ९७
एषा पुष्करिणी दिव्या यथावत्समुपस्थिता ।
अम्बे त्वच्छोकशमनी माला भुवि भविष्यति ९८
एतां चैव मया दत्तां मालां यो धारयिष्यति ।
सोऽस्य भीष्मस्य निधने कारणं वै भविष्यति ९९

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

## दशाधिकशततमोऽध्यायः ॥ ११० ॥

संग्रहेण अम्बाचरित्रकथनम् ॥ १ ॥

अम्बोवाच ।
अन्यपूर्वेति मां साल्वो नाभिनन्दति बालिशः ।
साहं धर्माच्च कामाच्च विहीना शोकधारिणी ॥१
अपतिः क्षत्रियान्सर्वानाक्रन्दामि समन्ततः ।
इयं वः क्षत्रिया माला या भीष्मं निहनिष्यति २
अहं च भार्या तस्य स्यां यो भीष्मं घातयिष्यति ।
तस्याश्चङ्क्रम्यमाणायाः समाः पञ्च गताः पराः ॥३
नाभवच्छरणं कश्चित्क्षत्रियो भीष्मजाद्भयात् ।

अगच्छत्सोमकं साऽम्बा पाञ्चालेषु यशस्विनम् ४
सत्यसन्धं महेष्वासं सत्यधर्मपरायणम् ।
सा सभाद्वारमागम्य पाञ्चालैरभिरक्षितम् ॥ ५
पाञ्चालराजमाक्रन्दत्प्रगृह्य सुभुजा भुजौ ।
भीष्मेण हन्यमानां मां मज्जन्तीमिव च ह्रदे ॥ ६
यज्ञसेनाभिधावेह पाणिमालम्ब्य चोद्धर ।
तेन मे सर्वधर्माश्च रतिभोगाश्च केवलाः ॥ ७
उभौ च लोकौ कीर्तिश्च समूलौ सफलौ हृतौ ।
क्रोशन्त्येवं न विन्दामि राजन्यं शरणं क्वचित् ॥८
किं नु निःक्षत्रियो लोको यत्रानाथोऽवसीदति ।
समागम्य तु राजानो मयोक्ता राजसत्तमाः ॥९
शृण्वन्तु सर्वे राजानो मयोक्तं राजसत्तमाः ।
इक्ष्वाकूणां तु ये वृद्धाः पाञ्चालानां च ये वराः१०
त्वत्प्रसादाद्विवाहेऽस्मिन्मा धर्मो मा पराजयेत् ।
प्रसीद यज्ञसेनेह गतिर्मे भव सोमक ॥ ११
यज्ञसेन उवाच ।
जानामि त्वां बोधयामि राजपुत्रि विशेषतः ।
यथाशक्ति यथाधर्मं बलं संधारयाम्यहम् ॥ १२
अन्यस्मात्पार्थिवाद्यत्ते भयं स्यात्पार्थिवात्मजे ।
तस्यापनयने हेतुं संविधातुमहं प्रभुः ॥ १३
नहि शान्तनवस्याहं महास्त्रस्य प्रहारिणः ।
ईश्वरः क्षत्रियाणां हि बलं धर्मोऽनुवर्तते ॥ १४
सा साधु व्रज कल्याणि न मां भीष्मो दहेद्बलात्
न प्रत्यगृह्णंस्ते सर्वे किमित्येव न वेद्म्यहम् ॥ १५
न हि भीष्मादहं धर्मं शक्तो दातुं कथंचन ।
वैशंपायन उवाच ।
इत्युक्ता स्रजमासज्य द्वारि राज्ञो व्यपाद्रवत् ॥१६
व्युदस्तां सर्वलोकेषु तपसा संशितव्रताम् ।
तामन्वगच्छद्द्रुपदः सान्त्वं जल्पन्पुनः पुनः ॥१७
स्रजं गृहाण कल्याणि न नो वैरं प्रसञ्जय ॥१८
अम्बोवाच ।
एवमेव त्वया कार्यमिति स प्रतिकाङ्क्षते ।
न तु तस्यान्यथा भावो दैवमेतदमानुषम् ॥ १९
यश्चैनां स्रजमादाय स्वयं वै प्रतिमोक्ष्यते ।
स भीष्मं समरे हन्ता मम धर्मप्रणाशनम् ॥ २०
वैशंपायन उवाच ।
तां स्रजं द्रुपदो राजा कंचित्कालं ररक्ष सः ।
ततो विस्रम्भमास्थाय तूष्णीमेतामुपैक्षत ॥ २१
तां शिखण्डिन्यवभ्रात्तु बाला पितुरवज्ञया ।
तां पिता त्वत्यजच्छीघ्रं त्रस्तो भीष्मस्य किल्बिषात्
इषीकं ब्राह्मणं भीता साभ्यगच्छत्तपस्विनम् ।
गङ्गाद्वारि तपस्यन्तं तुष्टिहेतोस्तपस्विनी ॥ २३
उपचाराभितुष्टस्तामब्रवीदृषिसत्तमः ।
गङ्गाद्वारे विभजनं भविता नचिरादिव ॥ २४
तत्र गन्धर्वराजानं तुम्बुरुं प्रियदर्शनम् ।
आराधयितुमीहस्व सम्यक्परिचरस्व तम् ॥ २५
अहमप्यत्र साचिव्यं कर्तास्मि तव शोभने ।
तं तदाचर भद्रं ते स ते श्रेयो विधास्यति ॥२६
ततो विभजनं तत्र गन्धर्वाणामवर्तत ।
तत्र द्वाववशिष्येतां गन्धर्वावमितौजसौ ॥ २७
तयोरेकः समीक्ष्यैनां स्त्रीबुभूषुरुवाच ह ।
इदं गृह्णीष्व पुंलिङ्गं वृणे स्त्रीलिङ्गमेव ते ॥ २८
नियमं चक्रतुस्तत्र स्त्री पुमांश्चैव तावुभौ ।
ततः पुमान्समभवच्छिखण्डी परवीरहा ॥ २९
स्त्री भूत्वा ह्यपचक्राम स गन्धर्वो मुदान्वितः ।
लब्ध्वा तु महतीं प्रीतिं याज्ञसेनिर्महायशाः ॥३०
ततो बुद्बुदकं गत्वा पुनरस्त्राणि सोऽकरोत् ।
तत्र चास्त्राणि दिव्यानि कृत्वा स सुमहाद्युतिः ३१
स्वदेशमभिसंपेदे पाञ्चालं कुरुनन्दन ।
सोऽभिवाद्य पितुः पादौ महेष्वासः कृताञ्जलिः॥
उवाच भवता भीष्मान्न भेतव्यं कथंचन ॥ ३३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

पाञ्चालानां च ये वराः ते राजानः मयोक्ता इति पूर्वेण संबन्धः ॥ १० ॥ ईश्वरो नहि ॥ १४ ॥ भीष्मात् भीष्ममपेक्ष्य ॥ १६ ॥ विभजनं उत्सवविशेषः ॥ २४ ॥ दशाधिकशततमोऽध्यायः ॥ ११० ॥

## एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

विचित्रवीर्यस्य अम्बिकाम्बालिकाभ्यां विवाहः ॥ १ ॥ विचित्रवीर्यमरणम् ॥ २ ॥

वैशंपायन उवाच ।
अम्बायां निर्गतायां तु भीष्मः शान्तनवस्तदा ।
न्यायेन कारयामास राज्ञो वैवाहिकीं क्रियाम् १
अम्बिकाम्बालिके चैव परिणीयाग्निसंनिधौ ।
'तयोः पाणी गृहीत्वा तु कौरव्यो रूपदर्पितः ।'
विचित्रवीर्यो धर्मात्मा कामात्मा समपद्यत ॥ २
ते चापि बृहतीश्यामे नीलकुञ्चितमूर्धजे ।
रक्ततुङ्गनखोपेते पीनश्रोणिपयोधरे ॥ ३
आत्मनः प्रतिरूपोऽसौ लब्धः पतिरिति स्थिते ।
विचित्रवीर्यं कल्याण्यौ पूजयामासतुः शुभे ॥ ४
'अन्योन्यं प्रति सक्ते च एकभावे इव स्थिते ।'
स चाश्विरूपसदृशो देवतुल्यपराक्रमः ।
सर्वासामेव नारीणां चित्तप्रमथनो रहः ॥ ५
ताभ्यां सह समाः सप्त विहरन्पृथिवीपतिः ।
विचित्रवीर्यस्तरुणो यक्ष्मणा समगृह्यत ॥ ६
सुहृदां यतमानानामाप्तैः सह चिकित्सकैः ।
जगामास्तमिवादित्यः कौरव्यो यमसादनम् ॥ ७
धर्मात्मा स तु गाङ्गेयः चिन्ताशोकपरायणः ।
प्रेतकार्याणि सर्वाणि तस्य सम्यगकारयत् ॥ ८
राज्ञो विचित्रवीर्यस्य सत्यवत्या मते स्थितः ।
ऋत्विग्भिः सहितो भीष्मः सर्वैश्च कुरुपुङ्गवैः ॥९

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

---

## द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

विचित्रवीर्यभार्ययोरम्बिकाम्बालिकयोः पुत्रोत्पादनाय सत्यवत्या नियुक्तेन भीष्मेण तदनङ्गीकारः ॥ १ ॥

वैशंपायन उवाच ।
ततः सत्यवती दीना कृपणा पुत्रगृद्धिनी ।
पुत्रस्य कृत्वा कार्याणि स्नुषाभ्यां सह भारत ॥ १
समाश्वास्य स्नुषे ते च भर्तृशोकनिपीडिते ।
धर्मं च पितृवंशं च मातृवंशं च भामिनी ।
प्रसमीक्ष्य महाभागा गाङ्गेयं वाक्यमब्रवीत् ॥ २
'दुःखार्दिता तु सा देवी मज्जन्ती शोकसागरे ।
शन्तनोर्धर्मनित्यस्य कौरव्यस्य यशस्विनः ।'
त्वयि पिण्डश्च कीर्तिश्च संतानश्च प्रतिष्ठितः ॥ ३
'भ्राता विचित्रवीर्यस्ते भूतानामन्तमेयिवान् ।'
यथाकर्म शुभं कृत्वा स्वर्गोपगमनं ध्रुवम् ।
यथा चायुर्ध्रुवं सत्ये त्वयि धर्मस्तथा ध्रुवः ॥ ४
वेत्थ धर्मांश्च धर्मज्ञ समासेनेतरेण च ।
विविधास्त्वं श्रुतीर्वेत्थ वेदाङ्गानि च सर्वशः ॥५
व्यवस्थानं च ते धर्मे कुलाचारं च लक्षये ।
प्रतिपत्तिं च कृच्छ्रेषु शुक्राङ्गिरसयोरिव ॥ ६
तस्मात्सुभृशमाश्वस्य त्वयि धर्मभृतां वर ।
कार्ये त्वां विनियोक्ष्यामि तच्छ्रुत्वा कर्तुमर्हसि ७
मम पुत्रस्तव भ्राता वीर्यवान्सुप्रियश्च ते ।
बाल एव गतः स्वर्गमपुत्रः पुरुषर्षभ ॥ ८
इमे महिष्यौ भ्रातुस्ते काशिराजसुते शुभे ।
रूपयौवनसंपन्ने पुत्रकामे च भारत ॥ ९
तयोरुत्पादयापत्यं सन्तानाय कुलस्य नः ।
मन्नियोगान्महाबाहो धर्मं कर्तुमिहार्हसि ॥ १०
राज्ये चैवाभिषिच्यस्व भारताननुशाधि च ।
दारांश्च कुरु धर्मेण मा निमज्जीः पितामहान् ११
वैशंपायन उवाच ।
तथोच्यमानो मात्रा स सुहृद्भिश्च परन्तपः ।

---

बृहतीश्यामे बृहतीपुष्पवद्रक्तश्यामे ॥ ३ ॥ प्रतिरूपः अनुरूपः ॥ ४ ॥ एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

अभिषिच्यस्व अभिषेचय । आत्मानमिति शेषः । कुरु अङ्गीकुरु । मा निमज्जीर्मा निमज्जय ॥ ११ ॥

इत्युवाचाथ धर्मात्मा धर्म्यमेवोत्तरं वचः ॥ १२
असंशयं परो धर्मस्त्वया मातरुदाहृतः ।
त्वमपत्यं प्रति च मे प्रतिज्ञां वेत्थ वै परां ॥१३
जानासि च यथावृत्तं शुल्कहेतोस्त्वदन्तरे ।
स सत्यवति सत्यं ते प्रतिजानाम्यहं पुनः॥१४
परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः ।
यद्वाऽप्यधिकमेताभ्यां न तु सत्यं कथंचन॥१५
त्यजेच्च पृथिवी गन्धमापश्च रसमात्मनः ।
ज्योतिस्तथा त्यजेद्रूपं वायुः स्पर्शगुणं त्यजेत्॥१६
प्रभां समुत्सृजेदर्को धूमकेतुस्तथोष्मताम् ।
त्यजेच्छब्दं तथाऽऽकाशं सोमः शीतांशुतां त्यजेत्॥
विक्रमं वृत्रहा जह्याद्धर्मं जह्याच्च धर्मराट् ।
न त्वहं सत्यमुत्स्रष्टुं व्यवसेयं कथंचन ॥ १८
'तन्न जात्वन्यथा कुर्यां लोकानामपि संक्षये ।
अमरत्वस्य वा हेतोस्त्रैलोक्यस्य धनस्य च ॥'१९
एवमुक्ता तु पुत्रेण भूरिद्रविणतेजसा ।
माता सत्यवती भीष्ममुवाच तदनन्तरम् ॥ २०
जानामि ते स्थितिं सत्ये परां सत्यपराक्रम ।
इच्छन्सृजेथास्त्रींल्लोकानन्यांस्त्वं स्वेन तेजसा २१
जानामि चैवं सत्यं तन्मदर्थे यच्च भाषितम् ।
आपद्धर्मं त्वमावेक्ष्य वह पैतामहीं धुरम् ॥ २२
यथा ते कुलतन्तुश्च धर्मश्च न पराभवेत् ।
सुहृदश्च प्रहृष्येरंस्तथा कुरु परन्तप ॥ २३
'आत्मनश्च हितं तात प्रियं च मम भारत ।'
लालप्यमानां तामेवं कृपणां पुत्रगृद्धिनीम् ।
धर्मादपेतं ब्रुवतीं भीष्मो भूयोऽब्रवीदिदम् ॥२४
राज्ञि धर्मानवेक्षस्व मा नः सर्वान्व्यनीनशः ।
सत्याच्च्युतिः क्षत्रियस्य न धर्मेषु प्रशस्यते ॥ २५
शान्तनोरपि संतानं यथा स्यादक्षयं भुवि ।
तत्ते धर्मं प्रवक्ष्यामि क्षात्रं राज्ञि सनातनम्॥२६
श्रुत्वा तं प्रतिपद्यस्व प्राज्ञैः सह पुरोहितैः ।
आपद्धर्मार्थकुशलैर्लोकतन्त्रमवेक्ष्य च ॥ २७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

---

## त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

दीर्घतमसो ऋषेरुपाख्यानम् ॥ १ ॥

भीष्म उवाच ।
जामदग्न्येन रामेण पितुर्वधममृष्यता ।
राजा परशुना पूर्वं हैहयाधिपतिर्हतः ॥ १
शतानि दशबाहूनां निकृत्तान्यर्जुनस्य वै ।
लोकस्याचरितो धर्मस्तेनाति किल दुश्चरः ॥ २
पुनश्च धनुरादाय महास्त्राणि प्रमुञ्चता ।
निर्दग्धं क्षत्रमसकृद्रथेन जयता महीम् ॥ ३
एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना ।
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥४
एवं निःक्षत्रिये लोके कृते तेन महर्षिणा ।
ततः संभूय सर्वाभिः क्षत्रियाभिः समन्ततः ॥ ५
उत्पादितान्यपत्यानि ब्राह्मणैर्वेदपारगैः ।
पाणिग्राहस्य तनय इति वेदेषु निश्चितम् ॥ ६
धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः ।
लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः ॥ ७
ततः पुनः समुदितं क्षत्रं समभवत्तदा ।
इमं चैवात्र वक्ष्येऽहमितिहासं पुरातनम् ॥ ८
अथोचथ्य इति ख्यात आसीद्धीमानृषिः पुरा ।
ममता नाम तस्यासीद्भार्या परमसंमता ॥ ९
उचथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसाम् ।
बृहस्पतिर्बृहत्तेजा ममतामन्वपद्यत ॥ १०
उवाच ममता तं तु देवरं वदतां वरम् ।
अन्तर्वत्नी त्वहं भ्रात्रा ज्येष्ठेनारम्यतामिति ॥११
अयं च मे महाभाग कुक्षावेव बृहस्पते ।

---

त्वदन्तरे त्वन्निमित्तम् ॥ १४ ॥ भूरिद्रविणतेजसा बहुबलोत्साहवता ॥ २० ॥ द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

अन्वपद्यत उपगतवान् ॥ १० ॥ आरम्यतामुपरम्यताम् ॥ ११ ॥

औचथ्यो वेदमत्रापि षडङ्गं प्रत्यधीयत ॥ १२
अमोघरेतास्त्वं चापि द्वयोर्नास्त्यत्र संभवः ।
तस्मादेवं गते त्वद्य उपारमितुमर्हसि ॥ १३
वैशंपायन उवाच ।
एवमुक्तस्तदा सम्यक् बृहस्पतिरुदारधीः ।
कामात्मानं तदात्मानं न शशाक नियच्छितुम् १४
स बभूव ततः कामी तया सार्धमकामया ।
उत्सृजन्तं तु तं रेतः स गर्भस्थोऽभ्यभाषत ॥ १५
भोस्तात मा गमः कामं द्वयोर्नास्तीह संभवः ।
अल्पावकाशो भगवन्पूर्वं चाहमिहागतः ॥ १६
अमोघरेताश्च भवान्न पीडां कर्तुमर्हति ।
अश्रुत्वैव तु तद्वाक्यं गर्भस्थस्य बृहस्पतिः ॥ १७
जगाम मैथुनायैव ममतां चारुलोचनाम् ।
शुक्रोत्सर्गं ततो बुद्ध्वा तस्या गर्भगतो मुनिः १८
पद्भ्यामारोधयन्मार्गं शुक्रस्य च बृहस्पतेः ।
स्थानमप्राप्तमथ तच्छुक्रं प्रतिहतं तदा ॥ १९
पपात सहसा भूमौ ततः क्रुद्धो बृहस्पतिः ।
तं दृष्ट्वा पतितं शुक्रं शशाप स रुषान्वितः ॥ २०
उचथ्यपुत्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः ।
यन्मां त्वमीदृशे काले सर्वभूतेप्सिते सति ॥ २१
एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि ।
स वै दीर्घतमा नाम शापादृषिरजायत ॥ २२
बृहस्पतेर्बृहत्कीर्तेर्बृहस्पतिरिवौजसा ।
जात्यन्धो वेदवित्प्राज्ञः पत्नीं लेभे स विद्यया २३
तरुणीं रूपसंपन्नां प्रद्वेषीं नाम ब्राह्मणीम् ।
स पुत्राञ्जनयामास गौतमादीन्महायशाः ॥ २४
ऋषेरुचथ्यस्य तदा सन्तानकुलवृद्धये ।
धर्मात्मा च महात्मा च वेदवेदाङ्गपारगः ॥ २५
गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः ।
प्रावर्तत तदा कर्तुं श्रद्धावांस्तमशङ्कया ॥ २६

ततो वितथमर्यादं तं दृष्ट्वा मुनिसत्तमाः ।
क्रुद्धा मोहाभिभूतास्ते सर्वे तत्राश्रमौकसः ॥ २७
अहोऽयं भिन्नमर्यादो नाश्रमे वस्तुमर्हति ।
तस्मादेनं वयं सर्वे पापात्मानं त्यजामहे ॥ २८
इत्यन्योन्यं समाभाष्य ते दीर्घतमसं मुनिम् ।
पुत्रलाभाच्च सा पत्नी न तुतोष पतिं तदा ॥ २९
प्रद्विषन्तीं पतिर्भार्यां किं मां द्वेक्षीति चाब्रवीत् ।
प्रद्वेष्युवाच ।
भार्याया भरणाद्भर्ता पालनाच्च पतिः स्मृतः ॥ ३०
अहं त्वद्भरणाशक्ता जात्यन्धं ससुतं तदा ।
नित्यकालं श्रमेणार्ता न भरेयं महातपः ॥ ३१
भीष्म उवाच ।
तस्यास्तद्वचनं श्रुत्वा ऋषिः कोपसमन्वितः ।
प्रत्युवाच ततः पत्नीं प्रद्वेषीं ससुतां तदा ॥ ३२
नीयतां क्षत्रियकुले धनार्थश्च भविष्यति ।
प्रद्वेष्युवाच ।
त्वया दत्तं धनं विप्र नेच्छेयं दुःखकारणम् ॥ ३३
यथेष्टं कुरु विप्रेन्द्र न भरेयं पुरा यथा ।
दीर्घतमा उवाच ।
अद्यप्रभृति मर्यादा मया लोके प्रतिष्ठिता ॥ ३४
एक एव पतिर्नार्या यावज्जीवं परायणम् ।
मृते जीवति वा तस्मिन्नापरं प्राप्नुयान्नरम् ॥ ३५
अभिगम्य परं नारी पतिष्यति न संशयः ।
अपतीनां तु नारीणामद्यप्रभृति पातकम् ॥ ३६
यद्यस्ति चेद्धनं सर्वं वृथाभोगा भवन्तु ताः ।
अकीर्तिः परिवादाश्च नित्यं तासां भवन्तु वै ॥ ३७
इति तद्वचनं श्रुत्वा ब्राह्मणी भृशकोपिता ।
गङ्गायां नीयतामेष पुत्रा इत्येवमब्रवीत् ॥ ३८
लोभमोहाभिभूतास्ते पुत्रास्तं गौतमादयः ।
बद्ध्वोडुपे परिक्षिप्य गङ्गायां समवासृजन् ॥ ३९

---

आत्मानं चित्तम् । नियच्छितुं नियन्तुम् ॥१४॥ कामं मैथुनं मा गमः ॥१६॥ तं शशापेति संबन्धः ॥२०॥ दीर्घं तमः अन्धत्वम् ॥२२॥ सम्यक् तानं विस्तारो यस्य तस्य कुलस्य वृद्धये विस्तीर्णस्यापि वृद्धये इत्यर्थः ॥२५॥ गोधर्मं प्रकाशमैथुनम् । सौरभेयात् कामधेनुपुत्रादधीत्याधिगम्य ॥ २६ ॥ मोहाभिभूतत्वमपापे पापदर्शित्वात् ॥ २७ ॥ समाभा ष्य क्रुद्धा इति पूर्वेणान्वयः ॥ २९ ॥ द्वेक्षि द्वेषं करोषि । पतिः पालनादुपसर्गेभ्यः । भरणादन्नादिना भर्ता च ॥ ३० ॥ अहं तु प्रत्युत त्वद्भरणाशक्ता सती न भरेयम् । तदा तदेव । लुप्तोपमा । पूर्ववदित्यर्थः ॥३१॥ धनमर्थश्चोपभोगादिः ॥ ३३ ॥ न भरेयं यथा पुरा भर्त्रन्तरं करिष्यां-

कस्मादन्धश्च वृद्धश्च भर्तव्योऽयमिति स ते ।
चिन्तयित्वा ततः क्रूराः प्रतिजग्मुरथो गृहान् ४०
सोऽनुस्रोतस्तदा विप्रः प्लवमानो यदृच्छया ।
जगाम सुबहून्देशानन्धस्तेनोडुपेन ह ॥ ४१
तं तु राजा बलिर्नाम सर्वधर्मविदां वरः ।
अपश्यन्मज्जनगतः स्रोतसाऽभ्याशमागतम् ॥४२
जग्राह चैनं धर्मात्मा बलिः सत्यपराक्रमः ।
ज्ञात्वा चैवं स वव्रेऽथ पुत्रार्थे भरतर्षभ ॥ ४३
'तं पूजयित्वा राजर्षिर्विश्रान्तं मुनिमब्रवीत् ।'
सन्तानार्थं महाभाग भार्यासु मम मानद ।
पुत्रान्धर्मार्थकुशलानुत्पादयितुमर्हसि ॥ ४४
भीष्म उवाच ।
एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः ।
तस्मै स राजा स्वां भार्यां सुदेष्णां प्राहिणोत्तदा ४५
अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह ।
स्वां तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा ॥४६
तस्यां काक्षीवदादीन्स शूद्रयोनावृषिस्तदा ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥ ४७
काक्षीवदादीन्पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः ।
उवाच तमृषिं राजा ममेम इति भारत ॥ ४८
नेत्युवाच महर्षिस्तं ममेम इति चाब्रवीत् ।
शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः ॥४९
अन्धं वृद्धं च मां दृष्ट्वा सुदेष्णा महिषी तव ।
अवमन्य ददौ मूढा शूद्रां धात्रेयिकां मम ॥५०
भीष्म उवाच ।
ततः प्रसादयामास पुनस्तमृषिसत्तमम् ।
बलिः सुदेष्णां स्वां भार्यां तस्मै स प्राहिणोत्पुनः ॥
तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् ।
भविष्यन्ति कुमारास्ते तेजसाऽऽदित्यवर्चसः ५२
अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः ।
तेषां देशाः समाख्याताः स्वनामकथिता भुवि ॥
अङ्गस्याङ्गोऽभवद्देशो वङ्गो वङ्गस्य च स्मृतः ।
कलिङ्गविषयश्चैव कलिङ्गस्य च स स्मृतः ॥ ५४
पुण्ड्रस्य पुण्ड्राः प्रख्याताः सुह्माः सुह्मस्य च स्मृताः
एवं बलेः पुरा वंशः प्रख्यातो वै महर्षिजः ॥५५
एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि ।
जाताः परमधर्मज्ञा वीर्यवन्तो महाबलाः ।
एतच्छ्रुत्वा त्वमप्यत्र मातः कुरु यथेप्सितम् ॥५६

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

---

## चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

सत्यवत्या स्वस्मिन्कन्यात्वावस्थायां व्यासोत्पत्तिकथनम् ॥ १ ॥ स्मरणमात्रादागतेन व्यासेन सह सत्यवत्याः संवादः ॥ २ ॥ व्यासेन अम्बिकाम्बालिकयोः पुत्रोत्पादनाङ्गीकारः ॥ ३ ॥

भीष्म उवाच ।
पुनर्भरतवंशस्य हेतुं सन्तानवृद्धये ।
वक्ष्यामि नियतं मातस्तन्मे निगदतः शृणु ॥ १
ब्राह्मणो गुणवान्कश्चिद्धनेनोपनिमन्त्र्यताम् ।
विचित्रवीर्यक्षेत्रेषु यः समुत्पादयेत्प्रजाः ॥ २
'वैशंपायन उवाच ।
भीष्मस्य तु वचः श्रुत्वा धर्महेत्वर्थसंहितम् ।
माता सत्यवती भीष्मं पुनरेवाभ्यभाषत ॥ ३
औचथ्यमधिकृत्येदमङ्गं च यदुदाहृतम् ।
पौराणी श्रुतिरित्येषा प्राप्तकालमिदं कुरु ॥ ४
त्वं हि पुत्र कुलस्यास्य ज्येष्ठः श्रेष्ठश्च भारत ।
यथा च ते पितुर्वाक्यं मम कार्यं तथाऽनघ ॥५
मम पुत्रस्तव भ्राता यवीयान्सुप्रियश्च ते ।
बाल एव गतः स्वर्गं भारतो भरतर्षभ ॥ ६

---

भीत्याशयः ॥ ३४ ॥ मज्जनगतः स्नानार्थं गतः । स्रोतसा प्रवाहेण । अभ्याशं समीपम् ॥ ४२ ॥ धात्रेयिकां दासीम् ॥ ४६ ॥ अङ्गेषु स्पृष्ट्वा स्वरूपज्ञानार्थमिति भावः । संधिरार्षः ॥ ५२ ॥

यथेप्सितं ब्राह्मणेभ्यो वंशवृद्धिमित्यर्थः ॥ ५६ ॥ त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

इमे महिष्यौ तस्येह काशिराजसुते उभे ।
रूपयौवनसंपन्ने पुत्रकामे च भारत ॥ ७
धर्म्यमेतत्परं ज्ञात्वा सन्तानाय कुलस्य च ।
आभ्यां मम नियोगात्तु धर्मं चरितुमर्हसि ॥ ८
भीष्म उवाच ।
असंशयं परो धर्मस्त्वया मातः प्रकीर्तितः ।
त्वमप्येतां प्रतिज्ञां तु वेत्थ या मयि वर्तते ॥ ९
अमरत्वस्य वा हेतोस्त्रैलोक्यसदनस्य वा ।
उत्सृजेयमहं प्राणान्न तु सत्यं कथंचन ॥ १०
सत्यवत्युवाच ।
जानामि त्वयि धर्मज्ञ सत्यं सत्यपराक्रम ।
इच्छंस्त्वमिह लोकांस्त्रीन्सृजेरन्यानरिन्दम॥ ११
यथा तु नः कुलं चैव धर्मश्च न पराभवेत् ।
सुहृदश्च प्रहृष्टाः स्युस्तथा त्वं कर्तुमर्हसि ।
भीष्म उवाच । १२
त्वमेव कुलवृद्धासि गौरवं तु परं त्वयि ।
सोपायं कुलसन्ताने वक्तुमर्हसि नः परम् ॥ १३
स्त्रियो हि परमं गुह्यं धारयन्ति सदा कुले ।
पुरुषांश्चैव मायाभिर्बह्वीभिरुपगृह्णते ॥ १४
सा सत्यवति संपश्य धर्मं सत्यपरायणे ।
यथा न जह्यां सत्यं च न सीदेच्च कुलं हि नः॥'१५
वैशंपायन उवाच ।
ततः सत्यवती भीष्मं वाचा संसज्जमानया ।
विहसन्तीव सव्रीडमिदं वचनमब्रवीत् ॥ १६
सत्यमेतन्महाबाहो यथा वदसि भारत ।
विश्वासात्ते प्रवक्ष्यामि सन्तानाय कुलस्य नः॥१७
न ते शक्यमनाख्यातुमापद्धर्मं तथाविधम् ।
त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं परा गतिः ॥१८
'यत्त्वं वक्ष्यसि तत्कार्यमस्माभिरिति मे मतिः ।'
तस्मान्निशम्य सत्यं मे कुरुष्व यदनन्तरम् ।
'शृणु भीष्म वचो मह्यं धर्मार्थसहितं हितम्॥१९
न च विस्रम्भकथितं भवान्सूचितुमर्हति ।
यस्तु राजा वसुर्नाम श्रुतस्ते भरतर्षभ ॥ २०
तस्य शुक्रादहं मत्स्या धृता कुक्षौ पुरा किल ।
मातरं मे जलाद्धृत्वा दाशः परमधर्मवित् ॥ २१
मां तु स्वगृहमानीय दुहितृत्वेऽभ्यकल्पयत् ।
धर्मयुक्तः स धर्मेण पिता चासीत्ततो मम ॥'२२
धर्मयुक्तस्य धर्मार्थं पितुरासीत्तरी मम ।
सा कदाचिदहं तत्र गता प्रथमयौवनम् ॥ २३
अथ धर्मविदां श्रेष्ठः परमर्षिः पराशरः ।
आजगाम तरीं धीमांस्तरिष्यन्यमुनां नदीम् ॥२४
स तार्यमाणो यमुनां मामुपेत्याब्रवीत्तदा ।
सान्त्वपूर्वं मुनिश्रेष्ठः कामार्तो मधुरं वचः ।
उक्त्वा जन्म कुलं मह्यं नासि दाशसुतेति च ॥२५
तमहं शापभीता च पितुर्भीता च भारत ।
वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे ॥ २६
'प्रेक्ष्य तांस्तु महाभागान्पारावारे ऋषीन्स्थितान्
यमुनातीरविन्यस्तान्प्रदीप्तानिव पावकान् ॥ २७
पुरस्तादरुणश्चैव तरुणः संप्रकाशते ।
येनैषा ताम्रवस्त्रेव द्यौः कृता प्रविजृम्भिता ॥२८
उक्तमात्रो मया तत्र नीहारमसृजत्प्रभुः ।
पराशरः सत्यधृतिर्द्वीपे च यमुनाम्भसि ॥' २९
अभिभूय स मां बालां तेजसा वशमानयत् ।
तमसा लोकमावृत्य नौगतामेव भारत ॥ ३०
मत्स्यगन्धो महानासीत्पुरा मम जुगुप्सितः ।
तमपास्य शुभं गन्धमिमं प्रादात्स मे मुनिः॥३१
ततो मामाह स मुनिर्गर्भमुत्सृज्य मामकम् ।
द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि ॥३२
कन्यात्वं च ददौ प्रीतः पुनर्विद्वांस्तपोधनः ।
तस्य वीर्यमहं दृष्ट्वा तथा युक्तं महात्मनः ॥ ३३
विस्मिता व्यथिता चैव प्रादामात्मानमेव च ।
ततस्तदा महात्मा स कन्यायां मयि भारत ।
प्रहृष्टोऽजनयत्पुत्रं द्वीप एव पराशरः ॥' ३४
पाराशर्यो महायोगी स बभूव महानृषिः ।
कन्यापुत्रो मम पुरा द्वैपायन इति श्रुतः ॥ ३५
यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः ।

संसज्जमानया स्खलनवत्या ॥ १६ ॥ विश्वासादन्तरङ्गत्वबुद्धेः । संतानाय विस्ताराय ॥ १७ ॥ आपद्धर्ममवेक्ष्येति शेषः

लोके व्यासत्वमापेदे कार्ष्ण्यात्कृष्णत्वमेव च ॥
सत्यवादी शमपरस्तपस्वी दग्धकिल्बिषः ।
सद्योत्पन्नः स तु महान्सह पित्रा ततो गतः॥३७
स नियुक्तो मया व्यक्तं त्वया चाप्रतिमद्युतिः ।
भ्रातुः क्षेत्रेषु कल्याणमपत्यं जनयिष्यति ॥ ३८
स हि मामुक्तवांस्तत्र स्मरेः कृच्छ्रेषु मामिति ।
तं स्मरिष्ये महाबाहो यदि भीष्म त्वमिच्छसि॥३९
तव ह्यनुमते भीष्म नियतं स महातपाः ।
विचित्रवीर्यक्षेत्रेषु पुत्रानुत्पादयिष्यति ॥ ४०
वैशंपायन उवाच ।
महर्षेः कीर्तने तस्य भीष्मः प्राञ्जलिरब्रवीत् ।
'देशकालौ च जानासि क्रियतामर्थसिद्धये ।'
धर्ममर्थं च कामं च त्रीनेतान्योऽनुपश्यति ॥ ४१
अर्थमर्थानुबन्धं च धर्मं धर्मानुबन्धनम् ।
कामं कामानुबन्धं च विपरीतान्पृथक्पृथक्॥४२
यो विचिन्त्य धिया धीरो व्यवस्यति स बुद्धिमान्।
तदिदं धर्मयुक्तं च हितं चैव कुलस्य नः ॥ ४३
उक्तं भवत्या यच्छ्रेयस्तन्मह्यं रोचते भृशम् ।
वैशंपायन उवाच ।
ततस्तस्मिन्प्रतिज्ञाते भीष्मेण कुरुनन्दन ॥ ४४
कृष्णद्वैपायनं काली चिन्तयामास वै मुनिम् ।
स वेदान्विब्रुवन्धीमान्मातुर्विज्ञाय चिन्तितम् ४५
प्रादुर्बभूवाविदितः क्षणेन कुरुनन्दन ।
तस्मै पूजां ततः कृत्वा सुताय विधिपूर्वकम्॥४६
परिष्वज्य च बाहुभ्यां प्रस्नवैरभ्यषिञ्चत ।
मुमोच बाष्पं दाशेयी पुत्रं दृष्ट्वा चिरस्य तु॥४७
तामद्भिः परिषिच्यार्तां महर्षिरभिवाद्य च ।
मातरं पूर्वजः पुत्रो व्यासो वचनमब्रवीत् ॥ ४८
भवत्या यदभिप्रेतं तदहं कर्तुमागतः ।
शाधि मां धर्मतत्त्वज्ञे करवाणि प्रियं तव ॥ ४९
तस्मै पूजां ततोऽकार्षीत्पुरोधाः परमर्षये ।
स च तां प्रतिजग्राह विधिवन्मन्त्रपूर्वकम् ॥ ५०
पूजितो मन्त्रपूर्वं तु विधिवत्प्रीतिमाप सः ।
तमासनगतं माता पृष्ट्वा कुशलमव्ययम् ॥ ५१
सत्यवत्यथ वीक्ष्यैनमुवाचेदमनन्तरम् ।
मातापित्रोः प्रजायन्ते पुत्राः साधारणाः कवे॥५२
तेषां पिता यथा स्वामी तथा माता न संशयः ।
विधानविहितः स त्वं यथा मे प्रथमः सुतः॥५३
विचित्रवीर्यो ब्रह्मर्षे तथा मेऽवरजः सुतः ।
यथैव पितृतो भीष्मस्तथा त्वमपि मातृतः ॥५४
भ्राता विचित्रवीर्यस्य यथा वा पुत्र मन्यसे ।
अयं शान्तनवः सत्यं पालयन्सत्यविक्रमः॥ ५५
बुद्धिं न कुरुतेऽपत्ये तथा राज्याऽनुशासने ।
स त्वं व्यपेक्षया भ्रातुः सन्तानाय कुलस्य च ५६
भीष्मस्य चास्य वचनान्नियोगाच्च ममानघ ।
अनुक्रोशाच्च भूतानां सर्वेषां रक्षणाय च ॥ ५७
आनृशंस्याच्च यद्ब्रूयां तच्छ्रुत्वा कर्तुमर्हसि ।
यवीयसस्तव भ्रातुर्भार्ये सुरसुतोपमे ॥ ५८
रूपयौवनसंपन्ने पुत्रकामे च धर्मतः ।
तयोरुत्पादयापत्यं समर्थो ह्यसि पुत्रक ॥ ५९
अनुरूपं कुलस्यास्य संतत्याः प्रसवस्य च ।
व्यास उवाच ।
वेत्थ धर्मं सत्यवति परं चापरमेव च ॥ ६०
तथा तव महाप्राज्ञे धर्मे प्रणिहिता मतिः ।
तस्मादहं त्वन्नियोगाद्धर्ममुद्दिश्य कारणम् ॥ ६१
ईप्सितं ते करिष्यामि दृष्टं ह्येतत्सनातनम् ।
भ्रातुः पुत्रान्प्रदास्यामि मित्रावरुणयोः समान् ६२
व्रतं चरेतां ते देव्यौ निर्दिष्टमिह यन्मया ।
संवत्सरं यथान्यायं ततः शुद्धे भविष्यतः ॥ ६३
नहि मामव्रतोपेता उपेयात्काचिदङ्गना ।
सत्यवत्युवाच ।
सद्यो यथा प्रपद्येते देव्यौ गर्भं तथा कुरु ॥ ६४
अराजकेषु राष्ट्रेषु प्रजाऽनाथा विनश्यति ।
नश्यन्ति च क्रियाः सर्वा नास्ति वृष्टिर्न देवता६५

॥ १८ ॥ व्यक्तं निःसंशयम् ॥ ३८ ॥ अनुबध्यतेऽनेनेत्यनुबन्धः फलं ॥ ४२ ॥ काली सत्यवती ॥ ४५ ॥ प्रस्नवैः स्नेहस्रुतस्तनैः ॥४७॥ विधानविहितः पूर्वपुण्यप्रसूतः ॥ ५३ ॥ व्यपेक्षया स्नेहानुबन्धेन ॥ ५६ ॥ आनृशंस्यादनैष्ठुर्यात् ॥५८॥ देव्यौ

कथं चाराजकं राष्ट्रं शक्यं धारयितुं प्रभो ।
तस्माद्गर्भं समाधत्स्व भीष्मः संवर्धयिष्यति ॥६६
व्यास उवाच ।
यदि पुत्रः प्रदातव्यो मया भ्रातुरकालिकः ।
विरूपतां मे सहतां तयोरेतत्परं व्रतम् ॥ ६७
यदि मे सहते गन्धं रूपं वेषं तथा वपुः ।
अद्यैव गर्भं कौसल्या विशिष्टं प्रतिपद्यताम् ॥६८
'तस्यापि च शतं पुत्रा भवितारो न संशयः ।
गोप्तारः कुरुवंशस्य भवत्याः शोकनाशनाः ॥'६९
वैशंपायन उवाच ।
एवमुक्त्वा महातेजा व्यासः सत्यवतीं तदा ।
शयने सा च कौसल्या शुचिवस्त्रा ह्यलङ्कृता ॥७०
समागमनमाकाङ्क्षेदिति सोऽन्तर्हितो मुनिः ।
ततोऽभिगम्य सा देवी स्नुषां रहसि संगताम् ७१
धर्म्यमर्थसमायुक्तमुवाच वचनं हितम् ।
कौसल्ये धर्मतन्त्रं त्वां यद्ब्रवीमि निबोध तत् ॥७२
भरतानां समुच्छेदो व्यक्तं मद्भाग्यसंक्षयात् ।
व्यथितां मां च संप्रेक्ष्य पितृवंशं च पीडितम् ७३
भीष्मो बुद्धिमदान्मह्यं कुलस्यास्य विवृद्धये ।
सा च बुद्धिस्त्वय्यधीना पुत्रि प्रापय मां तथा ७४
नष्टं च भारतं वंशं पुनरेव समुद्धर ।
पुत्रं जनय सुश्रोणि देवराजसमप्रभम् ॥ ७५
स हि राज्यधुरं गुर्वीमुद्वक्ष्यति कुलस्य नः ।
'एवमुक्त्वा तु सा देवी स्नुषां सत्यवती तदा ॥'७६
सा धर्मतोऽनुनीयैनां कथंचिद्धर्मचारिणीम् ।
भोजयामास विप्रांश्च देवर्षीनतिथींस्तथा ॥ ७७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

## पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

अम्बिकायां व्यासाद्धृतराष्ट्रस्योत्पत्तिः ॥ १ ॥ अम्बालिकायां पाण्डोरुत्पत्तिः ॥ २ ॥ अम्बिकादास्यां विदुरस्योत्पत्तिः ॥ ३ ॥

वैशंपायन उवाच ।
ततः सत्यवती काले वधूं स्नातामृतौ तदा ।
संवेशयन्ती शयने शनैर्वचनमब्रवीत् ॥ १
कौसल्ये देवरस्तेऽस्ति सोऽद्य त्वाऽनुप्रवेक्ष्यति ।
अप्रमत्ता प्रतीक्षैनं निशीथे ह्यागमिष्यति ॥ २
श्वश्र्वास्तद्वचनं श्रुत्वा शयाना शयने शुभे ।
साऽचिन्तयत्तदा भीष्ममन्यांश्च कुरुपुङ्गवान् ॥ ३
'ततः सुप्तजनप्रायेऽर्धरात्रे भगवानृषिः ।
दीप्यमानेषु दीपेषु शरणं प्रविवेश ह ॥ ४
ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः ।
जगाम तस्याः शयनं विपुले तपसि स्थितः ॥ ५
तं समीक्ष्य तु कौसल्या दुष्प्रेक्षमतथोचिता ।
विरूप इति वित्रस्ता संकुच्यासीन्निमीलिता ॥ ६
विरूपो हि जटी चापि दुर्वर्णः परुषः कृशः ।
सुगन्धेतरगन्धश्च सर्वथा दुष्प्रधर्षणः ॥' ७
तस्य कृष्णस्य कपिलां जटां दीप्ते च लोचने ।
बभ्रूणि चैव श्मश्रूणि दृष्ट्वा देवी न्यमीलयत् ॥८
संबभूव तया सार्धं मातुः प्रियचिकीर्षया ।
भयात्काशिसुता तं तु नाशक्नोदभिवीक्षितुम् ॥९
ततो निष्क्रान्तमागम्य माता पुत्रमुवाच ह ।
अप्यस्यां गुणवान्पुत्र राजपुत्रो भविष्यति ॥१०
निशम्य तद्वचो मातुर्व्यासः सत्यवतीसुतः ।
'प्रोवाचातीन्द्रियज्ञानो विधिना संप्रचोदितः'११
नागायुतसमप्राणो विद्वान्राजर्षिसत्तमः ।
महाभागो महावीर्यो महाबुद्धिर्भविष्यति ॥ १२
तस्य चापि शतं पुत्रा भविष्यन्ति महात्मनः ।
किंतु मातुः स वैगुण्यादन्ध एव भविष्यति ॥ १३
तस्य तद्वचनं श्रुत्वा माता पुत्रमथाब्रवीत् ।
नान्धः कुरूणां नृपतिरनुरूपस्तपोधन ॥ १४
ज्ञातिवंशस्य गोप्तारं पितॄणां वंशवर्धनम् ।

राजभार्ये ॥ ६३ ॥ यथा भीष्मेणोक्तं तथा मां प्रापय इष्टार्थेन योजय ॥ ७४ ॥ उद्वक्ष्यति धुरं धुर उद्वहनं करिष्यति ॥ ७६ ॥

चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

'अपरस्यामपि पुनर्मम शोकविनाशनम् ॥ १५
तस्मादवरजं पुत्रं जनयान्यं नराधिपम् ।
भ्रातुर्भार्याऽवरा चेयं रूपयौवनशालिनी ॥ १६
अस्यामुत्पादयाऽपत्यं मन्नियोगाद्गुणाधिकम् ।'
द्वितीयं कुरुवंशस्य राजानं दातुमर्हसि ॥ १७
स तथेति प्रतिज्ञाय निश्चक्राम महायशाः ।
साऽपि कालेन कौसल्या सुषुवेऽन्धं तमात्मजम्॥
पुनरेव तु सा देवी परिभाष्य स्नुषां ततः ।
ऋषिमावाहयत्सत्या यथापूर्वमरिन्दम ॥ १९
'अम्बालिकां समाहूय तस्यां सत्यवती सुतम् ।
भूयो नियोजयामास सन्तानाय कुलस्य वै ॥२०
विषण्णाम्बालिका साध्वी निषण्णा शयनोत्तमे।
कोन्वेष्यतीति ध्यायन्ती नियता संप्रतीक्षते'॥२१
ततस्तेनैव विधिना महर्षिस्तामपद्यत ।
अम्बालिकामथाऽभ्यागादृषिं दृष्ट्वा च साऽपि तम्
विवर्णा पाण्डुसंकाशा समपद्यत भारत ।
तां भीतां पाण्डुसंकाशां विषण्णां प्रेक्ष्य भारत॥२३
व्यासः सत्यवतीपुत्र इदं वचनमब्रवीत् ।
यस्मात्पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामिह ॥२४
तस्मादेष सुतस्ते वै पाण्डुरेव भविष्यति ।
नाम चास्यैतदेवेह भविष्यति शुभानने ॥ २५
इत्युक्त्वा स निराक्रामद्भगवानृषिसत्तमः ।
ततो निष्क्रान्तमालोक्य सत्या पुत्रमथाऽब्रवीत् ॥
'कुमारो ब्रूहि मे पुत्र अप्यत्र भविता शुभः ।'
शशंस स पुनर्मात्रे तस्य बालस्य पाण्डुताम् ॥२७
'भविष्यति सुविक्रान्तः कुमारो दिक्षु विश्रुतः ।
पाण्डुत्वं वर्णतस्तस्य मातृदोषाद्भविष्यति ॥ २८
तस्य पुत्रा महेष्वासा भविष्यन्तीह पञ्च वै ।
इत्युक्त्वा मातरं तत्र सोऽभिवाद्य जगाम ह॥'२९
तं माता पुनरेवान्यमेकं पुत्रमयाचत ।
तथेति च महर्षिस्तां मातरं प्रत्यभाषत ॥ ३०
ततः कुमारं सा देवी प्राप्तकालमजीजनत् ।
पाण्डुलक्षणसंपन्नं दीप्यमानमिव श्रिया ॥ ३१
यस्य पुत्रा महेष्वासा जज्ञिरे पञ्च पाण्डवाः ।
'तयोर्जन्मक्रियाः सर्वा यथावदनुपूर्वशः ॥ ३२
कारयामास वै भीष्मो ब्राह्मणैर्वेदपारगैः ।
अन्धं दृष्ट्वाऽम्बिकापुत्रं जातं सत्यवती सुतम् ६३
कौसल्यार्थे समाहूय पुत्रमन्यमयाचत ।
अन्धोयमन्यमिच्छामि कौसल्यातनयं शुभम्॥३४
एवमुक्तो महर्षिस्तां मातरं प्रत्यभाषत ।
नियता यदि कौसल्या भविष्यति पुनः शुभा ३५
भविष्यति कुमारोऽस्या धर्मशास्त्रार्थतत्त्ववित् ।
तां समाधाय वै भूयः स्नुषां सत्यवती पुनः॥'३६
ऋतुकाले ततो ज्येष्ठां वधूं तस्मै न्ययोजयत् ।
सा तु रूपं च गन्धं च महर्षेः प्रविचिन्त्य तं३७
नाकरोद्वचनं देव्या भयात्सुरसुतोपमा ।
ततः स्वैर्भूषणैर्दासीं भूषयित्वाऽप्सरोपमाम् ॥ ३८
प्रेषयामास कृष्णाय ततः काशिपतेः सुता ।
सा तं त्वृषिमनुप्राप्तं प्रत्युद्गम्याभिवाद्य च ॥३९
संविवेशाभ्यनुज्ञाता सत्कृत्योपचचार ह ।
'वाग्भावोपप्रदानेन गात्रसंस्पर्शनेन च ॥' ४०
कामोपभोगेन रहस्तस्यां तुष्टिमगादृषिः ।
तया सहोषितो राजन्महर्षिः संशितव्रतः ॥ ४१
उत्तिष्ठन्नब्रवीदेनामभुजिष्या भविष्यसि ।
अयं च ते शुभे गर्भः श्रेयानुदरमागतः ।
धर्मात्मा भविता लोके सर्वबुद्धिमतां वरः॥ ४२
स जज्ञे विदुरो नाम कृष्णद्वैपायनात्मजः ।
धृतराष्ट्रस्य वै भ्राता पाण्डोश्चैव महात्मनः ॥४३
धर्मो विदुररूपेण शापात्तस्य महात्मनः ।
माण्डव्यस्यार्थतत्त्वज्ञः कामक्रोधविवर्जितः ॥४४
कृष्णद्वैपायनोऽप्येतत्सत्यवत्यै न्यवेदयत् ।
प्रलम्भमात्मनश्चैव शूद्रायाः पुत्रजन्म च ॥ ४५
स धर्मस्यानृणो भूत्वा पुनर्मात्रा समेत्य च ।
तस्यै गर्भं समावेद्य तत्रैवान्तरधीयत ॥ ४६

अभुजिष्या अदासी ॥ ४२ ॥ प्रलम्भमात्मनस्थोने दासीनियोजनम् ॥ ४५ ॥ पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

एते विचित्रवीर्यस्य क्षेत्रे द्वैपायनादपि । जज्ञिरे देवगर्भाभाः कुरुवंशविवर्धनाः ॥ ४७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि पञ्चादशाधिकशततमोऽध्यायः ॥ ११५ ॥

## षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

माण्डव्योपाख्यानम् ॥ १ ॥ राजाज्ञया माण्डव्यस्य शूलारोपणम् ॥ २ ॥

जनमेजय उवाच ।
किं कृतं कर्म धर्मेण येन शापमुपेयिवान् ।
कस्य शापाच्च ब्रह्मर्षेः शूद्रयोनावजायत ॥ १
वैशंपायन उवाच ।
बभूव ब्राह्मणः कश्चिन्माण्डव्य इति विश्रुतः ।
धृतिमान्सर्वधर्मज्ञः सत्ये तपसि च स्थितः ॥ २
'स तीर्थयात्रां विचरन्नाजगाम यदृच्छया ।
संनिकृष्टानि तीर्थानि ग्रामाणां यानि कानि च ।
तत्राश्रमपदं कृत्वा वसति स महामुनिः ॥' ३
स आश्रमपदद्वारि वृक्षमूले महातपाः ।
ऊर्ध्वबाहुर्महायोगी तस्थौ मौनव्रतान्वितः ॥ ४
तस्य कालेन महता तस्मिंस्तपसि वर्ततः ।
तमाश्रममनुप्राप्ता दस्यवो लोप्त्रहारिणः ॥ ५
अनुसार्यमाणा बहुभी रक्षिभिर्भरतर्षभ ।
'तामेव वसतिं जग्मुस्ते ग्रामाल्लोप्त्रहारिणः ॥ ६
यस्मिन्नावसथे शेते स मुनिः संशितव्रतः ।'
ते तस्यावसथे लोप्त्रं दस्यवः कुरुसत्तम ॥ ७
निधाय च भयाल्लीनास्तत्रैवानागते बले ।
तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलम् ॥ ८
आजगाम ततोऽपश्यंस्तमृषिं तस्करानुगाः ।
तमपृच्छंस्ततो राजंस्तथावृत्तं तपोधनम् ॥ ९
कतरेण पथा याता दस्यवो द्विजसत्तम ।
तेन गच्छामहे ब्रह्मन्यथा शीघ्रतरं वयम् ॥ १०
तथा तु रक्षिणां तेषां ब्रुवतां स तपोधनः ।
न किंचिद्वचनं राजन्नब्रवीत्साध्वसाधु वा ॥ ११
ततस्ते राजपुरुषा विचिन्वानास्तमाश्रमम् ।
ददृशुस्तत्र लीनांस्तांश्चोरांस्तद्द्रव्यमेव च ॥ १२
ततः शङ्का समभवद्रक्षिणां तं मुनिं प्रति ।
संयम्यैनं ततो राज्ञे दस्यूंश्चैव न्यवेदयन् ॥ १३
तं राजा सह तैश्चोरैरन्वशाद्वध्यतामिति ।
स रक्षिभिस्तैरज्ञातः शूले प्रोतो महातपाः ॥ १४
ततस्ते शूलमारोप्य तं मुनिं रक्षिणस्तदा ।
प्रतिजग्मुर्महीपालं धनान्यादाय तान्यथ ॥ १५
शूलस्थः स तु धर्मात्मा कालेन महता ततः ।
निराहारोऽपि विप्रर्षिर्मरणं नाभ्यपद्यत ॥ १६
धारयामास च प्राणानृषींश्च समुपानयत् ।
शूलाग्रे तप्यमानेन तपस्तेन महात्मना ॥ १७
सन्तापं परमं जग्मुर्मुनयस्तपसाऽन्विताः ।
ते रात्रौ शकुना भूत्वा सन्निपत्त्य तु भारत ।
दर्शयन्तो यथाशक्ति तमपृच्छन्द्विजोत्तमम् ॥ १८
श्रोतुमिच्छामहे ब्रह्मन्किं पापं कृतवानसि ।
येनेह समनुप्राप्तं शूले दुःखभयं महत् ॥ १९

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

## सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

माण्डव्यं ऋषिं ज्ञात्वा भीतेन राज्ञा तस्य शूलाद्विमोक्षणम् ॥ १ ॥ अणीमाण्डव्यस्य यमेन विवादः ॥ २ ॥ माण्डव्येन यमस्य शापः ॥ ३ ॥

वैशंपायन उवाच ।
ततः स मुनिशार्दूलस्तानुवाच तपोधनान् ।
दोषतः कं गमिष्यामि न हि मेऽन्योपराध्यति ।
तं दृष्ट्वा रक्षिणस्तत्र तथा बहुतिथेऽहनि ।

कस्य कीदृशस्य ॥ १ ॥ लोप्त्रं लुप्यत इति व्युत्पत्त्या चोरापहृतं धनम् ॥ ६ ॥ बले राजसैन्ये ॥ ८ ॥ संयम्य चोरवन्निगृह्य ॥ १३ ॥ प्रोतोऽर्पितः ॥ १४ ॥ समुपानयात् स्वसमीपमिति शेषः ॥ १७ ॥ दर्शयन्तः स्वानि रूपाणि प्रकाशयन्तः ॥ १८ ॥ षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

दोषतः कं गमिष्यामि न कमपि दोषिणं कथयामि । स्वकृतमेव

न्यवेदयंस्तथा राज्ञे यथावृत्तं नराधिप ॥ २
राजा च तमृषिं श्रुत्वा निष्क्रम्य सह मन्त्रिभिः ।
प्रसादयामास तदा शूलस्थमृषिसत्तमम् ॥ ३
राजोवाच ।
यन्मयाऽपकृतं मोहादज्ञानादृषिसत्तम ।
प्रसादये त्वां तत्राहं न मे त्वं क्रोद्धुमर्हसि ॥ ४
वैशंपायन उवाच ।
एवमुक्तस्ततो राज्ञा प्रसादमकरोन्मुनिः ।
कृतप्रसादं राजा तं ततः समवतारयत् ॥ ५
अवतार्य च शूलाग्रात्तच्छूलं निश्चकर्ष ह ।
अशक्नुवंश्च निष्क्रष्टुं शूलं मूले स चिच्छिदे ॥ ६
स तथान्तर्गतेनैव शूलेन व्यचरन्मुनिः ।
'कण्ठपार्श्वान्तरस्थेन शङ्कुना मुनिराचरत् ।
पुष्पभाजनधारी स्यादिति चिन्तापरोऽभवत् ॥'७
स चातितपसा लोकान्विजिग्ये दुर्लभान्परैः ॥८
अणीमाण्डव्य इति च ततो लोकेषु गीयते ।
स गत्वा सदनं विप्रो धर्मस्य परमार्थवित् ॥ ९
आसनस्थं ततो धर्मं दृष्ट्वोपालभत प्रभुम् ।
किं नु तद्दुष्कृतं कर्म मया कृतमजानता ॥ १०
यस्येयं फलनिर्वृत्तिरीदृश्यासादिता मया ।
शीघ्रमाचक्ष्व मे तत्त्वं पश्य मे तपसो बलम् ११
धर्म उवाच ।
पतङ्गिकानां पुच्छेषु त्वयेषीका प्रवेशिता ।
कर्मणस्तस्य ते प्राप्तं फलमेतत्तपोधन ॥ १२
स्वल्पमेव यथा दत्तं दानं बहुगुणं भवेत् ।
अधर्म एवं विप्रर्षे बहुदुःखफलप्रदः ॥ १३
अणीमाण्डव्य उवाच ।
कस्मिन्काले मया तत्तु कृतं ब्रूहि यथातथम् ।
तेनोक्तं धर्मराजेन बालभावे त्वया कृतम् ॥ १४
अणीमाण्डव्य उवाच ।
बालो हि द्वादशाद्वर्षाज्जन्मतो यत्करिष्यति ।
न भविष्यत्यधर्मोऽत्र न प्रज्ञास्यति वै दिशः ॥१५
अल्पेऽपराधेऽपि महान्मम दण्डस्त्वया धृतः ।
गरीयान्ब्राह्मणवधः सर्वभूतवधादपि ॥ १६
शूद्रयोनावतो धर्म मानुषः संभविष्यसि ।
मर्यादां स्थापयाम्यद्य लोके कर्मफलोदयाम् १७
आ चतुर्दशकाद्वर्षान्न भविष्यति पातकम् ।
परतः कुर्वतामेव दोष एव भविष्यति ॥ १८
वैशंपायन उवाच ।
एतेन त्वपराधेन शापात्तस्य महात्मनः ।
धर्मो विदुररूपेण शूद्रयोनावजायत ॥ १९
धर्मे चार्थे च कुशलो लोभक्रोधविवर्जितः ।
दीर्घदर्शी शमपरः कुरूणां च हिते रतः ॥ २०

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

कंचित्कालं भीष्मेण राज्यपरिपालनानन्तरं पाण्डो राज्येऽभिषेकः ॥ १ ॥

वैशंपायन उवाच ।
'धृतराष्ट्रे च पाण्डौ च विदुरे च महात्मनि ।'
एषु त्रिषु कुमारेषु जातेषु कुरुजाङ्गलम् ।
कुरवोऽथ कुरुक्षेत्रं त्रयमेतदवर्धत ॥ १
ऊर्ध्वसस्याऽभवद्भूमिः सस्यानि फलवन्ति च ।
यथर्तुवर्षी पर्जन्यो बहुपुष्पफला द्रुमाः ॥ २
वाहनानि प्रहृष्टानि मुदिता मृगपक्षिणः ।
गन्धवन्ति च माल्यानि रसवन्ति फलानि च ॥३
वणिग्भिश्चान्वकीर्यन्त नगराण्यथ शिल्पिभिः ।
शूराश्च कृतविद्याश्च सन्तश्च सुखिनोऽभवन् ॥ ४

भुङ्क्ते इत्यर्थः ॥ १ ॥ अणी शूलाग्रं तद्युक्तो माण्डव्यः ॥ ९ ॥ उपालभत गर्हितवान् ॥ १० ॥ दिशो देशनाः धर्मशास्त्राणि यतो न प्रज्ञास्यति बालत्वात् ॥ १५ ॥ ब्राह्मणवधो ब्राह्मणपी- डनम् ॥ १६ ॥ दीर्घदर्शी सर्वकालपरामर्शी । शमपरो निर्वैरः ॥ २० ॥ सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
ऊर्ध्वसस्या प्रचुरसस्या ॥ २ ॥

नाभवन्दस्यवः केचिन्नाधर्मरुचयो जनाः ।
प्रदेशेष्वपि राष्ट्राणां कृतं युगमवर्तत ॥ ५
धर्मक्रिया यज्ञशीलाः सत्यव्रतपरायणाः ।
अन्योन्यप्रीतिसंयुक्ता व्यवर्धन्त प्रजास्तदा ॥ ६
मानक्रोधविहीनाश्च नरा लोभविवर्जिताः ।
अन्योन्यमभ्यनन्दन्त धर्मोत्तरमवर्तत ॥ ७
तन्महोदधिवत्पूर्णं नगरं वै व्यरोचत ।
द्वारतोरणनिर्यूहैर्युक्तमभ्रचयोपमैः ॥ ८
प्रासादशतसंबाधं महेन्द्रपुरसन्निभम् ।
नदीषु वनखण्डेषु वापीपल्वलसानुषु ।
काननेषु च रम्येषु विजहुर्मुदिता जनाः ॥ ९
उत्तरैः कुरुभिः सार्धं दक्षिणाः कुरवस्तथा ।
विस्पर्धमाना व्यचरंस्तथा देवर्षिचारणैः ॥ १०
नाभवत्कृपणः कश्चिन्नाभवन्विधवाः स्त्रियः ।
तस्मिञ्जनपदे रम्ये कुरुभिर्बहुलीकृते ॥ ११
कूपारामसभावाप्यो ब्राह्मणावसथास्तथा ।
बभूवुः सर्वर्द्धियुतास्तस्मिन्राष्ट्रे सदोत्सवाः ॥ १२
भीष्मेण धर्मतो राजन्सर्वतः परिरक्षिते ।
बभूव रमणीयश्च चैत्ययूपशताङ्कितः ॥ १३
स देशः परराष्ट्राणि विमृज्याभिप्रवर्धितः ।
भीष्मेण विहितं राष्ट्रे धर्मचक्रमवर्तत ॥ १४
क्रियमाणेषु कृत्येषु कुमाराणां महात्मनाम् ।
पौरजानपदाः सर्वे बभूवुः परमोत्सुकाः ॥ १५
गृहेषु कुरुमुख्यानां पौराणां च नराधिप ।
दीयतां भुज्यतां चेति वाचोऽश्रूयन्त सर्वशः १६
धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः ।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥ १७
संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः ।
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ॥ १८
धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायां नीतिशास्त्रेषु पारगाः ॥ १९
इतिहासपुराणेषु नानाशिक्षासु बोधिताः ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः ॥ २०
'वैदिकाध्ययने युक्तो नीतिशास्त्रेषु पारगः ।
भीष्मेण राजा कौरव्यो धृतराष्ट्रोऽभिषेचितः॥२१
धनुर्वेदेऽश्वपृष्ठे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायामस्त्रेषु विविधेषु च ॥ २२
अर्थधर्मप्रधानासु विद्यासु विविधासु च ।
गतः पारं यदा पाण्डुस्तदा सेनापतिः कृतः' २३
पाण्डुर्धनुषि विक्रान्तो नरेष्वभ्यधिकोऽभवत् ।
अन्येभ्यो बलवानासीद्धृतराष्ट्रो महीपतिः ॥ २४
अमात्यो मनुजेन्द्रस्य बाल एव यशस्विनः ।
भीष्मेण सर्वधर्माणां प्रणेता विदुरः कृतः ॥ २५
'सर्वशास्त्रार्थतत्त्वज्ञो बुद्धिमेधापटुर्युवा ।
भावेनागमयुक्तेन सर्वं वेदयते जगत् ॥' २६
त्रिषु लोकेषु न त्वासीत्कश्चिद्विदुरसंमितः ।
धर्मनित्यस्तथा राजन्धर्मे च परमं गतः ॥ २७
प्रनष्टं शान्तनोर्वंशं समीक्ष्य पुनरुद्धृतम् ।
ततो निर्वचनं लोके सर्वराष्ट्रेष्ववर्तत ॥ २८
वीरसूनां काशिसुते देशानां कुरुजाङ्गलम् ।
सर्वधर्मविदां भीष्मः पुराणां गजसाह्वयम् ॥ २९
धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत ।
पारसवत्वाद्विदुरो राजा पाण्डुर्बभूव ह ॥ ३०
'अथ शुश्राव विप्रेभ्यः कुन्तिभोजमहीपतेः ।
रूपयौवनसंपन्नां सुतां सागरगासुतः ॥ ३१
सुबलस्य च कल्याणीं गान्धाराधिपतेः सुताम् ।
सुतां च मद्रराजस्य रूपेणाप्रतिमां भुवि ॥' ३२
कदाचिदथ गाङ्गेयः सर्वनीतिमतां वरः ।
विदुरं धर्मतत्त्वज्ञं वाक्यमाह यथोचितम् ॥ ३३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

---

श्रमः शास्त्राभ्यासः । व्यायामो बाहुयुद्धाद्यभ्यासः ॥ १८ ॥ निर्वचनं प्रशंसा ॥ २८ ॥ पारसवत्वाच्छूद्रायां ब्राह्मणाज्जातत्वात् ॥ ३० ॥ अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

## एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

धृतराष्ट्रविवाहार्थं भीष्मविदुरसंवादः ॥ १ ॥ धृतराष्ट्रस्य गान्धार्या विवाहः ॥ २ ॥

भीष्म उवाच ।
गुणैः समुदितं सम्यगिदं नः प्रथितं कुलम् ।
अत्यन्यान्पृथिवीपालान्पृथिव्यामधिराज्यभाक् १
रक्षितं राजभिः पूर्वं धर्मविद्भिर्महात्मभिः ।
नोत्सादमगमच्चेदं कदाचिदिह नः कुलम् ॥ २
मया च सत्यवत्या च कृष्णेन च महात्मना ।
समवस्थापितं भूयो युष्मासु कुलतन्तुषु ॥ ३
तच्चैतद्वर्धते भूयः कुलं सागरवद्यथा ।
तथा मया विधातव्यं त्वया चैव न संशयः ॥४
श्रूयते यादवी कन्या स्वनुरूपा कुलस्य नः ।
सुबलस्यात्मजा चैव तथा मद्रेश्वरस्य च ॥ ५
कुलीना रूपवत्यश्च ताः कन्याः पुत्र सर्वशः ।
उचिताश्चैव संबन्धे तेऽस्माकं क्षत्रियर्षभाः ॥ ६
मन्ये वरयितव्यास्ता इत्यहं धीमतां वर ।
सन्तानार्थं कुलस्यास्य यद्वा विदुर मन्यसे ॥ ७
विदुर उवाच ।
भवान्पिता भवान्माता भवान्नः परमो गुरुः ।
तस्मात्स्वयं कुलस्यास्य विचार्य कुरु यद्धितम् ॥८
वैशंपायन उवाच ।
अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजाम् ।
आराध्य वरदं देवं भगनेत्रहरं हरम् ॥ ९
गान्धारी किल पुत्राणां शतं लेभे वरं शुभा ।
इति शुश्राव तत्त्वेन भीष्मः कुरुपितामहः ॥१०
ततो गान्धारराजस्य प्रेषयामास भारत ।
अचक्षुरिति तत्रासीत्सुबलस्य विचारणा ॥ ११
कुलं ख्यातिं च वृत्तं च बुद्ध्या तु प्रसमीक्ष्य सः ।
ददौ तां धृतराष्ट्राय गान्धारीं धर्मचारिणीम् ॥१२
गान्धारी त्वथ शुश्राव धृतराष्ट्रमचक्षुषम् ।
आत्मानं दित्सितं चास्मै पित्रा मात्रा च भारत ॥
ततः सा पटमादाय कृत्वा बहुगुणं तदा ।
बबन्ध नेत्रे स्वे राजन्पतिव्रतपरायणा ॥ १४
नाभ्यसूयां पतिमहमित्येवं कृतनिश्चया ।
ततो गान्धारराजस्य पुत्रः शकुनिरभ्ययात् ॥१५
स्वसारं परया लक्ष्म्या युक्तामादाय कौरवान् ।
तां तदा धृतराष्ट्राय ददौ परमसत्कृताम् ।
भीष्मस्यानुमते चैव विवाहं समकारयत् ॥ १६
दत्त्वा स भगिनीं वीरो यथार्हं च परिच्छदम् ।
पुनरायात्स्वनगरं भीष्मेण प्रतिपूजितः ॥ १७
गान्धार्यपि वरारोहा शीलाचारविचेष्टितैः ।
तुष्टिं कुरूणां सर्वेषां जनयामास भारत ॥ १८
'गान्धारी सा पतिं दृष्ट्वा प्रज्ञाचक्षुषमीश्वरम् ।
अतिचाराद्भृशं भीता भर्तुः सा समचिन्तयत् १९
सा दृष्टिविनिवृत्त्या हि भर्तुश्च समतां ययौ ।
नहि सूक्ष्मेप्यतीचारे भर्तुः सा वर्तते तदा ॥२०
वृत्तेनाराध्य तान्सर्वान्गुरून्पतिपरायणा ।
वाचापि पुरुषानन्यान्सुव्रता नान्वकीर्तयत् ॥२१
तस्याः सहोदरीः कन्याः पुनरेव ददौ दश ।
गान्धारराजः सुबलो भीष्मेण च वृतस्तदा ॥२२
सत्यव्रतां सत्यसेनां सुदेष्णां चापि संहिताम् ।
तेजश्श्रवां सुश्रवां च तथैव निकृतिं शुभाम् ॥२३
शंभ्वठां च दशार्णां च गान्धारीर्दश विश्रुताः ।
एकाह्ना प्रतिजग्राह धृतराष्ट्रो जनेश्वरः ॥ २४
ततः शान्तनवो भीष्मो धानुष्कस्तास्ततस्ततः ।
अददाद्धृतराष्ट्रस्य राजपुत्रीः परश्शतम् ॥' २५

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

---

यादवी यादवस्य कुन्तिभोजस्य अपत्यम् ॥ ५ ॥ प्रेषयामास दूतमिति शेषः ॥ ११ ॥ दित्सितं दातुमिष्टम् ॥ १३ ॥ बहुगुणं बहुधागुणितम् ॥ १४ ॥ नाभ्यसूयां पत्युरभिभवं न कुर्याम् ॥ १५ ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

## विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

पृथाया बाल्यचरित्रकथनम् ॥ १ ॥ तस्या दुर्वाससो मन्त्रप्राप्तिः ॥ २ ॥ मन्त्रप्रभावजिज्ञासयाऽऽहूतात्सूर्यात्कुन्त्यां कर्णस्योत्पत्तिः ॥ ३ ॥ लोकभयात्कुन्त्या यमुनायां विसृष्टस्य राधाभर्त्रा स्वीकारो वसुषेणेति नामकरणं च ॥ ४ ॥ संग्रहेण कर्णचरित्रकथनम् ॥ ५ ॥

---

वैशंपायन उवाच ।

शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत् ।
तस्य कन्या पृथा नाम रूपेणाप्रतिमा भुवि ॥१
पितृष्वस्रीयाय स तामनपत्याय भारत ।
अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यं स सत्यवाक् ॥२
अग्रजामथ तां कन्यां शूरोऽनुग्रहकाङ्क्षिणे ।
प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने ॥३
नियुक्ता सा पितुर्गेहे ब्राह्मणातिथिपूजने ।
उग्रं पर्यचरत्तत्र ब्राह्मणं संशितव्रतम् ॥ ४
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् ॥ ५
'दध्याज्यकादिभिर्नित्यं व्यञ्जनैः प्रत्यहं शुभा ।
सहस्रसङ्ख्यैर्योगीन्द्रमुपाचरदनुत्तमा ॥ ६
दुर्वासा वत्सरस्यान्ते ददौ मन्त्रमनुत्तमम् ।'
यशस्विन्यै पृथायै तदापद्धर्मान्ववेक्षया ।
अभिचाराभिसंयुक्तमब्रवीच्चैव तां मुनिः ॥ ७
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तस्य तस्य प्रभावेण तव पुत्रो भविष्यति ॥ ८
तथोक्ता सा तु विप्रेण कुन्ती कौतूहलान्विता ।
कन्या सती देवमर्कमाजुहाव यशस्विनी ॥ ९
ततो घनान्तरं कृत्वा स्वमार्गं तपनस्तदा ।
उपतस्थे स तां कन्यां पृथां पृथुललोचनाम् ॥१०
सा ददर्श तमायान्तं भास्करं लोकभावनम् ।
विस्मिता चानवद्याङ्गी दृष्ट्वा तन्महदद्भुतम् ॥११
'साब्रवीद्भगवन्कस्त्वमाविर्भूतो ममाग्रतः ।

आदित्य उवाच ।

आहूतोपस्थितं भद्रे ऋषिमन्त्रेण चोदितम् ।
विद्धि मां पुत्रलाभाय देवमर्कं शुचिस्मिते ॥ १२
पुत्रस्ते निर्मितः सुभ्रु शृणु मादृक्छुभानने ।
आदित्ये कुण्डले बिभ्रत्कवचं चैव मामकम् ॥१३
शस्त्रास्त्राणामभेद्यश्च भविष्यति शुचिस्मिते ।
नास्य किंचिददेयं च ब्राह्मणेभ्यो भविष्यति ॥१४
चोद्यमानो मया चापि न क्षमं चिन्तयिष्यति ।
दास्यत्येव हि विप्रेभ्यो मानी चैव भविष्यति १५

वैशंपायन उवाच ।

एवमुक्ता ततः कुन्ती गोपतिं प्रत्युवाच ह ।
कन्या पितृवशा चाहं पुरुषार्थो न चैव मे ॥'१६
कश्चिन्मे ब्राह्मणः प्रादाद्वरं विद्यां च शत्रुहन् ।
तद्विजिज्ञासयाऽऽह्वानं कृतवत्यस्मि ते विभो ॥१७
एतस्मिन्नपराधे त्वां शिरसाऽहं प्रसादये ।
योषितो हि सदा रक्ष्यास्त्वपराधेऽपि नित्यशः १८

सूर्य उवाच ।

वेदाहं सर्वमेवैतद्यद्दुर्वासा वरं ददौ ।
संत्यज्य भयमेवेह क्रियतां सङ्गमो मम ॥ १९
अमोघं दर्शनं मह्यमाहूतश्चास्मि ते शुभे ।
वृथाऽऽह्वानेऽपि ते भीरु दोषः स्यान्नात्र संशयः ॥
'यद्येवं मन्यसे भीरु किमाह्वयसि भास्करम् ।
यदि मामवजानासि ऋषिः स न भविष्यति ॥२१
मन्त्रदानेन यस्मात्त्वमवलेपेन दर्पिता ।
कुलं च तेऽद्य धक्ष्यामि क्रोधदीप्तेन चक्षुषा' २२

वैशंपायन उवाच ।

एवमुक्ता बहुविधं सान्त्वपूर्वं विवस्वता ।
सा तु नैच्छद्वरारोहा कन्याहमिति भारत ॥ २३
बन्धुपक्षभयाद्भीता लज्जया च यशस्विनी ।
तामर्कः पुनरेवेदमब्रवीद्भरतर्षभ ॥ २४
मत्प्रसादान्न ते राज्ञि भविता दोष इत्युत ॥२५
'कुन्त्युवाच ।
प्रसीद भगवन्मह्यमवलेपो हि नास्ति मे ।

---

अग्र्यं प्रथमम् । अग्रे जन्मतः पूर्वं प्रतिज्ञाय मया प्रथममपत्यं तुभ्यं देयमिति प्रतिश्रुत्य ॥ २ ॥ अभिचारो वश्याकर्षणाविद्वेष-

त्वयैव परिहार्यं स्यात्कन्याभावस्य दूषणम् ॥२६
आदित्य उवाच ।
व्यपयातु भयं तेऽद्य कुमारं प्रसमीक्षसे ।
मया त्वं चाप्यनुज्ञाता पुनः कन्या भविष्यसि॥
वैशंपायन उवाच ।
एवमुक्ता ततः कुन्ती संप्रहृष्टतनूरुहा ।
सङ्गताऽभूत्तदा सुभ्रूरादित्येन महात्मना ॥ २८
प्रकाशकर्मा तपनः कन्यागर्भं ददौ पुनः ।'
तत्र वीरः समभवत्सर्वशस्त्रभृतां वरः ॥ २९
आमुक्तकवचः श्रीमान्देवगर्भः श्रियान्वितः ।
सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः ॥ ३०
अजायत सुतः कर्णः सर्वलोकेषु विश्रुतः ।
प्रादाच्च तस्यै कन्यात्वं पुनः स परमद्युतिः ॥३१
दत्त्वा च तपतां श्रेष्ठो दिवमाचक्रमे ततः ।
दृष्ट्वा कुमारं जातं सा वार्ष्णेयी दीनमानसा॥३२
एकाग्रं चिन्तयामास किं कृत्वा सुकृतं भवेत् ।
गूहमानापचारं सा बन्धुपक्षभयात्तदा ॥ ३३
मञ्जूषां रत्नसंपूर्णां कृत्वा बालसमाश्रिताम् ।
उत्ससर्ज कुमारं तं जले कुन्ती महाबलम् ॥ ३४
तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः ।
पुत्रत्वे कल्पयामास सभार्यः सूतनन्दनः ॥ ३५
नामधेयं च चक्राते तस्य बालस्य तावुभौ ।
वसुना सह जातोऽयं वसुषेणो भवत्विति ॥ ३६
स वर्धमानो बलवान्सर्वास्त्रेषूद्यतोऽभवत् ।
आपृष्ठतापादादित्यमुपातिष्ठत वीर्यवान् ॥ ३७
तस्मिन्काले तु जपतस्तस्य वीरस्य धीमतः ।
नादेयं ब्राह्मणेष्वासीत्किंचिद्वसु महीतले ॥ ३८
'ततः काले तु कस्मिंश्चित्स्वप्नान्ते कर्णमब्रवीत् ।
आदित्यो ब्राह्मणो भूत्वा शृणु वीर वचो मम ३९
प्रभातायां रजन्यां त्वामागमिष्यति वासवः ।
न तस्य भिक्षा दातव्या विप्ररूपी भविष्यति ४०
निश्चयोऽस्यापहर्तुं ते कवचं कुण्डले तथा ।
अतस्त्वां बोधयाम्येष स्मर्तासि वचनं मम ॥ ४१
कर्ण उवाच ।
शक्रो मां विप्ररूपेण यदि वै याचते द्विज ।
कथं तस्मै न दास्यामि यथा चास्म्यत्रबोधितः ४२
विप्राः पूज्यास्तु देवानां सततं प्रियमिच्छताम् ।
तं देवदेवं जानन्वै न शक्तोऽस्म्यवमन्त्रणे ॥ ४३
सूर्य उवाच ।
यद्येवं शृणु मे वीर वरं ते सोऽपि दास्यति ।
शक्तिं त्वमपि याचेथाः सर्वशत्रुविबाधिनीम् ४४
वैशंपायन उवाच ।
एवमुक्त्वा द्विजः स्वप्ने तत्रैवान्तरधीयत ।
कर्णः प्रबुद्धस्तं स्वप्नं चिन्तयानोऽभवत्तदा ॥४५
तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थं भूतभावनः ।
कुण्डले प्रार्थयामास कवचं च महाद्युतिः ॥ ४६
उत्कृत्याविमनाः स्वाङ्गात्कवचं रुधिरस्रवम् ।
कर्णौ पार्श्वे च द्वे छित्त्वा प्रायच्छत्स कृताञ्जलिः॥
प्रतिगृह्य तु देवेशस्तुष्टस्तेनास्य कर्मणा ।
अहो साहसमित्याह मनसा वासवो हसन् ॥४८
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
न तं पश्यामि यो ह्येतत्कर्म कर्ता भविष्यति ४९
प्रीतोऽस्मि कर्मणा तेन वरं ब्रूहि यदिच्छसि ।
कर्ण उवाच ।
इच्छामि भगवद्दत्तां शक्तिं शत्रुनिबर्हणीम् ॥५०
वैशंपायन उवाच ।
शक्तिं तस्मै ददौ शक्रो विस्मयाद्वाक्यमब्रवीत् ।
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ॥ ५१
यस्मै क्षेप्स्यसि रुष्टः सन्सोऽनया न भविष्यति ।
हत्वैकं समरे शत्रुं ततो मामागमिष्यति ।
इत्युक्त्वान्तर्दधे शक्रो वरं दत्त्वा तु तस्य वै' ५२
प्राङ्नाम तस्य कथितं वसुषेण इति क्षितौ ।
कर्णो वैकर्तनश्चैव कर्मणा तेन सोऽभवत् ॥ ५३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

फलं तद्युक्तम् ॥ ७ ॥ वसुना कवचकुण्डलादिद्रव्येण बद्ध इति वसुषेणः ॥ ३६ ॥ आपृष्ठतापात् मध्याह्नात्परत इत्यर्थः ॥ ३७ ॥ सहजकवचकर्तनात् कर्णः विशेषतः कर्तनेन वैकर्तनः । स्वार्थे तद्धितः ॥ ५३ ॥ विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

## एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

पाण्डोः कुन्त्या विवाहः ॥ १ ॥

वैशंपायन उवाच ।
सत्वरूपगुणोपेता धर्मारामा महाव्रता ।
दुहिता कुन्तिभोजस्य पृथा पृथुललोचना ॥ १
तां तु तेजस्विनीं कन्यां रूपयौवनशालिनीम् ।
व्यावृण्वन्पार्थिवाः केचिदतीव स्त्रीगुणैर्युताम् ॥२
ततः सा कुन्तिभोजेन राज्ञाहूय नराधिपान् ।
पित्रा स्वयंवरे दत्ता दुहिता राजसत्तम ॥ ३
ततः सा रङ्गमध्यस्थं तेषां राज्ञां मनस्विनी ।
ददर्श राजशार्दूलं पाण्डुं भरतसत्तमम् ॥ ४
सिंहदर्पं महोरस्कं वृषभाक्षं महाबलम् ।
आदित्यमिव सर्वेषां राज्ञां प्रच्छाद्य वै प्रभाः ॥५
तिष्ठन्तं राजसमितौ पुरन्दरमिवापरम् ।
तं दृष्ट्वा साऽनवद्याङ्गी कुन्तिभोजसुता शुभा ॥६
पाण्डुं नरवरं रङ्गे हृदयेनाकुलाऽभवत् ।
ततः कामपरीताङ्गी सकृत्प्रचलमानसा ॥ ७
व्रीडमाना स्रजं कुन्ती राज्ञः स्कन्धे समासजत् ।
तं निशम्य वृतं पाण्डुं कुन्त्या सर्वे नराधिपाः ८
यथागतं समाजग्मुर्गजैरश्वै रथैस्तथा ।
ततस्तस्याः पिता राजन्विवाहमकरोत्प्रभुः ॥ ९
स तया कुन्तिभोजस्य दुहित्रा कुरुनन्दनः ।
युयुजेऽमितसौभाग्यः पौलोम्या मघवानिव ॥१०
कुन्त्याः पाण्डोश्च राजेन्द्र कुन्तिभोजो महीपतिः ।
कृत्वोद्वाहं तदा तं तु नानावसुभिरर्चितम् ।
स्वपुरं प्रेषयामास स राजा कुरुसत्तम ॥ ११
ततो बलेन महता नानाध्वजपताकिना ।
स्तूयमानः स चाशीर्भिर्ब्राह्मणैश्च महर्षिभिः १२
संप्राप्य नगरं राजा पाण्डुः कौरवनन्दनः ।
न्यवेशयत तां भार्यां कुन्तीं स्वभवने प्रभुः ॥ १३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

## द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

पाण्डोर्माद्या विवाहः । दिग्विजयश्च ॥ १ ॥

वैशंपायन उवाच ।
ततः शान्तनवो भीष्मो राज्ञः पाण्डोर्यशस्विनः ।
विवाहस्यापरस्यार्थे चकार मतिमान्मतिम् ॥ १
सोऽमात्यैः स्थविरैः सार्धं ब्राह्मणैश्च महर्षिभिः ।
बलेन चतुरङ्गेण ययौ मद्रपतेः पुरम् ॥ २
तमागतमभिश्रुत्य भीष्मं वाहीकपुङ्गवः ।
प्रत्युद्गम्यार्चयित्वा च पुरं प्रावेशयन्नृपः ॥ ३
दत्त्वा तस्यासनं शुभ्रं पाद्यमर्घ्यं तथैव च ।
मधुपर्कं च मद्रेशः पप्रच्छागमनेऽर्थिताम् ॥ ४
तं भीष्मः प्रत्युवाचेदं मद्रराजं कुरूद्वहः ।
आगतं मां विजानीहि कन्यार्थिनमरिन्दम ॥ ५
श्रूयते भवतः साध्वी स्वसा माद्री यशस्विनी ।
तामहं वरयिष्यामि पाण्डोरर्थे यशस्विनीम् ॥ ६
युक्तरूपो हि संबन्धे त्वं नो राजन्वयं तव ।
एतत्संचिन्त्य मद्रेश गृहाणास्मान्यथाविधि ॥ ७
तमेवंवादिनं भीष्मं प्रत्यभाषत मद्रपः ।
न हि मेऽन्यो वरस्त्वत्तः श्रेयानिति मतिर्मम ॥८
पूर्वैः प्रवर्तितं किंचित्कुलेऽस्मिन्नृपसत्तमैः ।
साधु वा यदि वाऽसाधु तन्नातिक्रान्तुमुत्सहे ॥९
व्यक्तं तद्भवतश्चापि विदितं नात्र संशयः ।
न च युक्तं तथा वक्तुं भवान्देहीति सत्तम ॥ १०
कुलधर्मः स नो वीर प्रमाणं परमं च तत् ।
तेन त्वां न ब्रवीम्येतदसंदिग्धं वचोऽरिहन् ॥ ११
तं भीष्मः प्रत्युवाचेदं मद्रराजं जनाधिपः ।
धर्म एष परो राजन्स्वयमुक्तः स्वयंभुवा ॥ १२

मे वरः मम जामाता ॥ ८ ॥

नात्र कश्चन दोषोऽस्ति पूर्वैर्विधिरयं कृतः ।
विदितेयं च ते शल्य मर्यादा साधुसंमता ॥ १३
इत्युक्त्वा स महातेजाः शातकुम्भं कृताकृतम् ।
रत्नानि च विचित्राणि शल्यायादात्सहस्रशः १४
गजानश्वान्रथांश्चैव वासांस्याभरणानि च ।
मणिमुक्ताप्रवालं च गाङ्गेयो व्यसृजच्छुभम् ॥१५
तत्प्रगृह्य धनं सर्वं शल्यः संप्रीतमानसः ।
ददौ तां समलङ्कृत्य स्वसारं कौरवर्षभे ॥ १६
स तां माद्रीमुपादाय भीष्मः सागरगासुतः ।
आजगाम पुरीं धीमान्प्रविष्टो गजसाह्वयम् ॥१७
तत इष्टेऽहनि प्राप्ते मुहूर्ते साधुसंमते ।
'विवाहं कारयामास भीष्मः पाण्डोर्महात्मनः ।'
जग्राह विधिवत्पाणिं माद्र्याः पाण्डुर्नराधिपः १८
ततो विवाहे निर्वृत्ते स राजा कुरुनन्दनः ।
स्थापयामास तां भार्यां शुभे वेश्मनि भामिनीं १९
स ताभ्यां व्यचरत्सार्धं भार्याभ्यां राजसत्तमः ।
कुन्त्या माद्र्या च राजेन्द्रो यथाकामं यथासुखम्॥
ततः स कौरवो राजा विहृत्य त्रिदशा निशाः ।
जिगीषया महीं पाण्डुर्निरक्रामत्पुरात्प्रभो ॥ २१
स भीष्मप्रमुखान्वृद्धानभिवाद्य प्रणम्य च ।
धृतराष्ट्रं च कौरव्यं तथान्यान्कुरुसत्तमान् ।
आमन्त्र्य प्रययौ राजा तैश्चैवाप्यनुमोदितः ॥ २२
मङ्गलाचारयुक्ताभिराशीर्भिरभिनन्दितः ।
गजवाजिरथौघेन बलेन महताऽगमत् ॥ २३
स राजा देवगर्भाभो विजिगीषुर्वसुन्धराम् ।
हृष्टपुष्टबलैः प्रायात्पाण्डुः शत्रूननेकशः ॥ २४
पूर्वमागस्कृतो गत्वा दशार्णाः समरे जिताः ।
पाण्डुना नरसिंहेन कौरवाणां यशोभृता ॥ २५
ततः सेनामुपादाय पाण्डुर्नानाविधध्वजाम् ।
प्रभूतहस्त्यश्वयुतां पदातिरथसंकुलाम् ॥ २६
आगस्कारी महीपानां बहूनां बलदर्पितः ।
गोप्ता मगधराष्ट्रस्य दीर्घो राजगृहे हतः ॥ २७

शातकुम्भं काञ्चनम् । कृताकृतं घटितमघटितं च ॥ १४ ॥
व्यसृजत् प्रादात् ॥ १५ ॥ त्रिदशाः त्रिंशत् ॥ २१ ॥

ततः कोशं समादाय वाहनानि च भूरिशः ।
पाण्डुना मिथिलां गत्वा विदेहाः समरे जिताः २८
तथा काशिषु सुह्मेषु पुण्ड्रेषु च नरर्षभ ।
स्वबाहुबलवीर्येण कुरूणामकरोद्यशः ॥ २९
तं शरौघमहाज्वालं शस्त्रार्चिषमरिन्दमम् ।
पाण्डुपावकमासाद्य व्यदह्यन्त नराधिपाः ॥ ३०
ते ससेनाः ससेनेन विध्वंसितबला नृपाः ।
पाण्डुना वशगाः कृत्वा कुरुकर्मसु योजिताः॥३१
तेन ते निर्जिताः सर्वे पृथिव्यां सर्वपार्थिवाः ।
तमेकं मेनिरे शूरं देवेष्विव पुरन्दरम् ॥ ३२
तं कृताञ्जलयः सर्वे प्रणता वसुधाधिपाः ।
उपाजग्मुर्धनं गृह्य रत्नानि विविधानि च ॥ ३३
मणिमुक्ताप्रवालं च सुवर्णं रजतं बहु ।
गोरत्नान्यश्वरत्नानि रथरत्नानि कुञ्जरान् ॥ ३४
खरोष्ट्रमहिषांश्चैव यच्च किंचिदजाविकम् ।
कम्बलाजिनरत्नानि राङ्कवास्तरणानि च ।
तत्सर्वं प्रतिजग्राह राजा नागपुराधिपः ॥ ३५
तदादाय ययौ पाण्डुः पुनर्मुदितवाहनः ।
हर्षयिष्यन्स्वराष्ट्राणि पुरं च गजसाह्वयम् ॥ ३६
शान्तनो राजसिंहस्य भरतस्य च धीमतः ।
प्रनष्टः कीर्तिजः शब्दः पाण्डुना पुनराहृतः ॥३७
ये पुरा कुरुराष्ट्राणि जह्रुः कुरुधनानि च ।
ते नागपुरसिंहेन पाण्डुना करदीकृताः ॥ ३८
इत्यभाषन्त राजानो राजामात्याश्च सङ्गताः ।
प्रतीतमनसो हृष्टाः पौरजानपदैः सह ॥ ३९
प्रत्युद्ययुश्च तं प्राप्तं सर्वे भीष्मपुरोगमाः ।
ते नदूरमिवाध्वानं गत्वा नागपुरालयाः ॥ ४०
आवृतं ददृशुर्हृष्टा लोकं बहुविधैर्धनैः ।
नानायानसमानीतै रत्नैरुच्चावचैस्तदा ॥ ४१
हस्त्यश्वरथरत्नैश्च गोभिरुष्ट्रैस्तथाऽऽविभिः ।
नान्तं ददृशुरासाद्य भीष्मेण सह कौरवाः ॥४२
सोऽभिवाद्य पितुः पादौ कौसल्यानन्दवर्धनः ।
यथाऽर्हं मानयामास पौरजानपदानपि ॥ ४३

नदूरमिव अदूरमिव । जयोत्साहेन मार्गश्रमाभावात् ॥ ४० ॥
द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

प्रमृह्य परराष्ट्राणि कृतार्थं पुनरागतम् ।
पुत्रमाश्लिष्य भीष्मस्तु हर्षादश्रूण्यवर्तयत् ॥ ४४
स तूर्यशतशङ्खानां भेरीणां च महास्वनैः ।
हर्षयन्सर्वशः पौरान्विवेश गजसाह्वयम् ॥ ४५

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

## त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

सभार्यस्य पाण्डोर्मृगयार्थं वनगमनम् ॥ १ ॥ तत्र मृगरूपस्य मृग्या मैथुनं चरतः किन्दमस्य मुनेर्हननम् ॥ २ ॥ मैथुनकाले त्वं मरिष्यसीति किन्दमेन पाण्डुं प्रति शापः ॥ ३ ॥

वैशंपायन उवाच ।
धृतराष्ट्राभ्यनुज्ञातः स्वबाहुविजितं धनम् ।
भीष्माय सत्यवत्यै च मात्रे चोपजहार सः ॥ १
विदुराय च वै पाण्डुः प्रेषयामास तद्धनम् ।
सुहृदश्चापि धर्मात्मा धनेन समतर्पयत् ॥ २
ततः सत्यवतीं भीष्मं कौसल्यां च यशस्विनीम् ।
शुभैः पाण्डुर्जितैरर्थैस्तोषयामास भारत ॥ ३
ननन्द माता कौसल्या तमप्रतिमतेजसम् ।
जयन्तमिव पौलोमी परिष्वज्य नरर्षभम् ॥ ४
तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः ।
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥ ५
संप्रयुक्तस्तु कुन्त्या च माद्र्या च भरतर्षभ ।
जिततन्द्रिस्तदा पाण्डुर्बभूव वनगोचरः ॥ ६
हित्वा प्रासादनिलयं शुभानि शयनानि च ।
अरण्यनित्यः सततं बभूव मृगयापरः ॥ ७
स चरन्दक्षिणं पार्श्वं रम्यं हिमवतो गिरेः ।
उवास गिरिपृष्ठेषु महाशालवनेषु च ॥ ८
रराज कुन्त्या माद्र्या च पाण्डुः सह वने चरन् ।
करेण्वोरिव मध्यस्थः श्रीमान्पौरन्दरो गजः ॥ ९
भारतं सह भार्याभ्यां खड्गबाणधनुर्धरम् ।
विचित्रकवचं वीरं परमास्त्रविदं नृपम् ।
देवोऽयमित्यमन्यन्त चरन्तं वनवासिनः ॥ १०
तस्य कामांश्च भोगांश्च नरा नित्यमतन्द्रिताः ।
उपजह्रुर्वनान्तेषु धृतराष्ट्रेण चोदिताः ॥ ११
तदासाद्य महारण्यं मृगव्यालनिषेवितम् ।
तत्र मैथुनकालस्थं ददर्श मृगयूथपम् ॥ १२
ततस्तं च मृगीं चैव रुक्मपुङ्खैः सुपत्रिभिः ।
निर्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः ॥ १३
स च राजन्महातेजा ऋषिपुत्रस्तपोधनः ।
भार्यया सह तेजस्वी मृगरूपेण सङ्गतः ॥ १४
स संयुक्तस्तया मृग्या मानुषीं वाचमीरयन् ।
क्षणेन पतितो भूमौ विललापातुरो मृगः ॥ १५
मृग उवाच ।
काममन्युवशं प्राप्ता बुद्ध्यन्तरगता अपि ।
वर्जयन्ति नृशंसानि पापेष्वपि रता नराः ॥ १६
न विधिं ग्रसते प्रज्ञा प्रज्ञां तु ग्रसते विधिः ।
विधिपर्यागतानर्थान्प्रज्ञावान्प्रतिपद्यते ॥ १७
शश्वद्धर्मात्मनां मुख्ये कुले जातस्य भारत ।
कामलोभाभिभूतस्य कथं ते चलिता मतिः ॥ १८
पाण्डुरुवाच ।
शत्रूणां या वधे वृत्तिः सा मृगाणां वधे स्मृता ।
राज्ञां मृग न मां मोहात्त्वं गर्हयितुमर्हसि ॥ १९
अच्छद्मनाऽमायया च मृगाणां वध इष्यते ।
स एव धर्मो राज्ञां तु तद्धि त्वं किं नु गर्हसे ॥ २०
अगस्त्यः सत्रमासीनश्चकार मृगयामृषिः ।
आरण्यान्सर्वदैवत्यान्मृगान्प्रोक्ष्य महावने ॥ २१
प्रमाणदृष्टधर्मेण कथमस्मान्विगर्हसे ।
अगस्त्यस्याभिचारेण युष्माकं विहितो वधः ॥ २२
न रिपून्वै समुद्दिश्य विमुञ्चन्ति नराः शरान् ।
रन्ध्र एषां विशेषेण वधकालः प्रशस्यते ॥ २३

रन्ध्रे विशस्त्रत्वव्यसनाक्रान्तत्वादिसमये शरान्न विमुञ्चन्तीति संबन्धः । किंलेषां शत्रूणां वधकालः सर्वलोकप्रसिद्धः सङ्ग्राम आभिमुख्यादिमान्स एव प्रशस्यतेऽन्यो निन्द्यत इत्यर्थः ॥ २३ ॥

प्रमत्तमप्रमत्तं वा विवृतं घ्नन्ति चौजसा ।
उपायैर्विविधैस्तीक्ष्णैः कस्मान्मृग विगर्हसे ॥ २४
मृग उवाच ।
नाहं घ्नन्तं मृगान्राजन्विगर्हे चात्मकारणात् ।
मैथुनं तु प्रतीक्ष्यं मे त्वयेहाद्यानृशंस्यतः ॥ २५
सर्वभूतहिते काले सर्वभूतेप्सिते तथा ।
को हि विद्वान्मृगं हन्याच्चरन्तं मैथुनं वने ॥२६
अस्यां मृग्यां च राजेन्द्र हर्षान्मैथुनमाचरम् ।
पुरुषार्थफलं कर्तुं तत्त्वया विफलीकृतम् ॥ २७
पौरवाणां महाराज तेषामक्लिष्टकर्मणाम् ।
वंशे जातस्य कौरव्य नानुरूपमिदं तव ॥ २८
नृशंसं कर्म सुमहत्सर्वलोकविगर्हितम् ।
अस्वर्ग्यमयशस्यं चाप्यधर्मिष्ठं च भारत ॥ २९
स्त्रीभोगानां विशेषज्ञः शास्त्रधर्मार्थतत्त्ववित् ।
नार्हस्त्वं सुरसङ्काश कर्तुमस्वर्ग्यमीदृशम् ॥ ३०
त्वया नृशंसकर्तारः पापाचाराश्च मानवाः ।
निग्राह्याः पार्थिवश्रेष्ठ त्रिवर्गपरिवर्जिताः ॥ ३१
किं कृतं ते नरश्रेष्ठ मामिहानागसं घ्नतः ।
मुनिं मूलफलाहारं मृगवेषधरं नृप ॥ ३२
वसमानमरण्येषु नित्यं शमपरायणम् ।
त्वयाऽहं हिंसितो यस्मात्तस्मात्त्वामप्यनागसः३३
द्वयोर्नृशंसकर्तारमवशं काममोहितम् ।
जीवितान्तकरो भावो मैथुने समुपैष्यति ॥ ३४
अहं हि किंदमो नाम तपसा भावितो मुनिः ।
व्यपत्रपन्मनुष्याणां मृग्यां मैथुनमाचरम् ॥ ३५
मृगो भूत्वा मृगैः सार्धं चरामि गहने वने ।
न तु ते ब्रह्महत्येयं भविष्यत्यविजानतः ॥ ३६
मृगरूपधरं हत्वा मामेवं काममोहितम् ।
अस्य तु त्वं फलं मूढ प्राप्स्यसीदृशमेव हि ॥३७
प्रियया सह संवासं प्राप्य कामविमोहितः ।
त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि ॥ ३८
अन्तकाले हि संवासं यया गन्तासि कान्तया ।
प्रेतराजपुरं प्राप्तं सर्वभूतदुरत्ययम् ।
भक्त्या मतिमतां श्रेष्ठ सैव त्वाऽनुगमिष्यति॥३९
वर्तमानः सुखे दुःखं यथाऽहं प्रापितस्त्वया ।
तथा त्वां च सुखं प्राप्तं दुःखमभ्यागमिष्यति ४०
वैशंपायन उवाच ।
एवमुक्त्वा सुदुःखार्तो जीवितात्स व्यमुच्यत ।
मृगः पाण्डुश्च दुःखार्तः क्षणेन समपद्यत ॥ ४१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

## चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

किन्दमशापात्खिन्नस्य पाण्डोः पत्नीभ्यां वने वासः ॥ १ ॥ पाण्डोः शतशृङ्गे तपश्चरणम् ॥ २ ॥

वैशंपायन उवाच ।
तं व्यतीतमुपक्रम्य राजा स्वमिव बान्धवम् ।
सभार्यः शोकदुःखार्तः पर्यदेवयदातुरः ॥ १
पाण्डुरुवाच ।
सतामपि कुले जाताः कर्मणा बत दुर्गतिम् ।
प्राप्नुवन्त्यकृतात्मानः कामजालविमोहिताः ॥ २
शश्वद्धर्मात्मना जातो बाल एव पिता मम ।
जीवितान्तमनुप्राप्तः कामात्मैवेति नः श्रुतम् ॥३
तस्य कामात्मनः क्षेत्रे राज्ञः संयतवागृषिः ।
कृष्णद्वैपायनः साक्षाद्भगवान्मामजीजनत् ॥ ४
तस्याद्य व्यसने बुद्धिः संजातेयं ममाधमा ।
त्यक्तस्य देवैरनयान्मृगयां परिधावतः ॥ ५
मोक्षमेव व्यवस्यामि बन्धो हि व्यसनं महत् ।
सुवृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् ॥ ६

---

प्रमत्तमसावधानम् ॥ २४ ॥ ते त्वया ॥ ३२ ॥ द्वयोः स्त्रीपुंसयोर्नृशंसं निन्द्यं मैथुनासक्तयोर्वधस्तस्य कर्तारम् ॥ ३४ ॥ प्राप्तं त्वा त्वाम् ॥ ३९ ॥ त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

व्यतीतं मारितम् ॥ १ ॥ देवैस्त्यक्तस्य अपुत्रतया स्वर्गमनानर्हत्वात् ॥ ५ ॥ मोक्षं मोक्षमार्गं व्यवस्यामि निश्चिनोमि श्रेयस्करत्वेन । तत्र हि पुत्राद्यनपेक्षा दृष्टा । इष्टमेवैतज्जातमित्याह

अतीव तपसात्मानं योजयिष्याम्यसंशयम् ।
तस्मादेकाहमेकाहमेकैकस्मिन्वनस्पतौ ॥ ७
चरन्भैक्षं मुनिर्मुण्डश्चरिष्याम्याश्रमानिमान् ।
पांसुना समवच्छन्नः शून्यागारकृतालयः ॥ ८
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ।
न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ॥ ९
निराशीर्निर्नमस्कारो निर्द्वन्द्वो निष्परिग्रहः ।
न चाप्यवहसन्कंचिन्न कुर्वन्भ्रुकुटीं क्वचित् ॥ १०
प्रसन्नवदनो नित्यं सर्वभूतहिते रतः ।
जङ्गमाजङ्गमं सर्वमविहिंसंश्चतुर्विधम् ॥ ११
स्वासु प्रजास्विव सदा समः प्राणभृतः प्रति ।
एककालं चरन्भैक्षं कुलानि दश पञ्च च ॥ १२
असंभवे वा भैक्षस्य चरन्ननशनान्यपि ।
अल्पमल्पं च भुञ्जानः पूर्वालाभे न जातुचित् १३
अन्यान्यपि चरँल्लोभादलाभे सप्त पूरयन् ।
अलाभे यदि वा लाभे समदर्शी महातपाः ॥ १४
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः १५
न जिजीविषुवत्किंचिन्न मुमूर्षुवदाचरन् ।
जीवितं मरणं चैव नाभिनन्दन्न च द्विषन् ॥ १६
याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः ।
ताः सर्वाः समतिक्रम्य निमेषादिष्व्यवस्थितः १७
तासु चाप्यनवस्थासु त्यक्तसर्वेन्द्रियक्रियः ।
संपरित्यक्तधर्मार्थः सुनिर्णिक्तात्मकल्मषः ॥ १८
निर्मुक्तः सर्वपापेभ्यो व्यतीतः सर्ववागुराः ।
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः ॥ १९
एतया सततं वृत्त्या चरन्नेवंप्रकारया ।
देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः ॥ २०
नाहं सुकृपणे मार्गे स्ववीर्यक्षयशोचिते ।
स्वधर्मात्सततापेते चरेयं वीर्यवर्जितः ॥ २१
सत्कृतोऽसत्कृतो वाऽपि योऽन्यां कृपणचक्षुषा ।
उपैति वृत्तिं कामात्मा स शुनां वर्तते पथि २२

वैशंपायन उवाच ।

एवमुक्त्वा सुदुःखार्तो निःश्वासपरमो नृपः ।
अवेक्षमाणः कुन्तीं च मान्द्रीं च समभाषत ॥ २३
कौसल्या विदुरः क्षत्ता राजा च सह बन्धुभिः ।
आर्या सत्यवती भीष्मस्ते च राजपुरोहिताः ॥ २४
ब्राह्मणाश्च महात्मानः सोमपाः संशितव्रताः ।
पौरवृद्धाश्च ये तत्र निवसन्त्यस्मदाश्रयाः ।
प्रसाद्य सर्वे वक्तव्याः पाण्डुः प्रव्राजितो वने २५
निशम्य वचनं भर्तुस्त्यागधर्मकृतात्मनः ।
तत्समं वचनं कुन्ती माद्री च समभाषताम् ॥ २६
अन्येऽपि ह्याश्रमाः सन्ति ये शक्या भरतर्षभ ।
'आवाभ्यां सह वस्तुं वै धर्ममाश्रित्य चिन्त्यताम् ।'
आवाभ्यां धर्मपत्नीभ्यां सह तप्तुं तपो महत् २७
शरीरस्यापि मोक्षाय धर्मं प्राप्य महाफलम् ।
त्वमेव भविता भर्ता स्वर्गस्यापि न संशयः ॥ २८
प्रणिधायेन्द्रियग्रामं भर्तृलोकपरायणे ।
त्यक्त्वा कामसुखे ह्यावां तप्स्यावो विपुलं तपः २९
यदि चावां महाप्राज्ञ त्यक्ष्यसि त्वं विशांपते ।
अद्यैवावां प्रहास्यावो जीवितं नात्र संशयः ॥ ३०

पाण्डुरुवाच ।

यदि व्यवसितं ह्येतद्युवयोर्धर्मसंहितम् ।
स्ववृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् ॥ ३१
त्यक्त्वा ग्राम्यसुखाहारं तप्यमानो महत्तपः ।
वल्कली फलमूलाशी चरिष्यामि महावने ॥ ३२
अग्नौ जुह्वन्नुभौ कालावुभौ कालावुपस्पृशन् ।
कृशः परिमिताहारश्चीरचर्मजटाधरः ॥ ३३
शीतवातातपसहः क्षुत्पिपासानवेक्षकः ।
तपसा दुश्चरेणेदं शरीरमुपशोषयन् ॥ ३४

---

बन्धो हीति । बन्धः पुत्रैषणादिः । सुवृत्तिं ब्रह्मचर्याख्यां वृत्तिम् । पितुर्व्यासस्य ॥ ६ ॥ निराशीर्निर्नमस्कारः । आशिषं नमस्कारं वा नेच्छामीत्यर्थः । निर्द्वन्द्वः सुखदुःखादिहीनः । निष्परिग्रहः कन्थापादुकादिहीनः ॥ १० ॥ चतुर्विधं जरायुजादिकम् ॥ ११ ॥ कुलानि गृहाणि ॥ १२ ॥ वास्या वास्येन काष्ठतक्षणेन ॥ १५ ॥ अभ्युदयक्रियाः इष्टसाधनक्रियाः । निमेषादिष्व्यवस्थितः जीवनसाधनकर्मसु व्यवस्थितः ॥ १७ ॥ अनवस्थासु प्रवाहरूपासु तासु जीवनसाधनक्रियासु ॥ १८ ॥ संस्थापयिष्यामि नाशयिष्यामि । निर्भयं मार्गं संसारभयरहितम् ॥ २० ॥ प्रव्राजितः संन्यासं प्राप्तः ॥ २५ ॥ त्यागधर्मः संन्यासः ॥ २६ ॥

एकान्तशीली विमृशन्पक्वापक्वेन वर्तयन् ।
पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ॥ ३५
वानप्रस्थजनस्यापि दर्शनं कुलवासिनः ।
नाप्रियाण्याचरिष्यामि किं पुनर्ग्रामवासिनाम्३६
एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिम् ।
काङ्क्षमाणोऽहमास्थास्ये देहस्यास्याऽऽसमापनात्॥
वैशंपायन उवाच ।
इत्येवमुक्त्वा भार्ये ते राजा कौरवनन्दनः ।
ततश्चूडामणिं निष्कमङ्गदे कुण्डलानि च ॥ ३८
वासांसि च महार्हाणि स्त्रीणामाभरणानि च ।
'वाहनानि च मुख्यानि शस्त्राणि कवचानि च॥
हेमभाण्डानि दिव्यानि पर्यङ्कास्तरणानि च ।
मणिमुक्ताप्रवालानि रत्नानि विविधानि च॥'४०
प्रदाय सर्वं विप्रेभ्यः पाण्डुर्भृत्यानभाषत ।
गत्वा नागपुरं वाच्यं पाण्डुः प्रव्राजितो वने ।
अर्थं कामं सुखं चैव रतिं च परमात्मिकाम् ४१
प्रतस्थे सर्वमुत्सृज्य सभार्यः कुरुनन्दनः ।
ततस्तस्यानुयातारस्ते चैव परिचारकाः ॥ ४२
श्रुत्वा भरतसिंहस्य विविधाः करुणा गिरः ।
भीममार्तस्वरं कृत्वा हाहेति परिचुक्रुशुः ॥ ४३
उष्णमश्रु विमुञ्चन्तस्तं विहाय महीपतिम् ।
ययुर्नागपुरं तूर्णं सर्वमादाय तद्धनम् ॥ ४४
ते गत्वा नगरं राज्ञो यथावृत्तं महात्मनः ।
कथयांचक्रिरे राज्ञस्तद्धनं विविधं ददुः ॥ ४५
श्रुत्वा तेभ्यस्ततः सर्वं यथावृत्तं महावने ।
धृतराष्ट्रो नरश्रेष्ठः पाण्डुमेवान्वशोचत ॥ ४६
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ।
भ्रातृशोकसमाविष्टस्तमेवार्थं विचिन्तयन् ॥ ४७
राजपुत्रस्तु कौरव्य पाण्डुर्मूलफलाशनः ।
जगाम सह पत्नीभ्यां ततो नागशतं गिरिम् ४८
स चैत्ररथमासाद्य कालकूटमतीत्य च ।
हिमवन्तमतिक्रम्य प्रययौ गन्धमादनम् ॥ ४९
रक्ष्यमाणो महाभूतैः सिद्धैश्च परमर्षिभिः ।
उवास स महाराज समेषु विषमेषु च ॥ ५०
इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च ।
शतशृङ्गे महाराज तापसः समतप्यत ॥ ५१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

## पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

ब्रह्मलोकं जिगमिषोः पाण्डोः तव पुत्रा भविष्यन्तीत्युक्त्वा ऋषिभिः प्रतिनिवर्तनम् ॥ १ ॥

वैशंपायन उवाच ।
तत्रापि तपसि श्रेष्ठे वर्तमानः स वीर्यवान् ।
सिद्धचारणसङ्घानां बभूव प्रियदर्शनः ॥ १
शुश्रूषुरनहंवादी संयतात्मा जितेन्द्रियः ।
स्वर्गं गन्तुं पराक्रान्तः स्वेन वीर्येण भारत ॥ २
केषांचिदभवद्भ्राता केषांचिदभवत्सखा ।
ऋषयस्त्वपरे चैनं पुत्रवत्पर्यपालयन् ॥ ३
स तु कालेन महता प्राप्य निष्कल्मषं तपः ।
ब्रह्मर्षिसदृशः पाण्डुर्बभूव भरतर्षभ ॥ ४
अमावास्यां तु सहिता ऋषयः संशितव्रताः ।
ब्रह्माणं द्रष्टुकामास्ते संप्रतस्थुर्महर्षयः ॥ ५
संप्रयातानृषीन्दृष्ट्वा पाण्डुर्वचनमब्रवीत् ।
भवन्तः क्व गमिष्यन्ति ब्रूत मे वदतां वराः ॥ ६
ऋषय ऊचुः ।
समवायो महानद्य ब्रह्मलोके महात्मनाम् ।
देवानां च ऋषीणां च पितॄणां च महात्मनाम् ।
वयं तत्र गमिष्यामो द्रष्टुकामाः स्वयंभुवम् ॥ ७
वैशंपायन उवाच ।
पाण्डुरुत्थाय सहसा गन्तुकामो महर्षिभिः ।
स्वर्गपारं तितीर्षुः स शतशृङ्गादुदङ्मुखः ॥ ८
प्रतस्थे सह पत्नीभ्यामब्रुवंस्तं च तापसाः ।
उपर्युपरि गच्छन्तः शैलराजमुदङ्मुखाः ॥ ९

विमृशन् हिंसादिदोषम् ॥३५॥ निष्कं ग्रैवेयकम् ॥३८॥ चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

अमावास्यां प्राप्य ॥ ५ ॥

दृष्टवन्तो गिरौ रम्ये दुर्गान्देशान्बहून्वयम् ।
विमानशतसंबाधां गीतस्वरनिनादिताम् ॥ १०
आक्रीडभूमिं देवानां गन्धर्वाप्सरसां तथा ।
उद्यानानि कुबेरस्य समानि विषमाणि च ॥ ११
महानदीनितम्बांश्च गहनान्गिरिगह्वरान् ।
सन्ति नित्यहिमा देशा निर्वृक्षमृगपक्षिणः ॥१२
सन्ति क्वचिन्महादर्यो दुर्गाः काश्चिदुरासदाः ।
नातिक्रामेत पक्षी यान्कुत एवेतरे मृगाः ॥ १३
वायुरेको हि यात्यत्र सिद्धाश्च परमर्षयः ।
गच्छन्त्यौ शैलराजेऽस्मिन्राजपुत्र्यौ कथं न्विमे १४
न सीदेतामदुःखार्हे मा गमो भरतर्षभ ।
पाण्डुरुवाच ।
अप्रजस्य महाभागा न द्वारं परिचक्षते ॥ १५
स्वर्गे तेनाभितप्तोऽहमप्रजस्तु ब्रवीमि वः ।
सोऽहमुग्रेण तपसा सभार्यस्त्यक्तजीवितः ॥ १६
अनपत्योऽपि विन्देयं स्वर्गमुग्रेण कर्मणा ।
ऋषय ऊचुः ।
अस्ति वै तव धर्मात्मन्विद्म देवोपमं शुभम् ॥१७
अपत्यमनघं राजन्वयं दिव्येन चक्षुषा ।
दैवोद्दिष्टं नरव्याघ्र कर्मणेहोपपादय ॥ १८
अक्लिष्टं फलमव्यग्रो विन्दते बुद्धिमान्नरः ।
तस्मिन्दृष्टे फले राजन्प्रयत्नं कर्तुमर्हसि ॥ १९
अपत्यं गुणसंपन्नं लब्धा प्रीतिकरं ह्यसि ।
वैशंपायन उवाच ।
तच्छ्रुत्वा तापसवचः पाण्डुश्चिन्तापरोऽभवत्॥२०
आत्मनो मृगशापेन जानन्नुपहतां क्रियाम् ॥२१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

---

## षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

विदुरस्य विवाहः पुत्रोत्पत्तिश्च ॥१॥ व्यासस्य वरेण गान्धार्यां धृतराष्ट्राद्गर्भोत्पत्तिः ॥२॥ पाण्डोः पुत्रोत्पत्तौ चिन्ता ॥ ३ ॥

वैशंपायन उवाच ।
अथ पारसवीं कन्यां देवकस्य महीपतेः ।
रूपयौवनसंपन्नां स शुश्रावापगासुतः ॥ १
ततस्तु वरयित्वा तामानीय भरतर्षभः ।
विवाहं कारयामास विदुरस्य महामतेः ॥ २
तस्यां चोत्पादयामास विदुरः कुरुनन्दन ।
पुत्रान्विनयसंपन्नानात्मनः सदृशान्गुणैः ॥ ३
ततः पुत्रशतं जज्ञे गान्धार्यां जनमेजय ।
धृतराष्ट्रस्य वैश्यायामेकश्चापि शतात्परः ॥ ४
पाण्डोः कुन्त्यां च माद्र्यां च पुत्राः पञ्च महारथाः
देवेभ्यः समपद्यन्त सन्तानाय कुलस्य वै ॥ ५
जनमेजय उवाच ।
कथं पुत्रशतं जज्ञे गान्धार्यां द्विजसत्तम ।
कियता चैव कालेन तेषामायुश्च किं परम् ॥ ६
कथं चैकः स वैश्यायां धृतराष्ट्रसुतोऽभवत् ।
कथं च सदृशीं भार्यां गान्धारीं धर्मचारिणीम् ७
आनुकूल्ये वर्तमानां धृतराष्ट्रोऽत्यवर्तत ।
कथं च शप्तस्य सतः पाण्डोस्तेन महात्मना ॥८
समुत्पन्ना दैवतेभ्यः पुत्राः पञ्च महारथाः ।
एतद्विद्वन्यथान्यायं विस्तरेण तपोधन ॥ ९
कथयस्व न मे तृप्तिः कथ्यमानेषु बन्धुषु ।
वैशंपायन उवाच ।
ऋषिं बुभुक्षितं श्रान्तं द्वैपायनमुपस्थितम् ॥ १०
तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ ।
सा वव्रे सदृशं भर्तुः पुत्राणां शतमात्मनः॥ ११
ततः कालेन सा गर्भमगृह्णाज्ज्ञानचक्षुषः ॥ १२
गान्धार्यामाहिते गर्भे पाण्डुरम्बालिकासुतः ।
अगच्छत्परमं दुःखमपत्यार्थमरिन्दम ॥ १३
गर्भिण्यामथ गान्धार्यां पाण्डुः परमदुःखितः ।
मृगाभिशापादात्मानं शोचन्नुपरतक्रियः ॥ १४

---

विमानशतेन संबाधं संकटं यस्यां सा ॥ १० ॥ अव्यग्रो विन्दते-ऽतो व्यग्रो माभूरित्यर्थः ॥ १९ ॥ लभते इति लब्धा तादृ-शोऽसि लप्स्यसीत्यर्थः ॥ २० ॥ पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

स गत्वा तपसा सिद्धिं विश्वामित्रो यथा भुवि ।
देहन्यासे कृतमना इदं वचनमब्रवीत् ॥ १५
पाण्डुरुवाच ।
चतुर्भिर्ऋणवानित्थं जायते मनुजो भुवि ।
पितृदेवमनुष्याणामृषीणामथ भामिनि ॥ १६
एतेभ्यस्तु यथाकालं यो न मुच्येत धर्मवित् ।
न तस्य लोकाः सन्तीति तथा लोकविदो विदुः
यज्ञेन देवान्प्रीणाति स्वाध्यायात्तपसा ऋषीन् ।
पुत्रैः श्राद्धैरपि पितॄनानृशंस्येन मानवान् ॥ १८
ऋषिदेवमनुष्याणामृणान्मुक्तोऽस्मि धर्मतः ।
पितॄणां तु न मुक्तोऽस्मि तच्च तेभ्यो विशिष्यते ॥
देहनाशे भवेन्नाशः पितॄणामेष निश्चयः ।
इतरेषां त्रयाणां तु नाशे ह्यात्मा विनश्यति ॥२०
इह तस्मात्प्रजालाभे प्रयतन्ते द्विजोत्तमाः ।
यथैवाहं पितुः क्षेत्रे सृष्टस्तेन महात्मना ॥ २१
तथैवास्मिन्मम क्षेत्रे कथं सृज्येत वै प्रजा ।
वैशंपायन उवाच ।
स समानीय कुन्तीं च माद्रीं च भरतर्षभः ॥२२
आचष्ट पुत्रलाभस्य व्युष्टिं सर्वक्रियाधिकाम् ।
उत्तमादवराः पुंसः काङ्क्षन्तो पुत्रमापदि ॥ २३
अपत्यं धर्मफलदं श्रेष्ठादिच्छन्ति साधवः ।
अनुनीय तु ते सम्यग्ब्रहाब्राह्मणसंसदि ।
ब्राह्मणं गुणवन्तं हि चिन्तयामास धर्मवित् ॥२४
सोऽब्रवीद्विजने कुन्तीं धर्मपत्नीं यशस्विनीम् ।
अपत्योत्पादने यत्नमापदि त्वं समर्थय ॥ २५
अपत्यं नाम लोकेषु प्रतिष्ठा धर्मसंहिता ।
इति कुन्ति विदुर्धीराः शाश्वतं धर्मवादिनः ॥२६
इष्टं दत्तं तपस्तप्तं नियमश्च स्वनुष्ठितः ।
सर्वमेवानपत्यस्य न पावनमिहोच्यते ॥ २७
सोऽहमेवं विदित्वैतत्प्रपश्यामि शुचिस्मिते ।
अनपत्यः शुभाँल्लोकान्न प्राप्स्यामीति चिन्तयन् २८
'अनपत्यो हि मरणं कामये नैव जीवितम् ।'
मृगाभिशापं जानासि विजने मम केवलम् ।
नृशंसकर्मणा कृत्स्नं यथा ह्युपहतं तथा ॥ २९
इमे वै बन्धुदायादाः षट् पुत्रा धर्मदर्शने ।
षडेवाबन्धुदायादाः पुत्रास्ताञ्छृणु मे पृथे ॥३०
स्वयंजातः प्रणीतश्च परिक्रीतश्च यः सुतः ।
पौनर्भवश्च कानीनः स्वैरिण्यां यश्च जायते ॥३१
दत्तः क्रीतः कृत्रिमश्च उपगच्छेत्स्वयं च यः ।
सहोढो ज्ञातिरेताश्च हीनयोनिधृतश्च यः ॥ ३२
पूर्वपूर्वतमाभावं मत्वा लिप्सेत वै सुतम् ।
उत्तमादवरात्पुंसः काङ्क्षन्ते पुत्रमापदि ॥ ३३
अपत्यं धर्मफलदं श्रेष्ठं विन्दन्ति मानवाः ।
आत्मशुक्रादपि पृथे मनुः स्वायंभुवोऽब्रवीत् ३४
तस्मात्प्रहेष्याम्यद्य त्वां हीनः प्रजननात्स्वयम् ॥
सदृशाच्छ्रेयसो वा त्वं विद्ध्यपत्यं यशस्विनि ।
शृणु कुन्ति कथामेतां शारदण्डायिनीं प्रति ॥३६
'या हि ते भगिनी साध्वी श्रुतसेना यशस्विनी ।
उवाह तां तु कैकेयः शारदाण्डायनिर्महान् ॥'३७
सा वीरपत्नी गुरुणा नियुक्ता पुत्रजन्मनि ।
पुष्पेण प्रयता स्नाता निशि कुन्ति चतुष्पथे ॥३८
वरयित्वा द्विजं सिद्धं हुत्वा पुंसवनेऽनलम् ।
कर्मण्यवसिते तस्मिन्सा तेनैव सहावसत् ॥ ३९
तत्र त्रीञ्जनयामास दुर्जयादीन्महारथान् ।
तथा त्वमपि कल्याणि ब्राह्मणात्तपसाधिकात् ।
मन्नियोगाद्यत क्षिप्रमपत्योत्पादनं प्रति ॥ ४०

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

---

धर्मसंहिता धर्ममयी ॥ २६ ॥ धर्मदर्शने धर्मशास्त्रे उक्ता इति शेषः । बन्धुदायादा रिक्थहराः । अबन्धुदायादास्तदन्ये ॥ ३० ॥ प्रहेष्यामि गतिवृद्धिकर्मणो हिनोतेे रूपम् । अद्येति क्षिप्रवचनसंयोगाल्लृट् । त्वां शरणं गतोऽस्मि वर्धयामि वेति चार्थः ॥ ३५ ॥ विद्धि लभस्व । शारदण्डायनेर्भार्याम् ॥ ३६ ॥ गुरुणा भर्त्रा । पुष्पेण आर्तवेन निमित्तेन स्नाता ॥ ३८ ॥ यत यतस्व ॥ ४० ॥ षाड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥

## सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

कुन्त्या पाण्डुं प्रति व्युषिताश्वकथाकथनम् ॥ १ ॥

वैशंपायन उवाच ।
एवमुक्ता महाराज कुन्ती पाण्डुमभाषत ।
कुरूणामृषभं वीरं तदा भूमिपतिं पतिम् ॥ १
कुन्त्युवाच ।
न मामर्हसि धर्मज्ञ वक्तुमेवं कथंचन ।
धर्मपत्नीमभिरतां त्वयि राजीवलोचने ॥ २
त्वमेव तु महाबाहो मय्यपत्यानि भारत ।
वीर वीर्योपपन्नानि धर्मतो जनयिष्यसि ॥ ३
स्वर्गं मनुजशार्दूल गच्छेयं सहिता त्वया ।
अपत्याय च मां गच्छ त्वमेव कुरुनन्दन ॥ ४
न ह्यहं मनसाप्यन्यं गच्छेयं त्वदृते नरम् ।
त्वत्तः प्रति विशिष्टश्च कोऽन्योऽस्ति भुवि मानवः
इमां च तावद्धर्मात्मन्पौराणीं शृणु मे कथाम् ।
परिश्रुतां विशालाक्ष कीर्तयिष्यामि यामहम् ॥६
व्युषिताश्व इति ख्यातो बभूव किल पार्थिवः ।
पुरा परमधर्मिष्ठः पूरोर्वंशविवर्धनः ॥ ७
तस्मिंश्च यजमाने वै धर्मात्मनि महाभुजे ।
उपागमंस्ततो देवाः सेन्द्रा देवर्षिभिः सह ॥ ८
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
व्युषिताश्वस्य राजर्षेस्ततो यज्ञे महात्मनः ॥ ९
देवा ब्रह्मर्षयश्चैव चक्रुः कर्म स्वयं तदा ।
व्युषिताश्वस्ततो राजन्नति मर्त्यान्व्यरोचत ॥ १०
सर्वभूतान्प्रति यथा तपनः शिशिरात्यये ।
स विजित्य गृहीत्वा च नृपतीन्राजसत्तमः ॥११
प्राच्यानुदिच्यान्पाश्चात्यान्दाक्षिणात्यानकालयत्
अश्वमेधे महायज्ञे व्युषिताश्वः प्रतापवान् ॥ १२
बभूव स हि राजेन्द्रो दशनागबलान्वितः ।
अप्यत्र गाथां गायन्ति ये पुराणविदो जनाः ॥१३
व्युषिताश्वे यशोवृद्धे मनुष्येन्द्रे कुरूत्तम ।
व्युषिताश्वः समुद्रान्तां विजित्येमां वसुन्धराम् ॥
अपालयत्सर्ववर्णान्पिता पुत्रानिवौरसान् ।
यजमानो महायज्ञैर्ब्राह्मणेभ्यो धनं ददौ ॥ १५
अनन्तरत्नान्यादाय स जहार महाक्रतून् ।
सुषाव च बहून्सोमान्सोमसंस्थास्ततान च ॥१६
आसीत्काक्षीवती चास्य भार्या परमसंमता ।
भद्रा नाम मनुष्येन्द्र रूपेणासदृशी भुवि ॥ १७
कामयामासतुस्तौ च परस्परमिति श्रुतम् ।
स तस्यां कामसंपन्नो यक्ष्मणा समपद्यत ॥ १८
तेनाचिरेण कालेन जगामास्तमिवांशुमान् ।
तस्मिन्प्रेते मनुष्येन्द्रे भार्याऽस्य भृशदुःखिता १९
अपुत्रा पुरुषव्याघ्र विललापेति नः श्रुतम् ।
भद्रा परमदुःखार्ता तन्निबोध जनाधिप ॥ २०
भद्रोवाच ।
नारी परमधर्मज्ञ सर्वा भर्तृविनाकृता ।
पतिं विना जीवति या न सा जीवति दुःखिता२१
पतिं विना मृतं श्रेयो नार्याः क्षत्रियपुंगव ॥
त्वद्गतिं गन्तुमिच्छामि प्रसीदस्व नयस्व माम् ॥२२
त्वया हीना क्षणमपि नाहं जीवितुमुत्सहे ।
प्रसादं कुरु मे राजन्नितस्तूर्णं नयस्व माम् ॥२३
पृष्ठतोऽनुगमिष्यामि समेषु विषमेषु च ।
त्वामहं नरशार्दूल गच्छन्तमनिवर्तितुम् ॥ २४
छायेवानुगता राजन्सततं वशवर्तिनी ।
भविष्यामि नरव्याघ्र नित्यं प्रियहिते रता ॥२५
अद्यप्रभृति मां राजन्कष्टा हृदयशोषणाः ।
आधयोऽभिभविष्यन्ति त्वामृते पुष्करेक्षण ॥२६
अभाग्यया मया नूनं वियुक्ताः सहचारिणः ।
तेन मे विप्रयोगोऽयमुपपन्नस्त्वया सह ॥ २७
विप्रयुक्ता तु या पत्या मुहूर्तमपि जीवति ।
दुःखं जीवति सा पापा नरकस्थेव पार्थिव ॥२८
संयुक्ता विप्रयुक्ताश्च पूर्वदेहे कृता मया ।
तदिदं कर्मभिः पापैः पूर्वदेहेषु संचितम् ॥ २९
दुःखं मामनुसंप्राप्तं राजंस्त्वद्विप्रयोगजम् ।

अकालयद्वशीकृतवान् ॥ १२ ॥ जहार आहृतवान् चकारेत्यर्थः । सोमसंस्थाः अग्निष्टोमात्यग्निष्टोमादयः सप्त ॥ १६ ॥ मृतं मरणं

अद्यप्रभृत्यहं राजन्कुशसंस्तरशायिनी ।
भविष्याम्यसुखाविष्टा त्वद्दर्शनपरायणा ॥ ३०
दर्शयस्व नरव्याघ्र शाधि मामसुखान्विताम् ।
कृपणां चाथ करुणं विलपन्तीं नरेश्वर ॥ ३१
कुन्त्युवाच ।
एवं बहुविधं तस्यां विलपन्त्यां पुनःपुनः ।
तं शवं संपरिष्वज्य वाक्किलाऽन्तर्हिताऽब्रवीत् ३२
उत्तिष्ठ भद्रे गच्छ त्वं ददानीह वरं तव ।
जनयिष्याम्यपत्यानि त्वय्यहं चारुहासिनि ॥३३
आत्मकीये वरारोहे शयनीये चतुर्दशीम् ।
अष्टमीं वा ऋतुस्नाता संविशेथा मया सह ॥३४
एवमुक्ता तु सा देवी तथा चक्रे पतिव्रता ।
यथोक्तमेव तद्वाक्यं भद्रा पुत्रार्थिनी तदा ॥ ३५
सा तेन सुषुवे देवी शवेन भरतर्षभ ।
त्रीञ्शाल्वांश्चतुरो मद्रान्सुतान्भरतसत्तम ॥ ३६
तथा त्वमपि मय्येवं मनसा भरतर्षभ ।
शक्तो जनयितुं पुत्रांस्तपोयोगबलान्वितः ॥ ३७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

## अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

उद्दालककथा ॥ १ ॥ उद्दालकपुत्रेण श्वेतकेतुना कृता स्त्रीपुरुषमर्यादा ॥ २ ॥ गुणाधिकात् द्विजातेः पुत्रोत्पादनार्थं प्रति पाण्डोराज्ञा ॥ ३ ॥ कुन्त्या दुर्वाससः स्वस्य मन्त्रप्राप्तिकथनम् ॥ ४ ॥

वैशंपायन उवाच ।
एवमुक्तस्तया राजा तां देवीं पुनरब्रवीत् ।
धर्मविद्धर्मसंयुक्तमिदं वचनमुत्तमम् ॥ १
पाण्डुरुवाच ।
एवमेतत्पुरा कुन्ति व्युषिताश्वश्चकार ह ।
यथा त्वयोक्तं कल्याणि स ह्यासीदमरोपमः ॥२
अथ त्विदं प्रवक्ष्यामि धर्मतत्त्वं निबोध मे ।
पुराणमृषिभिर्दृष्टं धर्मविद्भिर्महात्मभिः ॥ ३
अनावृताः किल पुरा स्त्रिय आसन्वरानने ।
कामचारविहारिण्यः स्वतन्त्राश्चारुहासिनि ॥ ४
तासां व्युच्चरमाणानां कौमारात्सुभगे पतीन् ।
नाधर्मोऽभूद्वरारोहे स हि धर्मः पुराऽभवत् ॥ ५
तं चैव धर्मं पौराणं तिर्यग्योनिगताः प्रजाः ।
अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः ॥ ६
प्रमाणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः ।
उत्तरेषु च रम्भोरु कुरुष्वद्यापि पूज्यते ।
स्त्रीणामनुग्रहकरः स हि धर्मः सनातनः ॥ ७
'नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥८
एवं तृष्णा तु नारीणां पुरुषं पुरुषं प्रति ।
अगम्यागमनं स्त्रीणां नास्ति नित्यं शुचिस्मिते॥९
पुत्रं वा किल पौत्रं वा कासांचिद्भ्रातरं तथा ।
रहसीह नरं दृष्ट्वा योनिरुत्क्लिद्यते तदा ॥ १०
एतत्स्वाभाविकं स्त्रीणां न निमित्तकृतं शुभे ।'
अस्मिंस्तु लोके नचिरान्मर्यादेयं शुचिस्मिते ॥११
स्थापिता येन यस्माच्च तन्मे विस्तरतः शृणु ।
बभूवोद्दालको नाम महर्षिरिति नः श्रुतम् ॥१२
श्वेतकेतुरिति ख्यातः पुत्रस्तस्याभवन्मुनिः ।
मर्यादेयं कृता तेन धर्म्या वै श्वेतकेतुना ॥ १३
कोपात्कमलपत्राक्षि यदर्थं तन्निबोध मे ॥ १४
'श्वेतकेतोः पिता देवि तप उग्रं समास्थितः ।
ग्रीष्मे पञ्चतपा भूत्वा वर्षास्वाकाशगोऽभवत् १५
शिशिरे सलिलस्थायी सह पत्न्या महातपाः ।
उद्दालकं तपस्यन्तं नियमेन समाहितम् ॥ १६

॥ ३२ ॥ शवं प्रेतशरीरं संपरिष्वज्य विलपन्त्यामित्यन्वयः ॥ ३२ ॥ सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥
अनावृताः सर्वैर्द्रष्टुं योग्याः । कामचारो रतिसुखं तदर्थं विहारिण्यः पर्यटनशीलाः । स्वतन्त्रा भर्त्रादिभिरनिवार्याः ॥ ४ ॥ पतीन्व्युच्चरमाणानां व्यभिचरन्तीनाम् ॥ ५ ॥ अनुविधीयन्ते अनुसार्यन्ते ईश्वरेण ॥ ६ ॥ नचिरादल्पकालतः ॥ ११ ॥

तस्य पुत्रः श्वेतकेतुः परिचर्यां चकार ह ।
अभ्यागच्छद्द्विजः कश्चिद्वलीपलितसंततः ॥ १७
तं दृष्ट्वैव मुनिः प्रीतः पूजयामास शाश्वतः ।
स्वागतेन च पाद्येन मृदुवाक्यैश्च भारत ॥ १८
शाकमूलफलाद्यैश्च वन्यैरन्यैरपूजयत् ।
क्षुत्पिपासाश्रमेणार्तः पूजितश्च महर्षिणा ॥ १९
विश्रान्तो मुनिमासाद्य पर्यपृच्छद्द्विजस्तदा ।
उद्दालक महर्षे त्वं सत्यं मे ब्रूहि माऽनृतम् ॥२०
ऋषिपुत्रः कुमारोऽयं दर्शनीयो विशेषतः ।
तव पुत्रमिमं मन्ये कृतकृत्योऽसि तद्वद ॥ २१

उद्दालक उवाच ।

मम पत्नी महाप्राज्ञ कुशिकस्य सुता मता ।
मामेवानुगता पत्नी मम नित्यमनुव्रता ॥ २२
अरुन्धतीव पत्नीनां तपसा कर्शितस्तनी ।
अस्यां जातः श्वेतकेतुर्मम पुत्रो महातपाः ॥ २३
वेदवेदाङ्गविद्विप्र मच्छासनपरायणः ।
लोकज्ञः सर्वलोकेषु विश्रुतः सत्यवाग्घृणी ॥ २४

ब्राह्मण उवाच ।

अपुत्री भार्यया चार्थी वृद्धोऽहं मन्दचाक्षुषः ।
पित्र्यादृणादनिर्मुक्तः पूर्वमेवाकृतक्रियः ॥ २५
प्रजारणिस्तु पत्नी ते कुलशीलसमन्विता ।
सदृशी मम गोत्रेण वहाम्येनां क्षमस्व मे ॥ २६

पाण्डुरुवाच ।

इत्युक्त्वा मृगशावाक्षीं चीरकृष्णाजिनाम्बराम् ।
यष्ट्याधारः स्रस्तगात्रो मन्दचक्षुरबुद्धिमान् ॥ २७
स्वव्यापाराक्षमां श्रेष्ठामचित्तामात्मनि द्विजः ।'
श्वेतकेतोः किल पुरा समक्षं मातरं पितुः ॥ २८
जग्राह ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत् ।
ऋषिपुत्रस्तदा कोपं चकारामर्षितस्तदा ॥ २९
मातरं तां तथा दृष्ट्वा नीयमानां बलादिव ।
'तपसा दीप्तवीर्यो हि श्वेतकेतुर्न चक्षमे ॥ ३०
संगृह्य मातरं हस्ते श्वेतकेतुरभाषत ।
दुर्ब्राह्मण विमुञ्च त्वं मातरं मे पतिव्रताम् ॥ ३१
स्वयं पिता मे ब्रह्मर्षिः क्षमावान्ब्रह्मवित्तमः ।
शापानुग्रहयोः शक्तः तूर्णींभूतो महाव्रतः ॥३२
तस्य पत्नी दमोपेता मम माता विशेषतः ।
पतिव्रतां तपोवृद्धां साध्वाचारैरलङ्कृताम् ॥ ३३
अप्रमादेन ते ब्रह्मन्मातृभूतां विमुञ्च वै ॥ ३४
एवमुक्त्वा तु याचन्तं विमुञ्चेति मुहुर्मुहुः ।
प्रत्यवोचद्द्विजो राजन्नप्रगल्भमिदं वचः ॥ ३५

ब्राह्मण उवाच ।

अपत्यार्थी श्वेतकेतो वृद्धोऽहं मन्दचाक्षुषः ।
पिता ते ऋणनिर्मुक्तस्त्वया पुत्रेण काश्यप ॥३६
ऋणादहमनिर्मुक्तो वृद्धोऽहं विगतस्पृहः ।
मम को दास्यति सुतां कन्यां संप्राप्तयौवनाम् ३७
प्रजारणिमिमां पत्नीं विमुञ्च त्वं महातपः ।
एकया प्रजया प्रीतो मातरं ते ददाम्यहम् ॥ ३८
एवमुक्तः श्वेतकेतुर्लज्जया क्रोधमेयिवान् ।'
क्रुद्धं तं तु पिता दृष्ट्वा श्वेतकेतुमुवाच ह ॥ ३९
मा तात कोपं कार्षीस्त्वमेष धर्मः सनातनः ।
अनावृता हि सर्वेषां वर्णानामङ्गना भुवि ॥ ४०
यथा गावः स्थिताः पुत्र स्वेस्वे वर्णे तथा प्रजाः ।
'तथैव च कुटुम्बेषु न प्रमाद्यन्ति कर्हिचित् ॥४१
ऋतुकाले तु संप्राप्ते भर्तारं न जहुस्तदा ।'
ऋषिपुत्रोऽथ तं धर्मं श्वेतकेतुर्न चक्षमे ॥ ४२
चकार चैव मर्यादामिमां स्त्रीपुंसयोर्भुवि ।
मानुषेषु महाभागे न त्वेवान्येषु जन्तुषु ॥ ४३
तदाप्रभृति मर्यादा स्थितेयमिति नः श्रुतम् ।
व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम् ॥४४
भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहम् ।
'अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः ॥ ४५
उत्तरेषु महाभागे कुरुष्वेवं यशस्विनि ।
पुराणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः ॥' ४६
भार्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीम् ।
पतिव्रतामेतदेव भविता पातकं भुवि ॥ ४७
नियुक्ता पतिना भार्या यद्यपत्यस्य कारणात् ।
न कुर्यात्तत्तथा भीरु सैनः सुमहदाप्नुयात् ।
इति तेन पुरा भीरु मर्यादा स्थापिता बलात् ॥ ४८

उद्दालकस्य पुत्रेण धर्म्या वै श्वेतकेतुना ।
सौदासेन च रम्भोरु नियुक्ता पुत्रजन्मनि ॥४९
मदयन्ती जगामर्षिं वसिष्ठमिति नः श्रुतम् ।
तस्माल्लेभे च सा पुत्रमश्मकं नाम भामिनी॥५०
एवं कृतवती सापि भर्तुः प्रियचिकीर्षया ।
अस्माकमपि ते जन्म विदितं कमलेक्षणे ॥ ५१
कृष्णद्वैपायनाद्भीरु कुरूणां वंशवृद्धये ।
अत एतानि सर्वाणि कारणानि समीक्ष्य वै॥५२
ममैतद्वचनं धर्म्यं कर्तुमर्हस्यनिन्दिते ।
ऋतावृतौ राजपुत्रि स्त्रिया भर्ता पतिव्रते ॥ ५३
नातिवर्तव्य इत्येवं धर्मं धर्मविदो विदुः ।
शेषेष्वन्येषु कालेषु स्वातन्त्र्यं स्त्री किलार्हति॥५४
धर्ममेवं जनाः सन्तः पुराणं परिचक्षते ।
भर्ता भार्यां राजपुत्रि धर्म्यं वाऽधर्म्यमेव वा ॥५५
यद्ब्रूयात्तत्तथा कार्यमिति वेदविदो विदुः ।
विशेषतः पुत्रगृद्धी हीनः प्रजननात्स्वयम् ॥ ५६
यथाऽहमनवद्याङ्गि पुत्रदर्शनलालसः ।
अयं रक्ताङ्गुलिनखः पद्मपत्रनिभः शुभे ॥ ५७
प्रसादनार्थं सुश्रोणि शिरस्यभ्युद्यतोऽञ्जलिः ।
मन्नियोगात्सुकेशान्ते द्विजातेस्तपसाऽधिकात्५८
पुत्रान्गुणसमायुक्तानुत्पादयितुमर्हसि ।
त्वत्कृतेऽहं पृथुश्रोणि गच्छेयं पुत्रिणां गतिम्॥५९

वैशंपायन उवाच ।
एवमुक्ता ततः कुन्ती पाण्डुं परपुरञ्जयम् ।
प्रत्युवाच वरारोहा भर्तुः प्रियहिते रता ॥ ६०
'अधर्मः सुमहानेष स्त्रीणां भरतसत्तम ।
यत्प्रसादयते भर्ता प्रसाद्यः क्षत्रियर्षभ ।
शृणु चेदं महाबाहो मम प्रीतिकरं वचः ॥' ६१
पितृवेश्मन्यहं बाला नियुक्ताऽतिथिपूजने ।
उग्रं पर्यचरं तत्र ब्राह्मणं संशितव्रतम् ॥ ६२
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमहं संशितात्मानं सर्वयत्नैरतोषयम् ॥ ६३
स मेऽभिचारसंयुक्तमाचष्ट भगवान्वरम् ।
मन्त्रं त्विमं च मे प्रादादब्रवीच्चैव मामिदम् ॥६४
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
अकामो वा सकामो वा वशं ते समुपैष्यति॥६५
तस्य तस्य प्रसादात्ते राज्ञि पुत्रो भविष्यति ।
इत्युक्ताऽहं तदा तेन पितृवेश्मनि भारत ॥ ६६
ब्राह्मणस्य वचस्तथ्यं तस्य कालोऽयमागतः ।
अनुज्ञाता त्वया देवमाह्वयेयमहं नृप ॥ ६७
'यां मे विद्यां महाराज अददात्स महायशाः ।
तयाऽऽहूतः सुरः पुत्रं प्रदास्यति सुरोपमम् ।
अनपत्यकृतं यस्ते शोकं वीर विनेष्यति ॥' ६८

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

## एकोनत्रिंशत्यधिकशततमोऽध्यायः ॥ १२९ ॥

धर्मात्कुन्त्यां युधिष्ठिरोत्पत्तिः ॥ १ ॥ कुन्त्याः पुत्रोत्पत्तिश्रवणेन दुःखितया गान्धार्या घातितात्स्वोदरान्मांसपेशीजननम् ॥ २ ॥ मांसपेशीं एकोत्तरशतधा विभज्य पृथक्पृथक्कुण्डेषु निधाय रक्षणम् ॥ ३ ॥ वने स्थितस्य पाण्डोः कुन्त्यां वायोर्भीमसेनोत्पत्तिः ॥ ४ ॥ मातुरङ्कात्पतितेन भीमेन शैलशिलासंचूर्णनम् ॥ ५ ॥ दुर्योधनोत्पत्तिः ॥ ६ ॥ ततो मासेन धृतराष्ट्रस्य पुत्रशतोत्पत्तिः । दुःशलाजननं च ॥ ७ ॥

'कुन्त्युवाच ।
अपत्यकाम एवं स्यान्ममापत्यं भवेदिति ।
विप्रं वा गुणसंपन्नं सर्वभूतहिते रतम् ॥ १
अनुजानीहि भद्रं ते दैवतं हि पतिः स्त्रियः ।
यं त्वं वक्ष्यसि धर्मज्ञ देवं ब्राह्मणमेव च ॥ २

यथोद्दिष्टं त्वया वीर तत्कर्तास्मि महाभुज ।
देवात्पुत्रफलं सद्यो विप्रात्कालान्तरे भवेत् ॥ ३
आवाहयामि कं देवं कदा वा भरतर्षभ ।
त्वत्त आज्ञां प्रतीक्षन्तीं विद्ध्यस्मिन्कर्मणीप्सिते ४

पुराणं युगान्तरीयम् ॥५५॥ त्वत्कृते त्वया ॥ ५९ ॥ अभिचारो देवताकर्षणशक्तिः॥६४॥ अष्टाविंशत्यधिकशततमोऽध्यायः१२८

पाण्डुरुवाच ।
धन्योऽस्म्यनुगृहीतोऽस्मि त्वं नो धात्री कुलस्य हि।
नमो महर्षये तस्मै येन दत्तो वरस्तव ॥ ५
न चाधर्मेण धर्मज्ञे शक्याः पालयितुं प्रजाः ।
तस्मात्त्वं पुत्रलाभाय सन्तानाय ममैव च ॥ ६
प्रवरं सर्वदेवानां धर्ममावाहयाबले ।
वैशंपायन उवाच ।
पाण्डुना समनुज्ञाता भारतेन यशस्विना ।
मतिं चक्रे महाराज धर्मस्यावाहने तदा ॥' ७
पाण्डुरुवाच ।
अद्यैव त्वं वरारोहे प्रयतस्व यथाविधि ।
धार्मिकश्च कुरूणां हि भविष्यति न संशयः ॥ ८
दत्तस्य तस्य धर्मेण नाधर्मे रंस्यते मनः ।
धर्मादिकं हि धर्मज्ञे धर्मान्तं धर्ममध्यमम् ॥ ९
अपत्यमिष्टं लोकेषु यशःकीर्तिविवर्धनम् ।
तस्माद्धर्मं पुरस्कृत्य नियता त्वं शुचिस्मिते ॥ १०
आकाराचारसंपन्ना भजस्वाराधय स्वयम् ॥ ११
वैशंपायन उवाच ।
सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना ।
अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमथाकरोत् ॥ १२
संवत्सरोपिते गर्भे गान्धार्या जनमेजय ।
आजुहाव ततो धर्मं कुन्ती गर्भार्थमच्युतम् ॥ १३
सा बलिं त्वरिता देवी धर्मायोपजहार ह ।
जजाप विधिवज्जप्यं दत्तं दुर्वाससा पुरा ॥ १४
'जानन्ती धर्ममग्र्यं वै धर्मं वशमुपानयत् ।
आहूतो नियमात्कुन्त्या सर्वभूतनमस्कृतः ॥' १५
आजगाम ततो देवीं धर्मो मन्त्रबलात्ततः ।
विमाने सूर्यसङ्काशे कुन्ती यत्र जपस्थिता ॥ १६
'ददृशे भगवान्धर्मः सन्तानार्थाय पाण्डवे ।'
विहस्य तां ततो ब्रूयाः कुन्ति किं ते ददाम्यहम् ।
सा तं विहस्यमानापि पुत्रं देह्यब्रवीदिदम् ॥ १७
'तस्मिन्बहुमृगेऽरण्ये शतशृङ्गे नगोत्तमे ।
पाण्डोरर्थे महाभागा कुन्ती धर्ममुपागमत् ॥ १८
ऋतुकाले शुचिः स्नाता शुक्लवस्त्रा यशस्विनी ।
शय्यां जग्राह सुश्रोणी सह धर्मेण सुव्रता ॥' १९
धर्मेण सह संगम्य योगमूर्तिधरेण सा ।
लेभे पुत्रं महाबाहुं सर्वप्राणभृतां वरम् ॥ २०
ऐन्द्रे चन्द्रमसा युक्ते मुहूर्तेऽभिजितेऽष्टमे ।
दिवा मध्यगते सूर्ये तिथौ पूर्णे हि पूजिते ॥ २१
समृद्धयशसं कुन्ती सुषाव प्रवरं सुतम् ।
जातमात्रे सुते तस्मिन्वागुवाचाशरीरिणी ॥ २२
एष धर्मभृतां श्रेष्ठो भविष्यति नरोत्तमः ।
विक्रान्तः सत्यवाक्चैव राजा पृथ्व्यां भविष्यति ॥
युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः सुतः ।
भविता प्रथितो राजा त्रिषु लोकेषु विश्रुतः ।
यशसा तेजसा चैव वृत्तेन च समन्वितः ॥ २४
संवत्सरे द्वितीये तु गान्धार्या उदरं महत् ।
न च प्राजायत तदा ततस्तां दुःखमाविशत् २५
श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसम् ।
उदरस्यात्मनः स्थैर्यमुपालभ्य च सौबली ॥ २६
कौरवस्यापरिज्ञातं यत्नेन महता स्वयम् ।
उदरं घातयामास गान्धारी शोकमूर्छिता ॥ २७
ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता ।
द्विवर्षसंभृता कुक्षौ तामुत्स्रष्टुं प्रचक्रमे ॥ २८
अथ द्वैपायनो ज्ञात्वा त्वरितः समुपागमत् ।
तां स मांसमयीं पेशीं ददर्श जपतां वरः ॥ २९
ततोऽवदत्सौबलेयीं किमिदं ते चिकीर्षितम् ।
सा चात्मनो मतं सर्वं शशंस परमर्षये ॥ ३०
गान्धार्युवाच ।
ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभम् ।
दुःखेन परमेणेदमुदरं घातितं मया ॥ ३१
शतं च किल पुत्राणां वितीर्णं मे त्वया पुरा ।
इयं च मे मांसपेशी जाता पुत्रशताय वै ॥ ३२
व्यास उवाच ।
एवमेतत्सौबलेयि नैतज्जात्वन्यथा भवेत् ।
वितथं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥ ३३

ऐन्द्रे ज्येष्ठानक्षत्रे । अष्टमे अभिजितेऽभिजिति त्रिंशन्मुहूर्तस्याह्नोऽष्टमे मुहूर्ते । दिवा शुक्लपक्षे । मध्यगते तुलायनगते । तिथौ पूर्णे पूर्णायां पञ्चम्याम् । अयं योगः प्रायेणाश्विनशुक्लपञ्चम्याम् ॥ २१ ॥ लोहाष्ठीला लोहपिण्डिका ॥ २८ ॥

घृतपूर्णं कुण्डशतं क्षिप्रमेव विधीयताम् ।
सुगुप्तेषु च देशेषु रक्षा चैव विधीयताम् ॥ ३४
शीताभिरद्भिरष्ठीलामिमां च परिपिञ्चय ॥ ३५
वैशंपायन उवाच ।
सा सिच्यमाना ह्यष्ठीला ह्यभवच्छतधा तदा ।
अङ्गुष्ठपर्वमात्राणां गर्भाणां तत्क्षणं तथा ॥ ३६
एकाधिकशतं पूर्णं यथायोगं विशांपते ।
ततः कुण्डशतं तत्र आनाय्य तु महानृषिः ॥३७
मांसपेश्यास्तदा राजन्क्रमशः कालपर्ययात् ।
ततस्तांस्तेषु कुण्डेषु गर्भान्सर्वान्समादधत् ॥ ३८
स्वनुगुप्तेषु देशेषु रक्षां चैषां व्यधापयत् ।
शशास चैव कृष्णो वै गर्भाणां रक्षणं तथा ॥३९
उवाच चैनां भगवान्कालेनैतावता पुनः ।
स्फुटमानेषु कुण्डेषु जाताञ्जानीहि शोभने ॥४०
उद्घाटनीयान्येतानि कुण्डानीति च सौबलीम् ।
इत्युक्त्वा भगवान्व्यासस्तथा प्रतिविधाय च॥४१
जगाम तपसे धीमान्हिमवन्तं शिलोच्चयम् ।
अक्षोत्तराःकुमारास्ते कुण्डेभ्यस्तु समुत्थिताः४२
तेनैवैषां क्रमेणासीज्ज्योष्ठानुज्येष्ठता तदा ।
जन्मतश्च प्रमाणेन ज्येष्ठः कुन्तीसुतोऽभवत् ॥४३
धार्मिकं च सुतं दृष्ट्वा पाण्डुः कुन्तीमथाऽब्रवीत् ।
प्राहुः क्षत्रं बलज्येष्ठं बलज्येष्ठं सुतं वृणु ॥ ४४
ततः कुन्तीमभिक्रम्य शशासातीव भारत ।
वायुमावाहयस्वेति स देवो बलवत्तरः ॥ ४५
अश्वमेधः क्रतुश्रेष्ठो ज्योतिःश्रेष्ठो दिवाकरः ।
ब्राह्मणो द्विपदां श्रेष्ठो देवश्रेष्ठश्च मारुतः ॥ ४६
मारुतं मरुतां श्रेष्ठं सर्वप्राणिभिरीडितम् ।
आवाहय त्वं नियमात्पुत्रार्थं वरवर्णिनि ॥ ४७
स नो यं दास्यति सुतं स प्राणबलवान्नृपु ।
भविष्यति वरारोहे बलज्येष्ठा हि भूमिपाः ॥४८
वैशंपायन उवाच ।
तथोक्तवति सा काले वायुमेवाजुहाव ह ।
द्वितीयेनोपहारेण तेनोक्तविधिना पुनः ॥ ४९
तैरेव नियमैः स्थित्वा मन्त्रग्राममुदैरयत् ।
आजगाम ततो वायुः किं करोमीति चाब्रवीत्५०
लज्जान्विता ततः कुन्ती पुत्रमैच्छन्महाबलम् ।
तथास्त्विति च तां वायुः समालभ्य दिवं गतः॥
तस्यां जज्ञे महावीर्यो भीमो भीमपराक्रमः ।
तमप्यतिबलं जातं वागुवाचाशरीरिणी ॥ ५२
सर्वेषां बलिनां श्रेष्ठो जातोऽयमिति भारत ।
जातमात्रे कुमारे तु सर्वलोकस्य पार्थिवाः ॥५३
मूत्रं प्रसुस्रुवुः सर्वे व्यथां चापि प्रपेदिरे ।
वाहनानि व्यशीर्यन्त व्यमुञ्चन्नश्रुबिन्दवः॥ ५४
यथाऽनिलः समुद्भूतः समर्थः कम्पने भुवः ।
तथा ह्युपचिताङ्गो वै भीमो भीमपराक्रमः ॥५५
इदं चाद्भुतमत्रासीज्जातमात्रे वृकोदरे ।
यदङ्कात्पतितो मातुः शिलां गात्रैरचूर्णयत् ॥५६
कुन्ती तु सह पुत्रेण याता सुरुचिरं सरः ।
स्नात्वा च सुतमादाय दशमेऽहनि यादवी ॥५७
दैवतान्यर्चयिष्यन्ती निर्जगामाश्रमात्पृथा ।
शैलाभ्याशेन गच्छन्त्यास्तदा भरतसत्तम ॥ ५८
निश्चक्राम महाव्याघ्रो जिघांसुर्गिरिगह्वरात् ।
तमापतन्तं शार्दूलं विकृष्य धनुरुत्तमम् ॥ ५९
निर्बिभेद शरैः पाण्डुस्त्रिभिस्त्रिदशविक्रमः ।
नादेन महता तां तु पूरयन्तं गिरेर्गुहाम् ॥ ६०
दृष्ट्वा शैलमुपारोढुमैच्छत्कुन्ती भयात्तदा ।
त्रासात्तस्याः सुतस्त्वङ्कात्पपात भरतर्षभ ॥ ६१
पर्वतस्योपरिस्थायामधस्तादपतच्छिशुः ।
स शिलां चूर्णयामास वज्रवद्वज्रिचोदितः॥ ६२
पुत्रस्नेहात्ततः पाण्डुरभ्यधावद्गिरेस्तटम् ।
पतता तेन शतधा शिला गात्रैर्विचूर्णिता ॥ ६३
शिलां च चूर्णितां दृष्ट्वा परं विस्मयमागमत् ।
स तु जन्मनि भीमस्य विनदन्तं विनादितम्६४
ददर्श गिरिशृङ्गस्थं व्याघ्रं व्याघ्रपराक्रमः ।
दारसंरक्षणार्थाय पुत्रसंरक्षणाय च ॥ ६५
सदा बाणधनुष्पाणिरभवत्कुरुनन्दनः ।

वज्रवद्वज्रिचोदितः वज्रिचोदितवज्रवदित्यर्थः ॥ ६२ ॥ विनादितं नादं । विनन्दं कुर्वाणम् ॥ ६४ ॥

मघे चन्द्रमसा युक्ते सिंहे चाभ्युदिते गुरौ ॥६६
दिवा मध्यगते सूर्ये तिथौ पुण्ये त्रयोदशे ।
पित्र्ये मुहूर्ते सा कुन्ती सुषुवे भीममच्युतम् ॥६७
यस्मिन्नहनि भीमस्तु जज्ञे भीमपराक्रमः ।
तामेव रात्रिं पूर्वां तु जज्ञे दुर्योधनो नृपः ॥ ६८
स जातमात्र एवाथ धृतराष्ट्रसुतो नृप ।
रासभारावसदृशं रुराव च ननाद च ॥ ६९
तं खराः प्रत्यभाषन्त गृध्रगोमायुवायसाः ।
क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवनिस्वनाः॥
वाताश्च प्रववुश्चापि दिग्दाहश्चाभवत्तदा ।
ततस्तु भीतवद्राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ ७१
समानीय बहून्विप्रान्भीष्मं विदुरमेव च ।
अन्यांश्च सुहृदो राजन्कुरून्सर्वांस्तथैव च ॥ ७२
युधिष्ठिरो राजपुत्रो ज्येष्ठो नः कुलवर्धनः ।
प्राप्तः स्वगुणतो राज्यं न तस्मिन्वाच्यमस्ति नः॥
अयं त्वनन्तरस्तस्मादपि राजा भविष्यति ।
एतद्विब्रूत मे तथ्यं यदत्र भविता ध्रुवम् ॥ ७४
'अस्मिञ्जाते निमित्तानि शंसन्ती ह्यशिवं महत् ।
अतो ब्रवीमि विदुर द्रुतं मां भयमाविशत् ॥'७५
वाक्यस्यैतस्य निधने दिक्षु सर्वासु भारत ।
क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवनिस्वनाः॥
लक्षयित्वा निमित्तानि तानि घोराणि सर्वशः ।
तेऽब्रुवन्ब्राह्मणा राजन्विदुरश्च महामतिः ॥ ७७
यथेमानि निमित्तानि घोराणि मनुजाधिप ।
उत्थितानि सुते जाते ज्येष्ठे ते पुरुषर्षभ ॥ ७८
व्यक्तं कुलान्तकरणो भवितैष सुतस्तव ।
तस्य शान्तिः परित्यागे गुप्तावपनयो महान् ७९
'एष दुर्योधनो राजा मधुपिङ्गललोचनः ।
न केवलं कुलस्यान्तं क्षत्रियान्तं करिष्यति॥'८०
शतमेकोनमप्यस्तु पुत्राणां ते महीपते ।
त्यजैनमेकं शान्तिं चेत्कुलस्येच्छसि भारत ॥ ८१
एकेन कुरु वै क्षेमं कुलस्य जगतस्तथा ।
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ॥८२
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ।
स तथा विदुरेणोक्तस्तैश्च सर्वैर्द्विजोत्तमैः ॥ ८३
न चकार तथा राजा पुत्रस्नेहसमन्वितः ।
ततः पुत्रशतं पूर्णं धृतराष्ट्रस्य पार्थिव ॥ ८४
अधिकांशतेन संजज्ञे कन्या चैका शताधिका ।
गान्धार्यां क्लिश्यमानायामुदरेण विवर्धता ॥ ८५
'वैश्या सा त्वम्बिकापुत्रं कन्या परिचचार ह ।
तया समभवद्राजा धृतराष्ट्रो यदृच्छया ॥' ८६
तस्मिन्संवत्सरे राजन्धृतराष्ट्रान्महायशाः ।
जज्ञे धीमांस्ततस्तस्यां युयुत्सुः करणो नृप ।
एवं पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ॥ ८७
महारथानां वीराणां कन्या चैका शताधिका ।
युयुत्सुश्च महातेजा वैश्यापुत्रः प्रतापवान् ॥ ८८

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

## त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

दुःशलाजननप्रकारकथनम् ॥ १ ॥

जनमेजय उवाच ।
धृतराष्ट्रस्य पुत्राणामादितः कथितं त्वया ।
ऋषेः प्रसादात्तु शतं न च कन्या प्रकीर्तिता ॥१
वैश्यापुत्रो युयुत्सुश्च कन्या चैका शताधिका ।
गान्धारराजदुहिता शतपुत्रेति चानघ ॥ २
उक्ता महर्षिणा तेन व्यासेनामिततेजसा ।
कथं त्विदानीं भगवन्कन्यां त्वं तु ब्रवीषि मे ३
यदि भागशतं पेशी कृता तेन महर्षिणा ।

रुराव च ननाद च व्यक्तमव्यक्तं च शब्दं खरसदृशमेवाकरोत् ॥६९॥करण इव करणः क्षत्रियाद्वैश्यायां जातत्वान्न तु वैश्याच्छू-
द्रायाम् ॥ ८७ ॥ एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

न प्रजास्यति चेद्भूयः सौबलेयी कथंचन ॥ ४
कथं तु संभवस्तस्या दुःशलाया वदस्व मे ।
यथावदिह विप्रर्षे परं मेऽत्र कुतूहलम् ॥ ५
वैशंपायन उवाच ।
साध्वयं प्रश्न उद्दिष्टः पाण्डवेय ब्रवीमि ते ।
तां मांसपेशीं भगवान्स्वयमेव महातपाः ॥ ६
शीताभिरद्भिरासिच्य भागं भागमकल्पयत् ।
यो यथा कल्पितो भागस्तंतं धात्र्या तथा नृप॥
घृतपूर्णेषु कुण्डेषु एकैकं प्राक्षिपत्तदा ।
एतस्मिन्नन्तरे साध्वी गान्धारी सुदृढव्रता ॥ ८
दुहितुः स्नेहसंयोगमनुध्याय वराङ्गना ।
'नाब्रवीत्तमृषिं किंचिद्गौरवाच्च यशस्विनी ।'
मनसा चिन्तयद्देवी एतत्पुत्रशतं मम ॥ ९
भविष्यति न संदेहो न ब्रवीत्यन्यथा मुनिः ।
ममेयं परमा तुष्टिर्दुहिता मे भवेद्यदि ॥ १०
एका शताधिका बाला भविष्यति कनीयसी ।
ततो दौहित्रजाल्लोकादबाह्योऽसौ पतिर्मम॥ ११
अधिका किल नारीणां प्रीतिर्जामातृजा भवेत्।
यदि नाम ममापि स्याद्दुहितैका शताधिका १२
कृतकृत्या भवेयं वै पुत्रदौहित्रसंवृता ।
यदि सत्यं तपस्तप्तं दत्तं वाऽप्यथवा हुतम् ॥१३
गुरवस्तोषिता वापि तथाऽस्तु दुहिता मम ।
एतस्मिन्नेव काले तु कृष्णद्वैपायनः स्वयम् ॥ १४
व्यभजत्स तदा पेशीं भगवानृषिसत्तमः ।
'गण्यमानेषु कुण्डेषु शते पूर्णे महात्मना ॥ १५
अभवच्चापरं खण्डं वामहस्ते तदा किल ।'
गणयित्वा शतं पूर्णमंशानामाह सौबलीम् ॥१६
व्यास उवाच ।
पूर्णं पुत्रशतं त्वेतन्न मिथ्या वागुदाहृता ।
दैवयोगाच्च भागैकः परिशिष्टः शतात्परः ॥ १७
एषा ते सुभगा कन्या भविष्यति यथेप्सिता ।
वैशंपायन उवाच ।
ततोऽन्यं घृतकुम्भं च समानाय्य महातपाः १८
तं चापि प्राक्षिपत्तत्र कन्याभागं तपोधनः ।
'संभूता चैव कालेन सर्वेषां च यवीयसी ॥ १९
एतत्ते कथितं राजन्दुःशलाजन्म भारत ।
ब्रूहि राजेन्द्र किं भूयो वर्तयिष्यामि तेऽनघ॥२०

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

## एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

दुर्योधनादीनां नामकथनम् ॥ १ ॥ दुःशलाविवाहः ॥ २ ॥

जनमेजय उवाच ।
ज्येष्ठाऽनुज्येष्ठतां तेषां नामानि च पृथक्पृथक्।
धृतराष्ट्रस्य पुत्राणामानुपूर्व्यात्प्रकीर्तय ॥ १
वैशंपायन उवाच ।
दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा ।
दुःसहो दुःशलश्चैव जलसन्धः समः सहः ॥ २
विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ।
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ॥ ३
विविंशतिर्विकर्णश्च शलः सत्त्वः सुलोचनः ।
चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः ॥ ४
दुर्मदो दुर्विगाहश्च विवित्सुर्विकटाननः ।
ऊर्णनाभः सुनाभश्च तथा नन्दोपनन्दकौ ॥ ५
चित्रबाणश्चित्रवर्मा सुवर्मा दुर्विमोचनः ।
अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः ॥ ६
भीमवेगो भीमबलो बलाकी बलवर्धनः ।
उग्रायुधः सुषेणश्च कुण्डधारो महोदरः ॥ ७
चित्रायुधो निषङ्गी च पाशी वृन्दारकस्तथा ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ॥ ८

न प्रजास्यति प्रजामात्मनो नेच्छति ॥ ४ ॥ त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

दृढसन्धो जरासन्धः सत्यसन्धः सदः सुवाक् ।
उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः ॥ ९
अपराजितः कुण्डशायी विशालाक्षो दुराधरः ।
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ॥ १०
आदित्यकेतुर्बह्वाशी नागदत्तोऽग्रयाय्यपि ।
कवची क्रथनः कुण्डी कुण्डधारो धनुर्धरः ॥११
उग्रभीमरथौ वीरौ वीरबाहुरलोलुपः ।
अभयो रौद्रकर्मा च तथा दृढरथाश्रयः ॥ १२
अनाधृष्यः कुण्डभेदी विरावी चित्रकुण्डलः ।
प्रमथश्च प्रमाथी च दीर्घरोमश्च वीर्यवान् ॥ १३
दीर्घबाहुर्महाबाहुर्व्यूढोराः कनकध्वजः ।
कुण्डाशी विरजाश्चैव दुःशला च शताधिका १४
इति पुत्रशतं राजन्कन्या चैव शताधिका ।
नामधेयानुपूर्व्येण विद्धि जन्मक्रमं नृप ॥ १५
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः ।
सर्वे वेदविदश्चैव सर्वे सर्वास्त्रकोविदाः ॥ १६
सर्वेषामनुरूपाश्च कृता दारा महीपते ।
धृतराष्ट्रेण समये परीक्ष्य विधिवन्नृप ॥ १७
दुःशलां चापि समये धृतराष्ट्रो नराधिपः ।
जयद्रथाय प्रददौ विधिना भरतर्षभ ॥ १८
'इति पुत्रशतं राजन्युयुत्सुश्च शताधिकः ।
कन्यका दुःशला चैव यथावत्कीर्तितं मया' १९

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

---

## द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

कुन्त्यां इन्द्रादर्जुनोत्पत्तिः ॥ १ ॥ तद्वेलायां आकाशवाण्यादि ॥ २ ॥

वैशंपायन उवाच ।
जाते बलवतां श्रेष्ठे पाण्डुश्चिन्तापरोऽभवत् ।
कथमन्यो मम सुतो लोके श्रेष्ठो भवेदिति ॥ १
दैवे पुरुषकारे च लोकोऽयं संप्रतिष्ठितः ।
तत्र दैवं तु विधिना कालयुक्तेन लभ्यते ॥ २
इन्द्रो हि राजा देवानां प्रधान इति नः श्रुतम् ।
अप्रमेयबलोत्साहो वीर्यवानमितद्युतिः ॥ ३
तं तोषयित्वा तपसा पुत्रं लप्स्ये महाबलम् ।
यं दास्यति स मे पुत्रं स वरीयान्भविष्यति ॥४
अमानुषान्मानुषांश्च संग्रामे स हनिष्यति ।
कर्मणा मनसा वाचा तस्मात्तप्स्ये महत्तपः ॥ ५
ततः पाण्डुर्महाराजो मन्त्रयित्वा महर्षिभिः ।
दिदेश कुन्त्याः कौरव्यो व्रतं सांवत्सरं शुभम् ६
आत्मना च महाबाहुरेकपादस्थितोऽभवत् ।
उग्रं स तप आस्थाय परमेण समाधिना ॥ ७
आरिराधयिषुर्देवं त्रिदशानां तमीश्वरम् ।
सूर्येण सह धर्मात्मा पर्यतप्यत भारत ॥ ८
तं तु कालेन महता वासवः प्रत्यपद्यत ।
शक्र उवाच ।
पुत्रं तव प्रदास्यामि त्रिषु लोकेषु विश्रुतम् ॥ ९
ब्राह्मणानां गवां चैव सुहृदां चार्थसाधकम् ।
दुर्हृदां शोकजननं सर्वबान्धवनन्दनम् ॥ १०
सुतं तेऽग्र्यं प्रदास्यामि सर्वामित्रविनाशनम् ।
इत्युक्तः कौरवो राजा वासवेन महात्मना ॥११
उवाच कुन्तीं धर्मात्मा देवराजवचः स्मरन् ।
उदर्कस्तव कल्याणि तुष्टो देवगणेश्वरः ॥ १२
दातुमिच्छति ते पुत्रं यथा संकल्पितं त्वया ।
अतिमानुषकर्माणं यशस्विनमरिन्दमम् ॥ १३
नीतिमन्तं महात्मानमादित्यसमतेजसम् ।
दुराधर्षं क्रियावन्तमतीवाद्भुतदर्शनम् ॥ १४
पुत्रं जनय सुश्रोणि धाम क्षत्रियतेजसाम् ।
लब्धः प्रसादो देवेन्द्रात्तमाह्वय शुचिस्मिते ॥१५
वैशंपायन उवाच ।
एवमुक्ता ततः शक्रमाजुहाव यशस्विनी ।

---

सूर्येण सह उदयादस्तमयावधि ॥ ८ ॥ द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

अथाजगाम देवेन्द्रो जनयामास चार्जुनम् ॥१६
'उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यां ततो दिवा।
जातस्तु फाल्गुने मासि तेनासौ फल्गुनःस्मृतः'॥
जातमात्रे कुमारे तु 'सर्वभूतप्रहर्षिणी ।
सूतके वर्तमानां तां' वागुवाचाशरीरिणी ।
महागम्भीरनिर्घोषा नभो नादयती तदा ॥ १८
शृण्वतां सर्वभूतानां तेषां चाश्रमवासिनाम् ।
कुन्तीमाभाष्य विस्पष्टमुवाचेदं शुचिस्मिताम्॥१९
कार्तवीर्यसमः कुन्ति शिवतुल्यपराक्रमः ।
एष शक्र इवाजय्यो यशस्ते प्रथयिष्यति ॥ २०
अदित्या विष्णुना प्रीतिर्यथाऽभूदभिवर्धिता ।
तथा विष्णुसमः प्रीतिं वर्धयिष्यति तेऽर्जुनः॥२१
एष मद्रान्वशे कृत्वा कुरूंश्च सह सोमकैः ।
चेदिकाशिकरूषांश्च कुरुलक्ष्मीं वहिष्यति ॥ २२
एतस्य भुजवीर्येण खाण्डवे हव्यवाहनः ।
मेदसा सर्वभूतानां तृप्तिं यास्यति वै पराम्॥२३
ग्रामणीश्च महीपालानेष जित्वा महाबलः ।
भ्रातृभिः सहितो वीरस्त्रीन्मेधानाहरिष्यति ॥२४
जामदग्न्यसमः कुन्ति विष्णुतुल्यपराक्रमः ।
एष वीर्यवतां श्रेष्ठो भविष्यति महायशाः ॥ २५
एष युद्धे महादेवं तोषयिष्यति शङ्करम् ।
अस्त्रं पाशुपतं नाम तस्मात्तुष्टादवाप्स्यति ॥ २६
निवातकवचा नाम दैत्या विबुधविद्विषः ।
शक्राज्ञया महाबाहुस्तान्वधिष्यति ते सुतः ॥२७
तथा दिव्यानि चास्त्राणि निखिलेनाहरिष्यति ।
विप्रनष्टां श्रियं चायमाहर्ता पुरुषर्षभः ॥ २८
एतामत्यद्भुतां वाचं कुन्ती शुश्राव सूतके ।
वाचमुच्चरितामुच्चैस्तां निशम्य तपस्विनाम्॥ २९
बभूव परमो हर्षः शतशृङ्गनिवासिनाम् ।
तथा देवमहर्षीणां सेन्द्राणां च दिवौकसाम् ॥३०
आकाशे दुन्दुभीनां च बभूव तुमुलः स्वनः ।
उदतिष्ठन्महाघोषः पुष्पवृष्टिभिरावृतः ॥ ३१
समवेत्य च देवानां गणाः पार्थमपूजयन् ।
काद्रवेया वैनतेया गन्धर्वाप्सरसस्तथा ।
प्रजानां पतयः सर्वे सप्त चैव महर्षयः ॥ ३२
भरद्वाजः कश्यपो गौतमश्च
विश्वामित्रो जमदग्निर्वसिष्ठः ।
यश्चोदितो भास्करेऽभूत्प्रनष्टे
सोऽप्यत्रात्रिर्भगवानाजगाम ॥ ३३
मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः ।
दक्षः प्रजापतिश्चैव गन्धर्वाप्सरसस्तथा ॥ ३४
दिव्यमाल्याम्बरधराः सर्वालङ्कारभूषिताः ।
उपगायन्ति बीभत्सुं नृत्यन्तेऽप्सरसां गणाः॥३५
तथा महर्षयश्चापि जेपुस्तत्र समन्ततः ।
गन्धर्वैः सहितः श्रीमान्प्रागायत च तुम्बुरुः॥३६
भीमसेनोग्रसेनौ च ऊर्णायुरनघस्तथा ।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चास्तथाष्टमः ॥ ३७
युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा ।
त्रयोदशः शालिशिराः पर्जन्यश्च चतुर्दशः ॥३८
कलिः पञ्चदशश्चैव नारदश्चात्र षोडशः ।
ऋत्वा बृहत्त्वा बृहकः करालश्च महामनाः ॥ ३९
ब्रह्मचारी बहुगुणः सुवर्णश्चेति विश्रुतः ।
विश्वावसुर्भुमन्युश्च सुचन्द्रश्च शरुस्तथा ॥ ४०
गीतमाधुर्यसंपन्नौ विख्यातौ च हहाहुहू ।
इत्येते देवगन्धर्वा जग्मुस्तत्र नराधिप ॥ ४१
तथैवाप्सरसो हृष्टाः सर्वालङ्कारभूषिताः ।
ननृतुर्वै महाभागा जगुश्चायतलोचनाः ॥ ४२
अनूचानाऽनवद्या च गुणमुख्या गुणावरा ।
अद्रिका च तथा सोमा मिश्रकेशी त्वलम्बुषा ४३
मरीचिः शुचिका चैव विद्युत्पर्णा तिलोत्तमा ।
अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा॥४४
असिता च सुबाहुश्च सुप्रिया च वपुस्तथा ।
पुण्डरीका सुगन्धा च सुरसा च प्रमाथिनी ॥४५
काम्या शारद्वती चैव ननृतुस्तत्र संघशः ।
मेनका सहजन्या च कर्णिका पुञ्जिकस्थला ४६
ऋतुस्थला घृताची च विश्वाची पूर्वचित्त्यपि ।
उम्लोचेति च विख्याता प्रम्लोचेति च ता दश॥
उर्वश्येकादशी तासां जगुश्चायतलोचनाः ।

धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ४८
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥४९
इत्येते द्वादशादित्या ज्वलन्तः सूर्यवर्चसः ॥५०
मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परंतप ॥ ५१
दहनोऽथेश्वरश्चैव कपाली च विशांपते ।
स्थाणुर्भगश्च भगवान्रुद्रास्तत्रावतस्थिरे ॥ ५२
अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः ।
विश्वेदेवास्तथा साध्यास्तत्रासन्परितः स्थिताः ५३
कर्कोटकोऽथ सर्पश्च वासुकिश्च भुजङ्गमः ।
कच्छपश्चाथ कुण्डश्च तक्षकश्च महोरगः ॥ ५४
आययुस्तपसा युक्ता महाक्रोधा महाबलाः ।
एते चान्ये च बहवस्तत्र नागा व्यवस्थिताः॥५५
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्चासितध्वजः ।
अरुणश्चारुणिश्चैव वैनतेया व्यवस्थिताः ॥ ५६
तांश्च देवगणान्सर्वांस्तपःसिद्धा महर्षयः ।
विमानगिर्यग्रगतान्ददृशुर्नेतरे जनाः ॥ ५७
तद्दृष्ट्वा महदाश्चर्यं विस्मिता मुनिसत्तमाः ।
अधिकां स्म ततो वृत्तिमवर्तन्पाण्डवं प्रति ॥ ५८
पाण्डुः प्रीतेन मनसा देवतादीनपूजयत् ।
पाण्डुना पूजिता देवाः प्रत्यूचुर्नरसत्तमम् ॥ ५९
प्रादुर्भूतो ह्ययं धर्मो देवतानां प्रसादतः ।
मातरिश्वा ह्ययं भीमो बलवानरिमर्दनः ॥ ६०
साक्षादिन्द्रः स्वयं जातः प्रसादाच्च शतक्रतोः ।
पितृत्वाद्देवतानां हि नास्ति पुण्यतरस्त्वया ॥६१
पितॄणामृणनिर्मुक्तः स्वर्गं प्राप्स्यसि पुण्यभाक् ।
इत्युक्त्वा देवताः सर्वा विप्रजग्मुर्यथागतम् ॥६२
पाण्डुस्तु पुनरेवैनां पुत्रलोभान्महायशाः ।
प्रादिशद्दर्शनीयार्थी कुन्ती त्वेनमथाब्रवीत् ॥६३
नातश्चतुर्थं प्रसवमापत्स्वपि वदन्त्युत ।
अतःपरं स्वैरिणी स्याद्बन्धकी पञ्चमे भवेत् ॥ ६४
स त्वं विद्वन्धर्ममिममधिगम्य कथं नु माम् ।
अपत्यार्थं समुत्क्रम्य प्रमादादिव भाषसे ॥ ६५

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

## त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

अश्विभ्यां माद्र्यां नकुलसहदेवयोरुत्पत्तिः ॥ १ ॥ युधिष्ठिरादीनां नामकरणम् ॥ २ ॥ वसुदेवप्रेषितेन पुरोहितेन पाण्डवानामुपनयनादिसंस्कारकरणम् ॥ ३ ॥ पाण्डवानां शुकाद्धनुर्वेदशिक्षणम् ॥ ४ ॥

वैशंपायन उवाच ।
कुन्तीपुत्रेषु जातेषु धृतराष्ट्रात्मजेषु च ।
मद्रराजसुता पाण्डुं रहो वचनमब्रवीत् ॥ १
न मेऽस्ति त्वयि सन्तापो विगुणेऽपि परन्तप ।
नावरत्वे वरार्हायाः स्थित्वा चानघ नित्यदा ॥२
गान्धार्याश्चैव नृपते जातं पुत्रशतं तथा ।
श्रुत्वा न मे तथा दुःखमभवत्कुरुनन्दन ॥ ३
इदं तु मे महद्दुःखं तुल्यतायामपुत्रता ।
दिष्ट्या त्विदानीं भर्तुर्मे कुन्त्यामप्यस्ति सन्ततिः ४
यदि त्वपत्यसन्तानं कुन्तिराजसुता मयि ।
कुर्यादनुग्रहो मे स्यात्तव चापि हितं भवेत् ॥ ५
संरम्भो हि सपत्नीत्वाद्वक्तुं कुन्तिसुतां प्रति ।
यदि तु त्वं प्रसन्नो मे स्वयमेनां प्रचोदय ॥ ६
पाण्डुरुवाच ।
ममाप्येष सदा माद्रि हृद्यर्थः परिवर्तते ।
न तु त्वां प्रसहे वक्तुमिष्टानिष्टविवक्षया ॥ ७
तव त्विदं मतं मत्वा प्रयतिष्याम्यतः परम् ।
मन्ये ध्रुवं मयोक्ता सा वचनं प्रतिपत्स्यते ॥ ८
वैशंपायन उवाच ।
ततः कुन्तीं पुनः पाण्डुर्विविक्त इदमब्रवीत् ।

विगुणे प्रजोत्पादनानधिकृते। अवरत्वे कनिष्ठात्वे। वरार्हायाः कुन्त्या अपेक्षया ॥ २ ॥ संरम्भोऽभिमानः ॥ ६ ॥ इष्टमनिष्टं वा वक्ष्यसीति संदेहेन ॥ ७ ॥ प्रतिपत्स्यते अङ्गीकरिष्यति ॥ ८ ॥

'अनुगृह्णीष्व कल्याणि मद्रराजसुतामपि ।'
कुलस्य मम सन्तानं लोकस्य च कुरु प्रियम् ॥ ९
मम चापिण्डनाशाय पूर्वेषां च महात्मनाम् ।
मत्प्रियार्थं च कल्याणि कुरु कल्याणमुत्तमम् १०
यशसोऽर्थाय चैव त्वं कुरु कर्म सुदुष्करम् ।
प्राप्याधिपत्यमिन्द्रेण यज्ञैरिष्टं यशोऽर्थिना ॥ ११
तथा मन्त्रविदो विप्रास्तपस्तप्त्वा सुदुष्करम् ।
गुरूनभ्युपगच्छन्ति यशसोऽर्थाय भामिनि ॥१२
तथा राजर्षयः सर्वे ब्राह्मणाश्च तपोधनाः ।
चक्रुरुच्चावचं कर्म यशसोऽर्थाय दुष्करम् ॥ १३
सा त्वं माद्रीं प्लवेनैव तारयैनामनिन्दिते ।
अपत्यसंविधानेन परां कीर्तिमवाप्नुहि ॥ १४
'कुन्त्युवाच ।
धर्मं वै धर्मशास्त्रोक्तं यथा वदसि तत्तथा ।
तस्मादनुग्रहं तस्याः करोमि कुरुनन्दन ॥' १५
वैशंपायन उवाच ।
एवमुक्ताऽब्रवीन्माद्रीं सकृच्चिन्तय दैवतम् ।
तस्मात्ते भविताऽपत्यमनुरूपमसंशयम् ॥ १६
'ततो मन्त्रे कृते तस्मिन्विधिदृष्टेन कर्मणा ।
ततो राजसुता स्नाता शयने संविवेश ह ॥' १७
ततो माद्री विचार्यैका जगाम मनसाऽश्विनौ ।
तावागम्य सुतौ तस्यां जनयामासतुर्यमौ ।
नकुलं सहदेवं च रूपेणाप्रतिमौ भुवि ॥ १८
तथैव तावपि यमौ वागुवाचाशरीरिणी ।
'धर्मतो भक्तितश्चैव शीलतो विनयैस्तथा ॥ १९
सत्वरूपगुणोपेतौ भवतोऽत्यश्विनाविति ।
भासेते तेजसाऽत्यर्थं रूपद्रविणसंपदा ॥ २०
नामानि चक्रिरे तेषां शतशृङ्गनिवासिनः ।
भक्त्या च कर्मणा चैव तथाऽऽशीर्भिर्विशांपते २१
ज्येष्ठं युधिष्ठिरेत्येवं भीमसेनेति मध्यमम् ।
अर्जुनेति तृतीयं च कुन्तीपुत्रानकल्पयन् ॥ २२
पूर्वजं नकुलेत्येवं सहदेवेति चापरम् ।
माद्रीपुत्रावकथयंस्ते विप्राः प्रीतमानसाः ॥ २३
अनुसंवत्सरं जाता अपि ते कुरुसत्तमाः ।
पाण्डुपुत्रा व्यराजन्त पञ्चसंवत्सरा इव ॥ २४
महासत्त्वा महावीर्या महाबलपराक्रमाः ।
पाण्डुर्दृष्ट्वा सुतांस्तांस्तु देवरूपान्महौजसः ॥ २५
मुदं परमिकां लेभे ननन्द च नराधिपः ।
ऋषीणामपि सर्वेषां शतशृङ्गनिवासिनाम् ॥ २६
प्रिया बभूवुस्तासां च तथैव मुनियोषिताम् ।
कुन्तीमथ पुनः पाण्डुर्माद्र्यर्थे समचोदयत् ॥ २७
तमुवाच पृथा राजन् रहस्युक्ता तदा सती ।
उक्ता सकृद्द्वन्द्वमेषा लेभे तेनास्मि वञ्चिता ॥२८
बिभेम्यस्याः परिभवात्कुस्त्रीणां गतिरीदृशी ।
नाज्ञासिषमहं मूढा द्वन्द्वाह्वाने फलद्वयम् ॥ २९
तस्मान्नाहं नियोक्तव्या त्वयैषोऽस्तु वरो मम ।
एवं पाण्डोः सुताः पञ्च देवदत्ता महाबलाः ॥३०
संभूताः कीर्तिमन्तश्च कुरुवंशविवर्धनाः ।
शुभलक्षणसंपन्नाः सोमवत्प्रियदर्शनाः ॥ ३१
सिंहदर्पा महेष्वासाः सिंहविक्रान्तगामिनः ।
सिंहग्रीवा मनुष्येन्द्रा ववृधुर्देवविक्रमाः ॥ ३२
विवर्धमानास्ते तत्र पुण्ये हैमवते गिरौ ।
विस्मयं जनयामासुर्महर्षीणां समेयुषाम् ॥ ३३
'जातमात्रानुपादाय शतशृङ्गनिवासिनः ।
पाण्डोः पुत्रानमन्यन्त तापसाः स्वानिवात्मजान्
वैशंपायन उवाच ।
ततस्तु वृष्णयः सर्वे वसुदेवपुरोगमाः ॥ ३५
पाण्डुः शापभयाद्भीतः शतशृङ्गमुपेयिवान् ।
तत्रैव मुनिभिः सार्धं तापसोऽभूत्तपस्विभिः॥३६
शाकमूलफलाहारस्तपस्वी नियतेन्द्रियः ।
योगध्यानपरो राजा बभूवेति च वादकाः॥ ३७
प्रब्रुवन्ति स्म बहवस्तच्छ्रुत्वा शोककर्शिताः ।

---

संतानमविच्छेदम् ॥ ९ ॥ मम पूर्वेषां चापिण्डनाशाय पिण्डविनाशाभावाय । बहुषु पुत्रेषु कस्यचिदपि पुत्रस्य संततेरविच्छेदसंभवादित्यर्थः ॥ १० ॥ यशस इति कृतकृत्या अपि यशोर्थं देवगुर्वाद्याराधनं कुर्वन्तीत्यर्थः ॥ ११ ॥

अत्यश्विनौ अश्विभ्यामधिकौ ॥ २० ॥ अनुसंवत्सरं संवत्सरमनु पश्चाज्जाता अपि देवताभावात्सर्वे पञ्चसंवत्सरा इवादृश्यन्तेत्यर्थः ॥ २४ ॥ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

पाण्डोः प्रीतिसमायुक्ताः कदा श्रोष्याम संकथाः
इत्येवं कथयन्तस्ते वृष्णयः सह बान्धवैः ।
पाण्डोः पुत्रागमं श्रुत्वा सर्वे हर्षसमन्विताः॥३९
सभाजयन्तस्तेऽन्योन्यं वसुदेवं वचोऽब्रुवन् ।
न भवेरन्क्रियाहीनाः पाण्डुपुत्रा महाबलाः॥४०
पाण्डोः प्रियहितान्वेषी प्रेषय त्वं पुरोहितम् ।
वसुदेवस्तथेत्युक्त्वा विससर्ज पुरोहितम् ॥ ४१
युक्तानि च कुमाराणां पारिबर्हाण्यनेकशः ।
कुन्तीं माद्रीं च संदिश्य दासीदासपरिच्छदम् ॥४२
गावो हिरण्यं रौप्यं च प्रेषयामास भारत ।
तानि सर्वाणि संगृह्य प्रययौ स पुरोहितः ॥४३
तमागतं द्विजश्रेष्ठं काश्यपं वै पुरोहितम् ।
पूजयामास विधिवत्पाण्डुः परपुरञ्जयः ॥ ४४
पृथा माद्री च संहृष्टे वसुदेवं प्रशंसताम् ।
ततः पाण्डुः क्रियाः सर्वाः पाण्डवानामकारयत्॥
गर्भाधानादिकृत्यानि चौलोपनयनानि च ।
काश्यपः कृतवान्सर्वमुपाकर्म च भारत ॥ ४६
चौलोपनयनादूर्ध्वमृषभाक्षा यशस्विनः ।
वैदिकाध्ययने सर्वे समपद्यन्त पारगाः ॥ ४७
शर्यातेः प्रथमः पुत्रः शुक्रो नाम परन्तपः ।
येन सागरपर्यन्ता धनुषा निर्जिता मही ॥ ४८
अश्वमेधशतैरिष्ट्वा स महात्मा महामखैः ।
आराध्य देवताः सर्वाः पितॄनपि महामतिः॥४९
शतशृङ्गे तपस्तेपे शाकमूलफलाशनः ।
तेनोपकरणश्रेष्ठैः शिक्षया चोपबृंहिताः ॥ ५०
तत्प्रसादाद्धनुर्वेदे समपद्यन्त पारगाः ।
गदायां पारगो भीमस्तोमरेषु युधिष्ठिरः ॥ ५१
असिचर्मणि निष्णातौ यमौ सत्त्ववतां वरौ ।
धनुर्वेदे गतः पारं सव्यसाची परन्तपः ॥ ५२
शुक्रेण समनुज्ञातो मत्समोऽयमिति प्रभो ।
अनुज्ञाय ततो राजा शक्तिं खड्गं ततः शरान् ५३
धनुश्च दमतां श्रेष्ठस्तालमात्रं महाप्रभम् ।
विपाठक्षुरनाराचान्गृध्रपक्षैरलङ्कृतान् ॥ ५४
ददौ पार्थाय संहृष्टो महोरगसमप्रभान् ।
अवाप्य सर्वशस्त्राणि मुदितो वासवात्मजः॥५५
मेने सर्वान्महीपालानपर्याप्तान्स्वतेजसः ॥ ५६
एकवर्षान्तरास्त्वेवं परस्परमरिन्दमाः ।
अन्ववर्तन्त पार्थाश्च माद्रीपुत्रौ तथैव च ॥' ५७
ते च पञ्च शतं चैव कुरुवंशविवर्धनाः ।
सर्वे ववृधिरेऽल्पेन कालेनाप्स्विव पङ्कजाः ॥५८

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

---

## चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

पाण्डवानामायुष्यकथनम् ॥ १ ॥ माद्र्या मैथुनप्रवृत्तस्य पाण्डोर्मरणम् ॥ २ ॥ पाण्डवप्रलापः ॥ ३ ॥ माद्र्याः सहगमनम् ॥ ४ ॥ मृतस्य पाण्डोर्दहनादिसंस्कारः ॥ ५ ॥

'जनमेजय उवाच ।
कस्मिन्वयसि संप्राप्ताः पाण्डवा गजसाह्वयम् ।
समपद्यन्त देवेभ्यस्तेषामायुश्च किं परम् ॥ १
वैशंपायन उवाच ।
पाण्डवानामिहायुष्यं शृणु कौरवनन्दन ।
जगाम हास्तिनपुरं षोडशाब्दो युधिष्ठिरः ॥ २
भीमसेनः पञ्चदशो बीभत्सुर्वै चतुर्दशः ।
त्रयोदशाब्दौ च यमौ जग्मतुर्नागसाह्वयम् ॥ ३
तत्र त्रयोदशाब्दानि धार्तराष्ट्रैः सहोषिताः ।
षण्मासाज्ज्ञातुषगृहान्मुक्ता जातो घटोत्कचः ॥४
षण्मासानेकचक्रायां वर्षं पाञ्चालके गृहे ।
धार्तराष्ट्रैः सहोषित्वा पञ्च वर्षाणि भारत ॥ ५
इन्द्रप्रस्थे वसन्तस्ते त्रीणि वर्षाणि विंशतिम् ।
द्वादशाब्दानथैकं च बभूवुर्द्यूतनिर्जिताः ॥ ६
भुक्त्वा षट्त्रिंशतं राजन्सागरान्तां वसुन्धराम् ।
मासैः षड्भिर्महात्मानः सर्वे कृष्णपरायणाः ॥ ७
राज्ये परीक्षितं स्थाप्य दिष्टां गतिमवाप्नुवन् ।
एवं युधिष्ठिरस्यासीदायुरष्टोत्तरं शतम् ॥ ८

अर्जुनात्केशवो ज्येष्ठस्त्रिभिर्मासैर्महाद्युतिः ।
कृष्णात्संकर्षणो ज्येष्ठस्त्रिभिर्मासैर्महाबलः ॥ ९
पाण्डुः पञ्चमहातेजास्तान्पश्यन्पर्वते सुतान् ।
रेमे स काश्यपयुतः पत्नीभ्यां सुभृशं तदा ॥ १०
सुपुष्पितवने काले प्रवृत्ते मधुमाधवे ।
पूर्णे चतुर्दशे वर्षे फल्गुनस्य च धीमतः ॥ ११
यस्मिन्नृक्षे समुत्पन्नः पार्थस्तस्य च धीमतः ।
तस्मिन्नुत्तरफल्गुन्यां प्रवृत्ते स्वस्तिवाचने ॥ १२
रक्षणे विस्मृता कुन्ती व्यग्रा ब्राह्मणभोजने ।
पुरोहितेन सहितान्ब्राह्मणान्पर्यवेषयत् ॥' १३
वैशंपायन उवाच ।
दर्शनीयांस्ततः पुत्रान्पाण्डुः पञ्च महावने ।
तान्पश्यन्पर्वते रम्ये स्वबाहुबलमाश्रितः ॥ १४
सुपुष्पितवने काले कदाचिन्मधुमाधवे ।
भूतसंमोहने राजा सभार्यो व्यचरद्वनम् ॥ १५
पलाशैस्तिलकैश्चूतैश्चम्पकैः पारिभद्रकैः ।
अन्यैश्च बहुभिर्वृक्षैः फलपुष्पसमृद्धिभिः ॥ १६
जलस्थानैश्च विविधैः पद्मिनीभिश्च शोभितम् ।
पाण्डोर्वनं तत्संप्रेक्ष्य प्रजज्ञे हृदि मन्मथः ॥ १७
प्रहृष्टमनसं तत्र विचरन्तं यथाऽमरम् ।
तं माद्र्यनुजगामैका वसनं बिभ्रती शुभम् ॥ १८
समीक्षमाणः स तु तां वयःस्थां तनुवाससम् ।
तस्य कामः प्रववृते गहनेऽग्निरिवोद्गतः ॥ १९
रहस्येकां तु तां दृष्ट्वा राजा राजीवलोचनाम् ।
न शशाक नियन्तुं तं कामं कामवशीकृतः ॥ २०
'अथ सोऽष्टादशे वर्षे ऋतौ माद्रीमलङ्कृताम् ।
आजुहाव ततः पाण्डुः परीतात्मा यशस्विनीम् ॥'
तत एनां बलाद्राजा निजग्राह रहोगताम् ।
वार्यमाणस्तया देव्या विस्फुरन्त्या यथाबलम् २२
स तु कामपरीतात्मा तं शापं नान्वबुध्यत ।
माद्रीं मैथुनधर्मेण सोऽन्वगच्छद्बलादिव ॥ २३
जीवितान्ताय कौरव्य मन्मथस्य वशं गतः ।
शापजं भयमुत्सृज्य विधिना संप्रचोदितः ॥२४
तस्य कामात्मनो बुद्धिः साक्षात्कालेन मोहिता।
संप्रमथ्येन्द्रियग्रामं प्रनष्टा सह चेतसा ॥ २५
स तया सह संगम्य भार्यया कुरुनन्दनः ।
पाण्डुः परमधर्मात्मा युयुजे कालधर्मणा ॥ २६
ततो माद्री समालिङ्ग्य राजानं गतचेतसम् ।
मुमोच दुःखजं शब्दं पुनः पुनरतीव हि ॥ २७
सह पुत्रैस्ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ ।
आजग्मुः सहितास्तत्र यत्र राजा तथागतः ॥२८
ततो माद्र्यब्रवीद्राजन्नार्ता कुन्तीमिदं वचः ।
एकैव त्वमिहागच्छ तिष्ठन्त्वत्रैव दारकाः ॥ २९
तच्छ्रुत्वा वचनं तस्यास्तत्रैवाधाय दारकान् ।
हताऽहमिति विक्रुश्य सहसैवाजगाम सा ॥ ३०
दृष्ट्वा पाण्डुं च माद्रीं च शयानौ धरणीतले ।
कुन्ती शोकपरीताङ्गी विललाप सुदुःखिता ॥३१
रक्ष्यमाणो मया नित्यं वीरः सततमात्मवान् ।
कथं त्वामत्यतिक्रान्तः शापं जानन्वनौकसः ॥३२
ननु नाम त्वया माद्रि रक्षितव्यो नराधिपः ।
सा कथं लोभितवती विजने त्वं नराधिपम् ॥३३
कथं दीनस्य सततं त्वामासाद्य रहोगताम् ।
तं विचिन्तयतः शापं प्रहर्षः समजायत ॥ ३४
धन्या त्वमसि बाह्लीकि मत्तो भाग्यतरा तथा ।
दृष्टवत्यसि यद्वक्त्रं प्रहृष्टस्य महीपतेः ॥ ३५
माद्र्युवाच ।
विलपन्त्या मया देवि वार्यमाणेन चासकृत् ।
आत्मा न वारितोऽनेन सत्यं दिष्टं चिकीर्षुणा ॥
'वैशंपायन उवाच ।
तस्यास्तद्वचनं श्रुत्वा कुन्ती शोकाग्निदीपिता ।
पपात सहसा भूमौ छिन्नमूल इव द्रुमः ॥ ३७
निश्चेष्टा पतिता भूमौ मोहेन न चचाल सा ।

मधुमाधवे चैत्रवैशाखयोः संधौ तदात्मके वसन्ते ॥ १५ ॥ वयःस्थां युवतीम् । तनुवाससं सूक्ष्मवस्त्रां किंचिद्विवृताङ्गामित्यर्थः ॥ १९ ॥ कामपरीतात्मा कामेन व्याप्तचित्तः ॥ २३ ॥ बुद्धिर्भयनिश्चयः । चेतसा विचारेण ॥ २५ ॥ कालधर्मणा मृत्युना ॥ २६ ॥ तथागतः मृतः ॥ २८ ॥ त्वामत्यतिक्रान्तो बलादाक्रान्तवान् । शोकाकुलत्वादतिशब्दस्याभ्यासः ॥ ३२ ॥ प्रहर्षः कामः ॥ ३४ ॥ आत्मा चित्तम् । दिष्टं शापजं दुरदृष्टम् ॥ ३६ ॥

तस्मिन्क्षणे कृतस्नानमहताम्बरसंवृतम् ॥ ३८
अलङ्कारकृतं पाण्डुं शयानं शयने शुभे ।
कुन्तीमुत्थाप्य माद्री तु मोहेनाविष्टचेतनाम्॥३९
आर्ये एहीति तां कुन्तीं दर्शयामास कौरव ।
पादयोः पतिता कुन्ती पुनरुत्थाय भूमिपम्॥४०
रक्तचन्दनदिग्धाङ्गं महारजनवाससम् ।
सस्मितेन च वक्रेण वदन्तमिव भारतम् ॥ ४१
परिरभ्य ततो मोहाद्विललापाकुलेन्द्रिया ।
माद्री चापि समालिङ्ग्य राजानं विललाप सा ॥
तं तथा शायिनं पुत्रा ऋषयः सह चारणैः ।
अभ्येत्य सहिताः सर्वे शोकादश्रूण्यवर्तयन्॥४३
अस्तं गतमिवादित्यं संशुष्कमिव सागरम् ।
दृष्ट्वा पाण्डुं नरव्याघ्रं शोचन्ति स्म महर्षयः ॥४४
समानशोका ऋषयः पाण्डवाश्च बभूविरे ।
ते समाश्वासिते विप्रैर्विलेपतुरनिन्दिते ॥ ४५
कुन्त्युवाच ।
हा राजन्कस्य नो हित्वा गच्छसि त्रिदशालयम्।
हा राजन्मम मन्दायाः कथं माद्रीं समेत्य वै॥४६
निधनं प्राप्तवान्राजन्मद्भाग्यपरिसंक्षयात् ।
युधिष्ठिरं भीमसेनमर्जुनं च यमावुभौ ॥ ४७
कस्य हित्वा प्रियान्पुत्रान्प्रयातोऽसि विशांपते ।
नूनं त्वां त्रिदशा देवाः प्रतिनन्दन्ति भारत॥४८
यतो हि तप उग्रं वै चरितं ब्रह्मसंसदि ।
आवाभ्यां सहितो राजन्गमिष्यसि दिवं शुभम्॥
आजमीढाजमीढानां कर्मणा चरतां गतिम् ।
ननु नाम सहावाभ्यां गमिष्यामीति यत्त्वया ॥
प्रतिज्ञाता कुरुश्रेष्ठ यदाऽसि वनमागता ।
आवाभ्यां चैव सहितो गमिष्यसि विशांपते ।
मुहूर्तं क्षम्यतां राजन्द्रक्ष्येऽहं च मुखं तव ॥५१
वैशंपायन उवाच ।
विलपित्वा भृशं चैव निःसंज्ञे पतिते भुवि ।
यथा हते मृगे मृग्यौ लुब्धैर्वनगते तथा ॥ ५२
युधिष्ठिरमुखाः सर्वे पाण्डवा वेदपारगाः ।
तेऽभ्यागत्य पितुर्मूले निःसंज्ञाः पतिता भुवि ५३
पाण्डोः पादौ परिष्वज्य विलपन्ति स्म पाण्डवाः ।
हा विनष्टाः स्म तातेति हा अनाथा भवामहे ॥५४
त्वद्विहीना महाप्राज्ञ कथं जीवाम बालकाः ।
लोकनाथस्य पुत्राः स्मो न सनाथा भवामहे॥५५
क्षणेनैव महाराज अहो लोकस्य चित्रता ।
नास्मद्विधा राजपुत्रा अधन्याः सन्ति भारत॥५६
त्वद्विनाशाच्च राजेन्द्र राज्यप्रस्खलनात्तदा ।
पाण्डवाश्च वयं सर्वे प्राप्ताः स्म व्यसनं महत्॥५७
किं करिष्यामहे राजन्कर्तव्यं च प्रसीदताम् ।
भीमसेन उवाच ।
हित्वा राज्यं च भोगांश्च शतशृङ्गनिवासिना॥५८
त्वया लब्धाः स्म राजेन्द्र महता तपसा वयम् ।
हित्वा मानं वनं गत्वा स्वयमाहृत्य भक्षणम्॥५९
शाकमूलफलैर्वन्यैर्भरणं वै त्वया कृतम् ।
पुत्रानुत्पाद्य पितरो यमिच्छन्ति महात्मनः॥६०
त्रिवर्गफलमिच्छन्तस्तस्य कालोऽयमागतः ।
अभुक्त्वैव फलं राजन्गन्तुं नार्हसि भारत ॥६१
इत्येवमुक्त्वा पितरं भीमोऽपि विललाप ह ॥६२
अर्जुन उवाच ।
प्रनष्टं भारतं वंशं पाण्डुना पुनरुद्धृतम् ।
तस्मिंस्तदा वनगते नष्टं राज्यमराजकम् ॥ ६३
पुनर्निःसारितं क्षत्रं पाण्डुपुत्रैश्च पञ्चभिः ।
एतच्छ्रुत्वाऽनुमोदित्वा गन्तुमर्हसि शङ्कर ॥ ६४
इत्येवमुक्त्वा पितरं विललाप धनञ्जयः ।
यमावूचतुः ।
दुःसहं च तपः कृत्वा लब्ध्वा नो भरतर्षभ ॥६५
पुत्रलाभस्य महतः शुश्रूषादिफलं त्वया ।
न चावाप्तं किंचिदेव पुरा दशरथो यथा ॥ ६६
एवमुक्त्वा यमौ चापि विलेपतुरथातुरौ ॥' ६७
कुन्त्युवाच ।
अहं ज्येष्ठा धर्मपत्नी ज्येष्ठं धर्मफलं मम ।
अवश्यं भाविनो भावान्मा मां माद्रि निवर्तय ॥
अन्विष्यामीह भर्तारमहं प्रेतवशं गतम् ।
उत्तिष्ठ त्वं विसृज्यैनमिमान्रक्षस्व दारकान्॥६९

प्रेतवशं प्रेतराजवशम् । अन्विष्याम्यनुगमिष्यामि ॥ ६९ ॥

चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

'अवाप्य पुत्रांल्लब्धार्थान्वीरपत्नीत्वमर्थये ।
वैशंपायन उवाच ।
मद्रराजसुता कुन्तीमिदं वचनमब्रवीत् ॥' ७०
अहमेवानुयास्यामि भर्तारमपलायिनम् ।
न हि तृप्ताऽस्मि कामानां ज्येष्ठा मामनुमन्यताम् ॥
मां चाभिगम्य क्षीणोऽयं कामाद्भरतसत्तमः ।
समुच्छिद्यामि तत्कामं कथं नु यमसादने ॥ ७२
'मम हेतोर्हि राजाऽयं दिवं राजर्षिसत्तमः ।
न चैव तादृशी बुद्धिर्बान्धवाश्च न तादृशाः ॥७३
न चोत्सहे धारयितुं प्राणान्भर्त्रा विना कृता ।
तस्मात्तमनुयास्यामि यान्तं वैवस्वतक्षयम् ॥ ७४
वर्तेयं न समां वृत्तिं जात्वहं न सुतेषु ते ।
तथाहि वर्तमानां मामधर्मः संस्पृशेन्महान् ॥७५
तस्मान्मे सुतयोर्देवि वर्तितव्यं स्वपुत्रवत् ।
अन्वेष्यामि च भर्तारं व्रजन्तं यमसादनम् ॥'७६
मां हि कामयमानोऽयं राजा प्रेतवशं गतः ।
राज्ञः शरीरेण सह ममापीदं कलेवरम् ॥ ७७
दग्धव्यं सुप्रतिच्छन्नं त्वेतदार्ये प्रियं कुरु ।
दारकेष्वप्रमत्ता त्वं भवेश्चाभिहिता मया ।
अतोऽहं न प्रपश्यामि संदेष्टव्यं हितं तव ॥ ७८
'वैशंपायन उवाच ।
ऋषयस्तान्समाश्वास्य पाण्डवान्सत्यविक्रमान् ।
ऊचुः कुन्तीं च माद्रीं च समाश्वास्य तपस्विनः ७९
सुभगे बालपुत्रा तु न मर्तव्यं तथंचन ।
पाण्डवांश्चापि नेष्यामः कुरुराष्ट्रं परन्तपान् ॥८०
अधर्मेष्वर्थजातेषु धृतराष्ट्रश्च लोभवान् ।
स कदाचिन्न वर्तेत पाण्डवेषु यथाविधि ॥ ८१
कुन्त्याश्च वृष्णयो नाथाः कुन्तिभोजस्तथैव च ।
माद्र्याश्च बलिनांश्रेष्ठः शल्यो भ्राता महारथः८२
भर्त्रा तु मरणं सार्धं फलवन्नात्र संशयः ।
युवाभ्यां दुष्करं चैतद्वदन्ति द्विजपुङ्गवाः ॥ ८३
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्यव्रते स्थिता ।
यमैश्च नियमैः पूता मनोवाक्कायजैः शुभा ॥ ८४
भर्तारं चिन्तयन्ती सा भर्तारं निस्तरेच्छुभा ।
तारितश्चापि भर्ता स्यादात्मा पुत्रस्तथैव च ॥८५
तस्माज्जीवितमेवैतद्युवयोर्विद्म शोभनम् ॥ ८६
कुन्त्युवाच ।
यथा पाण्डोस्तु निर्देशस्तथा विप्रगणस्य च ।
आज्ञा शिरसि निक्षिप्ता करिष्यामि च तत्तथा॥८७
यदाहुर्भगवन्तोऽपि तन्मन्ये शोभनं परम् ।
भर्तुश्च मम पुत्राणामात्मनश्च न संशयः ॥ ८८
माद्र्युवाच ।
कुन्ती समर्था पुत्राणां योगक्षेमस्य धारणे ।
अस्या हि न समा बुद्ध्या यद्यपि स्यादरुन्धती ॥८९
कुन्त्याश्च वृष्णयो नाथाः कुन्तिभोजस्तथैव च ।
नाहं त्वमिव पुत्राणां समर्था धारणे तथा ॥९०
साऽहं भर्तारमन्विष्ये संतृप्ता नापि भोगतः ।
भर्तृलोकस्य तु ज्येष्ठा देवी मामनुमन्यताम् ॥९१
धर्मज्ञस्य कृतज्ञस्य सत्यसन्धस्य धीमतः ।
पादौ परिचरिष्यामि तथार्याऽद्यानुमन्यताम् ९२
वैशंपायन उवाच ।
एवमुक्त्वा तदा राजन्मद्रराजसुता शुभा ।
ददौ कुन्त्यै यमौ माद्री शिरसाऽभिप्रणम्य च ९३
अभिवाद्य महर्षीन्सा परिष्वज्य च पाण्डवान् ।
मूर्ध्न्युपाघ्राय बहुशः पार्थानात्मसुतौ तदा ॥९४
हस्ते युधिष्ठिरं गृह्य माद्री वाक्यमभाषत ।
कुन्ती माता अहं धात्री युष्माकं तु पिता मृतः ९५
युधिष्ठिरः पिता ज्येष्ठश्चतुर्णां धर्मतः सदा ।
वृद्धाद्युपासनासक्ताः सत्यधर्मपरायणाः ॥ ९६
तादृशा न विनश्यन्ति नैव यान्ति पराभवम् ।
तस्मात्सर्वे कुरुध्वं वै गुरुवृत्तिमतन्द्रिताः ॥ ९७
वैशंपायन उवाच ।
ऋषीणां च पृथायाश्च नमस्कृत्य पुनःपुनः ।
आयासकृपणा माद्री प्रत्युवाच पृथां तदा ॥९८
माद्र्युवाच ।
ऋषीणां संनिधावेषां यथा वागभ्युदीरिता ।
दिदृक्षमाणायाः स्वर्गं न ममैषा वृथा भवेत् ॥९९
धन्या त्वमसि वार्ष्णेयि नास्ति स्त्री सदृशी त्वया ।

वीर्यं तेजश्च योगं च माहात्म्यं च यशस्विनाम् १००
कुन्ति द्रक्ष्यसि पुत्राणां पञ्चानाममितौजसाम् ।
आर्या चाप्यभिवाद्या च मम पूज्या च सर्वतः १०१
ज्येष्ठा वरिष्ठा त्वं देवि भूषिता स्वगुणैः शुभैः ।
अभ्यनुज्ञातुमिच्छामि त्वया यादवनन्दिनि १०२
धर्मं स्वर्गं च कीर्तिं च त्वत्कृतेऽहमवाप्नुयाम् ।
यथा तथा विधत्स्वेह मा च कार्षीर्विचारणां १०३
वैशंपायन उवाच ।
बाष्पसंदिग्धया वाचा कुन्त्युवाच यशस्विनी ।
अनुज्ञाताऽसि कल्याणि त्रिदिवे सङ्गमोऽस्तु ते ॥
भर्त्रा सह विशालाक्षि क्षिप्रमद्यैव भामिनि ।
संगता स्वर्गलोके त्वं रमेथाः शाश्वतीः समाः १०५
वैशंपायन उवाच ।
ततः पुरोहितः स्नात्वा प्रेतकर्मणि पारगः ।
हिरण्यशकलानाज्यं तिलं दधि च तण्डुलान् १०६
उदकुम्भांश्च परशुं समानीय तपस्विभिः ।
अश्वमेधाग्निमाहृत्य यथान्यायं समन्ततः ॥ १०७
काश्यपः कारयामास पाण्डोः प्रेतस्य तां क्रियाम् ।
पुरोहितोक्तविधिना पाण्डोः पुत्रो युधिष्ठिरः १०८
तेनाग्निनाऽदहत्पाण्डुं कृत्वा चापि क्रियास्तदा ।
रुदञ्छोकाभिसंतप्तः पपात भुवि पाण्डवः १०९
ऋषीन्पुत्रान्पृथां चैव विसृज्य च नृपात्मज ।'
नमस्कृत्य चिताग्निस्थं धर्मपत्नी नरर्षभम् ॥११०
मद्रराजसुता तूर्णमन्वारोहद्यशस्विनी ॥ १११
'अहताम्बरसंवीतो भ्रातृभिः सहितोऽनघः ।
उदकं कृतवांस्तत्र पुरोहितमते स्थितः ॥ ११२
अर्हतस्तस्य कृत्यानि शतशृङ्गनिवासिनः ।
तापसा विधिवच्चक्रुश्चारणा ऋषिभिः सह ॥ ११३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

## पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

पाण्डवैः सह ऋषीणां हस्तिनापुरगमनम् ॥ १ ॥ पाण्डुवृत्तान्तकथनपूर्वकं पाण्डवान्भीष्माय समर्प्य ऋषीणां प्रतिनिवर्तनम् ॥ २ ॥

वैशंपायन उवाच ।
पाण्डोरुपरमं दृष्ट्वा देवकल्पा महर्षयः ।
ततो मन्त्रविदः सर्वे मन्त्रयांचक्रिरे मिथः ॥ १
तापसा ऊचुः ।
हित्वा राज्यं च राष्ट्रं च स महात्मा महायशाः ।
अस्मिंस्थाने तपस्तप्त्वा तापसाञ्शरणं गतः ॥ २
स जातमात्रान्पुत्रांश्च दारांश्च भवतामिह ।
प्रादायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः ॥३
तस्येमानात्मजान्देहं भार्यां च सुमहात्मनः ।
स्वराष्ट्रं गृह्य गच्छामो धर्म एष हि नः स्मृतः ॥४
वैशंपायन उवाच ।
ते परस्परमामन्त्र्य देवकल्पा महर्षयः ।
पाण्डोः पुत्रान्पुरस्कृत्य नगरं नागसाह्वयम् ॥ ५
उदारमनसः सिद्धा गमने चक्रिरे मनः ।
भीष्माय पण्डवान्दातुं धृतराष्ट्राय चैव हि ॥ ६
तस्मिन्नेव क्षणे सर्वे तानादाय प्रतस्थिरे ।
पाण्डोर्दारांश्च पुत्रांश्च शरीरे ते च तापसाः ॥ ७
सुखिनी सा पुरा भूत्वा सततं पुत्रवत्सला ।
प्रपन्ना दीर्घमध्वानं संक्षिप्तं तदमन्यत ॥ ८
सा त्वदीर्घेण कालेन संप्राप्ता कुरुजाङ्गलम् ।
वर्धमानपुरद्वारमाससाद यशस्विनी ॥ ९
द्वारिणं तापसा ऊचू राजानं च प्रकाशय ।
ते तु गत्वा क्षणेनैव सभायां विनिवेदिताः ॥१०
तं चारणसहस्राणां मुनीनामागमं तदा ।
श्रुत्वा नागपुरे नृणां विस्मयः समपद्यत ॥ ११
मुहूर्तोदित आदित्ये सर्वे बालपुरस्कृताः ।

देहं देहयोरस्थीनि ॥ ४ ॥ तद्गमनं संक्षिप्तममन्यत मुनीनां योगप्रभावात् स्वदेशगमनौत्कण्ठ्याद्वा ॥ ८ ॥ वर्धमानपुरद्वारं मुख्यद्वारम् ॥ ९ ॥ आरण्यानां सहस्रसंख्यानां मुनीनां चेति योज्यम् ॥ ११ ॥

सदारास्तापसान्द्रष्टुं निर्ययुः पुरवासिनः ॥ १२
स्त्रीसङ्घाः क्षत्रसङ्घाश्च यानसङ्घसमास्थिताः ।
ब्राह्मणैः सह निर्जग्मुर्ब्राह्मणानां च योषितः १३
तथा विट्शूद्रसङ्घानां महान्व्यतिकरोऽभवत् ।
न कश्चिदकरोदीर्ष्यामभवन्धर्मबुद्धयः ॥ १४
तथा भीष्मः शान्तनवः सोमदत्तोऽथ बाह्लिकः ।
प्रज्ञाचक्षुश्च राजर्षिः क्षत्ता च विदुरः स्वयम् ॥ १५
सा च सत्यवती देवी कौसल्या च यशस्विनी ।
राजदारैः परिवृता गान्धारी चापि निर्ययौ ॥१६
धृतराष्ट्रस्य दायादा दुर्योधनपुरोगमाः ।
भूषिता भूषणैश्चित्रैः शतसङ्ख्या विनिर्ययुः ॥ १७
तान्महर्षिगणान्दृष्ट्वा शिरोभिरभिवाद्य च ।
उपोपविविशुः सर्वे कौरव्याः सपुरोहिताः ॥१८
तथैव शिरसा भूमावभिवाद्य प्रणम्य च ।
उपोपविविशुः सर्वे पौरजानपदा अपि ॥ १९
तमकूजमभिज्ञाय जनौघं सर्वशस्तदा ।
पूजयित्वा यथान्यायं पाद्येनार्घ्येण च प्रभो ॥२०
भीष्मो राज्यं च राष्ट्रं च महर्षिभ्यो न्यवेदयत् ।
तेषामथो वृद्धतमः प्रत्युत्थाय जटाजिनी ।
ऋषीणां मतमाज्ञाय महर्षिरिदमब्रवीत् ॥ २१
यः स कौरव्यदायादः पाण्डुर्नाम नराधिपः ।
कामभोगान्परित्यज्य शतशृङ्गमितो गतः ॥ २२
'राजा भोगान्परित्यज्य तपस्वी संबभूव ह ।
स यथोक्तं तपस्तेपे पत्रमूलफलाशनः ॥ २३
पत्नीभ्यां सह धर्मात्मा कंचित्कालमतन्द्रितः ।
तेन वृत्तसमाचारैस्तपसा च तपस्विनः ॥ २४
तोषितास्तापसास्तत्र शतशृङ्गनिवासिनः ।
स्वर्गलोकं गन्तुकामं तापसाः संनिवार्य तम् ॥२५
उद्यन्तं सह पत्नीभ्यां विप्रा वचनमब्रुवन् ।
अनपत्यस्य राजेन्द्र पुण्या लोका न सन्ति ते ॥२६
तस्माद्धर्मं च वायुं च महेन्द्रं च तथाऽश्विनौ ।
आराधयस्व राजेन्द्र पत्नीभ्यां सह देवताः ॥ २७
प्रीताः पुत्रान्प्रदास्यन्ति ऋणमुक्तो भविष्यसि ।

व्यतिकरः संघर्षः ॥ १४ ॥

तपसा दिव्यचक्षुष्ट्वात्पश्यामस्ते तथा सुतान् २८
अस्माकं वचनं श्रुत्वा देवानाराधयत्तदा ।'
ब्रह्मचर्यव्रतस्थस्य तस्य दिव्येन हेतुना ॥ २९
साक्षाद्धर्मादयं पुत्रस्तत्र जातो युधिष्ठिरः ।
तथैनं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः ॥ ३०
मातरिश्वा ददौ पुत्रं भीमं नाम महाबलम् ।
पुरन्दरादयं जज्ञे कुन्त्यां सत्यपराक्रमः ॥ ३१
'अस्मिञ्जाते महेष्वासे पृथामिन्द्रस्तदाऽब्रवीत् ।
मत्प्रसादादयं जातः कुन्ति सत्यपराक्रमः ॥ ३२
अजेयानपि जेताऽरीन्देवतादीन्न संशयः ।'
यस्य कीर्तिर्महेष्वासान्सर्वानभिभविष्यति ॥ ३३
'युधिष्ठिरो राजसूयं भ्रातृवीर्यादवाप्स्यति ।
एष जेता मनुष्यांश्च सर्वान्गन्धर्वराक्षसान् ॥३४
एष दुर्योधनादीनां कौरवाणां च जेष्यति ।
वीरस्यैतस्य विक्रान्तैर्धर्मपुत्रो युधिष्ठिरः ॥ ३५
यक्ष्यते राजसूयाद्यैर्धर्म एव परः सदा ।'
यौ तु माद्री महेष्वासावसूत पुरुषोत्तमौ ॥ ३६
अश्विभ्यां पुरुषव्याघ्राविमौ तावपि तिष्ठतः ।
'नकुलः सहदेवश्च तावप्यमिततेजसौ ॥' ३७
चरता धर्मनित्येन वनवासं यशस्विना ।
एष पैतामहो वंशः पाण्डुना पुनरुद्धृतः ॥ ३८
पुत्राणां जन्म वृद्धिं च वैदिकाध्ययनानि च ।
पश्यन्तः सततं पाण्डोः परां प्रीतिमवाप्स्यथ ३९
वर्तमानः सतां वृत्ते पुत्रलाभमवाप च ।
पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि ॥ ४०
तं चितागतमाज्ञाय वैश्वानरमुखे हुतम् ।
प्रविष्टा पावकं माद्री हित्वा जीवितमात्मनः ४१
सा गता सह तेनैव पतिलोकमनुव्रता ।
तस्यास्तस्य च यत्कार्यं क्रियतां तदनन्तरम्' ४२
पृथां च शरणं प्राप्तां पाण्डवांश्च यशस्विनः ।
यथावदनुमन्यन्तां धर्मो ह्येष सनातनः ॥ ४३
इमे तयोः शरीरे द्वे पुत्राश्चेमे तयोर्वराः ।
क्रियाभिरनुगृह्यन्तां सह मात्रा परंतपाः ॥ ४४

अकूजं निःशब्दम् ॥ २० ॥

प्रेतकार्ये निवृत्ते तु पितृमेधं महायशाः ।
लभतां सर्वधर्मज्ञः पाण्डुः कुरुकुलोद्वहः ॥ ४५
वैशंपायन उवाच ।
एवमुक्त्वा कुरून्सर्वान्कुरूणामेव पश्यताम् ।
क्षणेनान्तर्हिताः सर्वे तापसा गुह्यकैः सह ॥ ४६
गन्धर्वनगराकारं तथैवान्तर्हितं पुनः ।
ऋषिसिद्धगणं दृष्ट्वा विस्मयं ते परं ययुः ॥ ४७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

---

## षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

पाण्डोरस्थिसंस्काराद्यन्त्येष्टिविधिः ॥ १ ॥

धृतराष्ट्र उवाच ।
पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय ।
राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः ॥ १
पशून्वासांसि रत्नानि धनानि विविधानि च ।
पाण्डोः प्रयच्छ माद्र्याश्च येभ्यो यावच्च वाञ्छितम्
यथा च कुन्ती सत्कारं कुर्यान्माद्र्यास्तथा कुरु ।
यथा न वायुर्नादित्यः पश्येतां तां सुसंवृताम् ३
न शोच्यः पाण्डुरनघः प्रशस्यः स नराधिपः ।
यस्य पञ्च सुता वीरा जाताः सुरसुतोपमाः ॥४
वैशंपायन उवाच ।
विदुरस्तं तथेत्युक्त्वा भीष्मेण सह भारत ।
पाण्डुं संस्कारयामास देशे परमपूजिते ॥ ५
ततस्तु नगरात्तूर्णमाज्यगन्धपुरस्कृताः ।
निर्हृताः पावका दीप्ताः पाण्डो राजन्पुरोहितैः ६
अथैनामार्तवैः पुष्पैर्गन्धैश्च विविधैर्वरैः ।
शिबिकां तामलङ्कृत्य वाससाऽऽच्छाद्य सर्वशः ७
तां तथा शोभितां माल्यैर्वासोभिश्च महाधनैः ।
अमात्या ज्ञातयश्चैनं सुहृदश्चोपतस्थिरे ॥ ८
नृसिंहं नरयुक्तेन परमालङ्कृतेन तम् ।
अवहन् यानमुख्येन सह माद्र्या सुसंवृतम् ॥ ९
पाण्डुरेणातपत्रेण चामरव्यजनेन च ।
सर्ववादित्रनादैश्च समलञ्चक्रिरे ततः ॥ १०
रत्नानि चाप्युपादाय बहूनि शतशो नराः ।
प्रददुः काङ्क्षमाणेभ्यः पाण्डोस्तस्यौर्ध्वदेहिके ११
अथ च्छत्राणि शुभ्राणि चामराणि बृहन्ति च ।
आजह्रुः कौरवस्यार्थे वासांसि रुचिराणि च १२
याजकैः शुक्लवासोभिर्हूयमाना हुताशनाः ।
अगच्छन्नग्रतस्तस्य दीप्यमानाः स्वलङ्कृताः ॥ १३
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव सहस्रशः ।
रुदन्तः शोकसंतप्ता अनुजग्मुर्नराधिपम् ॥ १४
अयमस्मानपाहाय दुःखे चाधाय शाश्वते ।
कृत्वा चास्माननाथांश्च क्व यास्यति नराधिपः ॥
क्रोशन्तः पाण्डवाः सर्वे भीष्मो विदुर एव च ।
'बाह्लीकः सोमदत्तश्च तथा भूरिश्रवा नृपः ॥१६
अन्योन्यं वै समाश्लिष्य अनुजग्मुः सहस्रशः ।'
रमणीये वनोद्देशे गङ्गातीरे समे शुभे ॥ १७
न्यासयामासुरथ तां शिबिकां सत्यवादिनः ।
सभार्यस्य नृसिंहस्य पाण्डोरक्लिष्टकर्मणः ॥ १८
ततस्तस्य शरीरं तु सर्वगन्धाधिवासितम् ।
शुचिकालीयकादिग्धं दिव्यचन्दनरूषितम्॥ १९
पर्यषिञ्चञ्जलेनाशु शातकुम्भमयैर्घटैः ।
चन्दनेन च शुक्लेन सर्वतः समलेपयन् ॥ २०
कालागुरुविमिश्रेण तथा तुङ्गरसेन च ।
अथैनं देशजैः शुक्लैर्वासोभिः समयोजयन् ॥ २१
संछन्नः स तु वासोभिर्जीवन्निव नराधिपः ।
शुशुभे स नरव्याघ्रो महार्हशयनोचितः ॥ २२
'हयमेधाग्निना सर्वे याजकाः सपुरोहिताः ।
वेदोक्तेन विधानेन क्रियां चक्रुः समन्त्रकम्॥'२३

---

प्रेतकार्ये सपिण्डीकरणान्ते । पितृमेधं यज्ञविशेषम् । वृषोत्सर्गादिकं वा ॥ ४५ ॥ गन्धर्वनगरं खपुरम् ॥ ४७ ॥

पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

कालीयकादिग्धं कृष्णागुरुलिप्तम् ॥ १९ ॥

याजकैरभ्यनुज्ञाते प्रेतकर्मण्यनुष्ठिते ।
घृतावसिक्तं राजानं सह माद्र्या स्वलङ्कृतम् ॥२४
तुङ्गपद्मकमिश्रेण चन्दनेन सुगन्धिना ।
'सरलं देवदारुं च गुग्गुलं लाक्षया सह ॥ २५
हरिचन्दनकाष्ठैश्च हरिबेरैरुशीरकैः ।'
अन्यैश्च विविधैर्गन्धैर्विधिना समदाहयन् ॥ २६
ततस्तयोः शरीरे द्वे दृष्ट्वा मोहवशं गता ।
हाहा पुत्रेति कौसल्या पपात सहसा भुवि ॥२७
तां प्रेक्ष्य पतितामार्तां पौरजानपदो जनः ।
रुरोद दुःखसंतप्तो राजभक्त्या कृपाऽन्वितः॥२८
कुन्त्याश्चैवार्तनादेन सर्वाणि च विचुक्रुशुः ।
मानुषैः सह भूतानि तिर्यग्योनिगतान्यपि ॥२९
तथा भीष्मः शान्तनवो विदुरश्च महामतिः ।
सर्वशः कौरवाश्चैव प्राणदन्भृशदुःखिताः ॥ ३०
ततो भीष्मोऽथ विदुरो राजा च सह पाण्डवैः ।
उदकं चक्रिरे तस्य सर्वाश्च कुरुयोषितः ॥ ३१
चुक्रुशुः पाण्डवाः सर्वे भीष्मः शान्तनवस्तथा ।
विदुरो ज्ञातयश्चैव चक्रुश्चाप्युदकक्रियाः ॥ ३२
कृतोदकांस्तानादाय पाण्डवाञ्छोककर्शितान् ।
सर्वाः प्रकृतयो राजञ्शोचमाना न्यवारयन्॥३३
यथैव पाण्डवा भूमौ सुषुपुः सह बान्धवैः ।
तथैव नागरा राजञ्शिश्यिरे ब्राह्मणादयः ॥ ३४
तद्गतानन्दमस्वस्थमाकुमारमहृष्टवत् ।
बभूव पाण्डवैः सार्धं नगरं द्वादश क्षपाः ॥ ३५

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

## सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

पाण्डोः श्राद्धदानम् ॥ १ ॥ कुमाराणां क्रीडावर्णनम् ॥ २ ॥ क्रीडायां भीमेन दुर्योधनादीनां पराभवः ॥ ३ ॥ दुर्योधनेन प्रमाणकोट्यां पातनं, सर्पैर्दंशनं, विषमिश्रभक्ष्यदानम् ॥ ४ ॥

वैशंपायन उवाच ।
ततः क्षत्ता च भीष्मश्च व्यासो राजा च बन्धुभिः ।
ददुः श्राद्धं तदा पाण्डोः स्वधामृतमयं तदा ॥१
'पुरोहितसहायास्ते यथान्यायमकुर्वत ।'
कुरूंश्च विप्रमुख्यांश्च भोजयित्वा सहस्रशः ।
रत्नौघान्द्विजमुख्येभ्यो दत्त्वा ग्रामवरांस्तथा ॥ २
कृतशौचांस्ततस्तांस्तु पाण्डवान्भरतर्षभान् ।
आदाय विविशुः सर्वे पुरं वारणसाह्वयम् ॥ ३
सततं स्मानुशोचन्तस्तमेव भरतर्षभम् ।
पौरजानपदाः सर्वे मृतं स्वमिव बान्धवम् ॥ ४
श्राद्धावसाने तु तदा दृष्ट्वा तं दुःखितं जनम् ।
संमूढां दुःखशोकार्तां व्यासो मातरमब्रवीत् ॥५
अतिक्रान्तसुखाः कालाः पर्युपस्थितदारुणाः ।
श्वःश्वः पापिष्ठदिवसाः पृथिवी गतयौवना ॥ ६
बहुमायासमाकीर्णो नानादोषसमाकुलः ।
लुप्तधर्मक्रियाचारो घोरः कालो भविष्यति ॥ ७
कुरूणामनयाच्चापि पृथिवी न भविष्यति ।
गच्छ त्वं योगमास्थाय युक्ता वस तपोवने ॥ ८
माद्राक्षीस्त्वं कुलस्यास्य घोरं संक्षयमात्मनः ।
तथेति समनुज्ञाय सा प्रविश्याब्रवीत्स्नुषाम् ॥ ९
अम्बिके तव पौत्रस्य दुर्नयात्किल भारताः ।
सानुबन्धा विनङ्क्ष्यन्ति पौराश्चैवेति नः श्रुतम् १०
तत्कौसल्यामिमामार्तां पुत्रशोकाभिपीडिताम् ।
वनमादाय भद्रं ते गच्छावो यदि मन्यसे ॥ ११
तथेत्युक्ता त्वम्बिकया भीष्ममामन्त्र्य सुव्रता ।
वनं ययौ सत्यवती स्नुषाभ्यां सह भारत ॥ १२
ताः सुघोरं तपस्तप्त्वा देव्यो भरतसत्तम ॥
देहं त्यक्त्वा महाराज गतिमिष्टां ययुस्तदा ॥१३
वैशंपायन उवाच ।
अथाप्तवन्तो वेदोक्तान्संस्कारान्पाण्डवास्तदा ।
संव्यवर्धन्त भोगांस्ते भुञ्जानाः पितृवेश्मनि ॥१४
धार्तराष्ट्रैश्च सहिताः क्रीडन्तो मुदिताः सुखम् ।
बालक्रीडासु सर्वासु विशिष्टास्तेजसाऽभवन् ॥१५
जवे लक्ष्याभिहरणे भोज्ये पांसुविकर्षणे ।

तुङ्गपद्मकौ गन्धद्रव्यविशेषौ ॥ २५ ॥ षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

श्वःश्वः पूर्वपूर्वदिनापेक्षया उत्तरमुत्तरं पापिष्ठम् । गतयौवना सम्यक्फलशून्या ॥ ६ ॥ योगं चित्तवृत्तिनिरोधं प्रयाणोद्योगं वा ।

धार्तराष्ट्रान्भीमसेनः सर्वान्स परिमर्दति ॥ १६
हर्षात्प्रक्रीडमानांस्तान् गृह्य राजन्निलीयते ।
शिरःसु विनिगृह्यैतान्योजयामास पाण्डवैः ॥१७
शतमेकोत्तरं तेषां कुमाराणां महौजसाम् ।
एक एव निगृह्णाति नातिकृच्छ्राद्वृकोदरः ॥ १८
कचेषु च निगृह्यैनान्विनिहत्य बलाद्बली ।
चकर्ष क्रोशतो भूमौ घृष्टजानुशिरोंसकान् ॥ १९
दश बालाञ्जले क्रीडन्भुजाभ्यां परिगृह्य सः ।
आस्ते स सलिले मग्नो मृतकल्पान्विमुञ्चति॥२०
फलानि वृक्षमारुह्य विचिन्वन्ति च ये तदा ।
तदा पादप्रहारेण भीमः कम्पयते द्रुमान् ॥ २१
प्रहारवेगाभिहता द्रुमा व्याघूर्णितास्ततः ।
सफलाः प्रपतन्ति स्म द्रुमात्त्रस्ताः कुमारकाः२२
'केचिद्भग्नशिरोरस्काः केचिद्भग्नकटीमुखाः ।
निपेतुर्भ्रातरः सर्वे भीमसेनभुजार्दिताः ॥' २३
न ते नियुद्धे न जवे न योग्यासु कदाचन ।
कुमारा उत्तरं चक्रुः स्पर्धमाना वृकोदरम् ॥ २४
एवं स धार्तराष्ट्रांश्च स्पर्धमानो वृकोदरः ।
अप्रियेऽतिष्ठदत्यन्तं बाल्यान्न द्रोहचेतसा ॥ २५
ततो बलमतिख्यातं धार्तराष्ट्रः प्रतापवान् ।
भीमसेनस्य तज्ज्ञात्वा दुष्टभावमदर्शयत् ॥ २६
तस्य धर्मादपेतस्य पापानि परिपश्यतः ।
मोहादैश्वर्यलोभाच्च पापा मतिरजायत ॥ २७
अयं बलवतां श्रेष्ठः कुन्तीपुत्रो वृकोदरः ।
मध्यमः कुन्तिपुत्राणां निकृत्या सन्निगृह्यतां २८
प्राणवान्विक्रमी चैव शौर्येण महताऽन्वितः ।
स्पर्धते चापि सहितानस्मानेको वृकोदरः ॥ २९
तं तु सुप्तं पुरोद्याने गङ्गायां प्रक्षिपामहे ।
अथ तस्मादवरजं श्रेष्ठं चैव युधिष्ठिरम् ॥ ३०
प्रसह्य बन्धने बद्ध्वा प्रशासिष्ये वसुन्धराम् ।
एवं स निश्चयं पापः कृत्वा दुर्योधनस्तदा ।
नित्यमेवान्तरप्रेक्षी भीमस्यासीन्महात्मनः ॥ ३१

ततो जलविहारार्थं कारयामास भारत ।
चैलकम्बलवेश्मानि विचित्राणि महान्ति च॥३२
सर्वकामैः सुपूर्णानि पताकोच्छ्रायवन्ति च ।
तत्र संजनयामास नानागाराण्यनेकशः ॥ ३३
उदकक्रीडनं नाम कारयामास भारत ।
प्रमाणकोट्यां तं देशं स्थलं किंचिदुपेत्यह ॥ ३४
'क्रीडावसाने ते सर्वे शुचिवस्त्राः स्वलङ्कृताः ।
सर्वकामसमृद्धं तदन्नं बुभुजिरे शनैः ॥ ३५
दिवसान्ते परिश्रान्ता विहृत्य च कुरूद्वहाः ।
विहारावसथेष्वेव वीरा वासमरोचयन् ॥ ३६
खिन्नस्तु बलवान्भीमो व्यायामाभ्यधिकस्तदा ।
वाहयित्वा कुमारांस्ताञ्जलक्रीडागतान्विभुः ॥३७
प्रमाणकोट्यां वासार्थं सुष्वापारुह्य तत्स्थलम् ।
शीतं वासं समासाद्य शान्तो मदविमोहितः ३८
निश्चेष्टः पाण्डवो राजन्सुष्वाप मृतवत्क्षितौ ।
ततो बद्ध्वा लतापाशैर्भीमं दुर्योधनः शनैः ॥३९
प्रमाणकोट्यां संसुप्तं गङ्गायां प्राक्षिपज्जले ।
ततः प्रबुद्धः कौन्तेयः सर्वान्संछिद्य बन्धनान्४०
उदतिष्ठद्बलाद्भूयो भीमः प्रहरतां वरः ।
स विमुक्तो महातेजा नाज्ञासीत्तेन तत्कृतम्४१
पुनर्निद्रावशं प्राप्तस्तत्रैव प्रास्वपद्बली ।
अर्धरात्र्यां व्यतीतायामुत्तस्थुः कुरुपाण्डवाः ।
दुर्योधनस्तु कौन्तेयं दृष्ट्वा निर्वेदमभ्यगात् ॥४२
सुप्तं चापि पुनः सर्पैस्तीक्ष्णदंष्ट्रैर्महाविषैः ।
कुपितैर्दंशयामास सर्वेष्वेवाङ्गसन्धिषु ॥ ४३
दंष्ट्राश्च दंष्ट्रिणां मर्मस्वपि तेन निपातिताः ।
त्वचं न चास्य बिभिदुः सारत्वात्पृथुवक्षसः ॥४४
प्रबुद्धो भीमसेनस्तान्सर्वान्सर्पानपोथयत् ।
सारथिं चास्य दयितमपहस्तेन जघ्निवान् ॥ ४५
तथान्यदिवसे राजन्हन्तुकामोऽत्यमर्षणः ।
बलनेन सहामन्त्र्य सौबलस्य मते स्थितः ॥ ४६
भोजने भीमसेनस्य ततः प्राक्षेपयद्विषम् ।

युक्ता समाहिता ॥ ८ ॥ योग्यासु क्रियास्विति शेषः । उत्तरमुत्कर्षम् ॥ २४ ॥ निकृत्या कपटेन ॥ २८ ॥ प्राणवान् बलवान् ॥ २९ ॥ प्रसह्य बलात्कारेण ॥ ३१ ॥

प्रमाणकोट्यां गङ्गायां प्रदेशविशेषे । स्थलं किंचिदर्धे जलेऽर्धे स्थले च क्रीडागारम् ॥ ३४ ॥ बलनेन तन्नामकेन सहचरेण ॥ ४६ ॥ सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

कालकूटं विषं तीक्ष्णं संभृतं रोमहर्षणम् ॥ ४७
तच्चापि भुक्त्वाऽजरयदविकारो वृकोदरः ।
विकारं नाभ्यजनयत्सुतीक्ष्णमपि तद्विषम् ॥ ४८
भीमसंहननो भीमस्तस्मादजरयद्विषम् ।
ततोऽन्यदिवसे राजन्हन्तुकामो वृकोदरम् ॥ ४९
सौबलेन सहायेन धार्तराष्ट्रोऽभ्यचिन्तयत् ।
चिन्तयन्नालभन्निद्रां दिवारात्रमतन्द्रितः ॥ ५०
एवं दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
अनेकैरप्युपायैस्ताञ्जिघांसन्ति स्म पाण्डवान् ५१
वैश्यापुत्रस्तदाचष्ट पार्थानां हितकाम्यया ।
पाण्डवा ह्यपि तत्सर्वं प्रत्यजानन्नरिन्दमाः ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥' ५२

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

---

## अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

**पुनर्भीमाय विषमिश्रभक्ष्यदानम् ॥ १ ॥ शूलकीलितायां प्रमाणकोट्यां पुनर्भीमसेनस्य पातनम् ॥ २ ॥ पाताललोकं प्राप्तस्य भीमस्य वासुकिदत्तरसपानम् ॥ ३ ॥**

'वैशंपायन उवाच ।
ततस्ते मन्त्रयामासुर्दुर्योधनपुरोगमाः ।
प्राणवान्विक्रमी चापि शौर्ये च महति स्थितः १
स्पर्धते चापि सततमस्मानेव वृकोदरः ।
तं तु सुप्तं पुरोद्याने जले शूले क्षिपामहे ॥ २
ततो जलविहारार्थं कारयामास भारत ।
प्रमाणकोट्यामुद्देशे स्थलं किंचिदुपेत्य ह ॥' ३
भक्ष्यं भोज्यं च पेयं च चोष्यं लेह्यमथापि च ।
उपपादितं नरैस्तत्र कुशलैः सूदकर्मणि ॥ ४
न्यवेदयंस्तत्पुरुषा धार्तराष्ट्राय वै तदा ।
ततो दुर्योधनस्तत्र पाण्डवानाह दुर्मतिः ॥ ५
गङ्गां चैवानुयास्याम उद्यानवनशोभिताम् ।
सहिता भ्रातरः सर्वे जलक्रीडामवाप्नुमः ॥ ६
एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिरः ।
ते रथैर्नगराकारैर्देशजैश्च गजोत्तमैः ॥ ७
निर्ययुर्नगराच्छूराः कौरवाः पाण्डवैः सह ।
उद्यानवनमासाद्य विसृज्य च महाजनम् ॥ ८
विशन्ति स्म तदा वीराः सिंहा इव गिरेर्गुहाम् ।
उद्यानमभिपश्यन्तो भ्रातरः सर्व एव ते ॥ ९
उपस्थानगृहैः शुभ्रैर्वलभीभिश्च शोभितम् ।
गवाक्षकैस्तथा जालैर्यन्त्रैः सांचारिकैरपि ॥ १०
संमार्जितं सौधकारैश्चित्रकारैश्च चित्रितम् ।
दीर्घिकाभिश्च पूर्णाभिस्तथा पुष्करिणीषु च ॥ ११
जलं तच्छुशुभे च्छन्नं फुल्लैर्जलरुहैस्तथा ।
उपच्छन्ना वसुमती तथा पुष्पैर्यथर्तुकैः ॥ १२
तत्रोपविष्टास्ते सर्वे पाण्डवाः कौरवाश्च ह ।
उपच्छन्नान्बहून्कामांस्ते भुञ्जन्ति ततस्ततः ॥ १३
अथोद्यानवरे तस्मिंस्तथा क्रीडागताश्च ते ।
परस्परस्य वक्त्रेषु ददुर्भक्ष्यांस्ततस्ततः ॥ १४
ततो दुर्योधनः पापस्तद्भक्ष्ये कालकूटकम् ।
विषं प्रक्षेपयामास भीमसेनजिघांसया ॥ १५
स्वयमुत्थाय चैवाथ हृदयेन क्षुरोपमः ।
स वाचाऽमृतकल्पश्च भ्रातृवच्च सुहृद्यथा ॥ १६
स्वयं प्रक्षिपते भक्ष्यं बहु भीमस्य पापकृत् ।
प्रभक्षितं च भीमेन तं वै दोषमजानता ॥ १७
ततो दुर्योधनस्तत्र हृदयेन हसन्निव ।
कृतकृत्यमिवात्मानं मन्यते पुरुषाधमः ॥ १८
ततस्ते सहिताः सर्वे जलक्रीडामकुर्वत ।
पाण्डवा धार्तराष्ट्राश्च तदा मुदितमानसाः ॥ १९
विहारावसथेष्वेव वीरा वासमरोचयन् ।

---

उपस्थानगृहैः यत्र राजानं कार्यिणः शूराश्चोपतिष्ठन्ति तैर्गृहैः । वलभीभिरुभयतो नमत्पक्षाभिः स्तम्भशालाभिः । यन्त्रैर्जलयन्त्रैः शतधारादिभिः । यतो युगपच्छतं धारा उच्छलन्त्यो नीहारीभूय भवनोदरं व्याप्नुवन्ति । सांचारिकैः संचारयोग्यैः ॥ १० ॥ दीर्घिकाभिः कुल्याभिः ॥ ११ ॥ उपच्छन्नानुपागतान् ॥ १३ ॥

भीमस्तु बलवान्भुक्त्वा व्यायामाभ्यधिकं जले॥
वाहयित्वा कुमारांस्ताञ्जलक्रीडागतांस्तदा ।
प्रमाणकोट्यां वासार्थी सुष्वापावाप्य तत्स्थलम्॥
शीतं वातं समासाद्य श्रान्तो मदविमोहितः ।
विषेण च परीताङ्गो निश्चेष्टः पाण्डुनन्दनः ॥ २२
ततो बद्ध्वा लतापाशैर्भीमं दुर्योधनः स्वयम् ।
'शूलान्यप्सु निखायाशु प्रादेशाभ्यन्तराणि च॥
लतापाशैर्दृढं बद्धं स्थलाज्जलमपातयत् ।
सशेषत्वान्न संप्राप्तो जले शूलिनि पाण्डवः॥२४
पपात यत्र तत्रास्य शूलं नासीद्यदृच्छया ।'
स निःसंज्ञो जलस्यान्तमवाग्वै पाण्डवोऽविशत् ।
आक्रामन्नागभवने तदा नागकुमारकान् ॥ २५
ततः समेत्य बहुभिस्तदा नागैर्महाविषैः ।
अदश्यत भृशं भीमो महादंष्ट्रैर्विषोल्बणैः ॥ २६
ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् ।
हतं सर्पविषेणैव स्थावरं जङ्गमेन तु ॥ २७
दंष्ट्राश्च दंष्ट्रिणां तेषां मर्मस्वपि निपातिताः ।
त्वचं नैवास्य बिभिदुः सारत्वात्पृथुवक्षसः ॥२८
ततः प्रबुद्धः कौन्तेयः सर्वं संछिद्य बन्धनम् ।
पोथयामास तान्सर्पान्केचिद्भीताः प्रदुद्रुवुः ॥२९
हतावशेषा भीमेन सर्वे वासुकिमभ्ययुः ।
ऊचुश्च सर्पराजानं वासुकिं वासवोपमम् ॥ ३०
अयं नरो वै नागेन्द्र ह्यप्सु बद्ध्वा प्रवेशितः ।
यथा च नो मतिर्वीर विषपीतो भविष्यति ॥३१
निश्चेष्टोऽस्माननुप्राप्तः स च दष्टोऽन्वबुध्यत ।
ससंज्ञश्चापि संवृत्तश्छित्त्वा बन्धनमाशु नः॥३२
पोथयन्तं महाबाहुं त्वं वै तं ज्ञातुमर्हसि ।
ततो वासुकिरभ्येत्य नागैरनुगतस्तदा ॥ ३३
पश्यति स्म महाबाहुं भीमं भीमपराक्रमम् ।
आर्यकेण च दृष्टः स पृथाया आर्यकेण च ॥३४
तदा दौहित्रदौहित्रः परिष्वक्तः सुपीडितम् ।
सुप्रीतश्चाभवत्तस्य वासुकिः स महायशाः ॥ ३५
अब्रवीत्तं च नागेन्द्रः किमस्य क्रियतां प्रियम् ।
धनौघो रत्ननिचयो वसु चास्य प्रदीयताम् ॥३६
एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत ।
यदि नागेन्द्र तुष्टोऽसि किमस्य धनसंचयैः॥३७
रसं पिबेत्कुमारोऽयं त्वयि प्रीते महाबलः ।
बलं नागसहस्रस्य यस्मिन्कुण्डे प्रतिष्ठितम् ॥ ३८
यावत्पिबति बालोऽयं तावदस्मै प्रदीयताम् ।
एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत ॥३९
ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः ।
प्राङ्मुखश्चोपविष्टश्च रसं पिबति पाण्डवः ॥ ४०
एकोच्छ्वासात्ततः कुण्डं पिबति स्म महाबलः ।
एवमष्टौ स कुण्डानि ह्यपिबत्पाण्डुनन्दनः ॥४१
ततस्तु शयने दिव्ये नागदत्ते महाभुजः ।
अशेत भीमसेनस्तु यथासुखमरिंदमः ॥ ४२

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

---

## ऊनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

भीममनागतं दृष्ट्वा खिन्नायाः कुन्त्या विदुरेण संवादः ॥ १ ॥ रसपानेन नागायुतबलवता भीमेन हस्तिनापुरप्रत्यागमनम् ॥ २ ॥ भीष्मेण धनुर्वेदशिक्षणार्थं कुमाराणां कृपाय निवेदनम् ॥ ३ ॥

वैशंपायन उवाच ।
'दुर्योधनस्तु पापात्मा भीममाशीविषह्रदे ।
प्रक्षिप्य कृतकृत्यं स्वमात्मानं मन्यते तदा ॥ १
प्रभातायां रजन्यां च प्रविवेश पुरं ततः ।
ब्रुवाणो भीमसेनस्तु यातो ह्यग्रत एव नः ॥' २
युधिष्ठिरस्तु धर्मात्मा ह्यविदन्पापमात्मनि ।
स्वेनानुमानेन परं साधुं समनुपश्यति ॥ ३
सोऽभ्युपेत्य तदा पार्थो मातरं भ्रातृवत्सलः ।

---

विषपीतः पीतविषः ॥ ३१ ॥ आर्यकेण नागराजेन । पृथाया आर्यकेण मातामहेन । कुन्तिभोजद्वारायं संबन्ध इति गम्यते ॥ ३४ ॥ दौहित्रदौहित्र इति त्वार्यकनागस्य दौहित्रः शूरस्तद्दौहित्रो भीम इत्यविरुद्धमेतत्। अन्ये तु शूरमातामह एवोपचारात् कुन्तीमातामहोऽपीत्याहुः ॥ ३५ ॥ रसं साधितपारदम् ॥३८॥ अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

अभिवाद्याब्रवीत्कुन्तीमम्ब भीम इहागतः ॥ ४
क्व गतो भविता मातर्नेह पश्यामि तं शुभे ।
उद्यानानि वनं चैव विचितानि समन्ततः ॥ ५
तदर्थं न च तं वीरं दृष्टवन्तो वृकोदरम् ।
मन्यमानास्ततः सर्वे यातो नः पूर्वमेव सः ॥ ६
आगताः स्म महाभागे व्याकुलेनान्तरात्मना ।
इहागम्य क्व नु गतस्त्वया वा प्रेषितः क्व नु ॥७
कथयस्व महाबाहुं भीमसेनं यशस्विनि ।
नहि मे शुध्यते भावस्तं वीरं प्रति शोभने ॥ ८
यतः प्रसुप्तं मन्येऽहं भीमं नेति हतस्तु सः ।
इत्युक्ता च ततः कुन्ती धर्मराजेन धीमता ॥ ९
हाहेति कृत्वा संभ्रान्ता प्रत्युवाच युधिष्ठिरम् ।
न पुत्र भीमं पश्यामि न मामभ्येत्यसाविति॥१०
शीघ्रमन्वेषणे यत्नं कुरु तस्यानुजैः सह ।
द्रुतं गत्वा पुरोद्यानं विचिन्वन्तिस्म पाण्डवाः११
भीमभीमेति ते वाचा पाण्डवाः समुदैरयन् ।
विचिन्वन्तोऽथ ते सर्वे न स्म पश्यन्ति भ्रातरम्॥
आगताः स्वगृहं भूय इदमूचुः पृथां तदा ।
न दृश्यते महाबाहुरम्ब भीमो वने चितः ॥ १३
विचितानि च सर्वाणि ह्युद्यानानि नदीस्तथा ।
वैशंपायन उवाच ।
ततो विदुरमानाय्य कुन्ती सा स्वं निवेशनम् १४
उवाच बलवान्क्षत्तर्भीमसेनो न दृश्यते ॥ १५
उद्यानान्निर्गताः सर्वे भ्रातरो भ्रातृभिः सह ।
तत्रैकस्तु महाबाहुर्भीमो नाभ्येति मामिह ॥१६
न च प्रीणयते चक्षुः सदा दुर्योधनस्य सः ।
क्रूरोऽसौ दुर्मतिः क्षुद्रो राज्यलुब्धोऽनपत्रपः॥१७
निहन्यादपि तं वीरं जातमन्युः सुयोधनः ।
तेन मे व्याकुलं चित्तं हृदयं दह्यतीव च ॥ १८
विदुर उवाच ।
मैवं वदस्व कल्याणि शेषसंरक्षणं कुरु ।
प्रत्यादिष्टो हि दुष्टात्मा शेषेऽपि प्रहरेत्तव ॥ १९
दीर्घायुषस्तव सुता यथोवाच महामुनिः ।
आगमिष्यति ते पुत्रः प्रीतिं चोत्पादयिष्यति ॥
वैशंपायन उवाच ।
एवमुक्त्वा ययौ विद्वान्विदुरः स्वं निवेशनम् ।
कुन्ती चिन्तापरा भूत्वा सहासीना सुतैर्गृहे ॥२१
ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः ।
तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली ॥ २२
तं दृष्ट्वा प्रतिबुध्यन्तं पाण्डवं ते भुजङ्गमाः ।
सान्त्वयामासुरव्यग्रा वचनं चेदमब्रुवन् ॥ २३
यत्ते पीतो महाबाहो रसोऽयं वीर्यसंभृतः ।
तस्मान्नागायुतबलो रणेऽधृष्यो भविष्यसि ॥२४
गच्छाद्य त्वं च स्वगृहं स्नातो दिव्यैरिमैर्जलैः ।
भ्रातरस्तेऽनुतप्यन्ति त्वां विना कुरुपुङ्गव ॥ २५
ततः स्नातो महाबाहुः शुचिशुक्लाम्बरस्रजः ।
ततो नागस्य भवने कृतकौतुकमङ्गलः ॥ २६
ओषधीभिर्विषघ्नीभिः सुरभीभिर्विशेषतः ।
भुक्तवान्परमान्नं च नागैर्दत्तं महाबलः ॥ २७
पूजितो भुजगैर्वीर आशीर्भिश्चाभिनन्दितः ।
दिव्याभरणसंछन्नो नागानामन्त्र्य पाण्डवः॥२८
उदतिष्ठत्प्रहृष्टात्मा नागलोकादरिन्दमः ।
उत्क्षिप्य च तदा नागैर्जलाज्जलरुहेक्षणः ॥ २९
तस्मिन्नेव वनोद्देशे स्थापितः कुरुनन्दनः ।
ते चान्तर्दधिरे नागाः पाण्डवस्यैव पश्यतः॥३०
तत उत्थाय कौन्तेयो भीमसेनो महाबलः ।
आजगाम महाबाहुर्मातुरन्तिकमञ्जसा ॥ ३१
ततोऽभिवाद्य जननीं ज्येष्ठं भ्रातरमेव च ।
कनीयसः समाघ्राय शिरस्स्वरिविमर्दनः ॥ ३२
तैश्चापि संपरिष्वक्तः सह मात्रा नरर्षभैः ।
अन्योन्यगतसौहार्दाद्दिष्ट्या दिष्ट्येति चाब्रुवन्३३
ततस्तत्सर्वमाचष्ट दुर्योधनविचेष्टितम् ।
भ्रातॄणां भीमसेनश्च महाबलपराक्रमः ॥ ३४
नागलोके च यद्वृत्तं गुणदोषमशेषतः ।
तच्च सर्वमशेषेण कथयामास पाण्डवः ॥ ३५
ततो युधिष्ठिरो राजा भीममाह वचोऽर्थवत् ।

भावश्चित्तं न शुध्यते जीवतीति न मनुते ॥ ८ ॥ प्रत्यादिष्टः कुतो भीमं हतवानसीत्युपालब्धः ॥ १९ ॥

तूर्णीं भव न ते जल्प्यमिदं कार्यं कथंचन ॥३६
इतःप्रभृति कौन्तेयं रक्षतान्योन्यमादृताः ।
एवमुक्त्वा महाबाहुर्धर्मराजो युधिष्ठिरः ॥ ३७
भ्रातृभिः सहितः सर्वैरप्रमत्तोऽभवत्तदा ।
यदा त्ववगतास्ते वै पाण्डवास्तस्य कर्म तत्॥३८
नत्वेव बहुलं चक्रुः प्रयता मन्त्ररक्षणे ।
धर्मात्मा विदुरस्तेषां प्रददौ मतिमान्मतिम् ॥३९
दुर्योधनोऽपि तं दृष्ट्वा पाण्डवं पुनरागतम् ।
निश्वसंश्चिन्तयंश्चैवमहन्यहनि तप्यते ॥ ४०
कुमारान्क्रीडमानांस्तान्दृष्ट्वा राजातिदुर्मदान् ।
गुरुं शिक्षार्थमन्विष्य गौतमं तान्न्यवेदयत् ॥४१
शरस्तम्बे समुद्भूतं वेदशास्त्रार्थपारगम् ।
'राज्ञा निवेदितास्तस्मै ते च सर्वे च निष्ठिताः ।'
अधिजग्मुश्च कुरवो धनुर्वेदं कृपात्तु ते ॥ ४२

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि ऊनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

---

## चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

कृपद्रोणाश्वत्थामाचार्याणामुत्पत्तिः ॥ १ ॥ द्रोणाचार्यस्य परशुरामादस्त्रलाभः ॥ २ ॥

जनमेजय उवाच ।
कृपस्यापि मम ब्रह्मन्संभवं वक्तुमर्हसि ।
शरस्तम्बात्कथं जज्ञे कथं वाऽस्त्राण्यवाप्तवान् ॥१
वैशंपायन उवाच ।
महर्षेर्गौतमस्यासीच्छरद्वान्नाम गौतमः ।
पुत्रः किल महाराज जातः सहशरैर्विभो ॥ २
न तस्य वेदाध्ययने तथा बुद्धिरजायत ।
यथास्य बुद्धिरभवद्धनुर्वेदे परन्तप ॥ ३
अधिजग्मुर्यथा वेदांस्तपसा ब्रह्मचारिणः ।
तथा स तपसोपेतः सर्वाण्यस्त्राण्यवाप ह ॥ ४
धनुर्वेदपरत्वाच्च तपसा विपुलेन च ।
भृशं सन्तापयामास देवराजं स गौतमः ॥ ५
ततो जालवतीं नाम देवकन्यां सुरेश्वरः ।
प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव ॥ ६
सा हि गत्वाऽऽश्रमं तस्य रमणीयं शरद्वतः ।
धनुर्बाणधरं बाला लोभयामास गौतमम् ॥ ७
तामेकवसनां दृष्ट्वा गौतमोऽप्सरसं वने ।
लोकेऽप्रतिमसंस्थानां प्रोत्फुल्लनयनोऽभवत् ॥ ८
धनुश्च हि शरास्तस्य कराभ्यामपतन्भुवि ।
वेपथुश्चास्य सहसा शरीरे समजायत ॥ ९
स तु ज्ञानगरीयस्त्वात्तपसश्च समर्थनात् ।
अवतस्थे महाप्राज्ञो धैर्येण परमेण ह ॥ १०
यस्तस्य सहसा राजन्विकारः समदृश्यत ।
तेन सुस्राव रेतोऽस्य स च तन्नान्वबुध्यत ॥ ११
धनुश्च सशरं त्यक्त्वा तथा कृष्णाजिनानि च ।
स विहायाश्रमं तं च तां चैवाप्सरसं मुनिः॥१२
जगाम रेतस्तत्तस्य शरस्तम्बे पपात च ।
शरस्तम्बे च पतितं द्विधा तदभवन्नृप ॥ १३
तस्याथ मिथुनं जज्ञे गौतमस्य शरद्वतः ।
'महर्षेर्गौतमस्यास्य ह्याश्रमस्य समीपतः ॥'
मृगयां चरतो राज्ञः शान्तनोस्तु यदृच्छया॥ १४
कश्चित्सेनाचरोऽरण्ये मिथुनं तदपश्यत ।
धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च ॥ १५
ज्ञात्वा द्विजस्य चापत्ये धनुर्वेदान्तगस्य ह ।
स राज्ञे दर्शयामास मिथुनं सशरं धनुः ॥ १६
स तदादाय मिथुनं राजा च कृपयान्वितः ।
आजगाम गृहानेव मम पुत्राविति ब्रुवन् ॥ १७
ततः संवर्धयामास संस्कारैश्चाप्ययोजयत् ।
प्रातिपेयो नरश्रेष्ठो मिथुनं गौतमस्य तत् ॥ १८
कृपया यन्मया बालाविमौ संवर्धिताविति ।
तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः ।
'तस्मात्कृप इति ख्यातः कृपी कन्या च साऽभवत्'

---

तान्कुरुबालकान् न्यवेदयत् ॥ ४१ ॥ ऊनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

गौतमो गोत्रतः ॥ २ ॥ समर्थनात्सामर्थ्यात् ॥ १० ॥ प्रातिपेयः प्रतीपपुत्रः ॥ १८ ॥ संवर्धिताविति आलोच्येति

पितापि गौतमस्तत्र तपसा तावविन्दत ।
आगत्य तस्मै गोत्रादि सर्वमाख्यातवांस्तदा २०
'कृपोऽपि च तदा राजन्धनुर्वेदपरोऽभवत् ।'
चतुर्विधं धनुर्वेदं शास्त्राणि विविधानि च ॥२१
निखिलेनास्य तत्सर्वं गुह्यमाख्यातवान्पिता ।
सोऽचिरेणैव कालेन परमाचार्यतां गतः ॥ २२
कृपमाहूय गाङ्गेयस्तव शिष्या इति ब्रुवन् ।
पौत्रान्परिसमाधाय कृपमाराधयत्तदा ॥ २३
ततोऽधिजग्मुः सर्वे ते धनुर्वेदं महारथाः ।
धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः ॥ २४
वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः ।
'कृपमाचार्यमासाद्य परमास्त्रज्ञतां गताः ।'
वैशंपायन उवाच ।
विशेषार्थी ततो भीष्मः पौत्राणां विनयेप्सया२५
इष्वस्त्रज्ञान्पर्यपृच्छदाचार्यान्वीर्यसंमतान् ।
नाल्पधीर्नामहाभागस्तथा नानस्त्रकोविदः ॥२६
नादेवसत्त्वो विनयेत्कुरूनस्त्रे महाबलान् ।
इति संचिन्त्य गाङ्गेयस्तदा भरतसत्तमः ॥ २७
द्रोणाय वेदविदुषे भारद्वाजाय धीमते ।
पाण्डवान्कौरवांश्चैव ददौ शिष्यान्नरर्षभ ॥ २८
शास्त्रतः पूजितश्चैव सम्यक्तेन महात्मना ।
स भीष्मेण महाभागस्तुष्टोऽस्त्रविदुषां वरः ॥२९
प्रतिजग्राह तान्सर्वाञ्शिष्यत्वेन महायशाः ।
शिक्षयामास च द्रोणो धनुर्वेदमशेषतः ॥ ३०
तेऽचिरेणैव कालेन सर्वशस्त्रविशारदाः ।
बभूवुः कौरवा राजन्पाण्डवाश्चामितौजसः॥ ३१
जनमेजय उवाच ।
कथं समभवद्द्रोणः कथं चास्त्राण्यवाप्तवान् ।
कथं चागात्कुरून्ब्रह्मन्कस्य पुत्रः स वीर्यवान्३२
कथं चास्य सुतो जातः सोऽश्वत्थामाऽस्त्रवित्तमः।
एतदिच्छाम्यहं श्रोतुं विस्तरेण प्रकीर्तय ॥ ३३
वैशंपायन उवाच ।
गङ्गाद्वारं प्रति महान्बभूव भगवानृषिः ।
भरद्वाज इति ख्यातः सततं संशितव्रतः ॥ ३४
सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम् ।
महर्षिभिर्भरद्वाजो हविर्धाने चरन्पुरा ॥ ३५
ददर्शाप्सरसं साक्षाद्घृताचीमाप्लुतामृषिः ।
रूपयौवनसंपन्नां मददृप्तां मदालसाम् ॥ ३६
तस्या वायुर्नदीतीरे वसनं पर्यवर्तत ।
व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः ॥ ३७
तत्र संसक्तमनसो भरद्वाजस्य धीमतः ।
हृष्टस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥ ३८
ततः समभवद्द्रोणः कलशे तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः॥ ३९
अग्नेरस्त्रमुपादाय यदृषिर्वेद काश्यपः ।
अध्यगच्छद्भरद्वाजस्तदस्त्रं देवकार्यतः ॥ ४०
अग्निवेश्यं महाभागं भरद्वाजः प्रतापवान् ।
प्रत्यपादयदाग्नेयमस्त्रमस्त्रविदां वरः ॥ ४१
'कनिष्ठजातं स मुनिर्भ्राता भ्रातरमन्तिके ।
अग्निवेश्यस्तथा द्रोणं तदा भरतसत्तम ।'
भारद्वाजं तदाग्नेयं महास्त्रं प्रत्यपादयत् ॥ ४२
भरद्वाजसखा चासीत्पृषतो नाम पार्थिवः ।
तस्यापि द्रुपदो नाम तथा समभवत्सुतः ॥ ४३
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्थिवः ।
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ॥ ४४
ततो व्यतीते पृषते स राजा द्रुपदोऽभवत् ।
पञ्चालेषु महाबाहुरुत्तरेषु नरेश्वरः ॥ ४५
भरद्वाजोऽपि भगवानारुरोह दिवं तदा ।
तत्रैव च वसन्द्रोणस्तपस्तेपे महातपाः ॥ ४६
वेदवेदाङ्गविद्वान्स तपसा दग्धकिल्बिषः ।
ततः पितृनियुक्तात्मा पुत्रलोभान्महायशाः ॥४७
शारद्वतीं ततो भार्यां कृपीं द्रोणोऽन्वविन्दत ।
अग्निहोत्रे च धर्मे च दमे च सतत रताम् ॥ ४८
अलभद्गौतमी पुत्रमश्वत्थामानमेव च ।
स जातमात्रो व्यनदद्यथैवोच्चैःश्रवा हयः ॥ ४९

शेषः ॥ १९ ॥ विनयेप्सया शिक्षेच्छया ॥ २५ ॥ अदेवसत्त्वः नास्ति देवस्येव सत्वं सामर्थ्यं यस्य सः ॥ २७ ॥ द्रोणे द्रोण-

तच्छ्रुत्वान्तर्हितं भूतमन्तरिक्षस्थमब्रवीत् ।
अश्वस्येवास्य यत्स्थाम नदतः प्रदिशो गतम् ५०
अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति ।
सुतेन तेन सुप्रीतो भारद्वाजस्ततोऽभवत् ॥ ५१
तत्रैव च वसन्धीमान्धनुर्वेदपरोऽभवत् ।
स शुश्राव महात्मानं जामदग्न्यं परंतपम् ॥ ५२
सर्वज्ञानविदं विप्रं सर्वशस्त्रभृतां वरम् ।
ब्राह्मणेभ्यस्तदा राजन्दित्सन्तं वसु सर्वशः ॥५३
स रामस्य धनुर्वेदं दिव्यान्यस्त्राणि चैव ह ।
श्रुत्वा तेषु मनश्चक्रे नीतिशास्त्रे तथैव च ॥ ५४
ततः स व्रतिभिः शिष्यैस्तपोयुक्तैर्महातपाः ।
वृतः प्रायान्महाबाहुर्महेन्द्रं पर्वतोत्तमम् ॥ ५५
ततो महेन्द्रमासाद्य भारद्वाजो महातपाः ।
क्षत्रघ्नं तममित्रघ्नमपश्यद्भृगुनन्दनम् ॥ ५६
ततो द्रोणो वृतः शिष्यैरुपगम्य भृगूद्वहम् ।
आचख्यावात्मनो नाम जन्म चाङ्गिरसः कुले ५७
निवेद्य शिरसा भूमौ पादौ चैवाभ्यवादयत् ।
ततस्तं सर्वमुत्सृज्य वनं जिगमिषुं तदा ॥ ५८
जामदग्न्यं महात्मानं भारद्वाजोऽब्रवीदिदम् ।
भरद्वाजात्समुत्पन्नं तथा त्वं मामयोनिजम् ॥५९
आगतं वित्तकामं मां विद्धि द्रोणं द्विजोत्तम ।
तमब्रवीन्महात्मा स सर्वक्षत्रियमर्दनः ॥ ६०
स्वागतं ते द्विजश्रेष्ठ यदिच्छसि वदस्व मे ।
एवमुक्तस्तु रामेण भारद्वाजोऽब्रवीद्वचः ॥ ६१
रामं प्रहरतां श्रेष्ठं दित्सन्तं विविधं वसु ।
अहं धनमनन्तं हि प्रार्थये विपुलव्रत ॥ ६२

राम उवाच ।

हिरण्यं मम यच्चान्यद्वसु किंचिदिह स्थितम् ।
ब्राह्मणेभ्यो मया दत्तं सर्वमेतत्तपोधन ॥ ६३
तथैवेयं धरा देवी सागरान्ता सपत्तना ।
कश्यपाय मया दत्ता कृत्स्ना नगरमालिनी ॥६४
शरीरमात्रमेवाद्य ममेदमवशेषितम् ।
अस्त्राणि च महार्हाणि शस्त्राणि विविधानि च ॥
अस्त्राणि वा शरीरं वा ब्रह्मञ्शस्त्राणि वा पुनः ।
वृणीष्व किं प्रयच्छामि तुभ्यं द्रोण वदाशु तत् ॥

द्रोण उवाच ।

अस्त्राणि मे समग्राणि ससंहाराणि भार्गव ।
स प्रयोगरहस्यानि दातुमर्हस्यशेषतः ॥ ६७
'एतद्वसु वसूनां हि सर्वेषां विप्रसत्तम ।'
तथेत्युक्त्वा ततस्तस्मै प्रादादस्त्राणि भार्गवः ।
सरहस्यव्रतं चैव धनुर्वेदमशेषतः ॥ ६८
प्रतिगृह्य तु तत्सर्वं कृतास्त्रो द्विजसत्तमः ।
प्रियं सखायं सुप्रीतो जगाम द्रुपदं प्रति ॥ ६९

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

## एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

द्रुपदसमीपं गत्वा तेन सह स्वस्य सखित्वं कथयतो द्रोणस्य द्रुपदकृतं भर्त्सनम् ॥ १ ॥ तेन कुपितस्य द्रोणस्य हास्तिनपुरगमनम् ॥ २ ॥ क्रीडाकाले कूपपतितयोर्वीटाकन्दुकयोरुद्धरणे अशक्नुवतां कुमाराणां द्रोणकृतोऽधिक्षेपः ॥ ३ ॥ द्रोणेन वीटामुद्रिकयोः कूपादुद्धारः ॥ ४ ॥ द्रोणवृत्तान्तश्रवणेन भीष्मेण स्वगृहनिवासार्थं द्रोणं प्रति प्रार्थनम् ॥ ५ ॥

वैशंपायन उवाच ।

ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् ।
अब्रवीत्पार्थिवं राजन्सखायं विद्धि मामिह ॥ १
इत्येवमुक्तः सख्या स प्रीतिपूर्वं जनेश्वरः ।
भारद्वाजेन पाञ्चाल्यो नामृष्यत वचोऽस्य तत् २
स क्रोधामर्षजिह्मभ्रूः कषायीकृतलोचनः ।
ऐश्वर्यमदसंपन्नो द्रोणं राजाऽब्रवीदिदम् ॥ ३

द्रुपद उवाच ।

अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसा ।
यन्मां ब्रवीषि प्रसभं सखा तेऽहमिति द्विज ॥ ४

कलशाख्ये यज्ञियपात्रविशेषे ॥ ३८ ॥ स्थामशब्दः सकारस्य तकारादेशेऽश्वत्थामेति ॥ ५० ॥ चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

अकृता असंस्कृता ॥ ४ ॥

न हि राज्ञामुदीर्णानामेवंभूतैर्नरैः क्वचित् ।
सख्यं भवति मन्दात्मञ्श्रिया हीनैर्धनच्युतैः ॥५
सौहृदान्यपि जीर्यन्ते कालेन परिजीर्यतः ।
सौहृदं मे त्वया ह्यासीत्पूर्वं सामर्थ्यबन्धनम् ॥६
न सख्यमजरं लोके हृदि तिष्ठति कस्यचित् ।
कामश्चैतन्नाशयति क्रोधो वैनं रहत्युत ॥ ७
मैवं जीर्णमुपास्स्व त्वं सख्यं भवदुपाधिकृत् ।
आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनम् ८
न दरिद्रो वसुमतो नाविद्वान्विदुषः सखा ।
न शूरस्य सखा क्लीबः सखिपूर्वं किमिष्यते ॥ ९
ययोरेव समं वित्तं ययोरेव समं श्रुतम् ।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ॥१०
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ।
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते॥११

वैशंपायन उवाच ।

द्रुपदेनैवमुक्तस्तु भारद्वाजः प्रतापवान् ।
मुहूर्तं चिन्तयित्वा तु मन्युनाऽभिपरिप्लुतः ॥१२
स विनिश्चित्य मनसा पाञ्चाल्यं प्रतिबुद्धिमान् ।
'शिष्यैः परिवृतः श्रीमान्पुत्रेण सहितस्तथा॥'१३
जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ।
तां प्रतिज्ञां प्रतिज्ञाय यां कर्ता नचिरादिव ॥१४
स नागपुरमागम्य गौतमस्य निवेशने ।
भारद्वाजोऽवसत्तत्र प्रच्छन्नं द्विजसत्तमः ॥ १५
ततोऽस्य तनुजः पार्थान्कृपस्यानन्तरं प्रभुः ।
अस्त्राणि शिक्षयामास नाबुध्यन्त च तं जनाः१६
एवं स तत्र गूढात्मा कंचित्कालमुवास ह ।
कुमारास्त्वथ निष्क्रम्य समेता गजसाह्वयात् १७
क्रीडन्तो वीटया तत्र वीराः पर्यचरन्मुदा ।
'तेषां संक्रीडमानानामुदपानेऽङ्गुलीयकम् ॥ १८
पपात धर्मपुत्रस्य वीटा तत्रैव चापतत् ।
गर्ताम्बुना प्रतिच्छन्नं तारारूपमिवाम्बरे ॥ १९
दृष्ट्वा चैते कुमाराश्च तं यत्नात्पर्यवारयन् ।'
ततस्ते यत्नमातिष्ठन्वीटामुद्धर्तुमादृताः ।
न च ते प्रत्यपद्यन्त कर्म वीटोपलब्धये ॥ २०
ततोऽन्योन्यमवैक्षन्त व्रीडयावनताननाः ।
तस्या योगमविदन्तो भृशं चोत्कण्ठिताभवन् २१
तेऽपश्यन्ब्राह्मणं श्याममापन्नं पलितं कृशम् ।
कृत्यवन्तमदूरस्थमग्निहोत्रपुरस्कृतम् ॥ २२
ते तं दृष्ट्वा महात्मानमुपगम्य कुमारकाः ।
भग्नोत्साहक्रियात्मानो ब्राह्मणं पर्यवारयन् ॥२३
अथ द्रोणः कुमारांस्तान्दृष्ट्वा कृत्यवशस्तदा ।
प्रहस्य मन्दं पैशल्यादभ्यभाषत वीर्यवान् ॥ २४
अहो वो धिग्बलं क्षात्रं धिगेतां वः कृतास्त्रताम् ।
भरतस्यान्वये जाता ये वीटां नाधिगच्छत॥ २५
वीटां च मुद्रिकां चैव ह्यहमेतदपि द्वयम् ।
उद्धरेयमिषीकाभिर्भोजनं मे प्रदीयताम् ॥ २६
ततोऽब्रवीत्तदा द्रोणं कुन्तीपुत्रो युधिष्ठिरः ।
कृपस्यानुमते ब्रह्मन्भिक्षामाप्नुहि शाश्वतीम् ॥२७
एवमुक्तः प्रत्युवाच प्रहस्य भरतानिदम् ।

द्रोण उवाच ।

एषा मुष्टिरिषीकाणां मयाऽस्त्रेणाभिमन्त्रिता ॥२८
अस्या वीर्यं निरीक्षध्वं यदन्येषु न विद्यते ।
वेत्स्यामीषिकया वीटां तामिषीकां तथाऽन्यया ॥
तामन्यया समायोगे वीटाया ग्रहणं मम ।

वैशंपायन उवाच ।

ततो यथोक्तं द्रोणेन तत्सर्वं कृतमञ्जसा ॥ ३०
तदवेक्ष्य कुमारास्ते विस्मयोत्फुल्ललोचनाः ।
आश्चर्यमिदमत्यन्तमिति मत्वा वचोऽब्रुवन् ॥३१
मुद्रिकामपि विप्रर्षे शीघ्रमेतां समुद्धर ।

वैशंपायन उवाच ।

ततः शरं समादाय धनुश्चापि महायशाः ॥ ३२
शरेण विद्ध्वा मुद्रां तामूर्ध्वमावाहयत्प्रभुः ।
स शरं समुपादाय कूपादङ्गुलिवेष्टनम् ॥ ३३
ददौ ततः कुमाराणां विस्मितानामविस्मितः ।

---

रहति सख्याच्च्यावयति ॥ ७ ॥ प्रतिबुद्धिमान् प्रतीपबुद्धिमान् ॥ १३ ॥ वीटया कन्दुकेन ॥ १८ ॥ पैशल्यात् कौशल्यात् ॥ २४ ॥ गौतमीं च महातेजा भिक्षामश्नीत माचिरम् इति पाठान्तरम् ॥ २७ ॥

मुद्रिकामुद्धृतां दृष्ट्वा तमाहुस्ते कुमारकाः ॥ ३४
अभिवन्दामहे ब्रह्मन्नैतदन्येषु विद्यते ।
कोऽसि कस्यासि जानीमो वयं किं करवामहे ३५
वैशंपायन उवाच ।
एवमुक्तस्ततो द्रोणः प्रत्युवाच कुमारकान् ।
आचक्षध्वं च भीष्माय रूपेण च गुणैश्च माम् ३६
स एव सुमहातेजाः सांप्रतं प्रतिपत्स्यते ।
वैशंपायन उवाच ।
तथेत्युक्त्वा च गत्वा च भीष्ममूचुः कुमारकाः ३७
ब्राह्मणस्य वचः कृत्स्नं तच्च कर्म तथाविधम् ।
भीष्मः श्रुत्वा कुमाराणां द्रोणं तं प्रत्यजानत ॥ ३८
युक्तरूपः स हि गुरुरित्येवमनुचिन्त्य च ।
अथैनमानीय तदा स्वयमेव सुसत्कृतम् ॥ ३९
परिपप्रच्छ निपुणं भीष्मः शस्त्रभृतां वरः ।
हेतुमागमने तच्च द्रोणः सर्वं न्यवेदयत् ॥ ४०
द्रोण उवाच ।
महर्षेरग्निवेश्यस्य सकाशमहमच्युत ।
अस्त्रार्थमगमं पूर्वं धनुर्वेदजिघृक्षया ॥ ४१
ब्रह्मचारी विनीतात्मा जटिलो बहुलाः समाः ।
अवसं सुचिरं तत्र गुरुशुश्रूषणे रतः ॥ ४२
पाञ्चाल्यो राजपुत्रश्च यज्ञसेनो महाबलः ।
इष्वस्त्रहेतोर्न्यवसत्तस्मिन्नेव गुरौ प्रभुः ॥ ४३
स मे तत्र सखा चासीदुपकारी प्रियश्च मे ।
तेनाहं सह संगम्य वर्तयन्सुचिरं प्रभो ॥ ४४
बाल्यात्प्रभृति कौरव्य सहाध्ययनमेव च ।
स मे सखा सदा तत्र प्रियवादी प्रियंकरः ॥ ४५
अब्रवीदिति मां भीष्म वचनं प्रीतिवर्धनम् ।
अहं प्रियतमः पुत्रः पितुर्द्रोण महात्मनः ॥ ४६
अभिषेक्ष्यति मां राज्ये स पाञ्चाल्यो यदा तदा ।
तद्भोज्यं भवता राज्यमर्धं सत्येन ते शपे ॥ ४७
मम भोगाश्च वित्तं च त्वदधीनं सुखानि च ।
एवमुक्त्वाऽथ वव्राज कृतास्त्रः पूजितो मया ४८
तच्च वाक्यमहं नित्यं मनसा धारयंस्तदा ।
सोऽहं पितृनियोगेन पुत्रलोभाद्यशस्विनीम् ॥ ४९
शारद्वतीं महाप्रज्ञामुपयेमे महाव्रताम् ।
अग्निहोत्रे च सत्रे च दमे च सततं रताम् ॥ ५०
लेभे च गौतमी पुत्रमश्वत्थामानमौरसम् ।
भीमविक्रमकर्माणमादित्यसमतेजसम् ॥ ५१
पुत्रेण तेन प्रीतोऽहं भरद्वाजो मया यथा ।
गोक्षीरं पिबतो दृष्ट्वा धनिनस्तत्र पुत्रकान् ।
अश्वत्थामारुदद्बालस्तन्मे संदेहयद्दिशः ॥ ५२
न स्नातकोऽवसीदेत वर्तमानः स्वकर्मसु ।
इति संचिन्त्य मनसा तं देशं बहुशो भ्रमन् ॥ ५३
विशुद्धमिच्छन्गाङ्गेय धर्मोपेतं प्रतिग्रहम् ।
अन्तादन्तं परिक्रम्य नाध्यगच्छं पयस्विनीम् ५४
यवपिष्टोदकेनैनं लोभयेयं कुमारकम् ।
पीत्वा पिष्टरसं बालः क्षीरं पीतं मयाऽपि च ॥ ५५
ननर्तोत्थाय कौरव्य हृष्टो बाल्याद्विमोहितः ।
तं दृष्ट्वा नृत्यमानं तु बालैः परिवृतं सुतम् ॥ ५६
हास्यतामुपसंप्राप्तं कश्मलं तत्र मेऽभवत् ।
द्रोणं धिगस्त्वधनिनं यो धनं नाधिगच्छति ॥ ५७
पिष्टोदकं सुतो यस्य पीत्वा क्षीरस्य तृष्णया ।
नृत्यतिस्म मुदाविष्टः क्षीरं पीतं मयाऽप्युत ॥ ५८
इति संभाषतां वाचं श्रुत्वा मे बुद्धिरच्यवत् ।
आत्मानं चात्मना गर्हन्मनसेदं व्यचिन्तयम् ५९
अपि चाहं पुरा विप्रैर्वर्जितो गर्हितो वसे ।
परोपसेवां पापिष्ठां न च कुर्यां धनेप्सया ॥ ६०
इति मत्वा प्रियं पुत्रं भीष्मादाय ततो ह्यहम् ।
पूर्वस्नेहानुरागित्वात्सदारः सौमकिं गतः ॥ ६१
अभिषिक्तं तु श्रुत्वैव कृतार्थोऽस्मीति चिन्तयन् ।
प्रियं सखायं सुप्रीतो राज्यस्थं समुपागमम् ॥ ६२
संस्मरन्सङ्गमं चैव वचनं चैव तस्य तत् ।
ततो द्रुपदमागम्य सखिपूर्वमहं प्रभो ॥ ६३
अब्रुवं पुरुषव्याघ्र सखायं विद्धि मामिति ।

---

दिशः संदेहयत् दिङ्मोहमनयत् । अडभाव आर्षः ॥ ५२ ॥ स्नातको यः कश्चिदल्पगोधनः स्वधर्मलोपान्नावसीदेतातो बहुगोधनवतो ब्राह्मणस्य प्रतिग्रहमिच्छन् ॥ ५३ ॥ अन्तादन्तं देशाद्देशम् ॥ ५४ ॥ वसे उपवसे ॥ ६० ॥

उपस्थितस्तु द्रुपदं सखिवच्चास्मि सङ्गतः ॥ ६४
स मां निराकारमिव प्रहसन्निदमब्रवीत् ।
अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसा ॥ ६५
यदात्थ मां त्वं प्रसभं सखा तेऽहमिति द्विज ।
संगतानीह जीर्यन्ति कालेन परिजीर्यतः ॥ ६६
सौहृदं मे त्वया ह्यासीत्पूर्वं सामर्थ्यबन्धनम् ।
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ६७
साम्याद्धि सख्यं भवति वैषम्यान्नोपपद्यते ।
न सख्यमजरं लोके विद्यते जातु कस्यचित् ॥६८
कामो वैनं विहरति क्रोधो वैनं रहत्युत ।
मैवं जीर्णमुपास्स्व त्वं सख्यं भवदुपाधिकृत् ॥६९
आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनम् ।
नह्यनाढ्यः सखाऽऽढ्यस्य नाविद्वान्विदुषः सखा ॥
न शूरस्य सखा क्लीबः सखिपूर्वं किमिष्यते ।
न हि राज्ञामुदीर्णानामेवंभूतैर्नरैः क्वचित् ॥ ७१
सख्यं भवति मन्दात्मञ्छ्रिया हीनैर्धनच्युतैः ।
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ॥७२
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ।
अहं त्वया न जानामि राज्यार्थे संविदं कृताम् ॥
एकरात्रं तु ते ब्रह्मन्कामं दास्यामि भोजनम् ।
एवमुक्तस्त्वहं तेन सदारः प्रस्थितस्तदा ॥ ७४
तां प्रतिज्ञां प्रतिज्ञाय यां कर्ताऽस्म्यचिरादिव ।
द्रुपदेनैवमुक्तोऽहं मन्युनाऽभिपरिप्लुतः ॥ ७५
अभ्यागच्छं कुरून्भीष्म शिष्यैरर्थी गुणान्वितैः ।
ततोऽहं भवतः कामं संवर्धयितुमागतः ॥ ७६
इदं नागपुरं रम्यं ब्रूहि किं करवाणि ते ।
वैशंपायन उवाच ।
एवमुक्तस्तदा भीष्मो भारद्वाजमभाषत ॥ ७७
भीष्म उवाच ।
अपज्यं क्रियतां चापं साध्वस्त्रं प्रतिपादय ।
भुङ्क्ष्व भोगान्भृशं प्रीतः पूज्यमानः कुरुक्षये ॥७८
कुरूणामस्ति यद्वित्तं राज्यं चेदं सराष्ट्रकम् ।
त्वमेव परमो राजा सर्वे वाक्यकरास्तव ॥ ७९
यच्च ते प्रार्थितं ब्रह्मन्कृतं तदिति चिन्त्यताम् ।
दिष्ट्या प्राप्तोऽसि विप्रर्षे महान्मेऽनुग्रहः कृतः ८०

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

---

## द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

द्रोणेनास्त्रशिक्षायां कुरुपाण्डवानां शिष्यत्वेनाङ्गीकारः ॥ १ ॥ विद्याभ्याससमाप्त्यनन्तरं बहुशः परीक्षितस्यार्जुनस्य द्रोणाचार्याद्विशेषशिक्षाप्राप्तिः ॥ २ ॥ मृण्मयद्रोणप्रतिमाराधनेन एकलव्यस्य धनुर्वेदप्रतिभानं ॥ ३ ॥ मृगयार्थं गतेषु कुरुपाण्डवेषु एकलव्येन बाणैः शुनो मुखपूरणम् ॥ ४ ॥ अर्जुनप्रार्थनया द्रोणेनैकलव्यं प्रतिगम्य गुरुदक्षिणात्वेन दक्षिणाङ्गुष्ठयाचनम् ॥ ५ ॥ एकलव्येन दक्षिणाङ्गुष्ठस्य छित्वा दानम् ॥ ६ ॥ द्रोणेन शिष्यपरीक्षा ॥ ७ ॥ शिष्यपरीक्षायां युधिष्ठिरादीनां निराकरणम् ॥ ८ ॥

'वैशंपायन उवाच ।
प्रतिजग्राह तं भीष्मो गुरुं पाण्डुसुतैः सह ।
पौत्रानादाय तान्सर्वान्वसूनि विविधानि च ॥१
शिष्या इति ददौ राजन्द्रोणाय विधिपूर्वकम् ।
तदा द्रोणोऽब्रवीद्वाक्यं भीष्मं बुद्धिमतां वरम् २
कृपस्तिष्ठति चाचार्यः शस्त्रज्ञः प्राज्ञसंमतः ।
मयि तिष्ठति चेद्विप्रो वैमनस्यं गमिष्यति ॥ ३
युष्मान्किंचिच्च याचित्वा धनं संगृह्य हर्षितः ।
स्वमाश्रमपदं राजन्गमिष्यामि यथागतम् ॥ ४
एवमुक्ते तु विप्रेन्द्रं भीष्मः प्रहरतां वरः ।
अब्रवीद्द्रोणमाचार्यमुख्यं शस्त्रविदां वरम् ॥ ५
कृपस्तिष्ठतु पूज्यश्च भर्तव्यश्च मया सदा ।
त्वं गुरुर्भव पौत्राणामाचार्यस्त्वं मतो मम ।
प्रतिगृह्णीष्व पुत्रांस्त्वमस्त्रज्ञान्कुरु वै सदा ॥' ६
वैशंपायन उवाच ।
ततः संपूजितो द्रोणो भीष्मेण द्विपदां वरः ।

---

अधिज्यं कुरुवीराणां इति पाठान्तरम् । कुरुक्षये कुरुगृहे ॥ ७८ ॥ एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

विशश्राम महातेजाः पूजितः कुरुवेश्मनि ॥ ७
विश्रान्तेऽथ गुरौ तस्मिन्पौत्रानादाय कौरवान् ।
शिष्यत्वेन ददौ भीष्मो वसूनि विविधानि च ८
गृहं च सुपरिच्छन्नं धनधान्यसमाकुलम् ।
भारद्वाजाय सुप्रीतः प्रत्यपादयत प्रभुः ॥ ९
स ताञ्शिष्यान्महेष्वासः प्रतिजग्राह कौरवान् ।
पाण्डवान्धार्तराष्ट्रांश्च द्रोणो मुदितमानसः॥ १०
प्रतिगृह्य च तान्सर्वान्द्रोणो वचनमब्रवीत् ।
रहस्येकः प्रतीतात्मा कृतोपसदनांस्तथा ॥ ११

द्रोण उवाच ।

कार्यं मे काङ्क्षितं किंचिद्धृदि संपरिवर्तते ।
कृतास्त्रैस्तत्प्रदेयं मे तदेतद्वदतानघाः ॥ १२

वैशंपायन उवाच ।

तच्छ्रुत्वा कौरवेयास्ते तूष्णीमासन्विशांपते ।
अर्जुनस्तु ततः सर्वं प्रतिजज्ञे परन्तप ॥ १३
ततोऽर्जुनं तदा मूर्ध्नि समाघ्राय पुनः पुनः ।
प्रीतिपूर्वं परिष्वज्य प्ररुरोद मुदा तदा ॥ १४
'अश्वत्थामानमाहूय द्रोणो वचनमब्रवीत् ।
सखायं विद्धि ते पार्थं मया दत्तः प्रगृह्यताम् ॥१५
साधुसाध्विति तं पार्थः परिष्वज्येदमब्रवीत् ।
अद्यप्रभृति विप्रेन्द्र परवानस्मि धर्मतः ॥ १६
शिष्योऽहं त्वत्प्रसादेन जीवामि द्विजसत्तम ।
इत्युक्त्वा तु तदा पार्थः पादौ जग्राह पाण्डवः'१७
ततो द्रोणः पाण्डुपुत्रानस्त्राणि विविधानि च ।
ग्राहयामास दिव्यानि मानुषाणि च वीर्यवान् ॥
राजपुत्रास्तथा चान्ये समेत्य भरतर्षभ ।
अभिजग्मुस्ततो द्रोणमस्त्रार्थे द्विजसत्तमम् ॥ १९
वृष्णयश्चान्धकाश्चैव नानादेश्याश्च पार्थिवाः ।
सूतपुत्रश्च राधेयो गुरुं द्रोणमियात्तदा ॥ २०
स्पर्धमानस्तु पार्थेन सूतपुत्रोऽत्यमर्षणः ।
दुर्योधनं समाश्रित्य सोऽवमन्यत पाण्डवान् २१
अभ्ययात्स ततो द्रोणं धनुर्वेदचिकीर्षया ।
शिक्षाभुजबलोद्योगैस्तेषु सर्वेषु पाण्डवः ॥ २२
अस्त्रविद्यानुरागाच्च विशिष्टोऽभवदर्जुनः ।
तुल्येष्वस्त्रप्रयोगेषु लाघवे सौष्ठवेषु च ॥ २३
सर्वेषामेव शिष्याणां बभूवाभ्यधिकोऽर्जुनः ।
ऐन्द्रिमप्रतिमं द्रोण उपदेशेष्वमन्यत ॥ २४
एवं सर्वकुमाराणामिष्वस्त्रं प्रत्यपादयत् ।
कमण्डलुं च सर्वेषां प्रायच्छच्चिरकारणात् ॥ २५
पुत्राय च ददौ कुम्भमविलम्बनकारणात् ।
यावत्ते नोपगच्छन्ति तावदस्मै परां क्रियाम्॥२६
द्रोण आचष्ट पुत्राय कर्म तज्जिष्णुरौहत ।
ततः स वारुणास्त्रेण पूरयित्वा कमण्डलुम् ॥२७
सममाचार्यपुत्रेण गुरुमभ्येति फाल्गुनः ।
आचार्यपुत्रात्तस्मात्तु विशेषोपचयेऽपृथक् ॥ २८
न व्यहीयत मेधावी पार्थोऽप्यस्त्रविदां वरः ।
अर्जुनः परमं यत्नमातिष्ठद्गुरुपूजने ॥ २९
अस्त्रे च परमं योगं प्रियो द्रोणस्य चाभवत् ।
तं दृष्ट्वा नित्यमुद्युक्तमिष्वस्त्रं प्रति फाल्गुनम् ३०
आहूय वचनं द्रोणो रहः सूदमभाषत ।
अन्धकारेऽर्जुनायान्नं न देयं ते कदाचन ।
न चाख्येयमिदं चापि मद्वाक्यं विजये त्वया३१
ततः कदाचिद्भुञ्जाने प्रववौ वायुरर्जुने ।
तेन तत्र प्रदीपः स दीप्यमानो विलोपितः॥३२
भुङ्क्त एव तु कौन्तेयो नास्यादन्यत्र वर्तते ।
हस्तस्तेजस्विनस्तस्य अनुग्रहणकारणात् ॥ ३३
तदभ्यासकृतं मत्वा रात्रावपि स पाण्डवः ।
योग्यां चक्रे महाबाहुर्धनुषा पाण्डुनन्दनः ॥३४
तस्य ज्यातलनिर्घोषं द्रोणः शुश्राव भारत ।
उपेत्य चैनमुत्थाय परिष्वज्येदमब्रवीत् ॥ ३५

द्रोण उवाच ।

प्रयतिष्ये तथा कर्तुं यथा नान्यो धनुर्धरः ।
त्वत्समो भविता लोके सत्यमेतद्ब्रवीमि ते ॥ ३६

वैशंपायन उवाच ।

ततो द्रोणोऽर्जुनं भूयो हयेषु च गजेषु च ।

---

यत्प्रदेयं मे इति पाठान्तरम् ॥१२॥ द्रोणमभ्ययात् द्रोणतुल्योऽभवत् ॥२२॥ औहत तर्कितवान् ॥२७॥ अपृथक् सहैवास्ते ॥२८॥

अतो न व्यहीयत न विहीनोऽभूत् ॥ २९ ॥ योगमैकाग्र्यम् ॥ ३० ॥ अनुग्रहणमभ्यासः ॥ ३३ ॥ योग्यामभ्यासम् ॥ ३४ ॥ उत्था-

रथेषु भूमावपि च रणशिक्षामशिक्षयत् ॥ ३७
गदायुद्धेऽसिचर्यायां तोमरप्रासशक्तिषु ।
द्रोणः संकीर्णयुद्धे च शिक्षयामास कौरवान्॥३८
तस्य तत्कौशलं श्रुत्वा धनुर्वेदजिघृक्षवः ।
राजानो राजपुत्राश्च समाजग्मुः सहस्रशः ॥ ३९
'तान्सर्वाञ्शिक्षयामास द्रोणः शस्त्रभृतां वरः ।'
ततो निषादराजस्य हिरण्यधनुषः सुतः ।
एकलव्यो महाराज द्रोणमभ्याजगाम ह ॥ ४०
न स तं प्रतिजग्राह नैषादिरिति चिन्तयन् ।
शिष्यं धनुषि धर्मज्ञस्तेषामेवान्ववेक्षया ॥ ४१
'द्रोण उवाच ।
शिष्योऽसि मम नैषादे प्रयोगे बलत्तरः ।
निवर्तस्व गृहानेव अनुज्ञातोऽसि नित्यशः ॥४२
वैशंपायन उवाच ।'
स तु द्रोणस्य शिरसा पादौ गृह्य परन्तपः ।
अरण्यमनुसंप्राप्य कृत्वा द्रोणं महीमयम् ॥ ४३
तस्मिन्नाचार्यवृत्तिं च परमामास्थितस्तदा ।
इष्वस्त्रे योगमातस्थे परं नियममास्थितः ॥ ४४
परया श्रद्धयोपेतो योगेन परमेण च ।
विमोक्षादानसन्धाने लघुत्वं परमाप सः ॥ ४५
'लाघवं चास्त्रयोगं च नचिरात्प्रत्यपद्यत ।'
अथ द्रोणाभ्यनुज्ञाताः कदाचित्कुरुपाण्डवाः ।
रथैर्विनिर्ययुः सर्वे मृगयामरिमर्दनाः ॥ ४६
तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया ।
राजन्ननुजगामैकः श्वानमादाय पाण्डवान् ॥४७
तेषां विचरतां तत्र तत्तत्कर्मचिकीर्षया ।
श्वा चरन्स पथा क्रीडन्नैषादिं प्रति जग्मिवान् ४८
स कृष्णमलदिग्धाङ्गं कृष्णाजिनजटाधरम् ।
नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके॥४९
तदा तस्याथ भषतः शुनः सप्त शरान्मुखे ।
लाघवं दर्शयन्नस्त्रे मुमोच युगपद्यथा ॥ ५०
स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह ।
तं दृष्ट्वा पाण्डवा वीराः परं विस्मयमागताः ५१
लाघवं शब्दवेधित्वं दृष्ट्वा तत्परमं तदा ।
प्रेक्ष्य तं व्रीडिताश्चासन्प्रशशंसुश्च सर्वशः ॥ ५२
तं ततोऽन्वेषमाणास्ते वने वननिवासिनम् ।
ददृशुः पाण्डवा राजन्नस्यन्तमनिशं शरान् ॥५३
न चैनमभ्यजानंस्ते तदा विकृतदर्शनम् ।
तथैनं परिपप्रच्छुः को भवान्कस्य वेत्युत ॥ ५४
एकलव्य उवाच ।
निषादाधिपतेर्वीरा हिरण्यधनुषः सुतम् ।
द्रोणशिष्यं च मां वित्त धनुर्वेदकृतश्रमम् ॥ ५५
वैशंपायन उवाच ।
ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः ।
यथा वृत्तं वने सर्वं द्रोणायाचख्युरद्भुतम् ॥५६
कौन्तेयस्त्वर्जुनो राजन्नेकलव्यमनुस्मरन् ।
रहो द्रोणं समासाद्य प्रणयादिदमब्रवीत् ॥ ५७
नन्वहं परिरभ्यैकः प्रीतिपूर्वमिदं वचः ।
भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति ॥
अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्यवान् ।
अन्योऽस्ति भवतः शिष्यो निषादाधिपतेः सुतः॥
वैशंपायन उवाच ।
मुहूर्तमिव तं द्रोणश्चिन्तयित्वा विनिश्चयम् ।
सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान् ६०
ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम् ।
एकलव्यं धनुष्पाणिमस्यन्तमनिशं शरान् ॥ ६१
एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात् ।
अभिगम्योपसंगृह्य जगाम शिरसा महीम् ॥ ६२
पूजयित्वा ततो द्रोणं विधिवत्स निषादजः ।
निवेद्य शिष्यमात्मानं तस्थौ प्राञ्जलिरग्रतः॥ ६३
ततो द्रोणोऽब्रवीद्राजन्नेकलव्यमिदं वचः ।
यदि शिष्योऽसि मे वीर वेतनं दीयतां मम ६४
एकलव्यस्तु तच्छ्रुत्वा प्रीयमाणोऽब्रवीदिदम् ।
किं प्रयच्छामि भगवन्नाज्ञापयतु मां गुरुः ॥ ६५
न हि किंचिददेयं मे गुरवे ब्रह्मवित्तम ।

---

योपेत्येति क्रमः ॥ ३५ ॥ तेषामन्ववेक्षया तेभ्योऽधिको माभूदिति बुद्ध्या ॥ ४१ ॥ महीमयं मृण्मयम् ॥ ४३ ॥ इष्वस्त्रे इषुप्रयोगे योगमैकाग्र्यम् ॥ ४४ ॥ लघुत्वं शीघ्रप्रयोक्तृत्वम् ॥ ४५ ॥ वेतनं गुरुदक्षिणारूपम् ॥ ६४ ॥

वैशंपायन उवाच ।
तमब्रवीत्त्वयाङ्गुष्ठो दक्षिणो दीयतामिति ॥ ६६
एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम् ।
प्रतिज्ञामात्मनो रक्षन्सत्ये च नियतः सदा॥ ६७
तथैव हृष्टवदनस्तथैवादीनमानसः ।
छित्त्वाऽविचार्य तं प्रादाद्द्रोणायाङ्गुष्ठमात्मनः ॥
ततः शरं तु नैषादिरङ्गुलीभिर्व्यकर्षत ।
न तथा च स शीघ्रोऽभूद्यथा पूर्वं नराधिप ॥६९
ततोऽर्जुनः प्रीतमना बभूव विगतज्वरः ।
द्रोणश्च सत्यवागासीन्नान्योऽभिभविताऽर्जुनं ७०
द्रोणस्य तु तदा शिष्यौ गदायोग्यौ बभूवतुः ।
दुर्योधनश्च भीमश्च सदा संरब्धमानसौ ॥ ७१
अश्वत्थामा रहस्येषु सर्वेष्वभ्यधिकोऽभवत् ।
तथाऽतिपुरुषानन्यान्त्सारुकौ यमजावुभौ ॥ ७२
युधिष्ठिरो रथश्रेष्ठः सर्वत्र तु धनञ्जयः ।
प्रथितः सागरान्तायां रथयूथपयूथपः ॥ ७३
बुद्धियोगबलोत्साहः सर्वास्त्रेषु च निष्ठितः ।
अस्त्रे गुर्वनुरागे च विशिष्टोऽभवदर्जुनः ॥ ७४
तुल्येष्वस्त्रोपदेशेषु सौष्ठवेन च वीर्यवान् ।
एकः सर्वकुमाराणां बभूवातिरथोऽर्जुनः ॥ ७५
प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् ।
धार्तराष्ट्रा दुरात्मानो नामृष्यन्त परस्परम् ॥७६
तांस्तु सर्वान्समानीय सर्वविद्यास्त्रशिक्षितान् ।
द्रोणः प्रहरणज्ञाने जिज्ञासुः पुरुषर्षभः ॥ ७७
कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम् ।
अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत् ॥ ७८
द्रोण उवाच ।
शीघ्रं भवन्तः सर्वेऽपि धनूंष्यादाय सर्वशः ।
भासमेतं समुद्दिश्य तिष्ठध्वं सन्धितेषवः ॥ ७९
मद्वाक्यसमकालं तु शिरोऽस्य विनिपात्यताम् ।
एकैकशो नियोक्ष्यामि तथा कुरुत पुत्रकाः ८०
वैशंपायन उवाच ।
ततो युधिष्ठिरं पूर्वमुवाचाङ्गिरसां वरः ।
संधत्स्व बाणं दुर्धर्ष मद्वाक्यान्ते विमुञ्च तम् ८१
ततो युधिष्ठिरः पूर्वं धनुर्गृह्य परन्तपः ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥८२
ततो विततधन्वानं द्रोणस्तं कुरुनन्दनम् ।
स मुहूर्तादुवाचेदं वचनं भरतर्षभ ॥ ८३
पश्यसि त्वं द्रुमाग्रस्थं भासं नरवरात्मज ।
पश्यामीत्येवमाचार्यं प्रत्युवाच युधिष्ठिरः ॥ ८४
स मुहूर्तादिव पुनर्द्रोणस्तं प्रत्यभाषत ।
अथ वृक्षमिमं मां वा भ्रातॄन्वाऽपि प्रपश्यसि ८५
तमुवाच स कौन्तेयः पश्याम्येनं वनस्पतिम् ।
भवन्तं च तथा भ्रातॄन्भासं चेति पुनःपुनः ॥८६
तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव ।
नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन् ८७
ततो दुर्योधनादींस्तान्धार्तराष्ट्रान्महायशाः ।
तेनैव क्रमयोगेन जिज्ञासुः पर्यपृच्छत ॥ ८८
अन्यांश्च शिष्यान्भीमादीन्राज्ञश्चैवान्यदेशजान् ।
यदा च सर्वे तत्सर्वं पश्याम इति कुत्सिताः ८९

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

## त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

अर्जुनेन लक्ष्यभूतभासच्छेदः ॥ १ ॥ स्नानार्थं गङ्गामवतीर्णस्य द्रोणस्य ग्राहेण जङ्घायां ग्रहणम् ॥ २ ॥ अर्जुनेन ग्राहहननम् ॥ ३ ॥ अर्जुनस्य ब्रह्मशिरोस्त्रलाभः ॥ ४ ॥

वैशंपायन उवाच ।
ततो धनञ्जयं द्रोणः स्मयमानोऽभ्यभाषत ।
त्वयेदानीं प्रहर्तव्यमेतल्लक्ष्यं विलोक्यताम् ॥ १
मद्वाक्यसमकालं ते मोक्तव्योऽत्र भवेच्छरः ।

नाधिकोऽन्योऽर्जुनादभूत् इति पाठान्तरम् ॥ ७० ॥ गदायोग्यौ गदायुद्धेऽभ्यासवन्तौ ॥ ७१ ॥ त्सारुकौ खड्गयुद्धे कुशलौ ॥ ७२ ॥ भासं पक्षिविशेषम् ॥ ७९ ॥ द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

वितत्य कार्मुकं पुत्र तिष्ठ तावन्मुहूर्तकम् ॥ २
एवमुक्तः सव्यसाची मण्डलीकृतकार्मुकः ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥ ३
मुहूर्तादिव तं द्रोणस्तथैव समभाषत ।
पश्यस्येनं स्थितं भासं द्रुमं मामपि चार्जुन ॥ ४
पश्याम्येकं भासमिति द्रोणं पार्थोऽभ्यभाषत ।
न तु वृक्षं भवन्तं वा पश्यामीति च भारत ॥ ५
ततः प्रीतमना द्रोणो मुहूर्तादिव तं पुनः ।
प्रत्यभाषत दुर्धर्षः पाण्डवानां महारथम् ॥ ६
भासं पश्यसि यद्येनं तथा ब्रूहि पुनर्वचः ।
शिरः पश्यामि भासस्य न गात्रमिति सोऽब्रवीत् ७
अर्जुनेनैवमुक्तस्तु द्रोणो हृष्टतनूरुहः ।
मुञ्चस्वेत्यब्रवीत्पार्थं स मुमोचाविचारयन् ॥ ८
ततस्तस्य नगस्थस्य क्षुरेण निशितेन च ।
शिर उत्कृत्य तरसा पातयामास पाण्डवः ॥ ९
तस्मिन्कर्मणि संसिद्धे पर्यष्वजत पाण्डवम् ।
मेने च द्रुपदं सङ्ख्ये सानुबन्धं पराजितम् ॥ १०
कस्य चित्त्वथ कालस्य सशिष्योऽङ्गिरसां वरः ।
जगाम गङ्गामभितो मज्जितुं भरतर्षभ ॥ ११
अवगाढमथो द्रोणं सलिले सलिलेचरः ।
ग्राहो जग्राह बलवाञ्जङ्घान्ते कालचोदितः ॥ १२
स समर्थोऽपि मोक्षाय शिष्यान्सर्वानचोदयत् ।
ग्राहं हत्वा तु मोक्षयध्वं मामिति त्वरयन्निव १३
तद्वाक्यसमकालं तु बीभत्सुर्निशितैः शरैः ।
अवार्यैः पञ्चभिर्ग्राहं मग्नमम्भस्यताडयत् ॥ १४
इतरे त्वथ संमूढास्तत्रतत्र प्रपेदिरे ।
तं तु दृष्ट्वा क्रियोपेतं द्रोणोऽमन्यत पाण्डवम् १५
विशिष्टं सर्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा ।
स पार्थबाणैर्बहुधा खण्डशः परिकल्पितः ॥ १६
ग्राहः पञ्चत्वमापेदे जङ्घां त्यक्त्वा महात्मनः ।
'सर्वक्रियाभ्यनुज्ञानात्तथा शिष्यान्समानयत् १७
दुर्योधनं चित्रसेनं दुःशासनविविंशती ।
अर्जुनं च समानीय ह्यश्वत्थामानमेव च ॥ १८
शिशुकं मृण्मयं कृत्वा द्रोणो गङ्गाजले ततः ।
शिष्याणां पश्यतां चैव क्षिपति स महाभुजः १९
चक्षुषी वाससा चैव बद्ध्वा प्रादाच्छरासनम् ।
शिशुकं विद्ध्यतेमं वै जलस्थं बद्धचक्षुषः ॥ २०
तत्क्षणेनैव बीभत्सुरावापैर्दशभिर्वशी ।
पञ्चकैरनुविव्याध मग्नं शिशुकमम्भसि ॥ २१
ताः स दृष्ट्वा क्रियाः सर्वा द्रोणोऽमन्यत पाण्डवम् ।
विशिष्टं सर्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा ।'
तथाब्रवीन्महात्मानं भारद्वाजो महारथम् ॥ २२
गृहाणेदं महाबाहो विशिष्टमतिदुर्धरम् ।
अस्त्रं ब्रह्मशिरो नाम सप्रयोगनिवर्तनम् ॥ २३
न च ते मानुषेष्वेतत्प्रयोक्तव्यं कथंचन ।
जगद्विनिर्दहेदेतदल्पतेजसि पातितम् ॥ २४
असामान्यमिदं तात लोकेष्वस्त्रं निगद्यते ।
तद्धारयेथाः प्रयतः शृणु चेदं वचो मम ॥ २५
बाधेतामानुषः शत्रुर्यदि त्वां वीर कश्चन ।
तद्वधाय प्रयुञ्जीथास्तदस्त्रमिदमाहवे ॥ २६
तथेति संप्रतिश्रुत्य बीभत्सुः स कृताञ्जलिः ।
जग्राह परमास्त्रं तदाह चैनं पुनर्गुरुः ।
भविता त्वत्समो नान्यः पुमाँल्लोके धनुर्धरः २७

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

## चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

कुमाराणां अस्त्रशिक्षापरीक्षार्थं रङ्गनिर्माणम् ॥ १ ॥ शिक्षादर्शनार्थं भीष्मादीनां प्रेक्षागारप्रवेशः ॥ २ ॥ युधिष्ठिरादीनां परीक्षा ॥ ३ ॥ भीमदुर्योधनयोः गदायुद्धपरीक्षा ॥ ४ ॥

वैशंपायन उवाच ।
कृतास्त्रान्धार्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत ।
दृष्ट्वा द्रोणोऽब्रवीद्राजन्धृतराष्ट्रं जनेश्वरम् ॥ १
कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।

अवगाढं जलावगाहिनम् ॥ १२ ॥ मोक्षयध्वं मोचयध्वम् ॥ १३ ॥ त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

गाङ्गेयस्य च सान्निध्ये व्यासस्य विदुरस्य च ॥ २
राजन्संप्राप्तविद्यास्ते कुमाराः कुरुसत्तम ।
ते दर्शयेयुः स्वां शिक्षां राजन्ननुमते तव ॥ ३
ततोऽब्रवीन्महाराजः प्रहृष्टेनान्तरात्मना ।

धृतराष्ट्र उवाच ।

भारद्वाज महत्कर्म कृतं ते द्विजसत्तम ॥ ४
यदानुमन्यसे कालं यस्मिन्देशे यथायथा ।
तथातथा विधानाय स्वयमाज्ञापयस्व माम् ॥ ५
स्पृहयाम्यद्य निर्वेदात्पुरुषाणां सचक्षुषाम् ।
अस्त्रहेतोः पराक्रान्तान्ये मे द्रक्ष्यन्ति पुत्रकान् ६
क्षत्तर्यद्गुरुराचार्यो ब्रवीति कुरु तत्तथा ।
न हीदृशं प्रियं मन्ये भविता धर्मवत्सल ॥ ७
ततो राजानमामन्त्र्य विदुरानुमतोपि हि ।
भारद्वाजो महाप्राज्ञो मापयामास मेदिनीम् ॥८
समामवृक्षां निर्गुल्मामुदक्प्रवणसंस्थिताम् ।
तस्यां भूमौ बलिं चक्रे तिथौ नक्षत्रपूजिते ॥ ९
अवघुष्टं पुरं चापि तदर्थं भरतर्षभ ।
रङ्गभूमौ सुविपुलं शास्त्रदृष्टं यथाविधि ॥ १०
प्रेक्षागारं सुविहितं चक्रुस्ते तस्य शिल्पिनः ।
रक्षां सर्वायुधोपेतां स्त्रीणां चैव नरर्षभ ॥ ११
मञ्चांश्च कारयामासुर्यत्र जानपदा जनाः ।
विपुलानुच्छ्रयोपेताञ्शिबिकाश्च महाधनाः ॥१२
तस्मिंस्ततोऽहनि प्राप्ते राजा ससचिवस्तदा ।
'सान्तःपुरः सहामात्यो व्यासस्यानुमते तदा ।'
भीष्मं प्रमुखतः कृत्वा कृपं चाचार्यसत्तमम् ॥१३
'बाह्लीकं सोमदत्तं च भूरिश्रवसमेव च ।
कुरूनन्यांश्च सचिवानादाय नगराद्बहिः ॥ १४
रङ्गभूमिं समासाद्य ब्राह्मणैः सहितो नृपः ॥'१५
मुक्ताजालपरिक्षिप्तं वैदूर्यमणिशोभितम् ।
शातकुम्भमयं दिव्यं प्रेक्षागारमुपागमत् ॥ १६
गान्धारी च महाभागा कुन्ती च जयतां वर ।
स्त्रियश्च राज्ञः सर्वास्ताः सप्रेष्याः सपरिच्छदाः ॥
हर्षादारुरुहुर्मञ्चान्मेरुं देवस्त्रियो यथा ।

ब्राह्मणक्षत्रियाद्यं च चातुर्वर्ण्यं पुराद्द्रुतम् ॥ १८
दर्शनेप्सुः समभ्यागात्कुमाराणां कृतास्त्रताम् ।
क्षणेनैकस्थतां तत्र दर्शनेप्सुर्जगाम ह ॥ १९
प्रवादितैश्च वादित्रैर्जनकौतूहलेन च ।
महार्णव इव क्षुब्धः समाजः सोऽभवत्तदा ॥२०
ततः शुक्लाम्बरधरः शुक्लयज्ञोपवीतवान् ।
शुक्लकेशः सितश्मश्रुः शुक्लमाल्यानुलेपनः ॥ २१
रङ्गमध्यं तदाचार्यः सपुत्रः प्रविवेश ह ।
नभो जलधरैर्हीनं साङ्गारक इवांशुमान् ॥ २२
व्यासस्यानुमते चक्रे बलिं बलवतां वरः ।
ब्राह्मणांस्तु सुमन्त्रज्ञान्कारयामास मङ्गलम् ॥ २३
'सुवर्णमणिरत्नानि वस्त्राणि विविधानि च ।
प्रददौ दक्षिणां राजा द्रोणाय च कृपाय च ॥'२४
सुखपुण्याहघोषस्य पुण्यस्य समनन्तरम् ।
विविशुर्विविधं गृह्य शस्त्रोपकरणं नराः ॥ २५
ततो बद्धाङ्गुलित्राणा बद्धकक्ष्या महारथाः ।
बद्धतूणाः सधनुषो विविशुर्भरतर्षभाः ॥ २६
'रङ्गमध्ये स्थितं द्रोणमभिवाद्य नरर्षभाः ।
चक्रुः पूजां यथान्यायं द्रोणस्य च कृपस्य च ॥२७
आशीर्भिश्च प्रयुक्ताभिः सर्वे संहृष्टमानसाः ।
अभिवाद्य पुनः शस्त्रान्बलिपुष्पैः समर्चितान् २८
रक्तचन्दनसंमिश्रैः स्वयमर्चन्ति कौरवाः ।
रक्तचन्दनदिग्धाश्च रक्तमाल्यानुधारिणः ॥ २९
सर्वे रक्तपताकाश्च सर्वे रक्तान्तलोचनाः ।
द्रोणेन समनुज्ञाता गृह्य शस्त्रं परन्तपाः ॥ ३०
धनूंषि पूर्वं संगृह्य तप्तकाञ्चनभूषिताः ।
सज्यानि विविधाकाराः शरैः सन्धाय कौरवाः ॥
ज्याघोषं तलघोषं च कृत्वा भूतान्यमोहयन् ॥'३२
अनुज्येष्ठं च ते तत्र युधिष्ठिरपुरोगमाः ।
चक्रुरस्त्रं महावीर्याः कुमाराः परमाद्भुतम् ॥ ३३
'केषांचित्तत्र माल्येषु शरा निपतिता नृप ।
केषांचित्पुष्पमुकुटे निपतन्ति स्म सायकाः ॥३४
केचिल्लक्ष्याणि विविधैर्बाणैराहितलक्षणैः ।

दर्शनेप्सुः जन इति शेषः ॥ १९ ॥

अंशुमान् चन्द्रः ॥ २२ ॥

विभिदुर्लाघवोत्सृष्टैर्गुरूणि च लघूनि च ॥' ३५
केचिच्छराक्षेपभयाच्छिरांस्यवननामिरे ।
मनुजा धृष्टमपरे वीक्षाञ्चक्रुः सुविस्मिताः ॥ ३६
ते स्म लक्ष्याणि विभिदुर्बाणैर्नामाङ्कशोभितैः ।
विविधैर्लाघवोत्सृष्टैरुह्यन्तो वाजिभिर्द्रुतम् ॥ ३७
तत्कुमारबलं तत्र गृहीतशरकार्मुकम् ।
गन्धर्वनगराकारं प्रेक्ष्य ते विस्मिताभवन् ॥ ३८
सहसा चुक्रुशुश्चान्ये नराः शतसहस्रशः ।
विस्मयोत्फुल्लनयनाः साधुसाध्विति भारत ॥३९
कृत्वा धनुषि ते मार्गान्रथचर्यासु चासकृत् ।
गजपृष्ठेऽश्वपृष्ठे च नियुद्धे च महाबलाः ॥ ४०
गृहीतखड्गचर्माणस्ततो भूयः प्रहारिणः ।
त्सरुमार्गान्यथोद्दिष्टांश्चेरुः सर्वासु भूमिषु ॥ ४१
लाघवं सौष्ठवं शोभां स्थिरत्वं दृढमुष्टिताम् ।
ददृशुस्तत्र सर्वेषां प्रयोगं खड्गचर्मणोः ॥ ४२
अथ तौ नित्यसंहृष्टौ सुयोधनवृकोदरौ ।
अवतीर्णौ गदाहस्तावेकशृङ्गाविवाचलौ ॥ ४३
बद्धकक्ष्यौ महाबाहू पौरुषे पर्यवस्थितौ ।
बृंहन्तौ वासिताहेतोः समदाविव कुञ्जरौ ॥ ४४
तौ प्रदक्षिणसव्यानि मण्डलानि महाबलौ ।
चेरतुर्मण्डलगतौ समदाविव कुञ्जरौ ॥ ४५
विदुरो धृतराष्ट्राय गान्धार्याः पाण्डवारणिः ।
न्यवेदयेतां तत्सर्वं कुमाराणां विचेष्टितम् ॥ ४६

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

---

## पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

अर्जुनस्य परीक्षा ॥ १ ॥ कर्णस्य रङ्गप्रवेशः ॥ २ ॥

वैशंपायन उवाच ।
कुरुराजे हि रङ्गस्थे भीमे च बलिनां वरे ।
पक्षपातकृतस्नेहः स द्विधेवाभवज्जनः ॥ १
जय हे कुरुराजेति जय हे भीम इत्युत ।
पुरुषाणां सुविपुलाः प्रणादाः सहसोत्थिताः ॥२
ततः क्षुब्धार्णवनिभं रङ्गमालोक्य बुद्धिमान् ।
भारद्वाजः प्रियं पुत्रमश्वत्थामानमब्रवीत् ॥ ३
वारयैतौ महावीर्यौ कृतयोग्यावुभावपि ।
मा भूद्रङ्गप्रकोपोऽयं भीमदुर्योधनोद्भवः ॥ ४
वैशंपायन उवाच ।
'तत उत्थाय वेगेन अश्वत्थामा न्यवारयत् ।
गुरोराज्ञा भीम इति गान्धारे गुरुशासनम् ।
अलं शिक्षाकृतं वेगमलं साहसमित्युत ॥' ५
ततस्तावुद्यतगदौ गुरुपुत्रेण वारितौ ।
युगान्तानिलसंक्षुब्धौ महावेलाविवार्णवौ ॥ ६
ततो रङ्गाङ्गणगतो द्रोणो वचनमब्रवीत् ।
निवार्य वादित्रगणं महामेघनिभस्वनम् ॥ ७
यो मे पुत्रात्प्रियतरः सर्वशस्त्रविशारदः ।
ऐन्द्रिरिन्द्रानुजसमः स पार्थो दृश्यतामिति ॥ ८
आचार्यवचनेनाथ कृतस्वस्त्ययनो युवा ।
बद्धगोधाङ्गुलित्राणः पूर्णतूणः सकार्मुकः ॥ ९
काञ्चनं कवचं बिभ्रत्प्रत्यदृश्यत फाल्गुनः ।
सार्कः सेन्द्रायुधतडित्ससन्ध्य इव तोयदः ॥१०
ततः सर्वस्य रङ्गस्य समुत्पिञ्जलकोऽभवत् ।
प्रावाद्यन्त च वाद्यानि सशङ्खानि समन्ततः ॥११
प्रेक्षका ऊचुः ।
एष कुन्तीसुतः श्रीमानेष मध्यमपाण्डवः ।
एष पुत्रो महेन्द्रस्य कुरूणामेष रक्षिता ॥ १२

---

गन्धर्वनगराकारमद्भुतरूपम् ॥ ३८ ॥ संहृष्टौ परस्परं जेतुं सकामौ ॥४३॥ बृंहन्तौ शब्दं कुर्वाणौ । वासिता हस्तिनी ॥४४॥ मण्डलगतावलातचक्रवद्भ्राम्यमाणगदापरिवेषान्तर्गतौ ॥ ४५ ॥ पाण्डवारणिः कुन्ती ॥ ४६ ॥ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

कृतयोग्यौ सुशिक्षितौ ॥ ४ ॥ तूणकार्मुककवचानां तत्प्रभाजालस्यार्जुनस्य च क्रमादर्केन्द्रायुधतडित्संध्यातोयदैरुपमा ॥१०॥ समुत्पिञ्जलक उत्फुल्लता ॥ ११ ॥

एषोऽस्त्रविदुषां श्रेष्ठ एष धर्मभृतां वरः ।
एष शीलवतां चापि शीलज्ञाननिधिः परः ॥ १३
वैशंपायन उवाच ।
इत्येवं तुमुला वाचः शुश्रुवुः प्रेक्षकेरिताः ।
कुन्त्याः प्रस्नवसंयुक्तैरस्रैः क्लिन्नमुरोऽभवत् ॥ १४
तेन शब्देन महता पूर्णश्रुतिरथाब्रवीत् ।
धृतराष्ट्रो नरश्रेष्ठो विदुरं हृष्टमानसः ॥ १५
क्षत्तः क्षुब्धार्णवनिभः किमेष सुमहास्वनः ।
सहसैवोत्थितो रङ्गे भिन्दन्निव नभस्तलम् ॥ १६
विदुर उवाच ।
एष पार्थो महाराज फाल्गुनः पाण्डुनन्दनः ।
अवतीर्णः सकवचस्तत्रैष सुमहास्वनः ॥ १७
धृतराष्ट्र उवाच ।
धन्योऽस्म्यनुगृहीतोऽस्मि रक्षितोऽस्मि महामते ।
पृथारणिसमुद्भूतैस्त्रिभिः पाण्डववह्निभिः ॥ १८
वैशंपायन उवाच ।
तस्मिन्प्रमुदिते रङ्गे कथंचित्प्रत्युपस्थिते ।
दर्शयामास बीभत्सुराचार्यायास्त्रलाघवम् ॥ १९
आग्नेयेनासृजद्वह्निं वारुणेनासृजत्पयः ।
वायव्येनासृजद्वायुं पार्जन्येनासृजद्घनान् ॥ २०
भौमेन प्राविशद्भूमिं पार्वतेनासृजद्गिरीन् ।
अन्तर्धानेन चास्त्रेण पुनरन्तर्हितोऽभवत् ॥ २१
क्षणात्प्रांशुः क्षणाद्ध्रस्वः क्षणाच्च रथधूर्गतः ।
क्षणेन रथमध्यस्थः क्षणेनावतरन्महीम् ॥ २२
सुकुमारं च सूक्ष्मं च गुरु चापि गुरुप्रियः ।
सौष्ठवेनाभिसंयुक्तः सोऽविध्यद्विविधैः शरैः ॥ २३
भ्रमतश्च वराहस्य लोहस्य प्रमुखे समम् ।
पञ्चबाणानसंसक्तान्संमुमोचैकबाणवत् ॥ २४
गव्ये विषाणकोशे च चले रज्ज्ववलम्बिनि ।
निचखान महावीर्यः सायकानेकविंशतिम् ॥ २५
इत्येवमादि सुमहत्खड्गे धनुषि चानघ ।
गदायां शस्त्रकुशलो मण्डलानि ह्यदर्शयत् ॥ २६
ततः समाप्तभूयिष्ठे तस्मिन्कर्मणि भारत ।
मन्दीभूते समाजे च वादित्रस्य च निःस्वने ॥ २७
द्वारदेशात्समुद्भूतो माहात्म्यबलसूचकः ।
वज्रनिष्पेषसदृशः शुश्रुवे भुजनिःस्वनः ॥ २८
दीर्यन्ते किं नु गिरयः किंस्विद्भूमिर्विदीर्यते ।
किंस्विदापूर्यते व्योम जलधाराघनैर्घनैः ॥ २९
रङ्गस्यैवं मतिरभूत्क्षणेन वसुधाधिप ।
द्वारं चाभिमुखाः सर्वे बभूवुः प्रेक्षकास्तदा ॥ ३०
पञ्चभिर्भ्रातृभिः पार्थैर्द्रोणः परिवृतो बभौ ।
पञ्चतारेण संयुक्तः सावित्रेणेव चन्द्रमाः ॥ ३१
अश्वत्थाम्ना च सहितं भ्रातॄणां शतमूर्जितम् ।
दुर्योधनममित्रघ्नमुत्थितं पर्यवारयत् ॥ ३२
स तैस्तदा भ्रातृभिरुद्यतायुधै-
र्गदाग्रपाणिः समवस्थितैर्वृतः ।
बभौ यथा दानवसंक्षये पुरा
पुरन्दरो देवगणैः समावृतः ॥ ३३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥

## षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

कर्णस्य परीक्षा ॥ १ ॥ कर्णार्जुनयोर्युद्धप्रसङ्गः ॥ २ ॥ कृपेण कर्णस्याधिक्षेपः, कर्णस्य दुर्योधनेन राज्याभिषेचनं च ॥ ३ ॥

वैशंपायन उवाच ।
'एतस्मिन्नेव काले तु तस्मिञ्जनसमागमे ।'
दत्तेऽवकाशे पुरुषैर्विस्मयोत्फुल्ललोचनः ।
विवेश रङ्गं विस्तीर्णं कर्णः परपुरंजयः ॥ १

---

अस्रैः प्रेमाश्रुभिः ॥ १४ ॥ सुकुमारं पूर्णघटकुक्कुटाण्डादीनि लक्ष्याण्यविचाल्याविध्यत् । सूक्ष्मं गुञ्जादि लक्ष्यं, गुरु घनावयवं च सोऽविध्यत् ॥ २३ ॥ भूताश्वेभवराहाणां सिंहर्क्षकपिसंमुखान् । बाणान्ससासमायुक्तान्स मुमोचैकबाणवत् । इति प-
पाठः । गव्ये गोसंबन्धिनि ॥ २५ ॥ सावित्रेण हस्तनक्षत्रेण ॥ ३१ ॥ गदा अग्रं आलम्बनं यस्य तादृशः पाणिर्यस्य स गदाग्रपाणिः ३३
पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
दत्तावकाश इति चपाठः ॥ १ ॥

सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः ।
स धनुर्बद्धनिस्त्रिंशः पादचारीव पर्वतः ॥ २
कन्यागर्भः पृथुयशाः पृथायाः पृथुलोचनः ।
तीक्ष्णांशोर्भास्करस्यांशः कर्णोऽरिगणमर्दनः ॥३
सिंहर्षभगजेन्द्राणां बलवीर्यपराक्रमः ।
दीप्तिकान्तिद्युतिगुणैः सूर्येन्दुज्वलनोपमः ॥ ४
प्रांशुः कनकतालाभः सिंहसंहननो युवा ।
असङ्ख्येयगुणः श्रीमान्भास्करस्यात्मसंभवः ॥ ५
स निरीक्ष्य महाबाहुः सर्वतो रङ्गमण्डलम् ।
प्रणामं द्रोणकृपयोर्नात्यादृतमिवाकरोत् ॥ ६
स समाजजनः सर्वो निश्चलः स्थिरलोचनः ।
कोऽयमित्यागतक्षोभः कौतूहलपरोऽभवत् ॥ ७
सोऽब्रवीन्मेघगम्भीरस्वरेण वदतां वरः ।
भ्राता भ्रातरमज्ञातं सावित्रः पाकशासनिम् ॥८
पार्थ यत्ते कृतं कर्म विशेषवदहं ततः ।
करिष्ये पश्यतां नृणां माऽऽत्मना विस्मयं गमः ९
असमाप्ते ततस्तस्य वचने वदतां वर ।
यन्त्रोत्क्षिप्त इवोत्तस्थौ क्षिप्रं वै सर्वतो जनः॥१०
प्रीतिश्च मनुजव्याघ्र दुर्योधनमुपाविशत् ।
ह्रीश्च क्रोधश्च बीभत्सुं क्षणेनान्वाविवेश ह॥ ११
ततो द्रोणाभ्यनुज्ञातः कर्णः प्रियरणः सदा ।
यत्कृतं तत्र पार्थेन तच्चकार महाबलः ॥ १२
अथ दुर्योधनस्तत्र भ्रातृभिः सह भारत ।
कर्णं परिष्वज्य मुदा ततो वचनमब्रवीत् ॥ १३
स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद ।
अहं च कुरुराज्यं च यथेष्टमुपभुज्यताम् ॥ १४
कर्ण उवाच ।
कृतं सर्वमहं मन्ये सखित्वं च त्वया वृणे ।
द्वन्द्वयुद्धं च पार्थेन कर्तुमिच्छाम्यहं प्रभो ॥ १५
'वैशंपायन उवाच ।
एवमुक्तस्तु कर्णेन राजन्दुर्योधनस्तदा ।
कर्णं दीर्घाञ्चितभुजं परिष्वज्येदमब्रवीत् ॥' १६
भुङ्क्ष्व भोगान्मया सार्धं बन्धूनां प्रियकृद्भव ।
दुर्हृदां कुरु सर्वेषां मूर्ध्नि पादमरिन्दम ॥ १७
वैशंपायन उवाच ।
ततः क्षिप्तमिवात्मानं मत्वा पार्थोऽभ्यभाषत ।
कर्णं भ्रातृसमूहस्य मध्येऽचलमिव स्थितम् ॥१८
अर्जुन उवाच ।
अनाहूतोपसृष्टानामनाहूतोपजल्पिनाम् ।
ये लोकास्तान्हतः कर्ण मया त्वं प्रतिपत्स्यसे १९
कर्ण उवाच ।
रङ्गोऽयं सर्वसामान्यः किमत्र तव फाल्गुन ।
वीर्यश्रेष्ठाश्च राजानो बलं धर्मोऽनुवर्तते ॥ २०
किं क्षेपैर्दुर्बलायासैः शरैः कथय भारत ।
गुरोः समक्षं यावत्ते हराम्यद्य शिरः शरैः॥ २१
वैशंपायन उवाच ।
ततो द्रोणाभ्यनुज्ञातः पार्थः परपुरञ्जयः ।
भ्रातृभिस्त्वरयाश्लिष्टो रणायोपजगाम तम् ॥२२
ततो दुर्योधनेनापि सभ्रात्रा समरोद्यतः ।
परिष्वक्तः स्थितः कर्णः प्रगृह्य सशरं धनुः ॥२३
ततः सविद्युत्स्तनितैः सेन्द्रायुधपुरोगमैः ।
आवृतं गगनं मेघैर्बलाकापङ्क्तिहासिभिः॥ २४
ततः स्नेहाद्धरिहयं दृष्ट्वा रङ्गावलोकिनम् ।
भास्करोऽप्यनयन्नाशं समीपोपगतान्घनान् ॥२५
मेघच्छायोपगूढस्तु ततोऽदृश्यत फाल्गुनः ।
सूर्यातपपरिक्षिप्तः कर्णोऽपि समदृश्यत ॥ २६
धार्तराष्ट्रा यतः कर्णस्तस्मिन्देशे व्यवस्थिताः ।
भारद्वाजः कृपो भीष्मो यतः पार्थस्ततोऽभवन्२७
द्विधा रङ्गः समभवत्स्त्रीणां द्वैधमजायत ।
कुन्तिभोजसुता मोहं विज्ञातार्था जगाम ह॥ २८
तां तथा मोहमापन्नां विदुरः सर्वधर्मवित् ।
कुन्तीमाश्वासयामास प्रेष्याभिश्चन्दनोदकैः ॥२९
ततः प्रत्यागतप्राणा तावुभौ परिदंशितौ ।
पुत्रौ दृष्ट्वा सुसंभ्रान्ता नान्वपद्यत किंचन ॥ ३०

---

नामपूर्वमथाकरोत् इति पाठान्तरम् ॥ ६ ॥ सूर्यातपपरिध्वक्त इति दृपाठः ॥ २६ ॥ विज्ञातार्था कर्णस्य स्वपुत्रत्वज्ञानवती । हेतुगर्भमेतत् ॥ २८ ॥

तावुद्यतमहाचापौ कृपः शारद्वतोऽब्रवीत् ।
द्वन्द्वयुद्धसमाचारे कुशलः सर्वधर्मवित् ॥ ३१
अयं पृथायास्तनयः कनीयान्पाण्डुनन्दनः ।
कौरवो भवता सार्धं द्वन्द्वयुद्धं करिष्यति ॥ ३२
त्वमप्येवं महाबाहो मातरं पितरं कुलम् ।
कथयस्व नरेन्द्राणां येषां त्वं कुलभूषणम् ॥ ३३
ततो विदित्वा पार्थस्त्वां प्रतियोत्स्यति वा न वा ।
वृथाकुलसमाचारैर्न युध्यन्ते नृपात्मजाः ॥ ३४
वैशंपायन उवाच ।
एवमुक्तस्य कर्णस्य व्रीडावनतमाननम् ।
बभौ वर्षाम्बुविक्लिन्नं पद्ममागलितं यथा ॥ ३५
दुर्योधन उवाच ।
आचार्य त्रिविधा योनी राज्ञां शास्त्रविनिश्चये ।
सत्कुलीनश्च शूरश्च यश्च सेनां प्रकर्षति ॥ ३६
'अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥'३७
यद्ययं फाल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति ।
तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते ॥३८
वैशंपायन उवाच ।
'ततो राजानमामन्त्र्य गाङ्गेयं च पितामहम् ।
अभिषेकस्य संभारान्समानीय द्विजातिभिः ॥३९
गोसहस्रायुतं दत्त्वा युक्तानां पुण्यकर्मणाम् ।
अर्होऽयमङ्गराज्यस्य इति वाच्य द्विजातिभिः'४०
ततस्तस्मिन्क्षणे कर्णः सलाजकुसुमैर्घटैः ।
काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः ॥ ४१
अभिषिक्तोऽङ्गराज्ये स श्रिया युक्तो महाबलः ।
'स मौलिहारकेयूरः सहस्ताभरणाङ्गदः ॥ ४२
राजलिङ्गैस्तथाऽन्यैश्च भूषितो भूषणैः शुभैः ।'
सच्छत्रवालव्यजनो जयशब्दोत्तरेण च ॥ ४३
उवाच कौरवं राजन्वचनं स वृषस्तदा ।
अस्य राज्यप्रदानस्य सदृशं किं ददानि ते ॥४४
प्रब्रूहि राजशार्दूल कर्ता ह्यस्मि तथा नृप ।
अत्यन्तं सख्यमिच्छामीत्याह तं स सुयोधनः ॥४५
एवमुक्तस्ततः कर्णस्तथेति प्रत्युवाच तम् ।
हर्षाच्चोभौ समाश्लिष्य परां मुदमवापतुः ॥ ४६

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

## सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

कर्णपितुरधिरथस्य रङ्गप्रवेशः ॥ १ ॥ भीमेन कर्णस्याधिक्षेपः ॥ २ ॥ सर्वेषां रङ्गान्निष्क्रमणम् ॥ ३ ॥

वैशंपायन उवाच ।
ततः स्रस्तोत्तरपटः सप्रस्वेदः सवेपथुः ।
विवेशाधिरथो रङ्गं यष्टिप्राणो ह्वयन्निव ॥ १
तमालोक्य धनुस्त्यक्त्वा पितृगौरवयन्त्रितः ।
कर्णोऽभिषेकार्द्रशिराः शिरसा समवन्दत ॥ २
ततः पादाववच्छाद्य पटान्तेन ससंभ्रमः ।
पुत्रेति परिपूर्णार्थमब्रवीद्रथसारथिम् ॥ ३
परिष्वज्य च तस्याथ मूर्धानं स्नेहविक्लवः ।
अङ्गराज्याभिषेकार्द्रमश्रुभिः सिषिचे पुनः ॥ ४
तं दृष्ट्वा सूतपुत्रोऽयमिति संचिन्त्य पाण्डवः ।
भीमसेनस्तदा वाक्यमब्रवीत्प्रहसन्निव ॥ ५
न त्वमर्हसि पार्थेन सूतपुत्र रणे वधम् ।
कुलस्य सदृशस्तूर्णं प्रतोदो गृह्यतां त्वया ॥ ६
अङ्गराज्यं च नार्हस्त्वमुपभोक्तुं नराधम ।
श्वा हुताशसमीपस्थं पुरोडाशमिवाध्वरे ॥ ७
वैशंपायन उवाच ।
एवमुक्तस्ततः कर्णः किंचित्प्रस्फुरिताधरः ।
गगनस्थं विनिःश्वस्य दिवाकरमुदैक्षत ॥ ८
ततो दुर्योधनः कोपादुत्पपात महाबलः ।
भ्रातृपद्मवनात्तस्मान्मदोत्कट इव द्विपः ॥ ९
सोऽब्रवीद्भीमकर्माणं भीमसेनमवस्थितम् ।
वृकोदर न युक्तं ते वचनं वक्तुमीदृशम् ॥ १०

वृथाकुलसमाचारैः अज्ञातकुलाचारैः ॥ ३४ ॥ वाच्य वाचयित्वा ॥ ४० ॥ षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥

क्षत्रियाणां बलं ज्येष्ठं योक्तव्यं क्षत्रबन्धुना ।
शूराणां च नदीनां च प्रभवो दुर्विभावनः ॥११
सलिलादुत्थितो वह्निर्येन व्याप्तं चराचरम् ।
दधीचस्यास्थितो वज्रं कृतं दानवसूदनम् ॥ १२
आग्नेयः कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि ।
श्रूयते भगवान्देवः सर्वगुह्यमयो गुहः ॥ १३
क्षत्रियेभ्यश्च ये जाता ब्राह्मणास्ते च ते श्रुताः ।
विश्वामित्रप्रभृतयः प्राप्ता ब्रह्मत्वमव्ययम् ॥ १४
आचार्यः कलशाज्जातो द्रोणः शस्त्रभृतां वरः ।
गौतमस्यान्ववाये च शरस्तम्बाच्च गौतमः ॥ १५
भवतां च यथा जन्म तदप्यागमितं मया ।
सकुण्डलं सकवचं सर्वलक्षणलक्षितम् ।
कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति ॥ १६
पृथिवीराज्यमर्होऽयं नाङ्गराज्यं नरेश्वरः ।
अनेन बाहुवीर्येण मया चाज्ञानुवर्तिना ॥ १७
यस्य वा मनुजस्येदं न क्षान्तं मद्विचेष्टितम् ।
रथमारुह्य पद्भ्यां स विनामयतु कार्मुकम् ॥ १८

ततः सर्वस्य रङ्गस्य हाहाकारो महानभूत् ।
साधुवादानुसंबद्धः सूर्यश्चास्तमुपागमत् ॥ १९
ततो दुर्योधनः कर्णमालम्ब्याग्रकरे नृपः ।
दीपिकाभिः कृतालोकस्तस्माद्रङ्गाद्विनिर्ययौ ॥२०
पाण्डवाश्च सहद्रोणाः सकृपाश्च विशांपते ।
भीष्मेण सहिताः सर्वे ययुः स्वं स्वं निवेशनम् २१
अर्जुनेति जनः कश्चित्कश्चित्कर्णेति भारत ।
कश्चिद्दुर्योधनेत्येवं ब्रुवन्तः प्रस्थितास्तदा ॥ २२
कुन्त्याश्च प्रत्यभिज्ञाय दिव्यलक्षणसूचितम् ।
पुत्रमङ्गेश्वरं स्नेहाच्छन्ना प्रीतिरजायत ॥ २३
दुर्योधनस्यापि तदा कर्णमासाद्य पार्थिव ।
भयमर्जुनसंजातं क्षिप्रमन्तरधीयत ॥ २४

स चापि वीरः कृतशस्त्रनिश्रमः
परेण साम्नाऽभ्यवदत्सुयोधनम् ।
युधिष्ठिरस्याप्यभवत्तदा मति-
र्न कर्णतुल्योऽस्ति धनुर्धरः क्षितौ ॥ २५

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

## अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

गुरुदक्षिणात्वेन जीवतो द्रुपदस्य ग्रहणे द्रोणेनाज्ञापिते तदर्थं तेन सह सर्वशिष्याणां पाञ्चालपुरगमनम् ॥ १ ॥ द्रुपदग्रहणाय पाण्डववर्जं गतानां कौरवाणां तेन पराजयः ॥ २ ॥ तदनन्तरं गतेषु पाण्डवेषु अर्जुनेन द्रुपदग्रहणम् ॥ ३ ॥ जीवग्राहं गृहीत्वा भीमार्जुनाभ्यां समर्पितेन द्रुपदेन द्रोणस्य संवादः ॥ ४ ॥ द्रोणेनार्धराज्यापहारेण मुक्तस्य द्रुपदस्य पुत्रोत्पादनार्थं प्रयत्नः ॥ ५ ॥

वैशंपायन उवाच ।
पाण्डवान्धार्तराष्ट्रांश्च कृतास्त्रान्प्रसमीक्ष्य सः ।
गुर्वर्थं दक्षिणां काले प्राप्तेऽमन्यत वै गुरुः ॥ १
'अस्त्रशिक्षामनुज्ञातान्रङ्गद्वारमुपागतान् ।
भारद्वाजस्ततस्तांस्तु सर्वानेवाभ्यभाषत ॥ २
इच्छामि दत्तां सहितां मह्यं परमदक्षिणाम् ।
एवमुक्तास्ततः सर्वे शिष्या द्रोणमथाब्रुवन् ।
भगवन्किं प्रयच्छाम आज्ञापयतु नो गुरुः ॥' ३
ततः शिष्यान्समाहूय आचार्योऽर्थमचोदयत् ।

द्रोणः सर्वानशेषेण दक्षिणार्थं महीपते ॥ ४
पञ्चालराजं द्रुपदं गृहित्वा रणमूर्धनि ।
पर्यानयत भद्रं वः सा स्यात्परमदक्षिणा ॥ ५
तथेत्युक्त्वा तु ते सर्वे रथैस्तूर्णं प्रहारिणः ।
आचार्यधनदानार्थं द्रोणेन सहिता ययुः ॥ ६
ततोऽभिजग्मुः पञ्चालान्निघ्नन्तस्ते नरर्षभाः ।
ममृदुस्तस्य नगरं द्रुपदस्य महौजसः ॥ ७
दुर्योधनश्च कर्णश्च युयुत्सुश्च महाबलः ।
दुःशासनो विकर्णश्च जलसन्धः सुलोचनः ॥ ८

यस्य येन न क्षान्तं न सोढम् ॥ १८ ॥ निश्रमो नितरां श्रमः ॥ २५ ॥ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥

एते चान्ये च बहवः कुमारा बहुविक्रमाः ।
अहं पूर्वमहं पूर्वमित्येवं क्षत्रियर्षभाः ॥ ९
ततो वररथारूढाः कुमाराः सादिभिः सह ।
प्रविश्य नगरं सर्वे राजमार्गमुपाययुः ॥ १०
तस्मिन्काले तु पाञ्चालः श्रुत्वा दृष्ट्वा महद्बलम् ।
भ्रातृभिः सहितो राजंस्त्वरया निर्ययौ गृहात् ११
ततस्तु कृतसन्नाहा यज्ञसेनसहोदराः ।
शरवर्षाणि मुञ्चन्तः प्रणेदुः सर्व एव ते ॥ १२
ततो रथेन शुभ्रेण समासाद्य तु कौरवान् ।
यज्ञसेनः शरान्घोरान्ववर्ष युधि दुर्जयः ॥ १३
पूर्वमेव तु संमन्त्र्य पार्थो द्रोणमथाऽब्रवीत् ।
दर्पोद्रेकात्कुमाराणामाचार्यं द्विजसत्तमम् ॥ १४
एषां पराक्रमस्यान्ते वयं कुर्याम साहसम् ।
एतैरशक्यः पाञ्चालो ग्रहीतुं रणमूर्धनि ॥ १५
एवमुक्त्वा तु कौन्तेयो भ्रातृभिः सहितोऽनघः ।
अर्धक्रोशे तु नगरादतिष्ठद्बहिरेव सः ॥ १६
द्रुपदः कौरवान्दृष्ट्वा प्राधावत समन्ततः ।
शरजालेन महता मोहयन्कौरवीं चमूम् ॥ १७
तमुद्यतं रथेनैकमाशुकारिणमाहवे ।
अनेकमिव सन्त्रासान्मेनिरे तत्र कौरवाः ॥ १८
द्रुपदस्य शरा घोरा विचेरुः सर्वतोदिशम् ।
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्च सहस्रशः ॥ १९
प्रावाद्यन्त महाराज पञ्चालानां निवेशने ।
सिंहनादश्च संजज्ञे पञ्चालानां महात्मनाम् ॥२०
धनुर्ज्यातलशब्दश्च संस्पृश्य गगनं महान् ।
दुर्योधनो विकर्णश्च सुबाहुर्दीर्घलोचनः ॥ २१
दुःशासनश्च संक्रुद्धः शरवर्षैरवाकिरन् ।
सोऽतिविद्धो महेष्वासः पार्षतो युधि दुर्जयः॥२२
व्यधमत्तान्यनीकानि तत्क्षणादेव भारत ।
दुर्योधनं विकर्णं च कर्णं चापि महाबलम् ॥२३
नानानृपसुतान्वीरान्सैन्यानि विविधानि च ।
अलातचक्रवत्सर्वं चरन्बाणैरतर्पयत् ॥ २४
ततस्तु नागराः सर्वे मुसलैर्यष्टिभिस्तदा ।
अभ्यवर्षन्त कौरव्यान्वर्षमाणा घना इव ॥ २५
सबालवृद्धाः काम्पिल्याः कौरवानभ्ययुस्तदा ।
श्रुत्वा सुतुमुलं युद्धं कौरवानेव भारत ॥ २६
द्रवन्तिस्म नदन्तिस्म क्रोशन्तः पाण्डवान्प्रति ।
पाण्डवास्तु स्वनं श्रुत्वा आर्तानां रोमहर्षणम् ॥२७
अभिवाद्य ततो द्रोणं रथानारुरुहुस्तदा ।
युधिष्ठिरं निवार्याशु मा युध्यस्वेति पाण्डवम् २८
माद्रेयौ चक्ररक्षौ तु फाल्गुनश्च तदाऽकरोत् ।
सेनाग्रगो भीमसेनस्तदाभूद्गदया सह ॥ २९
तदा शत्रुस्वनं श्रुत्वा भ्रातृभिः सहितोऽनघः ।
आयाज्जवेन कौन्तेयो रथेनानादयन्दिशः ॥ ३०
पञ्चालानां ततः सेनामुद्धूतार्णवनिःस्वनाम् ।
भीमसेनो महाबाहुर्दण्डपाणिरिवान्तकः ॥ ३१
प्रविवेश महासेनां मकरः सागरं यथा ।
'चतुरङ्गबलाकीर्णे ततस्तस्मिन्रणोत्सवे ॥' ३२
स्वयमभ्यद्रवद्भीमो नागानीकं गदाधरः ॥ ३३
स युद्धकुशलः पार्थो बाहुवीर्येण चातुलः ।
अहनत्कुञ्जरानीकं गदया कालरूपधृक् ॥ ३४
ते गजा गिरिसङ्काशाः क्षरन्तो रुधिरं बहु ।
भीमसेनस्य गदया भिन्नमस्तकपिण्डकाः ॥ ३५
पतन्ति द्विरदा भूमौ वज्रघातादिवाचलाः ।
गजानश्वान्रथांश्चैव पातयामास पाण्डवः ॥ ३६
पदातींश्च रथांश्चैव न्यवधीदर्जुनाग्रजः ।
गोपाल इव दण्डेन यथा पशुगणान्वने ॥ ३७
चालयन्रथनागांश्च संचचाल वृकोदरः ।
भारद्वाजप्रियं कर्तुमुद्यतः फाल्गुनस्तदा ॥ ३८
पार्षतं शरजालेन क्षिपन्नागात्स पाण्डवः ।
हयौघांश्च रथौघांश्च गजौघांश्च समन्ततः ॥ ३९
पातयन्समरे राजन्युगान्ताग्निरिव ज्वलन् ।
ततस्ते हन्यमाना वै पञ्चालाः सृञ्जयास्तथा ॥४०
शरैर्नानाविधैस्तूर्णं पार्थं संछाद्य सर्वशः ।
सिंहनादं मुखैः कृत्वा समयुध्यन्त पाण्डवम्॥४१
तद्युद्धमभवद्घोरं सुमहाद्भुतदर्शनम् ।
सिंहनादस्वनं श्रुत्वा नामृष्यत्पाकशासनिः ॥४२
ततः किरीटी सहसा पञ्चालान्समरेऽद्रवत् ।

छादयन्निषुजालेन महता मोहयन्निव ॥ ४३
शीघ्रमभ्यस्यतो बाणान्संदधानस्य चानिशम् ।
नान्तरं ददृशे किंचित्कौन्तेयस्य यशस्विनः ॥४४
'न दिशो नान्तरिक्षं च तदा नैव च मेदिनी ।
अदृश्यत महाराज तत्र किंचिन्न सङ्गरे ॥ ४५
बाणान्धकारे बलिना कृते गाण्डीवधन्वना ।
पाञ्चालानां कुरूणां च साधुसाध्विति निस्वनः ।
तत्र तूर्यनिनादश्च शङ्खानां च महास्वनः ॥' ४६
सिंहनादश्च संजज्ञे साधुशब्देन मिश्रितः ।
ततः पाञ्चालराजस्तु तथा सत्यजिता सह ॥४७
त्वरमाणोऽभिदुद्राव महेन्द्रं शम्बरो यथा ।
महता शरवर्षेण पार्थः पाञ्चालमावृणोत् ॥ ४८
ततो हलहलाशब्द आसीत्पाञ्चालके बले ।
जिघृक्षति महासिंहे गजानामिव यूथपम् ॥ ४९
दृष्ट्वा पार्थं तदायान्तं सत्यजित्सत्यविक्रमः ।
पाञ्चालं वै परिप्रेप्सुर्धनञ्जयमदुद्रुवत् ॥ ५०
ततस्त्वर्जुनपाञ्चालौ युद्धाय समुपागतौ ।
व्यक्षोभयेतां तौ सैन्यमिन्द्रवैरोचनाविव ॥ ५१
ततः सत्यजितं पार्थो दशभिर्मर्मभेदिभिः ।
विव्याध बलवद्गाढं तदद्भुतमिवाभवत् ॥ ५२
ततः शरशतैः पार्थं पाञ्चालः शीघ्रमार्दयत् ।
पार्थस्तु शरवर्षेण च्छाद्यमानो महारथः ॥ ५३
वेगं चक्रे महावेगो धनुर्ज्यामवमृज्य च ।
ततः सत्यजितश्चापं छित्वा राजानमभ्ययात् ॥५४
अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम् ।
साश्वं ससूतं सरथं पार्थं विव्याध सत्वरः ॥ ५५
स तं न ममृषे पार्थः पाञ्चालेनार्दितो युधि ।
ततस्तस्य विनाशार्थं सत्वरं व्यसृजच्छरान् ॥ ५६
हयान्ध्वजं धनुर्मुष्टिमुभौ तौ पार्ष्णिसारथी ।
स तथा भिद्यमानेषु कार्मुकेषु पुनः पुनः ॥ ५७
हयेषु विनिकृत्तेषु विमुखोऽभवदाहवे ।
स सत्यजितमालेक्ष्य तथा विमुखमाहवे ॥ ५८
वेगेन महता राजन्नभ्यधावत पार्षतम् ।
तदा चक्रे महद्युद्धमर्जुनो जयतां वरः ॥ ५९
तस्य पार्थो धनुश्छित्त्वा ध्वजं चोर्व्यामपातयत् ।
पञ्चभिस्तस्य विव्याध हयान्सूतं च सायकैः ॥६०
तत उत्सृज्य तच्चापमाददानः शरावरम् ।
खड्गमुद्धृत्य कौन्तेयः सिंहनादमथाकरोत् ॥ ६१
पाञ्चालस्य रथस्येषामाप्लुत्य सहसाऽपतत् ।
पाञ्चालरथमास्थाय अवित्रस्तो धनञ्जयः ॥ ६२
विक्षोभ्याम्भोनिधिं तार्क्ष्यस्तं नागमिव सोऽग्रहीत्।
ततस्तु सर्वपाञ्चाला विद्रवन्ति दिशो दश ॥६३
दर्शयन्सर्वसैन्यानां स बाह्वोर्बलमात्मनः ।
सिंहनादस्वनं कृत्वा निर्जगाम धनञ्जयः ॥ ६४
आयान्तमर्जुनं दृष्ट्वा कुमाराः सहितास्तदा ।
ममृदुस्तस्य नगरं द्रुपदस्य महात्मनः ॥ ६५
अर्जुन उवाच ।
संबन्धी कुरुवीराणां द्रुपदो राजसत्तमः ।
मा वधीस्तद्बलं भीम गुरुदानं प्रदीयताम् ॥ ६६
वैशंपायन उवाच ।
भीमसेनस्तदा राजन्नर्जुनेन निवारितः ।
अतृप्तो युद्धधर्मेषु न्यवर्तत महाबलः ॥ ६७
ते यज्ञसेनं द्रुपदं गृहीत्वा रणमूर्धनि ।
उपाजग्मुः सहामात्यं द्रोणाय भरतर्षभ ॥ ६८
भग्नदर्पं हृतधनं तं तथा वशमागतम् ।
स वैरं मनसा ध्यात्वा द्रोणो द्रुपदमब्रवीत् ॥६९
विमृज्य तरसा राष्ट्रं पुरं ते मृदितं मया ।
प्राप्य जीवन्रिपुवशं सखिपूर्वं किमिष्यते ॥ ७०
एवमुक्त्वा प्रहस्यैनं किंचित्स पुनरब्रवीत् ।
मा भैः प्राणभयाद्वीर क्षमिणो ब्राह्मणा वयम् ॥७१
आश्रमे क्रीडितं यत्तु त्वया बाल्ये मया सह ।
तेन संवर्धितः स्नेहः प्रीतिश्च क्षत्रियर्षभ ॥ ७२
प्रार्थयेयं त्वया सख्यं पुनरेव जनाधिप ।
वरं ददामि ते राजन्राज्यस्यार्धमवाप्नुहि ॥ ७३
अराजा किल नो राज्ञः सखा भवितुमर्हति ।
अतः प्रयतितं राज्ये यज्ञसेन मया तव ॥ ७४

शरावरं चर्म ॥ ६१ ॥ ईषा रथस्य युगचक्रसंलग्नं महादारु ॥ ६२ ॥ प्राप्य जीवन्नृप वशामिति ङपाठः ॥ ७० ॥ अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे ।
सखायं मां विजानीहि पाञ्चाल यदि मन्यसे॥७५
द्रुपद उवाच ।
अनाश्चर्यमिदं ब्रह्मन्विक्रान्तेषु महात्मसु ।
प्रीये त्वयाऽहं त्वत्तश्च प्रीतिमिच्छामि शाश्वतीम्॥
वैशंपायन उवाच ।
एवमुक्तः स तं द्रोणो मोक्षयामास भारत ।
सत्कृत्य चैनं प्रीतात्मा राज्यार्धं प्रत्यपादयत्॥७७
माकन्दीमथ गङ्गायास्तीरे जनपदायुताम् ।
सोऽध्यावसद्दीनमनाः काम्पिल्यं च पुरोत्तमम्७८
दक्षिणांश्चापि पञ्चालान्यावच्चर्मण्वती नदी ।
द्रोणेन चैवं द्रुपदः परिभूयाथ पालितः ॥ ७९
क्षात्रेण च बलेनास्य नापश्यत्स पराजयम् ।
हीनं विदित्वा चात्मानं ब्राह्मेण स बलेन तु॥८०
पुत्रजन्म परीप्सन्वै पृथिवीमन्वसंचरत् ।
अहिच्छत्रं च विषयं द्रोणः समभिपद्यत ॥ ८१
एवं राजन्नहिच्छत्रा पुरीजनपदायुता ।
युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता॥८२

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

## ऊनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

द्रुपदस्य याजोपयाजसमीपगमनम् ॥ १ ॥ उपयाजेन द्रोणविनाशकपुत्रोत्पादनार्थं याजनाय प्रार्थिते याजनस्य प्रत्याख्यानम् ॥ २ ॥ याजेनाङ्गीकारे यजनारम्भः ॥ ३ ॥ अपत्यप्रदहविःप्राशनार्थं द्रुपदपत्न्या आह्वाने गर्वात्तया विलम्बनम् ॥ ४ ॥ क्रुद्धाभ्यां याजोपयाजाभ्यां अग्नौ हविषो होमेनाग्निकुण्डाद्धृष्टद्युम्नस्योत्पत्तिः ॥ ५ ॥ द्वितीयहविषो होमेन पाञ्चाल्या उत्पत्तिः ॥ ६ ॥ तयोर्नामकरणम् ॥ ७ ॥ द्रोणाद्धृष्टद्युम्नस्यास्त्रशिक्षणम् ॥ ८ ॥

'वैशंपायन उवाच ।
द्रोणेन वैरं द्रुपदो न सुष्वाप स्मरंस्तदा ।
क्षात्रेण वै बलेनास्य नाऽशशंसे पराजयम् ॥ १
हीनं विदित्वा चात्मानं ब्राह्मेणापि बलेन च ।
द्रुपदोऽमर्षणाद्राजा कर्मसिद्धान्द्विजोत्तमान् ॥ २
अन्विच्छन्परिचक्राम ब्राह्मणावसथान्बहून् ।
नास्ति श्रेष्ठं ममापत्यं धिग्बन्धूनिति च ब्रुवन्॥३
निश्वासपरमो ह्यासीद्द्रोणं प्रतिचिकीर्षया ।
न सन्ति मम मित्राणि लोकेऽस्मिन्नास्ति वीर्यवान्४
पुत्रजन्म परीप्सन्वै पृथिवीमन्वयादिमाम् ।
प्रभावशिक्षाविनयाद्द्रोणस्यास्त्रबलेन च ॥ ५
कर्तुं प्रयतमानो वै न शशाक पराजयम् ।
अभितः सोऽथ कल्माषीं गङ्गातीरे परिभ्रमन्॥६
ब्राह्मणावसथं पुण्यमाससाद महीपतिः ।
तत्र नास्नातकः कश्चिन्न चासीदव्रतो द्विजः ॥७
तथैव तौ महाभागौ सोऽपश्यच्छंसितव्रतौ ।
याजोपयाजौ ब्रह्मर्षी भ्रातरौ पृषतात्मजः ॥ ८
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ।
अरण्ये युक्तरूपौ तौ ब्राह्मणावृषिसत्तमौ ॥ ९
स उपामन्त्रयामास सर्वकामैरतन्द्रितः ।
बुद्ध्वा तयोर्बलं बुद्धिं कनीयांसमुपह्वरे ॥ १०
प्रपेदे छन्दयन्कामैरुपयाजं धृतव्रतम् ।
गुरुशुश्रूषणे युक्तः प्रियकृत्सर्वकामदम् ॥ ११
पाद्येनासनदानेन तथाऽर्घ्येण फलैश्च तम् ।
अर्हयित्वा यथान्यायमुपयाजोऽब्रवीत्ततः ॥ १२
येन कार्यविशेषेण त्वमस्मानभिकाङ्क्षसे ।
कृतश्चायं समुद्योगस्तद्ब्रवीतु भवानिति ॥ १३
वैशंपायन उवाच ।
स बुद्ध्वा प्रीतिसंयुक्तमृषीणामुत्तमं तदा ।
उवाच छन्दयन्कामैर्द्रुपदः स तपस्विनम् ॥ १४
येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्यवे ।
उपयाज चरस्वैतत्प्रदास्यामि धनं तव ॥ १५
उपयाज उवाच ।
नाहं फलार्थी द्रुपद योऽर्थी स्यात्तत्र गम्यताम्।
वैशंपायन उवाच ।
प्रत्याख्यातस्तु तेनैवं स वै सज्जनसंनिधौ ॥ १६
आराधयिष्यन्द्रुपदः स तं पर्यचरत्तदा ।
ततः संवत्सरस्यान्ते द्रुपदं द्विजसत्तमः ॥ १७

उपयाजोऽब्रवीद्वाक्यं काले मधुरया गिरा ।
ज्येष्ठो भ्राता न मेऽत्याक्षीद्विचरन्विजने वने १८
अपरिज्ञातशौचायां भूमौ निपतितं फलम् ।
तदपश्यमहं भ्रातुरसांप्रतमनुव्रजन् ॥ १९
विमर्शं हि फलादाने नायं कुर्यात्कथंचन ।
स नापश्यत्फलं दृष्ट्वा दोषांस्तस्याऽऽनुबन्धिकान्॥
विविनक्ति न शौचार्थी सोऽन्यत्रापि कथं भवेत् ।
संहिताध्ययनस्यान्ते पञ्चयज्ञान्निरूप्य च ॥ २१
भैक्षमुञ्छेन सहितं भुञ्जानस्तु तदा तदा ।
कीर्तयत्येव राजर्षे भोजनस्य रसं पुनः ॥ २२
संहिताध्ययनं कुर्वन्वने गुरुकुले वसन् ।
भैक्षमुच्छिष्टमन्येषां भुङ्क्ते स सततं तथा ॥ २३
कीर्तयन्गुणमन्नानामथ प्रीतो मुहुर्मुहुः ।
एवं फलार्थिनस्तस्मान्मन्येऽहं तर्कचक्षुषा ॥ २४
तं वै गच्छेह नृपते त्वां स संयाजयिष्यति ॥२५

वैशंपायन उवाच ।

उपयाजवचः श्रुत्वा याजस्याश्रममभ्यगात् ।
जुगुप्समानो नृपतिर्मनसेदं विचिन्तयन् ॥ २६
भृशं संपूज्य पूजार्हमृषिं याजमुवाच ह ।
गोशतानि ददान्यष्टौ याज याजय मां विभो २७
द्रोणवैरान्तरे तप्तं विपण्णं शरणागतम् ।
ब्रह्मबन्धुप्रणिहितं न क्षत्रं क्षत्रियो जयेत् ॥ २८
तस्माद्द्रोणभयार्तं मां भवांस्त्रातुमिहार्हति ।
येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्यवे ॥ २९
अर्जुनस्यापि वै भार्या भवेद्या वरवर्णिनी ।
स हि ब्रह्मविदां श्रेष्ठो ब्राह्मे क्षात्रेऽप्यनुत्तमः ३०
ततो द्रोणस्तु माऽजैषीत्सखिविग्रहकारणात् ।
क्षत्रियो नास्ति तुल्योऽस्य पृथिव्यां कश्चिदग्रणीः॥
भारताचार्यमुख्यस्य भारद्वाजस्य धीमतः ।
द्रोणस्य शरजालानि रिपुदेहहराणि च ॥ ३२
षडरत्नि धनुश्चास्य खड्गमप्रतिम तथा ।
स हि ब्राह्मणवेषेण क्षात्रं वेगमसंशयम् ॥ ३३
प्रतिहन्ति महेष्वासो भारद्वाजो महामनाः ।
कार्तवीर्यसमो ह्येष खट्वाङ्गप्रतिमो रणे ॥ ३४
क्षत्रोच्छेदाय विहितो जामदग्न्य इवास्थितः ॥३५
सहितं क्षत्रवेगेन ब्रह्मवेगेन सांप्रतम् ।
उपपन्नं हि मन्येऽहं भारद्वाजं यशस्विनम् ॥ ३६
नेषवस्तमपाकुर्युर्न च प्रासा न चासयः ।
ब्राह्मं तस्य महातेजो मन्त्राहुतिहुतं यथा ॥ ३७
तस्य ह्यस्त्रबलं घोरमप्रसह्यं परैर्भुवि ।
शत्रून्समेत्य जयति क्षत्रं ब्रह्मपुरस्कृतम् ॥ ३८
ब्रह्मक्षत्रे च सहिते ब्रह्मतेजो विशिष्यते ।
सोऽहं क्षत्रबलाद्दीनो ब्रह्मतेजः प्रपेदिवान् ॥३९
द्रोणाद्विशिष्टमासाद्य भवन्तं ब्रह्मवित्तमम् ।
द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम् ॥ ४०
द्रोणमृत्युर्यथा मेऽद्य पुत्रो जायेत वीर्यवान् ।
तत्कर्म कुरु मे याज निर्वपाम्यर्बुदं गवाम् ॥४१

वैशंपायन उवाच ।

तथेत्युक्त्वा तु तं याजो यज्ञार्थमुपकल्पयन् ।
गुर्वर्थ इति चाकाममुपयाजमचोदयत् ॥ ४२
द्रुपदं च महाराजमिदं वचनमब्रवीत् ।
मा भैस्त्वं संप्रदास्यामि कर्मणा भवतः सुतम् ४३
क्षिप्रमुत्तिष्ठ चाव्यग्रः संभारानुपकल्पय ।

वैशंपायन उवाच ।

एवमुक्त्वा प्रतिज्ञाय कर्म चास्याददे मुनिः ॥४४
ब्राह्मणो द्विपदां श्रेष्ठो यथाविधि कथाक्रमम् ।
याजो द्रोणविनाशाय याजयामास तं नृपम् ४५
गुर्वर्थेऽयोजयत्कर्म याजस्यापि समीपतः ।
ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः ॥ ४६
आचख्यौ कर्म वैतानं तथा पुत्रफलाय वै ।
इह पुत्रो महावीर्यो महातेजा महाबलः ।
इष्यते यद्विधो राजन्भविता स तथाविधः ॥ ४७

वैशंपायन उवाच ।

भारद्वाजस्य हन्तारं सोऽभिसन्धाय पार्थिवः ।
आजह्रेऽथ तदा राजन्द्रुपदः कर्म सिद्धये ॥ ४८
ब्राह्मणो द्विपदां श्रेष्ठो जुहाव च यथाविधि ।
कौसवी नाम तस्यासीद्या वै तां पुत्रगृद्धिनः ४९
सौत्रामणिं तथा पत्नीं ततः कालेऽभ्ययात्तदा ।

याजस्तु सवनस्यान्ते देवीमाह्वापयत्तदा ॥ ५०
प्रेहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ।
कुमारश्च कुमारी च पितृवंशविवृद्धये ॥ ५१
पृषत्युवाच ।
नालिप्तं वै मम मुखं पुण्यान्गन्धान्बिभर्मि च ।
न पत्नी तेऽस्मि सूत्यर्थे तिष्ठ याज मम प्रिये ॥५२
याज उवाच ।
याजेन श्रपितं हव्यमुपयाजेन मन्त्रितम् ।
कथं कामं न संदध्यात्पृषति प्रेहि तिष्ठ वा॥५३
वैशंपायन उवाच ।
एवमुक्त्वा तु याजेन हुते हविषि संस्कृते ।
उत्तस्थौ पावकात्तस्मात्कुमारो देवसंनिभः ॥ ५४
ज्वालावर्णो घोररूपः किरीटी वर्म धारयन् ।
धीरः सखड्गः सशरो धनुष्मान्स नदन्मुहुः ॥५५
सोऽभ्यरोहद्रथवरं तेन च प्रययौ तदा ।
जातमात्रे कुमारे च वाक्किलान्तर्हिताब्रवीत् ॥५६
एष शिष्यश्च मृत्युश्च भारद्वाजस्य जायते ।
भयापहो राजपुत्रः पाञ्चालानां यशस्करः ॥५७
राज्ञः शोकापहो जात एष द्रोणवधाय हि ।
इत्यवोचन्महद्भूतमदृश्यं खेचरं तदा ॥ ५८
ततः प्रणेदुः पाञ्चालाः प्रहृष्टाः साधुसाध्विति ।
द्वितीयायां च होत्रायां हुते हविषि मन्त्रिते ॥५९
कुमारी चापि पाञ्चाली वेदिमध्यात्समुत्थिता ।
प्रत्याख्याते पृषत्या च याजके भरतर्षभ ॥ ६०
पुनः कुमारी पाञ्चाली सुभगा वेदिमध्यगा ।
अन्तर्वेद्यां समुद्भूता कन्या सा सुमनोहरा ॥ ६१
श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा ।
मानुषं विग्रहं कृत्वा साक्षाच्छ्रीरिव वर्णिनी॥६२
ताम्रतुङ्गनखी सुभ्रूश्चारुपीनपयोधरा ।
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रधावति ६३
या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि ।
देवदानवयक्षाणामीप्सिता वरवर्णिनी ॥ ६४
तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी ।
सर्वयोषिद्वरा कृष्णा क्षयं क्षत्रस्य नेष्यति ॥ ६५
सुरकार्यमियं काले करिष्यति सुमध्यमा ।
अस्या हेतोः क्षत्रियाणां महदुत्पत्स्यते भयम्॥६६
तच्छ्रुत्वा सर्वपाञ्चालाः प्रणेदुः सिंहसङ्घवत् ।
न चैनान्हर्षसंपन्नानियं सेहे वसुन्धरा ॥ ६७
तथा तु मिथुनं जज्ञे द्रुपदस्य महात्मनः ।
कुमारश्च कुमारी च मनोज्ञौ तौ नरर्षभौ ॥ ६८
श्रिया परमया युक्तौ क्षात्रेण वपुषा तथा ।
तौ दृष्ट्वा पृषती याजं प्रपेदे सा सुतार्थिनी॥६९
न वै मदन्यां जननीं जानीयातामिमाविति ।
तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया॥७०
तयोस्तु नामनी चक्रुर्द्विजाः संपूर्णमानसाः ।
धृष्टत्वादप्रधृष्यत्वात् द्युम्नाद्युत्संभवादपि ॥ ७१
धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ।
कृष्णेत्येवाभवत्कन्या कृष्णा भूत्सा हि वर्णतः॥७२
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ।
वैदिकाध्ययने पारं धृष्टद्युम्नो गतस्तदा ॥ ७३
धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं निवेशनम् ।
उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ॥ ७४
अमोक्षणीयं दैवं हि भावि मत्वा महामतिः ।
तथा तत्कृतवान्द्रोण आत्मकीर्त्यनुरक्षणात् ॥७५
सर्वास्त्राणि स तु क्षिप्रमाप्तवान्परया धिया ॥ ७६

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि ऊनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

## पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

द्रुपदोत्पत्तिः ॥ १ ॥

जनमेजय उवाच ।
द्रुपदस्यापि विप्रर्षे श्रोतुमिच्छामि संभवम् ।
कथं चापि समुत्पन्नः कथमस्त्राण्यवाप्तवान् ॥' १
एतदिच्छामि भगवंस्त्वत्तः श्रोतुं द्विजोत्तम ।

क्रोशात् क्रोशमभिव्याप्य ॥६३॥ द्युम्नाद्युत्संभवात् हिरण्यादिभिः सह जातत्वात् ॥७१॥ ऊनपञ्चाशदधिकशततमोऽध्यायः १४९॥

कौतूहलं जन्मसु मे कीर्त्यमानेष्वनेकशः ॥ २
वैशंपायन उवाच ।
राजा बभूव पाञ्चालः पुत्रार्थी पुत्रकारणात् ।
वनं गतो महाराजस्तपस्तेपे सुदारुणम् ॥ ३
आराधयन्प्रयत्नेन महर्षीन्संशितव्रतान् ।
तस्य संतप्यमानस्य वने मृगगणायुते ॥ ४
कालस्तु सुमहान्राजन्नत्ययात्सुतकारणात् ।
स तु राजा महातेजास्तपस्तीव्रं समाददे ॥ ५
कंचित्कालं वायुभक्षो निराहारस्तथैव च ।
तथैव तु महाबाहोर्वर्तमानस्य भारत ॥ ६
कालस्तस्य महाराज यातो वै नृपसत्तम ।
ततो नातिचिरात्काले वसन्ते कामदीपने ॥ ७
फुल्लाशोकवने चैव प्राणिनां सुमनोहरे ।
नद्यास्तीरं ततो गत्वा गङ्गायाः पद्मलोचनः ॥ ८
नियमस्थश्च राजासीत्तदा भरतसत्तम ।
ततो नातिचिरात्काले वनं तन्मनुजेश्वर ॥ ९
संप्राप्ता ह्यप्सरा राजन्मेनकेत्यभिविश्रुता ।
पुष्पद्रुमान्सज्जमाना राज्ञो दर्शनमागमत् ॥ १०
न ददर्श तु सा राजंस्तत्र स्थानगतं नृपम् ।
दृष्ट्वा चाप्सरसं तां तु शुक्रं राज्ञोऽपतद्भुवि ॥ ११
ततः स राजा राजेन्द्र लज्जया नृपतिः स्वयम् ।
पद्भ्यामाक्रमतायुष्मंस्ततस्तु द्रुपदोऽभवत् ॥ १२
ततस्तु तपसा तस्य राजर्षेर्भावितात्मनः ।
पुत्रः समभवच्छीघ्रं पदोस्तस्य क्रमेण तु ॥ १३
तेनास्य ऋषयः सर्वे समागम्य तपोधनाः ।
नाम चक्रुर्हि विद्वांसो द्रुपदोऽस्त्विति भारत ॥ १४
स तस्यैवाश्रमे राजन्भरद्वाजस्य भारत ।
ववृधे सुमुखं तत्र कामैः सर्वैर्नृपोत्तम ॥ १५
पाञ्चालोऽपि हि राजेन्द्र स्वराज्यं गतवान्प्रभुः ।
भरद्वाजस्य विद्यार्थं सुतं दत्वा महात्मनः ॥ १६
स कुमारस्ततो राजन्द्रोणेन सहितो वने ।
वेदांश्चाधिजगे साङ्गान्धनुर्वेदांश्च भारत ॥ १७
परया स मुदा युक्तो विचचार वने सुखम् ।
तस्यैवं वर्तमानस्य वने वनचरैः सह ॥ १८
कालेनातिचिराद्राजन्पिता स्वर्गमुपेयिवान् ।
स समागम्य पाञ्चालैः पाञ्चालेष्वभिषेचितः ॥ १९
प्राप्तश्च राज्यं राजेन्द्र सुहृदां प्रीतिवर्धनः ।
राज्यं ररक्ष धर्मेण यथा चेन्द्रस्त्रिविष्टपम् ॥ २०
एतन्मया ते राजेन्द्र यथावत्परिकीर्तितम् ।
द्रुपदस्य च राजर्षेर्धृष्टद्युम्नस्य जन्म च ॥ २१

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

---

## एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

यौवराज्ये युधिष्ठिरस्याभिषेकः ॥ १ ॥ भीमसेनस्य बलरामाद्गदायुद्धशिक्षणम् ॥ २ ॥ द्रोणेनार्जुनस्य ब्रह्मशिरोस्त्रविपये नियमकथनम् ॥ ३ ॥ भीमार्जुनदिग्विजयेन धृतराष्ट्रचिन्ता ॥ ४ ॥

वैशंपायन उवाच ।
'धृतराष्ट्रस्तु राजेन्द्र यदा कौरवनन्दनम् ।
युधिष्ठिरं विजानन्वै समर्थं राज्यरक्षणे ॥ १
यौवराज्याभिषेकार्थममन्त्रयत मन्त्रिभिः ।
ते तु बुद्ध्वान्वतप्यन्त धृतराष्ट्रात्मजास्तदा ॥ २
ततः संवत्सरस्यान्ते यौवराज्याय पार्थिव ।
स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः ॥ ३
ततोऽदीर्घेण कालेन कुन्तीपुत्रो युधिष्ठिरः ।
पितुरन्तर्दधे कीर्तिं शीलवृत्तसमाधिभिः ॥ ४
असियुद्धे गदायुद्धे रथयुद्धे च पाण्डवः ।
संकर्षणादशिक्षद्वै शश्वच्छिक्षां वृकोदरः ॥ ५
समाप्तशिक्षो भीमस्तु द्युमत्सेनसमो बले ।
पराक्रमेण संपन्नो भ्रातॄणामचरद्वशे ॥ ६
प्रगाढदृढमुष्टित्वे लाघवे वेधने तथा ।
क्षुरनाराचभल्लानां विपाठानां च तत्त्ववित् ॥ ७
ऋजुवक्रविशालानां प्रयोक्ता फाल्गुनोऽभवत् ।

लाघवे सौष्ठवे चैव नान्यः कश्चन विद्यते ॥ ८
बीभत्सुसदृशो लोक इति द्रोणो व्यवस्थितः ।
ततोऽब्रवीद्गुडाकेशं द्रोणः कौरवसंसदि ॥ ९
अगस्त्यस्य धनुर्वेदे शिष्यो मम गुरुः पुरा ।
अग्निवेश्य इति ख्यातस्तस्य शिष्योऽस्मि भारत॥१०
तीर्थात्तीर्थं गमयितुमहमेतत्समुद्यतः ।
तपसा यन्मया प्राप्तममोघमशनिप्रभम् ॥ ११
अस्त्रं ब्रह्मशिरो नाम यद्दहेत्पृथिवीमपि ।
ददता गुरुणा चोक्तं न मनुष्येष्विदं त्वया ॥१२
भारद्वाज विमोक्तव्यमल्पवीर्येषु संयुगे ।
यद्यदन्तर्हितं भूतं किंचिद्युद्ध्येत्त्वया सह ॥ १३
महातेजस्त्वमेतेन हन्याः शस्त्रेण संयुगे ।
त्वया प्राप्तमिदं वीर दिव्यं नान्योऽर्हति त्विदम्१४
समयस्तु त्वया रक्ष्यो मुनिसृष्टो विशांपते ।
आचार्यदक्षिणां देहि ज्ञातिग्रामस्य पश्यतः ॥१५
ददानीति प्रतिज्ञाते फाल्गुनेनाब्रवीद्गुरुः ।
युद्धेऽहं प्रतियोद्धव्यो युध्यमानस्त्वयाऽनघ ॥१६
तथेति च प्रतिज्ञाय द्रोणाय कुरुपुङ्गवः ।
उपसंगृह्य चरणावुपतस्थे विनीतवत् ॥ १७
द्रोणो जगाद वचनं समालिङ्ग्य तु फाल्गुनम् ।
यन्मयोक्तं पुरा पार्थ तव लोके नरं क्वचित्॥१८
सदृशं कारये नैव सर्वप्रहरणे युधि ।
तत्कृतं च मया सम्यक्तव तुल्यो न वर्तते॥१९
देवा युधि न शक्तास्त्वां योद्धुं दैत्या न दानवाः।
नाहं त्वत्तो विशिष्टोऽस्मि किं पुनर्मानवा रणे२०
एकस्तवाधिको लोके यो हि वृष्णिकुलोद्भवः ।
कृष्णः कमलपत्राक्षः कंसकालियसूदनः ॥ २१
स जेता सर्वलोकानां सर्वप्रहरणायुधः ।
नैतावता ते पार्थाहं भवाम्यनृतवागिह ॥ २२
तदधीनं जगत्सर्वं तत्प्रलीनं तदुद्भवम् ।
तत्पदं न विजानन्ति ब्रह्मेशानादयोऽपि वा २३
तन्नाभिप्रभवो ब्रह्मा सर्वभूतानि निर्ममे ।
स एव कर्ता भोक्ता च संहर्ता च जगन्मयम् २४
स एव भूतं भव्यं च भवच्च पुरुषः परः ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥२५
प्रादुर्भवति योगात्मा पालनार्थं स लीलया ।
तत्तुल्यो हि न जायेत न जातो न जनिष्यते ॥२६
स हि मातुलजोऽभूत्ते चराचरगुरुः पिता ।
को हि तं जेतुमीहेत जानन्नात्महितं नरः ॥ २७
श्यालश्च ते सखा चासौ तस्य त्वं प्राणवल्लभः ।
स्नेहमभ्यधिकं तस्य तव सख्यमवस्थितम् ॥ २८
न तेन भवतो युद्धं भविता नर्मतोऽपि वा ।
अपिचार्थे तव पुरा शक्रेण किल चोदितः ॥२९
गोकुले वर्धमानस्तु नन्दगोपस्य कारणात् ।
ममांशः पाण्डवो लोके पृथिव्यां पुरुषोत्तमः ३०
कौन्तेयावरजः श्रीमानर्जुनो नाम वीर्यवान् ।
भुवो भारापहरणे साहाय्यं ते करिष्यति ॥ ३१
तदर्थमभयं देहि पाहि चास्मत्कृते प्रभो ।
इत्युक्तः पुण्डरीकाक्षस्तदा शक्रेण फल्गुन ॥ ३२
तमुवाच ततः श्रीमाञ्शङ्खचक्रगदाधरः ।
जानामि पाण्डवे वंशे जातं पार्थं पितृष्वसुः॥३३
पुत्रं परमधर्मिष्ठं सर्वशस्त्रभृतां वरम् ।
पालयामि त्वदंशं तं सर्वलोकमहाभुजम् ॥ ३४
आवयोः सख्यसदृशं न च लोके भविष्यति ।
यस्तद्भक्तः समद्भक्तो यस्तं द्वेष्टि स मामपि॥३५
यन्मे वित्तं तु तत्तस्य तं विनाहं न जीवये ।
इति पार्थ पुरा शक्रमाह सर्वेश्वरो हरिः ॥ ३६
तस्मात्तवापि सदृशस्तं विनाभ्यधिकः पुमान् ।
न चेह भविता लोके तमेव शरणं व्रज ॥ ३७
शरण्यः सर्वभूतानां देवदेवो जनार्दनः ॥ ३८'
वैशंपायन उवाच ।
तथेति च प्रतिज्ञाय द्रोणाय कुरुपुङ्गवः ।
उपसंगृह्य चरणौ युधिष्ठिरवशोऽभवत् ॥ ३९
स्वभावादगमच्छब्दो महीं सागरमेखलाम् ।
अर्जुनस्य समो लोके नास्ति कश्चिद्धनुर्धरः ॥४०
गदायुद्धेऽसियुद्धे च रथयुद्धे च पाण्डवः ।

गुडाका निद्रा तस्या ईशमर्जुनं जितनिद्रं, गुडा स्नुही तद्वत्केशा यस्य॥९॥तीर्थात्पात्रात्पात्रान्तरं गमयितुं संप्रदायाविच्छेदार्थमित्यर्थः ॥११॥ त्वया ग्राहान्मां मोचयता प्राप्तं प्रागेव ॥१४॥ तस्य त्वयीति शेषः। तव तस्मिन्निति शेषः ॥२८॥ तस्य मम च॥३५॥

पारगश्च धनुर्युद्धे बभूवाथ धनञ्जयः ॥ ४१
नीतिमान्सकलां नीतिं विबुधाधिपतेस्तदा ।
'अस्त्रे शस्त्रे च शास्त्रे च रथनागाश्वकर्मणि ।'
अवाप्य सहदेवोऽपि भ्रातॄणां वर्तते वशे ॥ ४२
द्रोणेनैवं विनीतश्च भ्रातॄणां नकुलः प्रियः ।
चित्रयोधी समाख्यातो बभूवातिरथोदितः ॥ ४३
त्रिवर्षकृतयज्ञस्तु गन्धर्वाणामुपप्लवे ।
अर्जुनप्रमुखैः पार्थैः सौवीरः समरे हतः ॥ ४४
न शशाक वशे कर्तुं यं पाण्डुरपि वीर्यवान् ।
सोऽर्जुनेन वशं नीतो राजासीद्यवनाधिपः ॥ ४५
अतीव बलसंपन्नः सदा मानी कुरून्प्रति ।
विपुलो नाम सौवीरः शस्तः पार्थेन धीमता ४६
दत्तामित्र इति ख्यातं सङ्ग्रामे कृतनिश्चयम् ।
सुमित्रं नाम सौवीरमर्जुनोऽदमयच्छरैः ॥ ४७
भीमसेनसहायश्च रथानामयुतं च सः ।
अर्जुनः समरे प्राच्यान्सर्वानेकरथोऽजयत् ॥ ४८
तथैवैकरथो गत्वा दक्षिणामजयद्दिशम् ।
धनौघं प्रापयामास कुरुराष्ट्रं धनञ्जयः ॥ ४९
'यतः पञ्चदशे वर्षे सर्वमेतच्चकार सः ।
तं दृष्ट्वा धार्तराष्ट्राणां ततो भयमजायत ॥ ५०
यः सर्वान्धृतराष्ट्रस्य पुत्रान्विप्रचकार ह ।
भीमसेनो महाबाहुर्बलाद्बलवतां वरः ॥ ५१
अदुष्टभावं तं दोषैर्जगृहुर्दोषबुद्धयः ।
धार्तराष्ट्रास्तथा सर्वे भयाद्भीमस्य कर्मणा ॥ ५२
तं दृष्ट्वा कर्मभिः पार्थान्सर्वानागतलक्षणान् ।
बलाद्बहुगुणांस्तेभ्यो विभियुर्दोषबुद्धयः ॥' ५३
एवं सर्वे महात्मानः पाण्डवा मनुजोत्तमाः ।
परराष्ट्राणि निर्जित्य स्वराष्ट्रं ववृधुः पुरा ॥ ५४
ततो बलमतिख्यातं विज्ञाय दृढधन्विनाम् ।
दूषितः सहसा भावो धृतराष्ट्रस्य पाण्डुषु ।
स चिन्तापरमो राजा न निद्रामलभन्निशि ॥ ५५

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

## द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

युधिष्ठिरः साम्राज्येऽभिषेक्तव्य इति पौरवार्तां श्रुत्वा व्यथितस्य दुर्योधनस्य पित्रा संवादः ॥ १ ॥

वैशंपायन उवाच ।
प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् ।
दुर्योधनो लक्षयित्वा पर्यतप्यत दुर्मनाः ॥ १
ततो वैकर्तनः कर्णः शकुनिश्चापि सौबलः ।
अनेकैरभ्युपायैस्ते जिघांसन्ति स्म पाण्डवान् ॥ २
पाण्डवा अपि तत्सर्वं प्रतिचक्रुर्यथाबलम् ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥ ३
गुणैः समुदितान्दृष्ट्वा पौराः पाण्डुसुतांस्तदा ।
कथयाञ्चक्रिरे तेषां गुणान्संसत्सु भारत ॥ ४
राज्यप्राप्तिं च संप्राप्तं ज्येष्ठं पाण्डुसुतं तदा ।
कथयन्ति स्म संभूय चत्वरेषु सभासु च ॥ ५
प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रो जनेश्वरः ।
राज्यं न प्राप्तवान्पूर्वं स कथं नृपतिर्भवेत् ॥ ६
तथा शान्तनवो भीष्मः सत्यसन्धो महाव्रतः ।
प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति ॥ ७
ते वयं पाण्डवज्येष्ठं तरुणं वृद्धशीलिनम् ।
अभिषिञ्चाम साध्वद्य सत्यकारुण्यवेदिनम् ॥ ८
स हि भीष्मं शान्तनवं धृतराष्ट्रं च धर्मवित् ।
सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन् ॥ ९
वैशंपायन उवाच ।
तेषां दुर्योधनः श्रुत्वा तानि वाक्यानि जल्पताम् ।
युधिष्ठिरानुरक्तानां पर्यतप्यत दुर्मतिः ॥ १०

---

विबुधाधिपतेरुद्धवात् ॥ ४२ ॥ विनीतः शिक्षितः । अतिरथेषूदितः ख्यातः ॥ ४३ ॥ गन्धर्वोपप्लवेऽपि यस्य सौवीरस्य यज्ञो न विप्लुत इत्ययोध्यत्वमुक्तम् ॥ ४४ ॥ शस्तो हिंसितः ॥ ४६ ॥ विभियुः बिभ्युः ॥ ५३ ॥ ववृधुर्वर्धितवन्तः ॥ ५४ ॥ एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे ।
ईर्ष्यया चापि संतप्तो धृतराष्ट्रमुपागमत् ॥ ११
ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य सः ।
पौरानुरागसंतप्तः पश्चादिदमभाषत ॥ १२
श्रुता मे जल्पतां तात पौराणामशिवा गिरः ।
त्वामनादृत्य भीष्मं च पतिमिच्छन्ति पाण्डवम् १३
मतमेतच्च भीष्मस्य न स राज्यं बुभुक्षति ।
अस्माकं तु परां पीडां चिकीर्षन्ति पुरे जनाः॥१४
पितृतः प्राप्तवान्राज्यं पाण्डुरात्मगुणैः पुरा ।
त्वमन्धगुणसंयोगात्प्राप्तं राज्यं न लब्धवान् १५
स एष पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः ।
तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्यापि चापरः॥ १६
ते वयं राजवंशेन हीनाः सह सुतैरपि ।
अवज्ञाता भविष्यामो लोकस्य जगतीपते ॥ १७
सततं निरयं प्राप्ताः परपिण्डोपजीविनः ।
न भवेम यथा राजंस्तथा नीतिर्विधीयताम् ॥१८
यदि त्वं हि पुरा राजन्निदं राज्यमवाप्तवान् ।
ध्रुवं प्राप्स्याम च वयं राज्यमप्यवशे जने ॥ १९
'वैशंपायन उवाच ।
धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीदृशम् ।
मुहूर्तमिव संचिन्त्य दुर्योधनमथाब्रवीत् ॥ २०
धर्मनित्यस्तथा पाण्डुः सुप्रीतो मयि कौरवः ।
सर्वेषु ज्ञातिषु तथा मदीयेषु विशेषतः ॥ २१
नात्र किंचन जानाति भोजनादि चिकीर्षितम् ।
निवेदयति तत्सर्वं मयि धर्मभृतां वरः ॥ २२
तस्य पुत्रो यथा पाण्डुस्तथा धर्मपरः सदा ।
गुणवाँल्लोकविख्यातो नगरे च प्रतिष्ठितः ॥ २३
स कथं शक्यतेऽस्माभिरपाक्रष्टुं नरर्षभः ।
राज्यमेष हि नः प्राप्तः ससहयो विशेषतः ॥२४
भृता हि पाण्डुनाऽमात्या बलं च सततं मतम् ।
धृताः पुत्राश्च पौत्राश्च तेषामपि विशेषतः ॥ २५
ते तथा संस्तुतास्तात विषये पाण्डुना नराः ।
कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान्॥२६
नैते विषयमिच्छेयुर्धर्मत्यागे विशेषतः ।
ते वयं कौरवेन्द्राणामेतेषां च महात्मनाम् ॥ २७
कथं न वाच्यतां तात गच्छेम जगतस्तथा ॥ २८
दुर्योधन उवाच ।
मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः ।
यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः ॥२९
कृपः शारद्वतश्चैव यत एव वयं ततः ।
भागिनेयं ततो द्रौणिं न त्यक्ष्यति कथंचन ॥ ३०
क्षत्ता तु बन्धुरस्माकं प्रच्छन्नस्तु ततः परैः ।
न चैकः स समर्थोऽस्मान्पाण्डवार्थे प्रबाधितुम् ३१
सुविस्रब्धान्पाण्डुसुतान्सह मात्रा विवासय ।
वारणावतमद्यैव नात्र दोषो भविष्यति ॥ ३२
विनिद्राकरणं घोरं हृदि शल्यमिवार्पितम् ।
शोकपावकमुद्भूतं कर्मणानेन नाशय ॥' ३३

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

## त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

धृतराष्ट्रादीनां कणिकेन दुर्नीत्युपदेशः ॥ १ ॥ जम्बुकोपाख्यानम् ॥ २ ॥

वैशंपायन उवाच ।
श्रुत्वा पाण्डुसुतान्वीरान्बलोद्रिक्तान्महौजसः ।
धृतराष्ट्रो महीपालश्चिन्तामगमदातुरः ॥ १
तत आहूय मन्त्रज्ञं राजशास्त्रार्थवित्तमम् ।
कणिकं मन्त्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद्वचः ॥ २
उत्सक्ताः पाण्डवा नित्यं तेभ्योऽसूये द्विजोत्तम ।
तत्र मे निश्चिततमं सन्धिविग्रहकारणम् ।
कणिक त्वं ममाचक्ष्व करिष्ये वचनं तव ॥ ३
वैशंपायन उवाच ।
'दुर्योधनोऽथ शकुनिः कर्णदुःशासनावपि ।
कणिकं ह्युपसंगृह्य मन्त्रिणं सौबलस्य च ॥ ४
पप्रच्छुर्भरतश्रेष्ठ पाण्डवान्प्रति नैकधा ।

प्रबुद्धाः पाण्डवा नित्यं सर्वे तेभ्यस्त्रसामहे ॥ ५
अनूनं सर्वपक्षाणां यद्भवेत्क्षेमकारकम् ।
भारद्वाज तदाचक्ष्व करिष्यामः कथं वयम् ॥ ६
वैशंपायन उवाच ।'
स प्रसन्नमनास्तेन परिपृष्टो द्विजोत्तमः ।
उवाच वचनं तीक्ष्णं राजशास्त्रार्थदर्शनम् ॥ ७
कणिक उवाच ।
शृणु राजन्निदं तत्र प्रोच्यमानं मयानघ ।
न मेऽभ्यसूया कर्तव्या श्रुत्वैतत्कुरुसत्तम ॥ ८
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।
अच्छिद्रश्छिद्रदर्शी स्यात्परेषां विवरानुगः ॥ ९
नित्यमुद्यतदण्डाद्धि भृशमुद्विजते जनः ।
तस्मात्सर्वाणि कार्याणि दण्डेनैव विधारयेत्॥१०
नास्य च्छिद्रं परः पश्येच्छिद्रेण परमन्वियात् ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ११
'नित्यं च ब्राह्मणाः पूज्या नृपेण हितमिच्छता ।
सृष्टो नृपो हि विप्राणां पालने दुष्टनिग्रहे ॥ १२
उभाभ्यां वर्धते धर्मो धर्मवृद्ध्या जितावुभौ ।
लोकश्चायं परश्चैव ततो धर्मं समाचरेत् ॥ १३
कृतापराधं पुरुषं दृष्ट्वा यः क्षमते नृपः ।
तेनावमानमाप्नोति पापं चेह परत्र च ॥ १४
यो विभूतिमवाप्योच्चै राज्ञो विकुरुतेऽधमः ।
तमानयित्वा हत्वा च दद्याद्धीनाय तद्धनम्॥१५
नो चेद्धुरि नियुक्ता ये स्थास्यन्ति वशमात्मनः ।
राजा नियुञ्ज्यात्पुरुषानाप्तान्धर्मार्थकोविदान् ॥
ये नियुक्तास्तथा केचिद्राष्ट्रं वा यदि वा पुरम् ।
ग्रामं जनपदं वापि बाधेयुर्यदि वा न वा ॥ १७
परीक्षणार्थं विसृजेदानतांश्छन्नरूपिणः ।
परीक्ष्य पापकं जह्याद्धनमादाय सर्वशः ॥' १८
नासम्यक्कृत्यकारी स्यादुपक्रम्य कदाचन ।
कण्टको ह्यपि दुश्छिन्न आस्रावं जनयेच्चिरम् १९
वधमेव प्रशंसन्ति शत्रूणामपकारिणाम् ।
सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायितम् ॥ २०
आपद्यापदि काले च कुर्वीत न विचारयेत् ।
नावज्ञेयो रिपुस्तात दुर्बलोऽपि कथं चन ॥ २१
अल्पोऽप्यग्निर्वनं कृत्स्नं दहत्याश्रयसंश्रयात् ।
अन्धः स्यादन्धवेलायां बाधिर्यमपि चाश्रयेत्२२
कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ।
सान्त्वादिभिरुपायैस्तु हन्याच्छत्रुं वशे स्थितं २३
दया न तस्मिन्कर्तव्या शरणागत इत्युत ।
निरुद्विग्नो हि भवति न हताज्जायते भयम्॥२४
हन्यादमित्रं दानेन तथा पूर्वापकारिणम् ।
हन्यात्त्रीन्पञ्च सप्तेति परपक्षस्य सर्वशः ॥ २५
मूलमेवादितश्छिन्द्यात्परपक्षस्य नित्यशः ।
ततः सहायांस्तत्पक्षान्सर्वांश्च तदनन्तरम् ॥ २६
छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः ।
कथं नु शाखास्तिष्ठेरंश्छिन्नमूले वनस्पतौ ॥ २७
एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः ।
राजन्नित्यं सपत्नेषु नित्योद्विग्नः समाचरेत् ॥२८
अग्न्याधानेन यज्ञेन काषायेण जटाजिनैः ।
लोकान्विश्वासयित्वैव ततो लुम्पेद्यथा वृकः॥२९
अङ्कुशं शौचमित्याहुरर्थानामुपधारणे ।
आनाम्य फलितां शाखां पक्वं पक्वं प्रशातयेत्३०
फलार्थोऽयं समारम्भो लोके पुंसां विपश्चिताम् ।
वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः ॥ ३१
ततः प्रत्यागते काले भिन्द्याद्घटमिवाश्मनि ।
अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन् ३२
कृपा न तस्मिन्कर्तव्या हन्यादेवापकारिणम् ।

---

उभाभ्यां ब्राह्मणरक्षणदुष्टनिग्रहाभ्याम् । जितौ संपादितौ भवेतामिति शेषः ॥ १३ ॥ हीनाय दरिद्राय ॥ १५ ॥ उपसंहरति वधमिति। कथं वधः कर्तव्य इत्याह सुविदीर्णमिति । सुविक्रान्तमपि शत्रुं । काले आपद्यापन्नमालभ्य सुविदीर्णं विनष्टं कुर्वीत। तथा सुयुद्धमपि शत्रुमापदि काले सुपलायितं कुर्वीत२० आश्रयसंश्रयात् आश्रयबलात् ॥ २२ ॥ तृणमयं तृणवन्निष्प्रयोजनम् । क्षात्रं धर्मं त्यक्त्वा शत्रुगृहे भिक्षाभुगपि स्यादित्यर्थः । मृगशायिकां मृगहन्तुः शय्याम् । यथा व्याधो मृगान्विश्वासयितुं मृषा निद्राति विश्वस्तेषु च तेषु प्रहरत्येवं स हन्तुमेवाकारं गोपयतीत्यर्थः । उपायैः वशे स्थितं शत्रुमिति संबन्धः ॥२३॥ त्रीन् ऐश्वर्यमन्त्रोत्साहान् । तथा पञ्च अमात्यराष्ट्रदुर्गाणि कोशो दण्डश्च पञ्चम इत्युक्तान्। दण्डोऽत्र सैन्यं। सप्त स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि चेत्युक्तानि ॥ २५ ॥ शौचमग्न्याधानादि। अत्र दृष्टान्तः आनाम्येति आनामयित्वा ॥ ३० ॥

हन्यादमित्रं सान्त्वेन तथा दानेन वा पुनः ३३
तथैव भेददण्डाभ्यां सर्वोपायैः प्रशातयेत् ।
धृतराष्ट्र उवाच ।
कथं सान्त्वेन दानेन भेदैर्दण्डेन वा पुनः ॥३४
अमित्रः शक्यते हन्तुं तन्मे ब्रूहि यथातथम् ।
कणिक उवाच ।
शृणु राजन्यथा वृत्तं वने निवसतः पुरा ॥ ३५
जम्बुकस्य महाराज नीतिशास्त्रार्थदर्शिनः ।
अथ कश्चित्कृतप्रज्ञः शृगालः स्वार्थपण्डितः॥३६
सखिभिर्न्यवसत्सार्धं व्याघ्राखुवृकबभ्रुभिः ।
तेऽपश्यन्विपिने तस्मिन्बलिनं मृगयूथपम् ॥ ३७
अशक्ता ग्रहणे तस्य ततो मन्त्रममन्त्रयन् ।
जम्बुक उवाच ।
असकृद्यतितो ह्येष हन्तुं व्याघ्र वने त्वया ॥ ३८
युवा वै जवसंपन्नो बुद्धिशाली न शक्यते ।
मूषिकोऽस्य शयानस्य चरणौ भक्षयत्वयम् ॥३९
अथैनं भक्षितैः पादैर्व्याघ्रो गृह्णातु वै ततः ।
ततो वै भक्षयिष्यामः सर्वे मुदितमानसाः ॥४०
जम्बुकस्य तु तद्वाक्यं तथा चक्रुः समाहिताः ।
मूषिकाभक्षितैः पादैर्मृगं व्याघ्रोऽवधीत्तदा॥४१
दृष्ट्वैवाचेष्टमानं तु भूमौ मृगकलेवरम् ।
स्नात्वाऽऽगच्छत भद्रं वो रक्षामीत्याह जम्बुकः४२
शृगालवचनात्तेऽपि गताः सर्वे नदीं ततः ।
स चिन्तापरमो भूत्वा तस्थौ तत्रैव जम्बुकः ४३
अथाजगाम पूर्वं तु स्नात्वा व्याघ्रो महाबलः ।
ददर्श जम्बुकं चैव चिन्ताकुलितमानसम् ॥ ४४
व्याघ्र उवाच ।
किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः ।
अशित्वा पिशितान्यद्य विहरिष्यामहे वयम् ४५
जम्बुक उवाच ।
शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत् ।
धिग्बलं मृगराजस्य मयाद्यायं मृगो हतः ॥ ४६
मद्बाहुबलमाश्रित्य तृप्तिमद्य गमिष्यति ।
तस्यैवं गर्जितं श्रुत्वा ततो भक्ष्यं न रोचये ॥४७
व्याघ्र उवाच ।
ब्रवीति यदि स ह्येवं काले ह्यस्मि प्रबोधितः ।
स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान् ॥ ४८
खादिष्ये तत्र मांसानि इत्युक्त्वा प्रस्थितो वनम् ।
एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह ॥४९
तमागतमभिप्रेक्ष्य शृगालोऽप्यब्रवीद्वचः ।
शृणु मूषिक भद्रं ते नकुलो यदिहाब्रवीत् ॥५०
मृगमांसं न खादेयं गरमेतन्न रोचते ।
मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम् ॥ ५१
तच्छ्रुत्वा मूषिको वाक्यं संत्रस्तः प्रगतो बिलम् ।
ततः स्नात्वा स वै तत्र आजगाम वृको नृप ॥५२
तमागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ।
मृगराजो हि संक्रुद्धो न ते साधु भविष्यति ५३
सकलत्रस्त्विहायाति कुरुष्व यदनन्तरम् ।
एवं संचोदितस्तेन जम्बुकेन तदा वृकः ॥ ५४
ततोऽवलुम्पनं कृत्वा प्रयातः पिशिताशनः ।
एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह ॥५५
तमुवाच महाराज नकुलं जम्बुको वने ।
स्वबाहुबलमाश्रित्य निर्जितास्तेऽन्यतो गताः ५६
मम दत्त्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम् ।
नकुल उवाच ।
मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः ॥ ५७
निर्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान् ।
न त्वयाप्युत्सहे योद्धुमित्युक्त्वा सोऽप्युपागमत्॥
कणिक उवाच ।
एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः ।
खादति स्म तदा मांसमेकः सन्मन्त्रनिश्चयात् ।
एवं समाचरन्नित्यं सुखमेधेत भूपतिः ॥ ५९
भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा ।
लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा ॥ ६०
एवं ते कथितं राजन् शृणु चाप्यपरं तथा ॥६१
पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।

बभ्रुर्नकुलः। मृगयूथपं महान्तं हरिणम् ॥३७॥ मूषिकेण आ ई- षद्भक्षितैः ॥ ४१ ॥ मृगराजस्य व्याघ्रस्य ॥ ४६ ॥ गरं मूषि- कदष्टत्वाद्विषभूतम् ॥ ५१ ॥ अवलुम्पनं गात्रसंकोचनम् ॥५५॥

रिपुस्थानेषु वर्तन्तो हन्तव्या भूतिमिच्छता ॥ ६२
शपथेनाप्यरिं हन्यादर्थदानेन वा पुनः ।
विषेण मायया वापि नोपेक्षेत कथंचन ।
उभौ चेत्संशयोपेतौ श्रद्धावांस्तत्र वर्धते ॥ ६३
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम् ॥ ६४
क्रुद्धोऽप्यक्रुद्धरूपः स्यात्स्मितपूर्वाभिभाषिता ।
'न चैनं क्रोधसंदीप्तं विद्यात्कश्चित्कथंचन ।'
न चाप्यन्यमपध्वंसेत्कदाचित्कोपसंयुतः ॥ ६५
प्रहरिष्यन्प्रियं ब्रूयात्प्रहरन्नपि भारत ।
प्रहृत्य च प्रियं ब्रूयाच्छोचन्निव रुदन्निव ॥ ६६
आश्वासयेच्चापि परं सान्त्वधर्मार्थवृत्तिभिः ।
अथ तं प्रहरेत्काले तथा विचलितं पथि ॥ ६७
अपि घोरापराधस्य धर्ममाश्रित्य तिष्ठतः ।
स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः॥६८
यः स्यादनुप्राप्तवधस्तस्यागारं प्रदीपयेत् ।
अधनान्नास्तिकांश्चोरान्विषकर्मसु योजयेत् ॥ ६९
प्रत्युत्थानासनाद्येन संप्रदानेन केनचित् ।
अतिविश्रब्धघाती स्यात्तीक्ष्णदंष्ट्रो निमग्नकः ७०
अशङ्कितेभ्यः शङ्केत शङ्कितेभ्यश्च सर्वशः ।
अशङ्क्याद्भयमुत्पन्नमपि मूलं निकृन्तति ॥ ७१
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥७२
चारः सुविहितः कार्य आत्मनश्च परस्य वा ।
पाषण्डांस्तापसादींश्च परराष्ट्रेषु योजयेत् ॥ ७३
उद्यानेषु विहारेषु देवतायतनेषु च ।
पानागारेषु रथ्यासु सर्वतीर्थेषु चाप्यथ ॥ ७४
चत्वरेषु च कूपेषु पर्वतेषु वनेषु च ।
समवायेषु सर्वेषु सरित्सु च विचारयेत् ॥ ७५
वाचा भृशं विनीतः स्याद्धृदयेन तथा क्षुरः ।
स्मितपूर्वाभिभाषी स्यात्सृष्टो रौद्रस्य कर्मणः॥७६
अञ्जलिः शपथः सान्त्वं शिरसा पादवन्दनम् ।
आशाकरणमित्येवं कर्तव्यं भूतिमिच्छता ॥ ७७
सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसङ्काशो नच जीर्येत कर्हिचित्॥७८
त्रिवर्गे त्रिविधा पीडा ह्यनुबन्धास्तथैव च ।
अनुबन्धाः शुभा ज्ञेयाः पीडास्तु परिवर्जयेत्॥७९
धर्मं विचरतः पीडा सापि द्वाभ्यां नियच्छति ।
अर्थं चाप्यर्थलुब्धस्य कामं चातिप्रवर्तिनः ॥८०
अगर्वितात्मा युक्तश्च सान्त्वयुक्तोऽनसूयिता ।
अवेक्षितार्थः शुद्धात्मा मन्त्रयीत द्विजैः सह॥८१
कर्मणा येन केनैव मृदुना दारुणेन च ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ८२
न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ८३
यस्य बुद्धिः परिभवेत्तमतीतेन सान्त्वयेत् ।
अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् ॥ ८४
योऽरिणा सह सन्धाय शयीत कृतकृत्यवत् ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥ ८५
मन्त्रसंवरणे यत्नः सदा कार्योऽनसूयता ।
आकारमभिरक्षेत चारेणाप्यनुपालितः ॥ ८६
'न रात्रौ मन्त्रयेद्विद्वान्न च कैश्चिदुपासितः ।
प्रासादाग्रे शिलाग्रे वा विशाले विजनेपि वा ८७
समन्तात्तत्र पश्यद्भिः सहामात्यैरेव मन्त्रयेत् ।
नैव संवेशयेत्तत्र मन्त्रवेश्मनि शारिकाम् ॥ ८८
शुकान्वा शारिका वापि बालमूर्खजडानपि ।

संशयोपेतौ संशयविषयौ । श्रद्धावान् मदुक्तादरवान् । श्रद्दधानस्तु वध्यत इति ङ. पाठः ॥ ६३ ॥ अपध्वंसेत् कुत्सयेत् ॥६५॥ अनुप्राप्तवधः शीघ्रं हन्तुमिष्टः अधना दरिद्राः नास्तिकाः परलोकश्रद्धारहिताः ॥ ६९ ॥ निमग्नकः नम्रशिराः तीक्ष्णदंष्ट्रः व्याघ्र इव । तीक्ष्णदंष्ट्र इवोरग इति क. ङ. पाठः ॥ ७० ॥ सुविहितः सम्यक् परीक्षितः ॥७३॥ सृष्टो रौद्राय कर्मण इति क. घ. पाठः ॥ ७६ ॥ अनुबन्धः फलम् ॥ ७९ ॥ धर्ममत्यन्तं विचरतः पुंसो द्वाभ्यामर्थकामाभ्यां धनव्ययब्रह्मचर्योपक्षिप्ताभ्यां पीडा चित्तवैकल्यं भवति । सापि पुंसः पीडा धर्मं नियच्छति निगृह्णाति । एवमर्थं चाप्यर्थलुब्धस्य कामं चातिप्रवर्तिन इति व्याख्येयं॥८०॥ उद्देश्यसन्देहेपि नीतिरवश्यमनुसरणीयेत्याह । न संशयमिति । असंशयमथारुह्येति क. घ. ट. पाठः ॥ ८३ ॥ परिभवेत् शोकेन । तमतीतेन नलरामाद्याख्यानेन । दुर्बुद्धिं । लोभाद्युपहतबुद्धिम् । अनागतेन कालान्तरे तव श्रेयो भविष्यतीत्याशाप्रदर्शनेन । पण्डितं प्रत्युत्पन्नेन वर्तमानेन धनादिना सान्त्वयेत् ॥ ८४ ॥ मन्त्रसंवरणं मन्त्रगूहनम् ॥ ८६ ॥

प्रविष्टानपि निर्वास्य मन्त्रयेद्धार्मिकैर्द्विजैः ॥ ८९
नीतिज्ञैर्न्यायशास्त्रज्ञैरितिहासे सुनिष्ठितैः ।
रक्षां मन्त्रस्य निश्छिद्रां मन्त्रान्ते निश्चयेत्स्वयम्९०
वीरोपवर्णितात्तस्माद्धर्मार्थाभ्यामथात्मना ।
एकेन वाथ विप्रेण ज्ञातबुद्धिर्विनिश्चयेत् ॥ ९१
तृतीयेन न चान्येन व्रजेन्निश्चयमात्मवान् ।
षट्कर्णश्छिद्यते मन्त्र इति नीतिषु पठ्यते ॥ ९२
निःसृतो नाशयेन्मन्त्रो हस्तप्राप्तामपि श्रियम् ।
स्वमतं च परेषां च विचार्य च पुनःपुनः ।
गुणवद्वाक्यमादद्यान्नैव तृप्येद्विचक्षणः ॥' ९३
नाच्छित्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम्॥९४
कर्शितं व्याधितं क्लिन्नमपानीयमघासकम् ।
परिविश्वस्तमन्दं च प्रहर्तव्यमरेर्बलम् ॥ ९५
नार्थिकोऽर्थिनमभ्येति कृतार्थे नास्ति सङ्गतम् ।
तस्मात्सर्वाणि साध्यानि सावशेषाणि कारयेत्९६
संग्रहे विग्रहे चैव यत्नः कार्योऽनसूयता ।
उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ॥९७
नास्य कृत्यानि बुध्येरन्मित्राणि रिपवस्तथा ।
आरब्धान्येव पश्येरन्सुपर्यवसितान्यपि ॥ ९८
भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ ९९
दैवेनोपहतं शत्रुमनुगृह्णाति यो नरः ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १००
अनागतं हि बुध्येत यच्च कार्यं पुरः स्थितम् ।
न तु बुद्धिक्षयात्किंचिदतिक्रामेत्प्रयोजनम्॥१०१
उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ।
विभज्य देशकालौ च दैवं धर्मादयस्त्रयः ।
नैःश्रेयसौ तु तौ ज्ञेयौ देशकालाविति स्थितिः॥
तालवत्कुरुते मूलं बालः शत्रुरुपेक्षितः ।
गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान्॥१०३
अग्निस्तोकमिवात्मानं सन्धुक्षयति यो नरः ।
स वर्धमानो ग्रसते महान्तमपि संचयम् ॥ १०४
'आदावेव ददानीति प्रियं ब्रूयान्निरर्थकम्॥'१०५
आशां कालवतीं कुर्यात्कालं विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं वाऽपि हेतुतः॥१०६
क्षुरो भूत्वा हरेत्प्राणान्निशितः कालसाधनः ।
प्रतिच्छन्नो लोमहारी द्विषतां परिकर्तनः ॥१०७
पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह ।
वर्तमानो न मज्जेस्त्वं तथा कृत्यं समाचर ॥१०८
सर्वकल्याणसंपन्नो विशिष्ट इति निश्चयः ।
तस्मात्त्वं पाण्डुपुत्रेभ्यो रक्षात्मानं नराधिप॥१०९
भ्रातृव्या बलवन्तस्ते पाण्डुपुत्रा नराधिप ।
पश्चात्तापो यथा न स्यात्तथा नीतिर्विधीयताम्॥
वैशंपायन उवाच ।
एवमुक्त्वा संप्रतस्थे कणिकः स्वगृहं ततः ।
धृतराष्ट्रोऽपि कौरव्यः शोकार्तः समपद्यत ॥१११

॥ इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

## समाप्तं च संभवपर्व ।

---

अघासकं अनाहारम् ॥ ९५ ॥ संगतं सख्यम् ॥ ९६ ॥ आरब्धान्यपि सुपर्यवसितानि संपन्नान्येव पश्येरन् ॥ ९८ ॥ संविधातव्यं प्रतिकर्तव्यम् ॥ ९९ ॥ देशाद्यनुगुण उत्साहोऽपि कर्तव्यो नत्वलसो भवेत् । दैवं प्राक्तनं कर्म । ये धर्मादयस्त्रयस्तांश्च विभज्य तेषां मध्ये नैःश्रेयसौ श्रेयोहेतू इति स्थितिर्निश्चयः ॥ १०२ ॥ बालः अल्पोपि । बलवत्कुरुते रूपं बाल्यादिति क. ङ. ट. पाठः ॥ १०३ ॥ आत्मानं संधुक्षयति सहायादिना वर्धयति । संचयमिन्धनानां पक्षे शत्रूणाम् ॥ १०४ ॥ हेतुतः हेत्वन्तरेण ॥ १०६ ॥ तदा सपुत्रो राजा च शोकार्त इति ङ. पुस्तकपाठः ॥ १११ ॥ त्रिपञ्चाशदधिकशततमोऽध्यायः ॥१५३॥

# अथ जतुगृहपर्व ॥ ८ ॥

## चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

संग्रहेण जतुगृहदाहकथनम् ॥ १ ॥ पुनर्विस्तरेण जतुगृहदाहकथनारम्भः ॥ २ ॥ दुर्योधनधृतराष्ट्रसंवादः ॥ ३ ॥

वैशंपायन उवाच ।
कर्णिकस्य मतं श्रुत्वा कार्त्स्न्येन भरतर्षभ ।
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
दुःशासनचतुर्थास्ते मन्त्रयामासुरेकदा ॥ १
ते कौरव्यमनुज्ञाप्य धृतराष्ट्रं नराधिपम् ।
दहने तु सपुत्रायाः कुन्त्या बुद्धिमकारयन् ॥ २
तेषामिङ्गितभावज्ञो विदुरस्तत्त्वदर्शिवान् ।
आकारेण च तं मन्त्रं बुबुधे दुष्टचेतसाम् ॥ ३
ततो विदितवेद्यात्मा पाण्डवानां हिते रतः ।
पलायने मतिं चक्रे कुन्त्याः पुत्रैः सहानघः ॥४
ततो वातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
ऊर्मिक्षमां दृढां कृत्वा कुन्तीमिदमुवाच ह ॥ ५
एष जातः कुलस्यास्य कीर्तिवंशप्रणाशनः ।
धृतराष्ट्रः परीतात्मा धर्मं त्यजति शाश्वतम् ॥ ६
इयं वारिपथे युक्ता तरङ्गपवनक्षमा ।
नौर्यया मृत्युपाशात्त्वं सपुत्रा मोक्ष्यसे शुभे ॥७
तच्छ्रुत्वा व्यथिता कुन्ती पुत्रैः सह यशस्विनी ।
नावमारुह्य गङ्गायां प्रययौ भरतर्षभ ॥ ८
ततो विदुरवाक्येन नावं विक्षिप्य पाण्डवाः ।
धनं चादाय तैर्दत्तमरिष्टं प्राविशन्वनम् ॥ ९
निषादी पञ्चपुत्रा तु जातुषे तत्र वेश्मनि ।
कारणाभ्यागता दग्धा सह पुत्रैरनागसा ॥ १०
स च म्लेच्छाधमः पापो दग्धस्तत्र पुरोचनः ।
वञ्चिताश्च दुरात्मानो धार्तराष्ट्राः सहानुगाः ११
अविज्ञाता महात्मानो जनानामक्षतास्तथा ।
जनन्या सह कौन्तेया मुक्ता विदुरमन्त्रिताः॥१२
ततस्तस्मिन्पुरे लोका नगरे वारणावते ।
दृष्ट्वा जतुगृहं दग्धमन्वशोचन्त दुःखिताः ॥ १३
प्रेषयामासू राजानं यथावृत्तं निवेदितुम् ।
संवृतस्ते महान्कामः पाण्डवान्दग्धवानसि ॥ १४
सकामो भव कौरव्य भुङ्क्ष्व राज्यं सपुत्रकः ।
तच्छ्रुत्वा धृतराष्ट्रस्तु सहपुत्रेण शोचयन् ॥ १५
प्रेतकार्याणि च तथा चकार सह बान्धवैः ।
पाण्डवानां तथा क्षत्ता भीष्मश्च कुरुसत्तमः॥१६
जनमेजय उवाच ।
पुनर्विस्तरशः श्रोतुमिच्छामि द्विजसत्तम ।
दाहं जतुगृहस्यैव पाण्डवानां च मोक्षणम् ॥१७
सुनृशंसमिदं कर्म तेषां क्रूरोपसंहितम् ।
कीर्तयस्व यथावृत्तं परं कौतूहलं मम ॥ १८
वैशंपायन उवाच ।
शृणु विस्तरशो राजन्वदतो मे परन्तप ।
दाहं जतुगृहस्यैतत्पाण्डवानां च मोक्षणम् ॥ १९
वैशंपायन उवाच ।
ततो दुर्योधनो राजा धृतराष्ट्रमभाषत ।
पाण्डवेभ्यो भयं नः स्यात्तान्विवासयतां भवान् ।
निपुणेनाभ्युपायेन नगरं वारणावतम् ॥ २०
धृतराष्ट्रस्तु पुत्रेण श्रुत्वा वचनमीरितम् ।
मुहूर्तमिव संचिन्त्य दुर्योधनमथाब्रवीत् ॥ २१
धर्मनित्यः सदा पाण्डुस्तथा धर्मपरायणः ।
सर्वेषु ज्ञातिषु तथा मयि त्वासीद्विशेषतः ॥ २२
नासौ किंचिद्विजानाति भोजनादिचिकीर्षितम् ।
निवेदयति नित्यं हि मम राज्यं धृतव्रतः ॥ २३
तस्य पुत्रो यथा पाण्डुस्तथा धर्मपरायणः ।
गुणवान्लोकविख्यातः पौरवाणां सुसंमतः ॥२४
स कथं शक्यतेऽस्माभिरपाकर्तुं बलादितः ।
पितृपैतामाहाद्राज्यात्ससहायो विशेषतः ॥ २५

अनुज्ञाप्य पृष्ट्वा ॥ २ ॥ इङ्गितं चेष्टितं तेन भावं चित्ताभिप्रायं जानातीति इङ्गितभावज्ञः ॥ ३ ॥ विदितवेद्यो ज्ञाततत्त्व आत्मा चित्तं यस्य ॥ ४ ॥ यन्त्रयुक्तां यन्त्रं महत्यपि वाते जलाशये नौकास्तम्भकं लोहलङ्गलमयम् ॥ ५ ॥ अरिष्टं निर्विघ्नम् ॥ ९ ॥ क्रूरेण कणिकेनोपसंहितमुपदिष्टम् ॥ १८ ॥

चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

भृता हि पाण्डुनाऽमात्या बलं च सततं भृतम् ।
भृताः पुत्राश्च पौत्राश्च तेषामपि विशेषतः ॥ २६
ते पुरा सत्कृतास्तात पाण्डुना नागरा जनाः ।
कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान् ॥
दुर्योधन उवाच ।
एवमेतन्मया तात भावितं दोषमात्मनि ।
दृष्ट्वा प्रकृतयः सर्वा अर्थमानेन पूजिताः ॥ २८
ध्रुवमस्मत्सहायास्ते भविष्यन्ति प्रधानतः ।
अर्थवर्गः सहामात्यो मत्संस्थोऽद्य महीपते ॥ २९
स भवान्पाण्डवानाशु विवासयितुमर्हति ।
मृदुनैवाभ्युपायेन नगरं वारणावतम् ॥ ३०
यदा प्रतिष्ठितं राज्यं मयि राजन्भविष्यति ।
तदा कुन्ती सहापत्या पुनरेष्यति भारत ॥ ३१
धृतराष्ट्र उवाच ।
दुर्योधन ममाप्येतद्धृदि संपरिवर्तते ।
अभिप्रायस्य पापत्वान्नैवं तु विवृणोम्यहम् ॥ ३२
न च भीष्मो न च द्रोणो न च क्षत्ता न गौतमः ।
विवास्यमानान्कौन्तेयाननुमंस्यन्ति कर्हिचित् ३३
समा हि कौरवेयाणां वयं ते चैव पुत्रक ।
नैते विषममिच्छेयुर्धर्मयुक्ता मनस्विनः ॥ ३४
ते वयं कौरवेयाणामेतेषां च महात्मनाम् ।
कथं न वध्यतां तात गच्छाम जगतस्तथा ॥ ३५
दुर्योधन उवाच ।
मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः ।
यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः ॥ ३६
कृपः शारद्वतश्चैव यत एतौ ततो भवेत् ।
द्रोणं च भागिनेयं च न स त्यक्ष्यति कर्हिचित् ३७
क्षत्ताऽर्थबद्धस्त्वस्माकं प्रच्छन्नं संयतः परैः ।
न चैकः स समर्थोऽस्मान्पाण्डवार्थेऽधिबाधितुम् ॥
सुविस्रब्धः पाण्डुपुत्रान्सह मात्रा प्रवासय ।
वारणावतमद्यैव यथा यान्ति यथा कुरु ॥ ३९
विनिद्रकरणं घोरं हृदि शल्यमिवार्पितम् ।
शोकपावकमुद्भूतं कर्मणैतेन नाशय ॥ ४०

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

## पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

दुर्योधनेन दानादिना प्रकृतिवशीकरणम् ॥ १ ॥ पाण्डवानां वारणावतयात्रार्थं धृतराष्ट्रानुज्ञा ॥ २ ॥

वैशंपायन उवाच ।
ततो दुर्योधनो राजा सर्वास्तु प्रकृतीः शनैः ।
अर्थमानप्रदानाभ्यां संजहार सहानुजः ।
'युयुत्सुमपनीयैकं धार्तराष्ट्रं सहोदरम् ॥' १
धृतराष्ट्रप्रयुक्तास्तु केचित्कुशलमन्त्रिणः ।
कथयाञ्चक्रिरे रम्यं नगरं वारणावतम् ॥ २
अयं समाजः सुमहान्रमणीयतमो भुवि ।
उपस्थितः पशुपतेर्नगरे वारणावते ॥ ३
सर्वरत्नसमाकीर्णे पुण्यदेशे मनोरमे ।
इत्येवं धृतराष्ट्रस्य वचनाच्चक्रिरे कथाः ॥ ४
कथ्यमाने तथा रम्ये नगरे वारणावते ।
गमने पाण्डुपुत्राणां जज्ञे तत्र मतिर्नृप ॥ ५
यदा त्वमन्यत नृपो जातकौतूहला इति ।
उवाचैतानेत्य तदा पाण्डवानम्बिकासुतः ॥ ६
'अधीतानि च शास्त्राणि युष्माभिरिह कृत्स्नशः ।
अस्त्राणि च तथा द्रोणाद्गौतमाच्च शरद्वतः ॥ ७
कृतकृत्या भवन्तस्तु सर्वविद्याविशारदाः ।
सोऽहमेवं गते ताताश्चिन्तयामि समन्ततः ।
रक्षणे व्यवहारे च राज्यस्य सततं हिते ॥' ८
ममैते पुरुषा नित्यं कथयन्ति पुनःपुनः ।
रमणीयतमं लोके नगरं वारणावतम् ॥ ९
ते ताता यदि मन्यध्वमुत्सवं वारणावते ।
सगणाः सान्वयाश्चैव विहरध्वं यथाऽमराः ॥ १०
ब्राह्मणेभ्यश्च रत्नानि गायनेभ्यश्च सर्वशः ।
प्रयच्छध्वं यथाकामं देवा इव सुवर्चसः ॥ ११
कंचित्कालं विहृत्यैवमनुभूय परां मुदम् ।

इदं वै हास्तिनपुरं सुखिनः पुनरेष्यथ ॥ १२
'निवसध्वं च तत्रैव संरक्षणपरायणाः।
वैलक्षण्यं न वै तत्र भविष्यति परंतपाः ॥' १३
वैशंपायन उवाच।
धृतराष्ट्रस्य तं काममनुबुध्य युधिष्ठिरः।
आत्मनश्चासहायत्वं तथेति प्रत्युवाच तम् ॥ १४
ततो भीष्मं शान्तनवं विदुरं च महामतिम्।
द्रोणं च बाह्लिकं चैव सोमदत्तं च कौरवम् ॥ १५
कृपमाचार्यपुत्रं च भूरिश्रवसमेव च।
मान्यानन्यानमात्यांश्च ब्राह्मणांश्च तपोधनान् १६
पुरोहितांश्च पौत्रांश्च गान्धारीं च यशस्विनीम्।
'सर्वा मातृरुपस्पृष्ट्वा विदुरस्य च योषितः।'
युधिष्ठिरः शनैर्दीन उवाचेदं वचस्तदा ॥ १७
रमणीये जनाकीर्णे नगरे वारणावते।
सगणास्तत्र यास्यामो धृतराष्ट्रस्य शासनात् ॥ १८
प्रसन्नमनसः सर्वे पुण्या वाचो विमुञ्चत।
आशीर्भिर्बृंहितानस्मान्न पापं प्रसहिष्यते ॥ १९
वैशंपायन उवाच।
एवमुक्तास्तु ते सर्वे पाण्डुपुत्रेण कौरवाः।
प्रसन्नवदना भूत्वा तेऽन्ववर्तन्त पाण्डवान् ॥ २०
स्वस्त्यस्तु वः पथि सदा भूतेभ्यश्चैव सर्वशः।
मा च वोऽस्त्वशुभं किंचित्सर्वशः पाण्डुनन्दनाः॥
ततः कृतस्वस्त्ययना राज्यलाभाय पार्थिवाः।
कृत्वा सर्वाणि कार्याणि प्रययुर्वारणावतम् ॥ २२

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

## षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

दुर्योधनादेशात् पुरोचनेन वारणावते जतुगृहनिर्माणम् ॥ १ ॥

वैशंपायन उवाच।
धृतराष्ट्रप्रयुक्तेषु पाण्डुपुत्रेषु भारत।
दुर्योधनः परं हर्षमगच्छत्स दुरात्मवान् ॥ १
'ततः सुबलपुत्रश्च कर्णदुर्योधनावपि।
दहने सह पुत्रायाः कुन्त्या मतिमकुर्वत।
मन्त्रयित्वा स तैः सार्धं दुरात्मा धृतराष्ट्रजः॥'२
स पुरोचनमेकान्तमानीय भरतर्षभ।
गृहीत्वा दक्षिणे पाणौ सचिवं वाक्यमब्रवीत्॥३
ममेयं वसुसंपूर्णा पुरोचन वसुन्धरा।
यथैव भविता तात तथा त्वं द्रष्टुमर्हसि ॥ ४
न हि मे कश्चिदन्योऽस्ति विश्वासिकतरस्त्वया।
सहायो येन सन्धाय मन्त्रयेयं यथा त्वया ॥ ५
संरक्ष तात मन्त्रं च सपत्नांश्च ममोद्धर।
निपुणेनाभ्युपायेन यद्ब्रवीमि तथा कुरु ॥ ६
पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतम्।
उत्सवे विहरिष्यन्ति धृतराष्ट्रस्य शासनात् ॥ ७
स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना।
वारणावतमद्यैव यथा यासि तथा कुरु ॥ ८
तत्र गत्वा चतुःशालं गृहं परमसंवृतम्।
नगरोपान्तमाश्रित्य कारयेथा महाधनम् ॥ ९
शणसर्जरसादीनि यानि द्रव्याणि कानिचित्।
आग्नेयान्युत सन्तीह तानि तत्र प्रदापय ॥ १०
'बल्वजेन च संमिश्रं मधूच्छिष्टेन चैव हि।'
सर्पिस्तैलवसाभिश्च लाक्षया चाप्यनल्पया।
मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु दापय॥११
शणं तैलं घृतं चैव जतु दारूणि चैव हि।
तस्मिन्वेश्मनि सर्वाणि निक्षिपेथाः समन्ततः१२
'लाक्षाशणमधूच्छिष्टवेष्टितानि मृदापि च।
लेपयित्वा गुरूण्याशु दारुयन्त्राणि दापय ॥'१३
यथा च तन्न पश्येरन्परीक्षन्तोऽपि पाण्डवाः।
आग्नेयमिति तत्कार्यमपि चान्येऽपि मानवाः१४
वेश्मन्येवं कृते तत्र कृत्वा तान्परमार्चितान्।

उद्धर उन्मूलय ॥ ६ ॥ आग्नेयान्यग्निसंदीपकानि ॥ १० ॥

वासयेथाः पाण्डवेयान्कुन्तीं च ससुहृज्जनाम् १५
आसनानि च दिव्यानि यानानि शयनानि न ।
निधातव्यानि पाण्डूनां यथा तुष्येच्च मे पिता १६
यथा च तन्न जानन्ति नगरे वारणावते ।
'यथा रमेरन्विस्रब्धा नगरे वारणावते ।'
तथा सर्वं विधातव्यं यावत्कालस्य पर्ययः ॥१७
ज्ञात्वा च तान्सुविश्वस्ताञ्शयानानकुतोभयान् ।
अग्निस्त्वया ततो देयो द्वारतस्तस्य वेश्मनः ॥ १८
दग्धानेवं स्वके गेहे दाहिताः पाण्डवा इति ।
न गर्हयेयुरस्मान्वै पाण्डवार्थाय कर्हिचित् ॥ १९
स तथेति प्रतिज्ञाय कौरवाय पुरोचनः ।
प्रायाद्रासभयुक्तेन स्यन्दनेनाशुगामिना ॥ २०
स गत्वा त्वरितं राजन्दुर्योधनमते स्थितः ।
यथोक्तं राजपुत्रेण सर्वं चक्रे पुरोचनः ॥ २१
'तेषां तु पाण्डवेयानां गृहं रौद्रमकल्पयत् ॥'२२

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

## सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

हास्तिनपुरं त्यक्त्वा वारणावतं गच्छता युधिष्ठिरेण अनुगच्छतां पौराणां निवर्तनम् ॥ १ ॥ म्लेच्छभाषया युधिष्ठिरं प्रति विदुरस्योपदेशः ॥ २ ॥

वैशंपायन उवाच ।
पाण्डवास्तु रथान्युक्तान्सदश्वैरनिलोपमैः ।
आरोहमाणा भीष्मस्य पादौ जगृहुरार्तवत् ॥ १
राज्ञश्च धृतराष्ट्रस्य द्रोणस्य च महात्मनः ।
अन्येषां चैव वृद्धानां कृपस्य विदुरस्य च ॥ २
एवं सर्वान्कुरून्वृद्धानभिवाद्य यतव्रताः ।
समालिङ्ग्य समानान्वै बालैश्चाप्यभिवादिताः॥३
सर्वा मातॄस्तथाऽऽपृच्छ्य कृत्वा चैव प्रदक्षिणम् ।
प्रकृतीरपि सर्वाश्च प्रययुर्वारणावतम् ॥ ४
विदुरश्च महाप्राज्ञस्तथाऽन्ये कुरुपुङ्गवाः ।
पौराश्च पुरुषव्याघ्रानन्वीयुः शोककर्शिताः ॥ ५
तत्र केचिद्ब्रुवन्ति स्म ब्राह्मणा निर्भयास्तदा ।
दीनान्दृष्ट्वा पाण्डुसुतानतीव भृशदुःखिताः ॥ ६
विषमं पश्यते राजा सर्वथा स सुमन्दधीः ।
कौरव्यो धृतराष्ट्रस्तु न च धर्मं प्रपश्यति ॥ ७
न हि पापमपापात्मा रोचयिष्यति पाण्डवः ।
भीमो वा बलिनां श्रेष्ठः कौन्तेयो वा धनञ्जयः॥८
कुत एव महात्मानौ माद्रीपुत्रौ करिष्यतः ।
तान्राज्यं पितृतः प्राप्तान्धृतराष्ट्रो न मृष्यति ॥९
अधर्म्यमिदमत्यन्तं कथं भीष्मोऽनुमन्यते ।
विवास्यमानानस्थाने नगरे योऽभिमन्यते ॥ १०
पितेव हि नृपोऽस्माकमभूच्छान्तनवः पुरा ।
विचित्रवीर्यो राजर्षिः पाण्डुश्च कुरुनन्दनः ॥११
स तस्मिन्पुरुषव्याघ्रे देवभावं गते सति ।
राजपुत्रानिमान्बालान्धृतराष्ट्रो न मृष्यति ॥१२
वयमेतदनिच्छन्तः सर्व एव पुरोत्तमात् ।
गृहान्विहाय गच्छामो यत्र गन्ता युधिष्ठिरः॥१३
वैशंपायन उवाच ।
तांस्तथा वादिनः पौरान्दुःखितान्दुःखकर्शितः ।
उवाच मनसा ध्यात्वा धर्मराजो युधिष्ठिरः॥१४
पिता मान्यो गुरुः श्रेष्ठो यदाह पृथिवीपतिः ।
अशङ्कमानैस्तत्कार्यमस्माभिरिति नो व्रतम् ॥१५
भवन्तः सुहृदोऽस्माकं यात कृत्वा प्रदक्षिणम् ।
प्रतिनन्द्य तथाऽऽशीर्भिर्निवर्तध्वं यथागृहम्॥१६
यदा तु कार्यमस्माकं भवद्भिरुपपत्स्यते ।
तदा करिष्यथास्माकं प्रियाणि च हितानि च १७
एवमुक्तास्तदा पौराः कृत्वा चापि प्रदक्षिणम् ।
आशीर्भिश्चाभिनन्द्यैताञ्जग्मुर्नगरमेव हि ॥ १८
पौरेषु विनिवृत्तेषु विदुरः सर्वधर्मवित् ।
बोधयन्पाण्डवश्रेष्ठमिदंवचनमब्रवीत् ॥ १९

अस्थाने अयुक्तम् योऽभिमन्यते स भीष्मः कथमनुमन्यत इत्यर्थः ॥ १० ॥

प्राज्ञः प्राज्ञं प्रलापज्ञः प्रलापज्ञमिदं वचः ।
यो जानाति परप्रज्ञां नीतिशास्त्रानुसारिणीम् ।
विज्ञायेह तथा कुर्यादापदं निस्तरेद्यथा ॥ २०
अलोहं निशितं शस्त्रं शरीरपरिकर्तनम् ।
यो वेत्ति न तु तं घ्नन्ति प्रतिघातविदं द्विषः २१
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।
न दहेदिति चात्मानं यो रक्षति स जीवति॥२२
नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः ।
नाधृतिर्भूतिमाप्नोति बुध्यस्वैवं प्रबोधितः ॥ २३
अनाप्तैर्दत्तमादत्ते नरः शस्त्रमलोहजम् ।
श्वाविच्छरणमासाद्य प्रमुच्येत हुताशनात् ॥ २४
चरन्मार्गान्विजानाति नक्षत्रैर्विन्दते दिशः ।
आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते॥ २५
एवमुक्तः प्रत्युवाच धर्मराजो युधिष्ठिरः ।
विदुरं विदुषां श्रेष्ठं ज्ञातमित्येव पाण्डवः ॥ २६
अनुशिक्ष्यानुगम्यैतान्कृत्वा चैव प्रदक्षिणम् ।
पाण्डवानभ्यनुज्ञाय विदुरः प्रययौ गृहान् ॥ २७
निवृत्ते विदुरे चापि भीष्मे पौरजने तथा ।
अजातशत्रुमासाद्य कुन्ती वचनमब्रवीत् ॥ २८
क्षत्ता यदब्रवीद्वाक्यं जनमध्येऽब्रुवन्निव ।
त्वया च स तथेत्युक्तो जानीमो न च तद्वयम्२९
यदीदं शक्यमस्माभिर्ज्ञातुं नैव च दोषवत् ।
श्रोतुमिच्छामि तत्सर्वं संवादं तव तस्य च ॥३०
युधिष्ठिर उवाच ।
विषादग्नेश्च बोद्धव्यमिति मां विदुरोऽब्रवीत् ।
पन्थानो वेदितव्याश्च नक्षत्रैश्च तथा दिशः ।
'कुड्याश्चविदिताःकार्याःस्याच्छुद्धिरितिचाब्रवीत्'
जितेन्द्रियश्च वसुधां प्राप्स्यतीति च मेऽब्रवीत् ।
विज्ञातमिति तत्सर्वं प्रत्युक्तो विदुरो मया ॥३२
वैशंपायन उवाच ।
अष्टमेऽहनि रोहिण्यां प्रयाताः फाल्गुनस्य ते ।
वारणावतमासाद्य ददृशुर्नागरं जनम् ॥ ३३

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

---

## अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

पाण्डवानां वारणावतप्रवेशः ॥ १ ॥

वैशंपायन उवाच ।
ततः सर्वाः प्रकृतयो नगराद्वारणावतात् ।
सर्वमङ्गलसंयुक्ता यथाशास्त्रमतन्द्रिताः ॥ १
श्रुत्वाऽऽगतान्पाण्डुपुत्रान्नानायानैः सहस्रशः ।

---

प्राज्ञः ऊहापोहसमर्थः । प्रलापज्ञः अनर्थवचनाभासाभिज्ञः । युधिष्ठिरमप्येतादृशम् । वचनमेवाह । इदमिति । इदं प्रलापात्मकं मम वचो यो जानाति सः परस्य शत्रोः प्रज्ञां स्वबाधार्थं नीत्या प्रयुक्तां विज्ञाय तथा कुर्यात् । यथा स्वयमापदं निस्तरेदित्यन्वयः ॥ २० ॥ प्रलापाकारवचनमेवाह । अलोहमिति । अलोहमग्निमयं शस्त्रमिव शस्त्रं घातकं तस्य प्रतिघातविदं द्विषो न घ्नन्ति । प्रतिघातकृतमिति पाठे प्रतिघाताय कृतमित्यर्थः ॥ २१ ॥ अग्निकृते भये ज्ञातेऽपि कथं प्रतीकारस्तत्राह । कक्षघ्न इति । कक्षस्तृणेन्धनं हन्तीति तथा । शिशिरं शीतं हन्तीति तथाविधोऽपि अग्निः महाकक्षे अरण्ये दह्यमानेऽपि बिलौकसो मूषिकादीन्न दहति इत्थमात्मानं यो रक्षति स जीवति । तथा बिलेष्वाविश्यागाराद्रक्षणीय इत्यर्थः ॥ २२ ॥ ततश्च बिलनिर्गमानन्तरमरण्यगमनप्रकारमुपदिशति । नाचक्षुरिति । अचक्षुः पूर्वं वर्त्मदर्शनविहीनः पन्थानं रात्रौ न वेत्ति । तथा अचक्षुः विज्ञानविहीनः दिशो न विन्दते न प्रत्यभिजानाति । अतः पूर्वमेव वर्त्मदिशौ द्रष्टव्ये इति भावः । कथमस्माकं बिलप्रवेशनिर्गमाविति चेत्तत्राह । नाधृतिरिति । दुःखे धैर्यरहितो भूतिमैश्वर्यं जीवनं वा न विन्दति । विपदि धैर्यमेव कार्यमित्यर्थः ॥ २३ ॥ किंच यत्पुरोचनादिभिः कर्तव्यं तत्स्वयमेव कार्यमित्याह । अनाप्तैरिति । अनाप्तैः पुरोचनादिभिर्दत्तं दातुमारब्धं यदलोहजं शस्त्रं तत्स्वयमादत्ते स्वीकरोति । तान्हत्वा आत्मानं रक्षति । पुरोचनादिषु जीवत्सु अनुसारादिशङ्का स्यादिति भावः । श्वाविदिति गूढदृष्टान्तः । श्वाविद्वत्कर्तव्यमिति भावः । शरणं सुरङ्गाम् ॥ २४ ॥ आत्मना सह पञ्च इन्द्रियाणि । आहाराद्यभावेन पीडयम् अनु पश्चात् न पीड्यते भवानिति शेषः । यद्वा । नाचक्षुरित्युक्तस्यैव विवरणं । चरन्मार्गानिति । विश्वासार्थं षड्ढदग्धव्या हत्याह । आत्मनेति । लुप्तोपममेतत् । त्वत्सदृशेन सह आत्मनः तव सदृशान्पञ्च नानुपीड्यते भवानिति शेषः ॥ २५ ॥ अब्रुवन्निव व्यक्तां वाचमकुर्वन्निव ॥२९॥ सप्तपञ्चाशदधिकशततमोऽध्यायः॥१५७॥

अभिजग्मुर्नरश्रेष्ठाञ्श्रुत्वैव परया मुदा ॥ २
ते समासाद्य कौन्तेयान्वारणावतका जनाः ।
कृत्वा जयाशिषः सर्वे परिवार्योपतस्थिरे ॥ ३
तैर्वृतः पुरुषव्याघ्रो धर्मराजो युधिष्ठिरः ।
विबभौ देवसङ्काशो वज्रपाणिरिवामरैः ॥ ४
सत्कृताश्चैव पौरैस्ते पौरान्सत्कृत्य चानघ ।
अलङ्कृतं जनाकीर्णं विविशुर्वारणावतम् ॥ ५
ते प्रविश्य पुरीं वीरास्तूर्णं जग्मुरथो गृहान् ।
ब्राह्मणानां महीपाल रतानां स्वेषु कर्मसु ॥ ६
नगराधिकृतानां च गृहाणि रथिनां वराः ।
उपतस्थुर्नरश्रेष्ठा वैश्यशूद्रगृहाण्यपि ॥ ७
अर्चिताश्च नरैः पौरैः पाण्डवा भरतर्षभ ।
जग्मुरावसथं पश्चात्पुरोचनपुरःसराः ॥ ८
तेभ्यो भक्ष्याणि पानानि शयनानि शुभानि च ।
आसनानि च मुख्यानि प्रददौ स पुरोचनः ॥ ९
तत्र ते सत्कृतास्तेन सुमहार्हपरिच्छदाः ।
उपास्यमानाः पुरुषैरूषुः पुरनिवासिभिः ॥ १०
दशरात्रोषितानां तु तत्र तेषां पुरोचनः ।
निवेदयामास गृहं शिवाख्यमशिवं तदा ॥ ११
तत्र ते पुरुषव्याघ्रा विविशुः सपरिच्छदाः ।
पुरोचनस्य वचनात्कैलासमिव गुह्यकाः ॥ १२
तच्चागारमभिप्रेक्ष्य सर्वधर्मभृतां वरः ।
उवाचाग्नेयमित्येवं भीमसेनं युधिष्ठिरः ॥ १३
जिघ्राणोऽस्य वसागन्धं सर्पिर्जतुविमिश्रितम् ।
कृतं हि व्यक्तमाग्नेयमिदं वेश्म परन्तप ॥ १४
शणसर्जरसं व्यक्तमानीय गृहकर्मणि ।
मुञ्जबल्वजवंशादिद्रव्यं सर्वं घृतोक्षितम् ॥ १५
'तृणबल्वजकार्पासवंशदारुकटान्यपि ।
आग्नेयान्यत्र क्षिप्तानि परितो वेश्मनस्तथा ॥' १६
शिल्पिभिः सुकृतं ह्याप्तैर्विनीतैर्वेश्मकर्मणि ।
विश्वस्तं मामयं पापो दग्धुकामः पुरोचनः ॥ १७
तथा हि वर्तते मन्दः सुयोधनवशे स्थितः ।
इमां तु तां महाबुद्धिर्विदुरो दृष्टवांस्तथा ॥ १८
आपदं तेन मां पार्थ स संबोधितवान्पुरा ।
ते वयं बोधितास्तेन नित्यमस्मद्धितैषिणा ॥ १९
पित्रा कनीयसा स्नेहाद्बुद्धिमन्तो शिवं गृहम् ।
अनार्यैः सुकृतं गूढैर्दुर्योधनवशानुगैः ॥ २०

भीमसेन उवाच ।

यदीदं गृहमाग्नेयं विहितं मन्यते भवान् ।
तत्रैव साधु गच्छामो यत्र पूर्वोषिता वयम् ॥ २१
'दर्शयित्वा पृथग्गन्तुं न कार्यं प्रतिभाति मे ।
अशुभं वा शुभं वा स्यात्तत्रैव वसाम सहैव तु ॥ २२
अद्यप्रभृति चास्मासु गतेषु भयविह्वलः ।
रूढमूलो भवेद्राज्ये धार्तराष्ट्रो जनेश्वरः ॥ २३
तदीयं तु भवेद्राज्यं तदीयाश्च जना इमे ।
तस्मात्सहैव वत्स्यामो गलन्यस्तपदा वयम् ॥ २४
अस्माकं कालमासाद्य राज्यमाच्छिद्य शत्रुतः ।
अर्थं पैतृकमस्माकं सुखं भोक्ष्याम शाश्वतम् ॥ २५
धृतराष्ट्रवचोऽस्माभिः किमर्थमनुपाल्यते ।
तेभ्यो भित्त्वाऽन्यथागन्तुं दौर्बल्यं ते कुतो नृप २६
आपत्सु रक्षिताऽस्माकं विदुरोऽस्ति महामतिः ।
मध्यस्थ एव गाङ्गेयो राज्यभोगपराङ्मुखः ॥ २७
बाह्लीकप्रमुखा वृद्धा मध्यस्था एव सर्वदा ।
अस्मदीयो भवेद्द्रोणः फल्गुनप्रेमसंयुतः ॥ २८
तस्मात्सहैव वस्तव्यं न गन्तव्यं कथं नृप ।
अथवास्मासु ते कुर्युः किमशक्ताः पराक्रमैः ॥ २९
क्षुद्राः कपटिनो धूर्ता जाग्रत्सु मनुजेश्वर ।
किं न कुर्युः पुरा मह्यं किं न दत्तं महाविषम् ३०
आशीविषैर्महाघोरैः सर्पैस्तैः किं न दंशितः ।
प्रमाणकोट्यां संगृह्य निद्रापरवशे मयि ॥ ३१
सर्पैर्दष्टिविषैर्घोरैर्गङ्गायां शूलसन्ततौ ।
किं तैर्न पातितो भूप तदा किं मृतवानहम् ३२
आपत्सु तासु घोरासु दुष्प्रयुक्तासु पापिभिः ।
अस्मानरक्षद्यो देवो जगद्यस्य वशे स्थितम् ॥ ३३
चराचरात्मकं सोऽद्य यातः कुत्र नृपोत्तम ।
यावत्सोढव्यमस्माभिस्तावत्सोढासि यत्नतः ॥ ३४

दर्शयित्वा विरोधमिति शेषः ॥ २२ ॥

न गन्तव्यं हास्तिनपुरमिति शेषः ॥ २९ ॥

यदा न शक्ष्यतेऽस्माभिस्तदा पश्याम नो हितम् ।
किं द्रष्टव्यमिहास्माभिर्विगृह्य तरसा बलात् ॥३५
सान्त्ववादेन दानेन भेदेनापि यतामहे ।
अर्धराज्यस्य संप्राप्त्यै ततो दण्डः प्रशस्यते ॥ ३६
तस्मात्सहैव वस्तव्यं तन्मनोर्पितशल्यवत् ।
दर्शयित्वा पृथक् क्वापि न गन्तव्यं सुभीतवत्'३७
युधिष्ठिर उवाच ।
इह यत्तैर्निराकारैर्वस्तव्यमिति रोचये ।
अप्रमत्तैर्विचिन्वद्भिर्गतिमिष्टां ध्रुवामितः ॥ ३८
यदि विन्देत चाकारमस्माकं स पुरोचनः ।
क्षिप्रकारी ततो भूत्वा प्रसह्यापि दहेत्ततः ॥ ३९
नायं बिभेत्युपक्रोशादधर्माद्वा पुरोचनः ।
तथा हि वर्तते मन्दः सुयोधनवशे स्थितः ॥४०
अपि चायं प्रदग्धेषु भीष्मोऽस्मासु पितामहः ।
कोपं कुर्यात्किमर्थं वा कौरवान्कोपयीत सः ॥४१
अथवापीह दग्धेषु भीष्मोऽस्माकं पितामहः ।
धर्म इत्येव कुप्येरन्ये चान्ये कुरुपुङ्गवाः ॥ ४२
'उपपन्नं तु दग्धेषु कुलवंशानुकीर्तिताः ।
कुप्येरन्यदि धर्मज्ञास्तथान्ये कुरुपुङ्गवाः ॥' ४३
वयं तु यदि दाहस्य बिभ्यतः प्रद्रवेमहि ।
स्पशैर्नो घातयेत्सर्वान्राज्यलुब्धः सुयोधनः ॥४४
अपदस्थान्पदे तिष्ठन्नपक्षान्पक्षसंस्थितः ।
हीनकोशान्महाकोशः प्रयोगैर्घातयेद्ध्रुवम् ॥ ४५
तदस्माभिरिमं पापं तं च पापं सुयोधनम् ।
वञ्चयद्भिर्निवस्तव्यं छन्नं वीर क्वचित्क्वचित् ॥४६
ते वयं मृगयाशीलाश्चराम वसुधामिमाम् ।
तथा नो विदिता मार्गा भविष्यन्ति पलायतां ४७
भौमं च बिलमद्यैव करवाम सुसंवृतम् ।
गूढोद्धृतान्न नस्तत्र हुताशः संप्रधक्ष्यति ॥ ४८
द्रवतोऽत्र यथा चास्मान्न बुध्येत पुरोचनः ।
पौरो वापि जनः कश्चित्तथा कार्यमतन्द्रितैः ४९

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

---

## ऊनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

खनकेन सुरङ्गकरणम् ॥ १ ॥

वैशंपायन उवाच ।
विदुरस्य सुहृत्कश्चित्खनकः कुशलः क्वचित् ।
विविक्ते पाण्डवान्राजन्निदं वचनमब्रवीत् ॥ १
प्रहितो विदुरेणास्मि खनकः कुशलो ह्यहम् ।
पाण्डवानां प्रियं कार्यमिति किं करवाणि वः ॥२
प्रच्छन्नं विदुरेणोक्तं प्रियं यन्म्लेच्छभाषया ।
त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणम् ॥ ३
कृष्णपक्षे चतुर्दश्यां रात्रावस्यां पुरोचनः ।
भवनस्य तव द्वारि प्रदास्यति हुताशनम् ॥ ४
मात्रा सह प्रदग्धव्याः पाण्डवाः पुरुषर्षभाः ।
इति व्यवसितं तस्य धार्तराष्ट्रस्य दुर्मतेः ॥ ५
वैशंपायन उवाच ।
उवाच तं सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै ॥६
शुचिमाप्तं प्रियं चैव सदा च दृढभक्तिकम् ।
न विद्यते कवेः किंचिदविज्ञातं प्रयोजनम् ॥ ७
यथा तस्य तथा नस्त्वं निर्विशेषा वयं त्वयि ।
भवतश्च यथा तस्य पालयास्मान्यथा कविः ॥ ८
इदं शरणमाग्नेयं मदर्थमिति मे मतिः ।
पुरोचनेन विहितं धार्तराष्ट्रस्य शासनात् ॥ ९
स पापः कोशवांश्चैव ससहायश्च दुर्मतिः ।
अस्मानपि च पापात्मा नित्यकालं प्रबाधते ॥१०

---

उपक्रोशाद्गर्हातः ॥ ४० ॥ अयं भीष्म इति संबन्धः ॥ ४१ ॥ दग्धेष्वस्मास्वभिदेषु कोपोऽधर्म इत्येव कारणं कृत्वा भीष्मोऽन्ये च कुप्येरन् ॥ ४२ ॥ दाहस्य दाहात् । स्पशैश्चारैः ॥ ४४ ॥ अत्र बिले ॥ ४९ ॥ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

आर्द्रायां च पुरोचनः । भवनस्य निशि द्वारि इति ङ. पाठः ॥ ४ ॥ कवेः सर्वज्ञस्य क्रान्तदर्शिनो वा ॥ ७ ॥ यथा वयं तस्य तथा भवतश्च ॥ ८ ॥ शरणं गृहम् ॥ ९ ॥

स भवान्मोक्षयत्वस्मान्यत्नेनास्माद्धुताशनात् ।
अस्मास्विह हि दग्धेषु सकामः स्यात्सुयोधनः॥ ११
समृद्धमायुधागारमिदं तस्य दुरात्मनः ।
वप्रान्तं निष्प्रतीकारमाश्रित्येदं कृतं महत् ॥ १२
इदं तदशुभं नूनं तस्य कर्म चिकीर्षितम् ।
प्रागेव विदुरो वेद तेनास्मानन्वबोधयत् ॥ १३
सेयमापदनुप्राप्ता क्षत्ता यां दृष्टवान्पुरा ।
पुरोचनस्याविदितानस्मांस्त्वं प्रतिमोचय ॥ १४
वैशंपायन उवाच ।
स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः ।
परिखामुत्किरन्नाम चकार च महाबिलम् ॥ १५
चक्रे च वेश्मनस्तस्य मध्ये नातिमहद्बिलम् ।
कपाटयुक्तमज्ञातं समं भूम्याश्च भारत ॥ १६
पुरोचनभयादेव व्यदधात्संवृतं मुखम् ।
स तस्य तु गृहद्वारि वसत्यशुभधीः सदा ।
तत्र ते सायुधाः सर्वे वसन्ति स्म क्षपां नृप॥१७
दिवा चरन्ति मृगयां पाण्डवेया वनाद्वनम् ।
विश्वस्तवदविश्वस्ता वञ्चयन्तः पुरोचनम् ॥ १८
अतुष्टास्तुष्टवद्राजन्नूषुः परमविस्मिताः ॥ १९
न चैनानन्वबुध्यन्त नरा नगरवासिनः ।
अन्यत्र विदुरामात्यात्तस्मात्खनकसत्तमात् ॥ २०

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि ऊनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

---

## षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

रात्रौ कुन्त्या अन्नादिना ब्राह्मणपूजनम् ॥ १ ॥ भीमेन जतुगृहस्यादीपनम् ॥ २ ॥ तस्य कुन्तीं भ्रातॄंश्चादाय सुरङ्गाद्वारा बहिर्निर्गमनम् ॥ ३ ॥

वैशंपायन उवाच ।
तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान् ।
विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः ॥ १
'स तु संचिन्तयामास प्रहृष्टेनान्तरात्मना ।
प्राप्तकालमिदं मन्ये पाण्डवानां विनाशने ॥ २
तमस्यान्तर्गतं भावं विज्ञाय कुरुपुङ्गवः ।
चिन्तयामास मतिमान्धर्मपुत्रो युधिष्ठिरः ॥' ३
पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमौ प्रोवाच धर्मवित् ॥४
अस्मानयं सुविश्वस्तान्वेत्ति पापः पुरोचनः ।
वञ्चितोऽयं नृशंसात्मा कालं मन्ये पलायने ॥५
आयुधागारमादीप्य दग्ध्वा चैव पुरोचनम् ।
षट्प्राणिनो निधायेह द्रवामोऽनभिलक्षिताः ॥६
वैशंपायन उवाच ।
अथ दानापदेशेन कुन्ती ब्राह्मणभोजनम् ।
चक्रे निशि महाराज आजग्मुस्तत्र योषितः ॥ ७
ता विहृत्य यथाकामं भुक्त्वा पीत्वा च भारत ।
जग्मुर्निशि गृहानेव समनुज्ञाप्य माधवीम् ॥ ८
'पुरोचनप्रणिहिता पृथां या सेवते सदा ।
निषादी दुष्टहृदया नित्यमन्तरचारिणी ॥ ९
निषादी पञ्चपुत्रा सा तस्मिन्भोज्ये यदृच्छया ।
पुराभ्यासकृतस्नेहा सखी कुन्त्याः सुतैः सह ॥१०
आनीय मधुमूलानि फलानि विविधानि च ।
अन्नार्थिनी समभ्यागात्सपुत्रा कालचोदिता ।
सुपापा पञ्चपुत्रा च सा पृथायाः सखी मता॥'११
सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला ।
सह सर्वैः सुतै राजंस्तस्मिन्नेव निवेशने ॥ १२
सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ।
अथ प्रवाते तुमुले निशि सुप्ते जने तदा ॥ १३
तदुपादीपयद्भीमः शेते यत्र पुरोचनः ।

---

वप्रान्तं प्राकारमूलम् । निष्प्रतीकारं बहिर्निर्गमनप्रकारशून्यम् ॥ १२ ॥ अस्मांस्त्वं विप्रवासय इति ङ. पाठः ॥ १४ ॥ परिखा प्राकारपरिधिभूतो गर्तस्ताम् । नाम प्रसिद्धम् । उत्किरन्परिखापरिष्कारव्याजेन विलान्मृदमुत्किरन् बहिः क्षिपन् महाबिलं सुरङ्गाख्यं चकार ॥ १५ ॥ नातिमहामुखं इति ङ. पाठः ॥१६॥ ऊनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

जातुषागारमिति ङ. पाठः ॥ ६ ॥ षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

ततो जतुगृहद्वारं दीपयामास पाण्डवः ॥ १४
समन्ततो ददौ पश्चादग्निं तत्र निवेशने ।
'पूर्वमेव गृहं शोध्य भीमसेनो महामतिः ॥ १५
पाण्डवैः सहितां कुन्तीं प्रावेशयत तद्बिलम् ।
दत्त्वाग्निं सहसा भीमो गृहे तत्परितः सुधीः ॥१६
गृहस्थं द्रविणं गृह्य निर्जगाम बिलेन सः ।'
ज्ञात्वा तु तद्गृहं सर्वमादीप्तं पाण्डुनन्दनाः ॥१७
सुरङ्गां विविशुस्तूर्णं मात्रा सार्धमरिन्दमाः ।
ततः प्रतापः सुमहाञ्छब्दश्चैव विभावसोः ॥१८
प्रादुरासीत्तदा तेन बुबुधे स जनव्रजः ।
तदवेक्ष्य गृहं दीप्तमाहुः पौराः कृशाननाः ॥१९
दुर्योधनप्रयुक्तेन पापेनाकृतबुद्धिना ।
गृहमात्मविनाशाय कारितं दाहितं च तत् ॥२०
अहो धिग्धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसा ।
यः शुचीन्पाण्डुदायादान्दाहयामास शत्रुवत् २१
दिष्ट्या त्विदानीं पापात्मा दग्ध्वा दग्धः पुरोचनः।
अनागसः सुविश्वस्तान्यो ददाह नरोत्तमान् २२
वैशंपायन उवाच ।
एवं ते विलपन्ति स्म वारणावतका जनाः ।
परिवार्य गृहं तच्च तस्थू रात्रौ समन्ततः ॥ २३
पाण्डवाश्चापि ते सर्वे सह मात्रा सुदुःखिताः ।
बिलेन तेन निर्गत्य जग्मुर्द्रुतमलक्षिताः ॥ २४
तेन निद्रोपरोधेन साध्वसेन च पाण्डवाः ।
न शेकुः सहसा गन्तुं सह मात्रा परन्तपाः ॥२५
भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः ।
जगाम भ्रातॄनादाय सर्वान्मातरमेव च ॥ २६
स्कन्धमारोप्य जननीं यमावङ्केन वीर्यवान् ।
पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलः २७
उरसा पादपान्भञ्जन्महीं पद्भ्यां विदारयन् ।
स जगामाशु तेजस्वी वातरंहा वृकोदरः ॥ २८

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

## एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

पाण्डवानां विदुरप्रेषितदूतदर्शितनौकया गङ्गोत्तरणम् ॥ १ ॥

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु यथासंप्रत्ययं कविः ।
विदुरः प्रेषयामास तद्वनं पुरुषं शुचिम् ॥ १
'आत्मनः पाण्डवानां च विश्वास्यं ज्ञातपूर्वकम् ।
गङ्गासंतरणार्थाय ज्ञाताभिज्ञानवाचिकम् ॥' २
स गत्वा तु यथोद्देशं पाण्डवान्ददृशे वने ।
जनन्या सह कौरव्याननयज्जाह्नवीतटम् ॥ ३
विदितं तन्महाबुद्धेर्विदुरस्य महात्मनः ।
ततस्तस्यापि चारेण चेष्टितं पापचेतसः ॥ ४
ततः प्रवासितो विद्वान्विदुरेण नरस्तदा ।
पार्थानां दर्शयामास मनोमारुतगामिनीम् ॥ ५
सर्ववातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
शिवे भागीरथीतीरे नरैर्विस्रम्भिभिः कृताम् ॥ ६
ततः पुनरथोवाच ज्ञापकं पूर्वचोदितम् ।
युधिष्ठिर निबोधेदं संज्ञार्थं वचनं कवेः ॥ ७
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।
न हन्तीत्येवमात्मानं यो रक्षति स जीवति ।
'बोद्धव्यमिति यत्प्राह विदुरस्तदिदं तथा ॥' ८
तेन मां प्रेषितं विद्धि विश्वस्तं संज्ञयाऽनया ।
भूयश्चैवाह मां क्षत्ता विदुरः सर्वतोऽर्थवित् ।
'अधिक्षिपन्धार्तराष्ट्रं सभ्रातृकमुदारधीः ॥' ९
कर्णं दुर्योधनं चैव भ्रातृभिः सहितं रणे ।
शकुनिं चैव कौन्तेय विजेताऽसि न संशयः ॥१०
'वैशंपायन उवाच ।
पाण्डवाश्चापि गत्वाथ गङ्गायास्तीरमुत्तमम् ।
निषादाधिपतिं वीरं दाशं परमधार्मिकम् ॥ ११
दीपिकाभिः कृतालोकं मार्गमाणं च पाण्डवान् ।
ददृशुः पाण्डवेयास्ते नाविकं त्वरयाऽन्वितम् १२
निषादस्तत्र कौन्तेयानभिज्ञानं न्यवेदयत् ।
विदुरस्य महाबुद्धेर्म्लेच्छभाषादि यत्तदा ॥ १३

नाविक उवाच ।
विदुरेणास्मि सन्दिष्टो दत्त्वा बहु धनं महत् ।
गङ्गातीरे निविष्टस्त्वं पाण्डवांस्तारयेति ह ॥ १४
सोऽहं चतुर्दशीमद्य गङ्गाया अविदूरतः ।
चारैरन्वेपयाम्यस्मिन्वने मृगगणान्विते ॥ १५
प्रभवन्तोऽथ भद्रं वो नावमारुह्य गम्यताम् ।
युक्तारित्रपताकां च निश्छिद्रां मन्दिरोपमाम्'१६
इयं वारिपथे युक्ता नौरप्सु सुखगामिनी ।
मोचयिष्यति वः सर्वानस्माद्देशान्न संशयः ॥१७
वैशंपायन उवाच ।
अथ तान्व्यथितान्दृष्ट्वा सह मात्रा नरोत्तमान् ।
नावमारोप्य गङ्गायां प्रस्थितानब्रवीत्पुनः ॥ १८
विदुरो मूर्ध्र्युपाघ्राय परिष्वज्य वचो मुहुः ।
अरिष्टं गच्छताव्यग्राः पन्थानमिति चाब्रवीत्॥१९
इत्युक्त्वा स तु तान्वीरान्पुमान्विदुरचोदितः ।
तारयामास राजेन्द्र गङ्गां नावा नरर्षभान् ॥२०
तारयित्वा ततो गङ्गां पारं प्राप्तांश्च सर्वशः ।
जयाशिषः प्रयुज्याथ यथागतमगाद्धि सः ॥२१
पाण्डवाश्च महात्मानः प्रतिसन्दिश्य वै कवेः ।
गङ्गामुत्तीर्य वेगेन जग्मुर्गूढमलक्षिताः ॥ २२
'ततस्ते तत्र तीर्त्वा तु गङ्गामुत्तुङ्गवीचिकाम् ।
जवेन प्रययुर्वीरा दक्षिणां दिशमास्थिताः ॥२३
विज्ञाय निशि पन्थानं नक्षत्रैर्दक्षिणामुखाः ।
वनाद्वनान्तरं राजन्गहनं प्रतिपेदिरे ॥ २४
श्रान्तास्ततः पिपासार्ताः क्षुधिता भयकातराः ।
पुनरूचुर्महावीर्यं भीमसेनमिदं वचः ॥ २५
इतः कष्टतरं किं नु यद्वयं गहने वने ।
दिशश्च न प्रजानीमो गन्तुं चैतेन शक्नुमः ।
तं च पापं न जानीमो दग्धो वाथ पुरोचनः॥२६
कथं नु विप्रमुच्येम भयादस्मादलक्षिताः ।
शीघ्रमस्मानुपादाय तथैव व्रज भारत ॥ २७
त्वं हि नो बलवानेको यथा सततगस्तथा ।
इत्युक्तो धर्मराजेन भीमसेनो महाबलः ।
आदाय कुन्तीं भ्रातॄंश्च जगामाशु स पावनिः'२८

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

---

## द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

पौरैः प्रातर्जतुगृहसमीपमागत्य पुरोचनसहितानां पाण्डवानां दाहं निश्चित्य धृतराष्ट्राय दूतमुखेन पाण्डववृत्तान्तनिवेदनम् ॥ १ ॥ तच्छ्रवणेन ज्ञातिभिः सह धृतराष्ट्रेण कुन्त्यादीनां उदकदानम् ॥ २ ॥ भीष्मविदुरयोः संवादः ॥ ३ ॥

वैशंपायन उवाच ।
अथ रात्र्यां व्यतीतायामशेषो नागरो जनः ।
तत्राजगाम त्वरितो दिदृक्षुः पाण्डुनन्दनान्॥ १
निर्वापयन्तो ज्वलनं ते जना ददृशुस्ततः ।
जातुषं तद्गृहं दग्धममात्यं च पुरोचनम् ॥ २
नूनं दुर्योधनेनेदं विहितं पापकर्मणा ।
पाण्डवानां विनाशायेत्येवं ते चुक्रुशुर्जनाः ॥ ३
विदिते धृतराष्ट्रस्य धार्तराष्ट्रो न संशयः ।
दग्धवान्पाण्डुदायादान्न ह्येतत्प्रतिषिद्धवान् ॥ ४
नूनं शान्तनवोऽपीह न धर्ममनुवर्तते ।
द्रोणश्च विदुरश्चैव कृपश्चान्ये च कौरवाः ॥ ५
'नावेक्षन्ते ह तं धर्मं धर्मात्मानोऽप्यहो विधेः ।
श्रुतवन्तोऽपि विद्वांसो धनवद्वशगा अहो ॥ ६
साधूननाथान्धर्मिष्ठान्सत्यव्रतपरायणान् ।
नावेक्षन्ते महान्तोऽपि दैवं तेषां परायणम् ॥ ७
ते वयं धृतराष्ट्राय प्रेषयामो दुरात्मने ।
संवृत्तस्ते परः कामः पाण्डवान्दग्धवानसि ॥ ८
ततो व्यपोहमानास्ते पाण्डवार्थे हुताशनम् ।
निषादीं ददृशुर्दग्धां पञ्चपुत्रामनागसम् ॥ ९
इतः पश्यत कुन्तीयं दग्धा शेते तपस्विनी ।
पुत्रैः सहैव वार्ष्णेयी हन्तेत्याहुः स नागराः १०
खनकेन तु तेनैव वेश्म शोधयता बिलम् ।
पांसुभिः पिहितं तच्च पुरुषैस्तैर्न लक्षितम् ॥ ११
ततस्ते प्रेषयामासुर्धृतराष्ट्राय नागराः ।

पाण्डवानग्निना दग्धानमात्यं च पुरोचनम्॥१२
श्रुत्वा तु धृतराष्ट्रस्तद्राजा सुमहदप्रियम् ।
विनाशं पाण्डुपुत्राणां विललाप सुदुःखितः॥१३
अन्तर्हृष्टमनाश्चासौ बहिर्दुःखसमन्वितः ।
अन्तःशीतो बहिश्चोष्णो ग्रीष्मेऽगाधह्रदो यथा १४
धृतराष्ट्र उवाच ।
अद्य पाण्डुर्मृतो राजा मम भ्राता महायशाः ।
तेषु वीरेषु दग्धेषु मात्रा सह विशेषतः ॥ १५
गच्छन्तु पुरुषाः शीघ्रं नगरं वारणावतम् ।
सत्कारयन्तु तान्वीरान्कुन्तीं राजसुतां च ताम्१६
ये च तत्र मृतास्तेषां सुहृदः सन्ति तानपि ।
कारयन्तु च कुल्यानि शुभ्राणि च बृहन्ति च॥१७
मम दग्धा महात्मानः कुलवंशविवर्धनाः ॥ १८
एवं गते मया शक्यं यद्यत्कारयितुं हितम् ।
पाण्डवानां च कुन्त्याश्च तत्सर्वं क्रियतां धनैः १९
'वैशंपायन उवाच ।
समेताश्च ततः सर्वे भीष्मेण सह कौरवाः ।
धृतराष्ट्रः सपुत्रश्च गङ्गामभिमुखा ययुः ॥ २०
एकवस्त्रा निरानन्दा निराभरणवेष्टनाः ।
उदकं कर्तुकामा वै पाण्डवानां महात्मनाम् ॥'
एवं गत्वा ततश्चक्रे ज्ञातिभिः परिवारितः ।
उदकं पाण्डुपुत्राणां धृतराष्ट्रोऽम्बिकासुतः ॥२२
रुरुदुः सहिताः सर्वे भृशं शोकपरायणाः ।
हा युधिष्ठिर कौरव्य हा भीम इति चापरे ॥२३
हा फल्गुनेति चाप्यन्ये हा यमाविति चापरे ।
कुन्तीमार्ताश्च शोचन्त उदकं चक्रिरे जनाः॥२४
अन्ये पौरजनाश्चैवमन्वशोचन्त पाण्डवान् ।
विदुरस्त्वल्पशश्चक्रे शोकं वेद परं हि सः ॥ २५
विदुरो धृतराष्ट्रस्य जानन्सर्वं मनोगतम् ।
तेनायं विधिना सृष्टः कुटिलः कपटाशयः ॥२६
इत्येवं चिन्तयन्राजन्विदुरो विदुषां वरः ।
लोकानां दर्शयन्दुःखं दुःखितैः सह बान्धवैः२७
मनसाऽचिन्तयत्पार्थान्क्वियद्दूरं गता इति ।
सहिताः पाण्डवाः पुत्रा इति चिन्तापरोऽभवत् ।
ततः प्रव्यथितो भीष्मः पाण्डुराजसुतान्मृतान् ।
सह मात्रेति तच्छ्रुत्वा विललाप रुरोद च ॥२९
भीष्म उवाच ।
हा युधिष्ठिर हा भीम हा धनञ्जय हा यमौ ।
हा पृथे सह पुत्रैस्त्वमेकरात्रेण स्वर्गता ॥ ३०
मात्रा सह कुमारास्ते सर्वे तत्रैव संस्थिताः ।
न हि तौ नोत्सहेयातां भीमसेनधनञ्जयौ ॥३१
तरसा वेगितात्मानौ निर्भेत्तुमपि मन्दरम् ।
परासुत्वं न पश्यामि पृथायाः सह पाण्डवैः ३२
सर्वथा विकृतं तत्तु यदि ते निधनं गताः ।
धर्मराजः स निर्दिष्टो ननु विप्रैर्युधिष्ठिरः ॥ ३३
पृथिव्यां च रथिश्रेष्ठो भविता स धनञ्जयः ।
सत्यव्रतो धर्मदत्तः सत्यवाक्छुभलक्षणः ॥ ३४
कथं कालवशं प्राप्तः पाण्डवेयो युधिष्ठिरः ।
आत्मानमुपमां कृत्वा परेषां वर्तते तु यः ॥३५
मात्रा सहैव कौरव्यः कथं कालवशं गतः ।
पालितः सुचिरं कालं फलकाले यथा द्रुमः॥३६
भग्नः स्याद्वायुवेगेन तथा राजा युधिष्ठिरः ।
यौवराज्येऽभिषिक्तेन पितुर्येनाहृतं यशः ॥ ३७
आत्मनश्च पितुश्चैव सत्यधर्मप्रवृत्तिभिः ।
स ब्रह्मण्यः परामर्षी हृदि शोकं निधाय मे॥३८
कालेन सह संमग्नो धिक्कृतान्तमनर्थकम् ।
यच्च सा वनवासेन तन्माता दुःखभागिनी॥३९
पुत्रगृध्नुतया कुन्ती न भर्तारं मृतान्वनु ।
अल्पकालं कुले जाता भर्तुः प्रीतिमवाप या ॥४०
दग्धाऽद्य सह पुत्रैः सा असंपूर्णमनोरथा ।
मृतो भीम इति श्रुत्वा मनो न श्रद्दधाति मे ४१
एतच्च चिन्तयानस्य व्यथितं बहुधा मनः ।
अवधूय च मे देहं हृदयेन विदीर्यते ॥ ४२
पीनस्कन्धश्चारुबाहुर्मेरुकूटसमो युवा ।
मृतो भीम इति श्रुत्वा मनो न श्रद्दधाति मे ४३
अतित्यागी च योधी च क्षिप्रहस्तो दृढायुधः ।

कुल्यानि अस्थीनि कारयन्तु संस्कारयन्तु । कुल्यानि चैत्यानीत्यन्ये ॥ १७ ॥ विदुरस्त्वन्यथा चक्र इति घ. पाठः ॥ २५ ॥

द्विषष्ठ्यधिकशततमोऽध्यायः ॥ १६२ ॥

प्रपत्तिमाँल्लब्धलक्षो रथयानविशारदः ॥ ४४
दूरपाती त्वसंभ्रान्तो महावीर्यो महास्त्रवान् ।
अदीनात्मा नरश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥४५
येन प्राच्याश्च सौवीरा दाक्षिणात्याश्च निर्जिताः।
ख्यापितं येन शूरेण त्रिषु लोकेषु पौरुषम्॥४६
यस्मिञ्जाते विशोकाऽभूत्कुन्ती पाण्डुश्च वीर्यवान्।
पुरन्दरसमो जिष्णुः कथं कालवशं गतः ॥ ४७
कथं तावृषभस्कन्धौ सिंहविक्रान्तगामिनौ ।
मर्त्यधर्ममनुप्राप्तौ यमावरिनिबर्हणौ ॥ ४८
वत्सा गताः क मां वृद्धं विहाय भृशमातुरम् ।
हा स्नुषे मम वार्ष्णेयि निधाय हृदि मे शुचम् ४९
वारणावतयात्रायां के स्युर्वै शकुनाः पथि ।
एवमल्पायुषो लोके भविष्यन्ति पृथासुताः॥५०
संशप्ता इति कैर्यूयं वत्सान्दर्शय मे पृथे ।
ममैव नाथा मन्नाथा मम नेत्राणि पाण्डवाः ५१
हा पाण्डवा मे हे वत्सा हा सिंहशिशवो मम ।
मातङ्गा हा ममोत्तुङ्गा हा ममानन्दवर्धनाः॥५२
मम हीनस्य युष्माभिः सर्वलोकास्तमोवृताः ।
कदा द्रष्टाऽस्मि कौन्तेयांस्तरुणादित्यवर्चसः॥५३
अदृष्ट्वा वो महाबाहून्पुत्रवन्मम नन्दनाः ।
क गतिर्मे क गच्छामि कुतो द्रक्ष्यामि मे शिशून्
हा युधिष्ठिर हा भीम हा हा फल्गुन हा यमौ ।
मा गच्छत निवर्तध्वं मयि कोपं विमुञ्चत ॥५५
वैशंपायन उवाच ।
श्रुत्वा तत्क्रन्दितं तस्य तिलोदं च प्रसिञ्चतः ।
देशं कालं समाज्ञाय विदुरः प्रत्यभाषत ॥ ५६
मा शोचीस्त्वं नरव्याघ्र जहि शोकं महाद्युते ।
न तेषां विद्यते मृत्युः प्राप्तकालं कृतं मया॥५७
एतच्च तेभ्य उदकं विप्रसिञ्च न भारत ।
क्षत्तेदमब्रवीद्भीष्मं कौरवाणामशृण्वताम् ॥ ५८
क्षत्तारमुपसंगम्य बाष्पोत्पीडकलस्वरः ।
मन्दंमन्दमुवाचेदं विदुरं संगमे नृप ॥ ५९
भीष्म उवाच ।
कथं ते तात जीवन्ति पाण्डोः पुत्रा महाबलाः ।
कथमस्मत्कृते पक्षः पाण्डोर्न हि निपातितः ६०
कथं मत्प्रमुखाः सर्वे प्रमुक्ता महतो भयात् ।
जननी गरुडेनेव कुरवस्ते समुद्धृताः ॥ ६१
वैशंपायन उवाच ।
एवमुक्तस्तु कौरव्य कौरवाणामशृण्वताम् ।
आचचक्षे स धर्मात्मा भीष्मायाद्भुतकर्मणे ॥६२
विदुर उवाच ।
धृतराष्ट्रस्य शकुने राज्ञो दुर्योधनस्य च ।
विनाशे पाण्डुपुत्राणां कृतो मतिविनिश्चयः॥६३
तत्राहमपि च ज्ञात्वा तस्य पापस्य निश्चयम् ।
तं जिघांसुरहं चापि तेषामनुमते स्थितः ॥ ६४
ततो जतुगृहं गत्वा दहनेऽस्मिन्नियोजिते ।
पृथायाश्च सपुत्राया धार्तराष्ट्रस्य शासनात् ॥६५
ततः खनकमाहूय सुरङ्गं वै बिलं तदा ।
सुगूढं कारयित्वा ते कुन्त्या पाण्डुसुतास्तदा ६६
निष्क्रामिता मया पूर्वं मा स्म शोके मनः कृथाः।
ततस्तु नावमारोप्य सहपुत्रां पृथामहम् ॥ ६७
दत्त्वाऽभयं सपुत्रायै कुन्त्यै गृहमदाहयम् ।
तस्मात्ते मा स्म भूद्दुःखं मुक्ताः पापात्तु पाण्डवाः
निर्गताः पाण्डवा राजन्मात्रा सह परन्तपाः ।
अग्निदाहान्महाघोरान्मया तस्मादुपायतः ॥ ६९
मा स्म शोकमिमं कार्षीर्जीवन्त्येव च पाण्डवाः ।
प्रच्छन्ना विचरिष्यन्ति यावत्कालस्य पर्ययः॥७०
तस्मिन्युधिष्ठिरं काले द्रक्ष्यन्ति भुवि मानवाः ।
विमलं कृष्णपक्षान्ते जगच्चन्द्रमिवोदितम् ॥ ७१
न तस्य नाशं पश्यामि यस्य भ्राता धनञ्जयः ।
भीमसेनश्च दुर्धर्षौ माद्रीपुत्रौ च तौ यमौ ॥७२
वैशंपायन उवाच ।
ततः संहृष्टसर्वाङ्गो भीष्मो विदुरमब्रवीत् ।
दिष्ट्यादिष्ट्येति संहृष्टः पूजयानो महामतिम्॥७३
भीष्म उवाच ।
युक्तं चैवानुरूपं च कृतं तात शुभं त्वया ।
वयं विमोक्षिता दुःखात्पाण्डुपक्षो न नाशितः७४
वैशंपायन उवाच ।
एवमुक्त्वा विवेशाथ पुरं जनशताकुलम् ।
कुरुभिः सहितो राजन्नागरैश्च पितामहः ॥ ७५

अथाम्बिकेयः सामात्यः सकर्णः सहसौबलः ।
सात्मजः पार्थनाशस्य स्मरंस्तथ्यं जहर्ष च ॥ ७६
भीष्मश्च राजन्दुर्धर्षो विदुरश्च महामतिः ।
जहृषाते स्मरन्तौ तौ जातुषाग्नेर्विमोचनम् ॥ ७७
सत्यशीलगुणाचारै रागैर्जानपदोद्भवैः ।
द्रोणादयश्च धर्मैस्तु तेषां तान्मोचितान्विदुः ७८
शौर्यलावण्यमाहात्म्यै रूपैः प्राणबलैरपि ।
स्वस्थान्पार्थानमन्यन्त पौरजानपदास्तथा ॥ ७९
अन्ये जनाः प्राकृताश्च स्त्रियश्च बहुलास्तदा ।
शङ्कमाना वदन्ति स दग्धा जीवन्ति वा न वा ॥

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥

## त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

तृषार्तान् मातरं भ्रातृंश्च न्यग्रोधमूले स्थापयित्वा जलानयनाय भीमस्य गमनम् ॥ १ ॥ जलमानीयागतस्य भूमौ सुप्तान्मात्रादीन्पश्यतो भीमस्य प्रलापः ॥ २ ॥

वैशंपायन उवाच ।
तेन विक्रममाणेन ऊरुवेगसमीरितम् ।
वनं सवृक्षविटपं व्याघूर्णितमिवाभवत् ॥ १
जङ्घावातो ववौ चास्य शुचिशुक्रागमे यथा ।
आवर्जितलतावृक्षं मार्गं चक्रे महाबलः ॥ २
स मृद्नन्पुष्पितांश्चैव फलितांश्च वनस्पतीन् ।
अवरुज्य ययौ गुल्मान्पथस्तस्य समीपजान् ॥ ३
स रोपित इव क्रुद्धो वने भञ्जन्महाद्रुमान् ।
त्रिप्रस्रुतमदः शुष्मी षष्टिवर्षो मतङ्गराट् ॥ ४
गच्छतस्तस्य वेगेन तार्क्ष्यमारुतरंहसः ।
भीमस्य पाण्डुपुत्राणां मूर्च्छेव समजायत ॥ ५
असकृच्चापि संतीर्य दूरपारं भुजप्लवैः ।
पथि प्रच्छन्नमासेदुर्धार्तराष्ट्रभयात्तदा ॥ ६
कृच्छ्रेण मातरं चैव सुकुमारीं यशस्विनीम् ।
अवहत्स तु पृष्ठेन रोधःसु विषमेषु च ॥ ७
अगमच्च वनोद्देशमल्पमूलफलोदकम् ।
क्रूरपक्षिमृगं घोरं सायाह्ने भरतर्षभ ॥ ८
घोरा समभवत्सन्ध्या दारुणा मृगपक्षिणः ।
अप्रकाशा दिशः सर्वा वातैरासन्ननार्तवैः ॥ ९
शीर्णपर्णफलै राजन्बहुगुल्मक्षुपद्रुमैः ।
भग्नावभुग्नभूयिष्ठैर्नानाद्रुमसमाकुलैः ॥ १०
ते श्रमेण च कौरव्यास्तृष्णया च प्रपीडिताः ।
नाशक्नुवंस्तदा गन्तुं निद्रया च प्रवृद्धया ॥ ११
न्यविशन्त हि ते सर्वे निरास्वादे महावने ।
'रात्र्यामेव गतास्तूर्णं चतुर्विंशतियोजनम् ।'
ततस्तृषा परिक्लान्ता कुन्ती वचनमब्रवीत् ॥ १२
माता सती पाण्डवानां पञ्चानां मध्यतः स्थिता।
तृष्णया हि परीताऽहमनाथेव महावने ॥ १३
'इतः परं तु शक्ताहं गन्तुं च न पदात्पदम् ।
शयिष्ये वृक्षमूलेऽत्र धार्तराष्ट्रा हरन्तु माम् ॥१४
शृणु भीम वचो मह्यं तव बाहुबलात्पुरः ।
स्थातुं न शक्ताः कौरव्याः किं बिभेषि पृथासुत॥
अन्यो रथो न मेऽस्तीह भीमसेनादृते भुवि ।
धार्तराष्ट्राद्वृथा भीरुर्न मां त्रातुमिहेच्छसि ॥ १६
वैशंपायन उवाच ।
भीमपृष्ठस्थिता चेत्थं दूयमानेन चेतसा ।
निश्चयध्वनि रुदन्ती सा निद्रावशमुपागता॥'१७
तच्छ्रुत्वा भीमसेनस्य मातृस्नेहात्प्रजल्पितम् ।
कारुण्येन मनस्तप्तं गमनायोपचक्रमे ॥ १८
ततो भीमो वनं घोरं प्रविश्य विजनं महत् ।
न्यग्रोधं विपुलच्छायं रमणीयं ददर्श ह ॥ १९
तत्र निक्षिप्य तान्सर्वानुवाच भरतर्षभः ।

शुचिशुक्रागमे ज्येष्ठाषाढयोः समये । आवर्जिताः समीकृता लता वृक्षाश्च यस्मिन् ॥ २ ॥ अवरुज्य भङ्क्त्वा ॥ ३ ॥ रोपितो रोषं प्रापितः । त्रिषु गण्डकर्णमूलगुह्यदेशेषु प्रस्रुतो मदो यस्य सः । शुष्मी तेजस्वी ॥ ४ ॥ अनार्तवैरनृतुभवैरुत्पातरूपैरित्यर्थः ॥ ९ ॥ तृषा तृष्णया ॥ १२ ॥

पानीयं मृगयामीह तावद्विश्रम्यतामिह ॥ २०
एते रुवन्ति मधुरं सारसा जलचारिणः ।
ध्रुवमत्र जलस्थानं महच्चेति मतिर्मम ॥ २१
अनुज्ञातः स गच्छेति भ्रात्रा ज्येष्ठेन भारत ।
जगाम तत्र यत्र स्म सारसा जलचारिणः ॥ २२
'अपश्यत्पद्मिनीखण्डमण्डितं स सरोवरम् ।'
स तत्र पीत्वा पानीयं स्नात्वा च भरतर्षभ ॥ २३
तेषामर्थे च जग्राह भ्रातॄणां भ्रातृवत्सलः ।
उत्तरीयेण पानीयमानयामास भारत ॥ २४
'पङ्कजानामनेकैश्च पत्रैर्बध्वा पृथक्पृथक् ।'
गव्यूतिमात्रादागत्य त्वरितो मातरं प्रति ।
शोकदुःखपरीतात्मा निशश्वासोरगो यथा ॥ २५
स सुप्तां मातरं 'भ्रातॄन्निद्राविद्रावितौजसः ।
महारौद्रे वने घोरे वृक्षमूले सुशीतले ॥ २६
विक्षिप्तकरपादांश्च दीर्घोच्छ्वासान्महाबलान् ।
ऊर्ध्ववक्त्रान्महाकायान्पञ्चेन्द्रानिव भूपते ॥ २७
अज्ञातवृक्षनिलयस्थप्रेतराक्षससाध्वसान् ।
दृष्ट्वा वै भृशशोकार्तो विललापानिलात्मजः ॥' २८
भृशं शोकपरीतात्मा विललाप वृकोदरः ॥ २९
अतः कष्टतरं किं नु द्रष्टव्यं हि भविष्यति ।
यत्पश्यामि महीसुप्तान्भ्रातॄनद्य सुमन्दभाक् ॥ ३०
शयनेषु परार्ध्येषु ये पुरा वारणावते ।
नाधिजग्मुस्तदा निद्रां तेऽद्य सुप्ता महीतले ॥ ३१
स्वसारं वसुदेवस्य शत्रुसङ्घावमर्दिनः ।
कुन्तिराजसुतां कुन्तीं सर्वलक्षणपूजिताम् ॥ ३२
स्नुषां विचित्रवीर्यस्य भार्यां पाण्डोर्महात्मनः ।
तथैव चास्मज्जननीं पुण्डरीकोदरप्रभाम् ॥ ३३
सुकुमारतरामेनां महार्हशयनोचिताम् ।
शयानां पश्यताऽद्येह पृथिव्यामतथोचिताम् ३४
धर्मादिन्द्राच्च वाताच्च सुषुवे या सुतानिमान् ।
सेयं भूमौ परिश्रान्ता शेते प्रासादशायिनी ॥ ३५
किं नु दुःखतरं शक्यं मया द्रष्टुमतः परम् ।
योऽहमद्य नरव्याघ्रान्सुप्तान्पश्यामि भूतले ॥ ३६
त्रिषु लोकेषु यो राज्यं धर्मनित्योऽर्हते नृपः ।
सोऽयं भूमौ परिश्रान्तः शेते प्राकृतवत्कथम् ॥ ३७
अयं नीलाम्बुदश्यामो नरेष्वप्रतिमोऽर्जुनः ।
शेते प्राकृतवद्भूमौ ततो दुःखतरं नु किम् ॥ ३८
अश्विनाविव देवानां याविमौ रूपसंपदा ।
तौ प्राकृतवदद्येमौ प्रसुप्तौ धरणीतले ॥ ३९
ज्ञातयो यस्य नैव स्युर्विषमाः कुलपांसनाः ।
स जीवेत सुखं लोके ग्रामद्रुम इवैकजः ॥ ४०
एको वृक्षो हि यो ग्रामे भवेत्पर्णफलान्वितः ।
चैत्यो भवति निर्ज्ञातिरध्वनीनैश्च पूजितः ॥ ४१
येषां च बहवः शूरा ज्ञातयो धर्ममाश्रिताः ।
ते जीवन्ति सुखं लोके भवन्ति च निरामयाः ४२
बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः ।
जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव ॥ ४३
वयं तु धृतराष्ट्रेण दुष्पुत्रेण दुरात्मना ।
'राज्यलुब्धेन मूर्खेण दुर्मन्त्रिसहितेन वै ॥ ४४
दुष्टेनाधर्मशीलेन स्वार्थनिष्ठैकबुद्धिना' ।
विवासिता न दग्धाश्च क्षत्तुर्बुद्धिपराक्रमात् ॥ ४५
तस्मान्मुक्ता वयं दाहादिमं वृक्षमुपाश्रिताः ।
कां दिशं प्रतिपत्स्यामः प्राप्ताः क्लेशमनुत्तमम् ॥ ४६
सकामो भव दुर्बुद्धे धार्तराष्ट्राल्पदर्शन ।
नूनं देवाः प्रसन्नास्ते नानुज्ञां मे युधिष्ठिरः ॥ ४७
प्रयच्छति वधे तुभ्यं तेन जीवसि दुर्मते ।
नन्वद्य ससुतामात्यं सकर्णानुजसौबलम् ॥ ४८
गत्वा क्रोधसमाविष्टः प्रेषयिष्ये यमक्षयम् ।
किं नु शक्यं मया कर्तुं यत्ते न क्रुध्यते नृपः ४९
धर्मात्मा पाण्डवश्रेष्ठः पापाचार युधिष्ठिरः ।
एवमुक्त्वा महाबाहुः क्रोधसन्दीप्तमानसः ॥ ५०
करं करेण निष्पिष्य निःश्वसन्दीनमानसः ।
पुनर्दीनमना भूत्वा शान्तार्चिरिव पावकः ॥ ५१
भ्रातॄन्महीतले सुप्तानवैक्षत वृकोदरः ।
विश्वस्तानिव संविष्टान्पृथग्जनसमानिव ॥ ५२

सुमन्दभागतिमन्दभाग्यः ॥ ३० ॥ एकज एक एव जातोऽसहायः ॥ ४० ॥ बान्धवानां नन्दनाः सुखदाः ॥ ४३ ॥ तुभ्यं तव ॥ ४८ ॥ त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

नातिदूरेण नगरं वनादस्माद्धि लक्षये ।
जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहंस्वयम् ॥५३
प्राश्यन्तीमे जलं पश्चात्प्रतिबुद्धा जितक्लमाः ।
इति भीमो व्यवस्यैव जजागार स्वयं तदा ॥५४

॥ इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

॥ समाप्तं जतुगृहपर्व ॥

# अथ हिडिम्बवधपर्व ॥ ९ ॥

## चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

हिडिम्बप्रेरितायाः तद्भगिन्या हिडिम्बायाः पाण्डवसमीपगमनम् ॥ १ ॥ भीमं दृष्ट्वा कामार्ताया हिडिम्बायाः भीमं प्रति वाक्यम् ॥ २ ॥ भीमहिडिम्बासंवादः ॥ ३ ॥

वैशंपायन उवाच ।
तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः ।
अविदूरे वनात्तस्माच्छालवृक्षं समाश्रितः ॥ १
क्रूरो मानुषमांसादो महावीर्यपराक्रमः ।
प्रावृड्जलधरश्यामः पिङ्गाक्षो दारुणाकृतिः ॥ २
दंष्ट्राकरालवदनः करालो भीमदर्शनः ।
लम्बस्फिग्लम्बजठरो रक्तश्मश्रुशिरोरुहः ॥ ३
महावृक्षगलस्कन्धः शङ्कुकर्णो विभीषणः ।
यदृच्छया तानपश्यत्पाण्डुपुत्रान्महारथान् ॥ ४
विरूपरूपः पिङ्गाक्षः करालो घोरदर्शनः ।
पिशितेप्सुः क्षुधार्तश्च जिघ्रन्गन्धं यदृच्छया ॥ ५
ऊर्ध्वाङ्गुलिः स कण्डूयन्धुन्वन्रूक्षाञ्शिरोरुहान् ।
जृम्भमाणो महावक्त्रः पुनःपुनरवेक्ष्य च ॥ ६
हृष्टो मानुषमांसस्य महाकायो महाबलः ।
आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ॥ ७
उपपन्नं चिरस्याद्य भक्ष्यं मम मनःप्रियम् ।
जिघ्रतः प्रस्नुता स्नेहाज्जिह्वा पर्येति मे मुखात् ॥८
अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः ।
देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च ॥ ९
आक्रम्य मानुषं कण्ठमाच्छिद्य धमनीमपि ।
उष्णं नवं प्रपास्यामि फेनिलं रुधिरं बहु ॥ १०
गच्छ जानीहि के त्वेते शेरते वनमाश्रिताः ।
मानुषो बलवान्गन्धो घ्राणं तर्पयतीव मे ॥ ११
हत्वैतान्मानुषान्सर्वानानयस्व ममान्तिकम् ।
अस्मद्विषयसुप्तेभ्यो नैतेभ्यो भयमस्ति ते ॥ १२
एषामुत्कृत्य मांसानि मानुषाणां यथेष्टतः ।
भक्षयिष्याव सहितौ कुरु तूर्णं वचो मम ॥ १३
भक्षयित्वा च मांसानि मानुषाणां प्रकामतः ।
नृत्याव सहितावावां दत्ततालावनेकशः ॥ १४
वैशंपायन उवाच ।
एवमुक्ता हिडिम्बा तु हिडिम्बेन महावने ।
भ्रातुर्वचनमाज्ञाय त्वरमाणेव राक्षसी ॥ १५
'आप्लुत्याप्लुत्य च तरूनगच्छत्पाण्डवान्प्रति ।'
जगाम तत्र यत्र स्म शेरते पाण्डवा वने ॥ १६
ददर्श तत्र सा गत्वा पाण्डवान्पृथया सह ।
शयानान्भीमसेनं च जाग्रतं त्वपराजितम् ॥१७
'उपास्यमानान्भीमेन रूपयौवनशालिनः ।
सुकुमारांश्च पार्थान्सा व्यायामेन च कर्शितान् ॥
दुःखेन संप्रयुक्तांश्च सहज्येष्ठान्प्रमाथिनः ।
रौद्री सती राजपुत्रं दर्शनीयप्रदर्शनम् ॥' १९
दृष्ट्वैव भीमसेनं सा सालस्कन्धमिवोद्यतम् ।
राक्षसी कामयामास रूपेणाप्रतिमं भुवि ॥ २०
'अन्तर्गतेन मनसा चिन्तयामास राक्षसी' ।
अयं श्यामो महाबाहुः सिंहस्कन्धो महाद्युतिः ॥

यदृच्छया सालवृक्षं समाश्रित इत्यन्वयः ॥ ४ ॥ धमनीं नाडीम् ॥ १० ॥ श्यामः तरुणः ॥ २१ ॥

कम्बुग्रीवः पुष्कराक्षो भर्ता युक्तो भवेन्मम ।
नाहं भ्रातृवचो जातु कुर्यां क्रूरमसांप्रतम् ॥ २२
पतिस्नेहोऽतिबलवान्न तथा भ्रातृसौहृदम् ।
मुहूर्तमिव तृप्तिश्च भवेद्भ्रातुर्ममैव च ॥ २३
हतैरेतैरहत्वा तु मोदिष्ये शाश्वतीः समाः ।
'निश्चित्येत्थं हिडिम्बा सा भीमं दृष्ट्वा महाभुजं २४
उत्सृज्य राक्षसं रूपं मानुषं रूपमास्थिता ।'
सा कामरूपिणी रूपं कृत्वा मदनमोहिता ॥२५
उपतस्थे महात्मानं भीमसेनमनिन्दिता ।
'इङ्गिताकारकुशला सोपासर्पच्छनैः शनैः ॥ २६
विनम्यमानेव लता दिव्याभरणभूषिता ।
शनैः शनैश्च तां भीमः समीपमुपसर्पतीम् ॥ २७
हर्षमाणां तदा पश्यत्तन्वीं पीनपयोधराम् ।
चन्द्राननां पद्मनेत्रां नीलकुञ्चितमूर्धजाम् ॥ २८
कृष्णां सुपाण्डुरैर्दन्तैर्बिम्बोष्ठीं चारुदर्शनाम् ।
दृष्ट्वा तां रूपसंपन्नां भीमो विस्मयमागतः ॥२९
उपचारगुणैर्युक्तां ललितैर्हाससंमितैः ।
समीपमुपसंप्राप्य भीमं साथ वरानना ॥ ३०
वचो वचनवेलायां भीमं प्रोवाच भामिनी ।'
लज्जया नम्यमानेव सर्वाभरणभूषिता ॥ ३१
स्मितपूर्वमिदं वाक्यं भीमसेनमथाब्रवीत् ।
कुतस्त्वमसि संप्राप्तः कश्चासि पुरुषर्षभ ॥ ३२
क इमे शेरते चेह पुरुषा देवरूपिणः ।
केयं वै बृहती श्यामा सुकुमारी तवानघ ॥ ३३
शेते वनमिदं प्राप्य विश्वस्ता स्वगृहे यथा ।
नेदं जानीथ गहनं वनं राक्षससेवितम् ॥ ३४
वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः ३५
तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा ।
विभक्षयिषता मांसं युष्माकममरोपमाः ॥ ३६
साऽहं त्वामभिसंप्रेक्ष्य देवगर्भसमप्रभम् ।
नान्यं भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते ॥ ३७
एतद्विज्ञाय धर्मज्ञ युक्तं मयि समाचर ।
कामोपहतचित्तां हि भजमानां भजस्व माम् ३८
त्रास्यामि त्वां महाबाहो राक्षसात्पुरुषादकात् ।
वत्स्यावो गिरिदुर्गेषु भर्ता भव ममानघ ॥ ३९
'इच्छामि वीर भद्रं ते मा मे प्राणान्विहासिषः ।
त्वया ह्यहं परित्यक्ता न जीवेयमरिन्दम ॥' ४०
अन्तरिक्षचरी ह्यस्मि कामतो विचरामि च ।
अतुलामाप्नुहि प्रीतिं तत्र तत्र मया सह ॥ ४१
भीमसेन उवाच ।
'एष ज्येष्ठो मम भ्राता मान्यः परमको गुरुः ।
अनिविष्टो हि तन्नाहं परिविद्यां कथंचन ॥'४२
मातरं भ्रातरं ज्येष्ठं कनिष्ठानपरानपि ।
परित्यजेत कोन्वद्य प्रभवन्निह राक्षसि ॥ ४३
को हि सुप्तानिमान्भ्रातॄन्दत्त्वा राक्षसभोजनम् ।
मातरं च नरो गच्छेत्कामार्त इव मद्विधः ॥ ४४
राक्षस्युवाच ।
'एकं त्वां मोक्षयिष्यामि सह मात्रा परन्तप ।
सोदरानुत्सृजैनांस्त्वमारोह जघनं मम ॥ ४५
भीम उवाच ।
नाहं जीवितुमाशंसे भ्रातॄनुत्सृज्य राक्षसि ।
यथाश्रद्धं व्रजैका हि विप्रियं मे प्रभाषसे ॥ ४६
राक्षस्युवाच ।'
यत्ते प्रियं तत्करिष्ये सर्वानेतान्प्रबोधय ।
मोक्षयिष्याम्यहं कामं राक्षसात्पुरुषादकात्॥४७
भीमसेन उवाच ।
सुखसुप्तान्वने भ्रातॄन्मातरं चैव राक्षसि ।
न भयाद्बोधयिष्यामि भ्रातुस्तव दुरात्मनः ॥४८
न हि मे राक्षसा भीरु सोढुं शक्ताः पराक्रमम् ।
न मनुष्या न गन्धर्वा न यक्षाश्चारुलोचने ॥४९
गच्छ वा तिष्ठ वा भद्रे यद्वा पीच्छसि तत्कुरु ।
तं वा प्रेषय तन्वङ्गि भ्रातरं पुरुषादकम् ॥ ५०

॥ इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

---

विभक्षयिषता भक्षयितुमिच्छता ॥ ३६ ॥

चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

## पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

पाण्डवान्प्रति प्रेपितया हिडिम्बया विलम्बिते हिडिम्बस्य तत्रागमनम् ॥ १ ॥ भीमहिडिम्बयोर्युद्धम् ॥ २ ॥ कुन्त्यादीनां प्रबोधः ॥ ३ ॥

वैशंपायन उवाच ।
तां विदित्वा चिरगतां हिडिम्बो राक्षसेश्वरः ।
अवतीर्य द्रुमात्तस्मादाजगामाशु पाण्डवान् ॥ १
लोहिताक्षो महाबाहुरूर्ध्वकेशो महाननः ।
मेघसङ्घातवर्ष्मा च तीक्ष्णदंष्ट्रो भयानकः ॥ २
तलं तलेन संहत्य बाहू विक्षिप्य चासकृत् ।
उद्वृत्तनेत्रः संक्रुद्धो दन्तान्दन्तेषु निष्कुषन् ॥ ३
कोऽद्य मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः ।
न बिभेति हिडिम्बी च प्रेषिता किमनागता ॥ ४
वैशंपायन उवाच ।
तमापतन्तं दृष्ट्वैव तथा विकृतदर्शनम् ।
हिडिम्बोवाच वित्रस्ता भीमसेनमिदं वचः ॥ ५
आपतत्येप दुष्टात्मा संक्रुद्धः पुरुषादकः ।
साऽहं त्वां भ्रातृभिः सार्धं यद्ब्रवीमि तथा कुरु ६
अहं कामगमा वीर रक्षोबलसमन्विता ।
आरुहेमां मम श्रोणिं नेष्यामि त्वां विहायसा ॥ ७
प्रबोधयैतान्संसुप्तान्मातरं च परन्तप ।
सर्वानेव गमिष्यामि गृहीत्वा वो विहायसा ॥ ८
भीम उवाच ।
मा भैस्त्वं पृथुसुश्रोणि नैष कश्चिन्मयि स्थिते ।
अहमेनं हनिष्यामि पश्यन्त्यास्ते सुमध्यमे ॥ ९
नायं प्रतिबलो भीरु राक्षसापसदो मम ।
सोढुं युधि परिस्पन्दमथवा सर्वराक्षसाः ॥ १०
पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ ।
ऊरू परिघसङ्काशौ संहतं चाप्युरो महत् ॥ ११
विक्रमं मे यथेन्द्रस्य साऽद्य द्रक्ष्यसि शोभने ।
माऽवमंस्थाः पृथुश्रोणि मत्वा मामिह मानुषम् १२
हिडिम्बोवाच ।
नावमन्ये नरव्याघ्र त्वामहं देवरूपिणम् ।
दृष्टप्रभावस्तु मया मानुषेष्वेव राक्षसः ॥ १३

मेघसंघातवर्ष्मा अतिकृष्णशरीरः ॥ २ ॥

वैशंपायन उवाच ।
तथा संजल्पतस्तस्य भीमसेनस्य भारत ।
वाचः शुश्राव ताः क्रुद्धो राक्षसः पुरुषादकः १४
अवेक्षमाणस्तस्याश्च हिडिम्बो मानुषं वपुः ।
स्रग्दामपूरितशिखां समग्रेन्दुनिभाननाम् ॥ १५
सुभ्रूनासाक्षिकेशान्तां सुकुमारनखत्वचम् ।
सर्वाभरणसंयुक्तां सुसूक्ष्माम्बरधारिणीम् ॥ १६
तां तथा मानुषं रूपं बिभ्रतीं सुमनोहरम् ।
पुंस्कामां शङ्कमानश्च चुक्रोध पुरुषादकः ॥ १७
संक्रुद्धो राक्षसस्तस्या भगिन्याः कुरुसत्तम ।
उत्फाल्य विपुले नेत्रे ततस्तामिदमब्रवीत् ॥ १८
को हि मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः ।
न बिभेषि हिडिम्बे किं मत्कोपाद्विप्रमोहिता १९
धिक्त्वामसति पुंस्कामे मम विप्रियकारिणि ।
पूर्वेषां राक्षसेन्द्राणां सर्वेषामयशस्करि ॥ २०
यानिमानाश्रिताऽकार्षीर्विप्रियं सुमहन्मम ।
एष तानद्य वै सर्वान्हनिष्यामि त्वया सह ॥ २१
वैशंपायन उवाच ।
एवमुक्त्वा हिडिम्बां स हिडिम्बो लोहितेक्षणः ।
वधायाभिपपातैनान्दन्तैर्दन्तानुपस्पृशन् ॥ २२
गर्जन्तमेवं विजने भीमसेनोऽभिवीक्ष्य तम् ।
रक्षन्प्रबोधं भ्रातॄणां मातुश्च परवीरहा ॥ २३
तमापतन्तं संप्रेक्ष्य भीमः प्रहरतां वरः ।
भर्त्सयामास तेजस्वी तिष्ठतिष्ठेति चाब्रवीत् ॥ २४
वैशंपायन उवाच ।
भीमसेनस्तु तं दृष्ट्वा राक्षसं प्रहसन्निव ।
भगिनीं प्रति सङ्क्रुद्धमिदं वचनमब्रवीत् ॥ २५
किं ते हिडिम्ब एतैर्वा सुखसुप्तैः प्रबोधितैः ।
मामासादय दुर्बुद्धे तरसा त्वं नराशन ॥ २६
मय्येव प्रहरैहि त्वं न स्त्रियं हन्तुमर्हसि ।
विशेषतोऽनपकृते परेणापकृते सति ॥ २७

न हीयं स्ववशा बाला कामयत्यद्य मामिह ।
चोदितैषा ह्यनङ्गेन शरीरान्तरचारिणा ॥ २८
भगिनी तव दुर्वृत्त रक्षसां वै यशोहर ।
त्वन्नियोगेन चैवेयं रूपं मम समीक्ष्य च ॥ २९
कामयत्यद्य मां भीरुस्तव नैषापराध्यति ।
अनङ्गेन कृते दोषे नेमां गर्हितुमर्हसि ॥ ३०
मयि तिष्ठति दुष्टात्मन्न स्त्रियं हन्तुमर्हसि ।
संगच्छस्व मया सार्धमेकेनैको नराशन ॥ ३१
अहमेको गमिष्यामि त्वामद्य यमसादनम् ।
अद्य मद्बलनिष्पिष्टं शिरो राक्षस दीर्यताम् ।
कुञ्जरस्येव पादेन विनिष्पिष्टं बलीयसः ॥ ३२
अद्य गात्राणि ते कङ्काः श्येना गोमायवस्तथा ।
कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे ॥ ३३
क्षणेनाद्य करिष्येऽहमिदं वनमराक्षसम् ।
पुरा यद्दूषितं नित्यं त्वया भक्षयता नरान् ॥३४
अद्य त्वां भगिनी रक्षः कृष्यमाणं मयाऽसकृत् ।
द्रक्ष्यत्यद्रिप्रतीकाशं सिंहेनेव महाद्विपम् ॥ ३५
निराबाधास्त्वयि हते मया राक्षसपांसन ।
वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः ॥ ३६

हिडिम्ब उवाच ।

गर्जितेन वृथा किं ते कत्थितेन च मानुष ।
कृत्वैतत्कर्मणा सर्वं कत्थेथा मा चिरं कृथाः॥३७
बलिनं मन्यसे यच्चाप्यात्मानं सपराक्रमम् ।
ज्ञास्यस्यद्य समागम्य मयात्मानं बलाधिकम्॥३८
न तावदेतान्हिंसिष्ये स्वपन्त्वेते यथासुखम् ।
एष त्वामेव दुर्बुद्धे निहन्म्यद्याप्रियंवदम् ॥ ३९
पीत्वा तवासृग्गात्रेभ्यस्ततः पश्चादिमानपि ।
हनिष्यामि ततः पश्चादिमां विप्रियकारिणीम्॥४०

वैशंपायन उवाच ।

एवमुक्त्वा ततो बाहुं प्रगृह्य पुरुषादकः ।
अभ्यद्रवत संक्रुद्धो भीमसेनमरिन्दमम् ॥ ४१
तस्याभिद्रवतस्तूर्णं भीमो भीमपराक्रमः ।
वेगेन प्रहितं बाहुं निजग्राह हसन्निव ॥ ४२
निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह ।
तस्माद्देशाद्धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा ॥ ४३
ततः स राक्षसः क्रुद्धः पाण्डवेन बलार्दितः ।
भीमसेनं समालिङ्ग्य व्यनदद्भैरवं रवम् ॥ ४४
पुनर्भीमो बलादेनं विचकर्ष महाबलः ।
मा शब्दः सुखसुप्तानां भ्रातॄणां मे भवेदिति॥४५
'हस्ते गृहीत्वा तद्रक्षो दूरमन्यत्र नीतवान् ।
पुच्छे गृहीत्वा तुण्डेन गरुडः पन्नगं यथा ॥'४६
अन्योन्यं तौ समासाद्य विचकर्षतुरोजसा ।
हिडिम्बो भीमसेनश्च विक्रमं चक्रतुः परम् ॥४७
बभञ्जतुस्तदा वृक्षाँल्लताश्चाकर्षतुस्तदा ।
मत्ताविव च संरब्धौ वारणौ षष्टिहायनौ ॥ ४८
'पादपानुद्धरन्तौ तावूरुवेगेन वेगितौ ।
स्फोटयन्तौ लताजालान्यूरुभ्यां गृह्य सर्वशः॥४९
वित्रासयन्तौ तौ शब्दैः सर्वतो मृगपक्षिणः ।
बलेन बलिनौ मत्तावन्योन्यवधकाङ्क्षिणौ ॥ ५०
भीमराक्षसयोर्युद्धं तदाऽवर्तत दारुणम् ।
पुरा देवासुरे युद्धे वृत्रवासवयोरिव ॥ ५१
भङ्क्त्वा वृक्षान्महाशाखांस्ताडयामासतुः क्रुधा ।
सालतालतमालाम्रवटार्जुनविभीतकान् ॥ ५२
न्यग्रोधप्लक्षखर्जूरपनसानश्मकण्टकान् ।
एतानन्यान्महावृक्षानुत्खाय तरसाऽखिलान् ५३
उत्क्षिप्यान्योन्यरोषेण ताडयामासतू रणे ।
यदाऽभवद्वनं सर्वं निर्वृक्षं वृक्षसङ्कुलम् ॥ ५४
तदा शिलाश्च कुञ्जांश्च वृक्षान्कण्टकिनस्तथा ।
ततस्तौ गिरिशृङ्गाणि पर्वतांश्चाभ्रलेलिहान् ॥ ५५
शैलांश्च गण्डपाषाणानुत्खायादाय वैरिणौ ।
चिक्षेपतुरुपर्योजावन्योन्यं विजयैषिणौ ॥ ५६
तद्वनं परितः पञ्चयोजनं निर्महीरुहम् ।
निर्लतागुल्मपाषाणं निर्मृगं चक्रतुर्भृशम् ॥ ५७
तयोर्युद्धेन राजेन्द्र तद्वनं भीमरक्षसोः ।
मुहूर्तेनाभवत्कूर्मपृष्ठवच्छ्लक्ष्णमव्ययम् ॥ ५८
ऊरुबाहुपरिक्लेशात्कर्षन्तावितरेतरम् ।

गमिष्यामि गमयिष्यामि ॥ ३२ ॥ निर्वृक्षं अकण्टकवृक्षरहितम् ॥ ५४ ॥ पञ्चषष्ट्यधिकशततमोऽध्याय ॥ १६५ ॥

उत्कर्षन्तौ विकर्षन्तौ प्रकर्षन्तौ परस्परम् ॥ ५९
तौ स्वनेन विना राजन्गर्जन्तौ च परस्परम् ।
पाषाणसंघट्टनिभैः प्रहारैरभिजघ्नतुः ॥ ६०
अन्योन्यं च समालिङ्ग्य विकर्षन्तौ परस्परम् ।
बाहुयुद्धमभूद्धोरं बलिवासवयोरिव ।
युद्धसंरम्भनिर्गच्छत्फूत्काररवनिस्वनम् ॥' ६१
तयोः शब्देन महता विबुद्धास्ते नरर्षभाः ।
सह मात्रा च ददृशुर्हिडिम्बामग्रतःस्थिताम् ॥ ६२

॥ इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

## षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

कुन्तीहिडिम्बासंवादः ॥ १ ॥ हिडिम्बावार्तया भीमं हिडिम्बेन युद्ध्यमानं ज्ञातवतां कुन्त्यादीनां तत्र गमनम् ॥ २ ॥ हिडिम्बवधः ॥ ३ ॥

वैशंपायन उवाच ।
प्रबुद्धास्ते हिडिम्बाया रूपं दृष्ट्वातिमानुषम् ।
विस्मिताः पुरुषव्याघ्रा बभूवुः पृथया सह ॥ १
ततः कुन्ती समीक्ष्यैनां विस्मिता रूपसंपदा ।
उवाच मधुरं वाक्यं सान्त्वपूर्वमिदं शनैः ॥ २
कस्य त्वं सुरगर्भाभे कावाऽसि वरवर्णिनि ।
केन कार्येण संप्राप्ता कुतश्चागमनं तव ॥ ३
यदि वाऽस्य वनस्य त्वं देवता यदि वाऽप्सराः ।
आचक्ष्व मम तत्सर्वं किमर्थं चेह तिष्ठसि ॥ ४
हिडिम्बोवाच ।
यदेतत्पश्यसि वनं नीलमेघनिभं महत् ।
निवासो राक्षसस्यैष हिडिम्बस्य ममैव च ॥ ५
तस्य मां राक्षसेन्द्रस्य भगिनीं विद्धि भामिनि ।
भ्रात्रा संप्रेपितामार्ये त्वां सपुत्रां जिघांसता ॥ ६
क्रूरबुद्धेरहं तस्य वचनादागता त्विह ।
अद्राक्षं नवहेमाभं तव पुत्रं महाबलम् ॥ ७
ततोऽहं सर्वभूतानां भावे विचरता शुभे ।
चोदिता तव पुत्रार्थे मन्मथेन वशानुगा ॥ ८
ततो वृतो मया भर्ता तव पुत्रो महाबलः ।
अपनेतुं च यतितो न चैव शकितो मया ॥ ९
चिरायमाणां मां ज्ञात्वा ततः स पुरुषादकः ।
स्वयमेवागतो हन्तुमिमान्सर्वांस्तवात्मजान् ॥ १०
स तेन मम कान्तेन तव पुत्रेण धीमता ।
बलादितो विनिष्पिष्य व्यपनीतो महात्मना ॥ ११
विकर्षन्तौ महावेगौ गर्जमानौ परस्परम् ।
पश्यैवं युधि विक्रान्तावेतौ च नरराक्षसौ ॥ १२
वैशंपायन उवाच ।
तस्याः श्रुत्वैव वचनमुत्पपात युधिष्ठिरः ।
अर्जुनो नकुलश्चैव सहदेवश्च वीर्यवान् ॥ १३
तौ ते ददृशुरासक्तौ विकर्षन्तौ परस्परम् ।
काङ्क्षमाणौ जयं चैव सिंहाविव बलोत्कटौ ॥ १४
अथान्योन्यं समाश्लिष्य विकर्षन्तौ पुनःपुनः ।
दावाग्निधूमसदृशं चक्रतुः पार्थिवं रजः ॥ १५
वसुधारेणुसंवीतौ वसुधाधरसन्निभौ ।
बभ्राजतुर्यथा शैलौ नीहारेणाभिसंवृतौ ॥ १६
राक्षसेन तदा भीमं क्लिश्यमानं निरीक्ष्य च ।
उवाचेदं वचः पार्थः प्रहसञ्छनकैरिव ॥ १७
भीम माभैर्महाबाहो न त्वां बुध्यामहे वयम् ।
समेतं भीमरूपेण रक्षसा श्रमकर्शिताः ॥ १८
साहाय्येऽस्मि स्थितः पार्थ पातयिष्यामि राक्षसम् ।
नकुलः सहदेवश्च मातरं गोपयिष्यतः ॥ १९
भीम उवाच ।
उदासीनो निरीक्षस्व न कार्यः संभ्रमस्त्वया ।
न जात्वयं पुनर्जीवेन्मद्बाह्वन्तरमागतः ॥ २०
'भुजयोरन्तरं प्राप्तो भीमसेनस्य राक्षसः ।
अमृत्वा पार्थवीर्येण मृतो मा भूदिति ध्वनिः ॥ २१

भावे चित्ते ॥ ८ ॥ व्यपनीतो दूरे नीतः ॥ ११ ॥

इतिध्वनिर्माभूदिति संबन्धः ॥ २१ ॥

अयमस्मांस्तु नो हन्याज्जातु वै पार्थ राक्षसः ।
जीवन्तं न प्रमोक्ष्यामि मा भैषीर्भरतर्षभ ॥' २२
अर्जुन उवाच ।
'पूर्वरात्रे प्रयुक्तोऽसि भीम क्रूरेण रक्षसा ।
क्षपा व्युष्टा न चेदानीं समाप्तोसीन्महारणः॥'२३
किमनेन चिरं भीम जीवता पापरक्षसा ।
गन्तव्ये न चिरं स्थातुमिह शक्यमरिन्दम ॥२४
पुरा संरज्यते प्राची पुरा सन्ध्या प्रवर्तते ।
रौद्रे मुहूर्ते रक्षांसि प्रबलानि भवन्त्युत ॥ २५
त्वरस्व भीम मा क्रीड जहि रक्षो विभीषणम् ।
पुरा विकुरुते मायां भुजयोः सारमर्पय ॥ २६
'माहात्म्यमात्मनो वेत्थ नराणां हितकाम्यया ।
रक्षो जहि यथा शक्रः पुरा वृत्रं महाबलम् ॥२७
अथवा मन्यसे भारं त्वमिमं राक्षसं युधि ।
आतिष्ठे तव साहाय्यं शीघ्रमेव तु हन्यताम् ॥२८
अथवा त्वहमेवैनं हनिष्यामि वृकोदर ।
कृतकर्मा परिश्रान्तः साधु तावदुपारम ॥' २९
वैशंपायन उवाच ।
अर्जुनेनैवमुक्तस्तु भीमो रोषाज्ज्वलन्निव ।
बलमाहारयामास यद्वायोर्जगतः क्षये ॥ ३०
ततस्तस्याम्बुदाभस्य भीमो रोषात्तु रक्षसः ।
उत्क्षिप्याभ्रामयद्देहं तूर्णं शतगुणं तदा ॥ ३१
'इति चोवाच संक्रुद्धो भ्रामयन्राक्षसीं तनुम् ।
भीमसेनो महाबाहुरभिगर्जन्मुहुर्मुहुः ॥' ३२
भीम उवाच ।
नरमांसैर्वृथा पुष्टो वृथा वृद्धो वृथामतिः ।
वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि ॥ ३३
क्षेममद्य करिष्यामि यथा वनमकण्टकम् ।
न पुनर्मानुषान्हत्वा भक्षयिष्यसि राक्षस ॥ ३४
वैशंपायन उवाच ।
इत्युक्त्वा भीमसेनस्तं निष्पिष्य धरणीतले ।
बाहुभ्यामवपीड्याशु पशुमारममारयत् ॥ ३५
स मार्यमाणो भीमेन ननाद विपुलं स्वनम् ।
पूरयंस्तद्वनं सर्वं जलार्द्र इव दुन्दुभिः ॥ ३६
बाहुभ्यां योक्त्रयित्वा तं बलवान्पाण्डुनन्दनः ।
'समुद्भ्राम्य शिरश्चास्य सग्रीवं तदपाहरत् ॥ ३७
ततो भित्त्वा शिरश्चास्य सग्रीवं तदुदाक्षिपत् ।
तस्य निष्कर्णनयनं निर्जिह्वं रुधिरोक्षितम् ॥३८
प्राविद्धं भीमसेनेन शिरो विदशनं बभौ ।
प्रसारितभुजोद्वृष्टो भिन्नमांसत्वगन्तरः ॥ ३९
कबन्धभूतस्तत्रासीद्धनुर्वज्रहतो तथा ।
हिडिम्बं निहतं दृष्ट्वा संहृष्टास्ते तरस्विनः ॥ ४०
हिडिम्बा सा च संप्रेक्ष्य निहतं राक्षसं रणे ।
अदृश्याश्चैव ये स्वस्थाः समेताः सर्षिचारणाः ४१
पूजयन्ति स्म तं हृष्टाः साधुसाध्विति पाण्डवम् ।
भ्रातरश्चापि संहृष्टा युधिष्ठिरपुरोगमाः ॥ ४२
अपूजयन्नरव्याघ्रं भीमसेनमरिन्दमम् ।'
अभिपूज्य महात्मानं भीमं भीमपराक्रमम् ।
पुनरेवार्जुनो वाक्यमुवाचेदं वृकोदरम् ॥ ४३
अदूरे नगरं मन्ये वनादस्मादहं विभो ।
शीघ्रं गच्छाम भद्रं ते न नो विद्यात्सुयोधनः ४४
ततः सर्वे तथेत्युक्त्वा मात्रा सह महारथाः ।
प्रययुः पुरुषव्याघ्रा हिडिम्बा चैव राक्षसी ॥४५

॥ इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

---

## सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

हिडिम्बावधे प्रवृत्तस्य भीमस्य युधिष्ठिरकृतं निवारणं ॥ १ ॥ हिडिम्बया स्वस्य धर्मज्ञत्वस्य भविष्यज्ज्ञत्वस्य च प्रकटनम् ॥ २ ॥ हिडिम्बाया धर्मिष्ठतां ज्ञात्वा तदङ्गीकरणे भीमं प्रति कुन्त्या आज्ञा ॥ ३ ॥

'वैशंपायन उवाच ।
सा तानेवापतत्तूर्णं भगिनी तस्य रक्षसः ।
अब्रुवाणा हिडिम्बा तु राक्षसी पाण्डवान्प्रति॥१
अभिवाद्य ततः कुन्तीं धर्मराजं च पाण्डवम् ।

गन्तव्ये सति चिरं स्थातुं न शक्यम् ॥ २४ ॥ अथवेति द्वयं प्रोत्साहनार्थं ॥ २८ ॥ वृथामरणं स्वर्गाद्यप्रयोजकं मरणम् ॥ ३३ ॥

षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

अभिपूज्य ततः सर्वान्भीमसेनमभाषत ॥ २
अहं ते दर्शनादेव मन्मथस्य वशं गता ।
क्रूरं भ्रातृवचो हित्वा सा त्वामेवानिरुन्धती ॥३
राक्षसे रौद्रसङ्काशे तवापश्यं विचेष्टितम् ।
अहं शुश्रूषुरिच्छेयं तव गात्रं निषेवितुम् ॥' ४
भीमसेन उवाच ।
स्मरन्ति वैरं रक्षांसि मायामाश्रित्य मोहिनीम् ।
हिडिम्बे व्रज पन्थानं त्वमिमं भ्रातृसेवितम् ॥५
युधिष्ठिर उवाच ।
क्रुद्धोऽपि पुरुषव्याघ्र भीम मा स्म स्त्रियं वधीः ।
शरीरगुप्त्यभ्यधिकं धर्मं गोपाय पाण्डव ॥ ६
वधाभिप्रायमायान्तमवधीस्त्वं महाबलम् ।
रक्षसस्तस्य भगिनी किं नः क्रुद्धा करिष्यति ॥ ७
वैशंपायन उवाच ।
हिडिम्बा तु ततः कुन्तीमभिवाद्य कृताञ्जलिः ।
युधिष्ठिरं तु कौन्तेयमिदं वचनमब्रवीत् ॥ ८
आर्ये जानासि यद्दुःखमिह स्त्रीणामनङ्गजम् ।
तदिदं मामनुप्राप्तं भीमसेनकृते शुभे ॥ ९
सोढं तत्परमं दुःखं मया कालप्रतीक्षया ।
सोऽयमभ्यागतः कालो भविता मे सुखोदयः १०
मया ह्युत्सृज्य सुहृदः स्वधर्मं स्वजनं तथा ।
वृतोऽयं पुरुषव्याघ्रस्तव पुत्रः पतिः शुभे ॥ ११
वीरेणाऽहं तथाऽनेन त्वया चापि यशस्विनी ।
प्रत्याख्याता न जीवामि सत्यमेतद्ब्रवीमि ते॥१२
यदर्हसि कृपां कर्तुं मयि त्वं वरवर्णिनि ।
मत्वा मूढेति तन्मां त्वं भक्ता वाऽनुगतेति वा १३
भर्त्राऽनेन महाभागे संयोजय सुतेन ह ।
तमुपादाय गच्छेयं यथेष्टं देवरूपिणम् ।
पुनश्चैवानयिष्यामि विस्रम्भं कुरु मे शुभे ॥ १४
'अहं हि समये लप्स्ये प्राग्भ्रातुरपवर्जनात् ।
ततः सोऽभ्यपतद्भ्रात्रा भीमसेनजिघांसया ॥ १५
यथायथा विक्रमते यथारिमधितिष्ठति ।
तथातथा समासाद्य पाण्डवं काममोहिता ॥१६
न यातुधान्यहं त्वार्ये न चास्मि रजनीचरी ।
ईशा रक्षस्स्वसा ह्यस्मि राज्ञि सालकटङ्कटी ॥१७
पुत्रेण तव संयुक्ता युवतिर्देववर्णिनी ।
सर्वान्वोऽहमुपस्थास्ये पुरस्कृत्य वृकोदरम् ॥ १८
अप्रमत्ता प्रमत्तेषु शुश्रूषुरसकृत्त्वहम् ।'
वृजिने तारयिष्यामि दासीवच्च नरर्षभाः ॥ १९
पृष्ठेन वो वहिष्यामि विमानं सुकृतानिव ।
यूयं प्रसादं कुरुत भीमसेनो भजेत माम् ॥ २०
'एवं ब्रुवन्ती ह तथा प्रत्याख्याता क्रियां प्रति ।
भूम्यां दुष्कृतिनो लोकान्गमिष्येऽहं न संशयः २१
अहं हि मनसा ध्यात्वा सर्वं वेत्स्यामि सर्वदा ।'
आपन्निस्तरणे प्राणान्धारयिष्ये न केनचित्॥२२
सर्वमावृत्य कर्तव्यं धर्मं समनुपश्यता ।
आपत्सु यो धारयति स वै धर्मविदुत्तमः ॥ २३
व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते ।
पुण्यात्प्राणान्धारयति पुण्यं वै प्राणधारणम्॥२४
येन केनाचरेद्धर्मं तस्मिन्गर्हा न विद्यते ।
'महतोऽत्र स्त्रियं कामाद्बाधितां त्राहि मामपि २५
धर्मार्थकाममोक्षेषु दयां कुर्वन्ति साधवः ।
तत्तु धर्ममिति प्राहुर्मुनयो धर्मवत्सलाः ॥ २६
दिव्यज्ञानेन जानामि व्यतीतानागतानहम् ।
तस्माद्वक्ष्यामि वः श्रेय आसन्नं सर उत्तमम् २७
अद्यासाद्य सरः स्नात्वा विश्रम्य च वनस्पतौ ।
श्वः प्रभाते महद्भूतं प्रादुर्भूतं जगत्पतिम् ॥ २८
व्यासं कमलपत्राक्षं दृष्ट्वा शोकं विहास्यथ ।
धार्तराष्ट्राद्विवासं च दहनं वारणावते ॥ २९
त्राणं च विदुरात्तुभ्यं विदितं ज्ञानचक्षुषा ।
आवासे शालिहोत्रस्य स वो वासं विधास्यति३०
वर्षवातातपसहो ह्ययं पुण्यो वनस्पतिः ।
पीतमात्रे तु पानीये क्षुत्पिपासे विनश्यतः ॥३१
तपसा शालिहोत्रेण सरो वृक्षश्च निर्मितः ।
कादम्बाः सारसा हंसाः कुरयैः कुररैः सह ॥३२
रुवन्ति मधुरं गीतं गान्धर्वस्वनमिश्रितम् ।

भ्रातृसेवितं पन्थानं मृत्युम् ॥ ५ ॥

सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

वैशंपायन उवाच ।
तस्यास्तद्वचनं श्रुत्वा कुन्ती वचनमब्रवीत् ॥ ३३
युधिष्ठिरं महाप्राज्ञं सर्वधर्मविशारदम् ।
कुन्त्युवाच ।
त्वं हि धर्मभृतां श्रेष्ठो मयोक्तं शृणु भारत ॥ ३४
राक्षस्येषा हि वाक्येन धर्मं वदति साधु वै ।
भावेन दुष्टा भीमं वै किं करिष्यति राक्षसी॥३५
भजतां पाण्डवं वीरमपत्यार्थं यदीच्छसि ।'
युधिष्ठिर उवाच ।
एवमेतद्यथाऽऽत्थ त्वं हिडिम्बे नात्र संशयः॥३६
स्थातव्यं तु त्वया धर्मे यथा ब्रूयां सुमध्यमे ।
'नित्यं कृताह्निका स्नाता कृतशौचा सुरूपिणी ॥'
स्नातं कृताह्निकं भद्रे कृतकौतुकमङ्गलम् ।
भीमसेनं भजेथास्त्वमुदिते वै दिवाकरे ॥ ३८
अहस्सु विहरानेन यथाकामं मनोजवा ।
अयं त्वानयितव्यस्ते भीमसेनः सदा निशि ३९
प्राक्सन्ध्यातो विमोक्तव्यो रक्षितव्यश्च नित्यशः।
एवं रमस्व भीमेन यावद्गर्भस्य वेदनम् ॥ ४०
एष ते समयो भद्रे शुश्रूषा चाप्रमत्तया ।
नित्यानुकूलया भूत्वा कर्तव्यं शोभनं त्वया ४१

॥ इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

---

## अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

हिडिम्बया सह पाण्डवानां शालिहोत्रसरोगमनम् ॥ १ ॥ शालिहोत्रेण तेषामातिथ्यकरणम् ॥ २ ॥ समयकरणपूर्वकं भीमेन हिडिम्ब्याः परिग्रहः ॥ ३ ॥ रमणीयेषु प्रदेशेषु भीमेन सह क्रीडित्वा सायाह्ने शालिहोत्राश्रमं प्रति हिडिम्ब्या निवर्तनम् ॥ ४ ॥ तत्र व्यासागमनम् ॥ ५ ॥ व्यासेन कुन्त्या आश्वासनम् ॥ ६ ॥ व्यासस्य प्रतिनिवर्तनम् ॥ ७ ॥

वैशंपायन उवाच ।
युधिष्ठिरवचः श्रुत्वा कुन्तीमङ्केऽधिरोप्य सा ।
भीमार्जुनान्तरगता यमाभ्यां च पुरस्कृता ॥ १
तिर्यग्युधिष्ठिरे याति हिडिम्बा भीमगामिनी ।
शालिहोत्रसरो रम्यमाससाद जलार्थिनी ॥ २
वनस्पतितलं गत्वा परिमृज्य गृहं यथा ।
पाण्डवानां च वासं सा कृत्वा पर्णमयं तथा ॥३
आत्मनश्च तथा कुन्त्या एकोद्देशे चकार सा ।
पाण्डवास्तु ततः स्नात्वा शुद्धाः सन्ध्यामुपास्य च४
तृषिताः क्षुत्पिपासार्ता जलमात्रेण वर्तयन् ।
शालिहोत्रस्ततो ज्ञात्वा क्षुधार्तान्पाण्डवांस्तदा ५
मनसा चिन्तयामास पानीयं भोजनं महत् ।
ततस्ते पाण्डवाः सर्वे विश्रान्ताः पृथया सह ॥६
यथा जतुगृहे वृत्तं राक्षसेन कृतं च यत् ।
कृत्वा कथा बहुविधाः कथान्ते पाण्डुनन्दनम् ७
कुन्ती राजसुता वाक्यं भीमसेनमथाब्रवीत् ।
यथा पाण्डुस्तथा मान्यस्तव ज्येष्ठो युधिष्ठिरः॥८
अहं धर्मविदाऽनेन मान्या गुरुतरा तव ।
तस्मात्पाण्डुहितार्थं मे युवराज हितं कुरु ॥ ९
निकृता धार्तराष्ट्रेण पापेनाकृतबुद्धिना ।
दुष्कृतस्य प्रतीकारं न पश्यामि वृकोदर ॥ १०
तस्मात्कतिपयाहेन योगक्षेमं भविष्यति ।
क्षेमं दुर्गमिमं वासं वत्स्याम हि यथा वयम् ११
इदमन्यन्महद्दुःखं धर्मकृच्छ्रं वृकोदर ।
दृष्ट्वैव त्वां महाप्राज्ञ अनङ्गाभिप्रचोदिता ॥ १२
युधिष्ठिरं च मां चैव वरयामास धर्मतः ।
धर्मार्थं देहि पुत्रं त्वं स नः श्रेयः करिष्यति १३
प्रतिवाक्यं तु नेच्छामि आवयोर्वचनं कुरु ।
वैशंपायन उवाच ।
तथेति तत्प्रतिज्ञाय भीमसेनोऽब्रवीदिदम् ॥ १४
शासनं ते करिष्यामि वेदशासनमित्यपि ।
समक्षं भ्रातृमध्ये तु तां चोवाच स राक्षसीम्१५
शृणु राक्षसि सत्येन समयं ते वदाम्यहम् ।'
यावत्कालेन भवति पुत्रस्योत्पादनं शुभे ॥ १६
तावत्कालं चरिष्यामि त्वया सह सुमध्यमे ।
'विशेषतो मत्सकाशे मा प्रकाशय नीचताम् १७

उत्तमस्त्रीगुणोपेता भजेथा वरवर्णिनि ।'
वैशंपायन उवाच ।
सा तथेति प्रतिज्ञाय हिडिम्बा राक्षसी तथा १८
गताऽहनि निवेशेषु भोज्यं राजार्हमानयत् ।
सा कदाचिद्विहारार्थं हिडिम्बा कामरूपिणी १९
भीमसेनमुपादाय ऊर्ध्वमाचक्रमे तदा ।
शैलशृङ्गेषु रम्येषु देवतायतनेषु च ॥ २०
मृगपक्षिविघुष्टेषु रमणीयेषु सर्वदा ।
कृत्वा सा परमं रूपं सर्वाभरणभूषिता ॥ २१
संजल्पन्ती सुमधुरं रमयामास पाण्डवम् ।
तथैव वनदुर्गेषु पर्वतद्रुमसानुषु ॥ २२
सरस्सु रमणीयेषु पद्मोत्पलवनेषु च ।
नदीद्वीपप्रदेशेषु वैडूर्यसिकतेषु च ॥ २३
देवारण्येषु पुण्येषु तथा पर्वतसानुषु ।
सुतीर्थवनतोयासु तथा गिरिनदीषु च ॥ २४
सागरस्य प्रदेशेषु मणिहेमयुतेषु च ।
गुह्यकानां निवासेषु कुलपर्वतसानुषु ॥ २५
सर्वर्तुफलवृक्षेषु मानसेषु वनेषु च ।
बिभ्रती परमं रूपं रमयामास पाण्डवम् ॥ २६
'यथा सुमोदते स्वर्गे सुकृत्यप्सरसा सह ।
सुतरां परमप्रीतस्तथा रेमे महाद्युतिः ॥ २७
शुभं हि जघनं तस्याः सवर्णमणिमेखलम् ।
न ततर्प तदा मृद्नन्भीमसेनो मुहुर्मुहुः ॥' २८
रमयन्ती ततो भीमं तत्रतत्र मनोजवा ।
सा रेमे तेन संहर्षात्तृप्यन्ती च मुहुर्मुहुः ॥ २९
अहस्सु रमयन्ती सा निशाकालेषु पाण्डवम् ।
आनीय वै स्वके गेहे दर्शयामास मातरम् ॥ ३०
भ्रातृभिः सहितो नित्यं स्वपते पाण्डवस्तथा ।
कुन्त्याः परिचरन्ती सा तस्याः पार्श्वे वसन्निशां ३१
कामांश्च मुखवासादीनानयिष्यति भोजनम् ।
तस्यां रात्र्यां व्यतीतायामाजगाम महाव्रतः ३२
पाराशर्यो महाप्राज्ञो दिव्यदर्शी महातपाः ।
तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं शुभम् ।

दीनतो बालत इति द्वयं भावप्रधानम् ॥ ३८ ॥
३८

तस्थुः प्राञ्जलयः सर्वे सस्नुषा चैव माधवी ॥ ३३
श्रीव्यास उवाच ।
मयेदं मनसा पूर्वं विदितं भरतर्षभाः ।
यथा स्थितैरधर्मेण धार्तराष्ट्रैर्विवासिताः ॥ ३४
तद्विदित्वाऽस्मि संप्राप्तश्चिकीर्षन्वै परं हितम् ।
न विषादो हि वः कार्यः सर्वमेतत्सुखाय वः ३५
सुहृद्वियोजनं कर्म पुराकृतमरिन्दमाः ।
तस्य सिद्धिरियं प्राप्ता मा शोचत परन्तपाः ३६
समाप्ते दुष्कृते चैव यूयं ते वै न संशयः ।
स्वराष्ट्रे विहरिष्यन्तो भविष्यथ सबान्धवाः ॥ ३७
दीनतो बालतश्चैव स्नेहं कुर्वन्ति बान्धवाः ।
तस्मादभ्यधिकः स्नेहो युष्मासु मम संप्रति ॥ ३८
स्नेहपूर्वं चिकीर्षामि हितं यत्तन्निबोधत ।
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ॥ ३९
एतद्धि शालिहोत्रस्य तपसा निर्मितं सरः ।
रमणीयमिदं तोयं क्षुत्पिपासाश्रमापहम् ॥ ४०
कार्यार्थिनस्तु षण्मासान्विहरध्वं यथासुखम् ॥ ४१
वैशंपायन उवाच ।
एवं स तान्समाश्वास्य व्यासः पार्थानरिन्दमान् ।
स्नेहाच्च संपरिष्वज्य कुन्तीमाश्वासयत्प्रभुः ॥ ४२
स्नुषे मा रोद मा रोदेत्येवं व्यासोऽब्रवीद्वचः ।
जीवपुत्रे सुतस्तेऽयं धर्मनित्यो युधिष्ठिरः ॥ ४३
पृथिव्यां पार्थिवान्सर्वान्प्रशासिष्यति धर्मराट् ।
धर्मेण जित्वा पृथिवीमखिलां धर्मकृद्वशी ॥ ४४
स्थापयित्वा वशे सर्वां सपर्वतवनां शुभाम् ।
भीमसेनार्जुनबलाद्भोक्ष्यत्ययमसंशयम् ॥ ४५
पुत्रास्तव च माद्र्याश्च पञ्चैते लोकविश्रुताः ।
स्वराष्ट्रे विहरिष्यन्ति सुखं सुमनसस्तदा ॥ ४६
यक्ष्यन्ति च नरव्याघ्रा विजित्य पृथिवीमिमाम् ।
राजसूयाश्वमेधाद्यैः क्रतुभिर्भूरिदक्षिणैः ॥ ४७
अनुगृह्य सुहृद्वर्गं धनेन च सुखेन च ।
पितृपैतामहं राज्यमाहरिष्यन्ति ते सुताः ॥ ४८

अष्टषष्ट्युत्तरशततमोऽध्यायः ॥ १६८ ॥

स्नुषा कमलपत्राक्षी नाम्ना कमलपालिका ।
वशवर्तिनी तु भीमस्य पुत्रमेषा जनिष्यति ॥ ४९
तेन पुत्रेण कृच्छ्रेषु भविष्यथ च तारिताः ।
इह मासं प्रतीक्षध्वमागमिष्याम्यहं पुनः ॥ ५०
देशकालौ विदित्वैवं यास्यध्वं परमां मुदम् ॥५१
वैशंपायन उवाच ।
स तैः प्राञ्जलिभिः सर्वैस्तथेत्युक्तो जनाधिप ।
जगाम भगवान्व्यासो यथागतमृषिः प्रभुः ॥५२

॥ इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

## ऊनसप्तत्युत्तरशततमोऽध्यायः ॥ १६९ ॥

घटोत्कचोत्पत्तिः ॥ १ ॥ स्मृतिमात्रादागच्छाव इत्युक्त्वा हिडिम्बाघटोत्कचयोर्गमनम् ॥ २ ॥

वैशंपायन उवाच ।
गते भगवति व्यासे पाण्डवा विगतज्वराः ।
ऊषुस्तत्र च षण्मासान्वटवृक्षे यथासुखम् ॥ १
शाकमूलफलाहारास्तपः कुर्वन्ति पाण्डवाः ।
अनुज्ञाता महाराज ततः कमलपालिका ॥ २
रमयन्ती सदा भीमं तत्रतत्र मनोजवा ।
दिव्याभरणवस्त्रा हि दिव्यस्रगनुलेपना ॥ ३
एवं भ्रातॄन्सप्त मासान्हिडिम्बाऽवासयद्वने ।
पाण्डवान्भीमसेनार्थे राक्षसी कामरूपिणी ॥ ४
सुखं स विहरन्भीमस्तत्कालं पर्यणामयत् ।
ततोऽलभत सा गर्भं राक्षसी कामरूपिणी ॥ ५
अतृप्ता भीमसेनेन सप्तमासोपसंगता ।'
प्रजज्ञे राक्षसी पुत्रं भीमसेनान्महाबलात् ॥ ६
विरूपाक्षं महावक्त्रं शङ्कुकर्णं विभीषणम् ।
भीमरूपं सुताम्राक्षं तीक्ष्णदंष्ट्रं महारथम् ॥ ७
महेष्वासं महावीर्यं महासत्वं महाजवम् ।
महाकायं महाकालं महाग्रीवं महाभुजम् ॥ ८
अमानुषं मानुषजं भीमवेगमरिन्दमम् ।
पिशाचकानतीत्यान्यान्बभूवाति स मानुषान् ॥९
बालोऽपि विक्रमं प्राप्तो मानुषेषु विशांपते ।
सर्वास्त्रेषु वरो वीरः प्रकाममभवद्बली ॥ १०
सद्यो हि गर्भं राक्षस्यो लभन्ते प्रसवन्ति च ।
कामरूपधराश्चैव भवन्ति बहुरूपिकाः ॥ ११
प्रणम्य विकचः पादावगृह्णात्स पितुस्तदा ।
मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ॥१२
घटोहास्योत्कच इति माता तं प्रत्यभाषत ।
अभवत्तेन नामास्य घटोत्कच इति स ह ॥ १३
अनुरक्तश्च तानासीत्पाण्डवान्स घटोत्कचः ।
तेषां च दयितो नित्यमात्मनित्यो बभूव ह ॥१४
घटोत्कचो महाकायः पाण्डवान्पृथया सह ।
अभिवाद्य यथान्यायमब्रवीच्च प्रभाष्य तान् ॥१५
किं करोम्यहमार्याणां निःशङ्कं वदतानघाः ।
तं ब्रुवन्तं भैमसेनिं कुन्ती वचनमब्रवीत् ॥ १६
त्वं कुरूणां कुले जातः साक्षाद्भीमसमो ह्यसि ।
ज्येष्ठः पुत्रोसि पञ्चानां साहाय्यं कुरु पुत्रक १७
वैशंपायन उवाच ।
पृथयाप्येवमुक्तस्तु प्रणम्यैव वचोऽब्रवीत् ।
यथा हि रावणो लोके इन्द्रजिच्च महाबलः ।
वर्ष्मवीर्यसमो लोके विशिष्टश्चाभवं नृषु ॥ १८
कृत्यकाल उपस्थास्ये पितॄनिति घटोत्कचः ।
आमन्त्र्य रक्षसां श्रेष्ठः प्रतस्थे चोत्तरां दिशम् १९
स हि सृष्टो भगवता शक्तिहेतोर्महात्मना ।
कर्णस्याप्रतिवीर्यस्य प्रतियोद्धा महारथः ॥ २०
'भीम उवाच ।
सह वासो मया जीर्णस्त्वया कमलपालिके ।

विकचः केशहीनः ॥ १२ ॥ घटोहं घटवद्वितर्क्यं आस्यं तदुपलक्षितं शिरः यस्य स घटोहास्यः सचासावुत्कचश्च घटोहास्योत्कचः । घटोऽहमुत्कचोऽस्मीति मातरं सोऽभ्यभाषत इति घ. ङ. पाठः ॥ १३ ॥ आत्मनित्यः स्ववशः ॥ १४ ॥ ऊनसप्तत्युत्तरशततमोऽध्यायः ॥ १६९ ॥

पुनर्द्रक्ष्यसि राज्यस्थानित्यभापत तां तदा ॥२१
हिडिम्बोवाच ।
यदा मां संस्मरेः कान्त रिरंसू रहसि प्रभो ।
तदा तव वशं भूय आगन्तास्म्याशु भारत॥२२
इत्युक्त्वा सा जगामाशु भावमासज्य पाण्डवे ।
हिडिम्बा समयं स्मृत्वा स्वां गतिं प्रत्यपद्यत२३

॥ इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि ऊनसप्तत्युत्तरशततमोऽध्यायः ॥ १६९ ॥

---

## सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

वने चरतां पाण्डवानां व्यासेन सान्त्वनं एकचक्रानगर्यां ब्राह्मणगृहे स्थापनं च ॥ १ ॥

'वैशंपायन उवाच ।
ततस्ते पाण्डवाः सर्वे शालिहोत्राश्रमे तदा ।
पूजितास्तेन वन्येन तमामन्त्र्य महामुनिम् ॥ १
जटाः कृत्वाऽऽत्मनः सर्वे वल्कलाजिनवाससः ।
कुन्त्या सह महात्मानो बिभ्रतस्तापसं वपुः ॥ २
ब्राह्मं वेदमधीयाना वेदाङ्गानि च सर्वशः ।
नीतिशास्त्रं च धर्मज्ञा न्यायज्ञानं च पाण्डवाः ३
शालिहोत्रप्रसादेन लब्ध्वा प्रीतिमवाप्य च ।'
ते वनेन वनं गत्वा घ्नन्तो मृगगणान्बहून् ।
अपक्रम्य ययू राजंस्त्वरमाणा महारथाः ॥ ४
मत्स्यांस्त्रिगर्तान्पाञ्चालान्कीचकानन्तरेण च ।
रमणीयान्वनोद्देशान्प्रेक्षमाणाः सरांसि च ॥ ५
क्वचिद्वहन्तो जननीं त्वरमाणा महारथाः ।
'क्वचिच्छ्रान्ताश्च कान्तारे क्वचित्तिष्ठन्ति हर्षिताः'॥
क्वचिच्छन्देन गच्छन्तस्ते जग्मुः प्रसभं पुनः ।
पथि द्वैपायनं सर्वे ददृशुः स्वपितामहम् ॥ ७
तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं तदा ।
तस्थुः प्राञ्जलयः सर्वे सह मात्रा परन्तपाः ॥८
व्यास उवाच ।
तदाश्रमान्निर्गमनं मया ज्ञातं नरर्षभाः ।
घटोत्कचस्य चोत्पत्तिं ज्ञात्वा प्रीतिरवर्धत ॥ ९
इदं नगरमभ्याशे रमणीयं निरामयम् ।
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ॥ १०
वैशंपायन उवाच ।
एवं स तान्समाश्वास्य व्यासः पार्थानरिन्दमान् ।
एकचक्रामभिगतां कुन्तीमाश्वासयत्प्रभुः ॥ ११
श्रीव्यास उवाच ।
कुर्यान्न केवलं धर्मं दुष्कृतं च तथा नरः ।
सुकृतं दुष्कृतं लोके न कर्ता नास्ति कश्चन ॥१२
अवश्यं लभते कर्ता फलं वै पुण्यपापयोः ।
दुष्कृतस्य फलेनैव प्राप्तं व्यसनमुत्तमम् ॥ १३
तस्मान्माधवि मानार्हे मा च शोके मनः कृथाः।
वैशंपायन उवाच ।
एवमुक्त्वा निवेश्यैनान्ब्राह्मणस्य निवेशने ।
जगाम भगवान्व्यासो यथाकाममृषिः प्रभुः॥१५

॥ इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

॥ समाप्तं हिडिम्बवधपर्व ॥

# ( अथ बकवधपर्व ॥ १० ॥ )

## एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

एकचक्रायां भिक्षामटतः पाण्डवान्दृष्ट्वा पौराणां वितर्कः ॥ १ ॥ कुम्भकाराद्भीमस्य महत्तरपात्रलाभः ॥ २ ॥ सभार्यस्य तद्गृहस्वामिनो ब्राह्मणस्य क्रन्दितं श्रुतवत्याः कुन्त्याः भीमानुमत्या ब्राह्मणान्तर्गृहप्रवेशः ॥ ३ ॥ ब्राह्मणप्रलापः ॥ ४ ॥

जनमेजय उवाच ।

एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ।
अत ऊर्ध्वं द्विजश्रेष्ठ किमकुर्वत पाण्डवाः ॥ १

वैशंपायन उवाच ।

एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ।
ऊषुर्नातिचिरं कालं ब्राह्मणस्य निवेशने ॥ २
रमणीयानि पश्यन्तो वनानि विविधानि च ।
पार्थिवानपि चोद्देशान्सरितश्च सरांसि च ॥ ३
चेरुर्भैक्षं तदा ते तु सर्व एव विशांपते ।
'युधिष्ठिरं च कुन्तीं च चिन्तयन्त उपासते ॥ ४
भैक्षं चरन्तस्तु तदा जटिला ब्रह्मचारिणः ।
बभूवुर्नागराणां च गुणैः संप्रियदर्शनाः ॥ ५

नागरा ऊचुः ।

दर्शनीया द्विजाः शुभ्रा देवगर्भोपमाः शुभाः ।
भैक्षानर्हाश्च राज्यार्हाः सुकुमारास्तपस्विनः ॥ ६
नैते यथार्थतो विप्राः सुकुमारास्तपस्विनः ।
चरन्ति भूमौ प्रच्छन्नाः कस्माच्चित्कारणादिह ॥ ७
सर्वलक्षणसंपन्ना भैक्षं नार्हन्ति नित्यशः ।
कार्यार्थिनश्चरन्तीति तर्कयन्त इति ब्रुवन् ॥ ८
बन्धूनामागमान्नित्यमुपचारैस्तु नागराः ।
भाजनानि च पूर्णानि भक्ष्यभोज्यैरकारयन् ॥ ९
मौनव्रतेन संयुक्ता भैक्षं गृह्णन्ति पाण्डवाः ।
माता चिरगतान्ज्ञात्वा शोचन्ती पाण्डवान्प्रति ॥
दुःखाश्रुपूर्णनयना लिखन्त्यास्ते महीतलम् ।
भिक्षित्वा द्विजगेहेषु चिन्तयन्तश्च मातरम् ॥ ११
त्वरमाणा निवर्तन्ते मातृगौरवयन्त्रिताः ।
मात्रे निवेदयन्ति स्म कुन्त्यै भैक्षं दिवानिशम् १२
सर्वं संपूर्णभैक्षान्नं मातृदत्तं पृथक्पृथक् ।
विभज्याभुञ्जतेष्टं ते यथाभागं पृथक्पृथक् ॥ १३
अर्धं स्म भुञ्जते पञ्च सह मात्रा परन्तपाः ।
अर्धं सर्वस्य भैक्षस्य भीमो भुङ्क्ते महाबलः ॥ १४
स नाशितश्च भवति कल्याणान्नभुजिः पुरा ।
स वैवर्ण्यं च कार्श्यं च जगामातृप्तिकारितम् ॥ १५
आज्यबिन्दुर्यथा वह्नौ महति ज्वलिते भवेत् ।
तथार्धभागं भीमस्य भिक्षान्नस्य नरोत्तम ॥ १६
तथैव वसतां तत्र तेषां राजन्महात्मनाम् ।
अतिचक्राम सुमहान्कालोऽथ भरतर्षभ ॥ १७
भीमोऽपि क्रीडयित्वाथ मिथो ब्राह्मणबन्धुषु ।
कुम्भकारेण संबन्धाल्लेभे पात्रं महत्तरम् ॥ १८
कुम्भकारोऽददात्पात्रं महत्कृत्वातिमात्रकम् ।
प्रहसन्भीमसेनाय विस्मितस्तस्य कर्मणा ॥ १९
तस्याद्भुतं कर्म कुर्वन्मृद्भारं महदाददे ।
मृद्भारैः शतसाहस्रैः कुम्भकारमतोषयत् ॥ २०
चक्रे चक्रे च मृद्भाण्डान्सततं भैक्षमाचरन् ।
तदादायागतं दृष्ट्वा हसन्ति प्रहसन्ति च ॥ २१
भक्ष्यभोज्यानि विविधान्यादाय प्रक्षिपन्ति च ।
एवमेव सदा भुक्त्वा मात्रे वदति वै रहः ।
न चाशितोऽस्मि भवति कल्याणान्नभृतः पुरा ॥'
ततः कदाचिद्भैक्षाय गतास्ते पुरुषर्षभाः ।
संगत्य भीमसेनस्तु तत्रास्ते पृथया सह ॥ २३
अथार्तिजं महाशब्दं ब्राह्मणस्य निवेशने ।
भृशमुत्पतितं घोरं कुन्ती शुश्राव भारत ॥ २४
रोरूयमाणांस्तान्दृष्ट्वा परिदेवयतश्च सा ।
कारुण्यात्साधुभावाच्च कुन्ती राजन्न चक्षमे ॥ २५
मथ्यमानेव दुःखेन हृदयेन पृथा तदा ।
उवाच भीमं कल्याणी कृपान्वितमिदं वचः ॥ २६
वसामः सुसुखं पुत्र ब्राह्मणस्य निवेशने ।
अज्ञाता धार्तराष्ट्रस्य सत्कृता वीतमन्यवः ॥ २७

सा चिन्तये सदा पुत्र ब्राह्मणस्यास्य किं न्वहम्।।
कदा प्रियं करिष्यामि यत्कुर्युरुषिताः सुखम्।।२८
एतावान्पुरुषस्तात कृतं यस्मिन्न नश्यति ।
यावच्च कुर्यादन्योऽस्य कुर्यादभ्यधिकं ततः ।।२९
तदिदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवम् ।
न तत्र यदि साहाय्यं कुर्याम सुकृतं भवेत् ।।३०
भीमसेन उवाच ।
ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितम् ।
विदित्वा व्यवसिष्यामि यद्यपि स्यात्सुदुष्करम्३१
वैशंपायन उवाच ।
एवं तौ कथयन्तौ च भूयः शुश्रुवतुः स्वनम् ।
आर्तिजं तस्य विप्रस्य सभार्यस्य विशांपते ।। ३२
अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः ।
विवेश त्वरिता कुन्ती बद्धवत्सेव सौरभी ।। ३३
ततस्तं ब्राह्मणं तत्र भार्यया च सुतेन च ।
दुहित्रा चैव सहितं ददर्श विकृताननम् ।। ३४
ब्राह्मण उवाच ।
धिगिदं जीवितं लोके गतसारमनर्थकम् ।
दुःखमूलं पराधीनं भृशमप्रियभागि च ।। ३५
जीविते परमं दुःखं जीविते परमो ज्वरः ।
जीविते वर्तमानस्य द्वन्द्वानामागमो ध्रुवः ।। ३६
आत्मा ह्येको हि धर्मार्थौ कामं चैव निषेवते ।
एतैश्च विप्रयोगोऽपि दुःखं परमनन्तकम् ।। ३७
आहुः केचित्परं मोक्षं स च नास्ति कथंचन ।
अर्थप्राप्तौ तु नरकः कृत्स्न एवोपपद्यते ।। ३८
अर्थेप्सुता परं दुःखमर्थप्राप्तौ ततोऽधिकम् ।
जातस्नेहस्य चार्थेषु विप्रयोगे महत्तरम् ।। ३९
'यावन्तो यस्य संयोगा द्रव्यैरिष्टैर्भवन्त्युत ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ।।४०
तदिदं जीवितं प्राप्य अल्पकालं महाभयम् ।
त्यागो हि न मया प्राप्तो भार्यया सहितेन च।।'
न हि योगं प्रपश्यामि येन मुच्येयमापदः ।
पुत्रदारेण वा सार्धं प्राद्रवेयमनामयम् ।। ४२

योगमुपायम्।। ४२ ।। एकसप्तत्यधिकशततमोऽध्यायः ।।१७१।।

यतितं वै मया पूर्वं वेत्थ ब्राह्मणि तत्तथा ।
क्षेमं यतस्ततो गन्तुं त्वया तु मम न श्रुतम्।।४३
इह जाता विवृद्धाऽसि पिता माता ममेति वै ।
उक्तवत्यसि दुर्मेधे याच्यमाना मयाऽसकृत्।।४४
स्वर्गतोऽपि पिता वृद्धस्तथा माता चिरं तव ।
बान्धवा भूतपूर्वाश्च तत्र वासे तु का रतिः।। ४५
'न भोजनं विरुद्धं स्यान्न स्त्रीदेशो निबन्धनः ।
सुदूरमपि तं देशं व्रजेद्गरुडहंसवत् ।।' ४६
सोऽयं ते बन्धुकामाया अशृण्वन्त्या वचो मम ।
बन्धुप्रणाशः संप्राप्तो भृशं दुःखकरो मम ।। ४७
अथवा मद्विनाशो यं न हि शक्ष्यामि कंचन ।
परित्यक्तुमहं बन्धुं स्वयं जीवन्नृशंसवत् ।। ४८
सहधर्मचरीं दान्तां नित्यं मातृसमां मम ।
सखायं विहितां देवैर्नित्यं परमिकां गतिम्।।४९
पित्रा मात्रा च विहितां सदा गार्हस्थ्यभागिनीम्
वरयित्वा यथान्यायं मन्त्रवत्परिणीय च ।। ५०
कुलीनां शीलसंपन्नामपत्यजननीमपि ।
त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीम्।।५१
परित्यक्तुं न शक्ष्यामि भार्यां नित्यमनुव्रताम् ।
कुत एव परित्यक्तुं सुतां शक्ष्याम्यहं स्वयम्।।५२
बालामप्राप्तवयसमजातव्यञ्जनाकृतिम् ।
भर्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना।।५३
यया दौहित्रजाँल्लोकानाशंसे पितृभिः सह ।
स्वयमुत्पाद्य तां बालां कथमुत्स्रष्टुमुत्सहे ।। ५४
मन्यन्ते केचिदधिकं स्नेहं पुत्रे पितुर्नराः ।
कन्यायां केचिदपरे मम तुल्यावुभौ स्मृतौ ।।५५
यस्यां लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखम्।
अपापां तामहं बालां कथमुत्स्रष्टुमुत्सहे ।। ५६
'कुत एव परित्यक्तुं सुतं शक्ष्याम्यहं स्वयम् ।
प्रार्थयेयं परां प्रीतिं यस्मिन्स्वर्गफलानि च ।। ५७
यस्य जातस्य पितरो मुखं दृष्ट्वा दिवं गताः ।
अहं मुक्तः पितृऋणाद्यस्य जातस्य तेजसा ।।५८
दयितं मे कथं बालमहं त्यक्तुमिहोत्सहे ।
तमहं ज्येष्ठपुत्रं मे कुलनिर्हारकं विभुम् ।। ५९

मम पिण्डोदकनिधिं कथं त्यक्ष्यामि पुत्रकम् ।
त्यागोऽयं मम संप्राप्तो मम वा मे सुतस्य वा॥६०
तव वा तव पुत्र्या वा अत्र वासस्य तत्फलम् ।
न शृणोषि वचो मह्यं तत्फलं भुङ्क्ष्व भामिनि॥६१
अथवाहं न शक्ष्यामि स्वयं मर्तुं सुतं मम ।
एकं त्यक्तुं न शक्नोमि भवतीं च सुतामपि ॥६२
अथ मद्रक्षणार्थं वा न हि शक्ष्यामि कंचन ।
परित्यक्तुमहं बन्धुं स्वयं जीवन्नृशंसवत् ॥ ६३
आत्मानमपि चोत्सृज्य गते प्रेतवशं मयि ।'
त्यक्ता ह्येते मया व्यक्तं नेह शक्ष्यन्ति जीवितुम्॥
एषां चान्यतमत्यागो नृशंसो गर्हितो बुधैः ।
आत्मत्यागे कृते चेमे मरिष्यन्ति मया विना६५
स कृच्छ्रामहमापन्नो न शक्तस्तर्तुमापदम् ।
अहो धिक्कां गतिं त्वद्य गमिष्यामि सबान्धवः ।
सर्वैः सह मृतं श्रेयो न च मे जीवितुं क्षमम्॥६६

॥ इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

## द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

ब्राह्मणं प्रति तत्पत्नीवाक्यम् ॥ १ ॥

ब्राह्मण्युवाच ।
न सन्तापस्त्वया कार्यः प्राकृतेनेव कर्हिचित् ।
न हि सन्तापकालोऽयं वैद्यस्य तव विद्यते ॥ १
अवश्यं निधनं सर्वैर्गन्तव्यमिह मानवैः ।
अवश्यभाविन्यर्थे वै संतापो नेह विद्यते ॥ २
भार्या पुत्रोऽथ दुहिता सर्वमात्मार्थमिष्यते ।
व्यथां जहि सुबुद्ध्या त्वं स्वयं यास्यामि तत्र च ३
एतद्धि परमं नार्याः कार्यं लोके सनातनम् ।
प्राणानपि परित्यज्य यद्भर्तुर्हितमाचरेत् ॥ ४
तच्च तत्र कृतं कर्म तवापीदं सुखावहम् ।
भवत्यमुत्र चाक्षय्यं लोकेऽस्मिंश्च यशस्करम् ॥५
एष चैव गुरुर्धर्मो यं प्रवक्ष्याम्यहं तव ।
अर्थश्च तव धर्मश्च भूयानत्र प्रदृश्यते ॥ ६
यदर्थमिष्यते भार्या प्राप्तः सोऽर्थस्त्वया मयि ।
कन्या चैका कुमारश्च कृताहमनृणा त्वया ॥ ७
समर्थः पोषणे चासि सुतयो रक्षणे तथा ।
न त्वहं सुतयोः शक्ता तथा रक्षणपोषणे ॥ ८
मम हि त्वद्विहीनायाः सर्वप्राणधनेश्वर ।
कथं स्यातां सुतौ बालौ भरेयं च कथं त्वहम्॥९
कथं हि विधवाऽनाथा बालपुत्रा विना त्वया ।
मिथुनं जीवयिष्यामि स्थिता साधुगते पथि॥१०

वैद्यस्य विद्यावतः ॥ १ ॥

अहं कृतावलेपैश्च प्रार्थ्यमानामिमां सुताम् ।
अयुक्तैस्तव संबन्धे कथं शक्ष्यामि रक्षितुम् ॥११
उत्सृष्टमामिषं भूमौ प्रार्थयन्ति यथा खगाः ।
प्रार्थयन्ति जनाः सर्वे पतिहीनां तथा स्त्रियम् १२
साऽहं विचाल्यमाना वै प्रार्थ्यमाना दुरात्मभिः ।
स्थातुं पथि न शक्ष्यामि सज्जनेष्टे द्विजोत्तम १३
'स्त्रीजन्म गर्हितं नाथ लोके दुष्टजनाकुले ।
मातापित्रोर्वशे कन्या प्रौढा भर्तृवशे तथा ॥१४
अभावे चानयोः पुत्रे स्वतन्त्रा स्त्री विगर्हिता १५
अनाथत्वं स्त्रियो द्वारं दुष्टानां विवृतं हि तत् ।
वस्त्रखण्डं घृताक्तं हि यथा संकृष्यते श्वभिः ॥'१६
कथं तव कुलस्यैकमिमं बालमनागसम् ।
पितृपैतामहे मार्गे नियोक्तुमहमुत्सहे ॥ १७
कथं शक्ष्यामि बालेऽस्मिन्गुणानाधातुमीप्सितान्।
अनाथे सर्वतो लुप्ते यथा त्वं धर्मदर्शिवान् ॥१८
इमामपि च ते बालामनाथां परिभूय माम् ।
अनर्हाः प्रार्थयिष्यन्ति शूद्रा वेदश्रुतिं यथा ॥१९
तां चेदहं न दित्सेयं सद्गुणैरुपबृंहिताम् ।
प्रमथ्यैनां हरेयुस्ते हविर्ध्वाङ्क्षा इवाध्वरात् ॥ २०
संप्रेक्षमाणा पुत्रीं ते नानुरूपमिवात्मनः ।
अनर्हवशमापन्नामिमां चापि सुतां तव ॥ २१
अवज्ञाता च लोकेषु तथात्मानमजानती ।

अवलिप्तैर्नरैर्ब्रह्मन्मरिष्यामि न संशयः ॥ २२
तौ च हीनौ मया बालौ त्वया चैव तथात्मजौ ।
विनश्येतां न सन्देहो मत्स्याविव जलक्षये ॥२३
त्रितयं सर्वथाप्येवं विनशिष्यत्यसंशयम् ।
त्वया विहीनं तस्मात्त्वं मां परित्यक्तुमर्हसि ॥२४
व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परा गतिः ।
ननु ब्रह्मन्सपुत्राणामिति धर्मविदो विदुः ॥ २५
'अनिष्टमिह पुत्राणां विषये परिवर्तितुम् ।
हरिद्राञ्जनपुष्पादिसौमङ्गल्ययुता सती ॥ २६
मरणं याति या भर्तुस्तद्दत्तजलपायिनी ।
भर्तृपादार्पितमनाः सा याति गिरिजापदम् ॥२७
गिरिजायाः सखी भूत्वा मोदते नगकन्यया ।
मितं ददाति हि पिता मितं माता मितं सुतः ॥२८
अमितस्य हि दातारं का पतिं नाभिनन्दति ।
आश्रमाश्चाग्निसंस्कारा जपहोमव्रतानि च ॥ २९
स्त्रीणां नैते विधातव्या विना पतिमनिन्दितम् ।
क्षमा शौचमनाहारमेतावद्विहितं स्त्रियाः ॥' ३०
परित्यक्तः सुतश्चायं दुहितेयं तथा मया ।
बान्धवाश्च परित्यक्तास्त्वदर्थं जीवितं च मे ॥३१
यज्ञैस्तपोभिर्नियमैर्दानैश्च विविधैस्तथा ।
विशिष्यते स्त्रिया भर्तुर्नित्यं प्रियहिते स्थितिः ३२
तदिदं यच्चिकीर्षामि धर्मं परमसंमतम् ।
इष्टं चैव हितं चैव तव चैव कुलस्य च ॥ ३३
इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः ।
आपद्धर्मप्रमोक्षाय भार्या चापि सतां मतम् ॥३४
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ३५
दृष्टादृष्टफलार्थं हि भार्या पुत्रो धनं गृहम् ।
सर्वमेतद्विधातव्यं बुधानामेष निश्चयः ॥ ३६
एकतो वा कुलं कृत्स्नमात्मा वा कुलवर्धनः ।
'उभयोः कोधिको विद्वन्नात्मा चैवाधिकः कुलात्
आत्मनो विद्यमानत्वाद्भुवनानि चतुर्दश ।
विद्यन्ते द्विजशार्दूल आत्मा रक्ष्यस्ततस्त्वया ॥३८
आत्मन्यविद्यमाने चेदस्य नास्तीह किंचन ।
एतज्जगदिदं सर्वमात्मना न समं किल ॥' ३९
स कुरुष्व मया कार्यं तारयात्मानमात्मना ।
अनुजानीहि मामार्य सुतौ मे परिपालय ॥ ४०
अवध्याः स्त्रिय इत्याहुर्धर्मज्ञा धर्मनिश्चये ।
धर्मज्ञान्राक्षसानाहुर्न हन्यात्स च मामपि ॥ ४१
निःसंशयं वधः पुंसां स्त्रीणां संशयितो वधः ।
अतो मामेव धर्मज्ञ प्रस्थापयितुमर्हसि ॥ ४२
भुक्तं प्रियाण्यवाप्तानि धर्मश्च चरितो मया ।
'त्वच्छुश्रूषणसंभूता कीर्तिश्चाप्यतुला मम ।'
त्वत्प्रसूतिः प्रिया प्राप्ता न मां तप्स्यत्यजीवितं ४३
जातपुत्रा च वृद्धा च प्रियकामा च ते सदा ।
समीक्ष्यैतदहं सर्वं व्यवसायं करोम्यतः ॥ ४४
उत्सृज्यापि हि मामार्य प्राप्स्यस्यन्यामपि स्त्रियम्
ततः प्रतिष्ठितो धर्मो भविष्यति पुनस्तव ॥ ४५
न चाप्यधर्मः कल्याण बहुपत्नीकता नृणाम् ।
स्त्रीणामधर्मः सुमहान्भर्तुः पूर्वस्य लङ्घने ॥ ४६
एतत्सर्वं समीक्ष्य त्वमात्मत्यागं च गर्हितम् ।
आत्मानं तारयाद्याशु कुलं चेमौ च दारकौ ॥४७
वैशंपायन उवाच ।
एवमुक्तस्तया भर्ता तां समालिङ्ग्य भारत ।
मुमोच बाष्पं शनकैः सभार्यो भृशदुःखितः ॥४८
'मैवं वद त्वं कल्याणि तिष्ठ चेह सुमध्यमे ।
न तु भार्यां त्यजेत्प्राज्ञः पुत्रान्वापि कदाचन ॥४९
विशेषतः स्त्रियं रक्षेत्पुरुषो बुद्धिमानिह ।
त्यक्त्वा तु पुरुषो जीवेन्न हातव्यानिमान्सदा ।
न वेत्ति कामं धर्मं च अर्थं मोक्षं च तत्त्वतः ॥'५०

॥ इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

परा व्युष्टिर्महद्भाग्यम् ॥२५॥ त्वत् त्वत्तः प्रसूतिः संततिः । अ- जीवितम् मरणं ॥४३॥ द्विसप्तत्यधिकशततमोऽध्यायः ॥१७२॥

## त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

ब्राह्मणं प्रति तत्कन्यावाक्यम् ॥ १ ॥ बालस्य पुत्रस्य वचनेन पित्रोः किंचिद्धर्षसमये कुन्त्यास्तत्समीपे गमनम् ॥ २ ॥

वैशंपायन उवाच ।

तयोर्दुःखितयोर्वाक्यमतिमात्रं निशम्य तु ।
ततो दुःखपरीताङ्गी कन्या तावभ्यभाषत ॥ १
किमेवं भृशदुःखार्तौ रोरूयेतामनाथवत् ।
ममापि श्रूयतां वाक्यं श्रुत्वा च क्रियतां क्षमम् २
धर्मतोऽहं परित्याज्या युवयोर्नात्र संशयः ।
त्यक्तव्यां मां परित्यज्य त्राहि सर्वं मयैकया ॥३
इत्यर्थमिष्यतेऽपत्यं तारयिष्यति मामिति ।
अस्मिन्नुपस्थिते काले तरध्वं प्लववन्मया ॥ ४
इह वा तारयेद्दुर्गादुत वा प्रेत्य भारत ।
सर्वथा तारयेत्पुत्रः पुत्र इत्युच्यते बुधैः ॥ ५
आकाङ्क्षन्ते च दौहित्रान्मयि नित्यं पितामहाः ।
तत्स्वयं वै परित्रास्ये रक्षन्ती जीवितं पितुः ॥ ६
भ्राता च मम बालोऽयं गते लोकममुं त्वयि ।
अचिरेणैव कालेन विनश्येत न संशयः ॥ ७
तातेपि हि गते स्वर्गं विनष्टे च ममानुजे ।
पिण्डः पितॄणां व्युच्छिद्येत्तत्तेषां विप्रियं भवेत् ८
पित्रा त्यक्ता तथा मात्रा भ्रात्रा चाहमसंशयम् ।
दुःखाद्दुःखतरं प्राप्य म्रियेयमतथोचिताम् ॥ ९
त्वयि त्वरोगे निर्मुक्ते माता भ्राता च मे शिशुः ।
सन्तानश्चैव पिण्डश्च प्रतिष्ठास्यत्यसंशयम् ॥ १०
आत्मा पुत्रः सखी भार्या कृच्छ्रं तु दुहिता किल ।
स कृच्छ्रान्मोचयात्मानं मां च धर्मे नियोजय॥११
अनाथा कृपणा बाला यत्र क्वचन गामिनी ।
भविष्यामि त्वया तात विहीना कृपणा सदा॥१२
अथवाहं करिष्यामि कुलस्यास्य विमोचनम् ।
फलसंस्था भविष्यामि कृत्वा कर्म सुदुष्करम्॥१३
अथवा यास्यसे तत्र त्यक्त्वा मां द्विजसत्तम ।
पीडिताऽहं भविष्यामि तदवेक्षस्व मामपि ॥१४
तदस्मदर्थं धर्मार्थं प्रसवार्थं च सत्तम ।
आत्मानं परिरक्षस्व त्यक्तव्यां मां च संत्यज॥१५
अवश्यकरणीये च मा त्वां कालोऽत्यगादयम् ।
किं त्वतः परमं दुःखं यद्वयं स्वर्गते त्वयि ॥ १६
याचमानाः परादन्नं परिधावेमहि श्ववत् ।
त्वयि त्वरोगे निर्मुक्ते क्लेशादस्मात्सबान्धवे ।
अमृतेव सती लोके भविष्यामि सुखान्विता १७
इतः प्रदाने देवाश्च पितरश्चेति नः श्रुतम् ।
त्वया दत्तेन तोयेन भविष्यति हिताय वै ॥ १८
'इत्येतदुभयं तात निशाम्य तव यद्धितम् ।
तद्व्यवस्य तथाम्बाया हितं स्वस्य सुतस्य च॥१९
मातापित्रोश्च पुत्रास्तु भवितारो गुणान्विताः ।
न तु पुत्रस्य पितरो पुनर्जातु भविष्यतः ॥' २०

वैशंपायन उवाच ।

एवं बहुविधं तस्या निशम्य परिदेवितम् ।
पिता माता च सा चैव कन्या प्ररुरुदुस्त्रयः॥२१
ततः प्ररुदितान्सर्वान्निशम्याथ सुतस्तदा ।
उत्फुल्लनयनो बालः कलमव्यक्तमब्रवीत् ॥ २२
मा पिता रुद मा मातर्मा स्वसस्त्विति चाब्रवीत् ।
प्रहसन्निव सर्वांस्तानेकैकमनुसर्पति ॥ २३
ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत् ।
अनेनाहं हनिष्यामि राक्षसं पुरुषादकम् ॥ २४

वैशंपायन उवाच ।

तथापि तेषां दुःखेन परीतानां निशम्य तत् ।
बालस्य वाक्यमव्यक्तं हर्षः समभवन्महान्॥२५
अयं काल इति ज्ञात्वा कुन्ती समुपसृत्य तान् ।
गतासूनमृतेनेव जीवयन्तीदमब्रवीत् ॥ २६

॥ इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

---

प्रसवार्थं वंशार्थम् ॥ १५ ॥ अमृतेव जीवन्तीव । इह लोके कीर्तेः सत्त्वात् ॥ १७ ॥ इतः प्रदाने अस्मिन् राक्षसाहाराय कन्यादाने दुर्दानत्वात् पितुर्दुर्मरणाच्च कन्याया देवाश्च पितरश्च हिताय नेति श्रुतं यद्यपि तथापि त्वया दत्तेन तोयेन तव मम च हिताय ते भविष्यन्तीत्यर्थः ॥ १८ ॥ कलं मधुरम् ॥ २२ ॥ त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

## चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

कुन्त्या रोदनकारणप्रश्ने ब्राह्मणेन बकवृत्तान्तकथनम् ॥ १ ॥

कुन्त्युवाच ।
कुतोमूलमिदं दुःखं ज्ञातुमिच्छामि तत्त्वतः ।
विदित्वाप्यपकर्षेयं शक्यं चेदपकर्षितुम् ॥ १

ब्राह्मण उवाच ।
उपपन्नं सतामेतद्यद्ब्रवीषि तपोधने ।
न तु दुःखमिदं शक्यं मानुषेण व्यपोहितुम् ॥२
'तथापि तत्त्वमाख्यास्ये दुःखस्यैतस्य संभवम् ।
शक्यं वा यदि वाऽशक्यं शृणु भद्रे यथातथम् ३
समीपे नगरस्यास्य बको वसति राक्षसः ।
इतो गव्यूतिमात्रेऽस्ति यमुनागह्वरे गुहा ॥ ४
तस्यां घोरः स वसति जिघांसुः पुरुषादकः ।
बकाभिधानो दुष्टात्मा राक्षसानां कुलाधमः ॥५
ईशो जनपदस्यास्य पुरस्य च महाबलः ।
पुष्टो मानुषमांसेन दुर्बुद्धिः पुरुषादकः ॥ ६
प्रबलः कामरूपी च राक्षसस्तु महाबलः ।
तेनोपसृष्टा नगरी वर्षमद्य त्रयोदशम् ॥ ७
तत्कृते परचक्राच्च भूतेभ्यश्च न नो भयम् ।
पुरुषादेन रौद्रेण भक्ष्यमाणा दुरात्मना ॥ ८
अनाथा नगरी नाथं त्रातारं नाधिगच्छति ।
गुहायां च वसंस्तत्र बाधते सततं जनम् ॥ ९
स्त्रियो बालांश्च वृद्धांश्च यूनश्चापि दुरात्मवान् ।
अत्र मन्त्रैश्च होमैश्च भोजनैश्च स राक्षसः ॥ १०
ईडितो द्विजमुख्यैश्च पूजितश्च दुरात्मवान् ।
यदा च सकलानेवं प्रमृद्‍नाति राक्षसः ॥ ११
अथैनं ब्राह्मणाः सर्वे समये समयोजयन् ।
मा स्म कामाद्वधी रक्षो दास्यामस्ते सदा वयं १२
पर्यायेण यथाकाममिह मांसोदनं प्रभो ।
अन्नं मांससमायुक्तं तिलचूर्णसमन्वितम् ॥ १३
सर्पिषा च समायुक्तं व्यञ्जनैश्च समन्वितम् ।
सूपांस्त्रीन्सतिलान्पिण्डाँल्लाजापूपसुरासवान् ॥१४
भृताभृतान्पानकुम्भान्स्थूलमांसं भृताभृतम् ।
वनमाहिषवाराहभाल्लूकं च भृताभृतम् ॥ १५
सर्पिःकुम्भांश्च विविधान्दधिकुम्भांस्तथा बहून् ।
सद्यःसिद्धसमायुक्तं तिलचूर्णैः समाकुलम् ॥१६
कुलाच्च पुरुषं चैकं बलीवर्दौ च कालकौ ।
प्राप्स्यसि त्वमसंक्रुद्धो रक्षोभागं प्रकल्पितम् ॥१७
तिष्ठेह समयेऽस्माकमित्ययाचन्त तं द्विजाः ।
बाढमित्येव तद्रक्षस्तद्वचः प्रत्यगृह्णत ॥ १८
परचक्राटवीकेभ्यो रक्षणं स करोति च ।
तस्मिन्भागे मुनिर्दिष्टे स्थितः स समये बली १९
एकैकं चैव पुरुषं संप्रयच्छन्ति वेतनम् ।
स वारो बहुभिर्वर्षैर्भवत्यसुकरो नरैः ॥ २०
तद्विमोक्षाय ये केचिद्यतन्ते पुरुषाः क्वचित् ।
सपुत्रदारांस्तान्हत्वा तद्रक्षो भक्षयत्युत ॥' २१
वेत्रकीयगृहे राजा नायं नयमिहास्थितः ।
उपायं तं न कुरुते यत्नादपि स मन्दधीः ।
अनामयं जनस्यास्य येन स्यादद्य शाश्वतम् ॥२२
एतदर्हा वयं नूनं वसामो दुर्बलस्य ये ।
विषये नित्यवास्तव्याः कुराजानमुपाश्रिताः ॥२३
ब्राह्मणाः कस्य वक्तव्याः कस्य वा च्छन्दचारिणः ।
गुणैरेते हि वत्स्यन्ति कामगाः पक्षिणो यथा २४
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
'राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ।
त्रयस्य संचयेनास्य ज्ञातीन्पुत्रांश्च तारयेत् ॥ २५
विपरीतं मया चेदं त्रयं सर्वमुपार्जितम् ।
तदिमामापदं प्राप्य भृशं तप्यामहे वयम् ॥ २६
सोऽयमस्माननुप्राप्तो वारः कुलविनाशनः ।
भोजनं पुरुषश्चैकः प्रदेयं वेतनं मया ॥ २७

---

वेत्रकीयगृहे स्थानविशेषे । इतोऽदूरे राजास्त्ययमिह नगरे नयं न आस्थितः । अस्य नगरस्यावेक्षां न करोतीत्यर्थः । स्वयं राक्षसं हन्तुमशक्तत्वात् । नायं नायमिहास्थित इति खपुस्तक-पाठः । नायं नायं बलिं पुनः पुनः प्रापय्येत्यर्थः । उपायमप्यन्यद्द्वारा न कुरुते यतो मन्दधीः ॥ २२ ॥ एतदर्हाः एतस्य दुःखस्य योग्याः ॥२३॥ चतुःसप्तत्यधिकशततमोऽध्यायः ॥१७४॥

न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित् ।
सुहृज्जनं प्रदातुं च न शक्ष्यामि कदाचन ॥ २८
गतिं चान्यां न पश्यामि तस्मान्मोक्षाय रक्षसः ।
सोऽहं दुःखार्णवे मग्नो महत्यसुकरे भृशम् ॥ २९
सहैवैतैर्गमिष्यामि बान्धवैरद्य राक्षसम् ।
ततो नः सहितान्क्षुद्रः सर्वानेवोपभोक्ष्यति ॥३०
'दुःखमूलमिदं भद्रे मयोक्तं प्रश्नतोऽनघे ॥' ३१

॥ इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

## पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

कुन्त्या बकं प्रति स्वपुत्रप्रेषणवचनम् ॥ १ ॥

कुन्त्युवाच ।
न विषादस्त्वया कार्यो भयादस्मात्कथंचन ।
उपायः परिदृष्टोऽत्र तस्मान्मोक्षाय रक्षसः ॥ १
'नैव स्वयं सपुत्रस्य गमनं तत्र रोचये ।'
एकस्तव सुतो बालः कन्या चैका तपस्विनी ।
न चैतयोस्तथा पत्न्या गमनं तव रोचये ॥ २
मम पञ्च सुता ब्रह्मंस्तेषामेको गमिष्यति ।
त्वदर्थं बलिमादाय तस्य पापस्य रक्षसः ॥ ३
ब्राह्मण उवाच ।
नाहमेतत्करिष्यामि जीवितार्थी कथंचन ।
ब्राह्मणस्यातिथेश्चैव स्वार्थे प्राणान्वियोजयन् ॥ ४
न त्वेतदकुलीनासु नाधर्मिष्ठासु विद्यते ।
यद्ब्राह्मणार्थे विसृजेदात्मानमपि चात्मजम् ॥ ५
आत्मनस्तु वधः श्रेयो बोद्धव्यमिति रोचते ।
ब्रह्मवध्याऽऽत्मवध्या वा श्रेयानात्मवधो मम ॥६
ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते ।
अबुद्धिपूर्वं कृत्वापि प्रत्यवायो हि विद्यते ॥ ७
न त्वहं वधमाकाङ्क्षे स्वयमेवात्मनः शुभे ।
परैः कृते वधे पापं न किंचिन्मयि विद्यते ॥ ८
अभिसंधौ कृते तस्मिन्ब्राह्मणस्य वधे मया ।
निष्कृतिं न प्रपश्यामि नृशंसं क्षुद्रमेव च ॥ ९
आगतस्य गृहं त्यागस्तथैव शरणार्थिनः ।
याचमानस्य च वधो नृशंसो गर्हितो बुधैः ॥१०
कुर्यान्न निन्दितं कर्म न नृशंसं कथंचन ।
इति पूर्वे महात्मान आपद्धर्मविदो विदुः ॥ ११
श्रेयांस्तु सहदारस्य विनाशोऽद्य मम स्वयम् ।
ब्राह्मणस्य वधं नाहमनुमंस्ये कदाचन ॥ १२
कुन्त्युवाच ।
ममाप्येषा मतिर्ब्रह्मन्विप्रा रक्ष्या इति स्थिरा ।
न चाप्यनिष्टः पुत्रो मे यदि पुत्रशतं भवेत् ॥१३
न चासौ राक्षसः शक्तो मम पुत्रविनाशने ।
वीर्यवान्मन्त्रसिद्धश्च तेजस्वी च सुतो मम ॥ १४
राक्षसाय च तत्सर्वं प्रापयिष्यति भोजनम् ।
मोक्षयिष्यति चात्मानमिति मे निश्चिता मतिः १५
समागताश्च वीरेण दृष्टपूर्वाश्च राक्षसाः ।
बलवन्तो महाकाया निहताश्चाप्यनेकशः ॥ १६
न त्विदं केषुचिद्ब्रह्मन्व्याहर्तव्यं कथंचन ।
विद्यार्थिनो हि मे पुत्रान्विप्रकुर्युः कुतूहलात् ॥१७
गुरुणा चाननुज्ञातो ग्राहयेद्यः सुतो मम ।
न स कुर्यात्तथा कार्यं विद्ययेति सतां मतम् १८
वैशंपायन उवाच ।
एवमुक्तस्तु पृथया स विप्रो भार्यया सह ।
हृष्टः संपूजयामास तद्वाक्यममृतोपमम् ॥ १९
ततः कुन्ती च विप्रश्च सहितावनिलात्मजम् ।
तमब्रूतां कुरुष्वेति स तथेत्यब्रवीच्च तौ ॥ २०

॥ इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

अभिसन्धौ अभिप्राये ॥ ९ ॥ विप्रकुर्युर्बाधेरन् ॥ १७ ॥ | पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

## षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

भिक्षादनार्थं गतानां युधिष्ठिरादीनां गृहं प्रत्यागमनम् ॥ १ ॥ भीमो बकं प्रति प्रेष्यत इति ज्ञातवतो युधिष्ठिरस्य संतापः ॥ २ ॥ भीमसेनप्रभावकथनेन कुन्त्या कृतं युधिष्ठिराश्वासनम् ॥ ३ ॥

वैशंपायन उवाच ।
करिष्य इति भीमेन प्रतिज्ञातेऽथ भारत ।
आजग्मुस्ते ततः सर्वे भैक्षमादाय पाण्डवाः ॥ १
'भीमसेनं ततो दृष्ट्वा आपूर्णवदनं तथा ।
बुबोध धर्मराजस्तु हृषितं भीममच्युतम् ॥ २
तोषस्य कारणं यत्तु मनसाऽचिन्तयद्गुरुः ।
स समीक्ष्य तदा राजन्योद्धुकामं युधिष्ठिरः ॥'३
आकारेणैव तं ज्ञात्वा पाण्डुपुत्रो युधिष्ठिरः ।
रहः समुपविश्यैकस्ततः पप्रच्छ मातरम् ॥ ४
किं चिकीर्षत्ययं कर्म भीमो भीमपराक्रमः ।
भवत्यनुमते कच्चित्स्वयं वा कर्तुमिच्छति ॥ ५
कुन्त्युवाच ।
ममैव वचनादेष करिष्यति परन्तपः ।
ब्राह्मणार्थे महत्कृत्यं मोक्षाय नगरस्य च ॥ ६
'बकाय कल्पितं पुत्र महान्तं बलिमुत्तमम् ।
भीमो भुनक्तु सुस्पष्टमप्येकाहं तपःसुत ॥' ७
युधिष्ठिर उवाच ।
किमिदं साहसं तीक्ष्णं भवत्या दुष्करं कृतम् ।
परित्यागं हि पुत्रस्य न प्रशंसन्ति साधवः ॥ ८
कथं परसुतस्यार्थे स्वसुतं त्यक्तुमिच्छसि ।
लोकवेदविरुद्धं हि पुत्रत्यागात्कृतं त्वया ॥ ९
यस्य बाहू समाश्रित्य सुखं सर्वे शयामहे ।
राज्यं चापहृतं क्षुद्रैराजिहीर्षामहे पुनः ॥ १०
यस्य दुर्योधनो वीर्यं चिन्तयन्नमितौजसः ।
न शेते रजनीः सर्वा दुःखाच्छकुनिना सह ॥ ११
यस्य वीरस्य वीर्येण मुक्ता जतुगृहाद्वयम् ।
अन्येभ्यश्चैव पापेभ्यो निहतश्च पुरोचनः ॥ १२
यस्य वीर्यं समाश्रित्य वसुपूर्णां वसुन्धराम् ।
इमां मन्यामहे प्राप्तां निहत्य धृतराष्ट्रजान् ॥ १३
तस्य व्यवसितस्त्यागो बुद्धिमास्थाय कां त्वया ।
कच्चिन्नु दुःखैर्बुद्धिस्ते विलुप्ता गतचेतसः ॥ १४
कुन्त्युवाच ।
युधिष्ठिर न संतापस्त्वया कार्यो वृकोदरे ।
न चायं बुद्धिदौर्बल्याद्व्यवसायः कृतो मया ॥ १५
'न च शोकेन बुद्धिः सा विलुप्ता गतचेतसः ।'
इह विप्रस्य भवने वयं पुत्र सुखोषिताः ।
अज्ञाता धार्तराष्ट्राणां सत्कृता वीतमन्यवः ॥ १६
तस्य प्रतिक्रिया पार्थ मयेयं प्रसमीक्षिता ।
एतावानेव पुरुषः कृतं यस्मिन्न नश्यति ॥ १७
यावच्च कुर्यादन्योऽस्य कुर्याद्बहुगुणं ततः ।
'ब्राह्मणार्थे महान्धर्मो जानामीत्थं वृकोदरे' ॥ १८
दृष्ट्वा भीमस्य विक्रान्तं तदा जतुगृहे महत् ।
हिडिम्बस्य वधाच्चैवं विश्वासो मे वृकोदरे ॥ १९
बाह्वोर्बलं हि भीमस्य नागायुतसमं महत् ।
येन यूयं गजप्रख्या निर्व्यूढा वारणावतात् ॥ २०
वृकोदरेण सदृशो बलेनान्यो न विद्यते ।
यो व्यतीयाद्युधि श्रेष्ठमपि वज्रधरं स्वयम् ॥ २१
जातमात्रः पुरा चैव ममाङ्कात्पतितो गिरौ ।
शरीरगौरवादस्य शिला गात्रैर्विचूर्णिता ॥ २२
तदहं प्रज्ञया ज्ञात्वा बलं भीमस्य पाण्डव ।
प्रतिकार्ये च विप्रस्य ततः कृतवती मतिम् ॥ २३
नेदं लोभान्न चाज्ञानान्न च मोहाद्विनिश्चितम् ।
बुद्धिपूर्वं तु धर्मस्य व्यवसायः कृतो मया ॥ २४
अर्थौ द्वावपि निष्पन्नौ युधिष्ठिर भविष्यतः ।
प्रतीकारश्च वासस्य धर्मश्च चरितो महान् ॥ २५
यो ब्राह्मणस्य साहाय्यं कुर्यादर्थेषु कर्हिचित् ।
क्षत्रियः स शुभाँल्लोकानाप्नुयादिति मे मतिः २६
क्षत्रियस्यैव कुर्वाणः क्षत्रियो वधमोक्षणम् ।
विपुलां कीर्तिमाप्नोति लोकेऽस्मिंश्च परत्र च ॥ २७
वैश्यस्यार्थे च साहाय्यं कुर्वाणः क्षत्रियो भुवि ।
स सर्वेष्वपि लोकेषु प्रजा रञ्जयते ध्रुवम् ॥ २८

मोक्षाय बकभयादिति शेषः ॥ ६ ॥ प्रतीकारः प्रत्युपकारः ॥ २५ ॥ षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

शूद्रं तु मोचयेद्राजा शरणार्थिनमागतम् ।
प्राप्नोतीह कुले जन्म सद्द्रव्ये राजपूजिते ॥ २९

एवं मां भगवान्व्यासः पुरा पौरवनन्दन ।
प्रोवाचासुकरप्रज्ञस्तस्मादेवं चिकीर्षितम् ॥ ३०

॥ इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

## सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

परेद्युः प्रातः ब्राह्मणेन दत्तमन्नं भुक्त्वा बकाय प्रापणीयं अन्नादिपूर्णं शकटमारुह्य बकवनं प्रति भीमस्य गमनम् ॥ १ ॥ तत्र भीमेन शकटस्थान्नभोजनम् ॥ २ ॥ अन्नं भुञ्जानं भीमं दृष्ट्वा क्रुद्धेन बकेन सह भीमस्य युद्धम् ॥ ३ ॥ बकवधः ॥४॥

युधिष्ठिर उवाच ।
उपपन्नमिदं मातस्त्वया यद्बुद्धिपूर्वकम् ।
आर्तस्य ब्राह्मणस्यैतदनुक्रोशादिदं कृतम् ॥ १
ध्रुवमेष्यति भीमोऽयं निहत्य पुरुषादकम् ।
सर्वथा ब्राह्मणस्यार्थे यदनुक्रोशवत्यसि ॥ २
यथा त्विदं न विन्देयुर्नरा नगरवासिनः ।
तथाऽयं ब्राह्मणो वाच्यः परिग्राह्यश्च यत्नतः ॥३
वैशंपायन उवाच ।
'युधिष्ठिरेण संमन्त्र्य ब्राह्मणार्थमरिन्दम ।
कुन्ती प्रविश्य तान्सर्वान्मन्त्रयामास भारत ॥ ४
अथ रात्र्यां व्यतीतायां भीमसेनो महाबलः ।
ब्राह्मणं समुपागम्य वचश्चेदमुवाच ह ॥ ५
आपदस्त्वां विमोक्ष्येऽहं सपुत्रं ब्राह्मण प्रियम्।
मा भैषी राक्षसात्तस्मान्मां ददातु बलिं भवान् ६
इह मामशितं कर्तुं प्रयतस्व सकृद्गृहे ।
अथात्मानं प्रादास्यामि तस्मै घोराय रक्षसे ॥ ७
त्वरध्वं किं विलम्बध्वे मा चिरं कुरुतानघाः ।
व्यवसेयं मनः प्राणैर्युष्मात्रक्षितुमद्य वै ॥ ८
वैशंपायन उवाच ।
एवमुक्तः स भीमेन ब्राह्मणो भरतर्षभ ।
सुहृदां तत्समाख्याय ददावन्नं सुसंस्कृतम् ॥ ९
पिशितोदनमाजह्रुरथास्मै पुरवासिनः ।
सघृतं सोपदंशं च सूपैर्नानाविधैः सह ॥ १०
तदाऽशित्वा भीमसेनो मांसानि विविधानि च ।
मोदकानि च मुख्यानि चित्रोदनचयान्बहून् ११
ततोऽपिबद्दधिघटान्सुबहून्द्रोणसंमितान् ।
तस्य भुक्तवतः पौरा यथावत्समुपार्जितान् ॥१२
उपजह्रुर्भृतं भागं समृद्धमनसस्तदा ।
ततो रात्र्यां व्यतीतायां सव्यञ्जनदधिप्लुतम् १३
समारुह्यान्नसंपूर्णं शकटं स वृकोदरः ।
प्रययौ तूर्यनिर्घोषैः पौरैश्च परिवारितः ॥ १४
आत्मानमेषोऽन्नभूतो राक्षसाय प्रदास्यति ।
तरुणोऽप्रतिरूपश्च दृढ औदरिको युवा ॥ १५
वाग्भिरेवंप्रकाराभिः स्तूयमानो वृकोदरः ।
चुचोद स बलीवर्दौ युक्तौ सर्वाङ्गकालकौ ॥१६
वादित्राणां प्रवादेन ततस्तं पुरुषादकम् ।
अभ्यगच्छत्सुसंहृष्टः सर्वत्र मनुजैर्वृतः ॥ १७
संप्राप्य स च तं देशमेकाकी समुपाययौ ।
पुरुषादभयाद्भीतस्तत्रैवासीज्जनव्रजः ॥ १८
स गत्वा दूरमध्वानं दक्षिणामभितो दिशम् ।
यथोपदिष्टमुद्देशे ददर्श विपुलं द्रुमम् ॥ १९
केशमज्जास्थिमेदोभिर्बाहूरुचरणैरपि ।
आर्द्रैः शुष्कैश्च संकीर्णमभितोऽथ वनस्पतिम्॥२०
गृध्रकङ्कबलच्छन्नं गोमायुगणसेवितम् ।
उग्रगन्धमचक्षुष्यं श्मशानमिव दारुणम् ॥ २१
तं प्रविश्य महावृक्षं चिन्तयामास वीर्यवान् ।
यावन्न पश्यते रक्षो बकाभिख्यं बलोत्तरम् ॥२२
आचितं विविधैर्भोज्यैरन्नैरुच्चावचैरिदम् ।
शकटं सूपसंपूर्णं यावद्द्रक्ष्यति राक्षसः ॥ २३
तावदेवेह भोक्ष्येऽहं दुर्लभं हि पुनर्भवेत् ।
विप्रकीर्येत सर्वं हि प्रयुद्धे मयि रक्षसा ॥ २४
अभोज्यं हि शवस्पर्शे निगृहीते बके भवेत् ।
स त्वेवं भीमकर्मा तु भीमसेनोऽभिलक्ष्य च २५
उपविश्य विविक्तेऽन्नं भुङ्क्ते स परमं परः ।

तं ततः सर्वतोऽपश्यन्द्रुमानारुह्य नागराः ॥२६
नारक्षो बलिमश्नीयादेवं बहु च मानवाः ।
भुङ्क्ते ब्राह्मणरूपेण बकोऽयमिति चाब्रुवन् ॥ २७
स तं हसति तेजस्वी तदन्नमुपभुज्य च ।'
आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली ।
आजुहाव ततो नाम्ना तदन्नमुपपादयन् ॥ २८
ततः स राक्षसः क्रुद्धो भीमस्य वचनात्तदा ।
आजगाम सुसंक्रुद्धो यत्र भीमो व्यवस्थितः॥२९
महाकायो महावेगो दारयन्निव मेदिनीम् ।
लोहिताक्षः करालश्च लोहितश्मश्रुमूर्धजः ॥ ३०
आकर्णाद्भिन्नवक्त्रश्च शङ्कुकर्णो विभीषणः ।
त्रिशिखां भ्रुकुटिं कृत्वा संदश्य दशनच्छदम् ३१
भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः ।
विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत् ॥ ३२
कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पितम् ।
पश्यतो मम दुर्बुद्धिर्यियासुर्यमसादनम् ॥ ३३
भीमसेनस्ततः श्रुत्वा प्रहसन्निव भारत ।
राक्षसं तमनादृत्य भुङ्क्त एव पराङ्मुखः ॥ ३४
रवं स भैरवं कृत्वा समुद्यम्य करावुभौ ।
अभ्यद्रवद्भीमसेनं जिघांसुः पुरुषादकः ॥ ३५
तथापि परिभूयैनं प्रेक्षमाणो वृकोदरः ।
राक्षसं भुङ्क्त एवान्नं पाण्डवः परवीरहा ॥ ३६
अमर्षेण तु संपूर्णः कुन्तीपुत्रं वृकोदरम् ।
जघान पृष्ठे पाणिभ्यामुभाभ्यां पृष्ठतः स्थितः ३७
तथा बलवता भीमः पाणिभ्यां भृशमाहतः ।
नैवावलोकयामास राक्षसं भुङ्क्त एव सः ॥ ३८
ततः स भूयः संक्रुद्धो वृक्षमादाय राक्षसः ।
ताडयिष्यंस्तदा भीमं पुनरभ्यद्रवद्बली ॥ ३९
क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्यवान् ।
सव्येन पाणिना भीमो दक्षिणेनाप्यभुङ्क्त ह ॥४०
'शकटान्नं ततो भुक्त्वा रक्षसः पाणिना सह ।
गृह्णन्नेव तदा वृक्षं निःशेषं पर्वतोपमम् ॥ ४१
भीमसेनो हसन्नेव भुक्त्वा त्यक्त्वा च राक्षसम् ।
पीत्वा दधिघटान्पूर्णान्घृतकुम्भाञ्शतं शतम् ४२

त्रिशिखां त्रिरेखाम् ॥ ३१ ॥

वार्युपस्पृश्य संहृष्टस्तस्थौ गिरिरिवापरः ।
भ्रामयन्तं महावृक्षमायान्तं भीमदर्शनम् ॥ ४३
दृष्ट्वोत्थायाहवे वीरः सिंहनादं व्यनादयत् ।
भुजवेगं तथाऽऽस्फोटं क्ष्वेलितं च महास्वनम् ४४
कृत्वाऽऽह्वयत संक्रुद्धो भीमसेनोऽथ राक्षसम् ।
उवाचाशनिशब्देन ध्वनिना भीषयन्निव ॥ ४५
भीम उवाच ।
बहुकालं सुपुष्टं ते शरीरं राक्षसाधम ।
द्विपच्चतुष्पन्मांसैश्च बहुभिश्चौदनैरपि ॥ ४६
मद्बाहुबलमाश्रित्य न त्वं भूयस्त्वशिष्यसि ।
अद्य मद्बाहुनिष्पिष्टो गमिष्यसि यमालयम्॥४७
अद्यप्रभृति स्वप्स्यन्ति वेत्रकीयनिवासिनः ।
निरुद्विग्नाः पुरस्यास्य कण्टके मृद्धृते मया ॥४८
अद्य युद्धे शरीरं ते कङ्कगोमायुवायसाः ।
मया हतस्य खादन्तु विकर्षन्तु च भूतले ॥ ४९
वैशंपायन उवाच ।
एवमुक्त्वा सुसंक्रुद्धः पार्थो बकजिघांसया ।
उपाधावद्बकश्चापि पार्थं पार्थिवसत्तम ॥ ५०
महाकायो महावेगो दारयन्निव मेदिनीम् ।
पिशङ्गरूपः पिङ्गाक्षो भीमसेनमभिद्रवत् ॥ ५१
त्रिशिखां भ्रुकुटीं कृत्वा संदश्य दशनच्छदम् ।
भृशं स भूयः संक्रुद्धो वृक्षमादाय राक्षसः ॥५२
ताडयिष्यंस्तदा भीमं तरसाऽभ्यद्रवद्बली ।
क्रुद्धेनाभिहतं वृक्षं प्रतिजग्राह लीलया ॥ ५३
सव्येन पाणिना भीमः प्रहसन्निव भारत ।
ततः स पुनरुद्यम्य वृक्षान्बहुविधान्बली ॥ ५४
प्राहिणोद्भीमसेनाय बकोऽपि बलवान्रणे ।
सर्वानपोहयद्वृक्षान्स्वस्य हस्तस्य शाखया ॥ ५५
तद्वृक्षयुद्धमभवद्वृक्षषण्डविनाशनम् ॥
महत्सुघोरं राजेन्द्र बकपाण्डवयोस्तदा ॥ ५६
नाम विश्राव्य स बकः समभिद्रुत्य पाण्डवम् ।
समयुध्यत तीव्रेण वेगेन पुरुषादकः ॥ ५७
तयोर्वेगेन महता पृथिवी समकम्पत ।
पादपांश्च महामात्रांश्चूर्णयामासतुः क्षणात् ॥५८

सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

द्रुतमागत्य पाणिभ्यां गृहीत्वा चैनमाक्षिपत् ।
आक्षिप्तो भीमसेनश्च पुनरेवोत्थितो हसन् ॥ ५९
आलिङ्ग्यापि बकं भीमो न्यहनद्वसुधातले ।
भीमो विसर्जयित्वैनं समाश्वसिहि राक्षस ॥ ६०
इत्युक्त्वा पुनरास्फोट्य उत्तिष्ठेति च सोऽब्रवीत् ।
समुत्पत्य ततः क्रुद्धो रूपं कृत्वा महत्तरम् ॥ ६१
विरूपः सहसा तस्थौ तर्जयित्वा वृकोदरम् ।
अहसद्भीमसेनोऽपि राक्षसं भीमदर्शनम् ॥ ६२
असौ गृहीत्वा पाणिभ्यां पृष्ठतश्च व्यवस्थितः ।
जानुभ्यां पीडयित्वाथ पातयामास भूतले ॥ ६३
पुनः क्रुद्धो विसृज्यैनं राक्षसं क्रोधजीवितम् ।
स्वां कटीमीषदुन्नम्य बाहू तस्य परामृशत् ॥ ६४
तस्य बाहू समादाय त्वरमाणो वृकोदरः ।
उत्क्षिप्य चावधूयैनं पातयन्बलवान्भुवि ॥ ६५
तं तु वामेन पादेन क्रुद्धो भीमपराक्रमः ।
उरस्येनं समाजघ्ने भीमस्तु पतितं भुवि ॥ ६६
व्यात्ताननेन घोरेण लम्बजिह्वेन रक्षसा ।
तेनाभिद्रुत्य भीमेन भीमो मूर्ध्नि समाहतः ॥ ६७
एवं निहन्यमानः स राक्षसेन बलीयसा ।
रोषेण महताऽऽविष्टो भीमो भीमपराक्रमः ॥ ६८
गृहीत्वा मध्यमुत्क्षिप्य बली जग्राह राक्षसम् ।
तावन्योन्यं पीडयन्तौ पुरुषादवृकोदरौ ॥ ६९
मत्ताविव महानागावन्योन्यं विचकर्षतुः ॥ ७०
बाहुविक्षेपशब्दैश्च भीमराक्षसयोस्तदा ।
वेत्रकीयपुरी सर्वा वित्रस्ता समपद्यत ॥' ७१
तयोर्वेगेन महता तत्र भूमिरकम्पत ।
पादपान्वीरुधश्चैव चूर्णयामासतू रयात् ॥ ७२
समागतौ च तौ वीरावन्योन्यवधकाङ्क्षिणौ ।
गिरिभिर्गिरिशृङ्गैश्च पाषाणैः पर्वतच्युतैः ॥ ७३
अन्योन्यं ताडयन्तौ तौ चूर्णयामासतुस्तदा ।
आयामविस्तराभ्यां च परितो योजनद्वयम् ॥ ७४
निर्महीरुहपाषाणतृणकुञ्जलतावलिम् ।
चक्रतुर्युद्धदुर्मत्तौ कूर्मपृष्ठोपमां महीम् ॥ ७५
मुहूर्तमेवं संयुध्य समं रक्षःकुरूद्वहौ ।
ततो रक्षोविनाशाय मतिं कृत्वा कुरूत्तमः ॥ ७६
दन्तान्कटकटीकृत्य दष्ट्वा च दशनच्छदम् ।
नेत्रे संवृत्य विकटं तिर्यक्प्रैक्षत राक्षसम् ॥ ७७
अथ तं लोलयित्वा तु भीमसेनो महाबलः ।
अगृह्णात्परिरभ्यैनं बाहुभ्यां परिरभ्य च ॥ ७८
जानुभ्यां पार्श्वयोः कुक्षौ पृष्ठे वक्षसि जघ्निवान् ।
भग्नोरुबाहुहृच्चैव विस्रंसद्देहबन्धनः ॥ ७९
प्रस्वेददीर्घनिश्वासो निर्यज्जीवाक्षितारकः ।
अजाण्डास्फोटनं कुर्वन्नाक्रोशंश्च श्वसञ्छनैः ॥ ८०
भूमौ निपत्य विलुठन्दण्डाहत इवोरगः ।
विस्फुरन्तं महाकायं परितो विचकर्ष ह ॥ ८१
विकृष्यमाणो वेगेन पाण्डवेन बलीयसा ।
समयुज्यत तीव्रेण श्रमेण पुरुषादकः ॥' ८२
हीयमानबलं रक्षः समीक्ष्य पुरुषर्षभः ।
निष्पिष्य भूमौ जानुभ्यां समाजघ्ने वृकोदरः ८३
ततोऽस्य जानुना पृष्ठमवपीड्य बलादिव ।
बाहुना परिजग्राह दक्षिणेन शिरोधराम् ॥ ८४
सव्येन च कटीदेशे गृह्य वाससि पाण्डवः ।
जानुन्यारोप्य तत्पृष्ठं महाशब्दं बभञ्ज ह ॥ ८५
ततोऽस्य रुधिरं वक्त्रात्प्रादुरासीद्विशांपते ।
भज्यमानस्य भीमेन तस्य घोरस्य रक्षसः ॥ ८६

॥ इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥

---

## अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

बकवधानन्तरं समागतानां तत्परिवाराणां भीमेन समयकरणम् ॥ १ ॥ नगरद्वारदेशे बकशरीरं निधाय ब्राह्मणगृहमागत्य भीमेन कुन्त्यादीन्प्रति बकवृत्तान्तकथनम् ॥ २ ॥ मृतबकदर्शनार्थं पौराणां गमनम् ॥ ३ ॥ ब्रह्ममहोत्सवकरणम् ॥ ४ ॥ बकवधेन पौराणां भीमसेवनम् ॥ ५ ॥

वैशंपायन उवाच ।
ततः स भग्नपार्श्वाङ्गो नदित्वा भैरवं रवम् ।
शैलराजप्रतीकाशो गतासुरभवद्बकः ॥ १
तेन शब्देन वित्रस्तो जनस्तस्याथ रक्षसः ।

निष्पपात गृहाद्राजन्सहैव परिचारिभिः ॥ २
'बकानुजस्तदा राजन्भीमं शरणमेयिवान् ।
ततस्तु निहतं दृष्ट्वा राक्षसेन्द्रं महाबलम् ।
राक्षसाः परमत्रस्ता भीमं शरणमाययुः ॥' ३
तान्भीतान्विगतज्ञानान्भीमः प्रहरतां वरः ।
सांत्वयामास बलवान्समये च न्यवेशयत् ॥ ४
न हिंस्या मानुषा भूयो युष्माभिरिति कर्हिचित् ।
हिंसतां हि वधः शीघ्रमेवमेव भवेदिति ॥ ५
तस्य तद्वचनं श्रुत्वा तानि रक्षांसि भारत ।
एवमस्त्विति तं प्राहुर्जगृहुः समयं च तम् ॥ ६
'सगणस्तु बकभ्राता प्राणमत्पाण्डवं तदा ।'
ततः प्रभृति रक्षांसि तत्र सौम्यानि भारत ।
नगरे प्रत्यदृश्यन्त नरैर्नगरवासिभिः ॥ ७
ततो भीमस्तमादाय गतासुं पुरुषादकम् ।
'निष्कर्णनेत्रं निर्जिह्वं निःसंज्ञं कण्ठपीडनात् ।
कुर्वन्बहुविधां चेष्टां पुरद्वारमकर्षत ॥ ८
द्वारदेशे विनिक्षिप्य पुरमागात्स मारुतिः ।
स एव राक्षसो नूनं पुनरायाति नः पुरीम् ॥ ९
सबालवृद्धाः पुरुषा इति भीताः प्रदुद्रुवुः ।
ततो भीमो बकं हत्वा गत्वा ब्राह्मणवेश्म तत् १०
बलीवर्दौ च शकटं ब्राह्मणाय न्यवेदयत् ।
तूष्णीमन्तर्गृहं गच्छेत्यभिधाय द्विजोत्तमम् ॥ ११
मातृभ्रातृसमक्षं च गत्वा शयनमेव च ।
आचचक्षेऽथ तत्सर्वं रात्रौ युद्धमभूद्यथा ॥' १२
ततो नरा विनिष्क्रान्ता नगरात्कल्यमेव तु ।
ददृशुर्निहतं भूमौ राक्षसं रुधिरोक्षितम् ॥ १३
तमद्रिकूटसदृशं विनिकीर्णं भयानकम् ।
दृष्ट्वा संहृष्टरोमाणो बभूवुस्तत्र नागराः ॥ १४
एकचक्रां ततो गत्वा प्रवृत्तिं प्रददुः पुरे ।
ततः सहस्रशो राजन्नरा नगरवासिनः ॥ १५
तत्राजग्मुर्बकं द्रष्टुं सस्त्रीवृद्धकुमारकाः ।
ततस्ते विस्मिताः सर्वे कर्म दृष्ट्वाऽतिमानुषम् ।
दैवतान्यर्चयाञ्चक्रुः प्रार्थितानि पुरा भयात् १६
ततः प्रगणयामासुः कस्य वारोऽद्य भोजने ।
ज्ञात्वा चागम्य तं विप्रं पप्रच्छुः सर्व एव ते ॥ १७
एवं पृष्टः स बहुशो रक्षमाणश्च पाण्डवान् ।
उवाच नागरान्सर्वानिदं विप्रर्षभस्तदा ॥ १८
ब्राह्मण उवाच ।
आज्ञापितं मामशने रुदन्तं सह बन्धुभिः ।
ददर्श ब्राह्मणः कश्चिन्मन्त्रसिद्धो महामनाः ॥ १९
परिपृच्छ्य स मां पूर्वं परिक्लेशं पुरस्य च ।
अब्रवीद्ब्राह्मणश्रेष्ठो विश्वास्य प्रहसन्निव ॥ २०
प्रापयिष्याम्यहं तस्मा अन्नमेतद्दुरात्मने ।
मन्निमित्तं भयं चापि न कार्यमिति चाब्रवीत् ॥ २१
स तदन्नमुपादाय गतो बकवनं प्रति ।
तेन नूनं भवेदेतत्कर्म लोकहितं कृतम् ॥ २२
ततस्ते ब्राह्मणाः सर्वे क्षत्रियाश्च सुविस्मिताः ।
वैश्याः शूद्राश्च मुदिताश्चक्रुर्ब्रह्ममहं तदा ॥ २३
ततो जानपदाः सर्वे आजग्मुर्नगरं प्रति ।
तमद्भुततमं द्रष्टुं पार्थास्तत्रैव चावसन् ॥ २४
वेत्रकीयगृहे सर्वे परिवार्य वृकोदरम् ।
विस्मयादभ्यगच्छन्त भीमं भीमपराक्रमम् ॥ २५
न वै न संभवेत्सर्वं ब्राह्मणेषु महात्मसु ।
इति सत्कृत्य तं पौराः परिवव्रुः समन्ततः ॥ २६
अयं त्राता हि खेदानां पितेव परमार्थतः ।
अस्य शुश्रूषवः पादौ परिचर्य उपास्महे ॥ २७
पशुमद्दधिमच्चास्य वारं भक्तमुपाहरन् ।
तस्मिन्हते ते पुरुषा भीताः समनुबोधनाः ॥२८
ततः संप्राद्रवन्पार्थाः सह मात्रा परन्तपाः ।
आगच्छन्नेकचक्रां ते पाण्डवाः संशितव्रताः ॥२९
वैदिकाध्ययने युक्ता जटिला ब्रह्मचारिणः ।
अवसंस्ते च तत्रापि ब्राह्मणस्य निवेशने ।
मात्रा सहैकचक्रायां दीर्घकालं सहोषिताः ॥३०

॥ इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

**समाप्तं च बकवधपर्व ।**

---

कल्यं प्रातःकाले ॥१३॥ आज्ञापितं राजकीयैरिति शेषः। अशने | राक्षसस्य भोजनार्थम् ॥१९॥ अष्टसप्तत्यधिकशततमोऽध्यायः॥

# ( अथ चैत्ररथपर्व ॥ ११ ॥ )

## ऊनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

ब्राह्मणगृहे प्रतिश्रयार्थमागतस्य कस्यचिद्ब्राह्मणस्य मुखात् पाण्डवानां द्रौपदीस्वयंवरश्रवणम् ॥ १ ॥ पाण्डवकृतधृष्टद्युम्नद्रौपदीसंभवप्रश्नस्य ब्राह्मणेनोत्तरकथनम् ॥ २ ॥

जनमेजय उवाच ।
ते तथा पुरुषव्याघ्रा निहत्य बकराक्षसम् ।
अत ऊर्ध्वं ततो ब्रह्मन्किमकुर्वत पाण्डवाः ॥ १

वैशंपायन उवाच ।
तत्रैव न्यवसन्राजन्निहत्य बकराक्षसम् ।
अधीयानाः परं ब्रह्म ब्राह्मणस्य निवेशने ॥ २
ततः कतिपयाहस्य ब्राह्मणः संशितव्रतः ।
प्रतिश्रयार्थी तद्वेश्म ब्राह्मणस्याजगाम ह ॥ ३
स सम्यक् पूजयित्वा तं विप्रं विप्रर्षभस्तदा ।
ददौ प्रतिश्रयं तस्मै सदा सर्वातिथिव्रतः ॥ ४
ततस्ते पाण्डवाः सर्वे सह कुन्त्या नरर्षभाः ।
उपासांचक्रिरे विप्रं कथयन्तं कथाः शुभाः ॥ ५
कथयामास देशांश्च तीर्थानि सरितस्तथा ।
राज्ञश्च विविधाश्चर्यान्देशांश्चैव पुराणि च ॥ ६
स तत्राकथयद्विप्रः कथान्ते जनमेजय ।
पञ्चालेष्वद्भुताकारं याज्ञसेन्याः स्वयंवरम् ॥ ७
धृष्टद्युम्नस्य चोत्पत्तिमुत्पत्तिं च शिखण्डिनः ।
अयोनिजत्वं कृष्णाया द्रुपदस्य महामखे ॥ ८
तदद्भुततमं श्रुत्वा लोके तस्य महात्मनः ।
विस्तरेणैव पप्रच्छुः कथां ते पुरुषर्षभाः ॥ ९

पाण्डवा ऊचुः ।
कथं द्रुपदपुत्रस्य धृष्टद्युम्नस्य पावकात् ।
वेदीमध्याच्च कृष्णायाः संभवः कथमद्भुतः ॥ १०
कथं द्रोणान्महेष्वासात्सर्वाण्यस्त्राण्यशिक्षत ।
'धृष्टद्युम्नो महेष्वासः कथं द्रोणस्य मृत्युदः ।'
कथं विप्र सखायौ तौ भिन्नौ कस्य कृतेन वा ११

वैशंपायन उवाच ।
एवं तैश्चोदितो राजन्स विप्रः पुरुषर्षभैः ।
कथयामास तत्सर्वं द्रौपदीसंभवं तदा ॥ १२

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि ऊनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥

---

## अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

धृष्टद्युम्नाद्युत्पत्तिकथनार्थं द्रोणद्रुपदयोरुत्पत्तिकथनपूर्वकं द्रुपदवृत्तान्तकथनम् ॥ १ ॥

ब्राह्मण उवाच ।
गङ्गाद्वारं प्रति महान्बभूवर्षिर्महातपाः ।
भरद्वाजो महाप्राज्ञः सततं संशितव्रतः ॥ १
सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम् ।
ददर्शाप्सरसं तत्र घृताचीमाप्लुतामृषिः ॥ २
तस्या वायुर्नदीतीरे वसनं व्यहरत्तदा ।
अपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे तदा ॥ ३
तस्यां संसक्तमनसः कौमारब्रह्मचारिणः ।
चिरस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥ ४
ततः समभवद्द्रोणः कुमारस्तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ॥ ५
भरद्वाजस्य तु सखा पृषतो नाम पार्थिवः ।
तस्यापि द्रुपदो नाम तदा समभवत्सुतः ॥ ६
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः ।
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ॥ ७
ततस्तु पृषतेऽतीते स राजा द्रुपदोऽभवत् ।
द्रोणोऽपि रामं शुश्राव दित्सन्तं वसु सर्वशः ॥ ८
वनं तु प्रस्थितं रामं भरद्वाजसुतोऽब्रवीत् ।
आगतं वित्तकामं मां विद्धि द्रोणं द्विजोत्तम ॥ ९

याज्ञसेन्याः द्रौपद्याः ॥ ७ ॥

राम उवाच ।
शरीरमात्रमेवाद्य मया समवशेषितम् ।
अस्त्राणि वा शरीरं वा ब्रह्मन्नेकतमं वृणु ॥ १०
द्रोण उवाच ।
अस्त्राणि चैव सर्वाणि तेषां संहारमेव च ।
प्रयोगं चैव सर्वेषां दातुमर्हति मे भवान् ॥ ११
ब्राह्मण उवाच ।
तथेत्युक्त्वा ततस्तस्मै प्रददौ भृगुनन्दनः ।
प्रतिगृह्य तदा द्रोणः कृतकृत्योऽभवत्तदा ॥ १२
संप्रहृष्टमना द्रोणो रामात्परमसम्मतम् ।
ब्रह्मास्त्रं समनुज्ञाप्य नरेष्वभ्यधिकोऽभवत् ॥ १३
ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् ।
अब्रवीत्पुरुषव्याघ्रः सखायं विद्धि मामिति ॥१४
द्रुपद उवाच ।
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ।
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥१५
ब्राह्मण उवाच ।
स विनिश्चित्य मनसा पाञ्चाल्यं प्रति बुद्धिमान् ।
जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ॥ १६
तस्मै पौत्रान्समादाय वसूनि विविधानि च ।
प्राप्ताय प्रददौ भीष्मः शिष्यान्द्रोणाय धीमते१७
द्रोणः शिष्यांस्ततः पार्थानिदं वचनमब्रवीत् ।
समानीय तु ताञ्शिष्यान्द्रुपदस्यासुखाय वै ॥१८
आचार्यवेतनं किंचिद्धृदि यद्वर्तते मम ।
कृतास्त्रैस्तत्प्रदेयं स्यात्तदृतं वदतानघाः ।
सोऽर्जुनप्रमुखैरुक्तस्तथाऽस्त्विति गुरुस्तदा ॥१९
यदा च पाण्डवाः सर्वे कृतास्त्राः कृतनिश्चयाः ।
ततो द्रोणोऽब्रवीद्भूयो वेतनार्थमिदं वचः ॥ २०
पार्षतो द्रुपदो नाम छत्रवत्यां नरेश्वरः ।
तस्मादाकृष्य तद्राज्यं मम शीघ्रं प्रदीयताम् २१
'धार्तराष्ट्राश्च ते भीताः पाञ्चालान्पाण्डवादयः ।
धार्तराष्ट्रैश्च सहिताः पुनर्द्रोणेन चोदिताः ॥२२
यज्ञसेनेन संगम्य कर्णदुर्योधनादयः ।
निर्जिताः संन्यवर्तन्त तथा ते क्षत्रियर्षभाः' २३
ततः पाण्डुसुताः पञ्च निर्जित्य द्रुपदं युधि ।
द्रोणाय दर्शयामासुर्बद्ध्वा ससचिवं तदा ॥ २४
'महेन्द्र इव दुर्धर्षो महेन्द्र इव दानवम् ।
महेन्द्रपुत्रः पाञ्चालं जितवानर्जुनस्तदा ॥ २५
तद्दृष्ट्वा तु महावीर्यं फल्गुनस्य महौजसः ।
व्यस्मयन्त जनाः सर्वे यज्ञसेनस्य बान्धवाः ।
नास्त्यर्जुनसमो वीर्ये राजपुत्र इति ब्रुवन्' ॥ २६
द्रोण उवाच ।
प्रार्थयामि त्वया सख्यं पुनरेव नराधिप ।
अराजा किल नो राज्ञः सखा भवितुमर्हति ॥२७
अतः प्रयतितं राज्ये यज्ञसेन त्वया सह ।
राजाऽसि दक्षिणे कूले भागीरथ्याहमुत्तरे ॥२८
ब्राह्मण उवाच ।
एवमुक्तो हि पाञ्चाल्यो भारद्वाजेन धीमता ।
उवाचास्त्रविदां श्रेष्ठं द्रोणं ब्राह्मणसत्तमम् ॥ २९
एवं भवतु भद्रं ते भारद्वाज महामते ।
सख्यं तदेव भवतु शश्वद्यदभिमन्यसे ॥ ३०
एवमन्योन्यमुक्त्वा तौ कृत्वा सख्यमनुत्तमम् ।
जग्मतुर्द्रोणपाञ्चाल्यौ यथागतमरिन्दमौ ॥ ३१
असत्कारः स तु महान्मुहूर्तमपि तस्य तु ।
नापैति हृदयाद्राज्ञो दुर्मनाः स कृशोऽभवत् ३२

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

---

एकतममेकतरम् ॥ १० ॥ समनुज्ञाप्य निशाम्य । प्राप्येत्यपि पठन्ति ॥ १३ ॥ छत्रवत्यामहिच्छत्रे ॥ २१ ॥ भागीरथ्याहमिति संधिरार्षः ॥ २८ ॥ अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥

## एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

द्रोणहन्तृपुत्रोत्पादनेच्छया याजकान्वेषणार्थमटतो द्रुपदस्य उपयाजवचनेन याजसमीपगमनम् ॥ १ ॥ पुत्रार्थं यज्ञे आरब्धे अग्निकुण्डाद्धृष्टद्युम्नस्योत्पत्तिस्तच्चरितमाकाशवाणी च ॥ २ ॥ पाञ्चाल्या उत्पत्तिः ॥ ३ ॥ तयोर्नामकरणम् ॥ ४ ॥ द्रोणेन धृष्टद्युम्नस्यास्त्रशिक्षणम् ॥ ५ ॥

ब्राह्मण उवाच ।
अमर्षी द्रुपदो राजा कर्मसिद्धान्द्विजर्षभान् ।
अन्विच्छन्परिचक्राम ब्राह्मणावसथान्बहून् ॥ १
पुत्रजन्म परीप्सन्वै शोकोपहतचेतनः ।
'द्रोणेन वैरं द्रुपदो न सुष्वाप स्मरन्सदा ।'
नास्ति श्रेष्ठमपत्यं म इति नित्यमचिन्तयत् ॥ २
जातान्पुत्रान्स निर्वेदाद्धिग्बन्धूनिति चाब्रवीत् ।
निःश्वासपरमश्चासीद्द्रोणं प्रतिचिकीर्षया ॥ ३
प्रभावं विनयं शिक्षां द्रोणस्य चरितानि च ।
क्षात्रेण च बलेनास्य चिन्तयन्नाध्यगच्छत ॥ ४
प्रतिकर्तुं नृपश्रेष्ठो यतमानोऽपि भारत ।
अभितः सोऽथ कल्माषीं गङ्गाकूले परिभ्रमन् ५
ब्राह्मणावसथं पुण्यमाससाद महीपतिः ।
तत्र नास्नातकः कश्चिन्न चासीदव्रती द्विजः ॥६
अधीयानौ महाभागौ सोऽपश्यत्संशितव्रतौ ।
याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ परमेष्ठिनौ ॥ ७
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ।
तारणेयौ युक्तरूपौ ब्राह्मणावृषिसत्तमौ ॥ ८
स तावामन्त्रयामास सर्वकामैरतन्द्रितः ।
बुद्ध्वा बलं तयोस्तत्र कनीयांसमुपह्वरे ॥ ९
प्रपेदे च्छन्दयन्कामैरुपयाजं धृतव्रतम् ।
पादशुश्रूषणे युक्तः प्रियवाक्सर्वकामदः ॥ १०
अर्चयित्वा यथान्यायमुपयाजमुवाच सः ।
येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्यवे ॥ ११
'अर्जुनस्य भवेद्भार्या भवेद्या वरवर्णिनी ।'
उपयाज कृते तस्मिन् गवां दाताऽस्मि तेऽर्बुदं१२
यद्वा तेऽन्यद्द्विजश्रेष्ठ मनसः सुप्रियं भवेत् ।
सर्वं तत्ते प्रदाताऽहं न हि मेऽत्रास्ति संशयः१३
इत्युक्तो नाहमित्येवं तमृषिः प्रत्यभाषत ।
आराधयिष्यन्द्रुपदः स तं पर्यचरत्पुनः ॥ १४
ततः संवत्सरस्यान्ते द्रुपदं स द्विजोत्तमः ।
उपयाजोऽब्रवीत्काले राजन्मधुरया गिरा ॥ १५
ज्येष्ठो भ्राता ममागृह्णाद्विचरन् गहने वने ।
अपरिज्ञातशौचायां भूमौ निपतितं फलम् ॥१६
तदपश्यमहं भ्रातुरसाम्प्रतमनुव्रजन् ।
विमर्शं संकरादाने नायं कुर्यात्कदाचन ॥ १७
दृष्ट्वा फलस्य नापश्यद्दोषान्पापानुबन्धकान् ।
विविनक्ति न शौचं यः सोऽन्यत्रापि कथं भवेत्॥
संहिताध्ययनं कुर्वन्वसन्गुरुकुले च यः ।
भैक्षमुत्सृष्टमन्येषां भुङ्क्ते स च यदा तदा ॥ १९
कीर्तयन्गुणमन्नानामघृणी च पुनः पुनः ।
तं वै फलार्थिनं मन्ये भ्रातरं तर्कचक्षुषा ॥ २०
तं वै गच्छस्व नृपते स त्वां संयाजयिष्यति ।
जुगुप्समानो नृपतिर्मनसेदं विचिन्तयन् ॥ २१
उपयाजवचः श्रुत्वा याजस्याश्रममभ्यगात् ।
अभिसम्पूज्य पूजार्हमथ याजमुवाच ह ॥ २२
अयुतानि ददान्यष्टौ गवां याजय मां विभो ।
द्रोणवैराभिसन्तप्तं प्रह्लादयितुमर्हसि ॥ २३
स हि ब्रह्मविदां श्रेष्ठो ब्रह्मास्त्रे चाप्यनुत्तमः ।
तस्माद्द्रोणः पराजैष्ट मां वै स सखिविग्रहे ॥ २४
क्षत्रियो नास्ति तस्यास्यां पृथिव्यां कश्चिदग्रणीः ।
कौरवाचार्यमुख्यस्य भारद्वाजस्य धीमतः ॥ २५

---

परमे ब्रह्मणि वेदे वा स्नातुं शीलं ययोस्तौ ॥ ७ ॥ तारणेयौ कुमारीप्रभवौ सूर्यभक्तौ वा ॥ ८ ॥ संकरादाने दोषयुक्तवस्त्वादाने ॥ १७ ॥ उत्सृष्टं उच्छिष्टम् ॥ १९ ॥ अघृणी लज्जाहीनः ॥ २० ॥ इदं याजचरितं जुगुप्समानो निन्दन् । विचिन्तयन् स्वकार्यं चेति शेषः ॥ २१ ॥ अष्टावयुतानि ददानि । रिक्तपाणिर्न पश्येत राजानं देवतां गुरुमिति स्मृतेरुपायनमात्रमेतत् न दक्षिणा अर्बुदप्रतिज्ञानात् ॥ २३ ॥ पराजैष्ट पराजितवान् ॥ २४ ॥ तस्य तस्मात् । अग्रणीः श्रेष्ठः ॥ २५ ॥

द्रोणस्य शरजालानि प्राणिदेहहराणि च ।
षडरत्नि धनुश्चास्य दृश्यते परमं महत् ॥ २६
स हि ब्राह्मणवेषेण क्षात्रं वेगमसंशयम् ।
प्रतिहन्ति महेष्वासो भारद्वाजो महामनाः ॥२७
क्षत्रोच्छेदाय विहितो जामदग्न्य इवास्थितः ।
तस्य ह्यस्त्रबलं घोरमप्रधृष्यं नरैर्भुवि ॥ २८
ब्राह्मं सन्धारयंस्तेजो हुताहुतिरिवानलः ।
समेत्य स दहत्याजौ क्षात्रधर्मपुरःसरः ॥ २९
ब्रह्मक्षत्रे च विहिते ब्राह्मं तेजो विशिष्यते ।
सोऽहं क्षात्राद्बलाद्धीनो ब्राह्मं तेजः प्रपेदिवान् ॥
द्रोणाद्विशिष्टमासाद्य भवन्तं ब्रह्मवित्तमम् ।
द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम् ॥ ३१
तत्कर्म कुरु मे याज वितराम्यर्बुदं गवाम् ।
तथेत्युक्त्वा तु तं याजो याज्यार्थमुपकल्पयत् ३२
गुर्वर्थ इति चाकाममुपयाजमचोदयत् ।
याजो द्रोणविनाशाय प्रतिजज्ञे तथा च सः ॥३३
ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः ।
आचख्यौ कर्म वैतानं तदा पुत्रफलाय वै ॥ ३४
स च पुत्रो महावीर्यो महातेजा महाबलः ।
इष्यते यद्विधो राजन्भविता ते तथाविधः ॥ ३५
भारद्वाजस्य हन्तारं सोऽभिसन्धाय भूपतिः ।
आजह्रे तत्तथा सर्वं द्रुपदः कर्मसिद्धये ॥ ३६
याजस्तु हवनस्यान्ते देवीमाज्ञापयत्तदा ।
प्रेहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ॥३७
राज्ञ्युवाच ।
अवलिप्तं मुखं ब्रह्मन्दिव्यान्गन्धान्बिभर्मि च ।
सुतार्थे नोपलब्धाऽस्मि तिष्ठ याज मम प्रिये ३८
याज उवाच ।
याजेन श्रपितं हव्यमुपयाजाभिमन्त्रितम् ।
कथं कामं न सन्दध्यात्सा त्वं विप्रेहि तिष्ठ वा ॥
ब्राह्मण उवाच ।
एवमुक्त्वा तु याजेन हुते हविषि संस्कृते ।
उत्तस्थौ पावकात्तस्मात्कुमारो देवसन्निभः ॥४०

ज्वालावर्णो घोररूपः किरीटी वर्म चोत्तमम् ।
बिभ्रत्सखड्गः सशरो धनुष्मान्विनदन्मुहुः ॥४१
सोऽध्यारोहद्रथवरं तेन च प्रययौ तदा ।
ततः प्रणेदुः पञ्चालाः प्रहृष्टाः साधुसाध्विति ॥४२
हर्षाविष्टांस्ततश्चैतान्नेयं सेहे वसुन्धरा ।
भयापहो राजपुत्रः पञ्चालानां यशस्करः ॥ ४३
राज्ञः शोकापहो जात एष द्रोणवधाय वै ।
इत्युवाच महद्भूतमदृश्यं खेचरं तदा ॥ ४४
कुमारी चापि पाञ्चाली वेदीमध्यात्समुत्थिता ।
सुभगा दर्शनीयाङ्गी स्वसितायतलोचना ॥ ४५
श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा ।
ताम्रतुङ्गनखी सुभ्रूश्चारुपीनपयोधरा ॥ ४६
मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी ।
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रधावति४७
या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि ।
देवदानवयक्षाणामीप्सितां देवरूपिणीम् ॥ ४८
'सदृशी पाण्डुपुत्रस्य अर्जुनस्येति भारत ।
ऊचुः प्रहृष्टमनसो राजभक्तिपुरस्कृताः ॥' ४९
तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी ।
सर्वयोषिद्वरा कृष्णा निनीषुः क्षत्रियान्क्षयम् ५०
सुरकार्यमियं काले करिष्यति सुमध्यमा ।
अस्या हेतोः कौरवाणां महदुत्पत्स्यते भयम् ॥५१
तच्छ्रुत्वा सर्वपञ्चालाः प्रणेदुः सिंहसङ्घवत् ।
न चैतान्हर्षसम्पूर्णानियं सेहे वसुन्धरा ॥ ५२
'पाञ्चालराजस्तां दृष्ट्वा हर्षादश्रूण्यवर्तयत् ।
परिष्वज्य च तां कृष्णां स्नुषा पाण्डोरिति ब्रुवन् ।
अङ्कमारोप्य पाञ्चालीं राजा हर्षमवाप सः ॥'५३
तौ दृष्ट्वा पार्षती याजं प्रपेदे वै सुतार्थिनी ।
न वै मदन्यां जननीं जानीयातामिमाविति ५४
तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया ।
तयोश्च नामनी चक्रुर्द्विजाः सम्पूर्णमानसाः ॥५५
धृष्टत्वादत्यमर्षित्वाद्द्युम्नाद्युत्संभवादपि ।
धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ॥ ५६

धृष्टत्वात् प्रगल्भत्वात् । अत्यमर्षः शत्रूत्कर्षासहिष्णुत्वं तद्वत्त्वात् । द्युम्नं वित्तं तच्च राज्ञां बलमेव कवचकुण्डलादिकं

कृष्णेत्येवाब्रुवन्कृष्णां कृष्णाऽभूत्सा हि वर्णतः ।
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ॥ ५७
'वैदिकाध्ययने पारं धृष्टद्युम्नो गतः परम् ॥'५८
धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं निवेशनम् ।
उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ॥ ५९
अमोक्षणीयं दैवं हि भावि मत्वा महामतिः ।
तथा तत्कृतवान्द्रोण आत्मकीर्त्यनुरक्षणात् ॥६०

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

## द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

जनवार्तया दुर्योधनेन पाण्डवानां दाहं, स्वपुरोहितवचनेन नाशराहित्यं च, ज्ञातवता तेषां जीवने सन्दिहानेन द्रुपदेन उद्घोपितस्य पुत्रीस्वयंवरस्य कुन्तींप्रति ब्राह्मणेन कथनम् ॥ १ ॥ युष्मासु तत्रागतेष्वीश्वरेच्छया त्वत्पुत्राणामन्यतमं पाञ्चाली वृणुयादपीत्युक्तवता ब्राह्मणेन सह पाण्डवानां पाञ्चालनगरं प्रति गमनम् ॥ २ ॥

'ब्राह्मण उवाच ।
श्रुत्वा जतुगृहे वृत्तं ब्राह्मणाः संशितव्रताः ।
पाञ्चालराजं द्रुपदमिदं वचनमब्रुवन् ॥ १
धार्तराष्ट्राः सहामात्या मन्त्रयित्वा परस्परम् ।
पाण्डवानां विनाशाय मतिं चक्रुः सुदुष्कराम् २
दुर्योधनेन प्रहितः पुरोचन इति श्रुतः ।
वारणावतमासाद्य कृत्वा जतुगृहं महत् ॥ ३
तस्मिन्गृहे सुविस्रब्धान्पाण्डवान्पृथया सह ।
अर्धरात्रे महाराज दग्धवानतिदुर्मतिः ॥ ४
तेनाग्निना स्वयं चापि दग्धः क्षुद्रो नृशंसवत् ।
एतच्छ्रुत्वा सुसंहृष्टो धृतराष्ट्रः सबान्धवः ॥ ५
अल्पशोकः प्रहृष्टात्मा शशास विदुरं तदा ।
पाण्डवानां महाप्राज्ञ कुरु पिण्डोदकक्रियाम् ॥६
अहो विधिवशादेव गतास्ते यमसादनम् ।
इत्युक्त्वा प्रारुदत्तत्र धृतराष्ट्रः सबान्धवः ॥ ७
श्रुत्वा भीष्मेण विदुरः कृतवानौर्ध्वदेहिकम् ।
पाण्डवानां विनाशाय कृतं कर्म दुरात्मना ॥ ८
एतत्कार्यस्य कर्ता तु न दृष्टो न श्रुतः पुरा ।
एतद्वृत्तं महाभाग पाण्डवान्प्रति नः श्रुतम् ॥ ९
ब्राह्मण उवाच ।
श्रुत्वा तु वचनं तेषां यज्ञसेनो महामतिः ।
यथा तज्जनकः शोचेदौरसस्य विनाशने ॥ १०
तथाऽतप्यत वै राजा पाण्डवानां विनाशने ।
समाहूय प्रकृतयः सहिताः सर्वनागरैः ॥ ११
कारुण्यादेव पाञ्चालः प्रोवाचेदं वचस्तदा ।
द्रुपद उवाच ।
अहो रूपमहो धैर्यमहो वीर्यमहो बलम् ॥ १२
चिन्तयामि दिवारात्रमर्जुनं प्रति बान्धवाः ।
भ्रातृभिः सहितो मात्रा सोऽदह्यत हुताशने १३
किमाश्चर्यमितो लोके कालो हि दुरतिक्रमः ।
मिथ्याप्रतिज्ञो लोकेषु किं करिष्यामि सांप्रतं १४
अन्तर्गतेन दुःखेन दह्यमानो दिवानिशम् ।
याजोपयाजौ सत्कृत्य याचितौ तौ मयाऽनघौ॥
भारद्वाजस्य हन्तारं देवीं चाप्यर्जुनस्य वै ।
लोकस्तद्वेद यच्चापि तथा याजेन मे श्रुतम् ॥१६
याजेन पुत्रकामीयं हुत्वा चोत्पादिताविमौ ।
धृष्टद्युम्नश्च कृष्णा च मम तुष्टिकरावुभौ ॥ १७
किं करिष्यामि ते नष्टाः पाण्डवाः पृथया सह।
ब्राह्मण उवाच।
इत्येवमुक्त्वा पाञ्चालः शुशोच परमातुरः ॥ १८
दृष्ट्वा शोचन्तमत्यर्थं पाञ्चालमिदमब्रवीत् ।
पुरोधाः सत्वसंपन्नः सम्यग्विद्याविशेषवित् ॥१९
वृद्धानुशासने सक्ताः पाण्डवा धर्मचारिणः ।
तादृशा न विनश्यन्ति नैव यान्ति पराभवम् २०

---

वा सहोत्पन्नं तदादिर्यस्य शस्त्रास्त्रशौर्योत्साहादेस्तद्द्युम्नादि तस्योत्संभवादुत्कर्षेणोत्पत्तेश्च ॥ ५६ ॥

एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥
एतत्कार्यस्य एतादृशकार्यस्य ॥ ९ ॥

मया दृष्टमिदं सत्यं शृणु त्वं मनुजाधिप ।
ब्राह्मणैः कथितं सत्यं वेदेषु च मया श्रुतम् २१
बृहस्पतिमतेनाथ पौलोम्या च पुरा श्रुतम् ।
नष्ट इन्द्रो बिसग्रन्थ्यामुपश्रुत्या हि दर्शितः॥२२
उपश्रुतिर्महाराज पाण्डवार्थे मया श्रुता ।
यत्रकुत्रापि जीवन्ति पाण्डवास्ते न संशयः॥२३
मया दृष्टानि लिङ्गानि इहैवैष्यन्ति पाण्डवाः ।
यन्निमित्तमिहायान्ति तच्छृणुष्व नराधिप ॥२४
स्वयंवरः क्षत्रियाणां कन्यादाने प्रदर्शितः ।
स्वयंवरस्तु नगरे घुष्यतां राजसत्तम ॥ २५
यत्र वा निवसन्तस्ते पाण्डवाः पृथया सह ।
दूरस्था वा समीपस्था स्वर्गस्था वाऽपि पाण्डवाः॥
श्रुत्वा स्वयंवरं राजन्समेष्यन्ति न संशयः ।
तस्मात्स्वयंवरो राजन्घुष्यतां मा चिरं कृथाः २७
ब्राह्मण उवाच ।
श्रुत्वा पुरोहितेनोक्तं पाञ्चालः प्रीतिमांस्तदा ।
घोषयामास नगरे द्रौपद्यास्तु स्वयंवरम् ॥ २८
पुष्यमासे तु रोहिण्यां शुक्लपक्षे शुभे तिथौ ।
दिवसैः पञ्चसप्तत्या भविष्यति न संशयः ॥२९
देवगन्धर्वयक्षाश्च ऋषयश्च तपोधनाः ।
स्वयंवरं द्रष्टुकामा गच्छन्त्येव न संशयः ॥ ३०
तव पुत्रा महात्मानो दर्शनीया विशेषतः ।
यदृच्छया सा पाञ्चाली गच्छेद्वान्यतमं पतिम्३१
को हि जानाति लोकेषु प्रजापतिमतं शुभम् ।
तस्मात्सपुत्रा गच्छेथा यदि ब्राह्मणि रोचते॥३२
नित्यकालं सुभिक्षास्ते पाञ्चालास्तु तपोधने ।
यज्ञसेनस्तु राजा स ब्रह्मण्यः सत्यसङ्गरः ॥ ३३
ब्रह्मण्या नागराः सर्वे ब्राह्मणाश्चातिथिप्रियाः ।
नित्यकालं प्रदास्यन्ति आमन्त्रणमयाचितम्॥३४
अहं च तत्र गच्छामि ममैभिः सह शिष्यकैः ।
एकसार्थाः प्रयाताः स्मो ब्राह्मण्या यदि रोचते॥
एतावदुक्त्वा वचनं ब्राह्मणो विरराम ह ॥ ३६

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥

## त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

पाण्डवानां द्रुपदनगरप्रस्थानम् ॥ १ ॥

वैशंपायन उवाच ।
एतच्छ्रुत्वा ततः सर्वे पाण्डवा भरतर्षभ ।
मनसा द्रौपदीं जग्मुरनङ्गशरपीडिताः ॥' १
ततस्तां रजनीं राजञ्छल्यविद्धा इवाभवन् ।
सर्वे चास्वस्थमनसो बभूवुस्ते महाबलाः ॥ २
ततः कुन्ती सुतान्दृष्ट्वा सर्वांस्तद्गतचेतसः ।
युधिष्ठिरमुवाचेदं वचनं सत्यवादिनी ॥ ३
चिररात्रोपिताः स्मेह ब्राह्मणस्य निवेशने ।
रममाणाः पुरे रम्ये लब्धभैक्षा महात्मनः ॥ ४
यानीह रमणीयानि वनान्युपवनानि च ।
सर्वाणि तानि दृष्टानि पुनःपुनररिन्दम ॥ ५
पुनर्दृष्टानि तानीह प्रीणयन्ति न नस्तथा ।
भैक्षं च न तथा वीर लभ्यते कुरुनन्दन ॥ ६
ते वयं साधु पञ्चालान्गच्छाम यदि मन्यसे ।
अपूर्वदर्शनं वीर रमणीयं भविष्यति ॥ ७
सुभिक्षाश्चैव पञ्चालाः श्रूयन्ते शत्रुकर्शन ।
यज्ञसेनश्च राजाऽसौ ब्रह्मण्य इति शुश्रुम ॥ ८
एकत्र चिरवासश्च क्षमो न च मतो मम ।
ते तत्र साधु गच्छामो यदि त्वं पुत्र मन्यसे ॥९
युधिष्ठिर उवाच ।
भवत्या यन्मतं कार्यं तदस्माकं परं हितम् ।
अनुजांस्तु न जानामि गच्छेयुर्नेति वा पुनः १०
वैशंपायन उवाच ।
ततः कुन्ती भीमसेनमर्जुनं यमजौ तथा ।
उवाच गमनं ते च तथेत्येवाब्रुवंस्तदा ॥ ११

दृष्टं ऊहितम् ॥ २१ ॥

तत आमन्त्र्य तं विप्रं कुन्ती राजसुतैः सह । प्रतस्थे नगरीं रम्यां द्रुपदस्य महात्मनः ॥ १२

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

## चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

प्रस्थानसमयागतेन व्यासेन पाण्डवान्प्रति द्रौपदीवृत्तान्तकथनपूर्वकं भविष्यद्द्रौपदीलाभकथनम् ॥१॥ व्यासस्य प्रतिनिवर्तनम् ॥ २ ॥

वैशंपायन उवाच ।
वसत्सु तेषु प्रच्छन्नं पाण्डवेषु महात्मसु ।
आजगामाथ तान्द्रष्टुं व्यासः सत्यवतीसुतः ॥ १
तमागतमभिप्रेक्ष्य प्रत्युद्गम्य परन्तपाः ।
प्रणिपत्याभिवाद्यैनं तस्थुः प्राञ्जलयस्तदा ॥ २
समनुज्ञाप्य तान्सर्वानासीनान्मुनिरब्रवीत् ।
प्रच्छन्नं पूजितः पार्थैः प्रीतिपूर्वमिदं वचः ॥ ३
अपि धर्मेण वर्तध्वं शास्त्रेण च परन्तपाः ।
अपि विप्रेषु पूजा वः पूजार्हेषु न हीयते ॥ ४
अथ धर्मार्थवद्वाक्यमुक्त्वा स भगवानृषिः ।
विचित्राश्च कथास्तास्ताः पुनरेवेदमब्रवीत् ॥ ५
आसीत्तपोवने काचिदृषेः कन्या महात्मनः ।
विलग्नमध्या सुश्रोणी सुभ्रूः सर्वगुणान्विता ॥ ६
कर्मभिः स्वकृतैः सा तु दुर्भगा समपद्यत ।
नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ॥ ७
तपस्तप्तुमथारेभे पत्यर्थमसुखा ततः ।
तोषयामास तपसा सा किलोग्रेण शङ्करम् ॥ ८
तस्याः स भगवांस्तुष्टस्तामुवाच यशस्विनीम् ।
वरं वरय भद्रं ते वरदोऽस्मीति शङ्करः ॥ ९
अथेश्वरमुवाचेदमात्मनः सा वचो हितम् ।
पतिं सर्वगुणोपेतमिच्छामीति पुनःपुनः ॥ १०
तामथ प्रत्युवाचेदमीशानो वदतां वरः ।
पञ्च ते पतयो भद्रे भविष्यन्तीति भारताः ॥ ११
एवमुक्ता ततः कन्या देवं वरदमब्रवीत् ।
एकमिच्छाम्यहं देव त्वत्प्रसादात्पतिं प्रभो ॥ १२
पुनरेवाब्रवीद्देव इदं वचनमुत्तमम् ।
पञ्चकृत्वस्त्वया ह्युक्तः पतिं देहीत्यहं पुनः ॥ १३
देहमन्यं गतायास्ते यथोक्तं तद्भविष्यति ।
व्यास उवाच ।
द्रुपदस्य कुले जज्ञे सा कन्या देवरूपिणी ॥ १४
निर्दिष्टा भवतां पत्नी कृष्णा पार्षत्यनिन्दिता ।
पाञ्चालनगरे तस्मान्निवसध्वं महाबलाः ।
सुखिनस्तामनुप्राप्य भविष्यथ न संशयः ॥ १५
एवमुक्त्वा महाभागः पाण्डवान्स पितामहः ।
पार्थानामन्त्र्य कुन्तीं च प्रातिष्ठत महातपाः १६

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

## पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

पाञ्चालनगरं गच्छतां पाण्डवानां मार्गे ब्राह्मणैः सह संवादः ॥ १ ॥

वैशंपायन उवाच ।
गते भगवति व्यासे पाण्डवा हृष्टमानसाः ।
'ते प्रयाता नरव्याघ्रा मात्रा सह परन्तपाः ॥ १
ब्राह्मणान्गच्छतो पश्यन्पाञ्चालान्सगणान्पथि ।
अथ ते ब्राह्मणा ऊचुः पाण्डवान्ब्रह्मचारिणः ॥ २
क्व भवन्तो गमिष्यन्ति कुतो वाऽऽगच्छथेति ह ।
युधिष्ठिर उवाच ।
प्रयातानेकचक्रायाः सोदर्यान्देवदर्शिनः ॥ ३

---

विलग्नमध्या विलग्नं समदेशे शयने भूतलास्पृष्टं मध्यं शरीरमध्यभागो यस्याः सा कृशमध्येति यावत् ॥ ६ ॥

चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

भवन्तो नोऽभिजानन्तु सहितान्ब्रह्मचारिणः ।
गच्छतो नस्तु पाञ्चालान्द्रुपदस्य पुरं प्रति ॥ ४
इच्छामो भवतो ज्ञातुं परं कौतूहलं हि नः ॥ ५
ब्राह्मणा ऊचुः ।
एते सार्धं प्रयाताः स्मो वयमप्यत्र गामिनः ।
तत्राप्यद्भुतसङ्काश उत्सवो भविता महान् ॥ ६
ततस्तु यज्ञसेनस्य द्रुपदस्य महात्मनः ।
यासावयोनिजा कन्या स्थास्यते सा स्वयंवरे ॥ ७
दर्शनीयाऽनवद्याङ्गी सुकुमारी यशस्विनी ।
धृष्टद्युम्नस्य भगिनी द्रोणशत्रोः प्रतापिनः ॥ ८
जातो यः पावकाच्छूरः सशरः सशरासनः ।
सुसमिद्धान्महाभागः सोमकानां महारथः ॥ ९
यस्मिन्संजायमाने हि वागुवाचाशरीरिणी ।
एष मृत्युश्च शिष्यश्च भारद्वाजस्य जायते ॥ १०
स्वसा तस्य तु वेद्याश्च जाता तस्मिन्महामखे ।
स्त्रीरत्नमसितापाङ्गी श्यामा नीलोत्पलद्युतिः ॥ ११
तां यज्ञसेनस्य सुतां द्रौपदीं परमां स्त्रियम् ।
गच्छामस्तत्र वै द्रष्टुं तं चैवास्याः स्वयंवरम् ॥ १२
राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणाः ।
स्वाध्यायवन्तः शुचयो महात्मानो धृतव्रताः १३
तरुणा दर्शनीयाश्च बलवन्तो दुरासदाः ।
महारथाः कृतास्त्राश्च समेष्यन्तीह भूमिपाः ॥ १४
ते तत्र विविधं दानं विजयार्थं नरेश्वराः ।
प्रदास्यन्ति धनं गाश्च भक्ष्यभोज्यानि सर्वशः ॥ १५
प्रतिलप्स्यामहे सर्वं दृष्ट्वा कृष्णां स्वयंवरे ।
यं च सा क्षत्रियं रङ्गे कुमारी वरयिष्यति ॥ १६
तदा वैतालिकाश्चैव नर्तकाः सूतमागधाः ।
निबोधकाश्च देशेभ्यः समेष्यन्ति महाबलाः ॥ १७
एतत्कौतूहलं तत्र दृष्ट्वा वै प्रतिगृह्य च ।
सहास्माभिर्महात्मानो मात्रा सह निवर्त्स्यथ ॥ १८
दर्शनीयांश्च वः सर्वानेकरूपानवस्थितान् ।
समीक्ष्य कृष्णा वरयेत्संगत्यान्यतमं पतिम् ॥ १९
अयमेकश्च वो भ्राता दर्शनीयो महाभुजः ।
नियुध्यमानो विजयेत्संगत्य द्रविणं महत् ॥ २०
युधिष्ठिर उवाच ।
परमं भो गमिष्यामो द्रष्टुं तत्र स्वयंवरम् ।
द्रौपदीं यज्ञसेनस्य कन्यां तस्यास्तथोत्सवम् ॥ २१

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥

---

## षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

अर्धरात्रे पाण्डवानां गङ्गातीरगमनम् ॥ १ ॥ तत्र स्त्रीभिः सह जलक्रीडां कुर्वता चित्ररथेन गन्धर्वेण सह अर्जुनस्य युद्धम् ॥ २ ॥ आग्नेयास्त्रेण दग्धादधःपतितस्य तस्यार्जुनेन ग्रहणं ॥३॥ गन्धर्वपत्न्या प्रार्थितस्य युधिष्ठिरस्याज्ञया गन्धर्वमोचनम् ॥ ४ ॥ गन्धर्वप्रार्थनया आग्नेयास्त्रपरिवर्तनेन तस्माद्गान्धर्वास्त्रग्रहणानुमोदनम् ॥ ५ ॥ गन्धर्वेण पाण्डवानां पुरोहितसंपादनोपदेशः ॥ ६ ॥

वैशंपायन उवाच ।
ते प्रतस्थुः पुरस्कृत्य मातरं पुरुषर्षभाः ।
समैरुदङ्मुखैर्मार्गैर्यथोद्दिष्टं च भारत ॥ १
अहोरात्रेणाभ्यगच्छन्पाञ्चालनगरं प्रति ।
अभ्याजग्मुर्लोकनदीं गङ्गां भागीरथीं प्रति ॥ २
चन्द्रास्तमयवेलायामर्धरात्रसमागमे ।
वारि चैवानुमज्जन्तस्तीर्थं सोमाश्रयायणम् ।
आसेदुः पुरुषव्याघ्रा गङ्गायां पाण्डुनन्दनाः ॥ ३
उल्मुकं तु समुद्यम्य तेषामग्रे धनञ्जयः ।
प्रकाशार्थं ययौ तत्र रक्षार्थं च महारथः ॥ ४
तत्र गङ्गाजले रम्ये विविक्ते क्रीडयन् स्त्रियः ।
ईर्ष्युर्गन्धर्वराजो वै जलक्रीडामुपागतः ॥ ५
शब्दं तेषां स शुश्राव नदीं समुपसर्पताम् ।
तेन शब्देन चाविष्टश्चुक्रोध बलवद्बली ॥ ६
स दृष्ट्वा पाण्डवांस्तत्र सह मात्रा परन्तपान् ।

सोमाश्रयश्चन्द्रधरो रुद्रस्तस्य स्थानं सोमाश्रयायणम् ॥ ३ ॥

विष्फारयन्धनुर्घोरमिदं वचनमब्रवीत् ॥ ७
सन्ध्या संरज्यते घोरा पूर्वरात्रागमेषु या ।
अशीतिभिर्लवैर्हीनं तन्मुहूर्तं प्रचक्षते ॥ ८
विहितं कामचाराणां यक्षगन्धर्वरक्षसाम् ।
शेषमन्यन्मनुष्याणां कर्मचारेषु वै स्मृतम् ॥ ९
लोभात्प्रचारं चरतस्तासु वेलासु वै नरान् ।
उपक्रान्ता निगृह्णीमो राक्षसैः सह बालिशान् १०
अतो रात्रौ प्राप्नुवतो जलं ब्रह्मविदो जनाः ।
गर्हयन्ति नरान्सर्वान्बलस्थान्नृपतीनपि ॥ ११
आराच्च तिष्ठतास्माकं समीपं नोपसर्पत ।
कस्मान्मां नाभिजानीत प्राप्तं भागीरथीजलम् १२
अङ्गारपर्णं गन्धर्वं वित्त मां स्वबलाश्रयम् ।
अहं हि मानी चेर्ष्युश्च कुबेरस्य प्रियः सखा ॥१३
अङ्गारपर्णमित्येवं ख्यातं चेदं वनं मम ।
अनुगङ्गं चरन्कामांश्चित्रं यत्र रमाम्यहम् ॥ १४
न कौणपाः शृङ्गिणो वा न देवा न च मानुषाः ।
कुबेरस्य यथोष्णीपं किं मां समुपसर्पथ ॥ १५
अर्जुन उवाच ।
समुद्रे हिमवत्पार्श्वे नद्यामस्यां च दुर्मते ।
रात्रावहनि सन्ध्यायां कस्य क्लृप्तः परिग्रहः ॥१६
भुक्तो वाऽप्यथ वाऽभुक्तो रात्रावहनि खेचर ।
न कालनियमो ह्यस्ति गङ्गां प्राप्य सरिद्वराम् ॥१७
वयं च शक्तिसम्पन्ना अकाले त्वामधृष्णुम ।
अशक्ता हि रणे क्रूर युष्मानर्चन्ति मानवाः ॥१८
पुरा हिमवतश्चैषा हेमशृङ्गाद्विनिःसृता ।
गङ्गा गत्वा समुद्राम्भः सप्तधा समपद्यत ॥ १९
गङ्गां च यमुनां चैव प्लक्षजातां सरस्वतीम् ।
रथस्थां सरयूं चैव गोमतीं गण्डकीं तथा ॥ २०
अपर्युषितपापास्ते नदीः सप्त पिबन्ति ये ।
इयं भूत्वा चैकवप्रा शुचिराकाशगा पुनः ॥ २१
देवेषु गङ्गा गन्धर्व प्राप्नोत्यलकनन्दताम् ।
तथा पितॄन्वैतरणी दुस्तरा पापकर्मभिः ।
गङ्गा भवति वै प्राप्य कृष्णद्वैपायनोऽब्रवीत् ॥ २२
असम्बाधा देवनदी स्वर्गसंपादनी शुभा ।
कथमिच्छसि तां रोद्धुं नैष धर्मः सनातनः ॥ २३
अनिवार्यमसम्बाधं तव वाचा कथं वयम् ।
न स्पृशेम यथाकामं पुण्यं भागीरथीजलम् ॥२४
वैशंपायन उवाच ।
अङ्गारपर्णस्तच्छ्रुत्वा क्रुद्ध आनाम्य कार्मुकम् ।
मुमोच बाणान्निशितानहीनाशीविषानिव ॥ २५
उल्मुकं भ्रामयंस्तूर्णं पाण्डवश्चर्म चोत्तरम् ।
व्यपोहत शरांस्तस्य सर्वानेव धनञ्जयः ॥ २६
अर्जुन उवाच ।
बिभीषिका वै गन्धर्व नास्त्रज्ञेषु प्रयुज्यते ।
अस्त्रज्ञेषु प्रयुक्तेयं फेनवत्प्रविलीयते ॥ २७
मानुषानति गन्धर्वान्सर्वान् गन्धर्व लक्षये ।
तस्मादस्त्रेण दिव्येन योत्स्येऽहं न तु मायया २८
पुराऽस्त्रमिदमाग्नेयं प्रादात्किल बृहस्पतिः ।
भरद्वाजाय गन्धर्व गुरुर्मान्यः शतक्रतोः ॥ २९
भरद्वाजादग्निवेश्य अग्निवेश्याद्गुरुर्मम ।
साध्विदं मह्यमददद्द्रोणो ब्राह्मणसत्तमः ॥ ३०
वैशंपायन उवाच ।
इत्युक्त्वा पाण्डवः क्रुद्धो गन्धर्वाय मुमोच ह ।
प्रदीप्तमस्त्रमाग्नेयं ददाहास्य रथं तु तत् ॥ ३१
विरथं विप्लुतं तं तु स गन्धर्वं महाबलः ।
अस्त्रतेजःप्रमूढं च प्रपतन्तमवाङ्मुखम् ॥ ३२
शिरोरुहेषु जग्राह माल्यवत्सु धनञ्जयः ।
भ्रातॄन्प्रति चकर्षाथ सोऽस्त्रपातादचेतसम् ॥३३
युधिष्ठिरं तस्य भार्या प्रपेदे शरणार्थिनी ।
नाम्ना कुम्भीनसी नाम पतित्राणमभीप्सती ३४
गन्धर्व्युवाच ।
त्रायस्व मां महाभाग पतिं चेमं विमुञ्च मे ।

पूर्वरात्रागमेषु पश्चिमायां दिशि अर्धास्तमितार्कमण्डलरूपा या संध्या संरज्यते रक्ता भवति तस्यां मुहूर्तं प्रस्थानकालमशीतिभिर्लवैर्निमेषार्धैर्हीनं प्रचक्षते ॥ ८ ॥ तदेव मुहूर्तं यक्षादीनां कर्मचारेषु विहितमन्यन्मनुष्याणां कर्मचारेषु स्मृतमित्यन्वयः । संध्यायामशीतिलवोपरि रात्रौ यक्षादीनामेव संचारकालः अन्यदहर्मनुष्याणामित्यर्थः ॥ ९ ॥ शृङ्गिणः अभिचारिकाः ॥ १५ ॥ एकवप्रा एकमाकाशरूपं वप्रं यस्याः सा ॥ २१ ॥

गन्धर्वी शरणं प्राप्ता नाम्ना कुम्भीनसी प्रभो ३५
युधिष्ठिर उवाच ।
युद्धे जितं यशोहीनं स्त्रीनाथमपराक्रमम् ।
को निहन्याद्रिपुं तात मुञ्चेमं रिपुसूदन ॥ ३६
अर्जुन उवाच ।
जीवितं प्रतिपद्यस्व गच्छ गन्धर्व मा शुचः ।
प्रदिशत्यभयं तेऽद्य कुरुराजो युधिष्ठिरः ॥ ३७
गन्धर्व उवाच ।
जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारपर्णताम् ।
यशोहीनं न च श्लाघ्यं स्वं नाम जनसंसदि॥३८
साध्विमं लब्धवाँल्लाभं योऽहं दिव्यास्त्रधारिणम्।
गान्धर्व्या माययेच्छामि संयोजयितुमर्जुनम्॥३९
अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः ।
सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवं ४०
संभृता चैव विद्येयं तपसेह मया पुरा ।
निवेदयिष्ये तामद्य प्राणदाय महात्मने ॥ ४१
संस्तम्भयित्वा तरसा जितं शरणमागतम् ।
यो रिपुं योजयेत्प्राणैः कल्याणं किं न सोऽर्हति॥
चाक्षुषी नाम विद्येयं यां सोमाय ददौ मनुः ।
ददौ स विश्वावसवे मम विश्वावसुर्ददौ ॥ ४३
सेयं कापुरुषं प्राप्ता गुरुदत्ता प्रणश्यति ।
आगमोऽस्या मया प्रोक्तो वीर्यं प्रतिनिबोध मे ४४
यच्चक्षुषा द्रष्टुमिच्छेत्त्रिषु लोकेषु किंचन ।
तत्पश्येद्यादृशं चेच्छेत्तादृशं द्रष्टुमर्हति ॥ ४५
एकपादेन षण्मासान्स्थितो विद्यां लभेदिमाम् ।
अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रते कृते ॥४६
विद्यया ह्यनया राजन्वयं नृभ्यो विशेषिताः ।
अविशिष्टाश्च देवानामनुभावप्रदर्शिनः ॥ ४७
गन्धर्वजानामश्वानामहं पुरुषसत्तम ।
भ्रातृभ्यस्तव तुभ्यं च पृथग्दाता शतं शतं॥४८
देवगन्धर्ववाहास्ते दिव्यवर्णा मनोजवाः ।
क्षीणाक्षीणा भवन्त्येते न हीयन्ते च रंहसः॥४९
पुरा कृतं महेन्द्रस्य वज्रं वृत्रनिबर्हणम् ।
दशधा शतधा चैव तच्छीर्णं वृत्रमूर्धनि ॥ ५०
ततो भागीकृतो देवैर्वज्रभाग उपास्यते ।
लोके यशोधनं किंचित्सैव वज्रतनुः स्मृता॥५१
वज्रपाणिर्ब्राह्मणः स्यात्क्षत्रं वज्ररथं स्मृतम् ।
वैश्या वै दानवज्राश्च कर्मवज्रा यवीयसः ॥ ५२
क्षत्रवज्रस्य भागेन अवध्या वाजिनः स्मृताः ।
रथाङ्गं वडबा सूते शूराश्चाश्वेषु ये मताः ॥ ५३
कामवर्णाः कामजवाः कामतः समुपस्थिताः ।
इति गन्धर्वजाः कामं पूरयिष्यन्ति मे हयाः ५४
अर्जुन उवाच ।
यदि प्रीतेन मे दत्तं संशये जीवितस्य वा ।
विद्याधनं श्रुतं वाऽपि न तद्गन्धर्व रोचये ॥ ५५
गन्धर्व उवाच ।
संयोगो वै प्रीतिकरो महत्सु प्रतिदृश्यते ।
जीवितस्य प्रदानेन प्रीतो विद्यां ददामि ते॥५६
त्वत्तोऽप्यहं ग्रहीष्यामि अस्त्रमाग्नेयमुत्तमम् ।
तथैव योग्यं बीभत्सो चिराय भरतर्षभ ॥ ५७
अर्जुन उवाच ।
त्वत्तोऽस्त्रेण वृणोम्यश्वान्संयोगः शाश्वतोऽस्तु नौ।
सखे तद्ब्रूहि गन्धर्व युष्मभ्यो यद्भयं भवेत् ॥५८
कारणं ब्रूहि गन्धर्व किं तद्येन स्म धर्षिताः ।
यान्तो वेदविदः सर्वे सन्तो रात्रावरिन्दमाः ५९
गन्धर्व उवाच ।
अनग्नयोऽनाहुतयो न च विप्रपुरस्कृताः ।
यूयं ततो धर्षिताः स्थ मया वै पाण्डुनन्दनाः६०
'यक्षराक्षसगन्धर्वपिशाचपतगोरगाः ।
धर्षयन्ति नरव्याघ्र न ब्राह्मणपुरस्कृतान् ॥ ६१

---

स्त्री नाथो रक्षिता यस्य तम् ॥ ३६ ॥ अङ्गारवद्भास्वरं दुःस्पर्शं च पर्णं वाहनं रथो यस्य सोऽङ्गारपर्णस्तस्य भावस्तत्ताम् ॥३८॥ क्षीणाश्चाऽक्षीणाश्च क्षीणाक्षीणाः वृद्धास्तरुणा वा एते न भवन्ति रंहसो वेगाच्च न हीयन्ते इति नकारानुषङ्गेण योज्यम् । क्षीणे क्षीणे इति घ. पाठः ॥ ४९ ॥ तस्य भागः पृथग्भूतः सर्वैर्भूतैरुपास्यते इति ङ. पाठः ॥ ५१ ॥ वज्रपाणिः पाणिः वज्रं यस्य सः । एवमेव वज्ररथमित्यपि ॥ ५२ ॥ रथाङ्गं च तथा सूतो धनुश्च भरतर्षभ इति ङ. पाठः ॥ ५३ ॥ तथैव सख्यं बीभत्सो इति ङ. पाठः ॥ ५७ ॥ अस्त्रेणास्त्रं वृणे त्वत्तः- यद्भयं त्यजेत् इति ङ. पाठः ॥ ५८ ॥ अनग्नयो दारहीनत्वात् । अनाहुतयः समावृतत्वात् । आश्रमविशेषहीनो ब्राह्मणो धर्षणीय इत्यर्थः ॥ ६० ॥

जानतापि मया तस्मात्तेजश्चाभिजनं च वः ।
इयमग्निमतां श्रेष्ठ धर्षिता वै पुरागतिः ॥ ६२
को हि वस्त्रिषु लोकेषु न वेद भरतर्षभ ।
स्वैर्गुणैर्विस्तृतं श्रीमद्यशोऽग्र्यं भूरिवर्चसाम्' ६३
यक्षराक्षसगन्धर्वाः पिशाचोरगदानवाः ।
विस्तरं कुरुवंशस्य धीमन्तः कथयन्ति ते ॥ ६४
नारदप्रभृतीनां तु देवर्षीणां मया श्रुतम् ।
गुणान्कथयतां वीर पूर्वेषां तव धीमताम् ॥ ६५
स्वयं चापि मया दृष्टश्चरता सागराम्बराम् ।
इमां वसुमतीं कृत्स्नां प्रभावः सुकुलस्य ते ॥ ६६
वेदे धनुषि चाचार्यमभिजानामि तेऽर्जुन ।
विश्रुतं त्रिषु लोकेषु भारद्वाजं यशस्विनम् ॥ ६७
'सर्ववेदविदां श्रेष्ठं सर्वशस्त्रभृतां वरम् ।
द्रोणमिष्वस्त्रकुशलं धनुष्यङ्गिरसां वरम् ॥' ६८
धर्मं वायुं च शक्रं च विजानाम्यश्विनौ तथा ।
पाण्डुं च कुरुशार्दूल षडेतान्कुरुवर्धनान् ।
पितॄनेतानहं पार्थ देवमानुषसत्तमान् ॥ ६९
दिव्यात्मानो महात्मानः सर्वशस्त्रभृतां वराः ।
भवन्तो भ्रातरः शूराः सर्वे सुचरितव्रताः ॥ ७०
उत्तमां च मनोबुद्धिं भवतां भावितात्मनाम् ।
जानन्नपि च वः पार्थ कृतवानिह धर्षणाम् ॥ ७१
स्त्रीसकाशे च कौरव्य न पुमान्क्षन्तुमर्हति ।
धर्षणामात्मनः पश्यन्बाहुद्रविणमाश्रितः ॥ ७२
नक्तं च बलमस्माकं भूय एवाभिवर्धते ।
यतस्ततो मां कौन्तेय सदारं मन्युराविशत् ॥ ७३
सोऽहं त्वयेह विजितः सङ्ख्ये तापत्यवर्धन ।
येन तेनेह विधिना कीर्त्यमानं निबोध मे ॥ ७४
ब्रह्मचर्यं परो धर्मः स चापि नियतस्त्वयि ।
यस्मात्तस्मादहं पार्थ रणेऽस्मि विजितस्त्वया ७५
यस्तु स्यात्क्षत्रियः कश्चित्कामवृत्तः परन्तप ।
नक्तं च युधि युध्येत न स जीवेत्कथंचन ॥ ७६
यस्तु स्यात्कामवृत्तोऽपि पार्थ ब्रह्मपुरस्कृतः ।
जयेन्नक्तंचरान्सर्वान्स पुरोहितधूर्गतः ॥ ७७
तस्मात्तापत्य यत्किंचिन्नृणां श्रेय इहेप्सितम् ।
तस्मिन्कर्मणि योक्तव्या दान्तात्मानः पुरोहिताः
वेदे षडङ्गे निरताः शुचयः सत्यवादिनः ।
धर्मात्मानः कृतात्मानः स्युर्नृपाणां पुरोहिताः ॥
जयश्च नियतो राज्ञः स्वर्गश्च तदनन्तरम् ।
यस्य स्याद्धर्मविद्वाग्मी पुरोधाः शीलवाञ्शुचिः ॥
लाभं लब्धुमलब्धं वा लब्धं वा परिरक्षितुम् ।
पुरोहितं प्रकुर्वीत राजा गुणसमन्वितम् ॥ ८१
पुरोहितमते तिष्ठेद्य इच्छेद्भूतिमात्मनः ।
प्राप्तुं वसुमतीं सर्वां सर्वशः सागराम्बराम् ॥ ८२
न हि केवलशौर्येण तापत्याभिजनेन च ।
जयेदब्राह्मणः कश्चिद्भूमिं भूमिपतिः क्वचित् ॥ ८३
तस्मादेवं विजानीहि कुरूणां वंशवर्धन ।
ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरम् ॥ ८४

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

## सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

सूर्यकन्यायाः तपत्या उपाख्यानम्—स्वभक्ताय संवरणाय स्वकन्यां दातुं सवितुर्निश्चयः ॥ १ ॥ मृगयार्थं गतस्य संवरणस्य गिरौ तपतीदर्शनेन कामोत्पत्तिः ॥ २ ॥ राजनि तया सह भाषितुं प्रवृत्ते तपत्या अन्तर्धानम् ॥ ३ ॥

अर्जुन उवाच ।
तापत्य इति यद्वाक्यमुक्तवानसि मामिह ।
तदहं ज्ञातुमिच्छामि तापत्यार्थं विनिश्चितम् ॥ १
तपती नाम का चैषा तापत्या यत्कृते वयम् ।

कामवृत्तः कृतदारः ॥ ७६ ॥ लाभं लब्धव्यं धनं । अलब्धस्य च लाभाय लब्धस्य परिरक्षणे इति ङ. पाठः ॥ ८१ ॥ षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

यत् यस्मात् तत् तस्मात् । तापत्यार्थं तापत्यशब्दार्थम् ॥ १ ॥ सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

कौन्तेया हि वयं साधो तत्त्वमिच्छामि वेदितुम्२
वैशंपायन उवाच ।
एवमुक्तः स गन्धर्वः कुन्तीपुत्रं धनञ्जयम् ।
विश्रुतं त्रिषु लोकेषु श्रावयामास वै कथाम् ॥ ३
हन्त ते कथयिष्यामि कथामेतां मनोरमाम् ।
यथावदखिलां पार्थ सर्वबुद्धिमतां वर ॥ ४
उक्तवानसि येन त्वां तापत्य इति यद्वचः ।
तत्तेऽहं कथयिष्यामि शृणुष्वैकमना भव ॥ ५
य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा ।
एतस्य तपती नाम बभूव सदृशी सुता ॥ ६
विवस्वतो वै देवस्य सावित्र्यवरजा विभो ।
विश्रुता त्रिषु लोकेषु तपती तपसा युता ॥ ७
न देवी नासुरी चैव न यक्षी न च राक्षसी ।
नाप्सरा न च गन्धर्वी तथा रूपेण काचन ॥ ८
सुविभक्तानवद्याङ्गी स्वसितायतलोचना ।
स्वाचारा चैव साध्वी च सुवेषा चैव भामिनी ९
न तस्याः सदृशं कंचित्त्रिषु लोकेषु भारत ।
भर्तारं सविता मेने रूपशीलगुणश्रुतैः ॥ १०
संप्राप्तयौवनां पश्यन्देयां दुहितरं तु ताम् ।
'अदृष्टवर्यां तु तां श्यामां सविता रूपशालिनीम् ।'
नोपलेभे ततः शान्तिं संप्रदानं विचिन्तयन् ॥ ११
अथर्क्षपुत्रः कौन्तेय कुरूणामृषभो बली ।
सूर्यमाराधयामास नृपः संवरणस्तदा ॥ १२
अर्घ्यमाल्योपहाराद्यैर्गन्धैश्च नियतः शुचिः ।
नियमैरुपवासैश्च तपोभिर्विविधैरपि ॥ १३
शुश्रूषुरनहंवादी शुचिः पौरवनन्दन ।
अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान् ॥ १४
ततः कृतज्ञं धर्मज्ञं रूपेणासदृशं भुवि ।
तपत्याः सदृशं मेने सूर्यः संवरणं पतिम् ॥ १५
दातुमैच्छत्ततः कन्यां तस्मै संवरणाय ताम् ।
नृपोत्तमाय कौरव्य विश्रुताभिजनाय च ॥ १६
यथा हि दिवि दीप्तांशुः प्रभासयति तेजसा ।
तथा भुवि महिपालो दीप्त्या संवरणोऽभवत् ॥ १७
यथाऽर्चयन्ति चादित्यमुद्यन्तं ब्रह्मवादिनः ।
तथा संवरणं पार्थ ब्राह्मणावरजाः प्रजाः ॥ १८
स सोममति कान्तत्वादादित्यमति तेजसा ।
बभूव नृपतिः श्रीमान्सुहृदां दुर्हृदामपि ॥ १९
एवंगुणस्य नृपतेस्तथावृत्तस्य कौरव ।
तस्मै दातुं मनश्चक्रे तपतीं तपनः स्वयम् ॥ २०
स कदाचिदथो राजा श्रीमानमितविक्रमः ।
चचार मृगयां पार्थ पर्वतोपवने किल ॥ २१
चरतो मृगयां तस्य क्षुत्पिपासासमन्वितः ।
ममार राज्ञः कौन्तेय गिरावप्रतिमो हयः ॥ २२
स मृताश्वश्चरन्पार्थ पद्भ्यामेव गिरौ नृपः ।
ददर्शासदृशीं लोके कन्यामायतलोचनाम् ॥२३
स एक एकामासाद्य कन्यां परबलार्दनः ।
तस्थौ नृपतिशार्दूलः पश्यन्नविचलेक्षणः ॥ २४
स हि तां तर्कयामास रूपतो नृपतिः श्रियम् ।
पुनः संतर्कयामास रवेर्भ्रष्टामिव प्रभाम् ॥ २५
वपुषा वर्चसा चैव शिखामिव विभावसोः ।
प्रसन्नत्वेन कान्त्या च चन्द्ररेखामिवामलाम् ॥२६
गिरिपृष्ठे तु सा यस्मिन्स्थिता स्वसितलोचना ।
विभ्राजमाना शुशुभे प्रतिमेव हिरण्मयी ॥ २७
तस्या रूपेण स गिरिर्वेषेण च विशेषतः ।
ससवृक्षक्षुपलतो हिरण्मय इवाभवत् ॥ २८
अवमेने च तां दृष्ट्वा सर्वलोकेषु योषितः ।
अवाप्तं चात्मनो मेने स राजा चक्षुषः फलं ॥२९
जन्मप्रभृति यत्किंचिद्दृष्टवान्स महीपतिः ।
रूपं न सदृशं तस्यास्तर्कयामास किंचन ॥ ३०
तया बद्धमनश्चक्षुः पाशैर्गुणमयैस्तदा ।
न चचाल ततो देशाद्बुबुधे न च किंचन ॥ ३१
अस्या नूनं विशालाक्ष्याः सदेवासुरमानुषम् ।
लोकं निर्मथ्य धात्रेदं रूपमाविष्कृतं कृतम् ॥३२
एवं संतर्कयामास रूपद्रविणसंपदा ।
कन्यामसदृशीं लोके नृपः संवरणस्तदा ॥ ३३
तां च दृष्ट्वैव कल्याणीं कल्याणाभिजनो नृपः ।
जगाम मनसा चिन्तां कामबाणेन पीडितः ३४
दह्यमानः स तीव्रेण नृपतिर्मन्मथाग्निना ।

अप्रगल्भां प्रगल्भस्तां तदोवाच मनोहराम् ॥३५
काऽसि कस्यासि रम्भोरु किमर्थं चेह तिष्ठसि ।
कथं च निर्जनेऽरण्ये चरस्येका शुचिस्मिते ॥ ३६
त्वं हि सर्वानवद्याङ्गी सर्वाभरणभूषिता ।
विभूषणमिवैतेषां भूषणानामभीप्सितम् ॥ ३७
न देवीं नासुरीं चैव न यक्षीं न च राक्षसीम् ।
न च भोगवतीं मन्ये न गन्धर्वीं न मानुषीम् ३८
या हि दृष्टा मया काश्चिच्छ्रुता वाऽपि वराङ्गनाः ।
न तासां सदृशीं मन्ये त्वामहं मत्तकाशिनि ३९
दृष्ट्वैव चारुवदने चन्द्रात्कान्ततरं तव ।
वदनं पद्मपत्राक्षं मां मथ्नातीव मन्मथः ॥ ४०
एवं तां स महीपालो बभाषे न तु सा तदा ।
कामार्तं निर्जनेऽरण्ये प्रत्यभाषत किंचन ॥ ४१
ततो लालप्यमानस्य पार्थिवस्यायतेक्षणा ।
सौदामिनीव चाभ्रेषु तत्रैवान्तरधीयत ॥ ४२
तामन्वेष्टुं स नृपतिः परिचक्राम सर्वतः ।
वनं वनजपत्राक्षीं भ्रमन्नुन्मत्तवत्तदा ॥ ४३
अपश्यमानः स तु तां बहु तत्र विलप्य च ।
निश्चेष्टः पार्थिवश्रेष्ठो मुहूर्तं स व्यतिष्ठत ॥ ४४

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

---

## अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

भूतले पतितं राजानं दृष्ट्वा तत्समीपे तपत्या आगमनम् ॥ १ ॥ तयोः संवादः ॥ २ ॥

गन्धर्व उवाच ।
अथ तस्यामदृश्यायां नृपतिः काममोहितः ।
पातनः शत्रुसङ्घानां पपात धरणीतले ॥ १
तस्मिन्निपतिते भूमावथ सा चारुहासिनी ।
पुनः पीनायतश्रोणी दर्शयामास तं नृपम् ॥ २
अथाबभाषे कल्याणी वाचा मधुरया नृपम् ।
तं कुरूणां कुलकरं कामाभिहतचेतसम् ॥ ३
उवाच मधुरं वाक्यं तपती हसतीव सा ।
उत्तिष्ठोत्तिष्ठ भद्रं ते न त्वमर्हस्यरिन्दम ॥ ४
मोहं नृपतिशार्दूल गन्तुमाविष्कृतः क्षितौ ।
एवमुक्तोऽथ नृपतिर्वाचा मधुरया तदा ॥ ५
ददर्श विपुलश्रोणीं तामेवाभिमुखे स्थिताम् ।
अथ तामसितापाङ्गीमाबभाषे स पार्थिवः ॥ ६
मन्मथाग्निपरीतात्मा सन्दिग्धाक्षरया गिरा ।
साधु त्वमसितापाङ्गि कामार्तं मत्तकाशिनि ॥ ७
भजस्व भजमानं मां प्राणा हि प्रजहन्ति माम् ।
त्वदर्थं हि विशालाक्षि मामयं निशितैः शरैः ॥ ८
कामः कमलगर्भाभे प्रतिविध्यन्न शाम्यति ।
दष्टमेवमनाक्रन्दे भद्रे काममहाहिना ॥ ९
सा त्वं पीनायतश्रोणी मामाप्नुहि वरानने ।
त्वदधीना हि मे प्राणाः किन्नरोद्गीतभाषिणि १०
चारुसर्वानवद्याङ्गि पद्मेन्दुप्रतिमानने ।
न ह्यहं त्वदृते भीरु शक्ष्यामि खलु जीवितुम् ११
कामः कमलपत्राक्षि प्रतिविध्यति मामयम् ।
तस्मात्कुरु विशालाक्षि मय्यनुक्रोशमङ्गने ॥ १२
भक्तं मामसितापाङ्गि न परित्यक्तुमर्हसि ।
त्वं हि मां प्रीतियोगेन त्रातुमर्हसि भामिनि १३
त्वद्दर्शनकृतस्नेहं मनश्चलति मे भृशम् ।
न त्वां दृष्ट्वा पुनश्चान्यां द्रष्टुं कल्याणि रोचते॥१४
प्रसीद वशगोऽहं ते भक्तं मां भज भामिनि ।
दृष्ट्वैव त्वां वरारोहे मन्मथो भृशमङ्गने ॥ १५
अन्तर्गतं विशालाक्षि विध्यति स पतत्रिभिः ।
मन्मथाग्निसमुद्भूतं दाहं कमललोचने ॥ १६
प्रीतिसंयोगयुक्ताभिरद्भिः प्रह्लादयस्व मे ।
पुष्पायुधं दुराधर्षं प्रचण्डशरकार्मुकम् ॥ १७
त्वद्दर्शनसमुद्भूतं विध्यन्तं दुःसहैः शरैः ।

---

प्रजहन्ति प्रजहति ॥ ८ ॥ अनाक्रन्दे अत्रातरि काले ॥९॥

उपशामय कल्याणि आत्मदानेन भामिनि॥१८
गान्धर्वेण विवाहेन मामुपैहि वराङ्गने ।
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते१९
तपत्युवाच ।
नाहमीशाऽऽत्मनो राजन्कन्या पितृमती ह्यहम् ।
मयि चेदस्ति ते प्रीतिर्याचस्व पितरं मम ॥ २०
यथा हि ते मया प्राणाः संभृताश्च नरेश्वर ।
दर्शनादेव भूयस्त्वं तथा प्राणान्ममाहरः ॥ २१
न चाहमीशा देहस्य तस्मान्नृपतिसत्तम ।
समीपं नोपगच्छामि न स्वतन्त्रा हि योषितः२२
का हि सर्वेषु लोकेषु विश्रुताभिजनं नृपम् ।
कन्या नाभिलषेन्नाथं भर्तारं भक्तवत्सलम्॥२३
तस्मादेवं गते काले याचस्व पितरं मम ।
आदित्यं प्रणिपातेन तपसा नियमेन च ॥ २४
स चेत्कामयते दातुं तव मामरिमर्दन ।
भविष्याम्यद्य ते राजन्सततं वशवर्तिनी ॥ २५
अहं हि तपती नाम सावित्र्यवरजा सुता ।
अस्य लोकप्रदीपस्य सवितुः क्षत्रियर्षभ ॥ २६

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

## एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

पुनरन्तर्हितायां तपत्यां मोहितस्य संवरणस्य समीपे अमात्यादीनामागमनं ॥ १ ॥ अमात्येनाश्वासितस्य राज्ञः सूर्योपासनसमये वसिष्ठस्यागमनं ॥ २ ॥ सूर्यसमीपं गत्वा वसिष्ठेनादित्यस्तुतिकरणं ॥ ३ ॥ स्तुत्या तुष्टेन सूर्येण संवरणार्थे वसिष्ठाय तपतीदानं ॥ ४ ॥ तस्मिन्नेव गिरौ तपतीसंवरणयोर्विवाहः ॥ ५ ॥ तया सह तत्रैव रममाणस्य संवरणस्य राज्ये द्वादशवार्षिक्यनावृष्टिः ॥ ६ ॥ वसिष्ठेनानावृष्टिनिवर्तनं ॥ ७ ॥ तपत्युपाख्यानोपसंहारः ॥ ८ ॥

गन्धर्व उवाच ।
एवमुक्त्वा ततस्तूर्णं जगामोर्ध्वमनिन्दिता ।
'तपतीतपतीत्येव विललापातुरो नृपः ॥ १
प्रास्खलच्चासकृद्राजा पुनरुत्थाय धावति ।
धावमानस्तु तपतीमदृष्ट्वैव महीपतिः ।'
स तु राजा पुनर्भूमौ तत्रैव निपपात ह ॥ २
अन्वेषमाणः सबलस्तं राजानं नृपोत्तमम् ।
अमात्यः सानुयात्रश्च तं ददर्श महावने ॥ ३
क्षितौ निपतितं काले शक्रध्वजमिवोच्छ्रितम् ।
तं हि दृष्ट्वा महेष्वासं निरस्तं पतितं भुवि ॥ ४
बभूव सोऽस्य सचिवः संप्रदीप्त इवाग्निना ।
त्वरया चोपसङ्गम्य स्नेहादागतसंभ्रमः ॥ ५
तं समुत्थापयामास नृपतिं काममोहितम् ।
भूतलाद्भूमिपालेशं पितेव पतितं सुतम् ॥ ६
प्रज्ञया वयसा चैव वृद्धः कीर्त्या नयेन च ।
अमात्यस्तं समुत्थाप्य बभूव विगतज्वरः ॥ ७
उवाच चैनं कल्याण्या वाचा मधुरयोत्थितम् ।
मा भैर्मनुजशार्दूल भद्रमस्तु तवानघ ॥ ८
क्षुत्पिपासापरिश्रान्तं तर्कयामास वै नृपम् ।
पतितं पातनं सङ्ख्ये शात्रवाणां महीतले ॥ ९
वारिणा च सुशीतेन शिरस्तस्याभ्यषेचयत् ।
अस्पृशन्मुकुटं राज्ञः पुण्डरीकसुगन्धिना ॥ १०
ततः प्रत्यागतप्राणस्तद्बलं बलवान्नृपः ।
सर्वं विसर्जयामास तमेकं सचिवं विना ॥ ११
ततस्तस्याज्ञया राज्ञो विप्रतस्थे महद्बलम् ।
स तु राजा गिरिप्रस्थे तस्मिन्पुनरुपाविशत्॥ १२
ततस्तस्मिन् गिरिवरे शुचिर्भूत्वा कृताञ्जलिः ।
आरिराधयिषुः सूर्यं तस्थावूर्ध्वमुखः क्षितौ ॥१३
जगाम मनसा चैव वसिष्ठमृषिसत्तमम् ।
पुरोहितममित्रघ्नं तदा संवरणो नृपः ॥ १४
नक्तन्दिनमथैकत्र स्थिते तस्मिञ्जनाधिपे ।
अथाजगाम विप्रर्षिस्तदा द्वादशमेऽहनि ॥ १५
स विदित्वैव नृपतिं तपत्या हृतमानसम् ।
दिव्येन विधिना ज्ञात्वा भावितात्मा महानृषिः ॥

मुकुटं तत्स्थानं ललाटम् ॥ १० ॥ द्वादशमे द्वादशसंख्यया मिते ॥ १५ ॥ दिव्येन विधिना योगबलेन ॥ १६ ॥

तथा तु नियतात्मानं तं नृपं मुनिसत्तमः ।
आबभाषे स धर्मात्मा तस्यैवार्थचिकीर्षया ॥ १७
स तस्य मनुजेन्द्रस्य पश्यतो भगवानृषिः ।
ऊर्ध्वमाचक्रमे द्रष्टुं भास्करं भास्करद्युतिः ॥ १८
'योजनानां तु नियुतं क्षणाद्गत्वा तपोधनः ।'
सहस्रांशुं ततो विप्रः कृताञ्जलिरुपस्थितः ।
वसिष्ठोहमिति प्रीत्या स चात्मानं न्यवेदयत् ॥ १९
तमुवाच महातेजा विवस्वान्मुनिसत्तमम् ।
महर्षे स्वागतं तेऽस्तु कथयस्व यथेप्सितम् ॥ २०
यदिच्छसि महाभाग मत्तः प्रवदतां वर ।
तत्ते दद्यामभिप्रेतं यद्यपि स्यात्सुदुर्लभम् ॥ २१
एवमुक्तः स तेनर्षिर्वसिष्ठः संस्तुवन्गिरा ।
प्रणिपत्य विवस्वन्तं भानुमन्तमथाब्रवीत् ॥ २२
'योजनानां चतुष्षष्टिं निमेषात्त्रिशतं तथा ।
अश्वैर्गच्छति नित्यं यस्तत्पार्श्वस्थोऽब्रवीदिदम् २३
वसिष्ठ उवाच ।
अजाय लोकत्रयपावनाय
भूतात्मने गोपतये वृषाय ।
सूर्याय सर्गप्रलयालयाय
नमो महाकारुणिकोत्तमाय ॥ २४
विवस्वते ज्ञानभृतेऽन्तरात्मने
जगत्प्रदीपाय जगद्धितैषिणे ।
स्वयंभुवे दीप्तसहस्रचक्षुषे
सुरोत्तमायामिततेजसे नमः ॥ २५
नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चनारायणशङ्करात्मने ॥ २६
सूर्य उवाच ।
संस्तुतो वरदः सोऽहं वरं वरय सुव्रत ।
स्तुतिस्त्वयोक्ता भक्तानां जप्येयं वरदोस्म्यहम्' ॥
वसिष्ठ उवाच ।
यैषा ते तपती नाम सावित्र्यवरजा सुता ।
तां त्वां संवरणस्यार्थे वरयामि विभावसो ॥ २८
स हि राजा बृहत्कीर्तिर्धर्मार्थविदुदारधीः ।
युक्तः संवरणो भर्ता दुहितुस्ते विहङ्गम ॥ २९
गन्धर्व उवाच ।
इत्युक्तः स तदा तेन ददानीत्येव निश्चितः ।
प्रत्यभाषत तं विप्रं प्रतिनन्द्य दिवाकरः ॥ ३०
वरः संवरणो राज्ञां त्वमृषीणां वरो मुने ।
तपती योषितां श्रेष्ठा किमन्यत्रापवर्जनात् ॥ ३१
ततः सर्वानवद्याङ्गीं तपतीं तपनः स्वयम् ।
ददौ संवरणस्यार्थे वसिष्ठाय महात्मने ॥ ३२
प्रतिजग्राह तां कन्यां महर्षिस्तपतीं तदा ।
वसिष्ठोऽथ विसृष्टस्तु पुनरेवाजगाम ह ॥ ३३
यत्र विख्यातकीर्तिः स कुरूणामृषभोऽभवत् ।
स राजा मन्मथाविष्टस्तद्गतेनान्तरात्मना ॥ ३४
दृष्ट्वा च देवकन्यां तां तपतीं चारुहासिनीम् ।
वसिष्ठेन सहायान्तीं संहृष्टोऽभ्यधिकं बभौ ॥ ३५
रुरुचे साऽधिकं सुभ्रूरापतन्ती नभस्तलात् ।
सौदामनीव विभ्रष्टा द्योतयन्ती दिशस्त्विषा ॥ ३६
कृच्छ्राद्द्वादशरात्रे तु तस्य राज्ञः समाहिते ।
आजगाम विशुद्धात्मा वसिष्ठो भगवानृषिः ॥ ३७
तपसाऽऽराध्य वरदं देवं गोपतिमीश्वरम् ।
लेभे संवरणो भार्यां वसिष्ठस्यैव तेजसा ॥ ३८
ततस्तस्मिन्गिरिश्रेष्ठे देवगन्धर्वसेविते ।
जग्राह विधिवत्पाणिं तपत्याः स नरर्षभः ॥ ३९
वसिष्ठेनाभ्यनुज्ञातस्तस्मिन्नेव धराधरे ।
सोऽकामयत राजर्षिर्विहर्तुं सह भार्यया ॥ ४०
ततः पुरे च राष्ट्रे च वनेषूपवनेषु च ।
आदिदेश महीपालस्तमेव सचिवं तदा ॥ ४१
नृपतिं त्वभ्यनुज्ञाप्य वसिष्ठोऽथापचक्रमे ।
सोऽथ राजा गिरौ तस्मिन्विजहारामरो यथा ॥ ४२
ततो द्वादशवर्षाणि काननेषु वनेषु च ।
रेमे तस्मिन्गिरौ राजा तयैव सह भार्यया ॥ ४३
तस्य राज्ञः पुरे तस्मिन्समा द्वादश सत्तम ।
न ववर्ष सहस्राक्षो राष्ट्रे चैवास्य भारत ॥ ४४
ततस्तस्यामनावृष्ट्यां प्रवृत्तायामरिन्दम ।

प्रजाः क्षयमुपाजग्मुः सर्वाः सस्थाणुजङ्गमाः॥४५
तस्मिंस्तथाविधे काले वर्तमाने सुदारुणे ।
नावश्यायः पपातोर्व्यां ततः सस्यानि नाऽरुहन्
ततो विभ्रान्तमनसो जनाः क्षुद्भयपीडिताः ।
गृहाणि संपरित्यज्य बभ्रमुः प्रदिशो दिशः॥४७
ततस्तस्मिन्पुरे राष्ट्रे त्यक्तदारपरिग्रहाः ।
परस्परममर्यादाः क्षुधार्ता जघ्निरे जनाः ॥ ४८
तत्क्षुधार्तैर्निरानन्दैः शवभूतैस्तथा नरैः ।
अभवत्प्रेतराजस्य पुरं प्रेतैरिवावृतम् ॥ ४९
ततस्तत्तादृशं दृष्ट्वा स एव भगवानृषिः ।
अभ्याद्रवत धर्मात्मा वसिष्ठो मुनिसत्तमः ॥५०
तं च पार्थिवशार्दूलमानयामास तत्पुरम् ।
तपत्या सहितं राजन्वर्षे द्वादशमे गते ।
ततः प्रवृष्टस्तत्रासीद्यथापूर्वं सुरारिहा ॥ ५१
तस्मिन्नृपतिशार्दूले प्रविष्टे नगरं पुनः ।
प्रववर्ष सहस्राक्षः सस्यानि जनयन्प्रभुः ॥ ५२
ततः सराष्ट्रं मुमुदे तत्पुरं परया मुदा ।
तेन पार्थिवमुख्येन भावितं भावितात्मना ॥५३
ततो द्वादश वर्षाणि पुनरीजे नराधिपः ।
तपत्या सहितः पत्न्या यथा शच्या मरुत्पतिः॥५४
गन्धर्व उवाच ।
एवमासीन्महाभागा तपती नाम पौर्विकी ।
तव वैवस्वती पार्थ तापत्यस्त्वं यया मतः ॥ ५५
तस्यां संजनयामास कुरुं संवरणो नृपः ।
तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्जुन ॥ ५६

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

---

## नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

गन्धर्वेण वसिष्ठमाहात्म्यकथनपूर्वकं पाण्डवानां पुरोहितसंग्रहणोपदेशः ॥ १ ॥

वैशंपायन उवाच ।
स गन्धर्ववचः श्रुत्वा तत्तदा भरतर्षभ ।
अर्जुनः परया भक्त्या पूर्णचन्द्र इवाबभौ ॥ १
उवाच च महेष्वासो गन्धर्वं कुरुसत्तमः ।
जातकौतूहलोऽतीव वसिष्ठस्य तपोबलात् ॥ २
वसिष्ठ इति तस्यैतदृषेर्नाम त्वयेरितम् ।
एतदिच्छाम्यहं श्रोतुं यथावत्तद्वदस्व मे ॥ ३
य एष गन्धर्वपते पूर्वेषां नः पुरोहितः ।
आसीदेतन्ममाचक्ष्व क एष भगवानृषिः ॥ ४
गन्धर्व उवाच ।
ब्रह्मणो मानसः पुत्रो वसिष्ठोऽरुन्धतीपतिः ।
तपसा निर्जितौ शश्वदजेयावमरैरपि ॥ ५
कामक्रोधावुभौ यस्य चरणौ समुवाहतुः ।
इन्द्रियाणां वशकरो वशिष्ठ इति चोच्यते ॥ ६
'यथा कामश्च क्रोधश्च निर्जितावजितौ नरैः ।
जितारयो जिता लोकाः पन्थानश्च जिता दिशः'
यस्तु नोच्छेदनं चक्रे कुशिकानामुदारधीः ।
विश्वामित्रापराधेन धारयन्मन्युमुत्तमम् ॥ ८
पुत्रव्यसनसंतप्तः शक्तिमानप्यशक्तवत् ।
विश्वामित्रविनाशाय न चक्रे कर्म दारुणम् ॥ ९
मृतांश्च पुनराहर्तुं शक्तः पुत्रान्यमक्षयात् ।
कृतान्तं नातिचक्राम वेलामिव महोदधिः ॥१०
यं प्राप्य विजितात्मानं महात्मानं नराधिपाः ।
इक्ष्वाकवो महीपाला लेभिरे पृथिवीमिमाम् ११
पुरोहितमिमं प्राप्य वसिष्ठमृषिसत्तमम् ।
ईजिरे क्रतुभिश्चैव नृपास्ते कुरुनन्दन ॥ १२
स हि तान्याजयामास सर्वान्नृपतिसत्तमान् ।
ब्रह्मर्षिः पाण्डवश्रेष्ठ बृहस्पतिरिवामरान् ॥ १३
तस्माद्धर्मप्रधानात्मा वेदधर्मविदीप्सितः ।

तपोबलात् तपोबलं श्रुत्वा ॥ २ ॥ जितारयः जिता अरय इति च्छेदः ॥ ७ ॥ अपराधेन पुत्रशतवधरूपेण ॥ ८ ॥

नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

ब्राह्मणो गुणवान्कश्चित्पुरोधाः प्रतिदृश्यताम्॥१४
क्षत्रियेणाभिजातेन पृथिवीं जेतुमिच्छता ।
पूर्वं पुरोहितः कार्यः पार्थ राज्याभिवृद्धये ॥ १५
महीं जिगीषता राज्ञा ब्रह्म कार्यं पुरःस्कृतम् ।
तस्मात्पुरोहितः कश्चिद्गुणवान्विजितेन्द्रियः ।
विद्वान्भवतु वो विप्रो धर्मकामार्थतत्त्ववित्॥ १६

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

## एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

वसिष्ठोपाख्याने—विश्वामित्रस्य वसिष्ठाश्रमाभिगमनं ॥ १ ॥ वसिष्ठेन विश्वामित्रस्यातिथ्यकरणं ॥ २ ॥ विश्वामित्रेण वसिष्ठधेनुयाचनं ॥ ३ ॥ वसिष्ठेनादत्ताया धेनोः विश्वामित्रेण बलात्कारेण हरणं ॥ ४ ॥ कुपितया नन्दिन्या सृष्टैः म्लेच्छाद्यैः विश्वामित्रपराजयः ॥ ५ ॥ विश्वामित्रस्य तपसा ब्राह्मण्यप्राप्तिः ॥ ६ ॥

अर्जुन उवाच ।
किंनिमित्तमभूद्वैरं विश्वामित्रवसिष्ठयोः ।
वसतोराश्रमे दिव्ये शंस नः सर्वमेव तत् ॥ १
गन्धर्व उवाच ।
इदं वासिष्ठमाख्यानं पुराणं परिचक्षते ।
पार्थ सर्वेषु लोकेषु यथावत्तन्निबोध मे ॥ २
कान्यकुब्जे महानासीत्पार्थिवो भरतर्षभ ।
गाधीति विश्रुतो लोके कुशिकस्यात्मसंभवः॥३
तस्य धर्मात्मनः पुत्रः समृद्धबलवाहनः ।
विश्वामित्र इति ख्यतो बभूव रिपुमर्दनः ॥ ४
स चचार सहामात्यो मृगयां गहने वने ।
मृगान्विध्यन्वराहांश्च रम्येषु मरुधन्वसु ॥ ५
व्यायामकर्शितः सोऽथ मृगलिप्सुः पिपासितः।
आजगाम नरश्रेष्ठ वसिष्ठस्याश्रमं प्रति ॥ ६
तमागतमभिप्रेक्ष्य वसिष्ठः श्रेष्ठभागृषिः ।
विश्वामित्रं नरश्रेष्ठं प्रतिजग्राह पूजया ॥ ७
पाद्यार्घ्याचमनीयैस्तं स्वागतेन च भारत ।
तथैव परिजग्राह वन्येन हविषा तदा ॥ ८
तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मनः ।
उक्ता कामान्प्रयच्छेति सा कामान्दुदुहे ततः ॥९
'बाष्पाढ्यस्योदनस्यैव राशयः पर्वतोपमाः ।
निष्ठानानि च सूपांश्च दधिकुल्यास्तथैव च॥१०
कूपांश्च घृतसंपूर्णान्गौड्यान्नानि सहस्रशः ।
इक्षून्मधूनि लाजांश्च मैरेयांश्च वरासवान् ॥' ११

मरुधन्वसु मरुसंज्ञकेष्वल्पजलप्रदेशेषु ॥ ५ ॥

ग्राम्यारण्याश्चौषधीश्च दुदुहे पय एव च ।
षड्रसं चामृतनिभं रसायनमनुत्तमम् ॥ १२
भोजनीयानि पेयानि भक्ष्याणि विविधानि च।
लेह्यान्यमृतकल्पानि चोष्याणि च तथार्जुन॥१३
रत्नानि च महार्हाणि वासांसि विविधानि च ।
तैः कामैः सर्वसंपूर्णैः पूजितश्च महिपतिः ॥ १४
सामात्यः सबलश्चैव तुतोष स भृशं तदा ।
षडुन्नतां सुपार्श्वोरुं पृथुपञ्चसमावृताम् ॥ १५
मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् ।
सुवालधिं शङ्कुकर्णां चारुशृङ्गां मनोरमाम् ॥ १६
पुष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य ताम् ।
अभिनन्द्य स तां राजा नन्दिनीं गाधिनन्दनः१७
अब्रवीच्च भृशं तुष्टः स राजा तमृषिं तदा ।
अर्बुदेन गवां ब्रह्मन्मम राज्येन वा पुनः ॥ १८
नन्दिनीं संप्रयच्छस्व भुङ्क्ष्व राज्यं महामुने ।
वसिष्ठ उवाच ।
देवतातिथिपित्रर्थं याज्यार्थं च पयस्विनी ॥१९
अदेया नन्दिनीयं वै राज्येनापि तवानघ ।
विश्वामित्र उवाच ।
'रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः ।'
क्षत्रियोऽहं भवान्विप्रस्तपःस्वाध्यायसाधनः॥२०
ब्राह्मणेषु कुतो वीर्यं प्रशान्तेषु धृतात्मसु ।
अर्बुदेन गवां यस्त्वं न ददासि ममेप्सितम्॥२१
स्वधर्मं न प्रहास्यामि नेष्यामि च बलेन गाम् ।

वसिष्ठ उवाच ।
बलस्थश्चासि राजा च बाहुवीर्यश्च क्षत्रियः ॥२२
यथेच्छसि तथा क्षिप्रं कुरु मा त्वं विचारय ।
गन्धर्व उवाच ।
एवमुक्तस्तथा पार्थ विश्वामित्रो बलादिव ॥ २३
हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गाम् ।
'सा तदा ह्रियमाणा च विश्वामित्रबलैर्बलात् ।'
कशादण्डप्रणुदिता काल्यमाना इतस्ततः ॥ २४
हंभायमाना कल्याणी वसिष्ठस्याथ नन्दिनी ।
आगम्याभिमुखी पार्थ तस्थौ भगवदुन्मुखी॥२५
भृशं च ताड्यमाना वै न जगामाश्रमात्ततः ।
वसिष्ठ उवाच ।
शृणोमि ते रवं भद्रे विनदन्त्याः पुनः पुनः ॥२६
ह्रियसे त्वं बलाद्भद्रे विश्वामित्रेण नन्दिनि ।
किं कर्तव्यं मया तत्र क्षमावान्ब्राह्मणो ह्यहम् २७
गन्धर्व उवाच ।
सा भयान्नन्दिनी तेषां बलानां भरतर्षभ ।
विश्वामित्रभयोद्विग्ना वसिष्ठं समुपागमत् ॥ २८
गौरुवाच ।
कशाग्रदण्डाभिहतां क्रोशन्तीं मामनाथवत् ।
विश्वामित्रबलैर्घोरैर्भगवन् किमुपेक्षसे ॥ २९
गन्धर्व उवाच ।
एवं तस्यां तदा पार्थ धर्षितायां महामुनिः ।
न चुक्षुभे तदा धैर्यान्न चचाल धृतव्रतः ॥ ३०
वसिष्ठ उवाच ।
क्षत्रियाणां बलं तेजो ब्राह्मणानां क्षमा बलम् ।
क्षमा मां भजते यस्माद्गम्यतां यदि रोचते ॥३१
नन्दिन्युवाच ।
किं नु त्यक्ताऽसि भगवन्यदेवं त्वं प्रभाषसे ।
अत्यक्ताऽहं त्वया ब्रह्मन्नेतुं शक्या न वै बलात्॥
वसिष्ठ उवाच ।
न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते
दृढेन दाम्ना बद्धैष वत्सस्ते ह्रियते बलात् ॥ ३३
गन्धर्व उवाच ।
स्थीयतामिति तच्छ्रुत्वा वसिष्ठस्य पयस्विनी ।
ऊर्ध्वाञ्चितशिरोग्रीवा प्रबभौ रौद्रदर्शना ॥ ३४
क्रोधरक्तेक्षणा सा गौर्हंभारवघनस्वना ।
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्वशः ॥ ३५
कशाग्रदण्डाभिहता काल्यमाना ततस्ततः ।
क्रोधरक्तेक्षणा क्रोधं भूय एव समाददे ॥ ३६
आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्बभौ ।
अङ्गारवर्षं मुञ्चन्ती मुहुर्वालधितो महत् ॥ ३७
असृजत्पह्लवान्पुच्छात्प्रस्रवाद्द्राविडाञ्छकान् ।
योनिदेशाच्च यवनाञ्शकृतः शबरान्बहून् ॥ ३८
मूत्रतश्चासृजत्कांश्चिच्छबरांश्चैव पार्श्वतः ।
पौण्ड्रान्किरातान्यवनान्सिंहलान्बर्बरान्खसान् ॥
चिबुकांश्च पुलिन्दांश्च चीनान्हूणान्सकेरलान् ।
ससर्ज फेनतः सा गौर्म्लेच्छान्बहुविधानपि ॥४०
तैर्विसृष्टैर्महासैन्यैर्नानाम्लेच्छगणैस्तदा ।
नानावरणसंछन्नैर्नानायुधधरैस्तथा ॥ ४१
अवाकीर्यत संरब्धैर्विश्वामित्रस्य पश्यतः ।
एकैकश्च तदा योधः पञ्चभिः सप्तभिर्वृतः ॥ ४२
अस्त्रवर्षेण महता वध्यमानं बलं तदा ।
प्रभग्नं सर्वतस्त्रस्तं विश्वामित्रस्य पश्यतः ॥ ४३
'तस्य तच्चतुरङ्गं वै बलं परमदुःसहम् ।
प्रभग्नं सर्वतो घोरं पयस्विन्या विनिर्जितम्' ४४
न च प्राणैर्वियुज्यन्ते केचित्तत्रास्य सैनिकाः ।
विश्वामित्रस्य संक्रुद्धैर्वासिष्ठैर्भरतर्षभ ॥ ४५
सा गौस्तत्सकलं सैन्यं कालयामास दूरतः ।
विश्वामित्रस्य तत्सैन्यं काल्यमानं त्रियोजनम्४६
क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत ।
'विश्वामित्रस्ततो दृष्ट्वा क्रोधाविष्टः स रोदसी ४७
ववर्ष शरवर्षाणि वसिष्ठे मुनिसत्तमे ।
घोररूपांश्च नाराचान्क्षुरान्भल्लान्महामुनिः ॥४८
विश्वामित्रप्रयुक्तांस्तान्वैणवेन व्यमोचयत् ।
वसिष्ठस्य तदा दृष्ट्वा कर्मकौशलमाहवे ॥ ४९

पह्लवादयो म्लेच्छविशेषाः ॥ ३८ ॥

एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

विश्वामित्रोऽपि कोपेन भूयः शत्रुनिपातनः ।
दिव्यास्त्रवर्षं तस्मै स प्राहिणोन्मुनये रुषा ॥ ५०
आग्नेयं वारुणं चैन्द्रं याम्यं वायव्यमेव च ।
विससर्ज महाभागे वसिष्ठे ब्रह्मणः सुते ॥ ५१
अस्त्राणि सर्वतो ज्वालां विसृजन्ति प्रपेदिरे ।
युगान्तसमये घोराः पतङ्गस्येव रश्मयः ॥ ५२
वसिष्ठोऽपि महातेजा ब्रह्मशक्तिप्रयुक्तया ।
यष्ट्या निवारयामास सर्वाण्यस्त्राणि स स्मयन् ५३
ततस्ते भस्मसाद्भूताः पतन्ति स्म महीतले ।
अपोह्य दिव्यान्यस्त्राणि वसिष्ठो वाक्यमब्रवीत् ५४
निर्जितोऽसि महाराज दुरात्मन्गाधिनन्दन ।
यदि तेऽस्ति परं शौर्यं तद्दर्शय मयि स्थिते ॥ ५५
गन्धर्व उवाच ।
विश्वामित्रस्तथा चोक्तो वसिष्ठेन नराधिपः ।
नोवाच किंचिद्व्रीडाढ्यो विद्रावितमहाबलः' ५६
दृष्ट्वा तन्महदाश्चर्यं ब्रह्मतेजोभवं तदा ।
विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत् ।
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ॥ ५७
बलाबले विनिश्चित्य तप एव परं बलम् ।
गन्धर्व उवाच ।
स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियम् ५८
भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे ।
स गत्वा तपसा सिद्धिं लोकान्विष्टभ्य तेजसा ५९
तताप सर्वान्दीप्तौजा ब्राह्मणत्वमवाप्तवान् ।
अपिबच्च ततः सोममिन्द्रेण सह कौशिकः ॥ ६०
'एवंवीर्यस्तु राजर्षिर्विप्रर्षिः संबभूव ह' ॥ ६१

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

---

## द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

कल्माषपादराजोपाख्याने—वसिष्ठपुत्रेण शक्तिना कल्माषपादं प्रति शापदानं ॥ १ ॥ पुनरन्येन ब्राह्मणेन च कल्माषपादंप्रति शापदानं ॥ २ ॥ राक्षसाविष्टेन कल्माषपादेन वसिष्ठपुत्राणां भक्षणं ॥ ३ ॥ पुत्रशोकाभिसंतप्तेन वसिष्ठेन प्राणत्यागार्थं अनेकधा प्रयतनम् ॥ ४ ॥

'अर्जुन उवाच ।
ऋष्योस्तु यत्कृते वैरं विश्वामित्रवसिष्ठयोः ।
बभूव गन्धर्वपते शंस तत्सर्वमेव मे ॥ १
माहात्म्यं च वसिष्ठस्य ब्राह्मण्यं ब्रह्मतेजसः ।
विश्वामित्रस्य च तथा क्षत्रस्य च महात्मनः ॥ २
न शृण्वानस्त्वहं तृप्तिमुपगच्छामि खेचर ।
आख्याहि गन्धर्वपते शंस तत्सर्वमेव मे ॥ ३
माहात्म्यं च वसिष्ठस्य विश्वामित्रस्य भाषसे ॥ ४
गन्धर्व उवाच ।
इदं वासिष्ठमाख्यानं पुराणं पुण्यमुत्तमम् ।
पार्थ सर्वेषु लोकेषु विश्रुतं तन्निबोध मे ॥' ५
कल्माषपाद इत्येवं लोके राजा बभूव ह ।
इक्ष्वाकुवंशजः पार्थ तेजसाऽसदृशो भुवि ॥ ६
स कदाचिद्वनं राजा मृगयां निर्ययौ पुरात् ।
मृगान्विध्यन्वराहांश्च चचार रिपुमर्दनः ॥ ७
तस्मिन्वने महाघोरे खड्गांश्च बहुशोऽहनत् ।
हत्वा च सुचिरं श्रान्तो राजा निववृते ततः ॥ ८
अकामयत्तं याज्यार्थे विश्वामित्रः प्रतापवान् ।
स तु राजा महात्मानं वासिष्ठमृषिसत्तमम् ॥ ९
तृषार्तश्च क्षुधार्तश्च एकायनगतः पथि ।
अपश्यदजितः सङ्ख्ये मुनिं प्रतिमुखागतम् ॥ १०
शक्तिं नाम महाभागं वसिष्ठकुलवर्धनम् ।
ज्येष्ठं पुत्रं पुत्रशताद्वसिष्ठस्य महात्मनः ॥ ११
अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत् ।
तथा ऋषिरुवाचैनं सान्त्वयञ्श्लक्ष्णया गिरा ॥ १२
मम पन्था महाराज धर्म एष सनातनः ।
'वृद्धभीरुनृपस्नातस्त्रीरोगिवरचक्रिणाम् ॥ १३
पन्था देयो नृपैस्तेषामन्यैस्तैस्तस्य भूपतेः ।'

---

याज्यार्थे अयं मम याज्यो भवत्वित्येतदर्थम् ॥ ९ ॥

एकायनगतः अतिसंकुचितमार्गे गतः ॥ १० ॥

राज्ञा सर्वेषु धर्मेषु देयः पन्था द्विजातये ॥ १४
एवं परस्परं तौ तु पथोऽर्थे वाक्यमूचतुः ।
अपसर्पापसर्पेति वागुत्तरमकुर्वताम् ॥ १५
ऋषिस्तु नापचक्राम तस्मिन्धर्मपथे स्थितः ।
'अपि राजा मुनेर्मार्गात्क्रोधान्नापजगाम ह॥'१६
अमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः ।
जगाम कशया मोहात्तदा राक्षसवन्मुनिम् ॥१७
कशाप्रहाराभिहतस्ततः स मुनिसत्तमः ।
तं शशाप नृपश्रेष्ठं वासिष्ठः क्रोधमूर्च्छितः ॥१८
हंसि राक्षसवद्यस्माद्राजापशद तापसम् ।
तस्मात्त्वमद्यप्रभृति पुरुषादो भविष्यसि ॥ १९
मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमाम् ।
गच्छ राजाधमेत्युक्तः शक्तिना वीर्यशक्तिना २०
ततो याज्यनिमित्तं तु विश्वामित्रवसिष्ठयोः ।
वैरमासीत्तदा तं तु विश्वामित्रोऽन्वपद्यत ॥ २१
तयोर्विवदतोरेवं समीपमुपचक्रमे ।
ऋषिरुग्रतपाः पार्थ विश्वामित्रः प्रतापवान् ॥२२
ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः ।
ऋषेः पुत्रं वसिष्ठस्य वसिष्ठमिव तेजसा ॥ २३
अन्तर्धाय ततोऽत्मानं विश्वामित्रोऽपि भारत ।
तावुभावतिचक्राम चिकीर्षन्नात्मनः प्रियम्॥२४
स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः ।
जगाम शरणं शक्तिं प्रसादयितुमर्हयन् ॥ २५
तस्य भावं विदित्वा स नृपतेः कुरुसत्तम ।
विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति ॥ २६
शापात्तस्य तु विप्रर्षेर्विश्वामित्रस्य चाज्ञया ।
राक्षसः किङ्करो नाम विवेश नृपतिं तदा ॥ २७
रक्षसा तं गृहीतं तु विदित्वा मुनिसत्तमः ।
विश्वामित्रोऽप्यपाक्रामत्तस्माद्देशादरिन्दम ॥ २८
ततः स नृपतिर्विद्वान्रक्षन्नात्मानमात्मना ।
बलवत्पीड्यमानोऽपि रक्षसान्तर्गतेन ह ॥ २९
ददर्शाथ द्विजः कश्चिद्राजानं प्रस्थितं वनम् ।
अयाचत क्षुधापन्नः समांसं भोजनं तदा ॥ ३०
तमुवाचाथ राजर्षिर्द्विजं मित्रसहस्तदा ।
आस्व ब्रह्मंस्त्वमत्रैव मुहूर्तं प्रतिपालयन् ॥ ३१
निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितम् ।
इत्युक्त्वा प्रययौ राजा तस्थौ च द्विजसत्तमः॥३२
ततो राजा परिक्रम्य यथाकामं यथासुखम् ।
निवृत्तोऽन्तःपुरं पार्थ प्रविवेश महामनाः ॥ ३३
'अन्तर्गतस्तदा राजा श्रुत्वा ब्राह्मणभाषितम् ।
सोऽन्तःपुरं प्रविश्याथ न सस्मार नराधिपः॥'३४
ततोऽर्धरात्र उत्थाय सूदमानाय्य सत्वरम् ।
उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम् ॥३५
गच्छामुष्मिन्वनोद्देशे ब्राह्मणो मां प्रतीक्षते ।
अन्नार्थी तं त्वमन्नेन समांसेनोपपादय ॥ ३६

गन्धर्व उवाच ।

एवमुक्तस्ततः सूदः सोऽनासाद्यामिषं क्वचित् ।
निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः ॥३७
राजा तु रक्षसाविष्टः सूदमाह गतव्यथः ।
अप्येनं नरमांसेन भोजयेति पुनः पुनः ॥ ३८
तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनाम् ।
गत्वाऽऽजहार त्वरितो नरमांसमपेतभीः ॥ ३९
एतत्संस्कृत्य विधिवदन्नोपहितमाशु वै ।
तस्मै प्रादाद्ब्राह्मणाय क्षुधिताय तपस्विने ॥ ४०
स सिद्धचक्षुषा दृष्ट्वा तदन्नं द्विजसत्तमः ।
अभोज्यमिदमित्याह क्रोधपर्याकुलेक्षणः ॥ ४१

ब्राह्मण उवाच ।

यस्मादभोज्यमन्नं मे ददाति स नृपाधमः ॥ ४२
सक्तो मानुषमांसेषु यथोक्तः शक्तिना पुरा ।
उद्वेजनीयो भूतानां चरिष्यति महीमिमाम् ॥४३

गन्धर्व उवाच ।

द्विरनुव्याहृते राज्ञः स शापो बलवानभूत् ।
रक्षोबलसमाविष्टो विसंज्ञश्चाभवन्नृपः ॥ ४४
ततः स नृपतिश्रेष्ठो रक्षसापहृतेन्द्रियः ।
उवाच शक्तिं तं दृष्ट्वा न चिरादिव भारत ॥ ४५
यस्मादसदृशः शापः प्रयुक्तोऽयं मयि त्वया ।
तस्मात्त्वत्तः प्रवर्तिष्ये खादितुं पुरुषानहम् ॥४६
एवमुक्त्वा ततः सद्यस्तं प्राणैर्विप्रयोजय च ।

शक्तिं तं भक्षयामास व्याघ्रः पशुमिवेप्सितम्४७
शक्तिनं तु मृतं दृष्ट्वा विश्वामित्रः पुनःपुनः ।
वसिष्ठस्यैव पुत्रेषु तद्रक्षः संदिदेश ह ॥ ४८
स ताञ्शक्त्यवरान्पुत्रान्वसिष्ठस्य महात्मनः ।
भक्षयामास संक्रुद्धः सिंहः क्षुद्रमृगानिव ॥ ४९
वसिष्ठो घातिताञ्श्रुत्वा विश्वामित्रेण तान्सुतान् ।
धारयामास तं शोकं महाद्रिरिव मेदिनीम् ॥५०
चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः ।
न त्वेव कौशिकोच्छेदं मेने मतिमतां वरः ॥५१
स मेरुकूटादात्मानं मुमोच भगवानृषिः ।
गिरेस्तस्य शिलायां तु तूलराशाविवापतत् ॥५२
न ममार च पातेन स यदा तेन पाण्डव ।
तदाग्निमिद्धं भगवान्संविवेश महावने ॥ ५३
तं तदा सुसमिद्धोऽपि न ददाह हुताशनः ।
दीप्यमानोऽप्यमित्रघ्न शीतोऽग्निरभवत्ततः ॥५४
स समुद्रमभिप्रेक्ष्य शोकाविष्टो महामुनिः ।
बद्ध्वा कण्ठे शिलां गुर्वीं निपपात तदाम्भसि५५
स समुद्रोर्मिवेगेन स्थले न्यस्तो महामुनिः ।
न ममार यदा विप्रः कथंचित्संशितव्रतः ।
जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति ॥ ५६

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

## त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

पूर्वोपायैरपि दुस्त्यजप्राणस्य वसिष्ठस्य पुनर्गङ्गापतनादिनापि प्राणत्यागासंभवे आश्रमं प्रत्यागमनम् ॥ १ ॥ तत्र शक्तिभार्यामदृश्यन्तीनाम्नीं गर्भवतीं ज्ञात्वा आत्मघातान्निवर्तनं ॥ २ ॥ अदृश्यन्त्या सह गच्छन्तं वसिष्ठं भक्षयितुमागतस्य कल्माषपादस्य वसिष्ठेन शापान्मोक्षणं ॥ ३ ॥ सौदासपत्न्या वसिष्ठाद्गर्भसंभवः ॥ ४ ॥ अश्मकनामकपुत्रोत्पत्तिः ॥ ५ ॥

गन्धर्व उवाच ।
ततो दृष्ट्वाश्रमपदं रहितं तैः सुतैर्मुनिः ।
निर्जगाम सुदुःखार्तः पुनरप्याश्रमात्ततः ॥ १
सोऽपश्यत्सरितं पूर्णां प्रावृट्काले नवाम्भसा ।
वृक्षान्बहुविधान्पार्थ हरन्तीं तीरजान्बहून् ॥ २
अथ चिन्तां समापेदे पुनः कौरवनन्दन ।
अम्भस्यस्या निमज्जेयमिति दुःखसमन्वितः ॥ ३
ततः पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः ।
तस्या जले महानद्या निममज्ज सुदुःखितः ॥ ४
अथ च्छित्त्वा नदी पाशांस्तस्यारिबलसूदन ।
स्थलस्थं तमृषिं कृत्वा विपाशं समवासृजत् ॥ ५
उत्ततार ततः पाशैर्विमुक्तः स महानृषिः ।
विपाशेति च नामास्या नद्याश्चक्रे महानृषिः ॥६
'सा विपाशेति विख्याता नदी लोकेषु भारत ।
ऋषेस्तस्य नरव्याघ्र वचनात्सत्यवादिनः ।
उत्तीर्य च तदा राजन्दुःखितो भगवानृषिः ॥'७
शोके बुद्धिं तदा चक्रे न चैकत्र व्यतिष्ठत ।
सोऽगच्छत्पर्वतांश्चैव सरितश्च सरांसि च ॥ ८
दृष्ट्वा स पुनरेवर्षिर्नदीं हैमवतीं तदा ।
चण्डग्राहवतीं भीमां तस्याः स्रोतस्यपातयत् ॥९
सा तमग्निसमं विप्रमनुचिन्त्य सरिद्वरा ।
शतधा विद्रुता तस्माच्छतद्रुरिति विश्रुता ॥ १०
ततः स्थलगतं दृष्ट्वा तत्राप्यात्मानमात्मना ।
मर्तुं न शक्यमित्युक्त्वा पुनरेवाश्रमं ययौ ॥ ११
स गत्वा विविधाञ्शैलान्देशान्बहुविधांस्तथा ।
अदृशन्त्याख्यया वध्वाथाश्रमेनुसृतोऽभवत् ॥१२
अथ शुश्राव संगत्या वेदाध्ययननिःस्वनम् ।
पृष्ठतः परिपूर्णार्थं षड्भिरङ्गैरलङ्कृतम् ॥ १३
अनुव्रजति कोन्वेष मामित्येवाथ सोऽब्रवीत् ।
अदृश्यन्त्येवमुक्ता वै तं स्नुषा प्रत्यभाषत ॥ १४
शक्तेर्भार्या महाभाग तपोयुक्ता तपस्विनम् ।
अहमेकाकिनी चापि त्वया गच्छामि नापरः १५
वसिष्ठ उवाच ।
पुत्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः ।

---

मुमोच पातयामास । आत्मानं देहम् ॥ ५२ ॥ द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥

वध्वा स्नुषया ॥ १२ ॥

पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ १६
अदृश्यन्त्युवाच ।
अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भः सुतस्य ते ।
समा द्वादश तस्येह वेदानभ्यस्यतो मुने ॥ १७
गन्धर्व उवाच ।
एवमुक्तस्तया हृष्टो वसिष्ठः श्रेष्ठभागृषिः ।
अस्ति सन्तानमित्युक्त्वा मृत्योः पार्थ न्यवर्तत १८
ततः प्रतिनिवृत्तः स तया वध्वा सहानघ ।
कल्माषपादमासीनं ददर्श विजने वने ॥ १९
स तु दृष्ट्वैव तं राजा क्रुद्ध उत्थाय भारत ।
आविष्टो रक्षसोग्रेण इयेषात्तुं तदा मुनिम् ॥ २०
अदृश्यन्ती तु तं दृष्ट्वा क्रूरकर्माणमग्रतः ।
भयसंविग्नया वाचा वसिष्ठमिदमब्रवीत् ॥ २१
असौ मृत्युरिवोग्रेण दण्डेन भगवन्नितः ।
प्रगृहीतेन काष्ठेन राक्षसोऽभ्येति दारुणः ॥ २२
तं निवारयितुं शक्तो नान्योऽस्ति भुवि कश्चन ।
त्वदृतेऽद्य महाभाग सर्ववेदविदां वर ॥ २३
पाहि मां भगवन्पापादस्माद्दारुणदर्शनात् ।
राक्षसोऽयमिहात्तुं वै नूनमावां समीहते ॥ २४
वसिष्ठ उवाच ।
माभैः पुत्रि न भेतव्यं राक्षसात्तु कथंचन ।
नैतद्रक्षो भयं यस्मात्पश्यसि त्वमुपस्थितम् ॥ २५
राजा कल्माषपादोऽयं वीर्यवान्प्रथितो भुवि ।
स एषोऽस्मिन्वनोद्देशे निवसत्यतिभीषणः ॥ २६
गन्धर्व उवाच ।
तमापतन्तं संप्रेक्ष्य वसिष्ठो भगवानृषिः ।
वारयामास तेजस्वी हुङ्कारेणैव भारत ॥ २७
मन्त्रपूतेन च पुनः स तमभ्युक्ष्य वारिणा ।
मोक्षयामास वै शापात्तस्माद्योगान्नराधिपम् ॥ २८
स हि द्वादश वर्षाणि वासिष्ठस्यैव तेजसा ।
ग्रस्त आसीद्ग्रहेणेव पर्वकाले दिवाकरः ॥ २९
रक्षसा विप्रमुक्तोऽथ स नृपस्तद्वनं महत् ।
तेजसा रञ्जयामास सन्ध्याभ्रमिव भास्करः ॥ ३०
प्रतिलभ्य ततः संज्ञामभिवाद्य कृताञ्जलिः ।
उवाच नृपतिः काले वसिष्ठमृषिसत्तमम् ॥ ३१
सौदासोऽहं महाभाग याज्यस्ते मुनिसत्तम ।
अस्मिन्काले यदिष्टं ते ब्रूहि किं करवाणि ते ३२
वसिष्ठ उवाच ।
वृत्तमेतद्यथाकालं गच्छ राज्यं प्रशाधि वै ।
ब्राह्मणं तु मनुष्येन्द्र माऽवमंस्थाः कदाचन ॥ ३३
राजोवाच ।
नावमंस्ये महाभाग कदाचिद्ब्राह्मणर्षभान् ।
त्वन्निदेशे स्थितः सम्यक् पूजयिष्याम्यहं द्विजान् ।
इक्ष्वाकूणां च येनाहमनृणः स्यां द्विजोत्तम ।
तत्त्वत्तः प्राप्तुमिच्छामि सर्ववेदविदां वर ॥ ३५
अपत्यायेप्सिताय त्वं महिषीं गन्तुमर्हसि ।
शीलरूपगुणोपेतामिक्ष्वाकुकुलवृद्धये ॥ ३६
गन्धर्व उवाच ।
ददानीत्येव तं तत्र राजानं प्रत्युवाच ह ।
वसिष्ठः परमेष्वासं सत्यसन्धो द्विजोत्तमः ॥ ३७
ततः प्रतिययौ काले वसिष्ठः सह तेन वै ।
ख्यातां पुरीमिमां लोकेष्वयोध्यां मनुजेश्वर ३८
तं प्रजाः प्रतिमोदन्त्यः सर्वाः प्रत्युद्गतास्तदा ।
विपाप्मानं महात्मानं दिवौकस इवेश्वरम् ॥ ३९
सुचिराय मनुष्येन्द्रो नगरीं पुण्यलक्षणाम् ।
विवेश सहितस्तेन वसिष्ठेन महर्षिणा ॥ ४०
ददृशुस्तं महीपालमयोध्यावासिनो जनाः ।
पुरोहितेन सहितं दिवाकरमिवोदितम् ॥ ४१
स च तां पूरयामास लक्ष्म्या लक्ष्मीवतां वरः ।
अयोध्यां व्योम शीतांशुः शरत्काल इवोदितः ॥
संसिक्तमृष्टपन्थानं पताकाध्वजशोभितम् ।
मनः प्रह्लादयामास तस्य तत्पुरमुत्तमम् ॥ ४३
तुष्टपुष्टजनाकीर्णा सा पुरी कुरुनन्दन ।
अशोभत तदा तेन शक्रेणेवामरावती ॥ ४४
ततः प्रविष्टे राजर्षौ तस्मिंस्तत्पुरमुत्तमम् ।
राज्ञस्तस्याज्ञया देवी वसिष्ठमुपचक्रमे ॥ ४५
ऋतावथ महर्षिस्तु संबभूव तया सह ।
देव्या दिव्येन विधिना वसिष्ठः श्रेष्ठभागृषिः ॥ ४६

ततस्तस्यां समुत्पन्ने गर्भे स मुनिसत्तमः ।
राज्ञाभिवादितस्तेन जगाम मुनिराश्रमम् ॥ ४७
दीर्घकालेन सा गर्भं सुषुवे न तु तं यदा ।
तदा देव्यश्मना कुक्षिं निर्बिभेद यशस्विनी ४८
ततो द्वादशमे वर्षे स जज्ञे पुरुषर्षभः ।
अश्मको नाम राजर्षिः पौदन्यं यो न्यवेशयत् ४९

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

---

## चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

पराशरोत्पत्तिः ॥ १ ॥ पितरं कल्माषपादभक्षितं ज्ञात्वा क्रुद्धेन पराशरेण लोकविनाशाय यतनम् ॥ २ ॥ कर्तवीर्यार्जुनवंश्यैः क्षत्रियैः धनार्थं भृगुवंश्यानां ब्राह्मणानां हननम् ॥ ३ ॥ क्षत्रियभीत्या कयाचिद्ब्राह्मण्या ऊरौ गर्भं धृतं हन्तुं क्षत्रियाणामुद्यमः ॥ ४ ॥ ऊरुं भित्त्वा निर्गतस्य बालकस्य तेजसान्धीभूतानां क्षत्रियाणां ब्राह्मणींप्रति शरणगमनम् ॥ ५ ॥

गन्धर्व उवाच ।
आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत ।
शक्तेः कुलकरं राजन् द्वितीयमिव शक्तिनम् ॥१
जातकर्मादिकास्तस्य क्रियाः स मुनिसत्तमः ।
पौत्रस्य भरतश्रेष्ठ चकार भगवान्स्वयम् ॥ २
परासुः स यतस्तेन वसिष्ठः स्थापितो मुनिः ।
गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥ ३
अमन्यत स धर्मात्मा वसिष्ठं पितरं मुनिः ।
जन्मप्रभृति तस्मिंस्तु पितरीवान्ववर्तत ॥ ४
स तात इति विप्रर्षिं वसिष्ठं प्रत्यभाषत ।
मातुः समक्षं कौन्तेय अदृश्यन्त्याः परन्तप ॥५
तातेति परिपूर्णार्थं तस्य तन्मधुरं वचः ।
अदृश्यन्त्यश्रुपूर्णाक्षी शृण्वती तमुवाच ह ॥ ६
मा तात तातताततेति ब्रूह्येनं पितरं पितुः ।
रक्षसा भक्षितस्तात तव तातो वनान्तरे ॥ ७
मन्यसे यं तु तातेति नैष तातस्तवानघ ।
आर्य एष पिता तस्य पितुस्तव यशस्विनः ॥ ८
स एवमुक्तो दुःखार्तः सत्यवागृषिसत्तमः ।
सर्वलोकविनाशाय मतिं चक्रे महामनाः ॥ ९
तं तथा निश्चितात्मानं स महात्मा महातपाः ।
ऋषिर्ब्रह्मविदां श्रेष्ठो मैत्रावरुणिरन्त्यधीः ॥ १०
वसिष्ठो वारयामास हेतुना येन तच्छृणु ।

वसिष्ठ उवाच ।
कृतवीर्य इति ख्यातो बभूव पृथिवीपतिः ॥ ११
याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः ।
स तानग्रभुजस्तात धान्येन च धनेन च ॥ १२
सोमान्ते तर्पयामास विपुलेन विशांपतिः ।
तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कथंचन ॥ १३
बभूव तत्कुलेयानां द्रव्यकार्यमुपस्थितम् ।
भृगूणां तु धनं ज्ञात्वा राजानः सर्व एव ते॥१४
याचिष्णवोऽभिजग्मुस्तांस्ततो भार्गवसत्तमान् ।
भूमौ तु निदधुः केचिद्भृगवो धनमक्षयम् ॥ १५
ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम्।
भृगवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम्॥१६
क्षत्रियाणां तदा तात कारणान्तरदर्शनात् ।
ततो महीतलं तात क्षत्रियेण यदृच्छया ॥ १७
खनताऽधिगतं वित्तं केनचिद्भृगुवेश्मनि ।
तद्वित्तं ददृशुः सर्वे समेताः क्षत्रियर्षभाः ॥ १८
अवमन्य ततः क्रोधाद्भृगूंस्ताञ्छरणागतान् ।
निजघ्नुः परमेष्वासाः सर्वांस्तान्निशितैः शरैः॥१९
आगर्भादवकृन्तन्तश्चेरुः सर्वां वसुन्धराम् ।
तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा ॥ २०
भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं प्रपेदिरे ।
तासामन्यतमा गर्भं भयाद्दध्रे महौजसम् ॥ २१

निष्पिपेष मनस्विनीति ङ. पाठः ॥ ४८ ॥ त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥

अन्त्यधीः अन्ते सिद्धान्ते साध्वी अन्त्या धीर्यस्य सोन्त्यधीः ॥ १० ॥ चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

ऊरुणैकेन वामोरूर्भर्तुः कुलविवृद्धये ।
तं गर्भमुपलभ्याशु ब्राह्मण्येका भयार्दिता ॥ २२
गत्वा वै कथयामास क्षत्रियाणामुपह्वरे ।
ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः ॥ २३
ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां स्वतेजसा ।
अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह २४
मुष्णन्दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः ।
ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः ॥ २५
ततस्ते मोघसङ्कल्पा भयार्ताः क्षत्रियाः पुनः ।
ब्राह्मणीं शरणं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम् ॥२६
ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः ।
ज्योतिःप्रहीणा दुःखार्ताः शान्तार्चिष इवाग्नयः ॥
भगवत्याः प्रसादेन गच्छेत्क्षत्रमनामयम् ।
उपारम्य च गच्छेम सहिताः पापकर्मणः ॥ २८
सपुत्रा त्वं प्रसादं नः कर्तुमर्हसि शोभने ।
पुनर्दृष्टिप्रदानेन राज्ञः संत्रातुमर्हसि ॥ २९

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

## पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

ब्राह्मणीवाक्येन और्वप्रति शरणागतानां क्षत्रियाणां चक्षुःप्राप्तिः ॥ १ ॥ लोकविनाशार्थं तपस्यत और्वस्य तत्पितृकृत-तपोनिवारणम् ॥ २ ॥

ब्राह्मण्युवाच ।
नाहं गृह्णामि वस्ताता दृष्टीर्नास्मि रुषान्विता ।
अयं तु भार्गवो नूनमूरुजः कुपितोऽद्य वः ॥ १
तेन चक्षूंषि वस्ताता व्यक्तं कोपान्महात्मना ।
स्मरता निहतान्बन्धूनादत्तानि न संशयः ॥ २
गर्भानपि यदा यूयं भृगूणां घ्नत पुत्रकाः ।
तदायमूरुणा गर्भो मया वर्षशतं धृतः ॥ ३
षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव ह ।
विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया ॥ ४
सोऽयं पितृवधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति ।
तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः ॥ ५
तमेव यूयं याचध्वमौर्वं मम सुतोत्तमम् ।
अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रदास्यति ॥ ६
वसिष्ठ उवाच ।
एवमुक्तास्ततः सर्वे राजानस्ते तमूरुजम् ।
ऊचुः प्रसीदेति तदा प्रसादं च चकार सः ॥७
अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः ।
स और्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत ॥ ८
चक्षूंषि प्रतिलभ्याथ प्रतिजग्मुस्ततो नृपाः ।
भार्गवस्तु मुनिर्मेने सर्वलोकपराभवम् ॥ ९
स चक्रे तात लोकानां विनाशाय मतिं तदा ।
सर्वेषामेव कार्त्स्न्येन मनः प्रवणमात्मनः ॥ १०
इच्छन्नपचितिं कर्तुं भृगूणां भृगुनन्दनः ।
सर्वलोकविनाशाय तपसा महतैधितः ॥ ११
तापयामास ताँल्लोकान्सदेवासुरमानुषान् ।
तपसोग्रेण महता नन्दयिष्यन्पितामहान् ॥ १२
ततस्तं पितरस्तात विज्ञाय कुलनन्दनम् ।
पितृलोकादुपागम्य सर्व ऊचुरिदं वचः ॥ १३
और्व दृष्टः प्रभावस्ते तपसोग्रस्य पुत्रक ।
प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः॥१४
नानीशैर्हि तदा तात भृगुभिर्भावितात्मभिः ।
वधो ह्युपेक्षितः सर्वैः क्षत्रियाणां विहिंसताम्॥१५
आयुषा विप्रकृष्टेन यदा नः खेद आविशत् ।
तदाऽस्माभिर्वधस्तात क्षत्रियैरीप्सितः स्वयम्॥१६
निखातं यच्च वै वित्तं केनचिद्भृगुवेश्मनि ।
वैरायैव तदा न्यस्तं क्षत्रियान्कोपयिष्णुभिः॥१७
किं हि वित्तेन नः कार्यं स्वर्गेप्सूनां द्विजोत्तम ।
यदस्माकं धनाध्यक्षः प्रभूतं धनमाहरत् ॥ १८
यदा तु मृत्युरादातुं न नः शक्नोति सर्वशः ।
तदाऽस्माभिरयं दृष्ट उपायस्तात संमतः ॥ १९
आत्महा च पुमांस्तात न लोकाँल्लभते शुभान् ।

आत्महेति एतेन भृगुपतनादिना मरणं ब्राह्मणेतरविषयं

ततोऽस्माभिः समीक्ष्यैवं नात्मनात्मा निपातितः
न चैतन्नः प्रियं तात यदिदं कर्तुमिच्छसि ।
नियच्छेदं मनः पापात्सर्वलोकपराभवात् ॥ २१
मा वधीः क्षत्रियांस्तात न लोकान्सप्त पुत्रक ।
दूषयन्तं तपस्तेजः क्रोधमुत्पतितं जहि ॥ २२

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

## षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

पितॄणां निदेशेन और्वस्य समुद्रे क्रोधत्यागः ॥ १ ॥

और्व उवाच ।
उक्तवानस्मि यां क्रोधात्प्रतिज्ञां पितरस्तदा ।
सर्वलोकविनाशाय न सा मे वितथा भवेत् ॥ १
वृथारोषप्रतिज्ञो वै नाहं जीवितुमुत्सहे ।
अनिस्तीर्णो हि मां रोषो दहेदग्निरिवारणिम् ॥ २
यो हि कारणतः क्रोधं संजातं क्षन्तुमर्हति ।
नालं स मनुजः सम्यक् त्रिवर्गं परिरक्षितुम् ॥ ३
अशिष्टानां नियन्ता हि शिष्टानां परिरक्षिता ।
स्थाने रोषः प्रयुक्तः स्यान्नृपैः सर्वजिगीषुभिः ॥ ४
अश्रौषमहमूरुस्थो गर्भशय्यागतस्तदा ।
आरावं मातृवर्गस्य भृगूणां क्षत्रियैर्वधे ॥ ५
सामरैर्हि यदा लोके भृगूणां क्षत्रियाधमैः ।
आगर्भोत्सादनं क्षान्तं तदा मां मन्युराविशत् ६
प्रकीर्णकेशाः किल मे मातरः पितरस्तथा ।
भयात्सर्वेषु लोकेषु नाधिजग्मुः परायणम् ॥ ७
तान्भृगूणां यदा दारान्कश्चिन्नाभ्युपपद्यत ।
माता तदा दधारेयमूरुणैकेन मां शुभा ॥ ८
प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते ।
तदा सर्वेषु लोकेषु पापकृन्नोपपद्यते ॥ ९
यदा तु प्रतिषेद्धारं पापो न लभते क्वचित् ।
तिष्ठन्ति बहवो लोकास्तदा पापेषु कर्मसु ॥ १०
जानन्नपि च यः पापं शक्तिमान्न नियच्छति ।
ईशः सन्सोऽपि तेनैव कर्मणा संप्रयुज्यते ॥ ११
राजभिश्चेश्वरैश्चैव यदि वै पितरो मम ।
शक्तैर्न शकितास्त्रातुमिष्टं मत्वेह जीवितम् ॥ १२
अत एषामहं क्रुद्धो लोकानामीश्वरो ह्यहम् ।
भवतां च वचो नालमहं समभिवर्तितुम् ॥ १३
ममापि चेद्भवेदेवमीश्वरस्य सतो महत् ।
उपेक्षमाणस्य पुनर्लोकानां किल्बिषाद्भयम् ॥ १४
यश्चायं मन्युजो मेऽग्निर्लोकानादातुमिच्छति ।
दहेदेष च मामेव निगृहीतः स्वतेजसा ॥ १५
भवतां च विजानामि सर्वलोकहितेप्सुताम् ।
तस्माद्विधद्ध्वं यच्छ्रेयो लोकानां मम चेश्वराः १६
पितर ऊचुः ।
य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति ।
अप्सु तं मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः १७
आपोमयाः सर्वरसाः सर्वमापोमयं जगत् ।
तस्मादप्सु विमुञ्चेमं क्रोधाग्निं द्विजसत्तम ॥ १८
अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ ।
मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः ॥
एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति ।
न चैवं सामरा लोका गमिष्यन्ति पराभवम् २०
वसिष्ठ उवाच ।
ततस्तं क्रोधजं तात और्वोऽग्निं वरुणालये ।
उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ ॥ २१
महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः ।
तमग्निमुद्गिरद्वक्त्रात्पिबत्यापो महोदधौ ॥ २२

दर्शितम् ॥ २० ॥ मावधीरिति क्षत्रियान् तदनियन्तृत्वेनानपराधिनः । सप्तलोकान् भूरादींश्च मावधीः किंतु तपःसंभृतं तेजो दूषयन्तं क्रोधं जहि ॥ २२ ॥ पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

अनिस्तीर्णोऽकृतकार्यः ॥ २ ॥ तद्भृगूणां राजा कश्चिन्नाभ्युपपद्यते इति ङ. पाठः ॥ ८ ॥ उपयुङ्क्ते भक्षयति ॥ २१ ॥ हयशिरः वडवामुखम् ॥ २२ ॥ षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

तस्मात्त्वमपि भद्रं ते न लोकान्हन्तुमर्हसि । पराशर पराँल्लोकाञ्ज्ञानञ्ज्ञानवतां वर ॥ २३

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

## सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

वसिष्ठवाक्येन लोकविनाशान्निवृत्तेन पराशरेण राक्षसनाशार्थं यज्ञारम्भः ॥ १ ॥ पुलस्त्यप्रार्थनया पराशरेण यज्ञसमापनम् ॥ २ ॥

गन्धर्व उवाच ।

एवमुक्तः स विप्रर्षिर्वसिष्ठेन महात्मना ।
न्ययच्छदात्मनः क्रोधं सर्वलोकपराभवात् ॥ १
ईजे च स महातेजाः सर्ववेदविदां वरः ।
ऋषी राक्षससत्रेण शाक्तेयोऽथ पराशरः ॥ २
ततो वृद्धांश्च बालांश्च राक्षसान्स महामुनिः ।
ददाह वितते यज्ञे शक्तेर्वधमनुस्मरन् ॥ ३
न हि तं वारयामास वसिष्ठो रक्षसां वधात् ।
द्वितीयामस्य मा भाङ्क्षं प्रतिज्ञामिति निश्चयात् ४
त्रयाणां पावकानां च सत्रे तस्मिन्महामुनिः ।
आसीत्पुरस्ताद्दीप्तानां चतुर्थ इव पावकः ॥ ५
तेन यज्ञेन शुभ्रेण हूयमानेन शक्तितः ।
तद्विदीपितमाकाशं सूर्येणेव घनात्यये ॥ ६
तं वसिष्ठादयः सर्वे मुनयस्तत्र मेनिरे ।
तेजसा दीप्यमानं वै द्वितीयमिव भास्करम् ॥ ७
ततः परमदुष्प्रापमन्यैर्ऋषिरुदारधीः ।
समापिपयिषुः सत्रं तमत्रिः समुपागमत् ॥ ८
तथा पुलस्त्यः पुलहः क्रतुश्चैव महाक्रतुः ।
तत्राजग्मुरमित्रघ्न रक्षसां जीवितेप्सया ॥ ९
पुलस्त्यस्तु वधात्तेषां रक्षसां भरतर्षभ ।
उवाचेदं वचः पार्थ पराशरमरिन्दमम् ॥ १०
कच्चित्तातापविघ्नं ते कच्चिन्नन्दसि पुत्रक ।
अजानतामदोषाणां सर्वेषां रक्षसां वधात् ॥ ११
प्रजोच्छेदमिमं मह्यं न हि कर्तुं त्वमर्हसि ।
नैष तात द्विजातीनां धर्मो दृष्टस्तपस्विनाम् १२
शम एव परो धर्मस्तमाचर पराशर ।
अधर्मिष्ठं वरिष्ठः सन्कुरुषे त्वं पराशर ॥ १३
शक्तिं चापि हि धर्मज्ञं नातिक्रान्तुमिहार्हसि ।
प्रजायाश्च ममोच्छेदं न चैवं कर्तुमर्हसि ॥ १४
शापाद्धि शक्तेर्वासिष्ठ तदा तदुपपादितम् ।
आत्मजेन स दोषेण शक्तिर्नीत इतो दिवम् ॥ १५
न हि तं राक्षसः कश्चिच्छक्तो भक्षयितुं मुने ।
'वासिष्ठो भक्षितश्चासीत्कौशिकोत्सृष्टरक्षसा ।
शापं न कुर्वन्ति तदा न च त्राणपरायणाः ॥ १६
क्षमावन्तोऽदहन्देहं देहमन्यद्भवत्विति ।'
आत्मनैवात्मनस्तेन दृष्टो मृत्युस्तदाऽभवत् ॥ १७
निमित्तभूतस्तत्रासीद्विश्वामित्रः पराशर ।
राजा कल्माषपादश्च दिवमारुह्य मोदते ॥ १८
ये च शक्त्यवराः पुत्रा वसिष्ठस्य महामुने ।
ते च सर्वे मुदा युक्ता मोदन्ते सहिताः सुरैः १९
सर्वमेतद्वसिष्ठस्य विदितं वै महामुने ।
रक्षसां च समुच्छेद एष तात तपस्विनाम् ॥ २०
निमित्तभूतस्त्वं चात्र क्रतौ वासिष्ठनन्दन ।
तत्सत्रं मुञ्च भद्रं ते समाप्तमिदमस्तु ते ॥ २१

गन्धर्व उवाच ।

एवमुक्तः पुलस्त्येन वसिष्ठेन च धीमता ।
तदा समापयामास सत्रं शाक्तो महामुनिः ॥ २२
सर्वराक्षससत्राय संभृतं पावकं तदा ।
उत्तरे हिमवत्पार्श्वे उत्ससर्ज महावने ॥ २३
स तत्राद्यापि रक्षांसि वृक्षानश्मन एव च ।
भक्षयन्दृश्यते वह्निः सदा पर्वणि पर्वणि ॥ २४

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

मा भाङ्क्षं न नाशयेयम् ॥ ४ ॥ मह्यं मम ॥ १२ ॥ | सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

## अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

सौदासभार्यायां वसिष्ठेन पुत्रोत्पादनकारणं पृष्टवन्तमर्जुनंप्रति पुनः कल्माषपादकथाकथनम् ॥ १ ॥ मैथुनधर्मस्थं ब्राह्मणं भक्षितवतः सौदासस्य ब्राह्मण्या शापः ॥ २ ॥

'गन्धर्व उवाच ।
पुनश्चैव महातेजा विश्वामित्रजिघांसया ।
अग्निं संभृतवान्घोरं शाक्तेयः सुमहातपाः ॥ १
वासिष्ठसंभृतश्चाग्निर्विश्वामित्रहितैषिणा ।
तेजसा वह्नितुल्येन ग्रस्तः स्कन्देन धीमता ॥' २
अर्जुन उवाच ।
राज्ञा कल्माषपादेन गुरौ ब्रह्मविदां वरे ।
कारणं किं पुरस्कृत्य भार्या वै सन्नियोजिता ॥ ३
जानता वै परं धर्मं वसिष्ठेन महात्मना ।
अगम्यागमनं कस्मात्कृतं तेन महर्षिणा ॥ ४
अधर्मिष्ठं वसिष्ठेन कृतं चापि पुरा सखे ।
एतन्मे संशयं सर्वं छेत्तुमर्हसि पृच्छतः ॥ ५
गन्धर्व उवाच ।
धनञ्जय निबोधेदं यन्मां त्वं परिपृच्छसि ।
वसिष्ठं प्रति दुर्धर्ष तथा मित्रसहं नृपम् ॥ ६
कथितं ते मया सर्वं यथा शप्तः स पार्थिवः ।
शक्तिना भरतश्रेष्ठ वासिष्ठेन महात्मना ॥ ७
स तु शापवशं प्राप्तः क्रोधपर्याकुलेक्षणः ।
निर्जगाम पुराद्राजा सहदारः परन्तपः ॥ ८
अरण्यं निर्जनं गत्वा सदारः परिचक्रमे ।
नानामृगगणाकीर्णं नानासत्वसमाकुलम् ॥ ९
नानागुल्मलताच्छन्नं नानाद्रुमसमावृतम् ।
अरण्यं घोरसन्नादं शापग्रस्तः परिभ्रमन् ॥ १०
स कदाचित्क्षुधाविष्टो मृगयन्भक्ष्यमात्मनः ।
ददर्श सुपरिक्लिष्टः कस्मिंश्चिन्निर्जने वने ॥ ११
ब्राह्मणं ब्राह्मणीं चैव मिथुनायोपसंगतौ ।
तौ तं वीक्ष्य सुवित्रस्तावकृतार्थौ प्रधावितौ ॥ १२
तयोः प्रद्रवतोर्विप्रं जग्राह नृपतिर्बलात् ।
दृष्ट्वा गृहीतं भर्तारमथ ब्राह्मण्यभाषत ॥ १३
शृणु राजन्मम वचो यत्त्वां वक्ष्यामि सुव्रत ।
आदित्यवंशप्रभवस्त्वं हि लोके परिश्रुतः ॥ १४
अप्रमत्तः स्थितो धर्मे गुरुशुश्रूषणे रतः ।
शापोपहत दुर्धर्ष न पापं कर्तुमर्हसि ॥ १५
ऋतुकाले तु संप्राप्ते भर्तृव्यसनकर्शिता ।
अकृतार्था ह्यहं भर्त्रा प्रसवार्थं समागता ॥ १६
प्रसीद नृपतिश्रेष्ठ भर्ताऽयं मे विसृज्यताम् ।
एवं विक्रोशमानायास्तस्यास्तु स नृशंसवत् ॥ १७
भर्तारं भक्षयामास व्याघ्रो मृगमिवेप्सितम् ।
तस्याः क्रोधाभिभूताया यान्यश्रूण्यपतन्भुवि ॥ १८
सोऽग्निः समभवद्दीप्तस्तं च देशं व्यदीपयत् ।
ततः सा शोकसंतप्ता भर्तृव्यसनकर्शिता ॥ १९
कल्माषपादं राजर्षिमशपद्ब्राह्मणी रुषा ।
यस्मान्ममाकृतार्थायास्त्वया क्षुद्र नृशंसवत् ॥ २०
प्रेक्षन्त्या भक्षितो मेऽद्य प्रियो भर्ता महायशाः ।
तस्मात्त्वमपि दुर्बुद्धे मच्छापपरिविक्षतः ॥ २१
पत्नीमृतावनुप्राप्य सद्यस्त्यक्ष्यसि जीवितम् ।
'तेन प्रसाद्यमाना सा प्रसादमकरोत्तदा ।'
यस्य चर्षेर्वसिष्ठस्य त्वया पुत्रा विनाशिताः ॥ २२
तेन संगम्य ते भार्या तनयं जनयिष्यति ।
स ते वंशकरः पुत्रो भविष्यति नृपाधम ॥ २३
एवं शप्त्वा तु राजानं सा तमाङ्गिरसी शुभा ।
तस्यैव सन्निधौ दीप्तं प्रविवेश हुताशनम् ॥ २४
वसिष्ठश्च महाभागः सर्वमेतदवैक्षत ।
ज्ञानयोगेन महता तपसा च परन्तप ॥ २५
मुक्तशापश्च राजर्षिः कालेन महता ततः ।
ऋतुकालेऽभिपतितो मदयन्त्या निवारितः ॥ २६
न हि सस्मार स नृपस्तं शापं काममोहितः ।
देव्याः सोऽथ वचः श्रुत्वा संभ्रान्तो नृपसत्तमः ॥
तं शापमनुसंस्मृत्य पर्यतप्यद्भृशं तदा ।
एतस्मात्कारणाद्राजा वसिष्ठं संन्ययोजयत् ।
स्वदारेषु नरश्रेष्ठ शापदोषसमन्वितः ॥ २८

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

## एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

अर्जुनेन अनुरूपपुरोहितसंपादनं पृष्टेन गन्धर्वेण धौम्यवरणाभ्यनुज्ञा ॥ १ ॥ गन्धर्वाय आग्नेयास्त्रदानम् ॥ २ ॥ उत्कोचतीर्थे पाण्डवैः धौम्यस्य पौरोहित्ये वरणम् ॥ ३ ॥

अर्जुन उवाच ।
अस्माकमनुरूपो वै यः स्याद्गन्धर्व वेदवित् ।
पुरोहितस्तमाचक्ष्व सर्वं हि विदितं तव ॥ १
गन्धर्व उवाच ।
यवीयान्देवलस्यैष वने भ्राता तपस्यति ।
धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ ॥ २
वैशंपायन उवाच ।
ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि ।
गन्धर्वाय 'स च प्रीतो वचनं चेदमब्रवीत् ॥ ३
मयि सन्ति हयश्रेष्ठास्तव दास्यामि वै सखे ।
उपकारकृतं मित्रं प्रतिकारेण योजये ॥ ४
गृह्णीष्व चाक्षुषीं विद्यामिमां भरतसत्तम ।
एवमुक्तोऽर्जुनः' प्रीतो वचनं चेदमब्रवीत् ॥ ५
त्वय्येव तावत्तिष्ठन्तु हया गन्धर्वसत्तम ।
कार्यकाले ग्रहीष्यामः स्वस्ति तेऽस्त्विति चाब्रवीत्
तेऽन्योन्यमभिसंपूज्य गन्धर्वः पाण्डवाश्च ह ।
रम्याद्भागीरथीतीराद्यथाकामं प्रतस्थिरे ॥ ७
तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमं तु ते ।
तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत ॥ ८
तान्धौम्यः प्रतिजग्राह सर्ववेदविदां वरः ।
वन्येन फलमूलेन पौरोहित्येन चैव ह ॥ ९
ते समाशंसिरे लब्धां श्रियं राज्यं च पाण्डवाः ।
ब्राह्मणं तं पुरस्कृत्य पाञ्चालीं च स्वयंवरे ॥ १०
पुरोहितेन तेनाथ गुरुणा संगतास्तदा ।
नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः ॥ ११
स हि वेदार्थतत्त्वज्ञस्तेषां गुरुरुदारधीः ।
वेदविच्चैव वाग्मी च धौम्यः श्रीमान्द्विजोत्तमः १२
तेजसा चैव बुद्ध्या च रूपेण यशसा श्रिया ।
मन्त्रैश्च विविधैर्धौम्यस्तुल्य आसीद्बृहस्पतेः ॥ १३
स चापि विप्रस्तान्मेने स्वभावाभ्यधिकान्भुवि ।
तेन धर्मविदा पार्था योज्या सर्वविदा वृताः ॥ १४
मेनिरे सहिता वीराः प्राप्तं राज्यं च पाण्डवाः ।
बुद्धिवीर्यबलोत्साहैर्युक्ता देवा इवापरे ॥ १५
कृतस्वस्त्ययनास्तेन ततस्ते मनुजाधिपाः ।
मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयंवरम् ॥ १६

॥ इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

॥ समाप्तं चैत्ररथपर्व ॥

# (अथ स्वयंवरपर्व ॥ १२ ॥)

## द्विशततमोऽध्यायः ॥ २०० ॥

मध्येमार्गं आगतस्य व्यासस्य आज्ञया पाण्डवानां द्रुपदपुरप्रवेशः ॥ १ ॥ तेषां कुम्भकारगृहे वासः, भैक्षवृत्तिश्च ॥ २ ॥ द्रौपद्याः स्वयंवरनिर्माणकारणकथनं ॥ ३ ॥ द्रुपदेन कृतां स्वयंवरघोषणां श्रुतवतां क्षत्रियादीनां आगमनं ॥ ४ ॥ सर्वेषां उचिते स्थाने उपवेशनं पाण्डवानां ब्राह्मणमध्ये उपवेशनं ॥ ५ ॥ मङ्गलस्नातायाः स्वलङ्कृताया द्रौपद्या रङ्गमध्ये आगमनं ॥ ६ ॥ धृष्टद्युम्नेन लक्ष्यवेधपणकथनम् ॥ ७ ॥

वैशंपायन उवाच ।
ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः ।
तं ब्राह्मणं पुरस्कृत्य पाञ्चाल्याश्च स्वयंवरम् ।
प्रययुर्द्रौपदीं द्रष्टुं तं च देशं महोत्सवम् ॥ १

ततस्ते तं महात्मानं शुद्धात्मानमकल्मषम् ।
ददृशुः पाण्डवा वीराः पथि द्वैपायनं तदा ॥ २
तस्मै यथावत्सत्कारं कृत्वा तेन च सत्कृताः ।
कथान्ते चाभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयम् ॥ ३
पश्यन्तो रमणीयानि वनानि च सरांसि च ।
तत्रतत्र वसन्तश्च शनैर्जग्मुर्महारथाः ॥ ४
स्वाध्यायवन्तः शुचयो मधुराः प्रियवादिनः ।
आनुपूर्व्येण संप्राप्ताः पाञ्चालान्पाण्डुनन्दनाः ५
ते तु दृष्ट्वा पुरं तच्च स्कन्धावारं च पाण्डवाः ।
कुम्भकारस्य शालायां निवासं चक्रिरे तदा॥ ६
तत्र भैक्षं समाजह्रुर्ब्राह्मणीं वृत्तिमाश्रिताः ।
तान्संप्राप्तांस्तथा वीराञ्जज्ञिरे न नराः क्वचित् ७
'यज्ञसेनस्तु पाञ्चालो भीष्मद्रोणकृतागसम् ।
ज्ञात्वाऽऽत्मानं तदारेभे त्राणायात्मक्रियां क्षमां८
अवाप्य धृष्टद्युम्नं हि न स द्रोणमचिन्तयत् ।
स तु वैरप्रसङ्गाच्च भीष्माद्भयमचिन्तयत् ॥ ९
कन्यादानात्तु शरणं सोऽमन्यत महीपतिः ।'
यज्ञसेनस्य कामस्तु पाण्डवाय किरीटिने ॥ १०
दास्यामि कृष्णामिति वै न चैनं विवृणोति सः ।
'जामातृबलसंयोगं मेने हि बलवत्तरम् ॥' ११
सोऽन्वेषमाणः कौन्तेयान्पाञ्चालो जनमेजय ।
दृढं धनुरथानम्यं कारयामास भारत ॥ १२
'वैयाघ्रपद्यस्योग्रं वै सृञ्जयस्य महीपतिः ।
तद्धनुः किन्धुरं नाम देवदत्तमुपानयत् ॥ १३
आयसी तस्य च ज्याऽऽसीत्प्रतिबद्धा महाबला ।
न तु ज्यां प्रसहेदन्यस्तद्धनुःप्रवरं महत् ॥ १४
शङ्करेण वरं दत्तं प्रीतेन च महात्मना ।
तन्निष्फलं स्यान्न तु मे इति प्रामाण्यमागतः॥१५
मया कर्तव्यमधुना दुष्करं लक्ष्यवेधनम् ।
इति निश्चित्य मनसा कारितं लक्ष्यमुत्तमम्॥' १६
यन्त्रं वैहायसं चापि कारयामास कृत्रिमम् ।
तेन यन्त्रेण सहितं राजँल्लक्ष्यं च काञ्चनम् ॥१७

द्रुपद उवाच ।
इदं सज्यं धनुः कृत्वा सज्जैरेभिश्च सायकैः ।
अतीत्य लक्ष्यं यो वेद्धा स लब्धा मत्सुतामिति॥
वैशंपायन उवाच ।
इति स द्रुपदो राजा स्वयंवरमघोषयत् ।
तच्छ्रुत्वा पार्थिवाः सर्वे समीयुस्तत्र भारत ॥१९
ऋषयश्च महात्मानः स्वयंवरदिदृक्षवः ।
दुर्योधनपुरोगाश्च सकर्णाः कुरवो नृप ॥ २०
'यादवा वासुदेवेन सार्धमन्धकवृष्णयः ।'
ततोऽर्चिता राजगुणा द्रुपदेन महात्मना ॥ २१
उपोपविष्टा मञ्चेषु द्रष्टुकामाः स्वयंवरम् ।
'ब्राह्मणाश्च महाभागा देशेभ्यः समुपागमन् २२
ब्राह्मणैरेव सहिताः पाण्डवाः समुपाविशन् ।
त्रयस्त्रिंशत्सुराः सर्वे विमानैर्व्योम्न्यवस्थिताः २३
ततः पौरजनाः सर्वे सागरोद्धूतनिःस्वनाः ।
शिंशुमारशिरः प्राप्य न्यविशंस्ते स पार्थिवाः २४
प्रागुत्तरेण नगराद्भूमिभागे समे शुभे ।
समाजवाटः शुशुभे भवनैः सर्वतो वृतः ॥ २५
प्राकारपरिखोपेतो द्वारतोरणमण्डितः ।
वितानेन विचित्रेण सर्वतः समलङ्कृतः ॥ २६
तूर्यौघशतसङ्कीर्णः पराध्यागुरुधूपितः ।
चन्दनोदकसिक्तश्च माल्यदामोपशोभितः ॥२७
कैलासशिखरप्रख्यैर्नभस्तलविलेखिभिः ।
सर्वतः संवृतः शुभ्रैः प्रासादैः सुकृतोच्छ्रयैः २८
सुवर्णजालसंवीतैर्मणिकुट्टिमभूषणैः ।
सुखारोहणसोपानैर्महासनपरिच्छदैः ॥ २९
स्रग्दामसमवच्छन्नैरगुरूत्तमवासितैः ।
हंसांशुवर्णैर्बहुभिरायोजनसुगन्धिभिः ॥ ३०
असंबाधशतद्वारैः शयनासनशोभितैः ।
बहुधातुपिनद्धाङ्गैर्हिमवच्छिखरैरिव ॥ ३१
तत्र नानाप्रकारेषु विमानेषु स्वलङ्कृताः ।
स्पर्धमानास्तदाऽन्योन्यं निषेदुः सर्वपार्थिवाः३२

जज्ञिरे ज्ञातवन्तः ॥ ७ ॥ वैहायसमन्तरिक्षगतम् ॥ १७ ॥ शिंशुमारो जलजन्तुस्तदाकारस्तारासमूहात्मको विष्णुस्तस्य शिरःप्रदेशे ऐशान्यां दिशि । अतएव सा अपराजितादिक् तां दिशं प्राप्य न्यविशन् ॥२४॥ तामेव दिशमाह प्रागिति ॥ २५॥ द्विशततमोऽध्यायः ॥ २०० ॥

तत्रोपविष्टान्ददृशुर्महासत्वान्पृथग्जनाः ।
राजसिंहान्महाभागान्कृष्णागुरुविभूपितान्॥ ३३
महाप्रसादान्ब्रह्मण्यान्स्वराष्ट्रपरिरक्षिणः ।
प्रियान्सर्वस्य लोकस्य सुकृतैः कर्मभिः शुभैः ३४
मञ्चेषु च परार्ध्येषु पौरजानपदा जनाः ।
कृष्णादर्शनसिद्ध्यर्थं सर्वतः समुपाविशन् ॥ ३५
ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन् ।
ऋद्धिं पञ्चालराजस्य पश्यन्तस्तामनुत्तमाम्॥ ३६
ततः समाजो ववृधे स राजन्दिवसान्बहून् ।
रत्नप्रदानबहुलः शोभितो नटनर्तकैः ॥ ३७
वर्तमाने समाजे तु रमणीयेऽह्नि षोडशे ।
'मैत्रे मुहूर्ते तस्याश्च राजदाराः पुराविदः ।
पुत्रवत्यः सुवसनाः प्रतिकर्मोपचक्रमुः ॥ ३८
वैडूर्यमयपीठे तु निविष्टां द्रौपदीं तदा ।
सतूर्यं स्नापयाञ्चक्रुः स्वर्णकुम्भस्थितैर्जलैः ॥ ३९
तां निवृत्ताभिषेकां च दुकूलद्वयधारिणीम् ।
निन्युर्मणिस्तम्भवतीं वेदिं वै सुपरिष्कृताम् ॥४०
निवेश्य प्राङ्मुखीं हृष्टां विस्मिताक्ष्यः प्रसाधिकाः।
केनालङ्करणेनेमामित्यन्योन्यं व्यलोकयन् ॥ ४१
धूपोष्मणा च केशानामार्द्रभावं व्यपोहयन् ।
बबन्धुरस्या धम्मिल्लं माल्यैः सुरभिगन्धिभिः४२
दूर्वामधूकरचितं माल्यं तस्या ददुः करे ।
चक्रुश्च कृष्णागरुणा पत्रसङ्गं कुचद्वये ॥ ४३
रेजे सा चक्रवाकाङ्का स्वर्णदीर्घा सरिद्वरा ।
अलकैः कुटिलैस्तस्या मुखं विकसितं बभौ ॥४४
आसक्तभृङ्गं कुसुमं शशिबिम्बं जिगाय तत् ।
कालाञ्जनं नयनयोराचारार्थं समादधुः ॥ ४५
भूषणं रत्नखचितैरलंचक्रुर्यथोचितम् ।
माता च तस्याः पृषती हरितालमनश्शिलाम्४६
अङ्गुलीभ्यामुपादाय तिलकं विदधे मुखे ।
अलङ्कृतां वधूं दृष्ट्वा योषितो मुदमाययुः ॥ ४७
माता न मुमुदे तस्याः पतिः कीदृग्भविष्यति ।
सौविदल्लाः समागम्य द्रुपदस्याज्ञया ततः ॥४८
एनामारोपयामासुः करिणीं कुचभूषिताम् ।
ततोऽवाद्यन्त वाद्यानि मङ्गलानि दिवि स्पृशन्४९
विलासिनीजनाश्चापि प्रवरं करिणीशतम् ।
माङ्गल्यगीतं गायन्त्यः पार्श्वयोरुभयोर्ययुः ॥ ५०
जनापसरणे व्यग्राः प्रतिहार्यः पुरा ययुः ।
कोलाहलो महानासीत्तस्मिन्पुरवरे तदा ॥ ५१
धृष्टद्युम्नो ययावग्रे हयमारुह्य भारत ।
द्रुपदो रङ्गदेशे तु बलेन महता युतः ॥ ५२
तस्थौ व्यूह्य महानीकं पालितं दृढधन्विभिः ।'
आप्लुताङ्गीं सुवसनां सर्वाभरणभूषिताम् ॥ ५३
मालां च समुपादाय काञ्चनीं समलङ्कृताम् ।
'आगतां ददृशुः सर्वे रङ्गभूमिमलङ्कृताम् ॥' ५४
अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ।
'तस्थौ प्रमुदितान्सर्वान्नृपतीन्रङ्गमण्डले ।
प्रेक्षन्ती व्रीडितापाङ्गी द्रष्टॄणां सुमनोहरा ॥' ५५
पुरोहितः सोमकानां मन्त्रविद्ब्राह्मणः शुचिः ।
परिस्तीर्य जुहावाग्निमाज्येन विधिवत्तदा ॥ ५६
संतर्पयित्वा ज्वलनं ब्राह्मणान्स्वस्ति वाच्य च ।
वारयामास सर्वाणि वादित्राणि समन्ततः ॥ ५७
निःशब्दे तु कृते तस्मिन्धृष्टद्युम्नो विशांपते ।
कृष्णामादाय विधिवन्मेघदुन्दुभिनिःस्वनः ॥ ५८
रङ्गमध्यं गतस्तत्र मेघगम्भीरया गिरा ।
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ ५९

इदं धनुर्लक्ष्यमिमे च बाणाः
शृण्वन्तु मे भूपतयः समेताः ।
छिद्रेण यन्त्रस्य समर्पयध्वं
शरैः शितैर्व्योमचरैर्दशार्धैः ॥ ६०
एतन्महत्कर्म करोति यो वै
कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं
कृष्णा भवित्री न मृषा ब्रवीमि ॥ ६१
तानेवमुक्त्वा द्रुपदस्य पुत्रः
पश्चादिदं तां भगिनीमुवाच ।
नाम्ना च गोत्रेण च कर्मणा च
संकीर्तयन्भूमिपतीन्समेतान् ॥ ६२

॥ इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि द्विशततमोऽध्यायः ॥ २०० ॥

## एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

रङ्गे आगतानां राज्ञां नामकथनम् ॥ १ ॥

धृष्टद्युम्न उवाच ।
दुर्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः ।
विविंशतिर्विकर्णश्च सहो दुःशासनस्तथा ॥ १
युयुत्सुर्वायुवेगश्च भीमवेगरवस्तथा ।
उग्रायुधो बलाकी च करकायुर्विरोचनः ॥ २
कुण्डकश्चित्रसेनश्च सुवर्चाः कनकध्वजः ।
नन्दको बाहुशाली च तुहुण्डो विकटस्तथा ॥ ३
एते चान्ये च बहवो धार्तराष्ट्रा महाबलाः ।
कर्णेन सहिता वीरास्त्वदर्थं समुपागताः ॥ ४
असङ्ख्याता महात्मानः पार्थिवाः क्षत्रियर्षभाः ।
शकुनिः सौबलश्चैव वृषकोऽथ बृहद्बलः ॥ ५
एते गान्धारराजस्य सुताः सर्वे समागताः ।
अश्वत्थामा च भोजश्च सर्वशस्त्रभृतां वरौ ॥ ६
समवेतौ महात्मानौ त्वदर्थे समलङ्कृतौ ।
बृहन्तो मणिमांश्चैव दण्डधारश्च पार्थिवः ॥ ७
सहदेवजयत्सेनौ मेघसन्धिश्च पार्थिवः ।
विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ॥ ८
वार्धक्षेमिः सुशर्मा च सेनाबिन्दुश्च पार्थिवः ।
सुकेतुः सह पुत्रेण सुनाम्ना च सुवर्चसा ॥ ९
सुचित्रः सुकुमारश्च वृकः सत्यधृतिस्तथा ।
सूर्यध्वजो रोचमानो नीलश्चित्रायुधस्तथा ॥ १०
अंशुमांश्चेकितानश्च श्रेणिमांश्च महाबलः ।
समुद्रसेनपुत्रश्च चन्द्रसेनः प्रतापवान् ॥ ११
जलसन्धः पितापुत्रौ विदण्डो दण्ड एव च ।
पौण्ड्रको वासुदेवश्च भगदत्तश्च वीर्यवान् ॥ १२
कलिङ्गस्ताम्रलिप्तश्च पत्तनाधिपतिस्तथा ।
मद्रराजस्तथा शल्यः सहपुत्रो महारथः ॥ १३
रुक्माङ्गदेन वीरेण तथा रुक्मरथेन च ।
कौरव्यः सोमदत्तश्च पुत्रश्चास्य महारथः ॥ १४
समवेतास्त्रयः शूरा भूरिर्भूरिश्रवाः शलः ।
सुदक्षिणश्च काम्भोजो दृढधन्वा च पौरवः॥ १५
बृहद्बलः सुषेणश्च शिबिरौशीनरस्तथा ।
पटच्चरनिहन्ता च कारूषाधिपतिस्तथा ॥ १६
सङ्कर्षणो वासुदेवो रौक्मिणेयश्च वीर्यवान् ।
साम्बश्च चारुदेष्णश्च प्राद्युम्निः सगदस्तथा॥ १७
अक्रूरः सात्यकिश्चैव उद्धवश्च महामतिः ।
कृतवर्मा च हार्दिक्यः पृथुर्विपृथुरेव च ॥ १८
विदूरथश्च कङ्कश्च शङ्कुश्च सगवेषणः ।
आशावहोऽनिरुद्धश्च समीकः सारिमेजयः ॥ १९
वीरो वातपतिश्चैव झिल्लीपिण्डारकस्तथा ।
उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्तिताः ॥२०
भगीरथो बृहत्क्षत्रः सैन्धवश्च जयद्रथः ।
बृहद्रथो बाह्लिकश्च श्रुतायुश्च महारथः ॥ २१
उलूकः कैतवो राजा चित्राङ्गदशुभाङ्गदौ ।
वत्सराजश्च मतिमान्कोसलाधिपतिस्तथा ॥ २२
शिशुपालश्च विक्रान्तो जरासन्धस्तथैव च ।
एते चान्ये च बहवो नानाजनपदेश्वराः ॥ २३
त्वदर्थमागता भद्रे क्षत्रियाः प्रथिता भुवि ।
एते भेत्स्यन्ति विक्रान्तास्त्वदर्थे लक्ष्यमुत्तमम् ।
विध्यते य इदं लक्ष्यं वरयेथाः शुभेऽद्य तम्॥२४

॥ इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

## द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

ब्राह्मणमध्यस्थान्पाण्डवान्विज्ञाय श्रीकृष्णेन बलरामाय कथनं ॥ १ ॥ धनुर्दर्शनेनैव केषांचिद्राज्ञां धनुःपूरणे निराशता ॥ २ ॥ शिशुपालादीनां धनुःपूरणे भङ्गः ॥ ३ ॥ अर्जुनस्य धनुःपूरणे एषणा ॥ ४ ॥

वैशंपायन उवाच ।
तेऽलङ्कृताः कुण्डलिनो युवानः
परस्परं स्पर्धमाना नरेन्द्राः ।
अस्त्रं बलं चात्मनि मन्यमानाः
सर्वे समुत्पेतुरुदायुधास्ते ॥ १

रूपेण वीर्येण कुलेन चैव
शीलेन वित्तेन च यौवनेन ।
समिद्धदर्पा मदवेगभिन्ना
मत्ता यथा हैमवता गजेन्द्राः ॥ २

परस्परं स्पर्धया प्रेक्षमाणाः
सङ्कल्पजेनाभिपरिप्लुताङ्गाः ।
कृष्णा ममैवेत्यभिभाषमाणा
नृपाः समुत्पेतुरथासनेभ्यः ॥ ३

ते क्षत्रिया रङ्गगताः समेता
जिगीषमाणा द्रुपदात्मजां ताम् ।
चकाशिरे पर्वतराजकन्या-
मुमां यथा देवगणाः समेताः ॥ ४

कन्दर्पबाणाभिनिपीडिताङ्गाः
कृष्णागतैस्ते हृदयैर्नरेन्द्राः ।
रङ्गावतीर्णा द्रुपदात्मजार्थे
द्वेषं प्रचक्रुः सुहृदोऽपि तत्र ॥ ५

अथाययुर्देवगणा विमानै
रुद्रादित्या वसवोऽथाश्विनौ च ।
साध्याश्च सर्वे मरुतस्तथैव
यमं पुरस्कृत्य धनेश्वरं च ॥ ६

दैत्याः सुपर्णाश्च महोरगाश्च
देवर्षयो गुह्यकाश्चारणाश्च ।
विश्वावसुर्नारदपर्वतौ च
गन्धर्वमुख्याः सहसाऽप्सरोभिः ॥ ७

हलायुधस्तत्र जनार्दनश्च
वृष्ण्यन्धकाश्चैव यथाप्रधानम् ।
प्रेक्षां स चक्रुर्यदुपुङ्गवास्ते
स्थिताश्च कृष्णस्य मते महान्तः ॥ ८

दृष्ट्वा तु तान्मत्तगजेन्द्ररूपा-
न्पञ्चाभिपद्मानिव वारणेन्द्रान् ।
भस्मावृताङ्गानिव हव्यवाहान्
कृष्णः प्रदध्यौ यदुवीरमुख्यः ॥ ९

शशंस रामाय युधिष्ठिरं स
भीमं सजिष्णुं च यमौ च वीरौ ।
शनैःशनैस्तान्प्रसमीक्ष्य रामो
जनार्दनं प्रीतमना ददर्श ह ॥ १०

अन्ये तु वीरा नृपपुत्रपौत्राः
कृष्णागतैर्नेत्रमनःस्वभावैः ।
व्यायच्छमाना ददृशुर्न तान्वै
सन्दष्टदन्तच्छदताम्रनेत्राः ॥ ११

तथैव पार्थाः पृथुबाहवस्ते
वीरौ यमौ चैव महानुभावौ ।
तां द्रौपदीं प्रेक्ष्य तदा स्म सर्वे
कन्दर्पबाणाभिहता बभूवुः ॥ १२

देवर्षिगन्धर्वसमाकुलं त-
त्सुपर्णनागासुरसिद्धजुष्टम् ।
दिव्येन गन्धेन समाकुलं च
दिव्यैश्च पुष्पैरवकीर्यमाणम् ॥ १३

महास्वनैर्दुन्दुभिनादितैश्च
बभूव तत्सङ्कुलमन्तरिक्षम् ।
विमानसंबाधमभूत्समन्ता-
त्सवेणुवीणापणवानुनादम् ॥ १४

'समाजवाटोपरि संस्थितानां
मेघैः समन्तादिव गर्जमानैः ।'
ततस्तु ते राजगणाः क्रमेण
कृष्णानिमित्तं कृतविक्रमाश्च ।
सकर्णदुर्योधनशाल्वशल्य-
द्रौणायनिक्राथसुनीथवक्राः ॥ १५

कलिङ्गवङ्गाधिपपाण्ड्यपौण्ड्रा
विदेहराजो यवनाधिपश्च ।
अन्ये च नानानृपपुत्रपौत्रा
राष्ट्राधिपाः पङ्कजपत्रनेत्राः ॥ १६

किरीटहाराङ्गदचक्रवालै-
र्विभूषिताङ्गाः पृथुबाहवस्ते ।

संकल्पजेन कामेन ॥ ३ ॥ अभितः पद्मा लक्ष्मीर्येषां तान्स- र्वाङ्गसुन्दरानित्यर्थः ॥ ९ ॥ द्व्यधिकद्विशततमोऽध्यायः ॥२०२॥

अनुक्रमं विक्रमसत्वयुक्ता
बलेन वीर्येण च नर्दमानाः ॥ १७
तत्कार्मुकं संहननोपपन्नं
सज्यं न शेकुर्मनसाऽपि कर्तुम् ।
ते विक्रमन्तः स्फुरता दृढेन
विक्षिप्यमाणा धनुषा नरेन्द्राः ॥ १८
विचेष्टमाना धरणीतलस्था
यथाबलं शैक्ष्यगुणक्रमाश्च ।
गतौजसः स्रस्तकिरीटहारा
विनिःश्वसन्तः शमयांबभूवुः ॥ १९
हाहाकृतं तद्धनुषा दृढेन
विस्रस्तहाराङ्गदचक्रवालम् ।
कृष्णानिमित्तं विनिवृत्तकामं
राज्ञां तदा मण्डलमार्तमासीत् ॥ २०
'एवं तेषु निवृत्तेषु क्षत्रियेषु समन्ततः ।
चेदीनामधिपो वीरो बलवानन्तकोपमः ॥ २१
दमघोषात्मजो धीमाञ्शिशुपालो महाद्युतिः ।
धनुषोऽभ्याशमागम्य तस्थौ राज्ञां समक्षतः॥२२
तदप्यारोप्यमाणं तु माषमात्रेऽभ्यताडयत् ।
धनुषा पीड्यमानस्तु जानुभ्यामगमन्महीम् ॥२३
तत उत्थाय राजा स स्वराष्ट्राण्यभिजग्मिवान् ।
ततो राजा जरासन्धो महावीर्यो महाबलः॥२४
कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः ।
मत्तवारणताम्राक्षो मत्तवारणवेगवान् ॥ २५
धनुषोऽभ्याशमागत्य तस्थौ गिरिरिवाचलः।
धनुरारोप्यमाणं तु सर्षमात्रेऽभ्यताडयत् ॥ २६
ततः शल्यो महावीर्यो मद्रराजो महाबलः ।
धनुरारोप्यमाणं तु मुद्गमात्रेऽभ्यताडयत् ॥ २७
तदैवागात्स्वयं राज्यं पश्चादनवलोकयन् ।
इदं धनुर्वरं कोऽद्य सज्यं कुर्वीत पार्थिवः॥ २८
इति निश्चित्य मनसा भूय एव स्थितस्तदा ।
ततो दुर्योधनो राजा धार्तराष्ट्रः परन्तपः ॥ २९
मानी दृढास्त्रसंपन्नः सर्वैश्च नृपलक्षणैः ।
उत्थितः सहसा तत्र भ्रातृमध्ये महाबलः ॥३०
विलोक्य द्रौपदीं हृष्टो धनुषोऽभ्याशमागमत् ।
स बभौ धनुरादाय शक्रश्चापधरो यथा ॥ ३१
धनुरारोपयामास तिलमात्रेऽभ्यताडयत् ।
आरोप्यमाणं तद्राजा धनुषा बलिना तदा॥३२
उत्तानशय्यमपतदङ्गुल्यन्तरताडितः ।
स ययौ ताडितस्तेन व्रीडन्निव नराधिपः ॥ ३३
ततो वैकर्तनः कर्णो वृषा वै सूतनन्दनः ।
धनुरभ्याशमागम्य तोलयामास तद्धनुः ॥ ३४
तं चाप्यारोप्यमाणं तद्रोममात्रेऽभ्यताडयत् ।
त्रैलोक्यविजयी कर्णः सत्वे त्रैलोक्यविश्रुतः॥३५
धनुषा सोऽपि निर्धूत इति सर्वे भयाकुलाः ।
एवं कर्णे विनिर्धूते धनुषा च नृपोत्तमाः ॥ ३६
चक्षुर्भिरपि नापश्यन्विनम्रमुखपङ्कजाः ।
दृष्ट्वा कर्णं विनिर्धूतं लोके वीरा नृपोत्तमाः॥३७
निराशा धनुरुद्धारे द्रौपदीसंगमेऽपि च ॥ ३८
तस्मिंस्तु संभ्रान्तजने समाजे
निक्षिप्तवादेषु जनाधिपेषु ।
कुन्तीसुतो जिष्णुरियेष कर्तुं
सज्यं धनुस्तत्सशरं च वीरः ॥ ३९
ततो वरिष्ठः सुरदानवाना-
मुदारधीर्वृष्णिकुलप्रवीरः ।
जहर्ष रामेण स पीड्य हस्तं
हस्तंगतां पाण्डुसुतस्य मत्वा ॥ ४०
न जज्ञिरेऽन्ये नृपविप्रमुख्याः
संछन्नरूपानथ पाण्डुपुत्रान् ।
विना हि लोके च यदुप्रवीरौ
धौम्यं हि धर्मं सह सोदरांश्च ॥ ४१

॥ इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

## त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

धनुरारोपणार्थमुत्थितमर्जुनंप्रति ब्राह्मणानां शुभाशंसनम् ॥ १ ॥ अर्जुनेन धनुरारोपणपूर्वकं लक्ष्यवेधः ॥ २ ॥ द्रौपद्या अर्जुनकण्ठे मालाप्रक्षेपः ॥ ३ ॥

वैशंपायन उवाच ।
यदा निवृत्ता राजानो धनुषः सज्यकर्मणः ।
अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः ॥ १
उदक्रोशन्विप्रमुख्या विधुन्वन्तोऽजिनानि च ।
दृष्ट्वा संप्रस्थितं पार्थमिन्द्रकेतुसमप्रभम् ॥ २
केचिदासन्विमनसः केचिदासन्मुदान्विताः ।
आहुः परस्परं केचिन्निपुणा बुद्धिजीविनः ॥ ३
यत्कर्णशल्यप्रमुखैः क्षत्रियैर्लोकविश्रुतैः ।
नानतं बलवद्भिर्हि धनुर्वेदपरायणैः ॥ ४
तत्कथं त्वकृतास्त्रेण प्राणतो दुर्बलीयसा ।
बटुमात्रेण शक्यं हि सज्यं कर्तुं धनुर्द्विजाः ॥ ५
अवहास्या भविष्यन्ति ब्राह्मणाः सर्वराजसु ।
कर्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते ॥ ६
यद्येष दर्पाद्धर्षाद्वाप्यथ ब्राह्मणचापलात् ।
प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ॥ ७
नावहास्या भविष्यामो न च लाघवमास्थिताः ।
न च विद्विष्टतां लोके गमिष्यामो महीक्षिताम् ८
केचिदाहुर्युवा श्रीमान्नागराजकरोपमः ।
पीनस्कन्धोरुबाहुश्च धैर्येण हिमवानिव ॥ ९
सिंहखेलगतिः श्रीमान्मत्तनागेन्द्रविक्रमः ।
संभाव्यमस्मिन्कर्मेदमुत्साहाच्चानुमीयते ॥ १०
शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत् ।
न च तद्विद्यते किंचित्कर्म लोकेषु यद्भवेत् ॥ ११
ब्राह्मणानामसाध्यं च नृषु संस्थानचारिषु ।
अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः ॥ १२
दुर्बला अपि विप्रा हि बलीयांसः स्वतेजसा ।
ब्राह्मणो नावमन्तव्यः सदसद्वा समाचरन् ॥ १३
सुखं दुःखं महद्ध्रस्वं कर्म यत्समुपागतम् ।
जामदग्न्येन रामेण निर्जिताः क्षत्रिया युधि ॥ १४
पीतः समुद्रोऽगस्त्येन अगाधो ब्रह्मतेजसा ।
तस्माद्ब्रुवन्तु सर्वेऽत्र बटुरेष धनुर्महान् ॥ १५
आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः ।
वैशंपायन उवाच ।
एवं तेषां विलपतां विप्राणां विविधा गिरः ॥ १६
अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः ।
'अर्जुनः पाण्डवश्रेष्ठो धृष्टद्युम्नमथाब्रवीत् ॥ १७
एतद्धनुर्ब्राह्मणानां सज्यं कर्तुमलं तु किम् ।
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा धृष्टद्युम्नोऽब्रवीद्वचः ॥ १८
ब्राह्मणो वाथ राजन्यो वैश्यो वा शूद्र एव वा ।
एतेषां यो धनुःश्रेष्ठं सज्यं कुर्याद्द्विजोत्तम ॥ १९
तस्मै प्रदेया भगिनी सत्यमुक्तं मया वचः ॥ २०
वैशंपायन उवाच ।
ततः पश्चान्महातेजाः पाण्डवो रणदुर्जयः ।'
स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ॥ २१
प्रणम्य शिरसा देवमीशानं वरदं प्रभुम् ।
कृष्णं च मनसा कृत्वा जगृहे चार्जुनो धनुः २२
यत्पार्थिवै रुक्मसुनीथवक्रै
राधेयदुर्योधनशल्यसाल्वैः ।
तदा धनुर्वेदपरैर्नृसिंहैः
कृतं न सज्यं महतोऽपि यत्नात् ॥ २३
तदर्जुनो वीर्यवतां सदर्प-
स्तदैन्द्रिरिन्द्रावरजप्रभावः ।
सज्यं च चक्रे निमिषान्तरेण
शरांश्च जग्राह दशार्धसङ्ख्यान् ॥ २४
विव्याध लक्ष्यं निपपात तच्च
छिद्रेण भूमौ सहसातिविद्धम् ।
ततोऽन्तरिक्षे च बभूव नादः
समाजमध्ये च महान्निनादः ॥ २५
पुष्पाणि दिव्यानि ववर्ष देवः
पार्थस्य मूर्ध्नि द्विषतां निहन्तुः ॥ २६

चेलानि विव्यधुस्तत्र ब्राह्मणाश्च सहस्रशः ।
विलक्षितास्ततश्चक्रुर्हाहाकारांश्च सर्वशः ।
न्यपतंश्चात्र नभसः समन्तात्पुष्पवृष्टयः ॥ २७
शताङ्गानि च तूर्याणि वादकाः समवादयन् ।
सूतमागधसङ्घाश्चाप्यस्तुवंस्तत्र सुस्वराः ॥ २८
तं दृष्ट्वा द्रुपदः प्रीतो बभूव रिपुसूदनः ।
सह सैन्यैश्च पार्थस्य साहाय्यार्थमियेष सः॥ २९
तस्मिंस्तु शब्दे महति प्रवृद्धे
युधिष्ठिरो धर्मभृतां वरिष्ठः ।
आवासमेवोपजगाम शीघ्रं
सार्धं यमाभ्यां पुरुषोत्तमाभ्याम् ॥ ३०
विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा
पार्थं च शक्रप्रतिमं निरीक्ष्य ।
'स्वभ्यस्तरूपापि नवेव नित्यं
विनापि हासं हसतीव कन्या ॥ ३१
मदादृतेऽपि स्खलतीव भावै-
र्वाचा विना व्याहरतीव दृष्ट्या ।
आदाय शुक्लं वरमाल्यदाम
जगाम कुन्तीसुतमुत्स्मयन्ती ॥ ३२
गत्वा च पश्चात्प्रसमीक्ष्य कृष्णा
पार्थस्य वक्षस्यविशङ्कमाना ।
क्षिप्त्वा स्रजं पार्थिववीरमध्ये
वराय वव्रे द्विजसङ्घमध्ये ॥ ३३
शचीव देवेन्द्रमथाग्निदेवं
स्वाहेव लक्ष्मीश्च यथा मुकुन्दम् ।
उषेव सूर्यं मदनं रतीव
महेश्वरं पर्वतराजपुत्री ॥' ३४
स तामुपादाय विजित्य रङ्गे
द्विजातिभिस्तैरभिपूज्यमानः ।
रङ्गान्निरक्रामदचिन्त्यकर्मा
पत्न्या तया चाप्यनुगम्यमानः ॥ ३५

॥ इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

---

## चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

क्रोधाद्राजसु द्रुपदहननार्थमागतेषु राजसंमुखे भीमार्जुनयोः सज्जीभूय स्थितयोः सतोः कृष्णबलरामयोः संवादः ॥ १ ॥

वैशंपायन उवाच ।
तस्मै दित्सति कन्यां तु ब्राह्मणाय तदा नृपे ।
कोप आसीन्महीपानामालोक्यान्योन्यमन्तिकात्
'ऊचुः सर्वे समागम्य परस्परहितैषिणः ।
वयं सर्वे समाहूता द्रुपदेन दुरात्मना ।
संहत्य चाभ्यगच्छाम स्वयंवरदिदृक्षया ॥' २
अस्मानयमतिक्रम्य तृणीकृत्य च संगतान् ।
दातुमिच्छति विप्राय द्रौपदीं योषितां वराम्॥ ३
अवरोप्येह वृक्षस्तु फलकाले निपात्यते ।
निहन्मैनं दुरात्मानं योयमस्मान्न मन्यते ॥ ४
न ह्यर्हत्येष संमानं नापि वृद्धक्रमं गुणैः ।
हन्मैनं सह पुत्रेण दुराचारं नृपद्विषम् ॥ ५
अयं हि सर्वानाहूय सत्कृत्य च नराधिपान् ।
गुणवद्भोजयित्वान्नं ततः पश्चान्न मन्यते ॥ ६
अस्मिन्राजसमावाये देवानामिव सन्नये ।
किमयं सदृशं कंचिन्नृपतिं नैव दृष्टवान् ॥ ७
न च विप्रेष्वधीकारो विद्यते वरणं प्रति ।
स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः ॥ ८
अथवा यदि कन्येयं न च कंचिद्बुभूषति ।
अग्नावेनां परिक्षिप्य याम राष्ट्राणि पार्थिवाः॥९
ब्राह्मणो यदि चापल्याल्लोभाद्वा कृतवानिदम् ।
विप्रियं पार्थिवेन्द्राणां नैष वध्यः कथंचन॥ १०
ब्राह्मणार्थं हि नो राज्यं जीवितं हि वसूनि च ।
पुत्रपौत्रं च यच्चान्यदस्माकं विद्यते धनम् ॥ ११

साहाय्यार्थं द्रौपद्यलाभात् क्षुब्धैर्नृपान्तरैर्युद्धप्रसक्तौ सत्याम् ॥ २९ ॥ त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

अवमानभयाच्चैव स्वधर्मस्य च रक्षणात् ।
स्वयंवराणामन्येषां मा भूदेवंविधा गतिः ॥ १२
इत्युक्त्वा राजशार्दूला रुष्टाः परिघबाहवः ।
द्रुपदं तु जिघांसन्तः सायुधाः समुपाद्रवन् ॥१३
तान्गृहीतशरावापान्क्रुद्धानापततो बहून् ।
द्रुपदो वीक्ष्य संत्रासाद्ब्राह्मणाञ्छरणं गतः ॥१४
'न भयान्नापि कार्पण्यान्न प्राणपरिरक्षणात् ।
जगाम द्रुपदो विप्राञ्शमार्थी प्रत्यपद्यत ॥' १५
वेगेनापततस्तांस्तु प्रभिन्नानिव वारणान् ।
पाण्डुपुत्रौ महेष्वासौ प्रतियातावरिन्दमौ ॥ १६
ततः समुत्पेतुरुदायुधास्ते
महीक्षितो बद्धगोधाङ्गुलित्राः ।
जिघांसमानाः कुरुराजपुत्रा-
वमर्षयन्तोऽर्जुनभीमसेनौ ॥ १७
ततस्तु भीमोऽद्भुतभीमकर्मा
महाबलो वज्रसमानसारः ।
उत्पाट्य दोर्भ्यां द्रुममेकवीरो
निष्पत्रयामास यथा गजेन्द्रः ॥ १८
तं वृक्षमादाय रिपुप्रमाथी
दण्डीव दण्डं पितृराज उग्रम् ।
तस्थौ समीपे पुरुषर्षभस्य
पार्थस्य पार्थः पृथुदीर्घबाहुः ॥ १९
तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धि-
र्जिष्णुः स हि भ्रातुरचिन्त्यकर्मा ।
विसिष्मिये चापि भयं विहाय
तस्थौ धनुर्गृह्य महेन्द्रकर्मा ॥ २०

तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धि-
र्जिष्णोः सहभ्रातुरचिन्त्यकर्मा ।
दामोदरो भ्रातरमुग्रवीर्यं
हलायुधं वाक्यमिदं बभाषे ॥ २१
य एष सिंहर्षभखेलगामी
महद्धनुः कर्षति तालमात्रम् ।
एषोऽर्जुनो नात्र विचार्यमस्ति
यद्यस्मि संकर्षण वासुदेवः ॥ २२
यस्त्वेष वृक्षं तरसाऽवभज्य
राज्ञां निकारे सहसा प्रवृत्तः ।
वृकोदरान्नान्य इहैतदद्य
कर्तुं समर्थः समरे पृथिव्याम् ॥ २३
योऽसौ पुरस्तात्कमलायताक्षो
महातनुः सिंहगतिर्विनीतः ।
गौरः प्रलम्बोज्ज्वलचारुघोणो
विनिःसृतः सोऽप्युत धर्मपुत्रः ॥ २४
यौ तौ कुमाराविव कार्तिकेयौ
द्वावाश्विनेयाविति मे वितर्कः ।
मुक्ता हि तस्माज्जतुवेश्मदाहा-
न्मया श्रुताः पाण्डुसुताः पृथा च ॥ २५
वैशंपायन उवाच ।
तमब्रवीन्निर्जलतोयदाभो
हलायुधोऽनन्तरजं प्रतीतः ।
प्रीतोऽस्मि दृष्ट्वा हि पितृष्वसारं
पृथां विमुक्तां सह कौरवाग्र्यैः ॥ २६

॥ इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

---

## पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

अर्जुनेन कर्णपराजयः ॥ १ ॥ भीमेन कर्णपराजयः ॥ २ ॥ युधिष्ठिरादिभिर्दुर्योधनादिपराजयः ॥ ३ ॥ पुनर्युद्धाय कृतनिश्चयानां राज्ञां श्रीकृष्णवाक्येन युद्धोद्योगाद्विरम्य स्वस्वालयगमनम् ॥ ४ ॥ द्रौपद्या सह भीमार्जुनयोः कुलालगृहप्रवेशः ॥ ५ ॥

वैशंपायन उवाच ।
अजिनानि विधुन्वन्तः करकाश्च द्विजर्षभाः ।
ऊचुस्ते भीर्न कर्तव्या वयं योत्स्यामहे परान् ॥१
तानेवं वदतो विप्रानर्जुनः प्रहसन्निव ।

उवाच प्रेक्षका भूत्वा यूयं तिष्ठत पार्श्वतः ॥ २
अहमेनानजिह्माग्रैः शतशो विकिरञ्छरैः ।
वारयिष्यामि संक्रुद्धान्मन्त्रैराशीविषानिव ॥ ३
इति तद्धनुरानम्य शुल्कावाप्तं महाबलः ।
भ्रात्रा भीमेन सहितस्तस्थौ गिरिरिवाचलः ॥ ४
ततः कर्णमुखान्दृष्ट्वा क्षत्रियान्युद्धदुर्मदान् ।
संपेततुरभीतौ तौ गजौ प्रतिगजानिव ॥ ५
ऊचुश्च वाचः परुषास्ते राजानो युयुत्सवः ।
आहवे हि द्विजस्यापि वधो दृष्टो युयुत्सतः ॥ ६
इत्येवमुक्त्वा राजानः सहसा दुद्रुवुर्द्विजान् ।
ततः कर्णो महातेजा जिष्णुं प्रति ययौ रणे ॥ ७
युद्धार्थी वासिताहेतोर्गजः प्रतिगजं यथा ।
भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली ॥ ८
दुर्योधनादयः सर्वे ब्राह्मणैः सह संगताः ।
मृदुपूर्वमयत्नेन प्रत्ययुध्यंस्तदाऽऽहवे ॥ ९
ततोऽर्जुनः प्रत्यविध्यदापतन्तं शितैः शरैः ।
कर्णं वैकर्तनं श्रीमान्विकृष्य बलवद्धनुः ॥ १०
तेषां शराणां वेगेन शितानां तिग्मतेजसाम् ।
विमुह्यमानो राधेयो यत्नात्तमनुधावति ॥ ११
तावुभावप्यनिर्देश्यौ लाघवाज्जयतां वरौ ।
अयुध्येतां सुसंरब्धावन्योन्यविजिगीषिणौ ॥ १२
कृते प्रतिकृतं पश्य पश्य बाहुबलं च मे ।
इति शूरार्थवचनैरभाषेतां परस्परम् ॥ १३
ततोऽर्जुनस्य भुजयोर्वीर्यमप्रतिमं भुवि ।
ज्ञात्वा वैकर्तनः कर्णः संरब्धः समयोधयत् ॥ १४
अर्जुनेन प्रयुक्तांस्तान्बाणान्वेगवतस्तदा ।
प्रतिहत्य ननादोच्चैः सैन्यानि तदपूजयन् ॥ १५
कर्ण उवाच ।
तुष्यामि ते विप्रमुख्य भुजवीर्यस्य संयुगे ।
अविषादस्य चैवास्य शस्त्रास्त्रविजयस्य च ॥ १६
किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम ।
अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः ॥ १७
आत्मप्रच्छादनार्थं वै बाहुवीर्यमुपाश्रितः ।
विप्ररूपं विधायेदं मन्ये मां प्रतियुध्यसे ॥ १८
न हि मामाहवे क्रुद्धमन्यः साक्षाच्छचीपतेः ।
पुमान्योधयितुं शक्तः पाण्डवाद्वा किरीटिनः १९
'दग्धा जतुगृहे सर्वे पाण्डवाः सार्जुनास्तदा ।
विनार्जुनं वा समरे मां निहन्तुमशक्नुवन्' ॥२०
तमेवंवादिनं तत्र फाल्गुनः प्रत्यभाषत ।
नास्मि कर्ण धनुर्वेदो नास्मि रामः प्रतापवान् २१
ब्राह्मणोऽस्मि युधां श्रेष्ठः सर्वशस्त्रभृतां वरः ।
ब्राह्मे पौरन्दरे चास्त्रे निष्ठितो गुरुशासनात् ॥२२
स्थितोऽस्म्यद्य रणे जेतुं त्वां वै वीर स्थिरो भव ।
'निर्जितोऽसीति वा ब्रूहि ततो व्रज यथासुखम् २३
वैशंपायन उवाच ।
एवमुक्त्वाऽथ कर्णस्य धनुश्चिच्छेद पाण्डवः ।
ततोऽन्यद्धनुरादाय संयोद्धुं सन्दधे शरम् ॥ २४
दृष्ट्वा तच्चापि कौन्तेयश्छित्वा तद्धनुराशुगैः ।
तथा वैकर्तनं कर्णं बिभेद समरेऽर्जुनः ॥ २५
ततः कर्णस्तु राधेयः छिन्नधन्वा महाबलः ।
शरैरतीव विद्धाङ्गः पलायनमथाकरोत् ॥ २६
पुनरायान्मुहूर्तेन गृहीत्वा सशरं धनुः ।
ववर्ष शरवर्षाणि पार्थे वैकर्तनस्तथा ॥ २७
तानि वै शरजालानि कौन्तेयोऽभ्यहनच्छरैः ।
ज्ञात्वा सर्वाञ्शरान्घोरान्कर्णोऽधावद्द्रुतं बहिः'२८
ब्राह्मं तेजस्तदाऽजय्यं मन्यमानो महारथः ।
अपरस्मिन्वनोद्देशे वीरौ शल्यवृकोदरौ ॥ २९
बलिनौ युद्धसंपन्नौ विद्यया च बलेन च ।
अन्योन्यमाह्वयन्तौ तु मत्ताविव महागजौ ॥३०
मुष्टिभिर्जानुभिश्चैव निघ्नन्तावितरेतरम् ।
प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ॥ ३१
आचकर्षतुरन्योन्यं मुष्टिभिश्चापि जघ्नतुः ।
ततश्चटचटाशब्दः सुघोरो ह्यभवत्तयोः ॥ ३२
पाषाणसंपातनिभैः प्रहारैरभिजघ्नतुः ।
मुहूर्तं तौ तदाऽन्योन्यं समरे पर्यकर्षताम् ॥ ३३
ततो भीमः समुत्क्षिप्य बाहुभ्यां शल्यमाहवे ।
अपातयत्कुरुश्रेष्ठो ब्राह्मणा जहसुस्तदा ॥ ३४

विजिगीषिणौ विजिगीषावन्तौ ॥ १२ ॥ वनोद्देशे रङ्गदेशां निवासस्थाने ॥२९॥ समुत्क्षिप्य कूष्माण्डफलवदपातयत् ॥३४॥

तत्राश्चर्यं भीमसेनश्चकार पुरुषर्षभः ।
यच्छल्यं पातितं भूमौ नावधीद्बलिनं बली ॥ ३५
पातिते भीमसेनेन शल्ये कर्णे च शङ्किते ।
'विस्मयः परमो जज्ञे सर्वेषां पश्यतां नृणाम् ॥ ३६
ततो राजसमूहस्य पश्यतो वृक्षमारुजत् ।
ततस्तु भीमं संज्ञाभिर्वारयामास धर्मराट् ॥ ३७
आकारज्ञस्तथा भ्रातुः पाण्डवोऽपि न्यवर्तत ।
धर्मराजश्च कौरव्य दुर्योधनममर्षणम् ॥ ३८
अयोधयत्सभामध्ये पश्यतां वै महीक्षिताम् ।
ततो दुर्योधनस्तं तु ह्यवज्ञाय युधिष्ठिरम् ॥ ३९
नायोधयत्तदा तेन बलवान्वै सुयोधनः ।
एतस्मिन्नन्तरेऽविध्यद्बाणेनानतपर्वणा ॥ ४०
दुर्योधनममित्रघ्नं धर्मराजो युधिष्ठिरः ।
ततो दुर्योधनः क्रुद्धो दण्डाहत इवोरगः ॥ ४१
प्रत्ययुध्यत राजानं यत्नं परममास्थितः ।
छित्त्वा राजा धनुः सज्यं धार्तराष्ट्रस्य संयुगे ॥ ४२
अभ्यवर्षच्छरौघैस्तं स हित्वा प्राद्रवद्रणम् ।
दुःशासनस्तु संक्रुद्धः सहदेवेन पार्थिव ॥ ४३
युद्ध्वा च सुचिरं कालं सहदेवेन निर्जितः ।
उत्सृज्य च धनुः सङ्ख्ये जानुभ्यामवनीं गतः ।
उत्थाय सोऽभिदुद्राव सोऽसिं जग्राह चर्म च ४४
विकर्णचित्रसेनाभ्यां निगृहीतश्च कौरवः ।
मा युद्धमिति कौरव्य ब्राह्मणेनाचलेन वै ॥ ४५
दुःसहो नकुलश्चोभौ युद्धं कर्तुं समुद्यतौ ।
तौ दृष्ट्वा कौरवा युद्धं वाक्यमूचुर्महाबलौ ॥ ४६
निवर्तन्तां भवन्तो वै कुतो विप्रेषु क्रूरता ।
दुर्बला ब्राह्मणाश्चेमे भवन्तो वै महाबलाः ॥ ४७
द्वावत्र ब्राह्मणौ क्रूरौ वाय्विन्द्रसदृशौ बले ।
ये वा के वा नमस्तेभ्यो गच्छामः स्वपुरं वयम् ४८
एवं संभाषमाणास्ते न्यवर्तन्ताथ कौरवाः ।
जहृषुर्ब्राह्मणास्तत्र समेतास्तत्र सङ्घशः ॥ ४९
बहुशस्ते ततस्तत्र क्षत्रिया रणमूर्धनि ।
प्रेक्षमाणास्तथाऽतिष्ठन्ब्राह्मणांश्च समन्ततः ॥ ५०
ब्राह्मणाश्च जयं प्राप्ताः कन्यामादाय निर्ययुः ।
विजिते भीमसेनेन शल्ये कर्णे च निर्जिते ॥ ५१
दुर्योधने चापयाते तथा दुःशासने रणात् ।'
शङ्किताः सर्वराजानः परिवव्रुर्वृकोदरम् ॥ ५२
ऊचुश्च सहितास्तत्र साध्विमौ ब्राह्मणर्षभौ ।
विज्ञायेतां क्वजन्मानौ क्वनिवासौ तथैव च ॥ ५३
को हि राधासुतं कर्णं शक्तो योधयितुं रणे ।
अन्यत्र रामाद्द्रोणाद्वा पाण्डवाद्वा किरीटिनः ५४
कृष्णाद्वा देवकीपुत्रात्कृपाद्वापि शरद्वतः ।
को वा दुर्योधनं शक्तः प्रतियोधयितुं रणे ॥ ५५
तथैव मद्राधिपतिं शल्यं बलवतांवरम् ।
बलदेवादृते वीरात्पाण्डवाद्वा वृकोदरात् ॥ ५६
वीराद्दुर्योधनाद्वाऽन्यः शक्तः पातयितुं रणे ।
क्रियतामवहारोऽस्माद्युद्धाद्ब्राह्मणसंवृतात् ॥ ५७
ब्राह्मणा हि सदा रक्ष्याः सापराधाऽपि नित्यदा ।
अथैनानुपलभ्येह पुनर्योत्स्याम हृष्टवत् ॥ ५८
वैशंपायन उवाच ।
तांस्तथावादिनः सर्वान्प्रसमीक्ष्य क्षितीश्वरान् ।
अथान्यान्पुरुषांश्चापि कृत्वा तत्कर्म संयुगे ॥ ५९
तत्कर्म भीमस्य समीक्ष्य कृष्णः
कुन्तीसुतौ तौ परिशङ्कमानः ।
निवारयामास महीपतींस्ता-
न्धर्मेण लब्धेत्यनुनीय सर्वान् ॥ ६०
एवं ते विनिवृत्तास्तु युद्धाद्युद्धविशारदाः ।
यथावासं ययुः सर्वे विस्मिता राजसत्तमाः ॥ ६१
वृत्तो ब्रह्मोत्तरो रङ्गः पाञ्चाली ब्राह्मणैर्वृता ।
इति ब्रुवन्तः प्रययुर्ये तत्रासन्समागताः ॥ ६२
ब्राह्मणैस्तु प्रतिच्छन्नौ रौरवाजिनवासिभिः ।
कृच्छ्रेण जग्मतुस्तौ तु भीमसेनधनञ्जयौ ॥ ६३
विमुक्तौ जनसंबाधाच्छत्रुभिः परिविक्षतौ ।
कृष्णयानुगतौ तत्र नृवीरौ तौ विरेजतुः ॥ ६४

---

अवहारो युद्धान्निवर्तनं ॥ ५७ ॥ संयुगे तत्कर्म कृत्वा तूष्णींभूताविति शेषः ॥ ५९ ॥

ब्रह्म ब्राह्मणजातिः उत्तरं उत्कृष्टं यस्मिन्स ब्रह्मोत्तरः ॥ ६२ ॥

पौर्णमास्यां घनैर्मुक्तौ चन्द्रसूर्याविवोदितौ ।
तेषां माता बहुविधं विनाशं पर्यचिन्तयत् ॥६५
अनागच्छत्सु पुत्रेषु भैक्षकाले च लङ्घिते ।
धार्तराष्ट्रैर्हताश्च स्युर्विज्ञाय कुरुपुङ्गवाः ॥ ६६
मायान्वितैर्वा रक्षोभिः सुघोरैर्दृढवैरिभिः ।
विपरीतं मतं जातं व्यासस्यापि महात्मनः ॥६७
इत्येवं चिन्तयामास सुतस्नेहावृता पृथा ।
ततः सुप्तजनप्राये दुर्दिने मेघसंप्लुते ॥ ६८
महत्यथापराह्णे तु घनैः सूर्य इवावृतः ।
ब्राह्मणैः प्राविशत्तत्र जिष्णुर्भार्गववेश्म तत् ॥ ६९

॥ इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

## षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

भीमार्जुनाभ्यां द्रौपद्याः भिक्षेत्यावेदने कुन्त्या पञ्चानां सह भोजनानुज्ञा ॥ १ ॥ पश्चात् द्रौपदीदर्शनेन चिन्तान्वितायां कुन्त्यां युधिष्ठिरार्जुनयोः संवादः ॥ २ ॥ द्वैपायनवचःस्मरणेन सर्वेषां द्रौपदी भार्येति युधिष्ठिरनिश्चयः ॥ ३ ॥ जनमेजयेन कृष्णस्य कार्मुकानारोपणे कारणप्रश्ने पाण्डवार्थमिति वैशंपायनस्योत्तरम् ॥ ४ ॥ कुलालशालांप्रति श्रीकृष्णस्यागमनम् ॥ ५ ॥

वैशंपायन उवाच ।
गत्वा तु तां भार्गवकर्मशालां
पार्थौ पृथां प्राप्य महानुभावौ ।
तां याज्ञसेनीं परमप्रतीतौ
भिक्षेत्यथावेदयतां नराग्र्यौ ॥ १
कुटीगता सा त्वनवेक्ष्य पुत्रौ
प्रोवाच भुङ्क्तेति समेत्य सर्वे ।
पश्चाच्च कुन्ती प्रसमीक्ष्य कृष्णां
कष्टं मया भाषितमित्युवाच ॥ २
साऽधर्मभीता परिचिन्तयन्ती
तां याज्ञसेनीं परमप्रतीताम् ।
पाणौ गृहीत्वोपजगाम कुन्ती
युधिष्ठिरं वाक्यमुवाच चेदम् ॥ ३
कुन्त्युवाच ।
इयं तु कन्या द्रुपदस्य राज्ञ-
स्तवानुजाभ्यां मयि संनिसृष्टा ।
यथोचितं पुत्र मयाऽपि चोक्तं
समेत्य भुङ्क्तेति नृप प्रमादात् ॥ ४
मया कथं नानृतमुक्तमद्य
भवेत्कुरूणामृषभ ब्रवीहि ।
पञ्चालराजस्य सुतामधर्मो
न चोपवर्तेत न विभ्रमेच्च ॥ ५
वैशंपायन उवाच ।
स एवमुक्तो मतिमान्नृवीरो
मात्रा मुहूर्तं तु विचिन्त्य राजा ।
कुन्तीं समाश्वास्य कुरुप्रवीरो
धनञ्जयं वाक्यमिदं बभाषे ॥ ६
त्वया जिता फाल्गुन याज्ञसेनी
त्वयैव शोभिष्यति राजपुत्री ।
प्रज्वाल्यतामग्निरमित्रसाह
गृहाण पाणिं विधिवत्त्वमस्याः ॥ ७
अर्जुन उवाच ।
मा मां नरेन्द्र त्वमधर्मभाजं
कृथा न धर्मोऽयमशिष्टदृष्टः ।
भवान्निवेश्यः प्रथमं ततोऽयं
भीमो महाबाहुरचिन्त्यकर्मा ॥ ८
अहं ततो नकुलोऽनन्तरं मे
पश्चादयं सहदेवस्तरस्वी ।
वृकोदरोऽहं च यमौ च राज-
न्नियं च कन्या भवतो नियोज्याः ॥ ९
एवं गते यत्करणीयमत्र
धर्म्यं यशस्यं कुरु तद्विचिन्त्य ।
पाञ्चालराजस्य हितं च यत्स्या-
त्प्रशाधि सर्वे स्म वशे स्थितास्ते ॥ १०

भार्गववेश्म कुलालगृहं ॥ ६९ ॥

वैशंपायन उवाच ।

जिष्णोर्वचनमाज्ञाय भक्तिस्नेहसमन्वितम् ।
दृष्टिं निवेशयामासुः पाञ्चाल्यां पाण्डुनन्दनाः ११
दृष्ट्वा ते तत्र पश्यन्तीं सर्वे कृष्णां यशस्विनीम् ।
संप्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन् ॥ १२
तेषां तु द्रौपदीं दृष्ट्वा सर्वेषाममितौजसाम् ।
संप्रमथ्येन्द्रियग्रामं प्रादुरासीन्मनोभवः ॥ १३
काम्यं हि रूपं पाञ्चाल्या विधात्रा विहितं स्वयम् ।
बभूवाधिकमन्याभ्यः सर्वभूतमनोहरम् ॥ १४
तेषामाकारभावज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
द्वैपायनवचः कृत्स्नं सस्मार मनुजर्षभः ॥ १५
अब्रवीत्सहितान्भ्रातॄन्मिथो भेदभयान्नृपः ।
सर्वेषां द्रौपदी भार्या भविष्यति हि नः शुभा १६

'जनमेजय उवाच ।

सताऽपि शक्तेन च केशवेन
सज्यं धनुस्तन्न कृतं किमर्थम् ।
विद्धं च लक्ष्यं न च कस्य हेतो-
राचक्ष्व तन्मे द्विपदां वरिष्ठ ॥ १७

वैशंपायन उवाच ।

शक्तेन कृष्णेन च कार्मुकं त-
न्नारोपितं ज्ञातुकामेन पार्थान् ।
परिश्रवादेव बभूव लोके
जीवन्ति पार्था इति निश्चयोऽस्य ॥ १८
अन्यानशक्तान्नृपतीन्समीक्ष्य
स्वयंवरे कार्मुकेणोत्तमेन ।
धनञ्जयस्तद्धनुरेकवीरः
सज्यं करोतीत्यभिवीक्ष्य कृष्णः ॥ १९
इति स्वयं वासुदेवो विचिन्त्य
पार्थान्विवित्सन्विविधैरुपायैः ।
न तद्धनुः सज्यमियेष कर्तुं
बभूवुरस्येष्टतमा हि पार्थाः ॥' २०
भ्रातुर्वचस्तत्प्रसमीक्ष्य सर्वे
ज्येष्ठस्य पाण्डोस्तनयास्तदानीम् ।
तमेवार्थं ध्यायमाना मनोभिः
सर्वे च ते तस्थुरदीनसत्वाः ॥ २१
वृष्णिप्रवीरस्तु कुरुप्रवीरा-
नाशंसमानः सहरौहिणेयः ।
जगाम तां भार्गवकर्मशालां
यत्रासते ते पुरुषप्रवीराः ॥ २२
तत्रोपविष्टं पृथुदीर्घबाहुं
ददर्श कृष्णः सहरौहिणेयः ।
अजातशत्रुं परिवार्य तांश्चा-
प्युपोपविष्टाञ्ज्वलनप्रकाशान् ॥ २३
ततोऽब्रवीद्वासुदेवोऽभिगम्य
कुन्तीसुतं धर्मभृतां वरिष्ठम् ।
कृष्णोऽहमस्मीति निपीड्य पादौ
युधिष्ठिरस्याजमीढस्य राज्ञः ॥ २४
तथैव तस्याप्यनु रौहिणेय-
स्तौ चापि हृष्टाः कुरवोऽभ्यनन्दन् ।
पितृष्वसुश्चापि यदुप्रवीरा-
वगृह्णतां भारतमुख्य पादौ ॥ २५
अजातशत्रुश्च कुरुप्रवीरः
पप्रच्छ कृष्णं कुशलं विलोक्य ।
कथं वयं वासुदेव त्वयेह
गूढा वसन्तो विदिताश्च सर्वे ॥ २६
तमब्रवीद्वासुदेवः प्रहस्य
गूढोऽप्यग्निर्ज्ञायत एव राजन् ।
तं विक्रमं पाण्डवेयानतीत्य
कोऽन्यः कर्ता विद्यते मानुषेषु ॥ २७
दिष्ट्या सर्वे पावकाद्विप्रमुक्ता
यूयं घोरात्पाण्डवाः शत्रुसाहाः ।
दिष्ट्या पापो धृतराष्ट्रस्य पुत्रः
सहामात्यो न सकामोऽभविष्यत् ॥ २८
भद्रं वोऽस्तु निहितं यद्गुहायां
विवर्धध्वं ज्वलना इवैधमानाः ।

दृष्ट्वा ते तत्र तिष्ठन्तीं इति ङ. पाठः ॥१२॥ यद्भद्रं गुहायां बुद्धौ वो निहितं तद्वोस्तु ॥२९॥ षडधिकद्विशततमोऽध्यायः ॥२०६॥

मा वो विद्युः पार्थिवाः केचिदेव
याखावहे शिबिरायैव तावत् ।
सोऽनुज्ञातः पाण्डवेनाव्ययश्रीः
प्रायाच्छीघ्रं बलदेवेन सार्धम् ॥ २९

॥ इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

## सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

पाण्डवावासे धृष्टद्युम्नस्य निलीयावस्थानम् ॥ १ ॥ भीमाद्यानीतस्य भैक्षस्य कुन्त्याज्ञया द्रौपद्या परिवेषणम् ॥ २ ॥ सर्वं पाण्डववृत्तान्तं ज्ञात्वा धृष्टद्युम्नस्य प्रतिनिवर्तनम् ॥ ३ ॥

वैशंपायन उवाच ।
धृष्टद्युम्नस्तु पाञ्चाल्यः पृष्ठतः कुरुनन्दनौ ।
अन्वगच्छत्तदा यान्तौ भार्गवस्य निवेशने ॥ १
सोज्ञायमानः पुरुषानवधाय समन्ततः ।
स्वयमारान्निलीनोऽभूद्भार्गवस्य निवेशने ॥ २
सायं च भीमस्तु रिपुप्रमाथी
जिष्णुर्यमौ चापि महानुभावौ ।
भैक्षं चरित्वा तु युधिष्ठिराय
निवेदयांचक्रुरदीनसत्त्वाः ॥ ३
ततस्तु कुन्ती द्रुपदात्मजां ता-
मुवाच काले वचनं वदान्या ।
ततोऽग्रमादाय कुरुष्व भद्रे
बलिं च विप्राय च देहि भिक्षाम् ॥ ४
ये चान्नमिच्छन्ति ददस्व तेभ्यः
परिश्रिता ये परितो मनुष्याः ।
ततश्च शेषं प्रविभज्य शीघ्र-
मर्धं चतुर्णां मम चात्मनश्च ॥ ५
अर्धं तु भीमाय च देहि भद्रे
य एष नागर्षभतुल्यरूपः ।
गौरो युवा संहननोपपन्न
एषो हि वीरो बहुभुक् सदैव ॥ ६
सा हृष्टरूपैव तु राजपुत्री
तस्या वचः साध्वविशङ्कमाना ।
यथावदुक्तं प्रचकार साध्वी
ते चापि सर्वे बुभुजुस्तदन्नम् ॥ ७
कुशैस्तु भूमौ शयनं चकार
माद्रीपुत्रः सहदेवस्तपस्वी ।
अथात्मकीयान्यजिनानि सर्वे
संस्तीर्य वीराः सुषुपुर्धरण्याम् ॥ ८
अगस्त्यकान्तामभितो दिशं तु
शिरांसि तेषां कुरुसत्तमानाम् ।
कुन्ती पुरस्तात्तु बभूव तेषां
पादान्तरे चाथ बभूव कृष्णा ॥ ९
अशेत भूमौ सह पाण्डुपुत्रैः
पादोपधानीव कृता कुशेषु ।
न तत्र दुःखं मनसापि तस्या
न चावमेने कुरुपुङ्गवांस्तान् ॥ १०
ते तत्र शूराः कथयांबभूवुः
कथा विचित्राः पृतनाधिकाराः ।
अस्त्राणि दिव्यानि रथांश्च नागान्
खड्गान्गदाश्चापि परश्वधांश्च ॥ ११
तेषां कथास्ताः परिकीर्त्यमानाः
पाञ्चालराजस्य सुतस्तदानीम् ।
शुश्राव कृष्णां च तदा निषण्णां
ते चापि सर्वे ददृशुर्मनुष्याः ॥ १२
धृष्टद्युम्नो राजपुत्रस्तु सर्वं
वृत्तं तेषां कथितं चैव रात्रौ ।
सर्वं राज्ञे द्रुपदायाखिलेन
निवेदयिष्यंस्त्वरितो जगाम ॥ १३
पाञ्चालराजस्तु विषण्णरूप-
स्तान्पाण्डवानप्रतिविन्दमानः ।
धृष्टद्युम्नं पर्यपृच्छन्महात्मा
क्व सा गता केन नीता च कृष्णा ॥ १४

अग्रं प्रथममादाय बलिं कुरुष्व भिक्षां च देहि ॥ ४ ॥

कच्चिन्न शूद्रेण न हीनजेन
　वैश्येन वा करदेनोपपन्ना ।
कच्चित्पदं मूर्ध्नि न पङ्कदिग्धं
　कच्चिन्न माला पतिता श्मशाने ॥ १५
कच्चित्स वर्णप्रवरो मनुष्य
　उद्रिक्तवर्णोऽप्युत एव कच्चित् ।
कच्चिन्न वामो मम मूर्ध्नि पादः
　कृष्णाभिमर्शेन कृतोऽद्य पुत्र ॥ १६
कच्चिन्न तप्स्ये परमप्रतीतः
　संयुज्य पार्थेन नरर्षभेण ।
वदस्व तत्त्वेन महानुभाव
　कोऽसौ विजेता दुहितुर्ममाद्य ॥ १७
विचित्रवीर्यस्य सुतस्य कच्चि-
　त्कुरुप्रवीरस्य ध्रियन्ति पुत्राः ।
कच्चित्तु पार्थेन यवीयसाऽद्य
　धनुर्गृहीतं निहतं च लक्ष्यम् ॥ १८

॥ इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

समाप्तं स्वयंवरपर्व ॥

---

# ( अथ वैवाहिकपर्व ॥ १३ ॥ )

## अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

धृष्टद्युम्नवार्तां श्रुतवता द्रुपदेन तत्वविवित्सया पाण्डवान्प्रति पुरोहितप्रेषणम् ॥ १ ॥

वैशंपायन उवाच ।
　ततस्तथोक्तः परिहृष्टरूपः
　　पित्रे शशंसाथ स राजपुत्रः ।
　धृष्टद्युम्नः सोमकानां प्रबर्हो
　　वृत्तं यथा येन हृता च कृष्णा ॥ १

धृष्टद्युम्न उवाच ।
　योऽसौ युवा व्यायतलोहिताक्षः
　　कृष्णाजिनी देवसमानरूपः ।
　यः कार्मुकाग्र्यं कृतवानधिज्यं
　　लक्षं च यः पातितवान्पृथिव्याम् ॥ २
　असज्जमानश्च ततस्तरस्वी
　　वृतो द्विजाग्र्यैरभिपूज्यमानः ।
　चक्राम वज्रीव दितेः सुतेषु
　　सर्वैश्च देवैर्ऋषिभिश्च जुष्टः ॥ ३
　कृष्णा प्रगृह्याजिनमन्वयात्तं
　　नागं यथा नागवधूः प्रहृष्टा ।
　'श्यामो युवा वारणमत्तगामी
　　कृत्वा महत्कर्म सुदुष्करं तत् ॥ ४
　यः सूतपुत्रेण चकार युद्धं
　　शङ्केऽर्जुनं तं त्रिदशेशवीर्यम् ।'
　अमृष्यमाणेषु नराधिपेषु
　　क्रुद्धेषु वै तत्र समापतत्सु ॥ ५
　ततोऽपरः पार्थिवसङ्घमध्ये
　　प्रवृद्धमारुज्य महीप्ररोहम् ।
　प्राकालयत्तेन स पार्थिवौघान्
　　भीमोऽन्तकः प्राणभृतो यथैव ॥ ६
　तौ पार्थिवानां मिषतां नरेन्द्र
　　कृष्णामुपादाय गतौ नराग्र्यौ ।
　'विक्षोभ्य विद्राव्य च पार्थिवांस्ता-
　　न्स्वतेजसा दुष्प्रतिवीक्ष्यरूपौ ।'
　विभ्राजमानाविव चन्द्रसूर्यौ
　　बाह्यां पुराद्भार्गवकर्मशालाम् ॥ ७

ध्रियन्ति जीवन्ति ॥ १८ ॥

सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

तत्रोपविष्टार्चिरिवानलस्य
तेषां जनित्रीति मम प्रतर्कः ।
तथाविधैरेव नरप्रवीरै-
रुपोपविष्टैस्त्रिभिरग्निकल्पैः ॥ ८

तस्यास्ततस्तावभिवाद्य पादा-
वुक्त्वा च कृष्णामभिवादयेति ।
स्थितौ च तत्रैव निवेद्य कृष्णां
भिक्षाप्रचाराय गता नराग्र्याः ॥ ९

तेषां तु भैक्षं प्रतिगृह्य कृष्णा
दत्वा वलिं ब्राह्मणसाच्च कृत्वा ।
तां चैव वृद्धां परिवेष्य तांश्च
नरप्रवीरान्स्वयमप्यभुङ्क्त ॥ १०

सुप्तास्तु ते पार्थिव सर्व एव
कृष्णा च तेषां चरणोपधाने ।
आसीत्पृथिव्यां शयनं च तेषां
दर्भाजिनाग्रास्तरणोपपन्नम् ॥ ११

ते नर्दमाना इव कालमेघाः
कथा विचित्राः कथयांबभूवुः ।
न वैश्यशूद्रौपयिकीः कथास्ता
न च द्विजानां कथयन्ति वीराः ॥ १२

निःसंशयं क्षत्रियपुंगवास्ते
यथा हि युद्धं कथयन्ति राजन् ।
आशा हि नो व्यक्तमियं समृद्धा
मुक्तान्हि पार्थाञ्शृणुमोऽग्निदाहात् ॥ १३

यथा हि लक्ष्यं निहतं धनुश्च
सज्यं कृतं तेन तथा प्रसह्य ।
यथा हि भाषन्ति परस्परं ते
छन्ना ध्रुवं ते प्रचरन्ति पार्थाः ॥ १४

वैशंपायन उवाच ।

ततः स राजा द्रुपदः प्रहृष्टः
पुरोहितं प्रेषयामास तेषाम् ।
विद्याम युष्मानिति भाषमाणो
महात्मानः पाण्डुसुताः स्थ कच्चित् ॥ १५

गृहीतवाक्यो नृपतेः पुरोधा
गत्वा प्रशंसामभिधाय तेषाम् ।
वाक्यं समग्रं नृपतेर्यथाव-
दुवाच चानुक्रमविक्रमेण ॥ १६

विज्ञातुमिच्छत्यवनीश्वरो वः
पाञ्चालराजो वरदो वरार्हः ।
लक्ष्यस्य वेद्धारमिमं हि दृष्ट्वा
हर्षस्य नान्तं प्रतिपद्यते सः ॥ १७

आख्यात च ज्ञातिकुलानुपूर्वीं
पदं शिरःसु द्विषतां कुरुध्वम् ।
प्रह्लादयध्वं हृदयं ममेदं
पाञ्चालराजस्य च सानुगस्य ॥ १८

पाण्डुर्हि राजा द्रुपदस्य राज्ञः
प्रियः सखा चात्मसमो बभूव ।
तस्यैष कामो दुहिता ममेयं
स्नुषा यदि स्यादिह कौरवस्य ॥ १९

अयं हि कामो द्रुपदस्य राज्ञो
हृदि स्थितो नित्यमनिन्दिताङ्गाः ।
यदर्जुनो वै पृथुदीर्घबाहु-
र्धर्मेण विन्देत सुतां ममैताम् ॥ २०

कृतं हि तत्स्यात्सुकृतं ममेदं
यशश्च पुण्यं च हितं तदेतत् ।
अथोक्तवाक्यं हि पुरोहितं स्थितं
ततो विनीतं समुदीक्ष्य राजा ॥ २१

समीपतो भीममिदं शशास
प्रदीयतां पाद्यमर्घ्यं तथाऽस्मै ।
मान्यः पुरोधा द्रुपदस्य राज्ञ-
स्तस्मै प्रयोज्याऽभ्यधिका हि पूजा ॥ २२

वैशंपायन उवाच ।

भीमस्ततस्तत्कृतवान्नरेन्द्र
तां चैव पूजां प्रतिगृह्य हर्षात् ।
सुखोपविष्टं तु पुरोहितं तदा
युधिष्ठिरो ब्राह्मणमित्युवाच ॥ २३

पाञ्चालराजेन सुता निसृष्टा
स्वधर्मदृष्टेन यथा न कामात् ।
प्रदिष्टशुल्का द्रुपदेन राज्ञा
सा तेन वीरेण तथाऽनुवृत्ता ॥ २४

न तत्र वर्णेषु कृता विवक्षा
न चापि शीले न कुले न गोत्रे ।
कृतेन सज्येन हि कार्मुकेण
विद्धेन लक्ष्येण हि सा विसृष्टा ॥ २५
सेयं तथाऽनेन महात्मनेह
कृष्णा जिता पार्थिवसङ्घमध्ये ।
नैवं गते सौमकिरद्य राजा
सन्तापमर्हत्यसुखाय कर्तुम् ॥ २६
कामश्च योऽसौ द्रुपदस्य राज्ञः
स चापि संपत्स्यति पार्थिवस्य ।
संप्राप्यरूपां हि नरेन्द्रकन्या-
मिमामहं ब्राह्मण साधु मन्ये ॥ २७
न तद्धनुर्मन्दबलेन शक्यं
मौर्व्या समायोजयितुं तथाहि ।
न चाकृतास्त्रेण न हीनजेन
लक्ष्यं तथा पातयितुं हि शक्यम् ॥ २८
तस्मान्न तापं दुहितुर्निमित्तं
पाञ्चालराजोऽर्हति कर्तुमद्य ।
न चापि तत्पातनमन्यथेह
कर्तुं हि शक्यं भुवि मानवेन ॥ २९
एवं ब्रुवत्येव युधिष्ठिरे तु
पाञ्चालराजस्य समीपतोऽन्यः ।
तत्राजगामाशु नरो द्वितीयो
निवेदयिष्यन्निह सिद्धमन्नम् ॥ ३०

॥ इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

## नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

कुन्त्या सह पाण्डवानां द्रुपदगृहगमनम् ॥ १ ॥ परीक्षणार्थं द्रुपदेन अनेकविधवस्तूपहरणम् ॥ २ ॥ द्रौपद्या सह कुन्त्या अन्तःपुरप्रवेशः ॥ ३ ॥ भोजनानन्तरं पाण्डवानां साङ्ग्रामिकवस्तुपूर्णप्रदेशे प्रवेशः ॥ ४ ॥

दूत उवाच ।
जन्यार्थमन्नं द्रुपदेन राज्ञा
विवाहहेतोरुपसंस्कृतं च ।
तदाप्नुवध्वं कृतसर्वकार्याः
कृष्णा च तत्रैतु चिरं न कार्यम् ॥ १
इमे रथाः काञ्चनपद्मचित्राः
सदश्वयुक्ता वसुधाधिपार्हाः ।
एतान्समारुह्य परैत सर्वे
पाञ्चालराजस्य निवेशनं तत् ॥ २
वैशंपायन उवाच ।
ततः प्रयाताः कुरुपुंगवास्ते
पुरोहितं तं परियाप्य सर्वे ।
आस्थाय यानानि महान्ति तानि
कुन्ती च कृष्णा च सहैकयाने ॥ ३
'स्त्रीभिः सुगन्धाम्बरमाल्यदानै-
र्विभूषिता आभरणैर्विचित्रैः ।
माङ्गल्यगीतध्वनिवाद्यघोषै-
र्मनोहरैः पुण्यकृतां वरिष्ठैः ॥ ४
संगीयमानाः प्रययुः प्रहृष्टा
दीपैर्ज्वलद्भिः सहिताश्च विप्रैः ॥ ५
स वै तथोक्तस्तु युधिष्ठिरेण
पाञ्चालराजस्य पुरोहितोऽग्र्यः ।
सर्वं यथोक्तं कुरुनन्दनेन
निवेदयामास नृपाय गत्वा ॥' ६
श्रुत्वा तु वाक्यानि पुरोहितस्य
यान्युक्तवान्भारत धर्मराजः ।
जिज्ञासयैवाथ कुरूत्तमानां
द्रव्याण्यनेकान्युपसंजहार ॥ ७

संप्राप्यरूपामस्माकं योग्यरूपाम् ॥ २७ ॥ अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥

जन्यार्थं वरपक्षीयजनार्थं ॥ १ ॥ परियाप्य प्रस्थाप्य ॥ ३ ॥

फलानि माल्यानि च संस्कृतानि
वर्माणि चर्माणि तथाऽऽसनानि ।
गाश्चैव राजन्नथ चैव रज्जू-
र्बीजानि चान्यानि कृषीनिमित्तम् ॥ ८
अन्येषु शिल्पेषु च यान्यपि स्युः
सर्वाणि कृत्यान्यखिलेन तत्र ।
क्रीडानिमित्तान्यपि यानि तत्र
सर्वाणि तत्रोपजहार राजा ॥ ९
वर्माणि चर्माणि च भानुमन्ति
खड्गा महान्तोऽश्वरथाश्च चित्राः ।
धनूंषि चाग्र्याणि शराश्च चित्राः
शक्त्यृष्टयः काञ्चनभूषणाश्च ॥ १०
प्रासा भुशुण्ड्यश्च परश्वधाश्च
सांग्रामिकं चैव तथैव सर्वम् ।
शय्यासनान्युत्तमवस्तुवन्ति
तथैव वासो विविधं च तत्र ॥ ११
कुन्ती तु कृष्णां परिगृह्य साध्वी-
मन्तःपुरं द्रुपदस्याविवेश ।
स्त्रियश्च तां कौरवराजपत्नीं
प्रत्यर्चयामासुरदीनसत्वाः ॥ १२
तान्सिंहविक्रान्तगतीन्निरीक्ष्य
महर्षभाक्षानजिनोत्तरीयान् ।
गूढोत्तरांसान्भुजगेन्द्रभोग-
प्रलम्बबाहून्पुरुषप्रवीरान् ॥ १३
राजा च राज्ञः सचिवाश्च सर्वे
पुत्राश्च राज्ञः सुहृदस्तथैव ।
प्रेष्याश्च सर्वे निखिलेन राज-
न्हर्षं समापेतुरतीव तत्र ॥ १४
ते तत्र वीराः परमासनेषु
सपादपीठेष्वविशङ्कमानाः ।
यथानुपूर्व्योद्भिविशुर्नराग्र्या-
स्तथा महार्हेषु न विस्मयन्तः ॥ १५
उच्चावचं पार्थिवभोजनीयं
पात्रीषु जाम्बूनदराजतीषु ।
दासाश्च दास्यश्च सुमृष्टवेषाः
संभोजकाश्चाप्युपजहुरन्नम् ॥ १६
ते तत्र भुक्त्वा पुरुषप्रवीरा
यथात्मकामं सुभृशं प्रतीताः ।
उत्क्रम्य सर्वाणि वसूनि राज-
न्सांग्रामिकं ते विविशुर्नृवीराः ॥ १७
तल्लक्षयित्वा द्रुपदस्य पुत्रा
राजा च सर्वैः सह मन्त्रिमुख्यैः ।
समर्थयामासुरुपेत्य हृष्टाः
कुन्तीसुतान्पार्थिवराजपुत्रान् ॥ १८

॥ इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

---

## दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

द्रुपदप्रश्नानन्तरं युधिष्ठिरेण स्वेषां पाण्डवत्वकथनम् ॥ १ ॥ द्रौपद्याः पञ्चपत्नीत्वे द्रुपदस्य विवादः ॥ २ ॥ व्यासागमनम् ॥ ३ ॥

वैशंपायन उवाच ।
तत आहूय पाञ्चाल्यो राजपुत्रं युधिष्ठिरम् ।
परिग्रहेण ब्राह्मेण परिगृह्य महाद्युतिः ॥ १
पर्यपृच्छददीनात्मा कुन्तीपुत्रं सुवर्चसम् ।
कथं जानीम भवतः क्षत्रियान्ब्राह्मणानुत ॥ २
वैश्यान्वा गुणसंपन्नानथ वा शूद्रयोनिजान् ।
मायामास्थाय वा सिद्धांश्चरतः सर्वतोदिशम् ॥३
कृष्णाहेतोरनुप्राप्ता देवाः संदर्शनार्थिनः ।
ब्रवीतु नो भवान्सत्यं सन्देहो ह्यत्र नो महान् ४
अपि नः संशयस्यान्ते मनः संतुष्टिमावहेत् ।

कृन्तन्तीति कृत्यानि वास्यादीनि ॥९॥ वस्तुवन्ति मतोर्मस्य वलमार्षम् ॥ ११ ॥ गूढोत्तरांसान्गूढजत्रून् । गूढोन्नतांसान् इति ङ.

पाठः ॥ १३ ॥ नवाधिकद्विशततमोऽध्यायः॥ २०९ ॥
ब्राह्मेण ब्राह्मणार्थमुचितेनाभ्युत्थानादिना परिग्रहेण आ-

अपि नो भागधेयानि शुभानि स्युः परन्तप ॥५
इच्छया ब्रूहि तत्सत्यं सत्यं राजसु शोभते ।
इष्टापूर्तेन च तथा वक्तव्यमनृतं न तु ॥ ६
श्रुत्वा ह्यमरसङ्काश तव वाक्यमरिंदम ।
ध्रुवं विवाहकरणमास्थास्यामि विधानतः ॥ ७
युधिष्ठिर उवाच ।
मा राजन्विमना भूस्त्वं पाञ्चाल्य प्रीतिरस्तु ते ।
ईप्सितस्ते ध्रुवः कामः संवृत्तोऽयमसंशयम् ॥ ८
वयं हि क्षत्रिया राजन्पाण्डोः पुत्रा महात्मनः ।
ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ ॥९
आभ्यां तव सुता राजन्निर्जिता राजसंसदि ।
यमौ च तत्र कुन्ती च यत्र कृष्णा व्यवस्थिता १०
व्येतु ते मानसं दुःखं क्षत्रियाः स्मो नरर्षभ ।
पद्मिनीव सुतेयं ते ह्रदादन्यह्रदं गता ॥ ११
इति तथ्यं महाराज सर्वमेतद्ब्रवीमि ते ।
भवान्हि गुरुरस्माकं परमं च परायणम् ॥ १२
वैशंपायन उवाच ।
ततः स द्रुपदो राजा हर्षव्याकुललोचनः ।
प्रतिवक्तुं मुदा युक्तो नाशकत्तं युधिष्ठिरम् ॥१३
यत्नेन तु स तं हर्षं सन्निगृह्य परंतपः ।
अनुरूपं तदा वाचा प्रत्युवाच युधिष्ठिरम् ॥ १४
पप्रच्छ चैनं धर्मात्मा यथा ते प्रद्रुताः पुरात् ।
स तस्मै सर्वमाचख्यावानुपूर्व्येण पाण्डवः ॥१५
तच्छ्रुत्वा द्रुपदो राजा कुन्तीपुत्रस्य भाषितम् ।
विगर्हयामास तदा धृतराष्ट्रं नरेश्वरम् ॥ १६
आश्वासयामास च तं कुन्तीपुत्रं युधिष्ठिरम् ।
प्रतिजज्ञे च राज्याय द्रुपदो वदतां वरः ॥ १७
ततः कुन्ती च कृष्णा च भीमसेनार्जुनावपि ।
यमौ च राज्ञा संदिष्टं विविशुर्भवनं महत् ॥ १८
तत्र ते न्यवसन्राजन्यज्ञसेनेन पूजिताः ।
प्रत्याश्वस्तस्ततो राजा सह पुत्रैरुवाच तम् ॥ १९
गृह्णातु विधिवत्पाणिमद्यायं कुरुनन्दनः ।
पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम् ॥ २०
वैशंपायन उवाच ।
तमब्रवीत्ततो राजा धर्मात्मा च युधिष्ठिरः ।
'ममापि दारसंबन्धः कार्यस्तावद्विशांपते ॥ २१
तस्मात्पूर्वं मया कार्यं तद्भवाननुमन्यताम् ।'
द्रुपद उवाच ।
भवान्वा विधिवत्पाणिं गृह्णातु दुहितुर्मम ।
यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश ॥२२
युधिष्ठिर उवाच ।
सर्वेषां महिषी राजन्द्रौपदी नो भविष्यति ।
एवं प्रव्याहृतं पूर्वं मम मात्रा विशांपते ॥ २३
अहं चाप्यनिविष्टो वै भीमसेनश्च पाण्डवः ।
पार्थेन विजिता चैषा रत्नभूता सुता तव ॥ २४
एष नः समयो राजँल्लब्धस्य सह भोजनम् ।
न च तं हातुमिच्छामः समयं राजसत्तम ॥ २५
'अक्रमेण निवेशे च धर्मलोपो महान्भवेत् ।'
सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति ।
आनुपूर्व्येण सर्वेषां गृह्णातु ज्वलने करान् ॥२६
द्रुपद उवाच ।
एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन ।
नैकस्या बहवः पुंसः श्रूयन्ते पतयः क्वचित् ॥२७
'सोऽयं न लोके वेदे वा जातु धर्मः प्रशस्यते ।'
लोकवेदविरुद्धं त्वं नाधर्मं धर्मविच्छुचिः ।
कर्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी ॥ २८
युधिष्ठिर उवाच ।
सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम् ।
पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे ॥ २९
न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
एवं चैव वदत्यम्बा मम चैतन्मनोगतम् ॥ ३०
'आश्रमे रुद्रनिर्दिष्टाद्व्यासादेतन्मया श्रुतम् ।'

---

तिथ्येन ॥ १ ॥ इष्टापूर्तेन हेतुना । अनृतं न वक्तव्यमिति । अनृतभाषणे इष्टापूर्ते नश्येतामित्यर्थः ॥ ६ ॥ क्षणं देवपूजाद्युत्सवम् ॥ २० ॥ अनिविष्टः अकृतविवाहः ॥ २४ ॥ समयो नियमः ॥ २५ ॥ ज्वलने ज्वलनसमीपे ॥ २६ ॥ पुंसः पुमांसः ॥ २७ ॥ यूयं च वयं च वयं । पूर्वेषां प्रचेतःप्रभृतीनाम् । तैर्यातं वर्त्म बहूनामेकपत्नीत्वमनुयामहे । तच्च आनुपूर्व्येणैव न त्वक्रमेण ॥ २९ ॥ दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

एष धर्मो ध्रुवो राजंश्चरैनमविचारयन् ।
मा च शङ्का तत्र ते स्यात्कथंचिदपि पार्थिव ३१
द्रुपद उवाच ।
त्वं च कुन्ती च कौन्तय धृष्टद्युम्नश्च मे सुतः ।
कथयन्त्विति कर्तव्यं श्वः काल्ये करवामहे ॥३२
वैशंपायन उवाच ।
ते समेत्य ततः सर्वे कथयन्ति स्म भारत ।
अथ द्वैपायनो राजन्नभ्यागच्छद्यदृच्छया ॥ ३३

॥ इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

## एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

एकस्याः बहुभार्यात्वे शङ्कमानान्द्रुपदादीन्प्रति व्यासेन स्वस्वाभिप्रायकथनानुज्ञा ॥ १ ॥ द्रुपदादिभिः स्वस्वमते कथिते व्यासेनास्य विवाहस्य धर्म्यत्वकथनम् ॥ २ ॥

वैशंपायन उवाच ।
ततस्ते पाण्डवाः सर्वे पाञ्चाल्यश्च महायशाः ।
प्रत्युत्थाय महात्मानं कृष्णं सर्वेऽभ्यवादयन् ॥१
प्रतिनन्द्य स तां पूजां पृष्ट्वा कुशलमन्ततः ।
आसने काञ्चने शुद्धे निषसाद महामनाः ॥ २
अनुज्ञातास्तु ते सर्वे कृष्णेनामिततेजसा ।
आसनेषु महार्हेषु निषेदुर्द्विपदां वराः ॥ ३
ततो मुहूर्तान्मधुरां वाणीमुच्चार्य पार्षतः ।
पप्रच्छ तं महात्मानं द्रौपद्यर्थं विशांपते ॥ ४
कथमेका बहूनां स्यान्न च स्याद्धर्मसंकरः ।
एतन्मे भगवान्सर्वं प्रब्रवीतु यथातथम् ॥ ५
व्यास उवाच ।
अस्मिन्धर्मे विप्रलब्धे लोकवेदविरोधके ।
यस्य यस्य मतं यद्यच्छ्रोतुमिच्छामि तस्य तत् ॥६
द्रुपद उवाच ।
अधर्मोऽयं मम मतो विरुद्धो लोकवेदयोः ।
न ह्येका विद्यते पत्नी बहूनां द्विजसत्तम ॥ ७
न चाप्याचरितः पूर्वैरयं धर्मो महात्मभिः ।
न चाप्यधर्मो विद्वद्भिश्चरितव्यः कथंचन ॥ ८
ततोऽहं न करोम्येनं व्यवसायं क्रियां प्रति ।
धर्मः सदैव संदिग्धः प्रतिभाति हि मे त्वयम् ॥९
धृष्टद्युम्न उवाच ।
यवीयसः कथं भार्यां ज्येष्ठो भ्राता द्विजर्षभ ।
ब्रह्मन्समभिवर्तेत सद्वृत्तः संस्तपोधन ॥ १०
न तु धर्मस्य सूक्ष्मत्वाद्गतिं विद्मः कथंचन ।
अधर्मो धर्म इति वा व्यवसायो न शक्यते ॥११
कर्तुमस्मद्विधैर्ब्रह्मंस्ततोऽयं न व्यवस्यते ।
पञ्चानां महिषी कृष्णा भवत्विति कथंचन ॥१२
युधिष्ठिर उवाच ।
न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
वर्तते हि मनो मेऽत्र नैषोऽधर्मः कथंचन ॥ १३
श्रूयते हि पुराणेऽपि जटिला नाम गौतमी ।
ऋषीनध्यासितवती सप्त धर्मभृतां वरा ॥ १४
तथैव मुनिजा वार्क्षी तपोभिर्भावितात्मनः ।
संगताभूद्दश भ्रातॄनेकनाम्नः प्रचेतसः ॥ १५
गुरोर्हि वचनं प्राहुर्धर्म्यं धर्मज्ञसत्तम ।
गुरूणां चैव सर्वेषां माता परमको गुरुः ॥ १६
सा चाप्युक्तवती वाचं भैक्षवद्भुज्यतामिति ।
तस्मादेतदहं मन्ये परं धर्मं द्विजोत्तम ॥ १७
कुन्त्युवाच ।
एवमेतद्यथा प्राह धर्मचारी युधिष्ठिरः ।
भुज्यतां भ्रातृभिः सार्धमित्यर्जुनमचोदयम् ।
अनृतान्मे भयं तीव्रं मुच्येऽहमनृतात्कथम् ॥१८
व्यास उवाच ।
अनृतान्मोक्ष्यसे भद्रे धर्मश्चैष सनातनः ।
नतु वक्ष्यामि सर्वेषां पाञ्चाल शृणु मे स्वयम् १९
यथाऽयं विहितो धर्मो यतश्चायं सनातनः ।
यथा च प्राह कौन्तेयस्तथा धर्मो न संशयः ॥२०

वैशंपायन उवाच ।
तत उत्थाय भगवान्व्यासो द्वैपायनः प्रभुः ।
करे गृहीत्वा राजानं राजवेश्म समाविशत् ॥२१
पाण्डवाश्चापि कुन्ती च धृष्टद्युम्नश्च पार्षतः ।
विविशुस्तेऽपि तत्रैव प्रतीक्षन्ते स्म तावुभौ ॥२२
ततो द्वैपायनस्तस्मै नरेन्द्राय महात्मने ।
आचख्यौ तद्यथा धर्मो बहूनामेकपत्निता ॥ २३
'यथा च ते ददुश्चैव राजपुत्र्याः पुरा वरम् ।
धर्माद्यास्तपसा तुष्टाः पञ्चपत्नीत्वमीश्वराः ॥' २४

॥ इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

---

## द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

इन्द्रसेनापरनाम्न्या नालायन्या उपाख्यानारम्भः–नालायन्या स्थविरस्य पत्युर्मौद्गल्यस्य आराधनम् ॥ १ ॥ तुष्टेन मौद्गल्येन नालायनीप्रार्थनयाऽऽत्मनः पञ्चरूपस्वीकारेण तस्यां रमणम् ॥ २ ॥ तयोः स्वर्गादिलोकेषु नानारूपेण रमणम् ॥ ३ ॥ सैव नालायनी तव दुहिता जातेति द्रुपदं प्रति व्यासस्योक्तिः ॥ ४ ॥

व्यास उवाच ।
मा भूद्राजंस्तव तापो मनस्थः
पञ्चानां भार्या दुहिता ममेति ।
मातुरेषा प्रार्थिता स्यात्तदानीं
पञ्चानां भार्या दुहिता ममेति ॥ १
याजोपयाजौ धर्मरतौ तपोभ्यां
तौ चक्रतुः पञ्चपतित्वमस्याः ।
तत्पञ्चभिः पाण्डुसुतैरवाप्ता
भार्या कृष्णा मोदतां वै कुलं ते ॥ २
लोके नान्यो विद्यते त्वद्विशिष्टः
सर्वारीणामप्रधृष्योऽसि राजन् ।
भूयस्त्विदं शृणु मे त्वं विशोको
यथाऽऽगतं पञ्चपत्नीत्वमस्याः ॥ ३
एषा नालायनी पूर्वं मौद्गल्यं स्थविरं पतिम् ।
आराधयामास तदा कुष्ठिनं तमनिन्दिता ॥ ४
त्वगस्थिभूतं कटुकं लोलमीर्ष्युं सुकोपनम् ।
सुगन्धेतरगन्धाढ्यं वलीपलितमूर्धजम् ॥ ५
स्थविरं विकृताकारं शीर्यमाणनखत्वचम् ।
उच्छिष्टमुपभुञ्जाना पर्युपास्ते महामुनिम् ॥ ६
ततः कदाचिदङ्गुष्ठो भुञ्जानस्य व्यशीर्यत ।
अन्नादुद्धृत्य तच्चान्नमुपभुङ्क्तेऽविशङ्किता ॥ ७
तेन तस्याः प्रसन्नेन कामव्याहारिणा तदा ।
वरं वृणीष्वेत्यसकृदुक्ता वव्रे वरं तदा ॥ ८
मौद्गल्य उवाच ।
नाहं वृद्धो न कटुको नेर्ष्यावान्नैव कोपनः ।
न च दुर्गन्धवदनो न कृशो न च लोलुपः ॥ ९
कथं त्वां रमयामीह कथं त्वां वासयाम्यहम् ।
वद कल्याणि भद्रं ते यथा त्वं मनसेच्छसि ॥१०
व्यास उवाच ।
सा तमक्लिष्टकर्माणं वरदं सर्वकामदम् ।
भर्तारमनवद्याङ्गी प्रसन्नं प्रत्युवाच ह ॥ ११
नालायन्युवाच ।
पञ्चधा प्रविभक्तात्मा भगवांल्लोकविश्रुतः ।
रमय त्वमचिन्त्यात्मन्पुनश्चैकत्वमागतः ॥ १२
तां तथेत्यब्रवीद्धीमान्महर्षिर्वै महातपाः ।
स पञ्चधा तु भूत्वा तां रमयामास सर्वतः ॥१३
नालायनीं सुकेशान्तां मौद्गल्यश्चारुहासिनीम् ।
आश्रमेष्वधिकं चापि पूज्यमानो महर्षिभिः ॥१४
स चचार यथाकामं कामरूपवपुः पुनः ।
यदा ययौ दिवं चापि तत्र देवर्षिभिः सह ॥१५
चचार सोऽमृताहारः सुरलोके चचार ह ।
पूज्यमानस्तथा शच्या शक्रस्य भवनेष्वपि ॥ १६
महेन्द्रसेनया सार्धं पर्यधावद्विरंसया ।
सूर्यस्य च रथं दिव्यमारुह्य भगवान्प्रभुः ॥ १७

---

मातुः मात्रा । स्यात् अभूत् ॥ १ ॥

कथं केन प्रकारेण ॥ १० ॥

पर्युपेत्य पुनर्मेरुं मेरौ वासमरोचयत् ।
आकाशगङ्गामाप्लुत्य तया सह तपोधनः ॥ १८
रश्मिजालेषु चन्द्रस्य उवास च यथाऽनिलः ।
गिरिरूपधरो योगी स महर्षिस्तदा पुनः ॥ १९
तत्प्रभावेन सा तस्य मध्ये जज्ञे महानदी ।
यदा पुष्पाकुलः सालः संजज्ञे भगवानृषिः ॥२०
लतात्वमनुसंपेदे तमेवाभ्यनुवेष्टती ।
पुपोष च वपुर्यस्य तस्य तस्यानुगं पुनः ॥ २१
सा पुपोष समं भर्त्रा स्कन्धेनापि चचार ह ।
ततस्तस्य च तस्याश्च तुल्या प्रीतिरवर्धत ॥ २२
तथा सा भगवांस्तस्याः प्रसादादपिसत्तमः ।
विरराम च सा चैव दैवयोगेन भामिनी ॥ २३
स च तां तपसा देवीं रमयामास योगतः ।
एकपत्नी तथा भूत्वा सदैवाग्रे यशस्विनी ॥ २४
अरुन्धतीव सीतेव बभूवातिपतिव्रता ।
दमयन्त्याश्च मातुः सा विशेषमधिकं ययौ ॥ २५
एतत्तथ्यं महाराज मा ते भूद्बुद्धिरन्यथा ।
सा वै नालायनी जज्ञे दैवयोगेन केनचित् ॥२६
राजंस्तवात्मजा कृष्णा वेद्यां तेजस्विनी शुभा ।
तस्मिंस्तस्या मनः सक्तं न चचाल कदाचन ॥२७
तथा प्रणिहितो ह्यात्मा तस्यास्तस्मिन्द्विजोत्तमे २८

॥ इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

---

## त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

कथं नालायनी मत्पुत्री जातेति व्यासं प्रति द्रुपदस्य प्रश्नः ॥ १ ॥ पुनर्नालायनीकथाकथनं ॥ २ ॥ कामोपभोगविरक्तेन मौद्गल्येन कामातृप्तायाः नालादन्याः पञ्चपतित्वशापः ॥ ३ ॥ नालायन्या रुद्रमुद्दिश्य तपःकरणम् ॥ ४ ॥ नालायन्या पतिं देहीति पञ्चकृत्वः प्रार्थितेन रुद्रेण अन्यजन्मनि पञ्च ते पतयो भविष्यन्तीति वरदानम् ॥ ५ ॥ पुनः रुद्रात् नित्यकौमार-वरप्राप्तिः ॥ ६ ॥ त्वयि गङ्गाजलस्थायां तत्रागमिष्यन्तमिन्द्रमानयेति नालायनींप्रति रुद्रस्याज्ञापनम् ॥ ७ ॥

---

द्रुपद उवाच ।
ब्रूहि तत्कारणं येन ब्रह्मन्नालायनी शुभा ।
जाता ममाध्वरे कृष्णा सर्ववेदविदां वर ॥ १
व्यास उवाच ।
शृणु राजन्यथा ह्यस्या दत्तो रुद्रेण वै वरः ।
यदर्थं चैव संभूता तव गेहे यशस्विनी ॥ २
हन्त ते कथयिष्यामि कृष्णायाः पौर्वदेहिकम् ।
इन्द्रसेनेति विख्याता पुरा नालायनी शुभा ॥३
मौद्गल्यं पतिमासाद्य चचार विगतज्वरा ।
मौद्गल्यस्य महर्षेश्च रममाणस्य वै तया ॥ ४
संवत्सरगणा राजन्व्यतीयुः क्षणवत्तदा ।
ततः कदाचिद्धर्मात्मा तृप्तः कामैर्व्यरज्यत ॥ ५
अन्विच्छन्परमं धर्मं ब्रह्मयोगपरोऽभवत् ।
उत्ससर्ज स तां विप्रः सा तदा चापतद्भुवि ।
मौद्गल्यो राजशार्दूल तपोभिर्भावितः सदा ॥ ६
नालायन्युवाच ।
प्रसीद भगवन्मह्यं न मामुत्स्रष्टुमर्हसि ।
अवितृप्तास्मि ब्रह्मर्षे कामानां कामसेवनात् ॥ ७
मौद्गल्य उवाच ।
यस्मात्त्वं मामनिःशङ्का ह्यवक्तव्यं प्रभाषसे ।
आचरन्ती तपोविघ्नं तस्माच्छृणु वचो मम ॥ ८
भविष्यसि नृलोके त्वं राजपुत्री यशस्विनी ।
पाञ्चालराजस्य सुता द्रुपदस्य महात्मनः ॥ ९
भवितारस्तत्र तव पतयः पञ्च विश्रुताः ।
तैः सार्धं मधुराकारैश्चिरं रतिमवाप्स्यसि ॥ १०
वैशंपायन उवाच ।
सैवं शप्ता तु विमना वनं प्रागाद्यशस्विनी ।
भोगैरतृप्ता देवेशं तपसाऽऽराधयत्तदा ॥ ११
निराशीर्मारुताहारा निराहारा तथैव च ।
अनुवर्तमाना त्वादित्यं तथा पञ्चतपाभवत् ॥१२

---

स्कन्धेन मानुषादिदेहेन ॥ २२ ॥

तीव्रेण तपसा तस्यास्तुष्टः पशुपतिः स्वयम् ।
वरं प्रादात्तदा रुद्रः सर्वलोकेश्वरः प्रभुः ॥ १३
भविष्यति परं जन्म भविष्यसि वराङ्गना ।
भविष्यन्ति परं भद्रे पतयः पञ्च विश्रुताः ॥१४
महेन्द्रवपुषः सर्वे महेन्द्रसमविक्रमाः ।
तत्रस्था च महत्कर्म सुराणां त्वं करिष्यसि ॥ १५
रुद्युवाच ।
एकः खलु मया भर्ता वृतः पञ्च त्विमे कथम् ।
एको भवति नैकस्या बहवस्तद्ब्रवीहि मे ॥ १६
महेश्वर उवाच ।
पञ्चकृत्वस्त्वया चोक्तः पतिं देहीत्यहं पुनः ।
पञ्च ते पतयो भद्रे भविष्यन्ति सुखावहाः ॥१७
रुद्युवाच ।
धर्म एकः पतिः स्त्रीणां पूर्वमेव प्रकल्पितः ।
बहुपत्नीकता पुंसो धर्मश्च बहुभिः कृतः ॥ १८
स्त्रीधर्मः पूर्वमेवायं निर्मितो मुनिभिः सदा ।
सहधर्मचरी भर्तुरेका एकस्य चोच्यते ॥ १९
एको हि भर्ता नारीणां कौमार इति लौकिकः ।
आपत्सु च नियोगेन भर्तुर्नार्याः परः स्मृतः॥२०
गच्छेत न तृतीयं तु तस्या निष्कृतिरुच्यते ।
चतुर्थे पतिता नारी पञ्चमे वर्धकी भवेत् ॥ २१
एवं गते धर्मपथे न वृणे बहुपुंस्कताम् ।
अलोकाचरितात्तस्मात्कथं मुच्येय सङ्करात् ॥ २२
महेश्वर उवाच ।
अनावृताः पुरा नार्यो ह्यासञ्शुध्यन्ति चार्तवे ।
सकृदुक्तं त्वया नैतन्नाधर्मस्ते भविष्यति ॥ २३
रुद्युवाच ।
यदि मे पतयः पञ्च रतिमिच्छामि तैर्मिथः ।
कौमारं च भवेत्सर्वैः संगमे संगमे च मे ॥ २४
पतिशुश्रूषया चैव सिद्धिः प्राप्ता मया पुरा ।
भोगेच्छा च मया प्राप्ता स च भोगश्च मे भवेत् २५
रुद्र उवाच ।
रतिश्च भद्रे सिद्धिश्च न भजेते परस्परम् ।
भोगानाप्स्यसि सिद्धिं च योगेन च महत्त्वताम्२६
अन्यदेहान्तरे चैव रूपभाग्यगुणान्विता ।
पञ्चभिः प्राप्य कौमारं महाभागा भविष्यसि ॥२७
गच्छ गङ्गाजलस्था च नरं पश्यसि यं शुभे ।
तमानय ममाभ्याशं सुरराजं शुचिस्मिते ॥ २८
इत्युक्ता विश्वरूपेण रुद्रं कृत्वा प्रदक्षिणम् ।
जगाम गङ्गामुद्दिश्य पुण्यां त्रिपथगां नदीम् ॥२९

॥ इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

## चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

पञ्चेन्द्रोपाख्यानप्रारम्भः ॥ १ ॥ नैमिशारण्ये देवैरारब्धे सत्रे यमस्य शामित्रकर्मणि व्यापृतत्वात् लोके प्रजाबाहुल्यं दृष्ट्वा तत्परिजिहीर्षया देवैर्ब्रह्मसमीपगमनम् ॥ २ ॥ ब्रह्माज्ञया पुनर्नैमिशारण्यं गतस्य गङ्गायां पुण्डरीकं दृष्ट्वा तज्जिहीर्षया गतस्य इन्द्रस्य तत्र रुदन्त्याः स्त्रियाः दर्शनम् ॥ ३ ॥ तामनुगच्छतेन्द्रेण पर्वतविवरे पूर्वेषां चतुर्णां इन्द्राणां दर्शनम् ॥ ४ ॥ बलरामकेशवद्रौपद्यादीनामुत्पत्तिकथा ॥ ५ ॥ व्यासदत्तदिव्यदृष्टेर्द्रुपदस्य पाण्डवद्रौपदीपूर्वरूपदर्शनं ॥६॥ द्रौपद्या अव्यवहितपूर्वजन्मवृत्तान्तकथनम् ॥ ७ ॥

व्यास उवाच ।
पुरा वै नैमिशारण्ये देवाः सत्रमुपासते ।
तत्र वैवस्वतो राजञ्शामित्रमकरोत्तदा ॥ १
ततो यमो दीक्षितस्तत्र राज-
न्नामारयत्कंचिदपि प्रजानाम् ।
ततः प्रजास्ता बहुला बभूवुः
कालातिपातान्मरणप्रहीणाः ॥ २
सोमश्च शक्रो वरुणः कुबेरः
साध्या रुद्रा वसवोऽथाश्विनौ च ।

अनावृताः निरोधरहिताः ॥ २३ ॥ त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

शमिता यज्ञे पशुवधकर्ता तस्य भावः शामित्रम् ॥ १ ॥ यत्र प्रजापतिस्तत्र सोमादयः समाजग्मुः ॥ ३ ॥

प्रजापतिर्भुवनस्य प्रणेता
समाजग्मुस्तत्र देवास्तथाऽन्ये ॥ ३
ततोऽब्रुवँल्लोकगुरुं समेता
भयात्तीव्रान्मानुषाणां विवृद्ध्या ।
तस्माद्भयादुद्विजन्तः सुखेप्सवः
प्रयाम सर्वे शरणं भवन्तम् ॥ ४

पितामह उवाच ।

किं वो भयं मानुषेभ्यो यूयं सर्वे यदाऽमराः ।
मा वो मर्त्यसकाशाद्वै भयं भवितुमर्हति ॥ ५

देवा ऊचुः ।

मर्त्या अमर्त्याः संवृत्ता न विशेषोऽस्ति कश्चन ।
अविशेषादुद्विजन्तो विशेषार्थमिहागताः ॥ ६

श्रीभगवानुवाच ।

वैवस्वतो व्यापृतः सत्रहेतो-
स्तेन त्विमे न म्रियन्ते मनुष्याः ।
तस्मिन्नेकाग्रे कृतसर्वकार्ये
तत एषां भवितैवान्तकालः ॥ ७
वैवस्वतस्यैव तनुर्विभक्ता
वीर्येण युष्माकमुत प्रवृद्धा ।
सैषामन्तो भविता ह्यन्तकाले
न तत्र वीर्यं भविता नरेषु ॥ ८

व्यास उवाच ।

ततस्तु ते पूर्वजदेववाक्यं
श्रुत्वा जग्मुर्यत्र देवा यजन्ते ।
समासीनास्ते समेता महाबला
भागीरथ्यां ददृशुः पुण्डरीकम् ॥ ९
दृष्ट्वा च तद्विस्मितास्ते बभूवु-
स्तेषामिन्द्रस्तत्र शूरो जगाम ।
सोऽपश्यद्योषामथ पावकप्रभां
यत्र देवी गङ्गा सततं प्रसूता ॥ १०
सा तत्र योषा रुदती जलार्थिनी
गङ्गां देवीं व्यवगाह्य व्यतिष्ठत् ।
तस्याश्रुबिन्दुः पतितो जले य-
स्तत्पद्ममासीदथ तत्र काञ्चनम् ॥ ११

तदद्भुतं प्रेक्ष्य वज्री तदानी-
मपृच्छत्तां योषितमन्तिकाद्वै ।
का त्वं भद्रे रोदिषि कस्य हेतो-
र्वाक्यं तथ्यं कामयेऽहं ब्रवीहि ॥ १२

स्त्र्युवाच ।

त्वं वेत्स्यसे मामिह याऽस्मि शक्र
यदर्थं चाहं रोदिमि मन्दभाग्या ।
आगच्छ राजन्पुरतो गमिष्ये
द्रष्टाऽसि तद्रोदिमि यत्कृतेऽहम् ॥ १३

व्यास उवाच ।

तां गच्छन्तीमन्वगच्छत्तदानीं
सोऽपश्यदारात्तरुणं दर्शनीयम् ।
सिद्धासनस्थं युवतीसहायं
क्रीडन्तमक्षैर्गिरिराजमूर्ध्नि ॥ १४
तमब्रवीद्देवराजो ममेदं
त्वं विद्धि विद्वन्भुवनं वशे स्थितम् ।
ईशोऽहमसीति समन्युरब्रवी-
द्दृष्ट्वा तमक्षैः सुभृशं प्रमत्तम् ॥ १५
क्रुद्धं च शक्रं प्रसमीक्ष्य देवो
जहास शक्रं च शनैरुदैक्षत ।
संस्तम्भितोऽभूदथ देवराज-
स्तेनेक्षितः स्थाणुरिवावतस्थे ॥ १६
यदा तु पर्याप्तमिहास्य क्रीडया
तदा देवीं रुदतीं तामुवाच ।
आनीयतामेष यतोऽहमारा-
न्नैनं दर्पः पुनरप्याविशेत ॥ १७
ततः शक्रः स्पृष्टमात्रस्तया तु
स्रस्तैरङ्गैः पतितोऽभूद्धरण्याम् ।
तमब्रवीद्भगवानुग्रतेजा
मैवं पुनः शक्र कृथाः कथंचित् ॥ १८
निवर्तयैनं च महाद्रिराजं
बलं च वीर्यं च तवाप्रमेयम् ।
छिद्रस्य चैवाविश मध्यमस्य
यत्रासते त्वद्विधाः सूर्यभासः ॥ १९

---

तस्याः अश्रुबिन्दुः । सन्धिरार्षः ॥ ११ ॥

स तद्विवृत्य विवरं महागिरे-
स्तुल्यद्युतींश्चतुरोऽन्यान्ददर्श ।
स तानभिप्रेक्ष्य बभूव दुःखितः
कच्चिन्नाहं भविता वै यथेमे ॥ २०
ततो देवो गिरिशो वज्रपाणिं
विवृत्य नेत्रे कुपितोऽभ्युवाच ।
दरीमेतां प्रविश त्वं शतक्रतो
यन्मां बाल्यादवमंस्थाः पुरस्तात् ॥ २१
उक्तस्त्वेवं विभुना देवराजः
प्रावेपताऽऽर्तो भृशमेवाभिषङ्गात् ।
स्रस्तैरङ्गैरनिलेनेव नुन्न-
मश्वत्थपत्रं गिरिराजमूर्ध्नि ॥ २२
स प्राञ्जलिर्वै वृषवाहनेन
प्रवेपमानः सहसैवमुक्तः ।
उवाच देवं बहुरूपमुग्र-
मद्याशेषस्य भुवनस्य त्वं भवाद्यः ॥ २३
तमब्रवीदुग्रवर्चाः प्रहस्य
नैवंशीलाः शेषमिहाप्नुवन्ति ।
एतेऽप्येवं भवितारः पुरस्ता-
त्तस्मादेतां दरीमाविश्य शेष्व ॥ २४
एषा भार्या भविता वो न संशयो
योनिं सर्वे मानुषीमाविशध्वम् ।
तत्र यूयं कर्म कृत्वाऽविषह्यं
बहूनन्यान्निधनं प्रापयित्वा ॥ २५
'अस्त्रैर्दिव्यैर्मानुषान्योधयित्वा
शूरान्सर्वानाहवे संविजित्य ।'
आगन्तारः पुनरेवेन्द्रलोकं
स्वकर्मणा पूर्वचितं महार्हम् ।
सर्वं मया भाषितमेतदेवं
कर्तव्यमन्यद्विविधार्थयुक्तम् ॥ २६
पूर्वेन्द्रा ऊचुः ।
गमिष्यामो मानुषं देवलोका-
द्दुराधरो विहितो यत्र मोक्षः ।
देवास्त्वस्मानादधीरञ्जनन्यां
धर्मो वायुर्मघवानाश्विनौ च ॥ २७
व्यास उवाच ।
एतच्छ्रुत्वा वज्रपाणिर्वचस्तु
देवश्रेष्ठं पुनरेवेदमाह ।
वीर्येणाहं पुरुषं कार्यहेतो-
र्दद्यामेषां पञ्चमं मत्प्रसूतम् ॥ २८
विश्वभुग्भूतधामा च शिबिरिन्द्रः प्रतापवान् ।
शान्तिश्चतुर्थस्तेषां वै तेजस्वी पञ्चमः स्मृतः॥२९
तेषां कामं भगवानुग्रधन्वा
प्रादादिष्टं सन्निसर्गाद्यथोक्तम् ।
तां चाप्येषां योषितं लोककान्तां
श्रियं भार्यां व्यदधान्मानुषेषु ॥ ३०
तैरेव सार्धं तु ततः स देवो
जगाम नारायणमप्रमेयम् ।
अनन्तमव्यक्तमजं पुराणं
सनातनं विश्वमनन्तरूपम् ॥ ३१
स चापि तद्व्यदधात्सर्वमेव
ततः सर्वे संबभूवुर्धरण्याम् ।
'नरं तु देवं विबुधप्रधान-
मिन्द्राज्जिष्णुं पञ्चमं कल्पयित्वा ।'
स चापि केशौ हरिरुद्बबर्ह
शुक्लमेकमपरं चापि कृष्णम् ॥ ३२
तौ चापि केशौ विशतां यदूनां
कुले स्त्रियौ देवकीं रोहिणीं च ।
तयोरेको बलदेवो बभूव
योऽसौ श्वेतस्तस्य देवस्य केशः ।
कृष्णो द्वितीयः केशवः संबभूव
केशो योऽसौ वर्णतः कृष्ण उक्तः ॥ ३३
ये ते पूर्वं शक्ररूपा निबद्धा-
स्तस्यां दर्यां पर्वतस्योत्तरस्य ।

ततः शीघ्रमप्रवेशाद्धेतोः ॥ २१ ॥ हे भव अद्य त्वमशेषस्य भुवनस्य आद्यः पतिरसि । अद्येत्यनेन मां जित्वैव नलन्यथेति सूचितम् ॥ २३ ॥ शेषं प्रसादम् ॥ २४ ॥ दुराधरो दुष्प्रापः ॥ २७ ॥ वीर्येण शुक्रद्वारा पुरुषमंशभूतं दद्याम् ॥ २८ ॥ तेजस्वी इन्द्रांशः ॥ २९ ॥ तैर्विश्वभुगादिभिः । स देवो महादेवः ॥ ३१ ॥ व्यदधाद्विहितवान् आज्ञप्तवानित्यर्थः । उद्बबर्ह उद्धृतवान् ॥ ३२ ॥

इहैव ते पाण्डवा वीर्यवन्तः
शक्रस्यांशः पाण्डवः सव्यसाची॥ ३४
एवमेते पाण्डवाः संबभूवु-
र्ये ते राजन्पूर्वमिन्द्रा बभूवुः।
लक्ष्मीश्चैषां पूर्वमेवोपदिष्टा
भार्या यैषा द्रौपदी दिव्यरूपा॥ ३५
कथं हि स्त्री कर्मणा ते महीतला-
त्समुत्तिष्ठेदन्यतो दैवयोगात्।
यस्या रूपं सोमसूर्यप्रकाशं
गन्धश्चास्याः क्रोशमात्रात्प्रवाति॥ ३६
इदं चान्यत्प्रीतिपूर्वं नरेन्द्र
ददानि ते वरमत्यद्भुतं च।
दिव्यं चक्षुः पश्य कुन्तीसुतांस्त्वं
पुण्यैर्दिव्यैः पूर्वदेहैरुपेतान्॥ ३७

वैशंपायन उवाच।

ततो व्यासः परमोदारकर्मा
शुचिर्विप्रस्तपसा तस्य राज्ञः।
चक्षुर्दिव्यं प्रददौ तांश्च सर्वान्
राजाऽपश्यत्पूर्वदेहैर्यथावत्॥ ३८
ततो दिव्यान्हेमकिरीटमालिनः
शक्रप्रख्यान्पावकादित्यवर्णान्।
बद्धापीडांश्चारुरूपांश्च यूनो
व्यूढोरस्कांस्तालमात्रान्ददर्श॥ ३९
दिव्यैर्वस्त्रैररजोभिः सुगन्धै-
र्माल्यैश्चाग्र्यैः शोभमानानतीव।
साक्षात्त्र्यक्षान्वा वसूंश्चापि रुद्रा-
नादित्यान्वा सर्वगुणोपपन्नान्॥ ४०
तान्पूर्वेन्द्रानभिवीक्ष्याभिरूपा-
ञ्शक्रात्मजं चेन्द्ररूपं निशम्य।
प्रीतो राजा द्रुपदो विस्मितश्च
दिव्यां मायां तामवेक्ष्याप्रमेयाम्॥ ४१
तां चैवाग्र्यां स्त्रियमतिरूपयुक्तां
दिव्यां साक्षात्सोमवह्निप्रकाशाम्।
योग्यां तेषां रूपतेजोयशोभिः
पत्नीं मत्वा हृष्टवान्पार्थिवेन्द्रः॥ ४२
स तद्दृष्ट्वा महदाश्चर्यरूपं
जग्राह पादौ सत्यवत्याः सुतस्य।
नैतच्चित्रं परमर्षे त्वयीति
प्रसन्नचेताः स उवाच चैनम्॥ ४३

'व्यास उवाच।

इदं चापि पुरावृत्तं तन्निबोध च भूमिप।
कीर्त्यमानं नृपर्षीणां पूर्वेषां दारकर्मणि॥ ४४
नितन्तुर्नाम राजर्षिर्बभूव भुवि विश्रुतः।
तस्य पुत्रा महेष्वासा बभूवुः पञ्च भूमिपाः॥ ४५
साल्वेयः शूरसेनश्च श्रुतसेनश्च वीर्यवान्।
तिन्दुसारोऽतिसारश्च क्षत्रियाः क्रतुयाजिनः॥ ४६
नातिचक्रमुरन्योन्यमन्योन्यस्य प्रियंवदाः।
अनीर्ष्यवो धर्मविदः सौम्याश्चैव प्रियंकराः॥ ४७
एतान्नैतन्तवान्पञ्च शिबिपुत्री स्वयंवरे।
अवाप स्वपतीन्वीरान्भौमाश्वी मनुजाधिपान्॥ ४८
वीणेव मधुरारावा गान्धर्वस्वरमूर्च्छिता।
उत्तमा सर्वनारीणां भौमाश्वी ह्यभवत्तदा॥ ४९
यस्या नैतन्तवाः पञ्च पतयः क्षत्रियर्षभाः।
बभूवुः पृथिवीपालाः सर्वैः समुदिता गुणैः॥ ५०
तेषामेकाभवद्भार्या राज्ञामौशीनरी शुभा।
भौमाश्वी नाम भद्रं ते तथारूपगुणान्विता॥ ५१
पञ्चभ्यः पञ्चधा पञ्च दायादान्सा व्यजायत।
तेभ्यो नैतन्तवेभ्यस्तु राजशार्दूल वै तदा॥ ५२
पृथगाख्याऽभवत्तेषां भ्रातॄणां पञ्चधा भुवि।
यथावत्कीर्त्यमानांस्ताञ्छृणु मे राजसत्तम॥ ५३
साल्वेयाः शूरसेनाश्च श्रुतसेनाश्च पार्थिवाः।
तिन्दुसारातिसाराश्च वंशा एषां नृपोत्तम॥ ५४
एवमेकाऽभवद्भार्या भौमाश्वी भुवि विश्रुता।
तथैव द्रुपदैषा ते सुता वै देवरूपिणी।
पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता' ५५

व्यास उवाच।

आसीत्तपोवने काचिदृषेः कन्या महात्मनः।

तस्य राज्ञः। तस्मै राज्ञे॥ ३८॥

चतुर्दशाधिकद्विशततमोऽध्यायः॥ २१४॥

नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ॥ ५६
तोषयामास तपसा सा किलोग्रेण शङ्करम् ।
तामुवाचेश्वरः प्रीतो वृणु काममिति स्वयम् ॥ ५७
सैवमुक्ताऽब्रवीत्कन्या देवं वरदमीश्वरम् ।
पतिं सर्वगुणोपेतमिच्छामीति पुनःपुनः ॥ ५८
ददौ तस्यै स देवेशस्तं वरं प्रीतमानसः ।
पञ्च ते पतयो भद्रे भविष्यन्तीति शङ्करः ॥ ५९
सा प्रसादयती देवमिदं भूयोऽभ्यभाषत ।
एकं पतिं गुणोपेतं त्वत्तोऽर्हामीति शङ्कर ॥ ६०
तां देवदेवः प्रीतात्मा पुनः प्राह शुभं वचः ।
पञ्चकृत्वस्त्वयोक्तोऽहं पतिं देहीति वै पुनः ॥ ६१
तत्तथा भविता भद्रे वचस्तद्भद्रमस्तु ते ।
देहमन्यं गतायास्ते सर्वमेतद्भविष्यति ॥ ६२
द्रुपदैषा हि सा जज्ञे सुता वै देवरूपिणी ।
पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता ॥ ६३
'सैव नालायनी भूत्वा रूपेणाप्रतिमा भुवि ।
मौद्गल्यं पतिमास्थाय शिवाद्वरमभीप्सती ॥ ६४
एतद्देवरहस्यं ते श्रावितं राजसत्तम ।
नाख्यातव्यं कस्यचिद्धि देवगुह्यमिदं यतः ॥' ६५
स्वर्गश्रीः पाण्डवार्थं तु समुत्पन्ना महामखे ।
सेह तप्त्वा तपो घोरं दुहितृत्वं तवागता ॥ ६६
सैषा देवी रुचिरा देवजुष्टा
पञ्चानामेका स्वकृतेनेह कर्मणा ।
सृष्टा स्वयं देवपत्नी स्वयंभुवा
श्रुत्वा राजन्द्रुपदेष्टं कुरुष्व ॥ ६७

॥ इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

---

## पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

युधिष्ठिरादीनां क्रमेण द्रौपद्याः पाणिग्रहणम् ॥ १ ॥

द्रुपद उवाच ।
अश्रुत्वैवं वचनं ते महर्षे
मया पूर्वं यतितं संविधातुम् ।
न वै शक्यं विहितस्यापयानं
तदेवेदमुपपन्नं विधानम् ॥ १
दिष्टस्य ग्रन्थिरनिवर्तनीयः
स्वकर्मणा विहितं तेन किंचित् ।
कृतं निमित्तमिह नैकहेतो-
स्तदेवेदमुपपन्नं विधानम् ॥ २
यथैव कृष्णोक्तवती पुरस्ता-
न्नैकान्पतीन्मे भगवान्ददातु ।
स चाप्येवं वरमित्यब्रवीत्तां
देवो हि वेत्ता परमं यदत्र ॥ ३
यदि चैवं विहितः शङ्करेण
धर्मोऽधर्मो वा नात्र ममापराधः ।
गृह्णन्त्विमे विधिवत्पाणिमस्या
यथोपजोषं विहितैषां हि कृष्णा ॥ ४
'व्यास उवाच ।
नायं विधिर्मानुषाणां विवाहे
देवा ह्येते द्रौपदी चापि लक्ष्मीः ।
प्राक्कर्मणः सुकृतात्पाण्डवानां
पञ्चानां भार्या देवदेवप्रसादात् ॥ ५
तेषामेवायं विहितः स्याद्विवाहो
यथा ह्येष द्रौपदीपाण्डवानाम् ।
अन्येषां नृणां योषितां च
न धर्मः स्यान्मानवोक्तो नरेन्द्र ॥ ६
वैशंपायन उवाच ।
तत आजग्मतुस्तत्र तौ व्यासद्रुपदावुभौ ।
कुन्ती सपुत्रा यत्रास्ते धृष्टद्युम्नश्च पार्षतः ।
ततो द्वैपायनः कृष्णो युधिष्ठिरमथागमत् ॥' ७
ततोऽब्रवीद्भगवान्धर्मराज-
मद्यैव पुण्येऽहनि पाण्डवेय ।
पुण्ये पुष्ये योगमुपैति चन्द्रमाः
पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वं ॥ ८

'एवमुक्त्वा धर्मराजं भीमादीनप्यभाषत ॥ ९
क्रमेण पुरुषव्याघ्राः पाणिं गृह्णन्तु पाणिभिः ।
एवमेव मया सर्वं दृष्टमेतत्पुराऽनघाः ॥ १०
वैशंपायन उवाच ।'

ततो राजा यज्ञसेनः सपुत्रो
जन्यार्थमुक्तं बहु तत्तदग्र्यम् ।
'समर्थयामास महानुभावो
हृष्टः सपुत्रः सहबन्धुवर्गः ।'
समानयामास सुतां च कृष्णा-
माप्लाव्य रत्नैर्बहुभिर्विभूष्य ॥ ११
ततस्तु सर्वे सुहृदो नृपस्य
समाजग्मुः सहिता मन्त्रिणश्च ।
द्रष्टुं विवाहं परमप्रतीता
द्विजाश्च पौराश्च यथाप्रधानाः ॥ १२
ततोऽस्य वेश्माग्र्यजनोपशोभितं
विस्तीर्णपद्मोत्पलभूषिताजिरम् ।
बलौघरत्नौघविचित्रमाबभौ
नभो यथा निर्मलतारकान्वितम् ॥ १३
ततस्तु ते कौरवराजपुत्रा
विभूषिताः कुण्डलिनो युवानः ।
महार्हवस्त्राम्बरचन्दनोक्षिताः
कृताभिषेकाः कृतमङ्गलक्रियाः ॥ १४
पुरोहितेनाग्निसमानवर्चसा
सहैव धौम्येन यथाविधि प्रभो ।
क्रमेण सर्वे विविशुस्ततः सदो
महर्षभा गोष्ठमिवाभिनन्दिनः ॥ १५
ततः समाधाय स वेदपारगो
जुहाव मन्त्रैर्ज्वलितं हुताशनम् ।
युधिष्ठिरं चाप्युपनीय मन्त्रवि-
न्नियोजयामास सहैव कृष्णया ॥ १६
प्रदक्षिणं तौ प्रगृहीतपाणी
समानयामास स वेदपारगः ।
'विप्रांश्च संतर्प्य युधिष्ठिरो धनै-
र्गोभिश्च रत्नैर्विविधैश्च पूर्वम् ॥ १७
तदा स राजा द्रुपदस्य पुत्रिका-
पाणिं प्रजग्राह हुताशनाग्रतः ।
धौम्येन मन्त्रैर्विधिवद्धुतेऽग्नौ
सहाग्निकल्पैर्ऋषिभिः समेत्य ॥ १८
ततोऽन्तरिक्षात्कुसुमानि पेतु-
र्ववौ च वायुः सुमनोज्ञगन्धः ।
ततोऽभ्यनुज्ञाप्य समाजशोभितं
युधिष्ठिरं राजपुरोहितस्तदा ॥ १९
विप्रांश्च सर्वान्सुहृदश्च राज्ञः
समेत्य राजानमदीनसत्वम् ।
जगाद भूयोऽपि महानुभावो
वचोऽर्थयुक्तं मनुजेश्वरं तम् ॥ २०
गृह्णन्त्वथान्ये नरदेवकन्या-
पाणिं यथावन्नरदेवपुत्राः ।
तमभ्यनन्दद्द्रुपदस्तथा द्विजं
तथा कुरुष्वेति तमादिदेश ॥ २१
पुरोहितस्यानुमतेन राज्ञ-
स्ते राजपुत्रा मुदिता बभूवुः ।
क्रमेण चान्ये च नराधिपात्मजा
वरस्त्रियास्ते जगृहुः करं तदा ॥' २२
अहन्यहन्युत्तमरूपधारिणो
महारथाः कौरववंशवर्धनाः ॥ २३
इदं च तत्राद्भुतरूपमुत्तमं
जगाद देवर्षिरतीतमानुषम् ।
महानुभावा किल सा सुमध्यमा
बभूव कन्यैव गते गतेऽहनि ॥ २४
'पतिश्वशुरता ज्येष्ठे पतिदेवरताऽनुजे ।
मध्यमेषु च पाञ्चाल्यास्त्रितयं त्रितयं त्रिषु ॥' २५
कृते विवाहे द्रुपदो धनं ददौ
महारथेभ्यो बहुरूपमुत्तमम् ।
शतं रथानां वरहेममालिनां
चतुर्युजां हेमखलीनमालिनाम् ॥ २६
शतं गजानामपि पद्मिनां तथा
शतं गिरीणामिव हेमशृङ्गिणाम् ।

चतुर्युजामश्वचतुष्टययुजाम् ॥ २६ ॥

पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

तथैव दासीशतमग्र्ययौवनं
महार्हवेषाभरणाम्बरस्रजम् ॥ २७
पृथक्पृथग्दिव्यदृशां पुनर्ददौ
तदा धनं सौमकिरग्निसाक्षिकम् ।
तथैव वस्त्राणि विभूषणानि
प्रभावयुक्तानि महानुभावः ॥ २८
कृते विवाहे च ततस्तु पाण्डवाः
प्रभूतरत्नामुपलभ्य तां श्रियम् ।
विजह्रुरिन्द्रप्रतिमा महाबलाः
पुरे तु पाञ्चालनृपस्य तस्य ह ॥ २९

॥ इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

## षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

द्रौपदींप्रति कुन्त्या आशीर्वादः ॥ १ ॥ श्रीकृष्णप्रेषितालंकारादीनां पाण्डवैः स्वीकारः ॥ २ ॥

वैशंपायन उवाच ।
पाण्डवैः सह संयोगं गतस्य द्रुपदस्य ह ।
न बभूव भयं किंचिद्देवेभ्योऽपि कथंचन ॥ १
कुन्तीमासाद्य ता नार्यो द्रुपदस्य महात्मनः ।
नाम संकीर्तयन्त्योऽस्या जग्मुः पादौ स्वमूर्धभिः२
कृष्णा च क्षौमसंवीता कृतकौतुकमङ्गला ।
कृताभिवादना श्वश्र्वास्तस्थौ प्रह्वा कृताञ्जलिः॥३
रूपलक्षणसंपन्नां शीलाचारसमन्विताम् ।
द्रौपदीमवदत्प्रेम्णा पृथाशीर्वचनं स्नुषाम् ॥ ४
यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ ।
रोहिणी च यथा सोमे दमयन्ती यथा नले ॥५
यथा वैश्रवणे भद्रा वसिष्ठे चाप्यरुन्धती ।
यथा नारायणे लक्ष्मीस्तथा त्वं भव भर्तृषु ॥ ६
जीवसूर्वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसंपन्ना यज्ञपत्नी पतिव्रता ॥ ७
अतिथीनागतान्साधून्वृद्धान्बालांस्तथा गुरून् ।
पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ॥८
कुरुजाङ्गलमुख्येषु राष्ट्रेषु नगरेषु च ।
अनु त्वमभिषिच्यस्व नृपतिं धर्मवत्सला ॥ ९
पतिभिर्निर्जितामुर्वीं विक्रमेण महाबलैः ।
कुरु ब्राह्मणसात्सर्वामश्वमेधे महाक्रतौ ॥ १०
पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते ।
तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतं ११
यथा च त्वाऽभिनन्दामि वध्वद्य क्षौमसंवृताम् ।
तथा भूयोऽभिनन्दिष्ये जातपुत्रां गुणान्वितां १२
वैशंपायन उवाच ।
ततस्तु कृतदारेभ्यः पाण्डुभ्यः प्राहिणोद्धरिः ।
वैदूर्यमणिचित्राणि हैमान्याभरणानि च ॥ १३
वासांसि च महार्हाणि नानादेश्यानि माधवः ।
कम्बलाजिनरत्नानि स्पर्शवन्ति शुभानि च ॥ १४
शयनासनयानानि विविधानि महान्ति च ।
वैदूर्यवज्रचित्राणि शतशो भाजनानि च ॥ १५
रूपयौवनदाक्षिण्यैरुपेताश्च स्वलङ्कृताः ।
प्रेष्याः संप्रददौ कृष्णो नानादेश्याः स्वलङ्कृताः॥
गजान्विनीतान्भद्रांश्च सदश्वांश्च स्वलङ्कृतान् ।
रथांश्च दान्तान्सौवर्णैः शुभ्रैः पट्टैरलङ्कृतान्॥ १७
कोटिशश्च सुवर्णं च तेषामकृतकं तथा ।
वीथीकृतममेयात्मा प्राहिणोन्मधुसूदनः ॥ १८
तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः ।
मुदा परमया युक्तो गोविन्दप्रियकाम्यया ॥ १९

॥ इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

॥ समाप्तं वैवाहिकपर्व ॥

हे वधु अद्य ॥ १२ ॥

# ( अथ विदुरागमनराज्यलाभपर्व ॥ १४ ॥ )

## सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

चारद्वारा पाण्डवविवाहादिवृत्तान्तश्रवणेन अन्यैः राजभिः भीष्मधृतराष्ट्रादीनां धिक्कारः ॥ १ ॥ धार्तराष्ट्रैः पाण्डवान्प्रति मन्त्रालोचनं ॥ २ ॥ पाण्डवा हन्तव्या इति शकुनेरुक्तिः ॥ ३ ॥ पाण्डवानां हन्तुमशक्यत्वात्तैः सह सन्धिः कर्तव्य इति सौमदत्तेरुक्तिः ॥ ४ ॥

वैशंपायन उवाच ।

ततो राज्ञां चरैराप्तैः प्रवृत्तिरुपनीयत ।
पाण्डवैरुपसंपन्ना द्रौपदी पतिभिः शुभा ॥ १
येन तद्धनुरादाय लक्ष्यं विद्धं महात्मना ।
सोऽर्जुनो जयतां श्रेष्ठो महाबाणधनुर्धरः ॥ २
यः शल्यं मद्रराजं वै प्रोत्क्षिप्यापातयद्बली ।
त्रासयामास संक्रुद्धो वृक्षेण पुरुषान्रणे ॥ ३
न चास्य संभ्रमः कश्चिदासीत्तत्र महात्मनः ।
स भीमो भीमसंस्पर्शः शत्रुसेनाङ्गपातनः ॥ ४
'योऽसावत्यक्रमीद्युध्यन्युद्धे दुर्योधनं तथा ।
स राजा पाण्डवश्रेष्ठः पुण्यभाग्वुद्धिवर्धनः ॥ ५
दुर्योधनस्यावरजैर्यौ युध्येतां प्रतीपवत् ।
तौ यमौ वृत्तसंपन्नौ संपन्नबलविक्रमौ ॥' ६
ब्रह्मरूपधराञ्श्रुत्वा प्रशान्तान्पाण्डुनन्दनान् ।
कौन्तेयान्मनुजेन्द्राणां विस्मयः समजायत ॥ ७
'पौरा हि सर्वे राजन्याः समपद्यन्त विस्मिताः ।'
सपुत्रा हि पुरा कुन्ती दग्धा जतुगृहे श्रुता । ८
'सर्वभूमिपतीनां च राष्ट्राणां च यशस्विनी ।'
पुनर्जातानिव च तांस्तेऽमन्यन्त नराधिपाः ॥ ९
धिगकुर्वंस्तदा भीष्मं धृतराष्ट्रं च कौरवम् ।
कर्मणाऽतिनृशंसेन पुरोचनकृतेन वै ॥ १०
धार्मिकान्वृत्तसंपन्नान्मातुः प्रियहिते रतान् ।
यदा तानीदृशान्पार्थानुत्सादयितुमिच्छति ॥ ११
ततः स्वयंवरे वृत्ते धार्तराष्ट्राश्च भारत ।
मन्त्रयन्ति ततः सर्वे कर्णसौबलदूषिताः ॥ १२

शकुनिरुवाच ।

कश्चिच्छत्रुः कर्शनीयः पीडनीयस्तथाऽपरः ।
उत्सादनीयाः कौन्तेयाः सर्वक्षत्रस्य मे मताः ॥ १३
एवं पराजिताः सर्वे यदि यूयं गमिष्यथ ।
अकृत्वा संविदं कांचिन्मनस्तप्स्यत्यसंशयम् ॥ १४
अयं देशश्च कालश्च पाण्डवाहरणाय नः ।
न चेदेवं करिष्यध्वं लोके हास्या भविष्यथ ॥ १५
यमेते संश्रिता वस्तुं कामयन्ते च भूमिपम् ।
सोऽल्पवीर्यबलो राजा द्रुपदो वै मतो मम ॥ १६
यावदेतान्न जानन्ति जीवतो वृष्णिपुङ्गवाः ।
चैद्यश्च पुरुषव्याघ्रः शिशुपालः प्रतापवान् ॥ १७
एकीभावं गतो राज्ञा द्रुपदेन महात्मना ।
दुराधर्षतरा राजन्भविष्यन्ति न संशयः ॥ १८
यावच्चचलतां सर्वे प्राप्नुवन्ति नराधिपाः ।
तावदेव व्यवस्यामः पाण्डवानां वधं प्रति ॥ १९
मुक्ता जतुगृहाद्भीमादाशीविषमुखादिव ।
पुनस्ते यदि मुच्यन्ते महन्नो भयमागतम् ॥ २०
तेषामिहोपयातानामेषां तु चिरवासिनाम् ।
अन्तरे दुष्करं स्थातुं गजयोर्महतोरिव ॥ २१
हनध्वं प्रगृहीतानि बलानि बलिनां वराः ।
यावन्नः कुरुसेनायां पतन्ति पतगा इव ॥ २२
तावत्सर्वाभिसारेण पुरमेतद्विहन्यताम् ।
एतन्मम मतं चैव प्राप्तकालं नरर्षभ ॥ २३

वैशंपायन उवाच ।

शकुनेर्वचनं श्रुत्वा भाषमाणस्य दुर्मतेः ।
सौमदत्तिरिदं वाक्यं जगाद परमं ततः ॥ २४
प्रकृतीः सप्त वै ज्ञात्वा आत्मनश्च परस्य च ।
तथा देशं च कालं च षड्विधान्स नयेद्गुणान् ॥ २५
स्थानं वृद्धिं क्षयं चैव भूमिं मित्राणि विक्रमम् ।
प्रसमीक्ष्याभियुञ्जीत परं व्यसनपीडितम् ॥ २६
ततोऽहं पाण्डवान्मन्ये मित्रकोशसमन्वितान् ।
बलस्थान्विक्रमस्थांश्च स्वकृतैः प्रकृतिप्रियान् ॥ २७
वपुषा हि तु भूतानां नेत्राणि हृदयानि च ।

श्रोत्रं मधुरया वाचा रमयत्यर्जुनो नृणाम् ॥२८
न तु केवलदैवेन प्रजा भावेन भेजिरे ।
यद्बभूव मनःकान्तं कर्मणा स चकार तत् ॥२९
न ह्ययुक्तं न चासक्तं नानृतं न च विप्रियम् ।
भाषितं चारुभाषस्य जज्ञे पार्थस्य भारती ॥ ३०
तानेवंगुणसंपन्नान्संपन्नात्राजलक्षणैः ।
न तान्पश्यामि ये शक्ताः समुच्छेत्तुं यथा बलात् ३१
प्रभावशक्तिर्विपुला मन्त्रशक्तिश्च पुष्कला ।
तथैवोत्साहशक्तिश्च पार्थेष्वप्यधितिष्ठति ॥ ३२
मौलमित्रबलानां च कालज्ञो वै युधिष्ठिरः ।
साम्ना दानेन भेदेन दण्डेनेति युधिष्ठिरः ॥ ३३
अमित्रांश्च ततो जेतुं न रोषेणेति मे मतिः ।
परिक्रीय धनैः शत्रुं मित्राणि च बलानि च ॥३४
मूलं च सुकृतं कृत्वा भुङ्क्ते भूमिं च पाण्डवः ।
अशक्यान्पाण्डवान्मन्ये देवैरपि सवासवैः ॥ ३५
येषामर्थे सदा युक्तौ कृष्णसंकर्षणावुभौ ।
श्रेयश्च यदि मन्यध्वं मन्मतं यदि वा मतम् ॥३६
संविदं पाण्डवैः सर्वैः कृत्वा याम यथागतम् ।
गोपुराट्टालकैरुच्चैरुपतल्पशतैरपि ॥ ३७
गुप्तं पुरवरश्रेष्ठमेतदद्भिश्च संवृतम् ।
तृणधान्येन्धनरसैस्तथा यन्त्रायुधौषधैः ॥ ३८
युक्तं बहुकवाटैश्च द्रव्यागारसुवेदिकैः ।
भीमोच्छ्रितमहाचक्रं बृहदट्टालसंवृतम् ॥ ३९
दृढप्राकारनिर्यूहं शतघ्नीशतसंकुलम् ।
ऐष्टको दारवो वप्रो मानुषश्चेति यः स्मृतः ॥४०
प्राकारकर्तृभिर्वीरैर्नृगर्भस्तत्र पूजितः ।
तदेतन्नरगर्भेण पाण्डरेण विराजते ॥ ४१
सालेनानेकतालेन सर्वतः संवृतं पुरम् ।
अनुरक्ताः प्रकृतयो द्रुपदस्य महात्मनः ॥ ४२
दानमानार्जिताः सर्वे बाह्याभ्यन्तरगाश्च ये ।
प्रतिरुद्धानिमाञ्ज्ञात्वा राजभिर्भीमविक्रमैः ॥४३
उपयास्यन्ति दाशार्हाः समुदग्रोच्छ्रितायुधाः ।
तस्मात्संधिं वयं कृत्वा धार्तराष्ट्रस्य पाण्डवैः ४४
स्वराष्ट्रमेव गच्छामो यद्याप्तं वचनं मम ।
एतन्मम मतं सर्वैः क्रियतां यदि रोचते ।
एतद्धि सुकृतं मन्ये क्षेमं चापि महीक्षिताम् ॥४५

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

---

## अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

पाण्डवा हन्तव्या एवेति कर्णस्योक्तिः ॥ १ ॥ पाञ्चालनगरंप्रति युद्धार्थं दुर्योधनादीनां गमनम् ॥ २ ॥ तैः सह योद्धुं सपाण्डवस्य द्रुपदस्यागमनम् ॥ ३ ॥ कर्णजयद्रथाभ्यां सुमित्रप्रियदर्शनयोर्वधः ॥ ४ ॥ अर्जुनेन कर्णजयद्रथपुत्रयोर्वधः ॥५॥ कर्णदुर्योधनादीनां पराजयः ॥ ६ ॥ पराजितानां तेषां हास्तिनपुरगमनम् ॥ ७ ॥ कृष्णबलरामयोः पाञ्चालपुरे वासः ॥ ८ ॥

वैशंपायन उवाच ।
सौमदत्तेर्वचः श्रुत्वा कर्णो वैकर्तनो वृषा ।
उवाच वचनं काले कालज्ञः सर्वकर्मणाम् ॥ १
नीतिपूर्वमिदं सर्वमुक्तं वचनमर्थवत् ।
वचनं नाभ्यसूयामि श्रूयतां यद्वचस्त्विति ॥ २
द्वैधीभावो न गन्तव्यः सर्वकर्मसु मानवैः ।
द्विधाभूतेन मनसा अन्यत्कर्म न सिध्यति ॥ ३
संप्रयाणासनाभ्यां तु कर्शनेन तथैव च ।
नैतच्छक्यं पुरं हर्तुमाक्रन्दश्चाप्यशोभनः ॥ ४
अवमर्दनकालोऽत्र मतश्चिन्तयतो मम ।
यावन्नो वृष्णयः पार्ष्णिं न गृह्णन्ति रणप्रियाः ॥ ५
भवन्तश्च तथा हृष्टाः स्वबाहुबलशालिनः ।
प्राकारमवमृद्नन्तु परिघाः पूरयन्त्वपि ॥ ६
प्रस्रावयन्तु सलिलं क्रियतां विषमं समम् ।
तृणकाष्ठेन महता खातमस्य प्रपूर्यताम् ॥ ७
घुष्यतां राजमार्गेषु परेषां यो हनिष्यति ।
नागमश्वं पदातिं वा दानमानं स लप्स्यति ॥८
नागे दशसहस्राणि पञ्च चाश्वपदातिषु ।

भेजिरे अर्जुनमिति शेषः ॥ २९ ॥

सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

रथे वै द्विगुणं नागाद्वसु दास्यन्ति पार्थिवाः ॥९
यश्च काममुखे सक्तो वालश्च स्थविरश्च यः ।
अयुद्धमनसो ये च ते तु तिष्ठन्तु भीरवः ॥ १०
प्रदरश्च न दातव्यो न गन्तव्यमचोदितैः ।
यशो रक्षत भद्रं वो जेष्यामो वै रिपून्वयम् ॥११
अनुलोमाश्च नो वाताः सततं मृगपक्षिणः ।
अग्नयश्च विराजन्ते शस्त्राणि कवचानि च ॥ १२
वैशंपायन उवाच ।
ततः कर्णवचः श्रुत्वा धार्तराष्ट्रप्रियैषिणः ।
निर्ययुः पृथिवीपालाश्चालयन्तः परान्रणे ॥ १३
न हि तेषां मनःसक्तिरिन्द्रियार्थेषु सर्वशः ।
यथा पररिपुघ्नानां प्रसभं युद्ध एव च ॥ १४
वैकर्तनपुरोवातः सैन्धवोर्मिमहास्वनः ।
दुःशासनमहामत्स्यो दुर्योधनमहाग्रहः ॥ १५
स राजसागरो भीमो भीमघोषप्रदर्शनः ।
अभिदुद्राव वेगेन पुरं तदपसव्यतः ॥ १६
तदनीकमनाधृष्यं शस्त्राग्निव्यालदीपितम् ।
समुत्कम्पितमाज्ञाय चुक्रुशुर्द्रुपदात्मजाः ॥ १७
ते मेघसमनिर्घोषैर्बलिनः स्यन्दनोत्तमैः ।
निर्ययुर्नगरद्वारात्त्रासयन्तः परान्रणे ॥ १८
धृष्टद्युम्नः शिखण्डी च सुमित्रः प्रियदर्शनः ।
चित्रकेतुः सुकेतुश्च ध्वजकेतुश्च वीर्यवान् ॥ १९
पुत्रा द्रुपदराजस्य बलवन्तो जयैषिणः ।
द्रुपदस्य महावीर्यः पाण्डरोष्णीषकेतनः ॥ २०
पाण्डरव्यजनच्छत्रः पाण्डरध्वजवाहनः ।
स पुत्रगणमध्यस्थः शुशुभे राजसत्तमः ॥ २१
चन्द्रमा ज्योतिषां मध्ये पौर्णमास्यामिवोदितः ।
अथोद्धूतपताकाग्रमजिह्मगतिमव्ययम् ॥ २२
द्रुपदानीकमायान्तं कुरुसैन्यमभिद्रवत् ।
तयोरुभयतो जज्ञे तेषां तु तुमुलः स्वनः ॥ २३
बलयोः संप्रसरतोः सरितां स्रोतसोरिव ।
प्रकीर्णरथनागाश्वैस्तान्यनीकानि सर्वशः ॥ २४
ज्योतींषीव प्रकीर्णानि सर्वतः प्रचकाशिरे ।
उत्कृष्टभेरीनिनदे संप्रवृत्ते महारवे ॥ २५
अमर्षिता महात्मानः पाण्डवा निर्ययुस्ततः ।
रथांश्च मेघनिर्घोषान्युक्तान्परमवाजिभिः ॥ २६
धून्वन्तो ध्वजिनः शुभ्रानास्थाय भरतर्षभाः ।
ततः पाण्डुसुतान्दृष्ट्वा रथस्थानात्तकार्मुकान् ॥२७
नृपाणामभवत्कम्पो वेपथुर्हृदयेषु च ।
निर्यातेष्वथ पार्थेषु द्रौपदं तद्बलं रणे ॥ २८
आविशत्परमो हर्षः प्रमोदश्च जयं प्रति ।
सुमुहूर्तं व्यतिकरः सैन्यानामभवद्भृशम् ॥ २९
ततो द्वन्द्वमयुध्यन्त मृत्युं कृत्वा पुरस्कृतम् ।
जघ्नतुः समरे तस्मिन्सुमित्रप्रियदर्शनौ ॥ ३०
जयद्रथश्च कर्णश्च पश्यतः सव्यसाचिनः ।
अर्जुनः प्रेक्ष्य निहतौ सौमित्रप्रियदर्शनौ ॥ ३१
जयद्रथसुतं तत्र जघान पितुरन्तिके ।
वृषसेनादवरजं सुदामानं धनंजयः ॥ ३२
कर्णपुत्रं महेष्वासं रथनीडादपातयत् ।
तौ सुतौ निहतौ दृष्ट्वा राजसिंहौ तरस्विनौ ॥ ३३
नामृष्येतां महाबाहू प्रहारमिव सद्गजौ ।
तौ जग्मतुरसंभ्रान्तौ फल्गुनस्य रथंप्रति ॥ ३४
प्रतिमुक्ततलत्राणौ शपमानौ परस्परम् ।
सन्निपातस्तयोरासीदतिघोरो महामृधे ॥ ३५
वृत्रशम्बरयोः सङ्ख्ये वज्रिणेव महारणे ।
त्रीनश्वाञ्जघ्नतुस्तस्य फल्गुनस्य नरर्षभौ ॥ ३६
ततः किलिकिलाशब्दः कुरूणामभवत्तदा ।
तान्हयान्निहतान्दृष्ट्वा भीमसेनः प्रतापवान् ॥३७
निमेषान्तरमात्रेण रथमश्वैरयोजयत् ।
उपयातं रथं दृष्ट्वा दुर्योधनपुरःसरौ ॥ ३८
सौबलः सौमदत्तिश्च समेयातां परन्तपौ ।
तैः पञ्चभिरदीनात्मा भीमसेनो महाबलः ॥ ३९
अयुध्यत तदा वीरैरिन्द्रियार्थैरिवेश्वरः ।
तैर्निरुद्धो न संत्रासं जगाम समितिंजयः ॥ ४०
पञ्चभिर्द्विरदैर्मत्तैर्निरुद्ध इव केसरी ।
तस्यैते युगपत्पञ्च पञ्चभिर्निशितैः शरैः ॥ ४१
सारथिं वाजिनश्चैव निन्युर्वैवस्वतक्षयम् ।
हताश्वात्स्यन्दनश्रेष्ठादवरुह्य महारथः ॥ ४२
चचार विविधान्मार्गानसिमुद्यम्य पाण्डवः ।
अश्वस्कन्धेषु चक्रेषु युगेष्वीषासु चैव हि ॥ ४३

व्यचरत्पातयञ्शत्रून्सुपर्ण इव भोगिनः ।
विधनुष्कं विकवचं विरथं च समीक्ष्य तम् ॥४४
अभिपेतुर्नरव्याघ्रा अर्जुनप्रमुखा रथाः ।
धृष्टद्युम्नः शिखण्डी च यमौ च युधि दुर्जयौ॥४५
तस्मिन्महारथे युद्धे प्रवृत्ते शरवृष्टिभिः ।
रथध्वजपताकाश्च सवर्मन्तरधीयत ॥ ४६
तत्प्रवृत्तं चिरं कालं युद्धं सममिवाभवत् ।
रथेन तान्महाबाहुरर्जुनो व्यधमत्पुनः ॥ ४७
तमापतन्तं दृष्ट्वैव महाबाहुर्धनुर्धरः ।
कर्णोऽस्त्रविदुषां श्रेष्ठो वारयामास सायकैः ॥४८
स तेनाभिहतः पार्थो वासविर्वज्रसन्निभान् ।
त्रीञ्शरान्संदधे क्रुद्धो वधात्क्रुद्धस्य पाण्डवः ॥४९
तैः शरैराहतं कर्णं ध्वजयष्टिमुपाश्रितम् ।
अपोवाह रथाच्चाशु सूतः परपुरंजयम् ॥ ५०
ततः पराजिते कर्णे धार्तराष्ट्रान्महाभयम् ।
विवेश समुदग्रांश्च पाण्डवान्प्रसमीक्ष्य तु ॥ ५१
तत्प्रकम्पितमत्यर्थं तद्दृष्ट्वा सौबलो बलम् ।
गिरा मधुरया चापि समाश्वासयतासकृत् ॥५२
धार्तराष्ट्रैस्ततः सर्वैर्दुर्योधनपुरःसरैः ।
धृतं तत्पुनरेवासीद्बलं पार्थप्रपीडितम् ॥ ५३
ततो दुर्योधनं दृष्ट्वा भीमो भीमपराक्रमः ।
अक्रुध्यत्स महाबाहुरगारं जातुषं स्मरन् ॥ ५४
ततः संग्रामशिरसि ददर्श विपुलद्रुमम् ।
आयामभूतं तिष्ठन्तं स्कन्धपञ्चाशदुन्नतम्॥ ५५
महास्कन्धं महोत्सेधं शक्रध्वजमिवोच्छ्रितम् ।
तमुत्पाट्य च पाणिभ्यामुद्यम्य चरणावपि ॥५६
अभिपेदे परान्सङ्ख्ये वज्रपाणिरिवासुरान् ।
भीमसेनभयार्तानि फल्गुनाभिहतानि च ॥ ५७
न शेकुस्तान्यनीकानि धार्तराष्ट्राण्युदीक्षितुम् ।
तानि संभ्रान्तयोधानि श्रान्तवाजिगजानि च ५८
दिशः प्राकालयद्भीमो दिवीवाभ्राणि मारुतः ।
तान्निवृत्तान्निरानन्दान्नरवारणवाजिनः । ५९
नानुसस्रुर्न चाजघ्नुर्नोचुः किंचिच्च दारुणम् ।
स्वमेव शिबिरं जग्मुः क्षत्रियाः शरविक्षताः ॥६०
परेऽप्यभिययुर्हृष्टाः पुरं पौरसुखावहाः ।
मुहूर्तमभवद्युद्धं तेषां वै पाण्डवैः सह ॥ ६१
यावत्तद्युद्धमभवन्महद्देवासुरोपमम् ।
तावदेवाभवच्छान्तं निवृत्ता वै महारथाः ॥ ६२
सुव्रतं चक्रिरे सर्वे सुवृत्तामब्रुवन्वधूम् ।
कृतार्थं द्रुपदं चोचुर्धृष्टद्युम्नं च पार्षतम् ॥ ६३
शकुनिः सिन्धुराजश्च कर्णदुर्योधनावपि ।
तेषां तदाभवद्दुःखं हृदि वाचा तु नाब्रुवन्॥६४
ततः प्रयाता राजानः सर्व एव यथागतम् ।
धार्तराष्ट्रा हि ते सर्वे गता नागपुरं तदा ॥ ६५
प्रागेव पूर्निरोधात्तु पाण्डवैरश्वसादिनः ।
प्रेषिता गच्छतारिष्टानस्मानाख्यात शौरये ॥ ६६
तेऽचिरेणैव कालेन संप्राप्ता यादवीं पुरीम् ।
ऊचुः संकर्षणोपेन्द्रौ वचनं वचनक्षमौ ॥ ६७
कुशलं पाण्डवाः सर्वानाहुः सान्धकवृष्णयः ।
आत्मनश्चाहतानाहुर्विमुक्ताञ्जातुषाद्गृहात् ॥ ६८
समाजे द्रौपदीं लब्धामाहू राजीवलोचनाम् ।
आत्मनः सदृशीं सर्वैः शीलवृत्तसमाधिभिः ॥६९
तच्छ्रुत्वा वचनं कृष्णस्तानुवाचोत्तरं वचः ।
सर्वमेतदहं जाने वधात्तस्य तु रक्षसः ॥ ७०
तत उद्योजयामास माधवश्चतुरङ्गिणीम् ।
सेनामुपानयत्तूर्णं पाञ्चालनगरीं प्रति ॥ ७१
ततः संकर्षणश्चैव केशवश्च महाबलः ।
यादवैः सह सर्वैश्च पाण्डवानभिजग्मतुः ॥ ७२
पितृष्वसारं संपूज्य नत्वा चैव तु यादवीम् ।
द्रौपदीं भूषणैः शुभ्रैर्भूषयित्वा यथाविधि ॥ ७३
पाण्डवान्हर्षयित्वा तु पूजयामासतुश्च तान् ।
न्यायतः पूजितौ राज्ञा द्रुपदेन महात्मना ॥७४
यादवाः पूजिताः सर्वे पाण्डवैश्च महात्मभिः ।
रेमिरे पाण्डवैः सार्धं ते पाञ्चालपुरे तदा ॥ ७५

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

## एकोनविंशाधिकद्विशततमोऽध्यायः ॥ २१९ ॥

विदुरात् ज्ञातपाण्डववृत्तान्तेन धृतराष्ट्रेण द्रौपद्यानयनार्थमाज्ञापनम् ॥१॥ धृतराष्ट्रसमीपे कर्णदुर्योधनयोर्भाषणम् ॥ २ ॥

वैशंपायन उवाच ।
वृत्ते स्वयंवरे चैव राजानः सर्व एव ते ।
यथागतं विप्रजग्मुर्विदित्वा पाण्डवान्वृतान् ॥ १
अथ दुर्योधनो राजा विमना भ्रातृभिः सह ।
अश्वत्थाम्ना मातुलेन कर्णेन च कृपेण च ॥ २
विनिवृत्तो वृतं दृष्ट्वा द्रौपद्या श्वेतवाहनम् ।
तं तु दुःशासनोऽव्रीडो मन्दंमन्दमिवाब्रवीत् ॥ ३
यद्यसौ ब्राह्मणो न स्याद्विन्देत द्रौपदीं न सः ।
न हि तं तत्त्वतो राजन्वेद कश्चिद्धनंजयम् ॥ ४
दैवं च परमं मन्ये पौरुषं चाप्यनर्थकम् ।
धिगस्तु पौरुषं मन्त्रं यद्धरन्तीह पाण्डवाः ॥ ५
'बध्वा चक्षूंपि नः पार्था राज्ञां च द्रुपदात्मजाम् ।
उद्वाह्य राज्ञां तैर्न्यस्तो वामः पादः पृथासुतैः ॥६
विमुक्ताः कथमेतेन जतुवेश्महविर्भुजः ।
अस्माकं पौरुषं सत्त्वं बुद्धिश्चापि गता ततः ॥ ७
वयं हता मातुलाद्य विश्वस्य च पुरोचनम् ।
अदग्ध्वा पाण्डवानेतान्स्वयं दग्धो हुताशने ॥ ८
मत्तो मातुल मन्येऽहं पाण्डवा बुद्धिमत्तराः ।
तेषां नास्ति भयं मृत्योर्मुक्तानां जतुवेश्मनः ॥ ९
वैशंपायन उवाच ।
एवं संभाषमाणास्ते निन्दन्तश्च पुरोचनम् ।
पञ्चपुत्रां किरातीं च विदुरं च महामतिम् ॥'१०
विविशुर्हास्तिनपुरं दीना विगतचेतसः ॥ ११
त्रस्ता विगतसंकल्पा दृष्ट्वा पार्थान्महौजसः ।
मुक्तान्हव्यभुजश्चैव संयुक्तान्द्रुपदेन च ॥ १२
धृष्टद्युम्नं तु संचिन्त्य तथैव च शिखण्डिनम् ।
द्रुपदस्यात्मजांश्चान्यान्सर्वयुद्धविशारदान् ॥ १३
विदुरस्त्वथ ताञ्श्रुत्वा द्रौपद्या पाण्डवान्वृतान् ।
व्रीडितान्धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् ॥ १४
ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशांपते ।
उवाच दिष्ट्या कुरवो वर्धन्त इति विस्मितः ॥ १५
वैचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तत् ।
अब्रवीत्परमप्रीतो दिष्ट्या दिष्ट्येति भारत ॥ १६
मन्यते स वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया ।
दुर्योधनमविज्ञानात्प्रज्ञाचक्षुर्नरेश्वरः ॥ १७
अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु ।
आनीयतां वै कृष्णेति पुत्रं दुर्योधनं तदा ॥ १८
'अथ स्म पश्चाद्विदुर आचख्यावम्बिकात्मजम् ।
कौरव्या इति सामान्यान्न मन्येथास्तवात्मजान् १९
वर्धन्त इति मद्वाक्याद्वर्धिताः पाण्डुनन्दनाः ।
कृष्णया संवृताः पार्था विमुक्ता राजसङ्गरात् ॥ २०
दिष्ट्या कुशलिनो राजन्पूजिता द्रुपदेन च ॥ २१
वैशंपायन उवाच ।
एतच्छ्रुत्वा तु वचनं विदुरस्य नराधिपः ।
आकारच्छादनार्थाय दिष्ट्यादिष्ट्येति चाब्रवीत् २२
धृतराष्ट्र उवाच ।
एवं विदुर भद्रं ते यदि जीवन्ति पाण्डवाः ।
न ममौ मे तनौ प्रीतिस्त्वद्वाक्यामृतसंभवा ॥ २३
साध्वाचारतया तेषां संबन्धो द्रुपदेन च ।
बभूव परमश्लाघ्यो दिष्ट्यादिष्ट्येति चाब्रवीत् ॥ २४
अन्ववाये वसोर्जातः प्रवरे मात्स्यके कुले ।
वृत्तविद्यातपोवृद्धः पार्थिवानां च संमतः ॥ २५
पुत्राश्चास्य तथा पौत्राः सर्वे सुचरितव्रताः ।
तेषां संबन्धिनश्चान्ये बहवः सुमहाबलाः ॥ २६
यथैव पाण्डोः पुत्रास्ते ततोऽप्यभ्यधिका मम ।
सेयमभ्यधिकान्येभ्यो वृत्तिर्विदुर मे मता ॥ २७
या प्रीतिः पाण्डुपुत्रेषु न साऽन्यत्र ममाभिभो ।
नित्योऽयं चिन्तितः क्षत्तः सत्यं सत्येन ते शपे २८
यत्ते कुशलिनो वीराः पाण्डुपुत्रा महारथाः ।
मित्रवन्तोऽभवन्पुत्रा दुर्योधनमुखास्तथा ॥ २९
मया श्रुतं यदा वह्नेर्दग्धाः पाण्डुसुता इति ।
तदाऽदह्यं दिवारात्रं न भोक्ष्ये न स्वपामि च ॥ ३०
असहायाश्च मे पुत्रा लूनपक्षा इव द्विजाः ।
तत्त्वतः शृणु मे क्षत्तः सुसहायाः सुता मम ।

अद्य वै स्थिरसाम्राज्यमाचन्द्रार्कं ममाभवत् ॥' ३१
को हि द्रुपदमासाद्य मित्रं क्षत्तः सबान्धवम् ।
न बुभूषेद्भवेनार्थी गतश्रीरपि पार्थिवः ॥ ३२
वैशंपायन उवाच ।
तं तथा भाषमाणं तु विदुरः प्रत्यभाषत ।
नित्यं भवतु ते बुद्धिरेषा राजञ्छतं समाः ।
इत्युक्त्वा प्रययौ राजन्विदुरः स्वं निवेशनम् ॥ ३३
ततो दुर्योधनश्चापि राधेयश्च विशांपते ।
धृतराष्ट्रमुपागम्य वचोऽब्रूतामिदं तदा ॥ ३४
सन्निधौ विदुरस्य त्वां दोषं वक्तुं न शक्नुवः ।
विविक्तमिति वक्ष्यावः किं तवेदं चिकीर्षितम् ३५
सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः ।
अभिष्टौषि च यत्क्षत्तुः समीपे द्विपदांवर ॥ ३६
अन्यस्मिन्नृप कर्तव्ये त्वमन्यत्कुरुपेऽनघ ।
तेषां बलविघातो हि कर्तव्यस्तात नित्यशः ॥ ३७
ते वयं प्राप्तकालस्य चिकीर्षां मन्त्रयामहे ।
यथा नो न ग्रसेयुस्ते सपुत्रबलबान्धवान् ॥ ३८

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

## विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

धृतराष्ट्रदुर्योधनसंवादः ॥ १ ॥

'वैशंपायन उवाच ।
दुर्योधनेनैवमुक्तः कर्णेन च विशांपते ।
पुत्रं च सूतपुत्रं च धृतराष्ट्रोऽब्रवीदिदम् ॥' १
धृतराष्ट्र उवाच ।
अहमप्येवमेवैतच्चिकीर्षामि यथा युवाम् ।
विवेक्तुं नाहमिच्छामि त्वाकारं विदुरं प्रति ॥ २
ततस्तेषां गुणानेव कीर्तयामि विशेषतः ।
नावबुध्येत विदुरो ममाभिप्रायमिङ्गितैः ॥ ३
यच्च त्वं मन्यसे प्राप्तं तद्ब्रवीहि सुयोधन ।
राधेय मन्यसे यच्च प्राप्तकालं वदाशु मे ॥ ४
दुर्योधन उवाच ।
अद्य तान्कुशलैर्विप्रैः सुगुप्तैराप्तकारिभिः ।
कुन्तीपुत्रान्भेदयामो माद्रीपुत्रौ च पाण्डवौ ॥ ५
अथवा द्रुपदो राजा महद्भिर्वित्तसंचयैः ।
पुत्राश्चास्य प्रलोभ्यन्ताममात्याश्चैव सर्वशः ॥ ६
परित्यजेद्यथा राजा कुन्तीपुत्रं युधिष्ठिरम् ।
अथ तत्रैव वा तेषां निवासं रोचयन्तु ते ॥ ७
इहैषां दोषवद्वासं वर्णयन्तु पृथक्पृथक् ।
ते भिद्यमानास्तत्रैव मनः कुर्वन्तु पाण्डवाः ॥ ८
अथवा कुशलाः केचिदुपायनिपुणा नराः ।
इतरेतरतः पार्थान्भेदयन्त्वनुरागतः ॥ ९
व्युत्थापयन्तु वा कृष्णां बहुत्वात्सुकरं हि तत् ।
अथवा पाण्डवांस्तस्यां भेदयन्तु ततश्च ताम् ॥ १०
भीमसेनस्य वा राजन्नुपायकुशलैर्नरैः ।
मृत्युर्विधीयतां छन्नैः स हि तेषां बलाधिकः ॥ ११
तमाश्रित्य हि कौन्तेयः पुरा चास्मान्न मन्यते ।
स हि तीक्ष्णश्च शूरश्च तेषां चैव परायणम् ॥ १२
तस्मिंस्त्वभिहते राजन्हतोत्साहा हतौजसः ।
यतिष्यन्ते न राज्याय स हि तेषां व्यपाश्रयः ॥ १३
अजेयो ह्यर्जुनः सङ्ख्ये पृष्ठगोपे वृकोदरे ।
तमृते फाल्गुनो युद्धे राधेयस्य न पादभाक् ॥ १४
ते जानानास्तु दौर्बल्यं भीमसेनमृते महत् ।
अस्मान्बलवतो ज्ञात्वा न यतिष्यन्ति दुर्बलाः ॥ १५
इहागतेषु वा तेषु निदेशवशवर्तिषु ।
प्रवर्तिष्यामहे राजन्यथाशास्त्रं निबर्हणम् ॥ १६
'दर्पं वा वदतां तेषां केचिदत्र मनस्विनः ।
द्रुपदस्यात्मजा राजन्प्रभिद्यन्ते ततः परैः ॥' १७
अथवा दर्शनीयाभिः प्रमदाभिर्विलोभ्यताम् ।

गतश्रीर्नष्टश्रीः को भवेन ऐश्वर्येणार्थी न बुभूषेद्भवितुमिच्छेदपि तु सर्वोपीच्छेत् ॥ ३२ ॥

एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

इङ्गितैश्चेष्टितैः ॥३॥ विंशत्यधिकद्विशततमोऽध्यायः ॥२२०॥

एकैकस्तत्र कौन्तेयस्ततः कृष्णा विरज्यताम् ॥१८
प्रेष्यतां चैव राधेयस्तेषामागमनाय वै ।
तैस्तैः प्रकारैः सन्नीय पात्यन्तामाप्तकारिभिः १९
एतेषामप्युपायानां यस्ते निर्दोषवान्मतः ।
तस्य यप्रोगमातिष्ठ पुरा कालोऽतिवर्तते ॥ २०
यावद्ध्यकृतविश्वासा द्रुपदे पार्थिवर्षभे ।
तावदेव हि ते शक्या न शक्यास्तु ततः परम् ॥२१
एषा मम मतिस्तात निग्रहाय प्रवर्तते ।
साध्वी वा यदि वाऽसाध्वी किं वा राधेय मन्यसे॥

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

## एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

दुर्योधनं प्रति कर्णेनोक्तं श्रुतवतो धृतराष्ट्रस्य भीष्मादिभिः सह मन्त्रणम् ॥ १ ॥

कर्ण उवाच ।
दुर्योधन तव प्रज्ञा न सम्यगिति मे मतिः ।
न ह्युपायेन ते शक्याः पाण्डवाः कुरुवर्धन ॥ १
पूर्वमेव हि ते सूक्ष्मैरुपायैर्यतितास्त्वया ।
निग्रहीतुं तदा वीर न चैव शकितास्त्वया ॥ २
इहैव वर्तमानास्ते समीपे तव पार्थिव ।
अजातपक्षाः शिशवः शकिता नैव बाधितुम् ॥३
जातपक्षा विदेशस्था विवृद्धाः सर्वशोऽद्य ते ।
नोपायसाध्याः कौन्तेया ममैषा मतिरच्युता ॥४
न च ते व्यसनैर्योक्तुं शक्या दिष्टकृतेन च ।
शकिताश्चेप्सवश्चैव पितृपैतामहं पदम् ॥ ५
परस्परेण भेदश्च नाधातुं तेषु शक्यते ।
एकस्यां ये रताः पत्न्यां न भिद्यन्ते परस्परम् ॥६
न चापि कृष्णा शक्येत तेभ्यो भेदयितुं परैः ।
परिद्यूनान्वृतवती किमुताद्य मृजावतः ॥ ७
ईप्सितश्च गुणः स्त्रीणामेकस्या बहुभर्तृता ।
तं च प्राप्तवती कृष्णा न सा भेदयितुं क्षमा ॥८
आर्यव्रतश्च पाञ्चाल्यो न स राजा धनप्रियः ।
न संत्यक्ष्यति कौन्तेयान्राज्यदानैरपि ध्रुवम् ॥९
तथाऽस्य पुत्रो गुणवाननुरक्तश्च पाण्डवान् ।
तस्मान्नोपायसाध्यांस्तानहं मन्ये कथंचन ॥ १०
इदं त्वद्य क्षमं कर्तुमस्माकं पुरुषर्षभ ।
यावन्न कृतमूलास्ते पाण्डवेया विशांपते ॥ ११
तावत्प्रहरणीयास्ते तत्तुभ्यं तात रोचताम् ।
अस्मत्पक्षो महान्यावद्यावत्पाञ्चालको लघुः ।
तावत्प्रहरणं तेषां क्रियतां मा विचारय ॥ १२
वाहनानि प्रभूतानि मित्राणि च कुलानि च ।
यावन्न तेषां गान्धारे तावद्विक्रम पार्थिव ॥ १३
यावच्च राजा पाञ्चाल्यो नोद्यमे कुरुते मनः ।
सह पुत्रैर्महावीर्यैस्तावद्विक्रम पार्थिव ॥ १४
यावन्नायाति वार्ष्णेयः कर्षन्यादववाहिनीम् ।
राज्यार्थे पाण्डवेयानां पाञ्चाल्यसदनं प्रति ॥१५
वसूनि विविधान्भोगान्राज्यमेव च केवलम् ।
नात्याज्यमस्ति कृष्णस्य पाण्डवार्थे कथंचन ॥१६
विक्रमेण मही प्राप्ता भरतेन महात्मना ।
विक्रमेण च लोकांस्त्रीञ्जितवान्पाकशासनः ॥१७
विक्रमं च प्रशंसन्ति क्षत्रियस्य विशांपते ।
स्वको हि धर्मः शूराणां विक्रमः पार्थिवर्षभ ॥ १८
ते बलेन वयं राजन्महता चतुरङ्गिणा ।
प्रमथ्य द्रुपदं शीघ्रमानयामेह पाण्डवान् ॥ १९
न हि साम्ना न दानेन न भेदेन च पाण्डवाः ।
शक्याः साधयितुं तस्माद्विक्रमेणैव ताञ्जहि ॥२०
तान्विक्रमेण जित्वेमामखिलां भुङ्क्ष्व मेदिनीम् ।
अतो नान्यं प्रपश्यामि कार्योपायं जनाधिप ॥२१
वैशंपायन उवाच ।
श्रुत्वा तु राधेयवचो धृतराष्ट्रः प्रतापवान् ।
अभिपूज्य ततः पश्चादिदं वचनमब्रवीत् ॥ २२
उपपन्नं महाप्राज्ञे कृतास्त्रे सूतनन्दने ।

परिद्यूनान् शोच्यान् । मृजावतः सुवेषान् ॥ ७ ॥

त्वयि विक्रमसंपन्नमिदं वचनमीदृशम् ॥ २३
भूय एव तु भीष्मश्च द्रोणो विदुर एव च ।
युवां च कुरुतं बुद्धिं भवेद्या नः सुखोदया ॥२४
तत आनाय्य तान्सर्वान्मन्त्रिणः सुमहायशाः ।
धृतराष्ट्रो महाराज मन्त्रयामास वै तदा ॥ २५

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

## द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

भीष्मेण दुर्योधनादिसमीपे पाण्डवेभ्योऽर्धराज्यं दातव्यमिति स्वाभिप्रायकथनम् ॥ १ ॥

भीष्म उवाच ।
न रोचते विग्रहो मे पाण्डुपुत्रैः कथंचन ।
यथैव धृतराष्ट्रो मे तथा पाण्डुरसंशयम् ॥ १
गान्धार्याश्च यथा पुत्रास्तथा कुन्तीसुता मम ।
यथा च मम ते रक्ष्या धृतराष्ट्र तथा तव ॥ २
यथा च मम राज्ञश्च तथा दुर्योधनस्य ते ।
तथा कुरूणां सर्वेषामन्येषामपि पार्थिव ॥ ३
एवं गते विग्रहं तैर्न रोचे
सन्धाय वीरैर्दीयतामर्धभूमिः ।
तेषामपीदं प्रपितामहानां
राज्यं पितुश्चैव कुरूत्तमानाम् ॥ ४
दुर्योधन यथा राज्यं त्वमिदं तात पश्यसि ।
मम पैतृकमित्येवं तेऽपि पश्यन्ति पाण्डवाः ॥५
यदि राज्यं न ते प्राप्ताः पाण्डवेया यशस्विनः ।
कुत एव तवापीदं भारतस्यापि कस्यचित् ॥ ६
अधर्मेण च राज्यं त्वं प्राप्तवान्भरतर्षभ ।
तेऽपि राज्यमनुप्राप्ताः पूर्वमेवेति मे मतिः ॥ ७
मधुरेणैव राज्यस्य तेषामर्धं प्रदीयताम् ।
एतद्धि पुरुषव्याघ्र हितं सर्वजनस्य च ॥ ८
अतोऽन्यथा चेत्क्रियते न हितं नो भविष्यति ।
तवाप्यकीर्तिः सकला भविष्यति न संशयः ॥९
कीर्तिरक्षणमातिष्ठ कीर्तिर्हि परमं बलम् ।
नष्टकीर्तेर्मनुष्यस्य जीवितं ह्यफलं स्मृतम् ॥ १०
यावत्कीर्तिर्मनुष्यस्य न प्रणश्यति कौरव ।
तावज्जीवति गान्धारे नष्टकीर्तिस्तु नश्यति ॥११
तमिमं समुपातिष्ठ धर्मं कुरुकुलोचितम् ।
अनुरूपं महाबाहो पूर्वेषामात्मनः कुरु ॥ १२
दिष्ट्या ध्रियन्ते पार्था हि दिष्ट्या जीवति सा पृथा ।
दिष्ट्या पुरोचनः पापो न सकामोऽत्ययं गतः १३
यदाप्रभृति दग्धास्ते कुन्तिभोजसुतासुताः ।
तदाप्रभृति गान्धारे न शक्नोम्यभिवीक्षितुम् १४
लोके प्राणभृतां किंचिच्छ्रुत्वा कुन्तीं तथागताम् ।
न चापि दोषेण तथा लोको मन्येत्पुरोचनम् ।
यथा त्वां पुरुषव्याघ्र लोको दोषेण गच्छति १५
तदिदं जीवितं तेषां तव किल्बिषनाशनम् ।
संमन्तव्यं महाराज पाण्डवानां च दर्शनम्॥१६
न चापि तेषां वीराणां जीवतां कुरुनन्दन ।
पित्र्योंशः शक्य आदातुमपि वज्रभृता स्वयं १७
ते सर्वेऽवस्थिता धर्मे सर्वे चैवैकचेतसः ।
अधर्मेण निरस्ताश्च तुल्ये राज्ये विशेषतः ॥ १८
यदि धर्मस्त्वया कार्यो यदि कार्यं प्रियं च मे ।
क्षेमं च यदि कर्तव्यं तेषामर्धं प्रदीयताम् ॥ १९

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

---

मधुरेण प्रीत्या ॥ ८ ॥ ध्रियन्ते जीवन्ति ॥ १३ ॥ गच्छति अवगच्छति ॥ १५ ॥

द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

## त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

पाण्डवाः संविभाज्या इति द्रोणवचनम् ॥ १ ॥ तद्विरोधितया कर्णेन अम्बुवीचवृत्तान्तकथनम् ॥ २ ॥ मदुक्तं न क्रियते चेत्कुरवो विनङ्क्ष्यन्तीति द्रोणेनोक्तिः ॥ ३ ॥

द्रोण उवाच ।
मन्त्राय समुपानीतैर्धृतराष्ट्र हितैर्नृप ।
धर्म्यमर्थ्यं यशस्यं च वाच्यमित्यनुशुश्रुम ॥ १
ममाप्येषा मतिस्तात या भीष्मस्य महात्मनः ।
संविभज्यास्तु कौन्तेया धर्म एष सनातनः ॥ २
प्रेष्यतां द्रुपदायाशु नरः कश्चित्प्रियंवदः ।
बहुलं रत्नमादाय तेषामर्थाय भारत ॥ ३
मिथः कृत्यं च तस्मै स आदाय वसु गच्छतु ।
वृद्धिं च परमां ब्रूयात्तत्संयोगोद्भवां तथा ॥ ४
संप्रीयमाणं त्वां ब्रूयाद्राजन्दुर्योधनं तथा ।
असकृद्द्रुपदे चैव धृष्टद्युम्ने च भारत ॥ ५
उचितत्वं प्रियत्वं च योगस्यापि च वर्णयेत् ।
पुनःपुनश्च कौन्तेयान्माद्रीपुत्रौ च सान्त्वयन् ॥६
हिरण्मयानि शुभ्राणि बहून्याभरणानि च ।
वचनात्तव राजेन्द्र द्रौपद्याः संप्रयच्छतु ॥ ७
तथा द्रुपदपुत्राणां सर्वेषां भरतर्षभ ।
पाण्डवानां च सर्वेषां कुन्त्या युक्तानि यानि च ८
'दत्त्वा तानि महार्हाणि पाण्डवान्संप्रहर्षय ।'
एवं सान्त्वसमायुक्तं द्रुपदं पाण्डवैः सह ।
उक्त्वा सोऽनन्तरं ब्रूयात्तेषामागमनं प्रति ॥ ९
अनुज्ञातेषु वीरेषु बलं गच्छतु शोभनम् ।
दुःशासनो विकर्णश्चाप्यानेतुं पाण्डवानिह ॥१०
ततस्ते पाण्डवाः श्रेष्ठाः पूज्यमानाः सदा त्वया ।
प्रकृतीनामनुमते पदे स्थास्यन्ति पैतृके ॥ ११
एतत्तव महाराज तेषु पुत्रेषु चैव हि ।
वृत्तमौपयिकं मन्ये भीष्मेण सह भारत ॥ १२
कर्ण उवाच ।
योजितावर्थमानाभ्यां सर्वकार्येष्वनन्तरौ ।
न मन्त्रयेतां त्वच्छ्रेयः किमद्भुततरं ततः ॥ १३
दुष्टेन मनसा यो वै प्रच्छन्नेनान्तरात्मना ।
ब्रूयान्निःश्रेयसं नाम कथं कुर्यात्सतां मतम् ॥१४
न मित्राण्यर्थकृच्छ्रेषु श्रेयसे चेतराय वा ।
विधिपूर्वं हि सर्वस्य दुःखं वा यदि वा सुखम् १५
कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः ।
ससहायोऽसहायश्च सर्वं सर्वत्र विन्दति ॥ १६
श्रूयते हि पुरा कश्चिदम्बुवीच इतीश्वरः ।
आसीद्राजगृहे राजा मागधानां महीक्षिताम् ॥१७
स हीनः करणैः सर्वैरुच्छ्वासपरमो नृपः ।
अमात्यसंस्थः सर्वेषु कार्येष्वेवाभवत्तदा ॥ १८
तस्यामात्यो महाकर्णिर्बभूवैकेश्वरस्तदा ।
स लब्धबलमात्मानं मन्यमानोऽवमन्यते ॥ १९
स राज्ञ उपभोग्यानि स्त्रियो रत्नधनानि च ।
आददे सर्वशो मूढ ऐश्वर्यं च स्वयं तदा ॥ २०
तदादाय च लुब्धस्य लोभाल्लोभोऽभ्यवर्धत ।
तथाहि सर्वमादाय राज्यमस्य जिहीर्षति ॥ २१
हीनस्य करणैः सर्वैरुच्छ्वासपरमस्य च ।
यतमानोऽपि तद्राज्यं न शशाकेति नः श्रुतं २२
किमन्यद्विहिता नूनं तस्य सा पुरुषेन्द्रता ।
यदि ते विहितं राज्यं भविष्यति विशांपते ॥२३
मिषतः सर्वलोकस्य स्थास्यते त्वयि तद्ध्रुवम् ।
अतोऽन्यथा चेद्विहितं यतमानो न लप्स्यसे ॥२४
एवं विद्वन्नुपादत्स्व मन्त्रिणां साध्वसाधुताम् ।
दुष्टानां चैव बोद्धव्यमदुष्टानां च भाषितम् ॥२५
द्रोण उवाच ।
विद्म ते भावदोषेण यदर्थमिदमुच्यते ।
दुष्ट पाण्डवहेतोस्त्वं दोषमाख्यापयस्युत ॥ २६

मिथः कृत्यं सांबन्धिकं वरपक्षीयैर्वध्वलंकारादिकन्यापक्षीयैर्वरालंकारादि च ॥ ४ ॥ विधिपूर्वं अदृष्टकारणकम् ॥१५॥ अम्बुवीर इति श्रुतः इति घ. पाठः । विनिन्द इति वितश्रुः इति ङ पाठः । ईश्वरः समर्थः । राजगृहे तन्नामके नगरे ॥१७॥ त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

हितं तु परमं कर्ण ब्रवीमि कुलवर्धनम् ।
अथ त्वं मन्यसे दुष्टं ब्रूहि यत्परमं हितम् ॥ २७
अतोऽन्यथा चेत्क्रियते यद्ब्रवीमि परं हितम् ।
कुरवो वै विनङ्क्ष्यन्ति नचिरेणैव मे मतिः ॥ २८

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

## चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

भीष्मद्रोणाभ्यामुक्तमेवावश्यं करणीयं पाण्डवा जेतुं न शक्याः दुर्योधनादीनां वचनं मा कुरु इति धृतराष्ट्रंप्रति विदुरस्योक्तिः ॥ १ ॥

विदुर उवाच ।
राजन्निःसंशयं श्रेयो वाच्यस्त्वमसि बान्धवैः ।
न त्वशुश्रूषमाणे वै वाक्यं संप्रति तिष्ठति ॥ १
प्रियं हितं च तद्वाक्यमुक्तवान्कुरुसत्तमः ।
भीष्मः शान्तनवो राजन्प्रतिगृह्णासि तन्न च ॥२
तथा द्रोणेन बहुधा भाषितं हितमुत्तमम् ।
तच्च राधासुतः कर्णो मन्यते न हितं तव ॥ ३
चिन्तयंश्च न पश्यामि राजंस्तव सुहृत्तमम् ।
आभ्यां पुरुषसिंहाभ्यां यो वा स्यात्प्रज्ञयाधिकः ॥४
इमौ हि वृद्धौ वयसा प्रज्ञया च श्रुतेन च ।
समौ च त्वयि राजेन्द्र तथा पाण्डुसुतेषु च ॥५
धर्मे चानवरौ राजन्सत्यतायां च भारत ।
रामाद्दाशरथेश्चैव गयाच्चैव न संशयः ॥ ६
न चोक्तवन्तावश्रेयः पुरस्तादपि किंचन ।
न चाप्यपकृतं किंचिदनयोर्लक्ष्यते त्वयि ॥ ७
तावुभौ पुरुषव्याघ्रावनागसि नृपे त्वयि ।
न मन्त्रयेतां त्वच्छ्रेयः कथं सत्यपराक्रमौ ॥ ८
प्रज्ञावन्तौ नरश्रेष्ठावस्मिँल्लोके नराधिप ।
त्वन्निमित्तमतो नेमौ किंचिज्जिह्मं वदिष्यतः ॥ ९
इति मे नैष्ठिकी बुद्धिर्वर्तते कुरुनन्दन ।
न चार्थहेतोर्धर्मज्ञौ वक्ष्यतः पक्षसंश्रितम् ॥ १०
एतद्धि परमं श्रेयो मन्येऽहं तव भारत ।
दुर्योधनप्रभृतयः पुत्रा राजन्यथा तव ॥ ११
तथैव पाण्डवेयास्ते पुत्रा राजन्न संशयः ।
तेषु चेदहितं किंचिन्मन्त्रयेयुरतद्विदः ॥ १२
मन्त्रिणस्ते न च श्रेयः प्रपश्यन्ति विशेषतः ।
अथ ते हृदये राजन्विशेषः स्वेषु वर्तते ।
अन्तरस्थं विवृण्वानाः श्रेयः कुर्युर्न ते ध्रुवम् ॥१३
एतदर्थमिमौ राजन्महात्मानौ महाद्युती ।
नोचतुर्विवृतं किंचिन्न ह्येष तव निश्चयः ॥ १४
यच्चाप्यशक्यतां तेषामाहतुः पुरुषर्षभौ ।
तत्तथा पुरुषव्याघ्र तव तद्भद्रमस्तु ते ॥ १५
कथं हि पाण्डवः श्रीमान्सव्यसाची धनञ्जयः ।
शक्यो विजेतुं संग्रामे राजन्मघवतापि हि ॥ १६
'भीमसेनो महाबाहुर्नागायुतबलो महान् ।
राक्षसानां भयकरो बाहुशाली महाबलः ॥ १७
हिडिम्बो निहतो येन बाहुयुद्धेन भारत ।
यो रावणसमो युद्धे तथा च बकराक्षसः ॥ १८
स युध्यमानो राजेन्द्र भीमो भीमपराक्रमः ।'
कथं स युधि शक्येत विजेतुममरैरपि ॥ १९
तथैव कृतिनौ युद्धे यमौ यमसुताविव ।
कथं विजेतुं शक्यौ तौ रणे जीवितुमिच्छता ॥२०
यस्मिन्धृतिरनुक्रोशः क्षमा सत्यं पराक्रमः ।
नित्यानि पाण्डवे ज्येष्ठे स जीयेत रणे कथम् ॥२१
येषां पक्षधरो रामो येषां मन्त्री जनार्दनः ।
किं नु तैरजितं सङ्ख्ये येषां पक्षे च सात्यकिः ॥२२
द्रुपदः श्वशुरो येषां येषां स्यालाश्च पार्षताः ।
धृष्टद्युम्नमुखा वीरा भ्रातरो द्रुपदात्मजाः ॥ २३
'चैद्यश्च येषां भ्राता च शिशुपालो महारथः ।'
सोऽशक्यतां च विज्ञाय तेषामग्रे च भारत ।
दायाद्यतां च धर्मेण सम्यक्तेषु समाचर ॥ २४
इदं निर्दिष्टमयशः पुरोचनकृतं महत् ।

अनवरौ श्रेष्ठौ ॥६॥ अनयोः आभ्याम् ॥७॥ दायाद्यतां पितृधनभोजनार्हताम् ॥२४॥ चतुर्विंशत्यधिकद्विशततमोऽध्यायः२२४

तेषामनुग्रहेणाद्य राजन्प्रक्षालयात्मनः ॥ २५
तेषामनुग्रहश्चायं सर्वेषां चैव नः कुले ।
जीवितं च परं श्रेयः क्षत्रस्य च विवर्धनम् ॥२६
द्रुपदोऽपि महान्राजा कृतवैरश्च नः पुरा ।
तस्य संग्रहणं राजन्स्वपक्षस्य विवर्धनम् ॥ २७
बलवन्तश्च दाशार्हा बहवश्च विशांपते ।
यतः कृष्णस्ततः सर्वे यतः कृष्णस्ततो जयः॥२८
यच्च साम्नैव शक्येत कार्यं साधयितुं नृप ।
को दैवशप्तस्तत्कार्यं विग्रहेण समाचरेत् ॥ २९
श्रुत्वा च जीवतः पार्थान्पौरजानपदा जनाः ।
बलवद्दर्शने हृष्टास्तेषां राजन्प्रियं कुरु ॥ ३०
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
अधर्मयुक्ता दुष्प्रज्ञा बाला मैषां वचः कृथाः॥३१
उक्तमेतत्पुरा राजन्मया गुणवतस्तव ।
दुर्योधनापराधेन प्रजेयं वै विनङ्क्ष्यति ॥ ३२

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

## पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

धृतराष्ट्राज्ञया विदुरस्य द्रुपदनगरगमनम् ॥ १ ॥ तत्र श्रीकृष्णादीनां समीपे धृतराष्ट्रसन्देशकथनम् ॥ २ ॥

धृतराष्ट्र उवाच ।
भीष्मः शान्तनवो विद्वान्द्रोणश्च भगवानृषिः ।
'हितं च परमं सत्यमब्रूतां वाक्यमुत्तमम् ।'
हितं च परमं वाक्यं त्वं च सत्यं ब्रवीषि माम् १
यथैव पाण्डोस्ते वीराः कुन्तीपुत्रा महारथाः ।
तथैव धर्मतः सर्वे मम पुत्रा न संशयः ॥ २
यथैव मम पुत्राणामिदं राज्यं विधीयते ।
तथैव पाण्डुपुत्राणामिदं राज्यं न संशयः ॥ ३
क्षत्तरानय गच्छैतान्सह मात्रा सुसत्कृतान् ।
तया च देवरूपिण्या कृष्णया सह भारत ॥ ४
दिष्ट्या जीवन्ति ते पार्था दिष्ट्या जीवति सा पृथा ।
दिष्ट्या द्रुपदकन्यां च लब्धवन्तो महारथाः ॥५
दिष्ट्या वर्धामहे सर्वे दिष्ट्या शान्तः पुरोचनः ।
दिष्ट्या मम परं दुःखमपनीतं महाद्युते ॥ ६
'त्वमेव गत्वा विदुर तानिहानय मा चिरम् ।
वैशंपायन उवाच ।
एवमुक्तस्ततः क्षत्ता रथमारुह्य शीघ्रगम् ।
आगात्कतिपयाहोभिः पाञ्चालात्राजधर्मवित्'॥७
ततो जगाम विदुरो धृतराष्ट्रस्य शासनात् ।
सकाशं यज्ञसेनस्य पाण्डवानां च भारत ॥ ८
समुपादाय रत्नानि वसूनि विविधानि च ।
द्रौपद्याः पाण्डवानां च यज्ञसेनस्य चैव ह ॥ ९
तत्र गत्वा स धर्मज्ञः सर्वशास्त्रविशारदः ।
द्रुपदं न्यायतो राजन्संयुक्तमुपतस्थिवान् ॥ १०
स चापि प्रतिजग्राह धर्मेण विदुरं ततः ।
चक्रतुश्च यथान्यायं कुशलप्रश्नसंविदम् ॥ ११
ददर्श पाण्डवांस्तत्र वासुदेवं च भारत ।
स्नेहात्परिष्वज्य स तान्पप्रच्छानामयं ततः ॥ १२
तैश्चाप्यमितबुद्धिः स पूजितो हि यथाक्रमम् ।
वचनाद्धृतराष्ट्रस्य स्नेहयुक्तं पुनःपुनः ॥ १३
पप्रच्छानामयं राजंस्ततस्तान्पाण्डुनन्दनान् ।
प्रददौ चापि रत्नानि विविधानि वसूनि च ॥१४
पाण्डवानां च कुन्त्याश्च द्रौपद्याश्च विशांपते ।
द्रुपदस्य च पुत्राणां यथा दत्तानि कौरवैः ॥१५
प्रोवाच चामितमतिः प्रश्रितं विनयान्वितः ।
द्रुपदं पाण्डुपुत्राणां सन्निधौ केशवस्य च ॥ १६
विदुर उवाच ।
राजञ्छृणु सहामात्यः सपुत्रश्च वचो मम ।
धृतराष्ट्रः सपुत्रस्त्वां सहामात्यः सबान्धवः ॥१७
अब्रवीत्कुशलं राजन्प्रीयमाणः पुनःपुनः ।
प्रीतिमांस्ते दृढं चापि संबन्धेन नराधिप ॥ १८
तथा भीष्मः शान्तनवः कौरवैः सह सर्वशः ।
कुशलं त्वां महाप्राज्ञः सर्वतः परिपृच्छति ॥ १९
भारद्वाजो महाप्राज्ञो द्रोणः प्रियसखस्तव ।

समाश्लेपमुपेत्य त्वां कुशलं परिपृच्छति ॥ २०
धृतराष्ट्रश्च पाञ्चाल्य त्वया संबन्धमेयिवान् ।
कृतार्थं मन्यतेत्मानं तथा सर्वेऽपि कौरवाः॥२१
न तथा राज्यसंप्राप्तिस्तेषां प्रीतिकरी मता ।
यथा संबन्धकं प्राप्य यज्ञसेन त्वया सह ॥ २२
एतद्विदित्वा तु भवान्प्रस्थापयतु पाण्डवान् ।
द्रष्टुं हि पाण्डुपुत्रांश्च त्वरन्ति कुरवो भृशम्॥२३
विप्रोषिता दीर्घकालमेते चापि नरर्षभाः ।
उत्सुका नगरं द्रष्टुं भविष्यन्ति तथा पृथा॥ २४
कृष्णामपि च पाञ्चालीं सर्वाः कुरुवरस्त्रियः ।
द्रष्टुकामाः प्रतीक्षन्ते पुरं च विषयाश्च नः ॥ २५
स भवान्पाण्डुपुत्राणामाज्ञापयतु मा चिरम् ।
गमनं सहदाराणामेतदत्र मतं मम ॥ २६
निसृष्टेषु त्वया राजन्पाण्डवेषु महात्मसु ।
ततोऽहं प्रेषयिष्यामि धृतराष्ट्रस्य शीघ्रगान् ।
आगमिष्यन्ति कौन्तेयाः कुन्ती च सह कृष्णया ॥

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

## षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

पाण्डवानां हास्तिनपुरगमनंप्रति श्रीकृष्णद्रुपदयोरभ्यनुज्ञा ॥ १ ॥ पृथाविदुरसंवादः ॥ २ ॥ प्रस्थितानां पाण्डवानां द्रुपदेन पारिबर्हदानम् ॥ ३ ॥ प्रत्युद्गमनायागतैः कौरवैः सह पाण्डवानां भीष्मादिवन्दनपुरःसरं गृहप्रवेशः ॥ ४ ॥

द्रुपद उवाच ।
एवमेतन्महाप्राज्ञ यथात्थ विदुराद्य माम् ।
ममापि परमो हर्षः संबन्धेऽस्मिन्कृते प्रभो ॥ १
गमनं चापि युक्तं स्याद्दृढमेषां महात्मनाम् ।
न तु तावन्मया युक्तमेतद्वक्तुं स्वयं गिरा ॥ २
यदा तु मन्यते वीरः कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चैव यमौ च पुरुषर्षभौ ॥ ३
रामकृष्णौ च धर्मज्ञौ तदा गच्छन्तु पाण्डवाः ।
एतौ हि पुरुषव्याघ्रावेषां प्रियहिते रतौ ॥ ४
युधिष्ठिर उवाच ।
परवन्तो वयं राजंस्त्वयि सर्वे सहानुगाः ।
यथा वक्ष्यसि नः प्रीत्या तत्करिष्यामहे वयम् ५
वैशंपायन उवाच ।
ततोऽब्रवीद्वासुदेवो गमनं रोचते मम ।
यथा वा मन्यते राजा द्रुपदः सर्वधर्मवित् ॥ ६
द्रुपद उवाच ।
यथैव मन्यते वीरो दाशार्हः पुरुषोत्तमः ।
प्राप्तकालं महाबाहुः सा बुद्धिर्निश्चिता मम ॥७
यथैव हि महाभागाः कौन्तेया मम सांप्रतम् ।
तथैव वासुदेवस्य पाण्डुपुत्रा न संशयः ॥ ८
न तद्ध्यायति कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।
यथैषां पुरुषव्याघ्रः श्रेयो ध्यायति केशवः ॥ ९
वैशंपायन उवाच ।
'पृथायास्तु ततो वेश्म प्रविवेश महामतिः ।
पादौ स्पृष्ट्वा पृथायास्तु शिरसा च महीं गतः१०
दृष्ट्वा तु देवरं कुन्ती शुशोच च मुहुर्मुहुः ।
कुन्त्युवाच ।
वैचित्रवीर्य ते पुत्राः कथंचिज्जीवितास्त्वया॥ ११
त्वत्प्रसादाज्जतुगृहे मृताः प्रत्यागतास्तथा ।
कूर्मी चिन्तयते पुत्रान्यत्र वा तत्र संमता ॥ १२
चिन्तया वर्धिताः पुत्रा यथा कुशलिनस्तथा ।
तव पुत्रास्तु जीवन्ति त्वद्भक्त्या भरतर्षभ ॥ १३
यथा परभृतः पुत्रानरिष्टा वर्धयेत्सदा ।
तथैव पुत्रास्तु मम त्वया तात सुरक्षिताः ॥ १४
क्लेशास्तु बहवः प्राप्तास्तथा प्राणान्तिका मया ।
अतः परं न जानामि कर्तव्यं ज्ञातुमर्हसि ॥ १५
विदुर उवाच ।
न विनश्यन्ति लोकेषु तव पुत्रा महाबलाः ।
अचिरेणैव कालेन स्वराज्यस्था भवन्ति ते ॥ १६
बान्धवैः सहिताः सर्वे न शोकं कुरु माधवि ।
वैशंपायन उवाच ।'
ततस्ते समनुज्ञाता द्रुपदेन महात्मना ॥ १७

पाण्डवाश्चैव कृष्णश्च विदुरश्च महामतिः ।
आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम् १८
सविहारं सुखं जग्मुर्नगरं नागसाह्वयम् ।
'सुवर्णकक्ष्याग्रैवेयान्सुवर्णाङ्कुशभूषितान् ॥ १९
जाम्बूनदपरिष्कारान्प्रभिन्नकरटामुखान् ।
अधिष्ठितान्महामात्रैः सर्वशस्त्रसमन्वितान् ॥ २०
सहस्रं प्रददौ राजा गजानां वरवर्मिणाम् ।
रथानां च सहस्रं वै सुवर्णमणिचित्रितम् ॥ २१
चतुर्युजां भानुमच्च पञ्चानां प्रददौ तदा ।
सुवर्णपरिबर्हाणां वरचामरमालिनाम् ॥ २२
जात्यश्वानां च पञ्चाशत्सहस्रं प्रददौ नृपः ।
दासीनामयुतं राजा प्रददौ वरभूषणम् ।
ततः सहस्रं दासानां प्रददौ वरधन्वनाम् ॥ २३
हैमानि शय्यासनभाजनानि
द्रव्याणि चान्यानि च गोधनानि ।
पृथक्पृथक्चैव ददौ स कोटिं
पाञ्चालराजः परमप्रहृष्टः ॥ २४
शिबिकानां शतं पूर्णं वाहान्पञ्चशतं नरान् ॥२५
एवमेतानि पाञ्चालो जन्यार्थे प्रददौ धनम् ।
हरणं चापि पाञ्चाल्या ज्ञातिदेयं च सोमकः २६
धृष्टद्युम्नो ययौ तत्र भगिनीं गृह्य भारत ।
नानद्यमानो बहुशस्तूर्यघोषैः सहस्रशः ॥' २७
श्रुत्वा चोपस्थितान्वीरान्धृतराष्ट्रोऽम्बिकासुतः ।
प्रतिग्रहाय पाण्डूनां प्रेषयामास कौरवान् ॥ २८
विकर्णं च महेष्वासं चित्रसेनं च भारत ।
द्रोणं च परमेष्वासं गौतमं कृपमेव च ॥ २९
तैस्तैः परिवृताः शूरैः शोभमाना महारथाः ।
नगरं हास्तिनपुरं शनैः प्रविविशुस्तदा ॥ ३०
'पाण्डवानागताञ्छ्रुत्वा नागरास्तु कुतूहलात् ।
मण्डयांचक्रिरे तत्र नगरं नागसाह्वयम् ॥ ३१
मुक्तपुष्पावकीर्णं तु जलसिक्तं तु सर्वतः ।
धूपितं दिव्यधूपेन मङ्गलैश्चाभिसंवृतम् ॥ ३२
पताकोच्छ्रितमाल्यं च पुरमप्रतिमं बभौ ।
शङ्खभेरीनिनादैश्च नानावादित्रनिस्वनैः ॥' ३३
कौतूहलेन नगरं पूर्यमाणमिवाभवत् ।
यत्र ते पुरुषव्याघ्राः शोकदुःखसमन्विताः ॥ ३४
'निर्गताश्च पुरात्पूर्वं धृतराष्ट्रप्रबाधिताः ।
पुनर्निवृत्ता दिष्ट्या वै सह मात्रा परन्तपाः ॥३५
इत्येवमीरिता वाचो जनैः प्रियचिकीर्षुभिः ।'
तत उच्चावचा वाचः प्रियाः सर्वत्र भारत ॥ ३६
उदीरितास्तदाऽशृण्वन्पाण्डवा हृदयंगमाः ।
पौरा ऊचुः
अयं स पुरुषव्याघ्रः पुनरायाति धर्मवित् ॥ ३७
यो नः स्वानिव दायादान्धर्मेण परिरक्षति ।
अद्य पाण्डुर्महाराजो वनादिव मनःप्रियम् ॥ ३८
आगतश्चैवमस्माकं चिकीर्षन्नात्र संशयः ।
किं न्वद्य सुकृतं कर्म सर्वेषां नः प्रियं परम् ॥ ३९
यन्नः कुन्तीसुता वीरा भर्तारः पुनरागताः ।
यदि दत्तं यदि हुतं यदि वाप्यस्ति नस्तपः ।
तेन तिष्ठन्तु नगरे पाण्डवाः शरदां शतम् ॥ ४०
ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः ।
अन्येषां च तदर्हाणां चक्रुः पादाभिवन्दनम् ॥ ४१
पृष्टास्तु कुशलप्रश्नं सर्वेण नगरेण ते ।
समाविशन्त वेश्मानि धृतराष्ट्रस्य शासनात् ॥ ४२

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

---

## सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

द्रौपद्या नमस्कृतया गान्धार्या तद्रूपदर्शनेन तस्याः स्वपुत्रमृत्युत्ववितर्कः ॥ १ ॥ धृतराष्ट्रेण युधिष्ठिरस्य अर्धराज्येऽभिषेकः ॥ २ ॥ पाण्डवानां खाण्डवप्रस्थगमनम् ॥ ३ ॥ श्रीकृष्णचिन्तितेनेन्द्रेण विश्वकर्मणः प्रेषणम् ॥ ४ ॥ विश्वकर्मणा इन्द्रप्रस्थपुरनिर्माणम् ॥ ५ ॥ तत्रागतानां सर्वेषां विसर्जनम् ॥ ६ ॥

'वैशंपायन उवाच ।
दुर्योधनस्य महिषी काशिराजसुता तदा ।
धृतराष्ट्रस्य पुत्राणां वधूभिः सहिता तदा ॥ १
पाञ्चालीं प्रतिजग्राह साध्वीं श्रियमिवापराम् ।

पूजयामास पूजार्हां शचीदेवीमिवागताम् ॥ २
ववन्दे तत्र गान्धारीं कृष्णया सह माधवी ।
आशिषश्च प्रयुक्त्वा तु पाञ्चालीं परिषस्वजे ॥ ३
परिष्वज्यैव गान्धारी कृष्णां कमललोचनाम् ।
पुत्राणां मम पाञ्चाली मृत्युरेवेत्यमन्यत ॥ ४
संचिन्त्य विदुरं प्राह युक्तितः सुबलात्मजा ।
कुन्तीं राजसुतां क्षत्तः सवधूं सपरिच्छदाम् ॥५
पाण्डोर्निवेशनं शीघ्रं नीयतां यदि रोचते ।
करणेन मुहूर्तेन नक्षत्रेण शुभे तिथौ ॥ ६
यथा सुखं तथा कुन्ती रंस्यते स्वगृहे सुतैः ।
तथेत्येव तदा क्षत्ता कारयामास तत्तथा ॥ ७
पूजयामासुरत्यर्थं बान्धवाः पाण्डवांस्तदा ।
नागराः श्रेणिमुख्याश्च पूजयन्ति स्म पाण्डवान् ८
भीष्मो द्रोणः कृपः कर्णो बाह्लीकः ससुतस्तदा ।
शासनाद्धृतराष्ट्रस्य अकुर्वन्नतिथिक्रियाम् ॥ ९
एवं विहरतां तेषां पाण्डवानां महात्मनाम् ।
नेता सर्वस्य कार्यस्य विदुरो राजशासनात् ॥'१०
विश्रान्तास्ते महात्मानः कंचित्कालं सकेशवाः ।
आहूता धृतराष्ट्रेण राज्ञा शान्तनवेन च ॥ ११

धृतराष्ट्र उवाच ।

भ्रातृभिः सह कौन्तेय निबोधेदं वचो मम ।
'पाण्डुना वर्धितं राज्यं पाण्डुना पालितं जगत् १२
शासनान्मम कौन्तेय मम भ्राता महाबलः ।
कृतवान्दुष्करं कर्म नित्यमेव विशांपते ॥ १३
तस्मात्त्वमपि कौन्तेय शासनं कुरु मा चिरम् ।
मम पुत्रा दुरात्मानः सर्वेऽहंकारसंयुताः ॥ १४
शासनं न करिष्यन्ति मम नित्यं युधिष्ठिर ।
स्वकार्यनिरतैर्नित्यमवलिप्तैर्दुरात्मभिः ॥' १५
पुनर्वै विग्रहो मा भूत्खाण्डवप्रस्थमाविश ।
न हि वो वसतस्तत्र कश्चिच्छक्तः प्रबाधितुम् ॥ १६
संरक्ष्यमाणान्पार्थेन त्रिदशानिव वज्रिणा ।
अर्धराज्यं तु संप्राप्य खाण्डवप्रस्थमाविश ॥ १७
'केशवो यदि मन्येत तत्कर्तव्यमसंशयम् ॥' १८

वैशंपायन उवाच ।

प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च ।
'वासुदेवेन संमन्त्र्य पाण्डवाः समुपाविशन् ॥ १९

धृतराष्ट्र उवाच ।

अभिषेकस्य संभारान्क्षत्तरानय मा चिरम् ।
अभिषिक्तं करिष्यामि ह्यद्य वै कुरुनन्दनम् ॥ २०
ब्राह्मणा नैगमश्रेष्ठाः श्रेणीमुख्याश्च सर्वतः ।
आहूयन्तां प्रकृतयो बान्धवाश्च विशेषतः ॥ २१
पुण्याहं वाच्यतां तात गोसहस्रं प्रदीयताम् ।
ग्राममुख्याश्च विप्रेभ्यो दीयन्तां बहुदक्षिणाः२२
अङ्गदे मकुटं क्षत्तर्हस्ताभरणमानय ।
मुक्तावलीश्च हारं च निष्काणि कटकानि च २३
कटिबन्धश्च सूत्रं च तथोदरनिबन्धनम् ।
अष्टोत्तरसहस्रं तु ब्राह्मणाधिष्ठिता गजाः ॥ २४
जाह्नवीसलिलं शीघ्रमानीयन्तां पुरोहितैः ।
अभिषेकोदकक्लिन्नं सर्वाभरणभूषितम् ॥ २५
औपवाह्योपरिगतं दिव्यचामरवीजितम् ।
सुवर्णमणिचित्रेण श्वेतच्छत्रेण शोभितम् ॥ २६
जयेति द्विजवाक्येन स्तूयमानं नृपैस्तथा ।
दृष्ट्वा कुन्तीसुतं ज्येष्ठमाजमीढं युधिष्ठिरम् ॥ २७
प्रीताः प्रीतेन मनसा प्रशंसन्तु परे जनाः ।
पाण्डोः कृतोपकारस्य राज्यं दत्वा ममैव च ॥२८
प्रतिक्रिया कृतमिदं भविष्यति न संशयः ।
भीष्मो द्रोणः कृपः क्षत्ता साधुसाध्वित्यथाब्रुवन्

श्रीवासुदेव उवाच ।

युक्तमेतन्महाभाग कौरवाणां यशस्करम् ।
शीघ्रमद्यैव राजेन्द्र त्वयोक्तं कर्तुमर्हसि ॥ ३०
इत्येवमुक्तो वार्ष्णेयस्त्वरयामास तत्तदा ।
तथोक्तं धृतराष्ट्रेण कारयामास केशवः ॥ ३१
तस्मिन्क्षणे महाराज कृष्णद्वैपायनस्तदा ।
आगत्य कुरुभिः सर्वैः पूजितः ससुहृद्गणैः ॥ ३२
मूर्धाभिषिक्तैः सहितो ब्राह्मणैर्वेदपारगैः ।
कारयामास विधिवत्केशवानुमते तदा ॥ ३३
कृपो द्रोणश्च भीष्मश्च धौम्यश्च व्यासकेशवौ ।
बाह्लीकः सोमदत्तश्च चातुर्वेद्यपुरस्कृताः ॥ ३४
अभिषेकं तदा चक्रुर्भद्रपीठे सुसंस्कृतम् ॥ ३५

व्यास उवाच ।
जित्वा तु पृथिवीं कृत्स्नां वशे कृत्वा नृपान्भवान् ।
राजसूयादिभिर्यज्ञैः क्रतुभिर्वरदक्षिणैः ॥ ३६
स्नात्वा ह्यवभृथस्नानं मोदतां बान्धवैः सह ।
एवमुक्त्वा तु ते सर्वे आशीर्भिरभिपूजयन् ॥ ३७
मूर्धाभिषिक्तः कौरव्यः सर्वाभरणभूषितः ।
जयेति संस्तुतो राजा प्रददौ धनमक्षयम् ॥ ३८
सर्वमूर्धाभिषिक्तैश्च पूजितः कुरुनन्दनः ।
औपवाह्यमथारुह्य श्वेतच्छत्रेण शोभितः ॥ ३९
रराज रत्नाभिमतो महेन्द्र इव दैवतैः ।
ततः प्रदक्षिणीकृत्य नगरं नागसाह्वयम् ॥ ४०
प्रविवेश तदा राजा नागरैः पूजितो गृहम् ।
मूर्धाभिषिक्तं कौन्तेयमभ्यगच्छन्त कौरवाः ॥ ४१
गान्धारिपुत्राः शोचन्तः सर्वे ते सह बान्धवैः ।
ज्ञात्वा शोकं च पुत्राणां धृतराष्ट्रोऽब्रवीदिदं ४२
समक्षं वासुदेवस्य कुरूणां च समक्षतः ।
अभिषेकस्त्वया प्राप्तो दुष्प्रापो ह्यकृतात्मभिः ४३
गच्छ त्वमद्यैव नृप कृतकृत्योऽसि कौरव ।
आयुः पुरूरवा राजन्नहुषेण ययातिना ॥ ४४
तत्रैव निवसन्ति स्म खाण्डवे तु नृपोत्तम ।
राजधानी तु सर्वेषां पौरवाणां महाभुज ॥ ४५
विनाशितं मुनिगणैर्लोभाद्बुधसुतस्य वै ।
तस्मात्त्वं खाण्डवप्रस्थं पुरं राष्ट्रं च वर्धय ॥ ४६
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।
त्वद्भक्त्या जन्तवश्चान्ये भजन्त्येव पुरं शुभम् ४७
पुरं राष्ट्रं समृद्धं वै धनधान्यसमाकुलम् ।
तस्माद्गच्छस्व कौन्तेय भ्रातृभिः सहितोऽनघ ॥ ४८
वैशंपायन उवाच ।
प्रतिगृह्य तु तद्वाक्यं तस्मै सर्वे प्रणम्य च ।
रथैर्नागैर्हयैश्चापि सहितास्तु पदातिभिः ॥ ४९
प्रतस्थिरे ततो घोषसंयुक्तैः स्यन्दनैर्वरैः ।
तान्दृष्ट्वा नागराः सर्वे भक्त्या चैव प्रतस्थिरे ॥ ५०
गच्छतः पाण्डवैः सार्धं दृष्ट्वा नागपुरालयात् ।
पाण्डवैः सहिता गन्तुं नार्हतेति च नागरान् ॥ ५१
घोषयामास नगरे धार्तराष्ट्रः ससौबलः ।'
ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः ॥ ५२
मण्डयाञ्चक्रिरे तद्वै पुरं स्वर्गादिव च्युतम् ।
'वासुदेवो जगन्नाथश्चिन्तयामास वासवम् ॥ ५३
महेन्द्रश्चिन्तितो राजन्विश्वकर्माणमादिशत् ।
विश्वकर्मन्महाप्राज्ञ अद्यप्रभृति तत्पुरम् ॥ ५४
इन्द्रप्रस्थमिति ख्यातं दिव्यं भूम्यां भविष्यति ।
महेन्द्रशासनाद्गत्वा विश्वकर्मा तु केशवम् ॥ ५५
प्रणम्य प्रणिपातार्हं किं करोमीत्यभाषत ।
वासुदेवस्तु तच्छ्रुत्वा विश्वकर्माणमूचिवान् ॥ ५६
कुरुष्व कुरुराजस्य महेन्द्रपुरसन्निभम् ।
इन्द्रेण कृतनामानमिन्द्रप्रस्थं महापुरम् ॥ ५७
वैशंपायन उवाच ।'
ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः ।
स्वस्तिवाच्य यथान्यायमिन्द्रप्रस्थं भवत्विति ॥ ५८
तत्पुरं मापयामासुर्द्वैपायनपुरोगमाः ।
'ततः स विश्वकर्मा तु चकार पुरमुत्तमम् ॥' ५९
सागरप्रतिरूपाभिः परिखाभिरलङ्कृतम् ।
प्राकारेण च संपन्नं दिवमावृत्य तिष्ठता ॥ ६०
पाण्डुराभ्रप्रकाशेन हिमरश्मिनिभेन च ।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ॥ ६१
द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितम् ।
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः ॥ ६२
विविधैरपि निर्विद्धैः शस्त्रोपेतैः सुसंवृतैः ।
शक्तिभिश्चावृतं तद्धि द्विजिह्वैरिव पन्नगैः ॥ ६३
तल्पैश्चाभ्यासिकैर्युक्तं शुशुभे योधरक्षितम् ।
तीक्ष्णाङ्कुशशतघ्नीभिर्यन्त्रजालैश्च शोभितम् ॥ ६४
आयसैश्च महाचक्रैः शुशुभे तत्पुरोत्तमम् ।
सुविभक्तमहारथ्यं देवतावाधवर्जितम् ॥ ६५
विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः ।
तत्त्रिविष्टपसंकाशमिन्द्रप्रस्थं व्यरोचत ॥ ६६
मेघवृन्दमिवाकाशे विद्धं विद्युत्समावृतम् ।
तत्र रम्ये शिवे देशे कौरव्यस्य निवेशनम् ॥ ६७
शुशुभे धनसंपूर्णं धनाध्यक्षक्षयोपमम् ।

तत्रागच्छन्द्विजा राजन्सर्ववेदविदां वराः ॥ ६८
निवासं रोचयन्ति स्म सर्वभाषाविदस्तथा ।
वणिजश्चाययुस्तत्र नानादिग्भ्यो धनार्थिनः ॥६९
सर्वशिल्पविदस्तत्र वासायाभ्यागमंस्तदा ।
उद्यानानि च रम्याणि नगरस्य समन्ततः ॥ ७०
आम्रैराम्रातकैर्नीपैरशोकैश्चम्पकैस्तथा ।
पुन्नागैर्नागपुष्पैश्च लकुचैः पनसैस्तथा ॥ ७१
शालतालतमालैश्च बकुलैश्च सकेतकैः ।
मनोहरैः सुपुष्पैश्च फलभारावनामितैः ॥ ७२
प्राचीनामलकैर्लोध्रैरङ्कोलैश्च सुपुष्पितैः ।
जम्बूभिः पाटलाभिश्च कुब्जकैरतिमुक्तकैः ॥ ७३
करवीरैः पारिजातैरन्यैश्च विविधैर्द्रुमैः ।
नित्यपुष्पफलोपेतैर्नानाद्विजगणायुतैः ॥ ७४
मत्तबर्हिणसंघुष्टकोकिलैश्च सदामदैः ।
गृहैरादर्शविमलैर्विविधैश्च लतागृहैः ॥ ७५
मनोहरैश्चित्रगृहैस्तथाऽजगतिपर्वतैः ।
वापीभिर्विविधाभिश्च पूर्णाभिः परमाम्भसा ॥७६
सरोभिरतिरम्यैश्च पद्मोत्पलसुगन्धिभिः ।
हंसकारण्डवयुतैश्चक्रवाकोपशोभितैः ॥ ७७
रम्याश्च विविधास्तत्र पुष्करिण्यो वनावृताः ।
तडागानि च रम्याणि बृहन्ति सुबहूनि च ॥७८
'नदी च नन्दिनी नाम सा पुरीमुपगूहति ।
चातुर्वर्ण्यसमाकीर्णमन्यैः शिल्पिभिरावृतम् ॥७९
सर्वदाभिसृतं सद्भिः कारितं विश्वकर्मणा ।
उपभोगसमृद्धैश्च सर्वद्रव्यसमावृतम् ॥ ८०
नित्यमार्यजनोपेतं नरनारीगणैर्युतम् ।
वाजिवारणसंपूर्णं गोभिरुष्ट्रैः खरैरजैः ॥ ८१
तत्रिविष्टपसङ्काशमिन्द्रप्रस्थं व्यरोचत ।
पुरीं सर्वगुणोपेतां निर्मितां विश्वकर्मणा ॥ ८२
पौरवाणामधिपतिः कुन्तीपुत्रो युधिष्ठिरः ।
कृतमङ्गलसत्कारैर्ब्राह्मणैर्वेदपारगैः ॥ ८३
द्वैपायनं पुरस्कृत्य धौम्यस्याभिमते स्थितः ।
भ्रातृभिः सहितो राजा राजमार्गमतीत्य च ॥ ८४
औपवाह्यगतो राजा केशवेन सहाभिभूः ।
तोरणद्वारसुमुखं द्वात्रिंशद्द्वारसंयुतम् ॥ ८५
वर्धमानपुरद्वारात्प्रविवेश महाद्युतिः ।
शङ्खदुन्दुभिनिर्घोषाः श्रूयन्ते बहवो भृशम् ॥८६
जयेति ब्राह्मणगिरः श्रूयन्ते च सहस्रशः ।
संस्तूयमानो मुनिभिः सूतमागधवन्दिभिः ॥८७
औपवाह्यगतो राजा राजमार्गमतीत्य च ।
कृतमङ्गलसत्कारं प्रविवेश गृहोत्तमम् ॥ ८८
प्रविश्य भवनं राजा नागरैरभिसंवृतः ।
प्रहृष्टमुदितैरासीत्सत्कारैरभिपूजितः ॥ ८९
पूजयामास विप्रेन्द्रान्केशवेन महात्मना ।
ततस्तु राष्ट्रं नगरं नरनारीगणायुतम् ॥ ९०
गोधनैश्च समाकीर्णं सस्यैर्वृद्धिं तदागमत् ॥' ९१
तेषां पुण्यजनोपेतं राष्ट्रमाविशतां महत् ।
पाण्डवानां महाराज शश्वत्प्रीतिरवर्धत ॥ ९२
'सौबलेन च कर्णेन धार्तराष्ट्रैः कृपेण च ।'
तथा भीष्मेण राज्ञा च धर्मप्रणयिना सदा ॥९३
पाण्डवाः समपद्यन्त खाण्डवप्रस्थवासिनः ।
पञ्चभिस्तैर्महेष्वासैरिन्द्रकल्पैः समावृतम् ॥ ९४
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ।
'ततस्तु विश्वकर्माणं पूजयित्वा विसृज्य च ॥९५
द्वैपायनं च संपूज्य विसृज्य च नराधिपः ।
वार्ष्णेयमब्रवीद्राजा गन्तुकामं कृतक्षणम् ॥ ९६
तव प्रसादाद्वार्ष्णेय राज्यं प्राप्तं मयाऽनघ ।
प्रसादादेव ते वीर शून्यं राष्ट्रं सुदुर्गमम् ॥ ९७
तवैव तु प्रसादेन राज्यस्थाश्च भवामहे ।
गतिस्त्वमापत्कालेऽपि पाण्डवानां च माधव ९८
ज्ञात्वा तु कृत्यं कर्तव्यं कारयस्व भवान्हि नः ।
यदिष्टमनुमन्तव्यं पाण्डवानां त्वयाऽनघ ॥ ९९
श्रीवासुदेव उवाच ।
त्वत्प्रभावान्महाराज्यं संप्राप्तं हि स्वधर्मतः ।
पितृपैतामहं राज्यं कथं न स्यात्तव प्रभो ॥१००
धार्तराष्ट्रा दुराचाराः किं करिष्यन्ति पाण्डवान् ।

अजगतिपर्वतैर्नृपलीलायात्रार्थैः कृत्रिमैः पर्वतैः ॥ ७६ ॥

सप्तविंशाधिकद्विशततमोऽध्यायः ॥ २२७ ॥

यथेष्टं पालय जगच्छश्वद्धर्मधुरं वह ॥ १०१
पुनः पुनश्च संहर्षाद्ब्राह्मणान्भर पौरव ।
अद्यैव नारदः श्रीमानागमिष्यति सत्वरः ॥१०२
आदत्स्व तस्य वाक्यानि शासनं कुरु तस्य वै ।
एवमुक्त्वा ततः कुन्तीमभिवाद्य जनार्दनः १०३
उवाच श्लक्ष्णया वाचा गमिष्यामि नमोस्तु ते ।
कुन्त्युवाच ।
जातुषं गृहमासाद्य मया प्राप्तं यदानघ ॥ १०४
आर्येण समभिज्ञातं त्वया वै यदुपुङ्गव ।
त्वया नाथेन गोविन्द दुःखं तीर्णं महत्तरम् १०५
त्वं हि नाथस्त्वनाथानां दरिद्राणां विशेषतः ।
सर्वदुःखानि शाम्यन्ति तव संदर्शनान्मम १०६
स्मरस्वैनान्महाप्राज्ञ तेन जीवन्ति पाण्डवाः १०७
वैशंपायन उवाच ।
करिष्यामीति चामन्त्र्य अभिवाद्य पितृष्वसाम् ।
गमनाय मतिं चक्रे वासुदेवः सहानुगः ॥'१०८
तान्निवेश्य ततो वीरः सह रामेण कौरवान् ।
ययौ द्वारवतीं राजन्पाण्डवानुमते तदा ॥ १०९

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

## अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

पाण्डवानां समीपे नारदागमनम् ॥ १ ॥

जनमेजय उवाच ।
एवं संप्राप्य राज्यं तदिन्द्रप्रस्थे तपोधन ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ १
सर्व एव महात्मानः सर्वे मम पितामहाः ।
द्रौपदी धर्मपत्नी च कथं तानन्ववर्तत ॥ २
कथमासुश्च कृष्णायामेकस्यां ते नरर्षभाः ।
वर्तमाना महाभागा नाभिद्यन्त परस्परम् ॥ ३
श्रोतुमिच्छाम्यहं तत्र विस्तरेण यथातथम् ।
तेषां चेष्टितमन्योन्यं युक्तानां कृष्णया सह ॥ ४
वैशंपायन उवाच ।
धृतराष्ट्राभ्यनुज्ञाता इन्द्रप्रस्थं प्रविश्य तत् ।
रेमिरे पुरुषव्याघ्राः कृष्णया सह पाण्डवाः ॥ ५
प्राप्य राज्यं महातेजाः सत्यसन्धो युधिष्ठिरः ।
पालयामास धर्मेण पृथिवीं भ्रातृभिः सह ॥ ६
जितारयो महात्मानः सत्यधर्मपरायणाः ।
एवं पुरमिदं प्राप्य तत्रोषुः पाण्डुनन्दनाः ॥ ७
कुर्वाणाः पौरकार्याणि सर्वाणि भरतर्षभाः ।
आसांचक्रुर्महार्हेषु पार्थिवेष्वासनेषु च ॥ ८
तेषु तत्रोपविष्टेषु पाण्डवेषु महात्मसु ।
आययौ धर्मराजं तु द्रष्टुकामोऽथ नारदः ॥ ९
'पथा नक्षत्रजुष्टेन सुपर्णाचरितेन च ।
चन्द्रसूर्यप्रकाशेन सेवितेन महर्षिभिः ॥ १०
नभस्स्थलेन दिव्येन दुर्लभेनातपस्विनाम् ।
भूतार्चितो भूतधरां राष्ट्रमन्दिरभूषिताम् ॥ ११
अवेक्षमाणो द्युतिमानाजगाम महातपाः ।
सर्ववेदान्तगो विप्रः सर्ववेदाङ्गपारगः ॥ १२
परेण तपसा युक्तो ब्राह्मेण तपसा वृतः ।
नये नीतौ च निरतो विश्रुतश्च महामुनिः ॥१३
परात्परतरं प्राप्तो धर्मान्समभिजग्मिवान् ।
भावितात्मा गतरजाः शान्तो मृदुरृजुर्द्विजः॥१४
धर्मेणाधिगतः सर्वैर्देवदानवमानुषैः ।
क्षीणकर्मसु पापेषु भूतेषु विविधेषु च ॥ १५
सर्वथा कृतमर्यादो वेदेषु विविधेषु च ।
शतशः सोमपा यज्ञे पुण्ये पुण्यकृदग्निचित् ॥१६
ऋक्सामयजुषां वेत्ता न्यायदृग्धर्मकोविदः ।
ऋजुरारोहवान्वृद्धो भूयिष्ठपथिकोऽनघः ॥ १७
श्लक्ष्णया शिखयोपेतः संपन्नः परमत्विषा ।
अवदाते च सूक्ष्मे च दिव्ये च रचिते शुभे ॥१८
महेन्द्रदत्ते महती बिभ्रत्परमवाससी ।
जाम्बूनदमये दिव्ये गण्डूपदमुखे नवे ॥ १९
अभ्यर्कसदृशे दिव्ये धारयन्कुण्डले शुभे ।
राजतच्छत्रमुच्छ्रित्य चित्रं परमवर्चसम् ॥ २०

प्राप्य दुष्प्रापमन्येन ब्रह्मवर्चसमुत्तमम् ।
भवने भूमिपालस्य बृहस्पतिरिवाप्लुतः ॥ २१
संहितायां च सर्वेषां स्थितस्योपस्थितस्य च ।
द्विपदस्य च धर्मस्य क्रमधर्मस्य पारगः ॥ २२
गाथा सामानुसामज्ञः साम्नां परमवल्गुनाम् ।
आत्मनः सर्वमोक्षिभ्यः कृतिमान्कृत्यवित्सदा २३
यजुर्धर्मैर्बहुविधैर्मतो मतिमतां वरः ।
विदितार्थः समश्चैव च्छेत्ता निगमसंशयान् ॥२४
अर्थनिर्वचने नित्यं संशयच्छिदसंशयः ।
प्रकृत्या धर्मकुशलो दाता धर्मविशारदः ॥ २५
लोपेनागमधर्मेण संक्रमेण च वृत्तिषु ।
एकशब्दांश्च नानार्थानेकार्थांश्च पृथक्कृतान् ॥२६
पृथगर्थाभिधानांश्च प्रयोगानन्ववेक्षिता ।
प्रमाणभूतो लोकेषु सर्वाधिकरणेषु च ॥ २७
सर्ववर्णविकारेषु नित्यं कुशलपूजितः ।
स्वरेऽस्वरे च विविधे वृत्तेषु विविधेषु च ॥ २८
समस्थानेषु सर्वेषु समाम्नायेषु धातुषु ।
उद्देश्यानां समाख्याता सर्वमाख्यातमुद्दिशन् २९
अभिसन्धिषु तत्त्वज्ञः पदान्यङ्गान्यनुस्मरन् ।
कालधर्मेण निर्दिष्टं यथार्थं च विचारयन् ॥ ३०
चिकीर्षितं च यो वेत्ता यथा लोकेन संवृतम् ।
विभाषितं च समयं भाषितं हृदयंगमम् ॥ ३१
आत्मने च परस्मै च स्वरसंस्कारयोगवित् ।
एषां स्वराणां ज्ञाता च बोद्धा प्रवचनः स्वराट् ३२
विज्ञाता चोक्तवाक्यानामेकतां बहुतां तथा ।
बोद्धा हि परमार्थांश्च विविधांश्च व्यतिक्रमान्॥३३
अभेदतश्च बहुशो बहुशश्चापि भेदतः ।
वक्ता विविधवाक्यानां नानादेशसमीक्षिता ॥३४
पश्चागमांश्च विविधानादेशांश्च समीक्षिता ।
नानार्थकुशलस्तत्र तद्धितेषु च कृत्स्नशः ॥ ३५
परिभूषयिता वाचां वर्णतः स्वरतोऽर्थतः ।
प्रत्ययं च समाख्याता नियतं प्रतिधातुकम्॥३६
पश्च चाक्षरजातानि स्वरसंज्ञानि यानि च ।
तमागतमृषिं दृष्ट्वा प्रत्युद्गम्याभिवाद्य च ॥' ३७
आसनं रुचिरं तस्मै प्रददौ स युधिष्ठिरः ।
'कृष्णाजिनोत्तरे तस्मिन्नुपविष्टो महानृषिः ॥'३८
देवर्षेरुपविष्टस्य स्वयमर्घ्यं यथाविधि ।
प्रादाद्युधिष्ठिरो धीमान्राज्यं तस्मै न्यवेदयत् ।
प्रतिगृह्य तु तां पूजामृषिः प्रीतमनास्तदा ॥ ३९
आशीर्भिर्वर्धयित्वा च तमुवाचास्यतामिति ।
निषसादाभ्यनुज्ञातस्ततो राजा युधिष्ठिरः ॥ ४०
प्रेषयामास कृष्णायै भगवन्तमुपस्थितम् ।
श्रुत्वैतद्द्रौपदी चापि शुचिर्भूत्वा समाहिता ॥४१
जगाम तत्र यत्रास्ते नारदः पाण्डवैः सह ।
तस्याभिवाद्य चरणौ देवर्षेर्धर्मचारिणी ॥ ४२
कृताञ्जलिः सुसंवीता स्थिताऽथ द्रुपदात्मजा ।
तस्याश्चापि स धर्मात्मा सत्यवागृषिसत्तमः ॥४३
आशिषो विविधाः प्रोच्य राजपुत्र्यास्तु नारदः।
गम्यतामिति होवाच भगवांस्तामनिन्दिताम् ४४
गतायामथ कृष्णायां युधिष्ठिरपुरोगमान् ।
विविक्ते पाण्डवान्सर्वानुवाच भगवानृषिः ॥ ४५
पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी ।
यथा वो नात्र भेदः स्यात्तथा नीतिर्विधीयताम्॥४६
सुन्दोपसुन्दौ हि पुरा भ्रातरौ सहितावुभौ ।
आस्तामवध्यावन्येषां त्रिषु लोकेषु विश्रुतौ ॥ ४७
एकराज्यावेकगृहावेकशय्यासनाशनौ ।
तिलोत्तमायास्तौ हेतोरन्योन्यमभिजघ्नतुः ॥ ४८
रक्ष्यतां सौहृदं तस्मादन्योन्यप्रीतिभावकम् ।
यथा वो नात्र भेदः स्यात्तत्कुरुष्व युधिष्ठिर ॥ ४९
युधिष्ठिर उवाच ।
सुन्दोपसुन्दावसुरौ कस्य पुत्रौ महामुने ।
उत्पन्नश्च कथं भेदः कथं चान्योन्यमघ्नताम् ॥५०
अप्सरा देवकन्या वै कस्य चैषा तिलोत्तमा ।
यस्याः कामेन संमत्तौ जघ्नतुस्तौ परस्परम् ॥ ५१
एतत्सर्वं यथा वृत्तं विस्तरेण तपोधन ।
श्रोतुमिच्छामहे ब्रह्मन्परं कौतूहलं हि मे ॥ ५२

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

## एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

सुन्दोपसुन्दकथा—सुन्दोपसुन्दयोर्ब्रह्मणो वरलाभः ॥ १ ॥

नारद उवाच ।
शृणु मे विस्तरेणेममितिहासं पुरातनम् ।
भ्रातृभिः सहितः पार्थ यथा वृत्तं युधिष्ठिर ॥ १
महासुरस्यान्ववाये हिरण्यकशिपोः पुरा ।
निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत् ॥ २
तस्य पुत्रौ महावीर्यौ जातौ भीमपराक्रमौ ।
सुन्दोपसुन्दौ दैत्येन्द्रौ दारुणौ क्रूरमानसौ ॥ ३
तावेकनिश्चयौ दैत्यावेककार्यार्थसंमतौ ।
निरन्तरमवर्तेतां समदुःखसुखावुभौ ॥ ४
विनाऽन्योन्यं न भुञ्जाते विनाऽन्योन्यं न जल्पतः ।
अन्योन्यस्य प्रियकरावन्योन्यस्य प्रियंवदौ ॥ ५
एकशीलसमाचारौ द्विधैवैकोऽभवत्कृतः ।
तौ विवृद्धौ महावीर्यौ कार्येष्वप्येकनिश्चयौ ॥ ६
त्रैलोक्यविजयार्थाय समाधायैकनिश्चयम् ।
दीक्षां कृत्वा गतौ विन्ध्यं तावुग्रं तेपतुस्तपः ॥७
तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः ।
क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ ॥ ८
मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः ।
आत्ममांसानि जुह्वन्तौ पादाङ्गुष्ठाग्रधिष्ठितौ ।
ऊर्ध्वबाहू चानिमिषौ दीर्घकालं धृतव्रतौ ॥ ९
तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः ।
धूमं प्रमुमुचे विन्ध्यस्तदद्भुतमिवाभवत् ॥ १०
ततो देवा भयं जग्मुरुग्रं दृष्ट्वा तयोस्तपः ।
तपोविघातार्थमथो देवा विघ्नानि चक्रिरे ॥ ११
रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनःपुनः ।
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ॥ १२
अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः ॥
भगिन्यो मातरो भार्यास्तयोश्चात्मजनस्तथा ॥ १३
प्रपात्यमाना विस्रस्ताः शूलहस्तेन रक्षसा ।
भ्रष्टाभरणकेशान्ता भ्रष्टाभरणवाससः ॥ १४
अभिभाष्य ततः सर्वास्तौ त्राहीति विचुक्रुशुः ।
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ॥ १५
यदा क्षोभं नोपयाति नार्तिमन्यतरस्तयोः ।
ततः स्त्रियस्ता भूतं च सर्वमन्तरधीयत ॥ १६
ततः पितामहः साक्षादभिगम्य महासुरौ ।
वरेण च्छन्दयामास सर्वलोकहितः प्रभुः ॥ १७
ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ ।
दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा ॥ १८
ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा ।
आवयोस्तपसाऽनेन यदि प्रीतः पितामहः ॥ १९
मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ ।
उभावप्यमरौ स्यावः प्रसन्नो यदि नौ प्रभुः ॥ २०
ब्रह्मोवाच ।
ऋतेऽमरत्वं युवयोः सर्वमुक्तं भविष्यति ।
अन्यद्वृणीतं मृत्योश्च विधानममरैः समम् ॥ २१
प्रभविष्याव इति यन्महदभ्युद्यतं तपः ।
युवयोर्हेतुनानेन नामरत्वं विधीयते ॥ २२
त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः ।
हेतुनाऽनेन दैत्येन्द्रौ न वां कामं करोम्यहम् ॥ २३
सुन्दोपसुन्दावूचतुः ।
त्रिषु लोकेषु यद्भूतं किंचित्स्थावरजङ्गमम् ।
सर्वस्मान्नौ भयं न स्यादृतेऽन्योन्यं पितामह ॥ २४
पितामह उवाच ।
यत्प्रार्थितं यथोक्तं च काममेतद्ददानि वाम् ।
मृत्योर्विधानमेतच्च यथावद्वां भविष्यति ॥ २५
नारद उवाच ।
ततः पितामहो दत्त्वा वरमेतत्तदा तयोः ।
निवर्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह ॥ २६
लब्ध्वा वराणि दैत्येन्द्रावथ तौ भ्रातरावुभौ ।
अवध्यौ सर्वलोकस्य स्वमेव भवनं गतौ ॥ २७
तौ तु लब्धवरौ दृष्ट्वा कृतकामौ मनस्विनौ ।
सर्वः सुहृज्जनस्ताभ्यां प्रहर्षमुपजग्मिवान् ॥ २८
ततस्तौ तु जटा भित्त्वा मौलिनौ संबभूवतुः ।
महार्हाभरणोपेतौ विरजोम्बरधारिणौ ॥ २९

अकालकौमुदीं चैव चक्रतुः सार्वकालिकीम् ।
नित्यः प्रमुदितः सर्वस्तयोश्चैव सुहृज्जनः ॥ ३०
भक्ष्यतां भुज्यतां नित्यं दीयतां रम्यतामिति ।
गीयतां पीयतां चेति शब्दश्चासीद्गृहे गृहे ॥ ३१
तत्रतत्र महानादैरुत्कृष्टतलनादितैः ।
हृष्टं प्रमुदितं सर्वं दैत्यानामभवत्पुरम् ॥ ३२
तैस्तैर्विहारैर्बहुभिर्दैत्यानां कामरूपिणाम् ।
समाः संक्रीडतां तेषामहरेकमिवाभवत् ॥ ३३

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

## त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

सुन्दोपसुन्दयोः दिग्विजयः कुरुक्षेत्रे निवासश्च ॥ १ ॥

नारद उवाच ।
उत्सवे वृत्तमात्रे तु त्रैलोक्याकाङ्क्षिणावुभौ ।
मन्त्रयित्वा ततः सेनां तावाज्ञापयतां तदा ॥ १
सुहृद्भिरप्यनुज्ञातौ दैत्यैर्वृद्धैश्च मन्त्रिभिः ।
कृत्वा प्रास्थानिकं रात्रौ मघासु ययतुस्तदा ॥ २
गदापट्टिशधारिण्या शूलमुद्गरहस्तया ।
प्रस्थितौ सह धर्मिण्या महत्या दैत्यसेनया ॥ ३
मङ्गलैः स्तुतिभिश्चापि विजयप्रतिसंहितैः ।
चारणैः स्तूयमानौ तौ जग्मतुः परया मुदा ॥ ४
तावन्तरिक्षमुत्प्लुत्य दैत्यौ कामगमावुभौ ।
देवानामेव भवनं जग्मतुर्युद्धदुर्मदौ ॥ ५
तयोरागमनं ज्ञात्वा वरदानं च तत्प्रभोः ।
हित्वा त्रिविष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः ॥ ६
ताविन्द्रलोकं निर्जित्य यक्षरक्षोगणांस्तदा ।
खेचराण्यपि भूतानि जघ्नतुस्तीव्रविक्रमौ ॥ ७
अन्तर्भूमिगतान्नागाञ्जित्वा तौ च महारथौ ।
समुद्रवासिनीः सर्वा म्लेच्छजातीर्विजिग्यतुः ॥ ८
ततः सर्वां महीं जेतुमारब्धावुग्रशासनौ ।
सैनिकांश्च समाहूय सुतीक्ष्णं वाक्यमूचतुः ॥ ९
राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः ।
तेजो बलं च देवानां वर्धयन्ति श्रियं तथा ॥ १०
तेषामेवं प्रवृत्तानां सर्वेषामसुरद्विषाम् ।
संभूय सर्वैरस्माभिः कार्यः सर्वात्मना वधः ॥ ११
एवं सर्वान्समादिश्य पूर्वतीरे महोदधेः ।
क्रूरां मतिं समास्थाय जग्मतुः सर्वतोमुखौ ॥ १२
यज्ञैर्यजन्ति ये केचिद्याजयन्ति च ये द्विजाः ।
तान्सर्वान्प्रसभं हत्वा बलिनौ जग्मतुस्ततः ॥ १३
आश्रमेष्वग्निहोत्राणि मुनीनां भावितात्मनाम् ।
गृहीत्वा प्रक्षिपन्त्यप्सु विश्रब्धं सैनिकास्तयोः ॥ १४
तपोधनैश्च ये क्रुद्धैः शापा उक्ता महात्मभिः ।
नाक्रामन्त तयोस्तेऽपि वरदाननिराकृताः ॥ १५
नाक्रामन्त यदा शापा बाणा मुक्ताः शिलास्विव ।
नियमान्संपरित्यज्य व्यद्रवन्त द्विजातयः ॥ १६
पृथिव्यां ये तपःसिद्धा दान्ताः शमपरायणाः ।
तयोर्भयाद्दुद्रुवुस्ते वैनतेयादिवोरगाः ॥ १७
मथितैराश्रमैर्भग्नैर्विकीर्णकलशस्रुवैः ।
शून्यमासीज्जगत्सर्वं कालेनेव हतं तदा ॥ १८
ततो राजन्नदृश्यद्भिर्ऋषिभिश्च महासुरौ ।
उभौ विनिश्चयं कृत्वा विकुर्वाते वधैषिणौ ॥ १९
प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ ।
संलीनमपि दुर्गेषु निन्यतुर्यमसादनम् ॥ २०
सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ ।
तैस्तैरुपायैस्तौ क्रूरावृषीन्दृष्ट्वा निजघ्नतुः ॥ २१
निवृत्तयज्ञस्वाध्याया प्रनष्टनृपतिद्विजा ।
उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा ॥ २२
हाहाभूता भयार्ता च निवृत्तविपणापणा ।
निवृत्तदेवकार्या च पुण्योद्वाहविवर्जिता ॥ २३

प्रस्थितौ सहधर्मिण्या इति ख. पाठः । जयमरणरूपतुल्यधर्मवत्येत्यर्थः । रत्न० ॥ ३ ॥ अदृश्यद्भिः अदृश्यैः तृतीयाचेयं सप्तम्यर्थे ऋषिष्वदृश्येषु सत्स्वित्यर्थः ॥ १९ ॥
त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा ।
अस्थिकङ्कालसंकीर्णा भूर्बभूवोग्रदर्शना ॥ २४
निवृत्तपितृकार्यं च निर्वषट्कारमङ्गलम् ।
जगत्प्रतिभयाकारं दुष्प्रेक्ष्यमभवत्तदा ॥ २५
चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः ।
जग्मुर्विषादं तत्कर्म दृष्ट्वा सुन्दोपसुन्दयोः ॥२६
एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा ।
निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः ॥ २७

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

## एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

सुन्दोपसुन्दकृतोपद्रवं निवेद्य देवादिभिः प्रार्थितेन ब्रह्मणा आज्ञप्तेन विश्वकर्मणा तिलोत्तमासृष्टिः ॥ १ ॥ तिलोत्तमया ब्रह्माज्ञास्वीकारः ॥ २ ॥

नारद उवाच ।
ततो देवर्षयः सर्वे सिद्धाश्च परमर्षयः ।
जग्मुस्तदा परामार्तिं दृष्ट्वा तत्कदनं महत् ॥ १
तेऽभिजग्मुर्जितक्रोधा जितात्मानो जितेन्द्रियाः ।
पितामहस्य भवनं जगतः कृपया तदा ॥ २
ततो ददृशुरासीनं सह देवैः पितामहम् ।
सिद्धैर्ब्रह्मर्षिभिश्चैव समन्तात्परिवारितम् ॥ ३
तत्र देवो महादेवस्तत्राग्निर्वायुना सह ।
चन्द्रादित्यौ च शक्रश्च पारमेष्ठ्यास्तथर्षयः ॥ ४
वैखानसा वालखिल्या वानप्रस्था मरीचिपाः ।
अजाश्चैवाविमूढाश्च तेजोगर्भास्तपस्विनः ॥ ५
ऋषयः सर्व एवैते पितामहमुपागमन् ।
ततोऽभिगम्य ते दीनाः सर्व एव महर्षयः ॥ ६
सुन्दोपसुन्दयोः कर्म सर्वमेव शशंसिरे ।
यथा हृतं यथा चैव कृतं येन क्रमेण च ॥ ७
न्यवेदयंस्ततः सर्वमखिलेन पितामहे ।
ततो देवगणाः सर्वे ते चैव परमर्षयः ॥ ८
तमेवार्थं पुरस्कृत्य पितामहमचोदयन् ।
ततः पितामहः श्रुत्वा सर्वेषां तद्वचस्तदा ॥ ९
मुहूर्तमिव संचिन्त्य कर्तव्यस्य च निश्चयम् ।
तयोर्वधं समुद्दिश्य विश्वकर्माणमाह्वयत् ॥ १०
दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः ।
सृज्यतां प्रार्थनीयैका प्रमदेति महातपाः ॥ ११
पितामहं नमस्कृत्य तद्वाक्यमभिनन्द्य च ।
निर्ममे योषितं दिव्यां चिन्तयित्वा पुनःपुनः ॥१२
त्रिषु लोकेषु यत्किंचिद्भूतं स्थावरजङ्गमम् ।
समानयद्दर्शनीयं तत्तदत्र स विश्ववित् ॥ १३
कोटिशश्चैव रत्नानि तस्या गात्रे न्यवेशयत् ।
तां रत्नसङ्घातमयीमसृजद्देवरूपिणीम् ॥ १४
सा प्रयत्नेन महता निर्मिता विश्वकर्मणा ।
त्रिषु लोकेषु नारीणां रूपेणाप्रतिमाभवत् ॥ १५
न तस्याः सूक्ष्ममप्यस्ति यद्गात्रे रूपसंपदा ।
नियुक्ता यत्र वा दृष्टिर्न सज्जति निरीक्षताम् ॥१६
सा विग्रहवतीव श्रीः कामरूपा वपुष्मती ।
'पितामहमुपातिष्ठत्किं करोमीति चाब्रवीत् ॥ १७
प्रीतो भूत्वा स दृष्ट्वैव प्रीत्या चास्यै वरं ददौ ।
कान्तत्वं सर्वभूतानां सास्त्रियानुत्तमं वपुः ॥ १८
सा तेन वरदानेन कर्तुश्च क्रियया तदा ।'
जहार सर्वभूतानां चक्षूंषि च मनांसि च ॥ १९
तिलंतिलं समानीय रत्नानां यद्विनिर्मिता ।
तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः ॥ २०
ब्रह्माणं सा नमस्कृत्य प्राञ्जलिर्वाक्यमब्रवीत् ।
किं कार्यं मयि भूतेश येनास्म्यद्येह निर्मिता ॥२१
पितामह उवाच ।
गच्छ सुन्दोपसुन्दाभ्यामसुराभ्यां तिलोत्तमे ।
प्रार्थनीयेन रूपेण कुरु भद्रे प्रलोभनम् ॥ २२
त्वत्कृते दर्शनादेव रूपसंपत्कृतेन वै ।
विरोधः स्याद्यथा ताभ्यामन्योन्येन तथा कुरु ॥२३
नारद उवाच ।
सा तथेति प्रतिज्ञाय नमस्कृत्य पितामहम् ।

ताभ्यां तयोः ॥ २३ ॥

चकार मण्डलं तत्र विबुधानां प्रदक्षिणम् ॥ २४
प्राङ्मुखो भगवानास्ते दक्षिणेन महेश्वरः ।
देवाश्चैवोत्तरेणासन्सर्वतस्त्वृषयोऽभवन् ॥ २५
कुर्वन्त्यां तु तदा तत्र मण्डलं तत्प्रदक्षिणम् ।
इन्द्रः स्थाणुश्च भगवान्धैर्येण तु परिच्युतौ ॥ २६
द्रष्टुकामस्य चात्यर्थं गतायां पार्श्वतस्तथा ।
अन्यदञ्चितपद्माक्षं दक्षिणं निःसृतं मुखम् ॥ २७
पृष्ठतः परिवर्तन्त्यां पश्चिमं निःसृतं मुखम् ।
गतायां चोत्तरं पार्श्वमुत्तरं निःसृतं मुखम् ॥ २८
महेन्द्रस्यापि नेत्राणां पृष्ठतः पार्श्वतोऽग्रतः ।
रक्तान्तानां विशालानां सहस्रं सर्वतोऽभवत् ॥ २९

एवं चतुर्मुखः स्थाणुर्महादेवोऽभवत्पुरा ।
तथा सहस्रनेत्रश्च बभूव बलसूदनः ॥ ३०
तथा देवनिकायानां महर्षीणां च सर्वशः ।
मुखानि चाभ्यवर्तन्त येन याति तिलोत्तमा ॥ ३१
तस्या गात्रे निपतिता दृष्टिस्तेषां महात्मनाम् ।
सर्वेषामेव भूयिष्ठमृते देवं पितामहम् ॥ ३२
गच्छन्त्यां तु तया सर्वे देवाश्च परमर्षयः ।
कृतमित्येव तत्कार्यं मेनिरे रूपसंपदा ॥ ३३
तिलोत्तमायां तस्यां तु गतायां लोकभावनः ।
'कृतं कार्यमिति श्रीमानब्रवीच्च पितामहः ।'
सर्वान्विसर्जयामास देवानृषिगणांश्च तान् ॥ ३४

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

---

## द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

सुन्दोपसुन्दसमीपे तिलोत्तमाया आगमनम् ॥ १ ॥ तस्यां सकामयोस्तयोः परस्परं गदाप्रहारेण मरणम् ॥ २ ॥ तिलोत्तमाया ब्रह्मणा वरदानम् ॥ ३ ॥ नारदोक्तामिमां कथां श्रुतवद्भिः पाण्डवैः तत्समक्षं द्रौपदीविषये समयकरणम् ॥ ४ ॥

नारद उवाच ।
जित्वा तु पृथिवीं दैत्यौ निःसपत्नौ गतव्यथौ ।
कृत्वा त्रैलोक्यमव्यग्रं कृतकृत्यौ बभूवतुः ॥ १
देवगन्धर्वयक्षाणां नागपार्थिवरक्षसाम् ।
आदाय सर्वरत्नानि परां तुष्टिमुपागतौ ॥ २
यदा न प्रतिषेद्धारस्तयोः सन्तीह केचन ॥
निरुद्योगौ तदा भूत्वा विजह्रातेऽमराविव ॥ ३
स्त्रीभिर्माल्यैश्च गन्धैश्च भक्ष्यभोज्यैः सुपुष्कलैः ।
पानैश्च विविधैर्हृद्यैः परां प्रीतिमवापतुः ॥ ४
अन्तःपुरवनोद्याने पर्वतेषु वनेषु च ।
यथेप्सितेषु देशेषु विजह्रातेऽमराविव ॥ ५
ततः कदाचिद्विन्ध्यस्य प्रस्थे समशिलातले ।
पुष्पिताग्रेषु सालेषु विहारमभिजग्मतुः ॥ ६
दिव्येषु सर्वकामेषु समानीतेषु तावुभौ ।
वरासनेषु संहृष्टौ सह स्त्रीभिर्निषीदतुः ॥ ७
ततो वादित्रनृत्ताभ्यामुपातिष्ठन्त तौ स्त्रियः ।

गीतैश्च स्तुतिसंयुक्तैः प्रीत्या समुपजग्मिरे ॥ ८
ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती ।
वेषं सा क्षिप्तमाधाय रक्तेनैकेन वाससा ॥ ९
नदीतीरेषु जातान्सा कर्णिकारान्प्रचिन्वती ।
शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ ॥ १०
तौ तु पीत्वा वरं पानं मदरक्तान्तलोचनौ ।
दृष्ट्वैव तां वरारोहां व्यथितौ संबभूवतुः ॥ ११
तावुत्थायासनं हित्वा जग्मतुर्यत्र सा स्थिता ।
उभौ च कामसंमत्तावुभौ प्रार्थयतश्च ताम् ॥ १२
दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना ।
उपसुन्दोपि जग्राह वामे पाणौ तिलोत्तमाम् ॥ १३
वरप्रदानमत्तौ तावौरसेन बलेन च ।
धनरत्नमदाभ्यां च सुरापानमदेन च ॥ १४
सर्वैरेतैर्मदैर्मत्तावन्योन्यं भ्रुकुटीकृतौ ।
मदकामसमाविष्टौ परस्परमथोचतुः ॥ १५
मम भार्या तव गुरुरिति सुन्दोऽभ्यभाषत ।

---

देवनिकायानां देवसङ्घानां येन देशेन मार्गेण सा याति तथा मुखान्यभ्यवर्तन्त ॥ ३१ ॥

एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥

मम भार्या तव वधूरुपसुन्दोऽभ्यभाषत ॥ १६
नैषा तव ममैषेति ततस्तौ मन्युराविशत् ।
तस्या रूपेण संमत्तौ विगतस्नेहसौहृदौ ॥ १७
तस्या हेतोर्गदे भीमे संगृह्णीतामुभौ तदा ।
प्रगृह्य च गदे भीमे तस्यां तौ काममोहितौ ॥ १८
अहंपूर्वमहंपूर्वमित्यन्योन्यं निजघ्नतुः ।
तौ गदाभिहतौ भीमौ पेततुर्धरणीतले ॥ १९
रुधिरेणावसिक्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ ।
ततस्ता विद्रुता नार्यः स च दैत्यगणस्तथा ॥ २०
पातालमगमत्सर्वो विषादभयकम्पितः ।
ततः पितामहस्तत्र सहदेवैर्महर्षिभिः ॥ २१
आजगाम विशुद्धात्मा पूजयंश्च तिलोत्तमाम् ।
वरेण च्छन्दयामास भगवान्प्रपितामहः ॥ २२
वरं दित्सुः स तत्रैनां प्रीतः प्राह पितामहः ।
आदित्यचरिताँल्लोकान्विचरिष्यसि भामिनि ॥ २३
तेजसा च सुदृष्टां त्वां न करिष्यति कश्चन ।
एवं तस्यै वरं दत्वा सर्वलोकपितामहः ॥ २४
इन्द्रे त्रैलोक्यमाधाय ब्रह्मलोकं गतः प्रभुः ।
एवं तौ सहितौ भूत्वा सर्वार्थेष्वेकनिश्चयौ ॥ २५
तिलोत्तमार्थे संक्रुद्धावन्योन्यमभिजघ्नतुः ।
तस्माद्ब्रवीमि वः स्नेहात्सर्वान्भरतसत्तमाः ॥ २६
यथा वो नात्र भेदः स्यात्सर्वेषां द्रौपदीकृते ।
तथा कुरुत भद्रं वो मम चेत्प्रियमिच्छथ ॥ २७
वैशंपायन उवाच ।
एवमुक्ता महात्मानो नारदेन महर्षिणा ।
समयं चक्रिरे राजंस्तेऽन्योन्यवशमागताः ।
समक्षं तस्य देवर्षेर्नारदस्यामितौजसः ॥ २८
'एकैकस्य गृहे कृष्णा वसेद्वर्षमकल्मषा'
द्रौपद्या नः सहासीनानन्योन्यं योऽभिदर्शयेत् ।
स नो द्वादश मासानि ब्रह्मचारी वने वसेत् ॥ २९
कृते तु समये तस्मिन्पाण्डवैर्धर्मचारिभिः ।
नारदोऽप्यगमत्प्रीत इष्टं देशं महामुनिः ॥ ३०
एवं तैः समयः पूर्वं कृतो नारदचोदितैः ।
न चाभिद्यन्त ते सर्वे तदान्योन्येन भारत ॥ ३१
'अभ्यनन्दन्त ते सर्वे तदान्योन्यं च पाण्डवाः ।
एतद्विस्तरशः सर्वमाख्यातं ते नराधिप ॥ ३२
काले च तस्मिन्संपन्ने यथावज्जनमेजय ॥' ३३

॥ इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

॥ समाप्तं च विदुरागमनराज्यलाभपर्व ॥

---

# (अथार्जुनवनवासपर्व ॥ १५ ॥)

## त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

तस्करैः कस्यचिद्ब्राह्मणस्य गोहरणम् ॥ १ ॥ चोरितानां गवां प्रत्याजिहीर्षया धनुर्ग्रहणार्थं द्रौपदीयुधिष्ठिराधिष्ठिते आयुधागारे अर्जुनस्य प्रवेशः ॥ २ ॥ चोरेभ्यः प्रत्याहृता गाः ब्राह्मणाय दत्त्वा यथासमयं अर्जुनस्य तीर्थयात्रा ॥ ३ ॥

वैशंपायन उवाच ।
एवं ते समयं कृत्वा न्यवसंस्तत्र पाण्डवाः ।
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीक्षितः ॥ १
तेषां मनुजसिंहानां पञ्चानाममितौजसाम् ।
बभूव कृष्णा सर्वेषां पार्थानां वशवर्तिनी ॥ २
ते तया तैश्च सा वीरैः पतिभिः सह पञ्चभिः ।
बभूव परमप्रीता नागैरिव सरस्वती ॥ ३
वर्तमानेषु धर्मेण पाण्डवेषु महात्मसु ।
व्यवर्धन्कुरवः सर्वे हीनदोषाः सुखान्विताः ॥ ४
अथ दीर्घेण कालेन ब्राह्मणस्य विशांपते ।

तेजसाऽर्कवत्परदृष्ट्यभिभावकत्वात्सुदृष्टां सम्यग्दृष्टां न करिष्यति कश्चित् ॥ २४ ॥ द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

नागैर्गजवधूरिव इति ङ. पाठः ॥ ३ ॥

कस्यचित्तस्करा जह्रुः केचिद्गा नृपसत्तम ॥ ५
ह्रियमाणे धने तस्मिन्ब्राह्मणः क्रोधमूर्च्छितः ।
आगम्य खाण्डवप्रस्थमुदक्रोशत्स पाण्डवान् ॥६
ह्रियते गोधनं क्षुद्रैर्नृशंसैरकृतात्मभिः ।
प्रसह्य चास्मद्विषयादभ्यधावत पाण्डवाः ॥ ७
ब्राह्मणस्य प्रशान्तस्य हविर्ध्वाङ्क्षैः प्रलुप्यते ।
शार्दूलस्य गुहां शून्यां नीचः क्रोष्टाभिमर्दति ॥८
अरक्षितारं राजानं बलिषड्भागहारिणम् ।
तमाहुः सर्वलोकस्य समग्रं पापचारिणम् ॥ ९
ब्राह्मणस्वे हृते चोरैर्धर्मार्थे च विलोपिते ।
रोरूयमाणे च मयि क्रियतां हस्तधारणा ॥ १०
वैशंपायन उवाच ।
रोरूयमाणस्याभ्याशे भृशं विप्रस्य पाण्डवः ।
तानि वाक्यानि शुश्राव कुन्तीपुत्रो धनञ्जयः ११
श्रुत्वैव च महाबाहुर्मा भैरित्याह तं द्विजम् ।
आयुधानि च यत्रासन्पाण्डवानां महात्मनां॥१२
कृष्णया सह तत्रास्ते धर्मराजो युधिष्ठिरः ।
संप्रवेशाय चाशक्तो गमनाय च पाण्डवः ॥१३
तस्य चार्तस्य तैर्वाक्यैश्चोद्यमानः पुनःपुनः ।
आक्रन्दे तत्र कौन्तेयश्चिन्तयामास दुःखितः॥१४
ह्रियमाणे धने तस्मिन्ब्राह्मणस्य तपस्विनः ।
अश्रुप्रमार्जनं तस्य कर्तव्यमिति निश्चयः ॥ १५
उपप्रेक्षणजोऽधर्मः सुमहान्स्यान्महीपतेः ।
यद्यस्य रुदतो द्वारि न करोम्यद्य रक्षणम् ॥ १६
अनास्तिक्यं च सर्वेषामस्माकमपि रक्षणे ।
प्रतितिष्ठेत लोकेऽस्मिन्नधर्मश्चैव नो भवेत् ॥ १७
अनापृच्छ्य तु राजानं गते मयि न संशयः ।
अजातशत्रोर्नृपतेर्मयि चैवानृतं भवेत् ॥ १८
अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम ।
सर्वमन्यत्परिहृतं धर्षणात्तु महीपतेः ॥ १९
अधर्मो वै महानस्तु वने वा मरणं मम ।
शरीरस्य विनाशेन धर्म एव विशिष्यते ॥ २०

एवं विनिश्चित्य ततः कुन्तीपुत्रो धनञ्जयः ।
अनुप्रविश्य राजानमापृच्छ्य च विशांपते ॥२१
'मुखमाच्छाद्य निबिडमुत्तरीयेण वाससा ।
अग्रजं चार्जुनो गेहादभिवाद्याशु निःसृतः ॥'२२
धनुरादाय संहृष्टो ब्राह्मणं प्रत्यभाषत ।
ब्राह्मणा गम्यतां शीघ्रं यावत्परधनैषिणः ॥ २३
न दूरे ते गताः क्षुद्रास्तावद्गच्छावहे सह ।
यावन्निवर्तयाम्यद्य चोरहस्ताद्धनं तव ॥ २४
सोऽनुसृत्य महाबाहुर्धन्वी वर्मी रथी ध्वजी ।
शरैर्विध्वस्य तांश्चोरानवजित्य च तद्धनम् ॥ २५
ब्राह्मणं समुपाकृत्य यशः प्राप्य च पाण्डवः ।
ततस्तद्गोधनं पार्थो दत्त्वा तस्मै द्विजातये ॥ २६
आजगाम पुरं वीरः सव्यसाची धनञ्जयः ।
सोऽभिवाद्य गुरून्सर्वान्सर्वैश्चाप्यभिनन्दितः॥२७
धर्मराजमुवाचेदं व्रतमादिश मे प्रभो ।
समयः समतिक्रान्तो भवत्संदर्शने मया ॥ २८
वनवासं गमिष्यामि समयो ह्येष नः कृतः ।
इत्युक्तो धर्मराजस्तु सहसा वाक्यमप्रियम् ॥ २९
कथमित्यब्रवीद्वाचा शोकार्तः सज्जमानया ।
युधिष्ठिरो गुडाकेशं भ्राता भ्रातरमच्युतम् ॥३०
उवाच दीनो राजा च धनञ्जयमिदं वचः ।
प्रमाणमसि यदि ते मत्तः शृणु वचोऽनघ ॥३१
अनुप्रवेशे यद्वीर कृतवांस्त्वं ममाप्रियम् ।
सर्वं तदनुजानामि व्यलीकं न च मे हृदि ॥३२
गुरोरनुप्रवेशो हि नोपघातो यवीयसः ।
यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकः ॥ ३३
निवर्तस्व महाबाहो कुरुष्व वचनं मम ।
न हि ते धर्मलोपोऽस्ति न च ते धर्षणा कृता३४
अर्जुन उवाच ।
न व्याजेन चरेद्धर्ममिति मे भवतः श्रुतम् ।
न सत्याद्विचलिष्यामि सत्येनायुधमालभे ॥ ३५

उपप्रेक्षणज उपेक्षाजन्यः ॥ १६ ॥ अनास्तिक्यमास्तिक्याभावः ॥ १७ ॥ सज्जमानया स्खलन्त्या ॥ ३० ॥

वैशंपायन उवाच ।
सोऽभ्यनुज्ञाय राजानं वनचर्याय दीक्षितः ।
वने द्वादश मासांस्तु वासायानुजगाम ह ॥ ३६

॥ इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

## चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

ब्राह्मणैः सह तीर्थान्यटतोऽर्जुनस्य स्नानार्थं गङ्गायामवतरणम् ॥ १ ॥ तत्र उलूप्या नागकन्यया गृहीतस्यार्जुनस्य नागलोकगमनम् ॥ २ ॥ संवादपूर्वकमुलूप्याः परिग्रहः ॥ ३ ॥ इरावत उत्पत्तिः ॥ ४ ॥ अर्जुनं पुनर्गङ्गाद्वारमुपनीय उलूप्या स्वलोकगमनम् ॥ ५ ॥

वैशंपायन उवाच ।
तं प्रयान्तं महाबाहुं कौरवाणां यशस्करम् ।
अनुजग्मुर्महात्मानो ब्राह्मणा वेदपारगाः ॥ १
वेदवेदाङ्गविद्वांसस्तथैवाध्यात्मचिन्तकाः ।
भैक्षाश्च भगवद्भक्ताः सूताः पौराणिकाश्च ये ॥२
कथकाश्चापरे राजञ्श्रमणाश्च वनौकसः ।
दिव्याख्यानानि ये चापि पठन्ति मधुरं द्विजाः॥
एतैश्चान्यैश्च बहुभिः सहायैः पाण्डुनन्दनः ।
वृतः श्लक्ष्णकथैः प्रायान्मरुद्भिरिव वासवः ॥ ४
रमणीयानि चित्राणि वनानि च सरांसि च ।
सरितः सागरांश्चैव देशानपि च भारत ॥ ५
पुण्यान्यपि च तीर्थानि ददर्श भरतर्षभः ।
स गङ्गाद्वारमाश्रित्य निवेशमकरोत्प्रभुः ॥ ६
तत्र तस्याद्भुतं कर्म शृणु त्वं जनमेजय ।
कृतवान्यद्विशुद्धात्मा पाण्डूनां प्रवरो हि सः ॥७
निविष्टे तत्र कौन्तेये ब्राह्मणेषु च भारत ।
अग्निहोत्राणि विप्रास्ते प्रादुश्चक्रुरनेकशः ॥ ८
तेषु प्रबोध्यमानेषु ज्वलितेषु हुतेषु च ।
कृतपुष्पोपहारेषु तीरान्तरगतेषु च ॥ ९
कृताभिषेकैर्विद्वद्भिर्नियतैः सत्पथे स्थितैः ।
शुशुभेऽतीव तद्राजन्गङ्गाद्वारं महात्मभिः ॥ १०
तथा पर्याकुले तस्मिन्निवेशे पाण्डवर्षभः ।
अभिषेकाय कौन्तेयो गङ्गामवततार ह ॥ ११
तत्राभिषेकं कृत्वा स तर्पयित्वा पितामहान् ।
उत्तितीर्षुर्जलाद्राजन्नग्निकार्यचिकीर्षया ॥ १२
अपकृष्टो महाबाहुर्नागराजस्य कन्यया ।
अन्तर्जले महाराज उलूप्या कामयानया ॥ १३
ददर्श पाण्डवस्तत्र पावकं सुसमाहितः ।
कौरव्यस्याथ नागस्य भवने परमार्चिते ॥ १४
तत्राग्निकार्यं कृतवान्कुन्तीपुत्रो धनञ्जयः ।
अशङ्कमानेन हुतस्तेनातुष्यद्धुताशनः ॥ १५
अग्निकार्यं स कृत्वा तु नागराजसुतां तदा ।
प्रहसन्निव कौन्तेय इदं वचनमब्रवीत् ॥ १६
किमिदं साहसं भीरु कृतवत्यसि भामिनि ।
कश्चायं सुभगे देशः का च त्वं कस्य वात्मजा॥

उलूप्युवाच ।
ऐरावतकुले जातः कौरव्यो नाम पन्नगः ।
तस्यास्मि दुहिता राजन्नुलूपी नाम पन्नगी ॥ १८
साऽहं त्वामभिषेकार्थमवतीर्णं समुद्रगाम् ।
दृष्ट्वैव पुरुषव्याघ्र कन्दर्पेणाभिमूर्च्छिता ॥ १९
तां मामनङ्गग्लपितां त्वत्कृते कुरुनन्दन ।
अनन्यां नन्दयस्वाद्य प्रदानेनात्मनोऽनघ ॥ २०

अर्जुन उवाच ।
ब्रह्मचर्यमिदं भद्रे मम द्वादशमासिकम् ।
धर्मराजेन चादिष्टं नाहमस्मि स्वयं वशः ॥ २१
तव चापि प्रियं कर्तुमिच्छामि जलचारिणि ।
अनृतं नोक्तपूर्वं च मया किंचन कर्हिचित् ॥ २२
कथं च नानृतं मे स्यात्तव चापि प्रियं भवेत् ।
न च पीड्येत मे धर्मस्तथा कुर्या भुजङ्गमे ॥ २३

मासांस्तु ब्रह्मचर्याय दीक्षितः इति ङ पाठः ॥ ३६ ॥
त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

उलूप्युवाच ।
जानाम्यहं पाण्डवेय यथा चरसि मेदिनीम् ।
यथा च ते ब्रह्मचर्यमिदमादिष्टवान्गुरुः ॥ २४
परस्परं वर्तमानान्द्रुपदस्यात्मजां प्रति ।
यो नोऽनुप्रविशेन्मोहात्स वै द्वादशमासिकम् २५
वने चरेद्ब्रह्मचर्यमिति वः समयः कृतः ।
तदिदं द्रौपदीहेतोरन्योन्यस्य प्रवासनम् ॥ २६
कृतवांस्तत्र धर्मार्थमत्र धर्मो न दुष्यति ।
परित्राणं च कर्तव्यमार्तानां पृथुलोचन ॥ २७
कृत्वा मम परित्राणं तव धर्मो न लुप्यते ।
यदि वाप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः २८
स च ते धर्म एव स्याद्दत्वा प्राणान्ममार्जुन ।
भक्तां च भज मां पार्थ सतामेतन्मतं प्रभो ॥२९
न करिष्यसि चेदेवं मृतां मामुपधारय ।
प्राणदानान्महाबाहो चर धर्ममनुत्तमम् ॥ ३०
शरणं च प्रपन्नास्मि त्वामद्य पुरुषोत्तम ।
दीनाननाथान्कौन्तेय परिरक्षसि नित्यशः ॥३१
साऽहं शरणमभ्येमि रोरवीमि च दुःखिता ।
याचे त्वां चाभिकामाहं तस्मात्कुरु मम प्रियम् ।
स त्वमात्मप्रदानेन सकामां कर्तुमर्हसि ॥ ३२

वैशंपायन उवाच ।
एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया ।
कृतवांस्तत्तथा सर्वं धर्ममुद्दिश्य कारणम् ॥ ३३
स नागभवने रात्रिं तामुषित्वा प्रतापवान् ।
'पुत्रमुत्पादयामास स तस्यां सुमनोहरम् ॥ ३४
इरावन्तं महाभागं महाबलपराक्रमम् ।'
उदितेऽभ्युत्थितः सूर्ये कौरव्यस्य निवेशनात् ३५
आगतस्तु पुनस्तत्र गङ्गाद्वारं तया सह ।
परित्यज्य गता साध्वी उलूपी निजमन्दिरं ॥ ३६
दत्त्वा वरमजेयत्वं जले सर्वत्र भारत ।
साध्या जलचराः सर्वे भविष्यन्ति न संशयः ३७

॥ इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

---

## पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

अर्जुनस्य मणलूरग्रामगमनम् ॥ १ ॥ पुत्रिकापुत्रकधर्मेण चित्राङ्गदापरिग्रहः ॥ २ ॥

वैशंपायन उवाच ।
कथयित्वा च तत्सर्वं ब्राह्मणेभ्यः स भारत ।
प्रययौ हिमवत्पार्श्वं ततो वज्रधरात्मजः ॥ १
अगस्त्यवटमासाद्य वसिष्ठस्य च पर्वतम् ।
भृगुतुङ्गे च कौन्तेयः कृतवाञ्शौचमात्मनः ॥ २
प्रददौ गोसहस्राणि सुबहूनि च भारत ।
निवेशांश्च द्विजातिभ्यः सोऽददत्कुरुसत्तमः ॥ ३
हिरण्यबिन्दोस्तीर्थे च स्नात्वा पुरुषसत्तमः ।
दृष्टवान्पाण्डवश्रेष्ठः पुण्यान्यायतनानि च ॥ ४
अवतीर्य नरश्रेष्ठो ब्राह्मणैः सह भारत ।
प्राचीं दिशमभिप्रेप्सुर्जगाम भरतर्षभः ॥ ५
आनुपूर्व्येण तीर्थानि दृष्टवान्कुरुसत्तमः ।
नदीं चोत्पलिनीं रम्यामरण्यं नैमिषं प्रति ॥ ६
नन्दामपरनन्दां च कौशिकीं च यशस्विनीम् ।
महानदीं गयां चैव गङ्गामपि च भारत ॥ ७
एवं तीर्थानि सर्वाणि पश्यमानस्तथाश्रमान् ।
आत्मनः पावनं कुर्वन्ब्राह्मणेभ्यो ददौ च गाः ८
अङ्गवङ्गकलिङ्गेषु यानि तीर्थानि कानिचित् ।
जगाम तानि सर्वाणि पुण्यान्यायतनानि च ॥ ९
दृष्ट्वा च विधिवत्तानि धनं चापि ददौ ततः ।
कलिङ्गराष्ट्रद्वारेषु ब्राह्मणाः पाण्डवानुगाः ।
अभ्यनुज्ञाय कौन्तेयमुपावर्तन्त भारत ॥ १०
स तु तैरभ्यनुज्ञातः कुन्तीपुत्रो धनञ्जयः ।
सहायैरल्पकैः शूरः प्रययौ यत्र सागरः ॥ ११

परित्यज्येति ख. पाठः ॥ ३६ ॥ चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

स कलिङ्गानतिक्रम्य देशानायतनानि च ।
हर्म्याणि रमणीयानि प्रेक्षमाणो ययौ प्रभुः ॥१२
महेन्द्रपर्वतं दृष्ट्वा तापसैरुपशोभितम् ।
'गोदावर्यां ततः स्नात्वा तामतीत्य महाबलः १३
कावेरीं तां समासाद्य सङ्गमे सागरस्य च ।
स्नात्वा संपूज्य देवांश्च पितॄंश्च मुनिभिः सह' ॥१४
समुद्रतीरेण शनैर्मणलूरं जगाम ह ॥ १५
तत्र सर्वाणि तीर्थानि पुण्यान्यायतनानि च ।
अभिगम्य महाबाहुरभ्यगच्छन्महीपतिम् ॥ १६
मणलूरेश्वरं राजन्धर्मज्ञं चित्रवाहनम् ।
तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना ॥ १७
तां ददर्श पुरे तस्मिन्विचरन्तीं यदृच्छया ।
दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहनीम् ॥ १८
अभिगम्य च राजानमवदत्स्वं प्रयोजनम् ।
देहि मे खल्विमां राजन्क्षत्रियाय महात्मने ॥१९
तच्छ्रुत्वा त्वब्रवीद्राजा कस्य पुत्रोऽसि नाम किम् ।
उवाच तं पाण्डवोऽहं कुन्तीपुत्रो धनञ्जयः ॥ २०
तमुवाचाथ राजा स सान्त्वपूर्वमिदं वचः ।
राजा प्रभञ्जनो नाम कुलेऽस्मिन्संबभूव ह ॥ २१
अपुत्रः प्रसवेनार्थी तपस्तेपे स उत्तमम् ।
उग्रेण तपसा तेन देवदेवः पिनाकधृक् ॥ २२
ईश्वरस्तोषितः पार्थ देवदेव उमापतिः ।
स तस्मै भगवान्प्रादादेकैकं प्रसवं कुले ॥ २३
एकैकः प्रसवस्तस्माद्भवत्यस्मिन्कुले सदा ।
तेषां कुमाराः सर्वेषां पूर्वेषां मम जज्ञिरे ॥ २४
एका च मम कन्येयं कुलस्योत्पादनी भृशम् ।
पुत्रो ममायमिति मे भावना पुरुषर्षभ ॥ २५
पुत्रिकाहेतुविधिना संज्ञिता भरतर्षभ ।
तस्मादेकः सुतो योऽस्यां जायते भारत त्वया २६
एतच्छुल्कं भवत्वस्याः कुलकृज्जायतामिह ।
एतेन समयेनेमां प्रतिगृह्णीष्व पाण्डव ॥ २७
स तथेति प्रतिज्ञाय तां कन्यां प्रतिगृह्य च ।
'मासे त्रयोदशे पार्थः कृत्वा वैवाहिकीं क्रियाम् ।'
उवास नगरे तस्मिन्मासांस्त्रीन्स तया सह ॥ २८

॥ इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

---

## षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

सौभद्रतीर्थे स्नानार्थमवतीर्णस्यार्जुनस्य ग्राहेण ग्रहणम् ॥ १ ॥ जलादुद्धरणेन ग्राहरूपं परित्यज्य नारीरूपं प्राप्तया वर्गानाम्न्या स्वप्रभृतीनां ब्राह्मणेन शापदानकथनम् ॥ २ ॥

---

वैशंपायन उवाच ।
ततः समुद्रे तीर्थानि दक्षिणे भरतर्षभः ।
अभ्यगच्छत्सुपुण्यानि शोभितानि तपस्विभिः ॥ १
वर्जयन्ति स्म तीर्थानि तत्र पञ्च स्म तापसाः ।
अवकीर्णानि यान्यासन्पुरस्तात्तु तपस्विभिः ॥ २
अगस्त्यतीर्थं सौभद्रं पौलोमं च सुपावनम् ।
कारन्धमं प्रसन्नं च हयमेधफलं च तत् ॥ ३
भारद्वाजस्य तीर्थं तु पापप्रशमनं महत् ।
एतानि पञ्च तीर्थानि ददर्श कुरुसत्तमः ॥ ४
विविक्तान्युपलक्ष्याथ तानि तीर्थानि पाण्डवः ।
दृष्ट्वा च वर्ज्यमानानि मुनिभिर्धर्मबुद्धिभिः ॥ ५

धर्मबुद्धिभिर्दुर्मरणज दोषं तीर्थेनाप्यविनाश्यं पश्यद्भिः ॥ ५ ॥

तपस्विनस्ततोऽपृच्छत्प्राञ्जलिः कुरुनन्दनः ।
तीर्थानीमानि वर्ज्यन्ते किमर्थं ब्रह्मवादिभिः ॥६
तापसा ऊचुः ।
ग्राहाः पञ्च वसन्त्येषु हरन्ति च तपोधनान् ।
तत एतानि वर्ज्यन्ते तीर्थानि कुरुनन्दन ॥ ७
वैशंपायन उवाच ।
तेषां श्रुत्वा महाबाहुर्वार्यमाणस्तपोधनैः ।
जगाम तानि तीर्थानि द्रष्टुं पुरुषसत्तमः ॥ ८
ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम् ।
विगाह्य सहसा शूरः स्नानं चक्रे परन्तपः ॥ ९
अथ तं पुरुषव्याघ्रमन्तर्जलचरो महान् ।
जग्राह चरणे ग्राहः कुन्तीपुत्रं धनञ्जयम् ॥ १०

स तमादाय कौन्तेयो विस्फुरन्तं जलेचरम् ।
उदतिष्ठन्महाबाहुर्बलेन बलिनां वरः ॥ ११
उत्कृष्ट एव ग्राहस्तु सोऽर्जुनेन यशस्विना ।
बभूव नारी कल्याणी सर्वाभरणभूषिता ॥ १२
दीप्यमाना श्रिया राजन्दिव्यरूपा मनोरमा ।
तदद्भुतं महद्दृष्ट्वा कुन्तीपुत्रो धनञ्जयः ॥ १३
तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् ।
का वै त्वमसि कल्याणि कुतो वाऽसि जलेचरी ॥ १४
किमर्थं च महत्पापमिदं कृतवती पुरा ।
वर्गोवाच ।
अप्सराऽस्मि महाबाहो देवारण्यविहारिणी ॥ १५
इष्टा धनपतेर्नित्यं वर्गा नाम महाबल ।
मम सख्यश्चतस्रोऽन्याः सर्वाः कामगमाः शुभाः ॥
ताभिः सार्धं प्रयाताऽस्मि लोकपालनिवेशनम् ।
ततः पश्यामहे सर्वा ब्राह्मणं संशितव्रतम् ॥ १७
रूपवन्तमधीयानमेकमेकान्तचारिणम् ।
तस्यैव तपसा राजंस्तद्वनं तेजसा वृतम् ॥ १८
आदित्य इव तं देशं कृत्स्नं सर्वं व्यकाशयत् ।
तस्य दृष्ट्वा तपस्तादृग्रूपं चाद्भुतमुत्तमम् ॥ १९
अवतीर्णाः स्म तं देशं तपोविघ्नचिकीर्षया ।
अहं च सौरभेयी च समीची बुद्बुदा लता ॥ २०
यौगपद्येन तं विप्रमभ्यगच्छाम भारत ।
गायन्त्योऽथ हसन्त्यश्च लोभयित्वा च तं द्विजं २१
स च नास्मासु कृतवान्मनो वीर कथंचन ।
नाकम्पत महातेजाः स्थितस्तपसि निर्मले ॥ २२
सोऽशपत्कुपितोऽस्मांस्तु ब्राह्मणः क्षत्रियर्षभ ।
ग्राहभूता जले यूयं चरिष्यथ शतं समाः ॥ २३

॥ इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥

---

## सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

प्रसादितेन ब्राह्मणेन कृतस्य शापमोचनप्रकारस्य, नारदनिदेशेनैतत्तीर्थागमनस्य च अर्जुनंप्रति वर्गया कथनम् ॥ १ ॥ एतत्कथां श्रुतवता अर्जुनेन ग्राहरूपाणामवशिष्टानां चतसृणामप्यप्सरसां तत्तत्तीर्थेभ्य उद्धरणेन तासां स्वस्वरूपप्राप्तिः ॥२॥ पुनर्मणलूरमागत्य तत्र चित्राङ्गदायां जातं बभ्रुवाहननामानं स्वपुत्रं च स्वश्वशुरे समर्प्य अर्जुनस्य गोकर्णक्षेत्रगमनम् ॥ ३ ॥

वर्गोवाच ।
ततो वयं प्रव्यथिताः सर्वा भारतसत्तम ।
अयाम शरणं विप्रं तं तपोधनमच्युतम् ॥ १
रूपेण वयसा चैव कन्दर्पेण च दर्पिताः ।
अयुक्तं कृतवत्यः स्म क्षन्तुमर्हसि नो द्विज ॥ २
एष एव वधोऽस्माकं स्वयं प्राप्तस्तपोधन ।
यद्वयं संशितात्मानं प्रलोब्धुं त्वामिहागताः ॥ ३
अवध्यास्तु स्त्रियः सृष्टा मन्यन्ते धर्मचारिणः ।
तस्माद्धर्मेण वर्धं त्वं नास्मान्हिंसितुमर्हसि ॥ ४
सर्वभूतेषु धर्मज्ञ मैत्रो ब्राह्मण उच्यते ।
सत्यो भवतु कल्याण एष वादो मनीषिणाम् ॥ ५
शरणं च प्रपन्नानां शिष्टाः कुर्वन्ति पालनम् ।
शरणं त्वां प्रपन्नाः स्म तस्मात्त्वं क्षन्तुमर्हसि ॥ ६
वैशंपायन उवाच ।
एवमुक्तः स धर्मात्मा ब्राह्मणः शुभकर्मकृत् ।
प्रसादं कृतवान्वीर रविसोमसमप्रभः ॥ ७
ब्राह्मण उवाच ।
शतं शतसहस्रं तु सर्वमक्षय्यवाचकम् ।
परिमाणं शतं त्वेतन्नेदमक्षय्यवाचकम् ॥ ८
यदा च वो ग्राहभूता गृह्णन्तीः पुरुषाञ्जले ।
उत्कर्षति जलात्तस्मात्स्थलं पुरुषसत्तमः ॥ ९
तदा यूयं पुनः सर्वाः स्वं रूपं प्रतिपत्स्यथ ।
अनृतं नोक्तपूर्वं मे हसतापि कदाचन ॥ १०
तानि सर्वाणि तीर्थानि ततः प्रभृति चैव ह ।

---

वर्चोवाच इति घ. पाठः १५ षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥
वर्धं वर्धस्व ॥४॥ सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥२३७॥

नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्वशः ।
पुण्यानि च भविष्यन्ति पावनानि मनीषिणां ११
वर्गोवाच ।
ततोऽभिवाद्य तं विप्रं कृत्वा चापि प्रदक्षिणम् ।
अचिन्तयामोऽपसृत्य तस्माद्देशात्सुदुःखिताः १२
क्व नु नाम वयं सर्वाः कालेनाल्पेन तं नरम्।
समागच्छेम यो नस्तद्रूपमापादयेत्पुनः ॥ १३
ता वयं चिन्तयित्वैव मुहूर्तादिव भारत ।
दृष्टवत्यो महाभागं देवर्षिमुत नारदम् ॥ १४
संप्रहृष्टाः स्म तं दृष्ट्वा देवर्षिममितद्युतिम् ।
अभिवाद्य च तं पार्थ स्थिताः स्म व्रीडिताननाः
स नोऽपृच्छद्दुःखमूलमुक्तवत्यो वयं च तम् ।
श्रुत्वा तत्र यथावृत्तमिदं वचनमब्रवीत् ॥ १६
दक्षिणे सागरानूपे पञ्च तीर्थानि सन्ति वै ।
पुण्यानि रमणीयानि तानि गच्छत मा चिरं १७
तत्राशु पुरुषव्याघ्रः पाण्डवेयो धनञ्जयः ।
मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः१८
'इत्युक्त्वा नारदः सर्वास्तत्रैवान्तरधीयत।'
तस्य सर्वा वयं वीर श्रुत्वा वाक्यमितो गताः ।
तदिदं सत्यमेवाद्य मोक्षिताहं त्वयाऽनघ ॥ १९
एतास्तु मम ताः सख्यश्चतस्रोऽन्या जले श्रिताः।
कुरु कर्म शुभं वीर एताः सर्वा विमोक्षय ॥ २०
वैशंपायन उवाच ।
ततस्ताः पाण्डवश्रेष्ठः सर्वा एव विशांपते ।
'अवगाह्य च तत्तीर्थं गृहीतो ग्राहिभिस्तदा ॥२१
ग्राहीभिश्चोत्ततराशु तारयामास तत्क्षणात् ।
सा चाप्सरा बभूवाशु सर्वाभरणभूषिता ॥ २२
एवं क्रमेण ताः सर्वा मोक्षयामास वीर्यवान्॥'२३
उत्थाय च जलात्तस्मात्प्रतिलभ्य वपुः स्वकम् ।
तास्तदाऽप्सरसो राजन्नदृश्यन्त यथा पुरा ॥२४
तीर्थानि शोधयित्वा तु तथानुज्ञाय ताः प्रभुः ।
चित्राङ्गदां पुनर्द्रष्टुं मणलूरं पुनर्ययौ ॥ २५
तस्यामजनयत्पुत्रं राजानं बभ्रुवाहनम् ।
तं दृष्ट्वा पाण्डवो राजंश्चित्रवाहनमब्रवीत् ॥ २६
चित्राङ्गदायाः शुल्कं त्वं गृहाण बभ्रुवाहनम् ।
अनेन च भविष्यामि ऋणान्मुक्तो नराधिप॥२७
चित्राङ्गदां पुनर्वाक्यमब्रवीत्पाण्डुनन्दनः ।
इहैव भव भद्रं ते वर्धेथा बभ्रुवाहनम् ॥ २८
इन्द्रप्रस्थनिवासं मे त्वं तत्रागत्य रंस्यसि ।
कुन्ती युधिष्ठिरं भीमं भ्रातरौ मे कनीयसौ ॥२९
आगत्य तत्र पश्येथा अन्यानपि च बान्धवान् ।
बान्धवैः सहिताः सर्वैर्नन्दसे त्वमनिन्दिते॥३०
धर्मे स्थितः सत्यधृतिः कौन्तेयोऽथ युधिष्ठिरः ।
जित्वा तु पृथिवीं सर्वां राजसूयं करिष्यति ॥ ३१
तत्रागच्छन्ति राजानः पृथिव्यां नृपसंज्ञिताः ।
बहूनि रत्नान्यादाय आगमिष्यति ते पिता ॥ ३२
एकसार्थं प्रयातासि चित्रवाहनसेवया ।
द्रक्ष्यामि राजसूये त्वां पुत्रं पालय मा शुचः ३३
बभ्रुवाहननाम्ना तु मम प्राणो बहिश्चरः ।
तस्माद्भरस्व पुत्रं वै पुरुषं वंशवर्धनम् ॥ ३४
चित्रवाहनदायादं धर्मात्पौरवनन्दनम् ।
पाण्डवानां प्रियं पुत्रं तस्मात्पालय सर्वदा ॥ ३५
विप्रयोगेण संतापं मा कृथास्त्वमनिन्दिते ।
चित्राङ्गदामेवमुक्त्वा 'सागरानूपमाश्रितः ॥ ३६
स्थानं दूरं समाप्लुत्य दत्त्वा बहुधनं तदा ।
केरलान्समतिक्रम्य' गोकर्णमभितोऽगमत् ॥ ३७
आद्यं पशुपतेः स्थानं दर्शनादेव मुक्तिदम् ।
यत्र पापोऽपि मनुजः प्राप्नोत्यभयदं पदम्॥ ३८

॥ इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

## अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

अर्जुनस्य प्रभासतीर्थगमनम् ॥ १ ॥ तत्र स्मृतिपथागतसुभद्रारूपलावण्यादिकं चिन्तयतोऽर्जुनस्य परिव्राजकवेषस्वीकारेण तस्या हरणे निश्चयः ॥ २ ॥ अर्जुनस्य चिन्तितज्ञानेन हसता श्रीकृष्णेन सह शायिन्या सत्यभामया हासकारणे पृष्टे तांप्रति अर्जुनवृत्तान्तकथनम् ॥३॥ सत्यभामां शयने विहाय एकाकिना श्रीकृष्णेन प्रभासतीर्थंप्रति प्रस्थानम् ॥ ४ ॥ चारमुखेन अर्जुनस्य तत्रागमनं श्रुत्वा कृष्णस्य तत्रागमनम् ॥ ५ ॥ अर्जुनेन संभाष्य कृष्णस्य द्वारकांप्रति पुनरागमनम् ॥ ६ ॥

वैशंपायन उवाच ।
सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानि च ।
सर्वाण्येवानुपूर्व्येण जगामामितविक्रमः ॥ १
समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च ।
तानि सर्वाणि गत्वा स प्रभासमुपजग्मिवान् ॥२
'चिन्तयामास रात्रौ तु गदेन कथितं पुरा ।
सुभद्रायाश्च माधुर्यरूपसंपद्गुणानि च ॥ ३
प्राप्तुं तां चिन्तयामास कोऽत्रोपायो भवेदिति ।
वेषवैकृत्यमापन्नः परिव्राजकरूपधृत् ॥ ४
कुकुरान्धकवृष्णीनामज्ञातो वेषधारणात् ।
भ्रममाणश्चरन्भैक्षं परिव्राजकवेषवान् ॥ ५
येनकेनाप्युपायेन प्रविश्य च गृहं महत् ।
दृष्ट्वा सुभद्रां कृष्णस्य भगिनीमेकसुन्दरीम् ॥ ६
वासुदेवमतं ज्ञात्वा करिष्यामि हितं शुभम् ।
एवं विनिश्चयं कृत्वा दीक्षितो वै तदाऽभवत् ॥७
त्रिदण्डी मुण्डितः कुण्डी अक्षमालाङ्गुलीयकः ।
योगभारं वहन्पार्थो वटवृक्षस्य कोटरम् ॥ ८
प्रविशंश्चैव बीभत्सुर्वृष्टिं वर्षति वासवे ।
चिन्तयामास देवेशं केशवं क्लेशनाशनम् ॥ ९
केशवश्चिन्तितं ज्ञात्वा दिव्यज्ञानेन दृष्टवान् ।
शयानः शयने दिव्ये सत्यभामासहायवान् ॥ १०
केशवः सहसा राजञ्जहास च ननन्द च ।
पुनः पुनः सत्यभामा चाब्रवीत्पुरुषोत्तमम् ॥ ११
भगवंश्चिन्तयाविष्टः शयने शयितः सुखम् ।
भवान्बहुप्रकारेण जहास च पुनः पुनः ॥ १२
श्रोतव्यं यदि वा कृष्ण प्रसादो यदि ते मयि ।
वक्तुमर्हसि देवेश तच्छ्रोतुं कामयाम्यहम् ॥ १३
श्रीभगवानुवाच ।
पितृष्वसुर्यः पुत्रो मे भीमसेनानुजोऽर्जुनः ।
तीर्थयात्रां गतः पार्थः कारणात्समयात्तदा ॥ १४
तीर्थयात्रासमाप्तौ तु निवृत्तो निशि भारतः ।
सुभद्रां चिन्तयामास रूपेणाप्रतिमां भुवि ॥ १५
चिन्तयन्नेव तां भद्रां यतिरूपधरोऽर्जुनः ।
यतिरूपप्रतिच्छन्नो द्वारकां प्राप्य माधवीम् ॥ १६
येनकेनाप्युपायेन दृष्ट्वा तु वरवर्णिनीम् ।
वासुदेवमतं ज्ञात्वा प्रयतिष्ये मनोरथम् ॥ १७
एवं व्यवसितः पार्थो यतिलिङ्गेन पाण्डवः ।
छायायां वटवृक्षस्य वृष्टिं वर्षति वासवे ॥ १८
योगभारं वहन्नेव मानसं दुःखमाप्तवान् ।
एतदर्थं विजानीहि हसन्तं मां मुदा प्रिये ॥ १९
भ्रातरं तव पश्येति सत्यभामां व्यसर्जयत् ।
तत उत्थाय शयनात्प्रस्थितो मधुसूदनः ॥' २०
प्रभासदेशं संप्राप्तं बीभत्सुमपराजितम् ।
तीर्थान्यनुचरन्तं तं शुश्राव मधुसूदनः ॥ २१
चाराणां चैव वचनादेकाकी स जनार्दनः ।
तत्राभ्यगच्छत्कौन्तेयं महात्मानं स माधवः २२
ददृशाते तदान्योन्यं प्रभासे कृष्णपाण्डवौ ॥ २३
तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं वने ।
आस्तां प्रियसखायौ तौ नरनारायणावृषी ॥२४
ततोऽर्जुनं वासुदेवस्तां चर्यां पर्यपृच्छत ।
किमर्थं पाण्डवैतानि तीर्थान्यनुचरस्युत ॥ २५
ततोऽर्जुनो यथावृत्तं सर्वमाख्यातवांस्तदा ।
श्रुत्वोवाच च वार्ष्णेय एवमेतदिति प्रभुः ॥ २६
तौ विहृत्य यथाकामं प्रभासे कृष्णपाण्डवौ ।
महीधरं रैवतकं वासायैवाभिजग्मतुः ॥ २७
पूर्वमेव तु कृष्णस्य वचनात्तं महीधरम् ।
पुरुषा मण्डयाञ्चक्रुरुपजह्रुश्च भोजनम् ॥ २८
प्रतिगृह्यार्जुनः सर्वमुपभुज्य च पाण्डवः ।
सहैव वासुदेवेन दृष्टवान्नटनर्तकान् ॥ २९

अपरान्तेषु पश्चिमसमुद्रतीरेषु ॥ १ ॥

अभ्यनुज्ञाय तान्सर्वानर्चयित्वा च पाण्डवः ।
सत्कृतं शयनं दिव्यमभ्यगच्छन्महामतिः ॥ ३०
ततस्तत्र महाबाहुः शयानः शयने शुभे ।
तीर्थानां पल्वलानां च पर्वतानां च दर्शनम् ।
आपगानां वनानां च कथयामास सात्वते ॥ ३१
एवं स कथयन्नेव निद्रया जनमेजय ।
कौन्तेयोऽपि हृतस्तस्मिञ्शयने स्वर्गसन्निभे ॥ ३२
मधुरेणैव गीतेन वीणाशब्देन चैव ह ।
प्रबोध्यमानो बुबुधे स्तुतिभिर्मङ्गलैस्तथा ॥ ३३
स कृत्वाऽवश्यकार्याणि वार्ष्णेयेनाभिनन्दितः ।
'वार्ष्णेयं समनुज्ञाप्य तत्र वासमरोचयत् ॥ ३४
तथेत्युक्त्वा वासुदेवो भोजनं वै शशास ह ।
यतिरूपधरं पार्थं विसृज्य सहसा हरिः ।'
रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् ॥ ३५
अलङ्कृता द्वारका तु बभूव जनमेजय ॥ ३६
दिदृक्षन्तश्च गोविन्दं द्वारकावासिनो जनाः ।
नरेन्द्रमार्गमाजग्मुस्तूर्णं शतसहस्रशः ॥ ३७
'क्षणार्धमपि वार्ष्णेया गोविन्दविरहाक्षमाः ।
कौतूहलसमाविष्टा भृशमुत्प्रेक्ष्य संस्थिताः ॥'३८
अवलोकेषु नारीणां सहस्राणि शतानि च ।
भोजवृष्ण्यन्धकानां च समवायो महानभूत् ॥३९
स तथा सत्कृतः सर्वैर्भोजवृष्ण्यन्धकात्मजैः ।
अभिवाद्याभिवाद्यांश्च सर्वैश्च प्रतिनन्दितः ॥४०
कुमारैः सर्वशो वीरः सत्कारेणाभिचोदितः ।
समानवयसः सर्वानाश्लिष्य स पुनःपुनः ॥ ४१
कृष्णः स्वभवनं रम्यं प्रविवेश महाबलः ।
प्रभासादागतं देव्यः सर्वाः कृष्णमपूजयन् ॥४२

॥ इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

॥ समाप्तं चार्जुनवनवासपर्व ॥

---

# (अथ सुभद्राहरणपर्व ॥ १६ ॥)

## ऊनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

रैवतकपर्वतंप्रति उत्सवार्थं कृष्णादीनां गमनम् ॥ १ ॥ तत्र कृष्णस्य परिव्राजकरूपार्जुनदर्शनम् ॥ २ ॥ सुभद्रादर्शनेन तस्यां संजातहृच्छयस्यार्जुनस्य यतिरूपेण सुभद्राहरणे कृष्णानुज्ञालाभः ॥ ३ ॥ दूतैर्निवेदितैतद्वृत्तान्तेन सपरिवारेण युधिष्ठिरेणाभ्यनुज्ञानम् ॥ ४ ॥

वैशंपायन उवाच ।
ततः कतिपयाहस्य तस्मिन्रैवतके गिरौ ।
वृष्ण्यन्धकानामभवदुत्सवो नृपसत्तम ॥ १
तत्र दानं ददुर्वीरा ब्राह्मणेभ्यः सहस्रशः ।
भोजवृष्ण्यन्धकाश्चैव महे तस्य गिरेस्तदा ॥ २
प्रासादै रत्नचित्रैश्च गिरेस्तस्य समन्ततः ।
स देशः शोभितो राजन्कल्पवृक्षैश्च सर्वशः ॥ ३
वादित्राणि च तत्रान्ये वादकाः समवादयन् ।
ननृतुर्नर्तकाश्चैव जगुर्गेयानि गायनाः ॥ ४
अलङ्कृताः कुमाराश्च वृष्णीनां सुमहौजसाम् ।
यानैर्हाटकचित्रैश्च चञ्चूर्यन्ते स्म सर्वशः ॥ ५
पौराश्च पादचारेण यानैरुच्चावचैस्तथा ।
सदाराः सानुयात्राश्च शतशोऽथ सहस्रशः ॥ ६
ततो हलधरः क्षीबो रेवतीसहितः प्रभुः ।

---

अलंकृता द्वारका तु बभूव जनमेजय । कुन्तीपुत्रस्य पूजार्थमपि निष्कुटकेष्वपि ॥ इति च, ज, झ, ञ, ड, पाठः ॥ ३६ ॥ दिदृक्षन्तश्च कौन्तेयं इति च, ज, झ, ञ, ड, पाठः ॥ ३७ ॥ कृष्णस्य भवने रम्ये रत्नभोज्यसमावृते । उवास सह कृष्णेन बहुलास्तत्र शर्वरीः ॥ इति च, ज, झ, ञ, ड, पाठः ॥ ४२ ॥ अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

चञ्चूर्यन्ते देदीप्यन्ते ॥ ५ ॥ क्षीबो मधुमत्तः ॥ ७ ॥

अनुगम्यमानो गन्धर्वैरचरत्तत्र भारत ॥ ७
तथैव राजा वृष्णीनामुग्रसेनः प्रतापवान् ।
अनुगीयमानो गन्धर्वैः स्त्रीसहस्रसहायवान् ॥ ८
रौक्मिणेयश्च साम्बश्च क्षीबौ समरदुर्मदौ ।
दिव्यमाल्याम्बरधरौ विजह्रातेऽमराविव ॥ ९
अक्रूरः सारणश्चैव गदो बभ्रुर्विदूरथः ।
निशठश्चारुदेष्णश्च पृथुर्विपृथुरेव च ॥ १०
सत्यकः सात्यकिश्चैव भङ्गकारमहारवौ ।
हार्दिक्य उद्धवश्चैव ये चान्ये नानुकीर्तिताः ॥ ११
एते परिवृताः स्त्रीभिर्गन्धर्वैश्च पृथक्पृथक् ।
तमुत्सवं रैवतके शोभयाञ्चक्रिरे तदा ॥ १२
'वासुदेवो ययौ तत्र सह स्त्रीभिर्मुदान्वितः ।
दत्त्वा दानं द्विजातिभ्यः परिव्राजमपश्यत ॥' १३
चित्रकौतूहले तस्मिन्वर्तमाने महाद्भुते ।
वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः ॥ १४
तत्र चङ्क्रममाणौ तौ वसुदेवसुतां शुभाम् ।
अलङ्कृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥ १५
दृष्ट्वैव तामर्जुनस्य कन्दर्पः समजायत ।
तं तदेकाग्रमनसं कृष्णः पार्थमलक्षयत् ॥ १६
अब्रवीत्पुरुषव्याघ्रः प्रहसन्निव भारत ।
वनेचरस्य किमिदं कामेनालोड्यते मनः ॥ १७
ममैषा भगिनी पार्थ सारणस्य सहोदरी ।
सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता ।
यदि ते वर्तते बुद्धिर्वक्ष्यामि पितरं स्वयम् ॥ १८

अर्जुन उवाच ।
दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैषा संपन्ना कमिवैषा न मोहयेत् ॥ १९
कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम् ।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥ २०
प्राप्तौ तु क उपायः स्यात्तं ब्रवीहि जनार्दन ।
आस्थास्यामि तदा सर्वं यदि शक्यं नरेण तत् ॥ २१
वासुदेव उवाच ।
स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥ २२
प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतुः शूराणामिति धर्मविदो विदुः ॥ २३
स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम ।
'यतिरूपधरस्त्वं तु यथा कालविपाकता ।'
हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥ २४
वैशंपायन उवाच ।
ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम् ।
शीघ्रगान्पुरुषानन्यान्प्रेषयामासतुस्तदा ॥ २५
धर्मराजाय तत्सर्वमिन्द्रप्रस्थगताय वै ।
श्रुत्वैव च महाबाहुरनुजज्ञे समातृकः ॥ २६
'भीमसेनस्तु तच्छ्रुत्वा कृतकृत्यं स मन्यते ।
इत्येवं मनुजैरुक्तं कृष्णः श्रुत्वा महामतिः ॥ २७
अनुज्ञाप्य तदा पार्थं हृदि स्थाप्य चिकीर्षितम् ।
इत्येवं मनुजैः सार्धं द्वारकां समुपेयिवान् ॥ २८

॥ इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि ऊनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

## चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

द्वारकाया उपवने वसतः यतिरूपस्यार्जुनस्य रैवतकपर्वतात्प्रतिनिवृत्तैर्यादवैर्दर्शनम् ॥ १ ॥ यतिनिवासविषये यादवैः पृष्टे सुभद्रागृहे वसत्विति रामोक्तिः ॥ २ ॥

वैशंपायन उवाच ।
चारैः संचारिते तस्मिन्ननुज्ञाते युधिष्ठिरे ।
वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम् ॥ १
कृष्णस्य मतमास्थाय प्रययौ भरतर्षभः ।
द्वारकाया उपवने तस्थौ वै कार्यसाधनः ॥ २
निवृत्ते ह्युत्सवे तस्मिन्गिरौ रैवतके तदा ।

---

स्वभावस्यानिमित्ततः स्त्रीचित्तस्य शौर्यपाण्डित्याद्यनपेक्षत्वात् । स्त्रियो ह्यपरीक्षितेपि पुंसि आपाततो रमणीये सद्यः सकामा भवन्तीति भावः ॥ २२ ॥ ऊनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

वृष्णयोऽप्यगमन्सर्वे पुरीं द्वारवतीमनु ॥ ३
चिन्तयानस्ततो भद्रामुपविष्टः शिलातले ।
रमणीये वनोद्देशे बहुपादपसंवृते ॥ ४
सालतालाश्वकर्णैश्च बकुलैरर्जुनैस्तथा ।
चम्पकाशोकपुन्नागैः केतकैः पाटलैस्तथा ॥ ५
कर्णिकारैरशोकैश्च अङ्कोलैरतिमुक्तकैः ।
एवमादिभिरन्यैश्च संवृते स शिलातले ॥ ६
पुनःपुनश्चिन्तयानः सुभद्रां भद्रभाषिणीम् ।
यदृच्छया चोपपन्नान्वृष्णिवीरान्ददर्श सः ॥ ७
बलदेवं च हार्दिक्यं साम्बं सारणमेव च ।
प्रद्युम्नं च गदं चैव चारुदेष्णं विदूरथम् ॥ ८
भानुं च हरितं चैव विपृथुं पृथुमेव च ।
तथान्यांश्च बहून्पश्यन्हृदि शोकमधारयत् ॥ ९
ततस्ते सहिताः सर्वे यतिं दृष्ट्वा समुत्सुकाः ।
वृष्णयो विनयोपेताः परिवार्योपतस्थिरे ॥ १०
ततोऽर्जुनः प्रीतमनाः स्वागतं व्याजहार सः ।
आस्यतामास्यतां सर्वे रमणीये शिलातले ॥ ११
इत्येवमुक्ता यतिना प्रीतास्ते यादवर्षभाः ।
उपोपविविशुः सर्वे ते स्वागतमिति ब्रुवन् ॥ १२
परितः सन्निविष्टेषु वृष्णिवीरेषु पाण्डवः ।
आकारं गूहमानस्तु कुशलप्रश्नमब्रवीत् ॥ १३
सर्वत्र कुशलं चोक्त्वा बलदेवोऽब्रवीदिदम् ।
प्रसादं कुरु मे विप्र कुतस्त्वं चागतो ह्यसि ॥ १४
त्वया दृष्टानि पुण्यानि वद त्वं वदतांवर ।
पर्वतांश्चैव तीर्थानि वनान्यायतनानि च ॥ १५
वैशंपायन उवाच ।
तीर्थानां दर्शनं चैव पर्वतानां च भारत ।
आपगानां वनानां च कथयामास ताः कथाः १६
श्रुत्वा धर्मकथाः पुण्या वृष्णिवीरा मुदान्विताः ।
अपूजयंस्तदा भिक्षुं कथान्ते जनमेजय ॥ १७
ततस्तु यादवाः सर्वे मन्त्रयन्ति स्म भारत ।
अयं देशातिथिः श्रीमान्यतिलिङ्गधरो द्विजः ॥१८
आवासं कमुपाश्रित्य वसेत निरुपद्रवः ।
इत्येवं प्रब्रुवन्तस्तु रौहिणेयं च यादवाः ॥ १९
ददृशुः कृष्णमायान्तं सर्वे यादवनन्दनम् ।
एहि केशव तातेति रौहिणेयो वचोऽब्रवीत् ॥२०
यतिलिङ्गधरो विद्वान्देशातिथिरयं द्विजः ।
वर्षमासनिवासार्थमागतो नः पुरं प्रति ।
स्थाने यस्मिन्निवसतु तन्मे ब्रूहि जनार्दन ॥ २१
श्रीकृष्ण उवाच ।
त्वयि स्थिते महाभाग परवानस्मि धर्मतः ।
स्वयं तु रुचिरे स्थाने वासयेर्यदुनन्दन ॥ २२
प्रीतः स तेन वाक्येन परिष्वज्य जनार्दनम् ।
बलदेवोऽब्रवीद्वाक्यं चिन्तयित्वा महाबलः ॥ २३
आरामे तु वसेद्धीमांश्चतुरो वर्षमासकान् ।
कन्यागृहे सुभद्राया भुक्त्वा भोजनमिच्छया ॥२४
लतागृहेषु वसतामिति मे धीयते मतिः ।
लब्धानुज्ञास्त्वया तात मन्यन्ते सर्वयादवाः ॥२५
श्रीकृष्ण उवाच ।
बलवान्दर्शनीयश्च वाग्मी श्रीमान्बहुश्रुतः ।
कन्यापुरसमीपे तु न युक्तमिति मे मतिः ॥ २६
गुरुः शास्ता च नेता च शास्त्रज्ञो धर्मवित्तमः ।
त्वयोक्तं न विरुध्येहं करिष्यामि वचस्तव ॥ २७
शुभाशुभस्य विज्ञाता नान्योऽस्ति भुवि कश्चन २८
बलदेव उवाच ।
अयं देशातिथिः श्रीमान्सर्वधर्मभृतां वरः ।
धृतिमान्विनयोपेतः सत्यवादी जितेन्द्रियः ॥२९
यतिलिङ्गधरो ह्येष को विजानाति मानसम् ।
त्वमिमं पुण्डरीकाक्ष नीत्वा कन्यापुरं शुभम् ३०
निवेदय सुभद्रायै मद्वाक्यपरिचोदितः ।
भक्ष्यैर्भोज्यैश्च पानैश्च अन्नैरिष्टैश्च पूजय ॥ ३१

॥ इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

## एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

यतेः सुभद्रागृहे कृष्णेन स्थापनम् ॥ १ ॥ श्रुतपूर्वपार्थलक्षणदर्शनेन इमं यतिं अर्जुनं शङ्कमानायाः सुभद्रायाः यतिं प्रति अर्जुनादिकुशलप्रश्नः ॥ २ ॥ अर्जुनेन तत्वे कथिते मोहितायां सुभद्रायां रुक्मिण्या श्वश्रूसमीपे तद्वृत्तकथनम् ॥ ३ ॥ वासुदेवानुमत्या देवक्या सुभद्राश्वासनम् ॥ ४ ॥ गूढं सुभद्राया विवाहचिकीर्षया कृष्णेन महादेवपूजाव्याजेन सर्वयादवैः सह अन्तर्द्वीपगमनम् ॥ ५ ॥

वैशंपायन उवाच ।
स तथेति प्रतिज्ञाय सहितो यतिना हरिः ।
कृत्वा तु संविदं तेन प्रहृष्टः केशवोऽभवत् ॥ १
पर्वते तौ विहृत्यैव यथेष्टं कृष्णपाण्डवौ ।
तां पुरीं प्रविवेशाथ गृह्य हस्तेन पाण्डवम् ।
प्रविश्य च गृहं रम्यं सर्वभोगसमन्वितम् ॥ २
पार्थमावेदयामास रुक्मिणीसत्यभामयोः ।
हृषीकेशवचः श्रुत्वा ते उभे चोचतुर्भृशम् ॥ ३
मनोरथो महानेष हृदि नौ परिवर्तते ।
कदा द्रक्षाव बीभत्सुं पाण्डवं पुरमागतम् ॥ ४
इत्येवं हर्षमाणे ते वदन्त्यौ सुभृशं प्रियम् ।
रुग्मिणीसत्यभामे वै दृष्ट्वा प्रीतोऽभवद्यतिः ॥ ५
सर्वेषां हर्षमाणानां पार्थो हर्षमुपागमत् ।
प्राप्तमज्ञातरूपेण चागतं चार्जुनं हरिः ॥ ६
सत्कृत्य पूज्यमानं तु प्रीत्या चैव ह्यपूजयत् ।
स तं प्रियातिथिं श्रेष्ठं समीक्ष्य यतिमागतम् ॥७
सोदर्यां भगिनीं कृष्णः सुभद्रामिदमब्रवीत् ।
अयं देशातिथिर्भद्रे संशितव्रतवान्नृपिः ॥ ८
प्राप्नोतु सततं पूजां तव कन्यापुरे वसन् ।
आर्येण च परिज्ञातः पूजनीयो यतिस्त्वया ॥ ९
रागाद्भरस्व वार्ष्णेयि भक्ष्यैर्भोज्यैर्यतिं सदा ।
एप यद्यदपिर्ब्रूयात्कार्यमेव न संशयः ॥ १०
सखीभिः सहिता भद्रे भवास्य वशवर्तिनी ।
पुरा हि यतयो भद्रे ये भैक्षार्थमनुव्रताः ॥ ११
ते बभूवुर्दशार्हाणां कन्यापुरनिवासिनः ।
तेभ्यो भोज्यानि भक्ष्याणि यथाकालमतन्द्रिताः
कन्यापुरगताः कन्याः प्रयच्छन्ति यशस्विनि॥१२
वैशंपायन उवाच ।
सा तथेत्यब्रवीत्कृष्णं करिष्यामि यथाऽऽत्थ माम्
तोपयिष्यामि वृत्तेन कर्मणा च द्विजर्षभम् ॥१३

एवमेतेन रूपेण कंचित्कालं धनञ्जयः ।
उवास भक्ष्यैर्भोज्यैश्च भद्रया परमार्चितः ॥ १४
तस्य सर्वगुणोपेतां वासुदेवसहोदरीम् ।
पश्यतः सततं भद्रां प्रादुरासीन्मनोभवः ॥ १५
गूहयन्निव चाकारमालोक्य वरवर्णिनीम् ।
दीर्घमुष्णं विनिश्वस्य पार्थः कामवशं गतः ॥१६
स कृष्णां द्रौपदीं मेने न रूपे भद्रया समाम् ।
प्राप्तां भूमाविन्द्रसेनां साक्षाद्वा वरुणात्मजाम्१७
अतीतकाले संप्राप्ते सर्वास्तापि सुरस्त्रियः ।
न समा भद्रया लोके इत्येवं मन्यतेऽर्जुनः ॥१८
अतीतसमये काले सोदर्याणां धनञ्जयः ।
न सस्मार सुभद्रायां कामाङ्कुशनिवारितः ॥ १९
क्रीडारतिपरां भद्रां सखीगणसमावृताम् ।
प्रीयते सार्जुनः पश्यन्स्वाहामिव विभावसुः॥२०
पाण्डवस्य सुभद्रायाः सकाशे तु यशस्विनः ।
समुत्पत्तिः प्रभावश्च गदेन कथितः पुरा ॥ २१
श्रुत्वा चाशनिनिर्घोषं केशवेनापि धीमता ।
उपमामर्जुनं कृत्वा विस्तरः कथितः पुरा ॥ २२
क्रुद्धमानप्रलापश्च वृष्णीनामर्जुनं प्रति ।
पौरुषं चोपमां कृत्वा प्रावर्तत धनुष्मताम् ॥२३
अन्योन्यकलहे चापि विवादे चापि वृष्णयः ।
अर्जुनोपि न मे तुल्यः कुतस्त्वमिति चाब्रुवन्२४
जातांश्च पुत्रान्गृह्णन्त आशिषो वृष्णयोऽब्रुवन् ।
अर्जुनस्य समो वीर्ये भव तात धनुर्धरः ॥ २५
तस्मात्सुभद्रा चकमे पौरुषाद्भरतर्षभम् ।
सत्यसन्धस्य रूपेण चातुर्येण च मोहिता ॥ २६
चारणातिथिसंघानां गदस्य च निशम्य सा ।
अदृष्टे कृतभावाभूत्सुभद्रा भरतर्षभे ॥ २७
कीर्तयन्ददृशे यो यः कथंचित्कुरुजाङ्गलम् ।
तं तमेव तदा भद्रा बीभत्सुं स हि पृच्छति॥२८

अभीक्ष्णश्रवणादेवमभीक्ष्णपरिपृच्छनात् ।
प्रत्यक्ष इव भद्रायाः पाण्डवः प्रत्यपद्यत ॥ २९
भुजौ भुजगसङ्काशौ ज्याघातेन किणीकृतौ ।
पार्थोऽयमिति पश्यन्त्या निःसंशयमजायत ॥३०
यथारूपं हि शुश्राव सुभद्रा भरतर्षभम् ।
तथारूपमवेक्ष्यैनं परां प्रीतिमवाप सा ॥ ३१
सा कदाचिदुपासीनं पप्रच्छ कुरुनन्दनम् ।
कथं देशाश्च चरिता नानाजनपदाः कथम् ॥३२
सरांसि सरितश्चैव वनानि च कथं यते ।
दिशः काश्च कथं प्राप्ताश्चरता भवता सदा ॥३३
स तथोक्तस्तदा भद्रां बहुनर्मामृतं ब्रुवन् ।
उवाच परमप्रीतस्तथा बहुविधाः कथाः ॥ ३४
निशम्य विविधं तस्य लोके चरितमात्मनः ।
तथा परिगतो भावः कन्यायाः समपद्यत ॥ ३५
पर्वसन्धौ तु कस्मिंश्चित्सुभद्रा भरतर्षभम् ।
रहस्येकान्तमासाद्य हर्षमाणाऽभ्यभाषत ॥ ३६
यतिना चरता देशान्खाण्डवप्रस्थवासिनी ।
कच्चिद्भगवता दृष्टा पृथाऽस्माकं पितृष्वसा ॥३७
भ्रातृभिः प्रीयते सर्वैर्दृष्टः कच्चिद्युधिष्ठिरः ।
कच्चिद्धर्मपरो भीमो धर्मराजस्य धीमतः ॥ ३८
निवृत्तसमयः कच्चिदपराधाद्धनञ्जयः ।
नियमे कामभोगानां वर्तमानः प्रिये रतः ॥ ३९
क्व नु पार्थश्चरत्यद्य बहिः स वसतीर्वसन् ।
सुखोचितो ह्यदुःखार्हो दीर्घबाहुररिन्दमः ॥ ४०
कच्चिच्छ्रुतो वा दृष्टो वा पार्थो भगवताऽर्जुनः ।
निशम्य वचनं तस्यास्तामुवाच हसन्निव ॥ ४१
आर्या कुशलिनी कुन्ती सहपुत्रा सहस्नुषा ।
प्रीयते पश्यती पुत्रान्खाण्डवप्रस्थ आसते ॥ ४२
अनुज्ञातश्च मात्रा च सोदरैश्च धनञ्जयः ।
द्वारकामावसत्येको यतिलिङ्गेन पाण्डवः ॥ ४३
पश्यन्ती सततं कस्मान्नाभिजानासि माधवि ।
निशम्य वचनं तस्य वासुदेवसहोदरी ॥ ४४
निश्वासबहुला तस्थौ क्षितिं विलिखती तदा ।
ततः परमसंहृष्टः सर्वशस्त्रभृतां वरः ॥ ४५
अर्जुनोऽहमिति प्रीतस्तामुवाच धनञ्जयः ।
यथा तव गतो भावः श्रवणान्मयि भामिनि ॥४६
त्वद्गतः सततं भावस्तथा तव गुणैर्मम ।
प्रशस्तेऽहनि धर्मेण भद्रे स्वयमहं वृतः ॥ ४७
सत्यवानिव सावित्र्या भविष्यामि पतिस्तव ॥४८

वैशंपायन उवाच ।

एवमुक्त्वा ततः पार्थः प्रविवेश लतागृहम् ।
ततः सुभद्रा ललिता लज्जाभावसमन्विता ॥४९
मुमोह शयने दिव्ये शयाना न तथोचिता ।
नाकरोद्यतिपूजां सा लज्जाभावमुपेयुषी ॥ ५०
कन्यापुरे तु यद्वृत्तं ज्ञात्वा दिव्येन चक्षुषा ।
शशास रुक्मिणीं कृष्णो भोजनादि तदार्जुने ॥५१
तदाप्रभृति तां भद्रां चिन्तयन्वै धनञ्जयः ।
आस्ते स स तदाऽऽरामे कामेन भृशपीडितः ॥५२
सुभद्रा चापि न स्वस्था पार्थं प्रति बभूव सा ।
कृशा विवर्णवदना चिन्ताशोकपरायणा ॥ ५३
निश्वासपरमा भद्रा मानसेन मनस्विनी ।
न शय्यासनभोगेषु रतिं विन्दति केनचित् ॥ ५४
न नक्तं न दिवा शेते बभूवोन्मत्तदर्शना ।
एवं शोकपरां भद्रां देवी वाक्यमथाब्रवीत् ।
मा शोकं कुरु वार्ष्णेयि धृतिमालम्ब्य शोभने ५५
रुक्मिण्येवं सुभद्रां तां कृष्णस्यानुमते तदा ।
रहोगत्य तदा श्वश्रूं देवकीं वाक्यमब्रवीत् ॥ ५६
अर्जुनो यतिरूपेण ह्यागतः सुसमाहितः ।
कन्यापुरमथाविश्य पूजितो भद्रया मुदा ॥ ५७
तं विदित्वा सुभद्रापि लज्जया परिमोहिता ।
दिवानिशं शयाना सा नाकरोद्भोजनादिकम् ५८
एवमुक्ता तया देवी भद्रां शोकपरायणाम् ।
तत्समीपं समागत्य श्लक्ष्णं वाक्यमथाब्रवीत् ५९
मा शोकं कुरु वार्ष्णेयि धृतिमालम्ब्य शोभने ।
राज्ञे निवेदयित्वापि वसुदेवाय धीमते ॥ ६०
कृष्णायापि तथा भद्रे प्रहर्षं कारयामि ते ।
पश्चाज्जानामि ते वार्तां मा शोकं कुरु भामिनि ६१
एवमुक्त्वा तु सा माता भद्रायाः प्रियकारिणी ।

निवेदयामास तदा भद्रामानकदुन्दुभेः ॥ ६२
रहस्येकासना तत्र भद्राऽस्वस्थेति चाब्रवीत् ।
आरामे तु यतिः श्रीमानर्जुनश्चेति नः श्रुतम् ६३
अक्रूराय च कृष्णाय आहुकाय च सात्यके ।
निवेद्यतां महाप्राज्ञ श्रोतव्यं यदि बान्धवैः॥ ६४
वैशंपायन उवाच ।
वसुदेवस्तु तच्छ्रुत्वा अक्रूराहुकयोस्तथा ।
निवेदयित्वा कृष्णेन मन्त्रयामास तैस्तदा ॥ ६५
इदं कार्यमिदं कृत्यमिदमेवेति निश्चितः ।
अक्रूरश्चोग्रसेनश्च सात्यकिश्च गदस्तथा ॥ ६६
पृथुश्रवाश्च कृष्णश्च सहिताः शिनिना मुहुः ।
रुक्मिणी सत्यभामा च देवकी रोहिणी तथा ६७
वसुदेवेन सहिताः पुरोहितमते स्थिताः ।
विवाहं मन्त्रयामासुर्द्वादशेऽहनि भारत ॥ ६८
अज्ञातं रौहिणेयस्य उद्धवस्य च भारत ।
विवाहं तु सुभद्रायाः कर्तुकामो गदाग्रजः ॥६९
महादेवस्य पूजार्थं महोत्सव इति ब्रुवन् ।
चतुर्स्त्रिंशदहोरात्रं सुभद्रार्तिप्रशान्तये ॥ ७०
नगरे घोषयास हितार्थं सव्यसाचिनः ।
इतश्चतुर्थे त्वहनि अन्तर्द्वीपं तु गम्यताम् ॥ ७१
सदारैः सानुयात्रैश्च सपुत्रैः सहबाधवैः ।
गन्तव्यं सर्ववर्णैश्च गन्तव्यं सर्वयादवैः ॥ ७२
एवमुक्तास्तु ते सर्वे तथा चक्रुश्च सर्वशः ।
ततः सर्वदशार्हाणामन्तर्द्वीपे च भारत ॥ ७३
चतुर्स्त्रिंशदहोरात्रं बभूव परमोत्सवः ।
कृष्णरामाहुकाक्रूरप्रद्युम्नशिनिसत्यकाः ॥ ७४
समुद्रं प्रययुर्हृष्टाः कुकुरान्धकवृष्णयः ।
युक्तयन्त्रपताकाभिर्वृष्णयो ब्राह्मणैः सह ॥ ७५
समुद्रं प्रययुर्नौभिः सर्वे पुरनिवासिनः ।
ततस्त्वरितमागत्य दाशार्हगणपूजितम् ॥ ७६
सुभद्रा पुण्डरीकाक्षमब्रवीद्यतिशासनात् ।
कृत्यवान्द्वादशाहानि स्थाता स भगवानिह॥७७
तिष्ठतस्तस्य कः कुर्यादुपस्थानविधिं सदा ।
तमुवाच हृषीकेशः कस्त्वदन्यो विशेषतः ॥ ७८
तमृषिं प्रत्युपस्थातुमितो नार्हति माधवि ।
त्वमेवास्सन्मतेनाद्य महर्षेर्वशवर्तिनी ॥ ७९
कुरु सर्वाणि कार्याणि कीर्तिं धर्ममवेक्ष्य च ।
तस्य चातिथिमुख्यस्य सर्वेषां च तपस्विनाम् ८०
संविधानपरा भद्रे भव त्वं वशवर्तिनी ॥ ८१
वैशंपायन उवाच ।
एवमादिश्य भिक्षां च भद्रां च मधुसूदनः ।
ययौ शङ्खप्रणादेन भेरीणां निस्वनेन च ॥ ८२
ततस्तु द्वीपमासाद्य दानधर्मपरायणाः ।
उग्रसेनमुखाश्चान्ये विजह्रुः कुकुरान्धकाः ॥ ८३
पटहानां प्रणादैश्च भेरीणां निस्वनेन च ।
सप्तयोजनविस्तार आयतो दशयोजनम् ॥ ८४
बभूव स महाद्वीपः सपर्वतमहावनः ।
सेतुपुष्करिणीजालैराक्रीडः सर्वसात्वताम् ॥ ८५
वापीपल्वलसङ्घैश्च काननैश्च मनोरमैः ।
वासुदेवस्य क्रीडार्थे योग्यः सर्वप्रहर्षतः ॥ ८६
कुकुरान्धकवृष्णीनां तथा प्रियकरस्तदा ।
बभूव परमोपेतस्त्रिविष्टप इवापरः ॥ ८७
चतुर्स्त्रिंशदहोरात्रं दानधर्मपरायणाः ।
उग्रसेनमुखाः सर्वे विजह्रुः कुकुरान्धकाः ॥ ८८
विचित्रमाल्याभरणाश्चित्रगन्धानुलेपनाः ।
विहाराभिगताः सर्वे यादवा हर्षसंयुताः ॥ ८९
सुनृत्तगीतवादित्रै रममाणास्तदाऽभवन् ।
प्रतियाते दशार्हाणामृषभे शार्ङ्गधन्वनि ।
सुभद्रोद्वाहनं पार्थः प्राप्तकालममन्यत ॥ ९०

॥ इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

## द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

सुभद्राविवाहः ॥ १ ॥

वैशंपायन उवाच ।
कुकुरान्धकवृष्णीनामपयानं च पाण्डवः ।
विनिश्चित्य ततः पार्थः सुभद्रामिदमब्रवीत् ॥ १
शृणु भद्रे यथाशास्त्रं हितार्थं मुनिभिः कृतम् ।
विवाहं बहुधा सत्सु वर्णानां धर्मसंयुतम् ॥ २
कन्यायास्तु पिता भ्राता माता मातुल एव वा ।
पितुः पिता पितुर्भ्राता दाने तु प्रभुतां गतः ॥३
महोत्सवं पशुपतेर्द्रष्टुकामः पिता तव ।
अन्तर्द्वीपं गतो भद्रे पुत्रैः पौत्रैः सबान्धवैः ॥ ४
मम चैव विशालाक्षि विदेशस्था हि बान्धवाः ।
तस्मात्सुभद्रे गान्धर्वो विवाहः पञ्चमः स्मृतः॥५
समागमे तु कन्यायाः क्रियाः प्रोक्ताश्चतुर्विधाः।
तेषां प्रवृत्तिं साधूनां शृणु माधवि तद्यथा ॥ ६
वरमाहूय विधिना पित्रा दत्ता तथार्थिने ।
सा पत्नी तु परैरुक्ता सा वश्या तु पतिव्रता ॥७
भृत्यानां भरणार्थाय आत्मनः पोषणाय च ।
दाने गृहीता या नारी सा भार्येति स्मृता बुधैः ८
धर्मतो वरयित्वा तु आनीय स्वं निवेशनम् ।
न्यायेन दत्ता तारुण्ये दाराः पितृकृताः स्मृताः ९
गान्धर्वेण विवाहेन रागात्पुत्रार्थकारणात् ।
आत्मनाऽनुगृहीता या वश्या सा तु प्रजावती१०
जनयेद्या तु भर्तारं जाया इत्येव नामतः ।
पत्नी भार्या च दाराश्च जाया चेति चतुर्विधाः॥११
चतस्र एवाग्निसाक्ष्याः क्रियायुक्ताश्च धर्मतः ।
गान्धर्वस्तु क्रियाहीनो रागादेव प्रवर्तते ॥ १२
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः ।
मयोक्तमक्रियं चापि कर्तव्यं माधवि त्वया ॥१३
अयनं चैव मासश्च ऋतुः पक्षस्तथा तिथिः ।
करणं च मुहूर्तं च लग्नसंपत्तथैव च ॥ १४
विवाहस्य विशालाक्षि प्रशस्तं चोत्तरायणम् ।
वैशाखश्चैव मासानां पक्षाणां शुक्ल एव च ॥१५
नक्षत्राणां तथा हस्तस्तृतीया च तिथिष्वपि ।
लग्नो हि मकरः श्रेष्ठः करणानां बवस्तथा ॥ १६
मैत्रो मुहूर्तो वैवाह्य आवयोः शुभकर्मणि ।
सर्वसंपदियं भद्रे अद्य रात्रौ भविष्यति ॥ १७
भगवानस्तमभ्येति आदित्यस्तपतां वरः ।
रात्रौ विवाहकालोऽयं भविष्यति न संशयः ॥१८
नारायणोऽपि सर्वज्ञो नावबुध्येत विश्वकृत् ।
धर्मसङ्कटमापन्ने किं नु कृत्वा सुखं भवेत् ॥ १९
मनोभवेन कामेन मोहितं मां प्रलापिनम् ।
प्रतिवाक्यं च मे देवि किं न वक्ष्यसि माधवि ॥२०
वैशंपायन उवाच ।
अर्जुनस्य वचः श्रुत्वा चिन्तयन्ती जनार्दनम् ।
नोवाच किंचिद्वचनं बाष्पदूषितलोचना ॥ २१
रागोन्मादप्रलापी सन्नर्जुनो जयतां वरः ।
चिन्तयामास पितरं प्रविश्य च लतागृहम् ॥२२
चिन्तयानं तु कौन्तेयं मत्वा शच्या शचीपतिः ।
सहितो नारदाद्यैश्च मुनिभिश्च महामनाः ॥ २३
गन्धर्वैरप्सरोभिश्च चारणैश्चापि गुह्यकैः ।
अरुन्धत्या वसिष्ठेन ह्याजगाम कुशस्थलीम् ॥२४
चिन्तितं च सुभद्रायाश्चिन्तयित्वा जनार्दनः ।
निद्रयापहृतज्ञानं रौहिणेयं विना तदा ॥ २५
सहाक्रूरेण शिनिना सत्यकेन गदेन च ।
वसुदेवेन देवक्या आहुकेन च धीमता ॥ २६
आजगाम पुरीं रात्रौ द्वारकां स्वजनैर्वृतः ।
पूजयित्वा तु देवेशो नारदादीन्महायशाः ॥ २७
कुशलप्रश्नमुक्त्वा तु देवेन्द्रेणाभियाचितः ।
वैवाहिकीं क्रियां कृष्णः स तथेत्येवमुक्तवान् ॥२८
आहुको वसुदेवश्च सहाक्रूरः ससात्यकिः ।
अभिप्रणम्य शिरसा पाकशासनमब्रुवन् ।
देवदेव नमस्तेस्तु लोकनाथ जगत्पते ॥ २९
वयं धन्याः स्म सहितैर्बान्धवैः सहिताः प्रभो ।
कृतप्रसादास्तु वयं तव वाक्येन विश्वजित् ॥३०

वैशंपायन उवाच ।
एवमुक्त्वा प्रसाद्यैनं पूजयित्वा प्रयत्नतः ।
महेन्द्रशासनात्सर्वे सहिता ऋषिभिस्तदा ॥ ३१
विवाहं कारयामासुः शक्रपुत्रस्य शास्त्रतः ।
अरुन्धती शची देवी रुग्मिणी देवकी तथा॥३२
दिव्यस्त्रीभिश्च सहिताः सुभद्रायाः शुभाः क्रियाः
अर्जुनेऽपि तथा सर्वाः क्रिया भद्राः प्रयोजयन्३३
महर्षिः काश्यपो होता सदस्या नारदादयः ।
पुण्याशिषः प्रयोक्तारः सर्वे ते हि तदार्जुने ॥३४
अभिषेकं तदा कृत्वा महेन्द्रः पाकशासनिम् ।
लोकपालैस्तु सहितः सर्वदेवैरभिष्टुतः ॥ ३५
किरीटाङ्गदहाराद्यैर्हस्ताभरणकुण्डलैः ।
भूषयित्वा तदा पार्थं द्वितीयमिव वासवम् ॥ ३६
पुत्रं परिष्वज्य तदा प्रीतिमाप पुरन्दरः ।
शची देवी तदा भद्रामरुन्धत्यादिभिस्तथा॥ ३७
कारयामास वैवाह्यमङ्गलान्यादवस्त्रियः ।
सहाप्सरोभिर्मुदिता भूषयित्वा स्वभूषणैः ॥ ३८
पौलोमीमिव मन्यन्ते सुभद्रां तत्र योषितः ।
ततो विवाहो ववृधे कृतः सर्वगुणान्वितः॥ ३९
तस्याः पाणिं गृहीत्वा तु मन्त्रैर्होमपुरस्कृतम् ।
सुभद्रया बभौ जिष्णुः शच्या इव शचीपतिः४०
सा जिष्णुमधिकं भेजे सुभद्रा चारुदर्शना ।
पार्थस्य सदृशी भद्रा रूपेण वयसा तथा ॥ ४१
सुभद्रायाश्च पार्थोऽपि सदृशो रूपलक्षणैः ।
इत्यूचुश्च तदा देवाः प्रीताः सेन्द्रपुरोगमाः ॥४२
एवं निवेश्य देवास्ते गन्धर्वैः साप्सरोगणैः ।
आमन्त्र्य यादवाः सर्वे विप्रजग्मुर्यथागतम् ॥४३
यादवाः पार्थमामन्त्र्य अन्तर्द्वीपं गतास्तदा ।
वासुदेवस्तदा पार्थमुवाच यदुनन्दनः॥ ४४
द्वाविंशद्दिवसान्पार्थ इहोष्य भरतर्षभ ।
मामकं रथमारुह्य शैब्यसुग्रीवयोजितम् ॥ ४५
सुभद्रया सुखं पार्थ खाण्डवप्रस्थमाविश ।
यादवैः सहितः पश्चादागमिष्यामि भारत ।
यतिवेषेण नियतो वस त्वं रुक्मिणीगृहे ॥ ४६
वैशंपायन उवाच ।
एवमुक्त्वा प्रचक्राम अन्तर्द्वीपं जनार्दनः ।
कृतोद्वाहस्ततः पार्थः कृतकार्योऽभवत्तदा ॥ ४७
तस्यां चोपगतो भावः पार्थस्य सुमहात्मनः ।
तस्मिन्भावः सुभद्राया अन्योन्यं समवर्धत ॥४८
स तथा युयुजे वीरो भद्रया भरतर्षभः ।
अभिनिष्पन्नया रामः सीतयेव समन्वितः॥४९
अपि जिष्णुर्विजज्ञे तां ह्रीं श्रियं सन्नतिक्रियाम्।
देवतानां वरस्त्रीणां रूपेण सदृशीं सतीम् ॥ ५०
स प्रकृत्या श्रिया दीप्त्या संदिदीपे तयाऽधिकम्।
उद्यत्सहस्रदीप्तांशुः शरदीव दिवाकरः ॥ ५१
सा तु तं मनुजव्याघ्रमनुरक्ता यशस्विनी ।
कन्यापुरगता भूत्वा तत्परा समपद्यत ॥ ५२

॥ इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

---

## त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

कृष्णरथमास्थाय सुभद्रयासह अर्जुनस्य खाण्डवप्रस्थं गन्तुं यत्नः ॥ १ ॥

वैशंपायन उवाच ।
वृष्ण्यन्धकपुरात्तस्मादपयातुं धनञ्जयः ।
विनिश्चित्य तया सार्धं सुभद्रामिदमब्रवीत् ॥ १
द्विजानां गुणमुख्यानां यथार्हं प्रतिपादय ।
भोज्यैर्भक्ष्यैश्च कामैश्च स्वपुरीं प्रतियास्यताम् ॥२
आत्मनश्च समुद्दिश्य महाव्रतसमापनम् ।
गच्छ भद्रे स्वयं तूर्णं महाराजनिवेशनम् ॥ ३
तेजोबलजवोपेतैः शुक्लैर्हयवरोत्तमैः ।
वाजिभिः शैब्यसुग्रीवमेघपुष्पबलाहकैः ॥ ४
युक्तं रथवरं तूर्णमिहानय सुसत्कृतम् ।
व्रतार्थमिति भाषित्वा सखीभिः सुभगे सह ॥५
क्षिप्रमादाय पर्येहि सह सर्वायुधेन च ।

अनुकर्षान्पताकाश्च तूणीरांश्च धनूंषि च ॥ ६
सर्वान्रथवरे स्थाप्य सोत्सेधाश्च महागदाः ॥ ७
वैशंपायन उवाच ।
अर्जुनेनैवमुक्ता सा सुभद्रा भद्रभाषिणी ।
जगाम नृपतेर्वेश्म सखीभिः सहिता तदा ॥ ८
व्रतार्थमिति तत्रस्थान्रक्षिणो वाक्यमब्रवीत् ।
रथेनानेन यास्यामि महाव्रतसमापनम् ॥ ९
शैब्यसुग्रीवयुक्तेन सायुधेनैव शार्ङ्गिणः ।
रथेन रमणीयेन प्रयास्यामि व्रतार्थिनी ॥ १०
सुभद्रयैवमुक्ते तु जनाः प्राञ्जलयोऽभवन् ।
योजयित्वा रथवरं कल्याणैरभिभाष्य ताम् ॥११
यथोक्तं सर्वमारोप्य आयुधानि च भामिनी ।
क्षिप्रमादाय कल्याणी सुभद्राऽर्जुनमब्रवीत् ॥१२
रथोऽयं रथिनां श्रेष्ठ आनीतस्तव शासनात् ।
स त्वं याहि यथाकामं कुरून्कौरवनन्दन ॥ १३
वैशंपायन उवाच ।
निवेद्य तु रथं भर्तुः सुभद्रा भद्रसंमता ।
ब्राह्मणानां तदा हृष्टा ददौ सा विविधं वसु ॥१४
स्नेहवन्ति च भोज्यानि प्रददावीप्सितानि च ।
यथाकामं यथाश्रद्धं वस्त्राणि विविधानि च ॥ १५
तर्पिता विविधैर्भोज्यैस्तान्यवाप्य वसूनि च ।
ब्राह्मणाः स्वगृहं जग्मुः प्रयुज्य परमाशिषः ॥१६
सुभद्रया तु विज्ञप्तः पूर्वमेव धनञ्जयः ।
अभीशुग्रहणे पार्थ न मेऽस्ति सदृशो भुवि ॥१७
तस्मात्सा पूर्वमारुह्य रश्मीञ्जग्राह माधवी ।
सोदरा वासुदेवस्य कृतस्वस्त्ययना हयान् ॥१८
व्यत्ययित्वा तु तल्लिङ्गं यतिवेषं धनञ्जयः ।
आमुच्य कवचं वीरः समुच्छ्रितमहद्धनुः ॥ १९
आरुरोह रथश्रेष्ठं शुक्लवासा धनञ्जयः ।
महेन्द्रदत्तं मुकुटं तथैवाभरणानि च ॥ २०
अलङ्कृत्य तु कौन्तेयः प्रयातुमुपचक्रमे ।
ततः कन्यापुरे घोषस्तुमुलः समपद्यत ॥ २१
दृष्ट्वा नरवरं पार्थं बाणखड्गधनुर्धरम् ।
अभीशुहस्तां सुश्रोणीमर्जुनेन रथे स्थिताम् ॥२२
ऊचुः कन्यास्तदा यान्तीं वासुदेवसहोदराम् ।
सर्वकामसमृद्धा त्वं सुभद्रे भद्रभाषिणि ॥ २३
वासुदेवप्रियं लब्ध्वा भर्तारं वीरमर्जुनम् ।
सर्वसीमन्तिनीनां त्वां श्रेष्ठां कृष्णसहोदरीम् ॥२४
मन्यामहे महाभागे सुभद्रे भद्रभाषिणि ।
यस्मात्सर्वमनुष्याणां श्रेष्ठो भर्ता तवार्जुनः ॥२५
उपपन्नस्त्वया वीरः सर्वलोकमहारथः ।
हे प्रयाहि गृहान्भद्रे सुहृद्भिः संगमोऽस्तु ते ॥२६
वैशंपायन उवाच ।
एवमुक्ता प्रहृष्टाभिः सखीभिः प्रतिनन्दिता ।
भद्रा भद्रजवोपेतानश्वान्पुनरचोदयत् ॥ २७
पार्श्वे चामरहस्ता सा सखी तस्याङ्गनाऽभवत् ।
ततः कन्यापुरद्वारात्सघोषादभिनिःसृतम् ॥ २८
ददृशुस्तं रथश्रेष्ठं जना जीमूतनिस्वनम् ।
सुभद्रासङ्गृहीतस्य रथस्य महतः स्वनम् ॥ २९
मेघस्वनमिवाकाशे शुश्रुवुः पुरवासिनः ।
सुभद्रया तु संपन्ने तिष्ठन्रथवरेऽर्जुनः ॥ ३०
प्रबभौ च तयोपेतः कैलास इव गङ्गया ।
पार्थः सुभद्रासहितो विरराज महारथः ॥ ३१
विराजते यथा शक्रो राजञ्शच्या समन्वितः ।
सुभद्रां प्रेक्ष्य पार्थेन ह्रियमाणां यशस्विनीम् ॥३२
चक्रुः किलकिलाशब्दानासाद्य बहवो जनाः ।
दाशार्हाणां कुलस्य श्रीः सुभद्रा भद्रभाषिणी ॥३३
अभिकामा सकामेन पार्थेन सह गच्छति ।
अथापरे तु संक्रुद्धा गृह्णीत व्रत माचिरम् ॥ ३४
इति संवार्य शस्त्राणि ववर्षुरभितो दिशम् ।
इति संभाषमाणानां स नादः सुमहानभूत् ॥३५
स तेन जनघोषेण वीरो गज इवार्दितः ।
ववर्ष शरवर्षाणि न तु कंचन रोषयत् ॥ ३६
मुमोच निशितान्बाणान्दीप्यमानान्स्वतेजसा ।
प्रासादवरसङ्घेषु हर्म्येषु भवनेषु च ॥ ३७
क्षोभयित्वा पुरश्रेष्ठं गरुत्मानिव सागरम् ।
प्रेक्षन्नैवकतद्द्वारं निर्ययौ भरतर्षभः ॥ ३८

॥ इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

## चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

द्वारकाया बहिर्निर्गच्छतोऽर्जुनस्य विपृथुना युद्धम् ॥ १ ॥ विपृथुं जित्वाऽर्जुनस्य खाण्डवप्रस्थंप्रति गमनम् ॥ २ ॥ युद्धोद्युक्तानां यादवानां बलरामवाक्यान्निवृत्तिः ॥ ३ ॥ बलस्य क्रोधः ॥ ४ ॥

वैशंपायन उवाच ।
शासनात्पुरुपेन्द्रस्य बलेन महता बली ।
गिरौ रैवतके नित्यं बभूव विपृथुश्रवाः ॥ १
प्रवासे वासुदेवस्य तस्मिन्हलधरोपमः ।
संबभूव तदा गोप्ता पुरस्य पुरवर्धनः ॥ २
प्राप्य पाण्डवनिर्याणं निर्ययौ विपृथुश्रवाः ।
निशम्य पुरनिर्घोषं स्वमनीकमचोदयत् ॥ ३
सोऽभिपत्य तदाध्वानं ददर्श पुरुषर्षभम् ।
निःसृतं द्वारकाद्वारादंशुमन्तमिवाम्बरात् ॥ ४
सविद्युतमिवाम्भोदं प्रेक्षतां तं धनुर्धरम् ।
पार्थमानर्तयोधानां विस्मयः समपद्यत ॥ ५
उदीर्णरथनागाश्वमनीकमभिवीक्ष्य तत् ।
उवाच परमप्रीता सुभद्रा भद्रभापिणी ॥ ६
संग्रहीतुमभिप्रायो दीर्घकालकृतो मम ।
युध्यमानस्य सङ्ग्रामे रथं तव नरर्षभ ॥ ७
ओजस्तेजोद्युतिबलैरन्वितस्य महात्मनः ।
पार्थ ते सारथित्वेन भविता शिक्षितास्म्यहम् ॥ ८
एवमुक्तः प्रियां प्रीतः प्रत्युवाच नरर्षभः ।
चोदयाश्वानसंसक्तान्विशन्तु विपृथोर्बलम् ॥ ९
बहुभिर्युध्यमानस्य तावकान्विजिघांसतः ।
पश्य बाहुबलं भद्रे शरान्विक्षिपतो मम ॥ १०
वैशंपायन उवाच ।
एवमुक्ता तदा भद्रा पार्थेन भरतर्षभ ।
चुचोद साश्वान्संहृष्टा ते ततो विविशुर्बलम् ॥ ११
तदाहतमहावाद्यं समुदग्रध्वजायुतम् ।
अनीकं विपृथोर्हृष्टं पार्थमेवान्ववर्तत ॥ १२
रथैर्बहुविधाकारैः सदश्वैश्च महाजवैः ।
किरन्तः शरवर्षाणि परिवव्रुर्धनञ्जयम् ॥ १३
तेषामस्त्राणि संवार्य दिव्यास्त्रेण महास्त्रवित् ।
आवृणोन्महदाकाशं शरैः परपुरञ्जयः ॥ १४
तेषां बाणान्महाबाहुर्मुकुटान्यङ्गदानि च ।
चिच्छेद निशितैर्बाणैः शरांश्चैव धनूंषि च ॥ १५
युगानीषान्वरूथानि यन्त्राणि विविधानि च ।
अजिघांसन्परान्पार्थश्चिच्छेद निशितैः शरैः ॥ १६
विधनुष्कान्विकवचान्विरथांश्च महारथान् ।
कृत्वा पार्थः प्रियां प्रीतः प्रेक्ष्यतामित्यदर्शयत् १७
सा दृष्ट्वा महदाश्चर्यं सुभद्रा पार्थमब्रवीत् ।
अवाप्तार्थोऽसि भद्रं ते याहि पार्थ यथासुखम् १८
स सक्तं पाण्डुपुत्रेण समीक्ष्य विपृथुर्बलम् ।
स्मरमाणोऽभिसंक्रम्य स्थीयतामित्यभाषत ॥ १९
ततः सेनापतेर्वाक्यं नात्यवर्तन्त यादवाः ।
सागरे मारुतोद्धूता वेलामिव महोर्मयः ॥ २०
ततो रथवरात्तूर्णमवरुह्य नरर्षभः ।
अभिगम्य नरव्याघ्रं प्रहृष्टः परिषस्वजे ॥ २१
सोऽब्रवीत्पार्थमासाद्य दीर्घकालमिदं तव ।
निवासमभिजानामि शङ्खचक्रगदाधरात् ॥ २२
न मेऽस्त्यविदितं किंचिद्यद्यदाचरितं त्वया ।
सुभद्रार्थं प्रलोभेन प्रीतस्तव जनार्दनः ॥ २३
प्राप्तस्य यतिलिङ्गेन वासितस्य धनञ्जय ।
बन्धुमानसि रामेण महेन्द्रावरजेन च ॥ २४
मामेव च सदाकाङ्क्षी मन्त्रिणं मधुसूदनः ।
अन्तरेण सुभद्रां च त्वां च तात धनञ्जय ॥ २५
इमं रथवरं दिव्यं सर्वशस्त्रसमन्वितम् ।
इदमेवानुयात्रं च निर्दिश्य गदपूर्वजः ॥ २६
अन्तर्द्वीपं तदा वीर गतो वृष्णिसुखावहः ।
दीर्घकालावरुद्धं त्वां संप्राप्तं प्रियया सह ॥ २७
पश्यन्तु भ्रातरः सर्वे वज्रपाणिमिवामराः ।
आयाते तु दशार्हाणामृषभे शार्ङ्गधन्वनि ॥ २८
भद्रामनुगमिष्यन्ति रत्नानि च वसूनि च ।
अरिष्टं याहि पन्थानं सुखी भव धनञ्जय ॥ २९
नष्टशोकैर्विशोकस्य सुहृद्भिः संगमोऽस्तु ते ॥ ३०

वैशंपायन उवाच ।
ततो विपृथुमामन्त्र्य पार्थः प्रीतोऽभिवाद्य च ।
कृष्णस्य मतमास्थाय कृष्णस्य रथमास्थितः ॥ ३१
पूर्वमेव तु पार्थाय कृष्णेन विनियोजितम् ।
सर्वरत्नसुसंपूर्णं सर्वभोगसमन्वितम् ॥ ३२
रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि ।
शैब्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ॥ ३३
सर्वशस्त्रोपपन्नेन जीमूतरवनादिना ।
ज्वलनार्चिःप्रकाशेन द्विषतां हर्षनाशिना ॥ ३४
सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।
युक्तः सेनानुयात्रेण रथमारोप्य माधवीम् ।
रथेनाकाशगेनैव प्रययौ स्वँपुरं प्रति ॥ ३५
ह्रियमाणां तु तां दृष्ट्वा सुभद्रां सैनिका जनाः ।
विक्रोशन्तोऽद्रवन्सर्वे द्वारकामभितः पुरीम् ॥ ३६
ते समासाद्य सहिताः सुधर्मामभितः सभाम् ।
सभापालस्य तत्सर्वमाचख्युः पार्थविक्रमम् ॥ ३७
तेषां श्रुत्वा सभापालो भेरीं सान्नाहिकीं ततः ।
समाजघ्ने महाघोषां जाम्बूनदपरिष्कृताम् ॥ ३८
क्षुब्धास्तेनाथ शब्देन भोजवृष्ण्यन्धकास्तदा ।
'अन्तर्द्वीपात्समुत्पेतुः सहसा सहितास्तदा ।'
अन्नपानमपास्याथ समापेतुः समन्ततः ॥ ३९
तत्र जाम्बूनदाङ्गानि स्पर्ध्यास्तरणवन्ति च ।
मणिविद्रुमचित्राणि ज्वलिताग्निप्रभाणि च ॥ ४०
भेजिरे पुरुषव्याघ्रा वृष्ण्यन्धकमहारथाः ।
सिंहासनानि शतशो धिष्ण्यानीव हुताशनाः ४१
तेषां समुपविष्टानां देवानामिव सन्नये ।
आचख्यौ चेष्टितं जिष्णोः सभापालः सहानुगः ४२
तच्छ्रुत्वा वृष्णिवीरास्ते मदसंरक्तलोचनाः ।
अमृष्यमाणाः पार्थस्य समुत्पेतुरहङ्कृताः ॥ ४३
योजयध्वं रथानाशु प्रासानाहरतेति च ।
धनूंषि च महार्हाणि कवचानि बृहन्ति च ॥ ४४
सूतानुच्चुकुशुः केचिद्रथान्योजयतेति च ।
स्वयं च तुरगान्केचिदयुञ्जन्हेमभूषितान् ॥ ४५
रथेष्वानीयमानेषु कवचेषु ध्वजेषु च ।
अभिक्रन्दे नृवीराणां तदासीत्तुमुलं महत् ॥ ४६
वनमाली ततः क्षीबः कैलासशिखरोपमः ।
नीलवासा मदोत्सिक्त इदं वचनमब्रवीत् ॥ ४७
किमिदं कुरुथाप्रज्ञास्तूष्णींभूते जनार्दने ।
अस्य भावमविज्ञाय संक्रुद्धा मोघगर्जिताः ॥ ४८
एष तावदभिप्रायमाख्यातु स्वं महामतिः ।
यदस्य रुचिरं कर्तुं तत्कुरुध्वमतन्द्रिताः ॥ ४९
ततस्ते तद्वचः श्रुत्वा ग्राह्यरूपं हलायुधात् ।
तूष्णींभूतास्ततः सर्वे साधुसाध्विति चाब्रुवन् ॥ ५०
समं वचो निशम्यैव बलदेवस्य धीमतः ।
पुनरेवसभामध्ये सर्वे ते समुपाविशन् ॥ ५१
ततोऽब्रवीद्वासुदेवं वचो रामः परन्तपः ।
'त्रैलोक्यनाथ हे कृष्ण भूतभव्यभविष्यकृत् ।'

सन्नये समुदाये ॥ ४२ ॥ चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

* २३९ तमाध्यायस्य २६ श्लोकादुपरि प्रकृतश्लोकपर्यन्तं विद्यमानानां २४८ श्लोकानां स्थाने च, ज, झ, ञ, ड, पुस्तकेषु अधोलिखिता अष्टौ श्लोका एव दृश्यन्ते ।

वैशंपायन उवाच ।
ततः संवादिते तस्मिन्ननुज्ञातो धनञ्जयः ।
गतां रैवतके कन्यां विदित्वा जनमेजय ॥ १
वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम् ।
कृष्णस्य मतमादाय प्रययौ भरतर्षभः ॥ २
रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि ।
शैब्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ॥ ३
सर्वशस्त्रोपपन्नेन जीमूतरवनादिना ।
ज्वलिताग्निप्रकाशेन द्विषतां हर्षघातिना ॥ ४
सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।
मृगयाव्यपदेशेन प्रययौ पुरुषर्षभः ॥ ५
सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्यैव हि रैवतम् ।
दैवतानि च सर्वाणि ब्राह्मणान्स्वस्तिवाच्य च ॥ ६
प्रदक्षिणं गिरेः कृत्वा प्रययौ द्वारकां प्रति ।
तामभिद्रुत्य कौन्तेयः प्रसह्यारोपयद्रथम् ।
सुभद्रां चारुसर्वाङ्गीं कामबाणप्रपीडितः ॥ ७
ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मिताम् ।
रथेन काञ्चनाङ्गेन प्रययौ स्वपुरं प्रति ॥ ८

किमवागुपविष्टोऽसि प्रेक्षमाणो जनार्दन ॥ ५२
सत्कृतस्त्वत्कृते पार्थः सर्वैरस्माभिरच्युत ।
न च सोऽर्हति तां पूजां दुर्बुद्धिः कुलपांसनः ५३
को हि तत्रैव भुक्त्वान्नं भाजनं भेत्तुमर्हति ।
मन्यमानः कुले जातमात्मानं पुरुषः क्वचित् ५४
इच्छन्नेव हि संबन्धं कृतं पूर्वं च मानयन् ।
को हि नाम भवेनार्थी साहसेन समाचरेत् ॥५५
सोऽवमन्य तथाऽस्माकमनादृत्य च केशवम् ।
प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः ॥ ५६
कथं हि शिरसो मध्ये कृतं तेन पदं मम ।
मर्षयिष्यामि गोविन्द पादस्पर्शमिवोरगः ॥ ५७
अद्य निष्कौरवामेकः करिष्यामि वसुन्धराम् ।
न हि मे मर्षणीयोऽयमर्जुनस्य व्यतिक्रमः ॥५८
तं तथा गर्जमानं तु मेघदुन्दुभिनिःस्वनम् ।
अन्वपद्यन्त ते सर्वे भोजवृष्ण्यन्धकास्तदा ॥ ५९

॥ इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥

॥ समाप्तं च सुभद्राहरणपर्व ॥

---

# (अथ हरणाहरणपर्व ॥ १७ ॥)

## पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

कृष्णेन बलरामसान्त्वनम् ॥ १ ॥ अर्जुनंप्रत्यानेतुं यादवानां गमनम् ॥ २ ॥ विपृथुवाक्यादर्जुनं दूरगतं ज्ञात्वा तेषां प्रतिनिवर्तनम् ॥ ३ ॥ सुभद्रया सह अर्जुनस्य खाण्डवप्रस्थगमनम् ॥ ४ ॥

वैशंपायन उवाच ।
उक्तवन्तो यथावीर्यमसकृत्सर्ववृष्णयः ।
ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंयुतम् ॥ १
'मयोक्तं न श्रुतं पूर्वं सहितैः सर्वयादवैः ।
अतिक्रान्तमतिक्रान्तं न निवर्तेत कर्हिचित् ।
शृणुध्वं सहिताः सर्वे मम वाक्यं सहेतुकम् ॥'२
नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान् ।
संमानोऽभ्यधिकस्तेन प्रयुक्तोऽयं न संशयः ॥ ३
अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥ ४
प्रदानमपि कन्यायाः पशुवत्को नु मन्यते ।
विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥ ५
एतान्दोषांस्तु कौन्तेयो दृष्टवानिति मे मतिः ।
'क्षत्रियाणां तु वीर्येण प्रशस्तं हरणं बलात् ।'
अतः प्रसह्य हृतवान्कन्यां धर्मेण पाण्डवः ॥ ६
उचितश्चैव संबन्धः सुभद्रा च यशस्विनी ।
एष चापीदृशः पार्थः प्रसह्य हृतवानतः ॥ ७
भरतस्यान्वये जातं शान्तनोश्च यशस्विनः ।
कुन्तिभोजात्मजापुत्रं का बुभूषेत नार्जुनम् ॥ ८
न तं पश्यामि यः पार्थं विजयेत रणे बलात् ।
वर्जयित्वा विरूपाक्षं भगनेत्रहरं हरम् ॥ ९
अपि सर्वेषु लोकेषु सेन्द्ररुद्रेषु मारिष ।
स च नाम रथस्तादृङ्मदीयास्ते च वाजिनः॥१०
'मम शस्त्रं विशेषेण तूणौ चाक्षयसायकौ ।'
योद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत् ।
तमभिद्रुत्य सान्त्वेन परमेण धनञ्जयम् ॥ ११
निवर्तयत संहृष्टा ममैषा परमा मतिः ।
यदि निर्जित्य वः पार्थो बलाद्गच्छेत्स्वकं पुरं १२
प्रणश्येद्वो यशः सद्यो न तु सान्त्वे पराजयः ।
'पितृष्वसायाः पुत्रो मे संबन्धं नार्हति द्विषाम्।'
तच्छ्रुत्वा वासुदेवस्य तथा कर्तुं जनाधिप ॥ १३
'उद्योगं कृतवन्तस्ते भेरीं सन्नाद्य यादवाः ।
अर्जुनस्तु तदा श्रुत्वा भेरीसन्नादनं महत् ॥ १४
कौन्तेयस्त्वरमाणस्तु सुभद्रामभ्यभाषत ।

आयान्ति वृष्णयः सर्वे ससुहृज्जनबान्धवाः ॥ १५
त्वदर्थं योद्धुकामास्ते मदरक्तान्तलोचनाः ।
प्रमत्तानशुचीन्मूढान्सुरामत्तान्नराधमान् ॥ १६
वमनं पानशीलांस्तान्करिष्यामि शरोत्तमैः ।
उताहो वा मदोन्मत्तान्नयिष्यामि यमक्षयम् ॥१७
एवमुक्त्वा प्रियां पार्थो न्यवर्तत महाबलः ।
निवर्तमानं दृष्ट्वैव सुभद्रा त्रस्ततां गता ॥ १८
एवं मा वद पार्थेति पादयोः पतिता तदा ।
सुभद्रा तु कलिर्जाता वृष्णीनां निधनाय च॥१९
एवं ब्रुवन्तः पौरास्ते ह्यपवादरताः प्रभो ।
मम शोकं वर्धयन्ति तस्मान्नाशं न चिन्तये ।
परिवादभयान्मुक्ता त्वत्प्रसादाद्भवाम्यहम् ॥ २०
वैशंपायन उवाच ।
एवमुक्तस्ततः पार्थः प्रियया भद्रया तदा ।
गमनाय मतिं चक्रे पार्थः सत्यपराक्रमः ॥ २१
स्मितपूर्वं तदाऽऽभाष्य परिष्वज्य प्रियां तदा ।
उत्थाप्य च पुनः पार्थो याहि याहीति चाब्रवीत्।
ततः सुभद्रा त्वरिता रश्मीन्संगृह्य पाणिना ।
चोदयामास जवनाञ्शीघ्रमश्वान्कृतत्वरा ॥ २३
ततस्तु कृतसन्नाहा वृष्णिवीराः समाहिताः ।
प्रत्यानयार्थं पार्थस्य जवनैस्तुरगोत्तमैः ॥ २४
राजमार्गमनुप्राप्ता दृष्ट्वा पार्थस्य विक्रमम् ।
प्रासादपङ्क्तिस्तम्भेषु वेदिकासु ध्वजेषु च ॥ २५
अर्जुनस्य शरान्दृष्ट्वा विस्मयं परमं गताः ।
केशवस्य वचस्तथ्यं मन्यमानास्तु यादवाः॥२६
अतीत्य तं रैवतकं श्रुत्वा तु विपृथोर्वचः ।
अर्जुनेन कृतं श्रुत्वा गन्तुकामास्तु वृष्णयः ॥२७
श्रुत्वा दीर्घं गतं पार्थं न्यवर्तन्त महारथाः ।
पुरोद्यानमतिक्रम्य विशालं च गिरिव्रजम् ॥ २८
सानुमुज्जयिनीं चैव वनान्युपवनानि च ।
पुण्येष्वानर्तराष्ट्रेषु वापीपद्मसरांसि च ॥ २९
प्राप्य धेनुमतीतीर्थमश्वरोधसरः प्रति ।
प्रेक्षावर्तं ततः शैलामम्बुदं च नगोत्तमम् ॥ ३०
आराच्छृङ्गमथासाद्य तीर्णः करवतीं नदीम् ।
प्राप्य साल्वेयराष्ट्राणि निषधानप्यतीत्य च ॥३१
देवापृथुपुरं पश्यन् सर्वतः सुसमाहितः ।
तमतीत्य महाबाहुर्देवारण्यमपश्यत ॥ ३२
पूजयामासुरायान्तं देवारण्ये महर्षयः ।
स वनानि नदीः शैलान् गिरिप्रस्रवणानि च॥३३
अतीत्य च तदा पार्थः सुभद्रासारथिस्तदा ।
कौरवं विषयं प्राप्य विशोकः समपद्यत ॥ ३४
सोदर्याणां महाबाहुः सिंहाशयमिवाशयम् ।
दूरादुपवनोपेतं समन्तात्सलिलावृतम् ॥ ३५
भद्रया मुदितो जिष्णुर्ददर्श वृजिनं पुरम् ॥ ३६

॥ इति श्रीमन्महाभारते आदिपर्वणि हरणाहरणपर्वणि पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥

## षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

अर्जुनेन सुभद्रायाः गोपीवेषेण द्रौपदीसमीपप्रेषणम् ॥ १ ॥ कृतनतिं सुभद्रांप्रति पृथाद्रौपदीभ्यां आशीर्वादः ॥ २ ॥ स्वपुरं प्रविष्टेनार्जुनेन भ्रातृभ्यः स्वकृततीर्थयात्रावृत्तान्तकथनम् ॥ ३ ॥

वैशंपायन उवाच ।
क्रोशमात्रे पुरस्यासीद्गोष्ठं पार्थस्य शोभनम् ।
तत्रापि यात्वा बीभत्सुर्निविष्टो यदुकन्यया ॥ १
ततः सुभद्रां सत्कृत्य पार्थो वचनमब्रवीत् ।
गोपिकानां तु वेषेण गच्छ त्वं वृजिनं पुरम् ॥ २
कामव्याहारिणी कृष्णा रोचतां ते वचो मम ।
दृष्ट्वा तु परुषं ब्रूयात्सह तत्र मयागताम् ॥ ३
अन्यवेषेण तु गतां दृष्ट्वा सा त्वां प्रियं वदेत् ।
यत्तु सा प्रथमं ब्रूयान्न तस्यास्ति निवर्तनम् ॥ ४
तस्मान्मानं च दर्पं च व्यपनीय स्वयं व्रज ।
तस्य तद्वचनं श्रुत्वा सुभद्रा प्रत्यभाषत ॥ ५
एवमेतत्करिष्यामि यथा त्वं पार्थ भाषसे ।
सुभद्रावचनं श्रुत्वा सुप्रीतः पाकशासनिः ॥ ६
गोपालान्स समानीय त्वरितो वाक्यमब्रवीत् ।

तस्मात्पापं न चिन्तये ॥ २० ॥

पञ्चचत्वारिंशदधिकद्विशततमोध्यायः ॥ २४५ ॥

तरुण्यः सन्ति यावन्त्यस्ताः सर्वा व्रजयोषितः ७
आगच्छन्तु गमिष्यन्त्या भद्रया सह सङ्गताः ।
इन्द्रप्रस्थं पुरवरं कृष्णां द्रष्टुं यशस्विनीम् ॥ ८
एतच्छ्रुत्वा तु गोपालैरानीता व्रजयोषितः ।
ततस्ताभिः परिवृतां व्रजस्त्रीभिः समन्ततः ॥' ९
सुभद्रां त्वरमाणश्च रक्तकौशेयवासिनीम् ।
पार्थः प्रस्थापयामास कृत्वा गोपालिकावपुः १०
साऽधिकं तेन रूपेण शोभमाना यशस्विनी ।
'गोपालिकामध्यगता प्रययौ वृजिनं पुरम् ॥ ११
त्वरिता खाण्डवप्रस्थमाससाद विवेश च ।'
भवनं श्रेष्ठमासाद्य वीरपत्नी वराङ्गना ॥ १२
ववन्दे पृथुताम्राक्षी पृथां भद्रा पितृष्वसाम् ।
तां कुन्ती चारुसर्वाङ्गीमुपाजिघ्रत मूर्धनि ॥ १३
प्रीत्या परमया युक्ता आशीर्भिर्युञ्जताऽतुलाम् ।
ततोऽभिगम्य त्वरिता पूर्णेन्दुसदृशानना ॥ १४
ववन्दे द्रौपदीं भद्रा प्रेष्याऽहमिति चाब्रवीत् ।
प्रत्युत्थाय तदा कृष्णा स्वसारं माधवस्य च ॥ १५
परिष्वज्यावदत्प्रीत्या निःसपत्नोऽस्तु ते पतिः ।
'वीरसूर्भव भद्रे त्वं भव भर्तृप्रिया तथा ॥ १६
ओजसा निर्मिता वह्नीरुवाच परमाशिषः ।'
तथैव मुदिता भद्रा तामुवाच तथास्त्विति ॥ १७
'ततः सुभद्रां वार्ष्णेयी परिष्वज्य शुभाननाम् ।
अङ्के निवेश्य मुदिता वसुदेवं प्रशस्य च ॥ १८
ततः किलकिलाशब्दः क्षणेन समपद्यत ।
हर्षादानर्तयोधानामासाद्य वृजिनं पुरम् ॥ १९
देवपुत्रप्रकाशास्ते जाम्बूनदमयध्वजाः ।
पृष्ठतोऽनुययुः पार्थं पुरुहूतमिवामराः ॥ २०
गोभिरुष्ट्रैः सदश्वैश्च युक्तानि बहुला जनाः ।
ददृशुर्यानमुख्यानि दाशार्हपुरवासिनाम् ॥ २१
ततः पुरवरे यूनां पुंसां वाच उदीरिताः ।
अर्जुने प्रतियाति स्म अश्रूयन्त समन्ततः ॥ २२
प्रवासादागतं पार्थं दृष्ट्वा स्वमिव बान्धवम् ।
सोऽभिगम्य नरश्रेष्ठो दाशार्हशतसंवृतः ॥ २३
पौरैः पुरवरं प्रीत्या परया चाभिनन्दितः ।
प्राप्य चान्तःपुरद्वारमवरुह्य नरर्षभः ॥ २४
ववन्दे धौम्यमासाद्य मातरं च धनञ्जयः ।
स्पृष्ट्वा च चरणौ राज्ञो भीमस्य च धनञ्जयः ॥ २५
यमाभ्यां वन्दितो हृष्टः सस्वजे तौ ननन्द च ।
ब्राह्मणप्रमुखान्सर्वान्भ्रातृभिः सह सङ्गतः ॥ २६
यथार्हं मानयामास पौरजानपदानपि ।
तत्रस्थान्यनुयातानि तीर्थान्यायतनानि च ॥ २७
निवेदयामास तदा राज्ञे सर्वं स्वनुष्ठितम् ।
भ्रातृभ्यश्चैव सर्वेभ्यः कथयामास भारत ॥ २८
श्रुत्वा सर्वं महाप्राज्ञो धर्मराजो युधिष्ठिरः ।
पुरस्तादेव तेषां तु पूजयामास चार्जुनम् ॥ २९
पाण्डवेन यथार्हं तु पूजार्हेण सुपूजितः ।
न्यविशच्चाभ्यनुज्ञातो राज्ञा तुष्टो यशस्विना ॥ ३०
तामदीनां सुपूजार्हां सुभद्रां प्रीतिवर्धिनीम् ।
साक्षाच्छ्रियममन्यन्त पार्थाः कृष्णसहोदराम् ॥ ३१
गुरूणां श्वशुराणां च देवराणां तथैव च ।
सुभद्रा स्वेन वृत्तेन बभूव परमप्रिया ॥' ३२
ततस्ते हृष्टमनसः पाण्डवेया महारथाः ।
कुन्ती च परमप्रीता कृष्णा च सततं तथा ॥ ३३

॥ इति श्रीमन्महाभारते आदिपर्वणि हरणाहरणपर्वणि षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

## सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

कृष्णानुमत्याऽर्जुनः सुभद्रां जहारेति पौराणामूहः ॥ १ ॥ अर्जुनं इन्द्रप्रस्थं प्राप्तं ज्ञात्वा यादवैः सह श्रीकृष्णस्य इन्द्रप्रस्थं प्रत्यागमनम् ॥ २ ॥ आगतान्श्रीकृष्णादीञ्श्रुत्वा युधिष्ठिरस्य प्रत्युद्गमनं तेषां सत्कारश्च ॥ ३ ॥ वैवाहिकमहोत्सवकरणम् ॥ ४ ॥ पारिबर्हदानम् ॥ ५ ॥ कंचित्कालं तत्रोषितानां कुरुभिः पूजितानां बलरामादीनां द्वारकांप्रति गमनम् ॥ ६ ॥ अभिमन्यूत्पत्तिः ॥ ७ ॥ द्रौपद्याः युधिष्ठिरादिभ्यः पञ्चपुत्रोत्पत्तिः तेषां विद्याभ्यासश्च ॥ ८ ॥

वैशंपायन उवाच ।
अथ शुश्राव निर्वृत्ते वृष्णीनां परमोत्सवे ।
अर्जुनेन हृतां भद्रां शङ्खचक्रगदाधरः ॥ १
पुरस्तादेव पौराणां संशयः समजायत ।

जानता वासुदेवेन वासितो भरतर्षभः ॥ २
लोकस्य विदितं ह्यद्य पूर्वं विपृथुना यथा ।
सान्त्वयित्वाभ्यनुज्ञातो भद्रया सह सङ्गतः ॥ ३
दित्सता सोदरां तस्मै पतत्रिवरकेतुना ।
अर्हते पार्थिवेन्द्राय पार्थायायतलोचनाम् ॥ ४
सत्कृत्य पाण्डवश्रेष्ठं प्रेषयामास चार्जुनम् ।
भद्रया सह बीभत्सुः प्रापितो वृजिनं पुरम् ॥ ५
इति पौरजनाः सर्वे वदन्ति च समन्ततः ।'
श्रुत्वा तु पुण्डरीकाक्षः संप्राप्तं स्वपुरोत्तमम् ॥ ६
अर्जुनं पाण्डवश्रेष्ठमिन्द्रप्रस्थगतं तथा ।
'यियासुः खाण्डवप्रस्थममन्त्रयत केशवः ॥ ७
पूर्वं सत्कृत्य राजानमाहुकं मधुसूदनः ।
तथा विपृथुमक्रूरं संकर्षणविडूरथौ ॥ ८
मन्त्रयामास तैः सार्धं पुरस्तादभिमानितैः ।
संकर्षणेन संमन्त्र्य ह्यनुज्ञातो महामनाः ॥ ९
संप्रीतः प्रीयमाणेन वृष्णिराज्ञा जनार्दनः ।
अभिमन्त्र्याभ्यनुज्ञातो योजयामास वाहिनीम् १०
ततस्तु यानान्यासाद्य दाशार्हाणां यशस्विनाम् ।
सिंहनादः प्रहृष्टानां क्षणेन समपद्यत ॥ ११
योजयन्तः सदश्वांस्तु यानयुग्यं रथांस्तथा ।
गजांश्च परमप्रीतः समपद्यन्त वृष्णयः ॥' १२
वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः ।
भ्रातृभिश्च कुमारैश्च योधैश्च शतशो वृतः ॥ १३
सैन्येन महता शौरिरभिगुप्तः समन्ततः ।
तत्र दानपतिः श्रीमाञ्जगाम स महायशाः ॥ १४
अक्रूरो वृष्णिवीराणां सेनापतिररिन्दमः ।
अनाधृष्टिर्महातेजा उद्धवश्च महायशाः ॥ १५
साक्षाद्बृहस्पतेः शिष्यो महाबुद्धिर्महामनाः ।
सत्यकः सात्यकिश्चैव कृतवर्मा च सात्वतः ॥ १६
प्रद्युम्नश्चैव साम्बश्च निशठः शङ्कुरेव च ।
चारुदेष्णश्च विक्रान्तो झिल्ली विपृथुरेव च ॥ १७
सारणश्च महाबाहुर्गदश्च विदुषां वरः ।
एते चान्ये च बहवो वृष्णिभोजान्धकास्तथा ॥ १८
आजग्मुः खाण्डवप्रस्थमादाय हरणं बहु ।
'उपहारं समादाय पृथुवृष्णिपुरोगमाः ॥ १९
प्रययुः सिंहनादेन सुभद्रामवलोककाः ।
ते त्वदीर्घेण कालेन कृष्णेन सह यादवाः ।
पुरमासाद्य पार्थानां परां प्रीतिमवाप्नुवन् ॥' २०
ततो युधिष्ठिरो राजा श्रुत्वा माधवमागतम् ।
प्रतिग्रहार्थं कृष्णस्य यमौ प्रास्थापयत्तदा ॥ २१
ताभ्यां प्रतिगृहीतं तु वृष्णिचक्रं महर्द्धिमत् ।
विवेश खाण्डवप्रस्थं पताकाध्वजशोभितम् ॥ २२
संमृष्टसिक्तपन्थानं पुष्पप्रकरशोभितम् ।
चन्दनस्य रसैः शीतैः पुण्यगन्धैर्निषेवितम् ॥ २३
दह्यताऽगुरुणा चैव देशे देशे सुगन्धिना ।
हृष्टपुष्टजनाकीर्णं वणिग्भिरुपशोभितम् ॥ २४
प्रतिपेदे महाबाहुः सह रामेण केशवः ।
वृष्ण्यन्धकैस्तथा भोजैः समेतः पुरुषोत्तमः ॥ २५
संपूज्यमानः पौरैश्च ब्राह्मणैश्च सहस्रशः ।
विवेश भवनं राज्ञः पुरन्दरगृहोपमम् ॥ २६
युधिष्ठिरस्तु रामेण समागच्छद्यथाविधि ।
मूर्ध्नि केशवमाघ्राय बाहुभ्यां परिषस्वजे ॥ २७
तं प्रीयमाणो गोविन्दो विनयेनाभिपूजयन् ।
भीमं च पुरुषव्याघ्रं विधिवत्प्रत्यपूजयत् ॥ २८
तांश्च वृष्ण्यन्धकश्रेष्ठान्कुन्तीपुत्रो युधिष्ठिरः ।
प्रतिजग्राह सत्कारैर्यथाविधि यथागतम् ॥ २९
गुरुवत्पूजयामास कांश्चित्कांश्चिद्वयस्यवत् ।
कांश्चिदभ्यवदत्प्रेम्णा कैश्चिदप्यभिवादितः ॥ ३०
'ततः पृथा च पार्थाश्च मुदिताः कृष्णया सह ।
पुण्डरीकाक्षमासाद्य बभूवुर्मुदितेन्द्रियाः ॥ ३१
हर्षादभिगतौ दृष्ट्वा संकर्षणजनार्दनौ ।
बन्धुमन्तं पृथा पार्थं युधिष्ठिरममन्यत ॥ ३२
ततः सङ्कर्षणाक्रूरावप्रमेयावदीनवत् ।
भद्रवत्यै सुभद्रायै धनौघमुपजह्रतुः ॥ ३३
प्रवालानि च हाराणि भूषणानि सहस्रशः ।
कुथास्तरपरिस्तोमान्व्याघ्राजिनपुरस्कृतान् ॥ ३४
विविधैश्चैव रत्नौघैर्दीप्तप्रभमजायत ।
शयनासनयानैश्च युधिष्ठिरनिवेशनम् ॥ ३५

ततः प्रीतिकरो यूनां विवाहपरमोत्सवः ।
भद्रवत्यै सुभद्रायै सप्तरात्रमवर्तत ॥' ३६
तेषां ददौ हृषीकेशो जन्यार्थे धनमुत्तमम् ।
हरणं वै सुभद्राया ज्ञातिदेयं महायशाः ॥ ३७
रथानां काञ्चनाङ्गानां किङ्किणीजालमालिनाम् ।
चतुर्युजामुपेतानां सूतैः कुशलशिक्षितैः ॥ ३८
सहस्रं प्रददौ कृष्णो गवामयुतमेव च ।
श्रीमान्माथुरदेश्यानां दोग्ध्रीणां पुण्यवर्चसाम् ३९
बडवानां च शुद्धानां चन्द्रांशुसमवर्चसाम् ।
ददौ जनार्दनः प्रीत्या सहस्रं हेमभूषितम् ॥ ४०
तथैवाश्वतरीणां च दान्तानां वातरंहसाम् ।
शतान्यञ्जनकेशीनां श्वेतानां पञ्चपञ्च च ॥ ४१
स्नानपानोत्सवे चैव प्रयुक्तं वयसान्वितम् ।
स्त्रीणां सहस्रं गौरीणां सुवेषाणां सुवर्चसाम् ॥४२
सुवर्णशतकण्ठीनामरोमाणां स्वलङ्कृताम् ।
परिचर्यासु दक्षाणां प्रददौ पुष्करेक्षणः ॥ ४३
पृष्ठ्यानामपि चाश्वानां बाह्लिकानां जनार्दनः ।
ददौ शतसहस्राख्यं कन्याधनमनुत्तमम् ॥ ४४
कृताकृतस्य मुख्यस्य कनकस्याग्निवर्चसः ।
मनुष्यभारान्दाशार्हो ददौ दश जनार्दनः ॥४५
गजानां तु प्रभिन्नानां त्रिधा प्रस्रवतां मदम् ।
गिरिकूटनिकाशानां समरेष्वनिवर्तिनाम् ॥ ४६
क्लृप्तानां पटुघण्टानां चारूणां हेममालिनाम् ।
हस्त्यारोहैरुपेतानां सहस्रं साहसप्रियः ॥ ४७
रामः पाणिग्रहणिकं ददौ पार्थाय लाङ्गली ।
प्रीयमाणो हलधरः संबन्धं प्रति मानयन् ॥ ४८
स महाधनरत्नौघो वस्त्रकम्बलफेनवान् ।
महागजमहाग्राहः पताकाशैवलाकुलः ॥ ४९
पाण्डुसागरमाविद्धः प्रविवेश महाधनः ।
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् ॥ ५०
प्रतिजग्राह तत्सर्वं धर्मराजो युधिष्ठिरः ।
पूजयामास तांश्चैव वृष्ण्यन्धकमहारथान् ॥ ५१
ते समेता महात्मानः कुरुवृष्ण्यन्धकोत्तमाः ।
विजह्रुरमरावासे नराः सुकृतिनो यथा ॥ ५२
तत्रतत्र महानादैरुत्कृष्टतलनादितैः ।
यथायोगं यथाप्रीति विजह्रुः कुरुवृष्णयः ॥ ५३
एवमुत्तमवीर्यास्ते विहृत्य दिवसान्बहून् ।
पूजिताः कुरुभिर्जग्मुः पुनर्द्वारवतीं प्रति ॥ ५४
रामं पुरस्कृत्य ययुर्वृष्ण्यन्धकमहारथाः ।
रत्नान्यादाय शुभ्राणि दत्तानि कुरुसत्तमैः ॥५५
'रामः सुभद्रां संपूज्य परिष्वज्य स्वसां तदा ।
न्यासेति द्रौपदीमुक्त्वा परिधाय महाबलः ॥५६
पितृष्वसायाश्चरणावभिवाद्य ययौ तदा ।
तस्मिन्काले पृथा प्रीता पूजयामास तं तथा ॥५७
स वृष्णिवीरः पार्थैश्च पौरैश्च परमार्चितः ।
ययौ द्वारवतीं रामो वृष्णिभिः सह संयुतः ॥'५८
वासुदेवस्तु पार्थेन तत्रैव सह भारत ।
'चतुस्त्रिंशदहोरात्रं रममाणो महाबलः ।'
उवास नगरे रम्ये शक्रप्रस्थे महात्मना ॥ ५९
व्यचरद्यमुनातीरे मृगयां स महायशाः ।
मृगान्विध्यन्वराहांश्च रेमे सार्धं किरीटिना ॥६०
ततः सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा ।
जयन्तमिव पौलोमी ख्यातिमन्तमजीजनत् ॥६१
दीर्घबाहुं महोरस्कं वृषभाक्षमरिन्दमम् ।
सुभद्रा सुषुवे वीरमभिमन्युं नरर्षभम् ॥ ६२
अभीश्च मन्युमांश्चैव ततस्तमरिमर्दनम् ।
अभिमन्युरिति प्राहुरार्जुनिं पुरुषर्षभम् ॥ ६३
स सात्वत्यामतिरथः संबभूव धनञ्जयात् ।
मखे निर्मथनेनेव शमीगर्भाद्धुताशनः ॥ ६४
यस्मिञ्जाते महातेजाः कुन्तीपुत्रो युधिष्ठिरः ।
अयुतं गा द्विजातिभ्यः प्रादान्निष्कांश्च भारत ६५
दयितो वासुदेवस्य बाल्यात्प्रभृति चाभवत् ।
पितॄणां चैव सर्वेषां प्रजानामिव चन्द्रमाः ॥ ६६
जन्मप्रभृति कृष्णश्च चक्रे तस्य क्रियाः शुभाः ।
स चापि ववृधे बालः शुक्लपक्षे यथा शशी ॥६७
चतुष्पादं दशविधं धनुर्वेदमरिन्दमः ।
अर्जुनाद्वेद वेदज्ञः सकलं दिव्यमानुषम् ॥ ६८

---

अरोगाणां स्वलङ्कृतां इति ख. पाठः ॥ ४३ ॥

विज्ञानेष्वपि चास्त्राणां सौष्ठवे च महाबलः ।
क्रियास्वपि च सर्वासु विशेषानभ्यशिक्षयत् ॥६९
आगमे च प्रयोगे च चक्रे तुल्यमिवात्मना ।
तुतोष पुत्रं सौभद्रं प्रेक्षमाणो धनञ्जयः ॥ ७०
सर्वसंहननोपेतं सर्वलक्षणलक्षितम् ।
दुर्धर्षमृषभस्कन्धं व्यात्ताननमिवोरगम् ॥ ७१
सिंहदर्पं महेष्वासं मत्तमातङ्गविक्रमम् ।
मेघदुन्दुभिनिर्घोषं पूर्णचन्द्रनिभाननम् ॥ ७२
कृष्णस्य सदृशं शौर्ये वीर्ये रूपे तथाऽऽकृतौ ।
ददर्श पुत्रं बीभत्सुर्मघवानिव तं यथा ॥ ७३
पाञ्चाल्यपि तु पञ्चभ्यः पतिभ्यः शुभलक्षणा ।
लेभे पञ्च सुतान्वीराञ्श्रेष्ठान्पञ्चाचलानिव ॥७४
युधिष्ठिरात्प्रतिविन्ध्यं सुतसोमं वृकोदरात् ।
अर्जुनाच्छ्रुतकर्माणं शतानीकं च नाकुलिम् ॥७५
सहदेवाच्छ्रुतसेनमेतान्पञ्च महारथान् ।
पाञ्चाली सुषुवे वीरानादित्यानदितिर्यथा ॥ ७६
शास्त्रतः प्रतिविन्ध्यन्तमूचुर्विप्रायुधिष्ठिरम् ।
परप्रहरणज्ञाने प्रतिविन्ध्यो भवत्वयम् ॥ ७७
सुते सोमसहस्रे तु सोमार्कसमतेजसम् ।
सुतसोमं महेष्वासं सुषुवे भीमसेनतः ॥ ७८
श्रुतं कर्म महत्कृत्वा निवृत्तेन किरीटिना ।
जातः पुत्रस्तथेत्येवं श्रुतकर्मा ततोऽभवत् ॥ ७९
शतानीकस्य राजर्षेः कौरव्यस्य महात्मनः ।
चक्रे पुत्रं सनामानं नकुलः कीर्तिवर्धनम् ॥ ८०
ततस्त्वजीजनत्कृष्णा नक्षत्रे वह्निदैवते ।
सहदेवात्सुतं तस्माच्छ्रुतसेनेति तं विदुः ॥ ८१
एकवर्षान्तरास्त्वेते द्रौपदेया यशस्विनः ।
अन्वजायन्त राजेन्द्र परस्परहितैषिणः ॥ ८२
जातकर्माण्यानुपूर्व्याच्चूडोपनयनानि च ।
चकार विधिवद्धौम्यस्तेषां भरतसत्तम ॥ ८३
कृत्वा च वेदाध्ययनं ततः सुचरितव्रताः ।
जगृहुः सर्वमिष्वस्त्रमर्जुनाद्दिव्यमानुषम् ॥ ८४
दिव्यगर्भोपमैः पुत्रैर्व्यूढोरस्कैर्महारथैः ।
अन्विता राजशार्दूल पाण्डवा मुदमाप्नुवन् ॥ ८५

॥ इति श्रीमन्महाभारते आदिपर्वणि हरणाहरणपर्वणि सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

॥ समाप्तं च हरणाहरणपर्व ॥

---

# (अथ खाण्डवदाहपर्व ॥ १८ ॥)

## अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥

युधिष्ठिरस्य राज्यपरिपालनप्रकारवर्णनम् ॥ १ ॥ तत्रैव निवसता श्रीकृष्णेन सहार्जुनस्य जलक्रीडार्थं यमुनां प्रति गमनम् ॥ २ ॥ सस्त्रीकयोस्तयोर्जलक्रीडावर्णनम् ॥ ३ ॥ ब्राह्मणरूपस्याग्नेस्तत्रागमनम् ॥ ४ ॥

वैशंपायन उवाच ।
इन्द्रप्रस्थे वसन्तस्ते जघ्नुरन्यान्नराधिपान् ।
शासनाद्धृतराष्ट्रस्य राज्ञः शान्तनवस्य च ॥ १
आश्रित्य धर्मराजानं सर्वलोकोऽवसत्सुखम् ।
पुण्यलक्षणकर्माणं स्वदेहमिव देहिनः ॥ २
स समं धर्मकामार्थान्सिषेवे भरतर्षभ ।
त्रीनिवात्मसमान्बन्धून्नीतिमानिव मानयन् ॥ ३
तेषां समविभक्तानां क्षितौ देहवतामिव ।
बभौ धर्मार्थकामानां चतुर्थ इव पार्थिवः ॥ ४
अध्येतारं परं वेदान्प्रयोक्तारं महाध्वरे ।
रक्षितारं शुभाँल्लोकाँल्लेभिरे तं जनाधिपम् ॥ ५
अधिष्ठानवती लक्ष्मीः परायणवती मतिः ।

---

धरा पञ्च गुणानिव । इति ङ पाठः ॥ ७४ ॥ परप्रहरणज्ञाने शत्रुकृतप्रहारवेदनायां विंध्य इव निर्विज्ञान इति प्रतिविन्ध्यः ॥ ७७ ॥ सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

श्रीः ।

# श्रीमन्महाभारतम् ।

## सभापर्व २ ।

### (अथ मन्त्रपर्व ॥ १ ॥)

#### प्रथमोऽध्यायः ॥ १ ॥

मयस्यार्जुनंप्रति प्रत्युपकारप्रार्थना ॥ १ ॥ कृष्णे उपकृते अहमुपकृत इति मयंप्रति अर्जुनस्योक्तिः ॥ २ ॥ कृष्णाज्ञया मयेन सभानिर्माणारम्भः ॥ ३ ॥

---

॥ श्रीवेदव्यासाय नमः ॥

'नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव (व्यासं) ततो जयमुदीरयेत् ॥ १
जनमेजय उवाच ।
अर्जुनो जयतां श्रेष्ठो मोचयित्वा मयं तदा ।
किं चकार महातेजास्तन्मे ब्रूहि द्विजोत्तम ॥ २
वैशंपायन उवाच ।
शृणु राजन्नवहितश्चरितं पूर्वकस्य ते ।
मोक्षयित्वा मयं तत्र पार्थः शस्त्रभृतां वरः ॥ ३
गाण्डिवं कार्मुकश्रेष्ठं तूणी चाक्षयसायकौ ।
दिव्यान्यस्त्राणि राजेन्द्र दुर्लभानि नृपैर्भुवि ॥ ४
रथध्वजपताकाश्च श्वेताश्वांश्च स वीर्यवान् ।
एतानि पावकात्प्राप्य मुदा परमया युतः ।
तस्थौ पार्थो महावीर्यस्तदा सह मयेन सः ॥' ५
ततोऽब्रवीन्मयः पार्थं वासुदेवस्य संनिधौ ।
'पाण्डवेन परित्रातस्तत्कृतं प्रत्यनुसरन् ॥' ६
प्राञ्जलिः श्लक्ष्णया वाचा पूजयित्वा पुनःपुनः ।
मय उवाच ।
अस्माच्च कृष्णात्संक्रुद्धात्पावकाच्च दिधक्षतः ॥ ७
त्वया त्रातोऽस्मि कौन्तेय ब्रूहि किं करवाणि ते ।
'अहं हि विश्वकर्मा वै असुराणां परन्तप ॥ ८



तस्मात्ते विस्मयं किंचित्कुर्यामन्यैः सुदुष्करम् ॥ ९
वैशंपायन उवाच ।
एवमुक्तो महावीर्यः पार्थो मयाविदं मयम् ।
ध्यात्वा मुहूर्तं कौन्तेयः प्रहसन्वाक्यमब्रवीत् ॥' १०
कृतमेव त्वया सर्वं स्वस्ति गच्छ महाऽसुर ।
प्रीतिमान्भव मे नित्यं प्रीतिमन्तो वयं च ते ॥ ११
'प्राप्तोपकारादर्थं हि नादास्यामीति मे व्रतम् ।'
मय उवाच ।
युक्तमेतत्त्वयि विभो यदात्थ पुरुषर्षभ ॥ १२
प्रीतिपूर्वमहं किंचित्कर्तुमिच्छामि तेऽर्जुन ।
अहं हि विश्वकर्मा वै दानवानां महाकविः ॥ १३
सोऽहं वै त्वत्कृते किंचित्कर्तुमिच्छामि पाण्डव ।
'दानवानां पुरा पार्थ प्रासादा हि मया कृताः ॥ १४
रम्याणि सुखगर्भाणि भोगाढ्यानि सहस्रशः ।
उद्यानानि च रम्याणि सरांसि विविधानि च ॥ १५
विचित्राणि च वस्त्राणि कामगानि रथानि च ।
नगराणि विशालानि साट्टप्राकारवन्ति च ॥ १६
वाहनानि च मुख्यानि विचित्राणि सहस्रशः ।
बिलानि रमणीयानि सुखयुक्तानि वै भृशम् ।
एते कृता मया सर्वे तस्मादिच्छामि फल्गुन ॥' १७

अर्जुन उवाच ।

प्राणकृच्छ्राद्विनिर्मुक्तमात्मानं मन्यसे मया ।
एवं गते न शक्ष्यामि किंचित्कारयितुं त्वया ॥ १८

न चापि तव सङ्कल्पं मोघमिच्छामि दानव ।
कृष्णस्य क्रियतां किंचित्तथा प्रतिकृतं मयि ॥१९

वैशंपायन उवाच ।

चोदितो वासुदेवस्तु मयं प्रति नरर्षभ ।
मुहूर्तमिव संदध्यौ किमयं चोद्यतामिति ॥ २०

ततो विचिन्त्य मनसा लोकनाथः प्रजापतिः ।
चोदयामास तं कृष्णः सभा वै क्रियतामिति ॥२१

यदि त्वं कर्तुकामोऽसि प्रियं शिल्पवतां वर ।
धर्मराजस्य दयितां यादृशीमिह मन्यसे ॥ २२

यां क्रियां नानुकुर्युस्ते मानवाः प्रेक्ष्य विष्ठिताः।
मनुष्यलोके सकले तादृशीं कुरु वै सभाम् ॥ २३

यत्र दिव्यानभिप्रायान्पश्येम विहितांस्त्वया ।
आसुरान्मानुपांश्चैव तादृशीं कुरु वै सभाम् ॥२४

वैशंपायन उवाच ।

प्रतिगृह्य तु तद्वाक्यं संप्रहृष्टो मयस्तदा ।
विमानप्रतिमां चक्रे पाण्डवस्य शुभां सभाम् ॥२५

ततः कृष्णश्च पार्थश्च धर्मराजे युधिष्ठिरे ।
सर्वमेतत्समावेद्य दर्शयामासतुर्मयम् ॥ २६

तस्मै युधिष्ठिरः पूजां यथार्हमकरोत्तदा ।
स तु तां प्रतिजग्राह मयः सत्कृत्य भारत ॥ २७

स पूर्वदेवचरितं तदा तत्र विशांपते ।
कथयामास दैतेयः पाण्डुपुत्रेषु भारत ॥ २८

स कालं कंचिदाश्वस्य विश्वकर्मा विचिन्त्य तु ।
सभां प्रचक्रमे कर्तुं पाण्डवानां महात्मनाम् ॥२९

अभिप्रायेण पार्थानां कृष्णस्य च महात्मनः ।
पुण्येऽहनि महातेजाः कृतकौतुकमङ्गलः ॥ ३०

तर्पयित्वा द्विजश्रेष्ठान्पायसेन सहस्रशः ।
धनं बहुविधं दत्त्वा तेभ्य एव च वीर्यवान् ॥ ३१

सर्वर्तुगुणसंपन्नां दिव्यरूपां मनोरमाम् ।
दशकिष्कुसहस्रां तां मापयामास सर्वतः ॥ ३२

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ॥ २ ॥

द्वारकां गच्छतः श्रीकृष्णस्य युधिष्ठिरादिभिः सारथ्यादिकरणम् ॥ १ ॥ अर्धयोजनपर्यन्तं गतानां कृष्णपाण्डवानां परस्परानुज्ञया स्वस्वपुरगमनम् ॥ २ ॥

वैशंपायन उवाच ।

उषित्वा खाण्डवप्रस्थे सुखवासं जनार्दनः ।
पार्थैः प्रीतिसमायुक्तैः पूजनार्होऽभिपूजितः ॥ १

गमनाय मतिं चक्रे पितुर्दर्शनलालसः ।
धर्मराजमथामन्त्र्य पृथां च पृथुलोचनः ॥ २

ववन्दे चरणौ मूर्ध्ना जगद्वन्द्यः पितृष्वसुः ।
स तया मूर्ध्न्युपाघ्रातः परिष्वक्तश्च केशवः ॥ ३

ददर्शानन्तरं कृष्णो भगिनीं स्वां महायशाः ।
तामुपेत्य हृपीकेशः प्रीत्या बाष्पसमन्वितः ॥ ४

अर्थ्यं तथ्यं हितं वाक्यं लघु युक्तमनुत्तरम् ।
उवाच भगवान्भद्रां सुभद्रां भद्रभाषिणीम् ॥ ५

तया स्वजनगामीनि श्रावितो वचनानि सः ।
संपूजितश्चाप्यसकृच्छिरसा चाभिवादितः ॥ ६

तामनुज्ञाय वार्ष्णेयः प्रतिनन्द्य च भामिनीम् ।
ददर्शानन्तरं कृष्णां धौम्यं चापि जनार्दनः ॥७

ववन्दे च यथान्यायं धौम्यं पुरुषसत्तमः ।
द्रौपदीं सान्त्वयित्वा च सुभद्रां परिदाय च ॥८

भ्रातॄनभ्यगमद्विद्वान्पार्थेन सहितो बली ।
भ्रातृभिः पञ्चभिः कृष्णो वृतः शक्र इवामरैः ॥९

यात्राकालस्य योग्यानि कर्माणि गरुडध्वजः ।
कर्तुकामः शुचिर्भूत्वा स्नातवान्समलङ्कृतः ॥ १०

अर्चयामास देवांश्च द्विजांश्च यदुपुङ्गवः ।

पूर्वदेवो वृषपर्वा दानवस्तस्य चरितं बिन्दुसरसि यज्ञकरणादि ॥ २८ ॥ सभापर्वणि प्रथमोऽध्यायः ॥ १ ॥

माल्यजाप्यनमस्कारैर्गन्धैरुच्चावचैरपि ॥ ११
स कृत्वा सर्वकार्याणि प्रतस्थे तस्थुषां वरः ।
उपेत्य स यदुश्रेष्ठो बाह्यकक्षाद्विनिर्गतः ॥ १२
स्वस्ति वाच्यार्हतो विप्रान्दधिपात्रफलाक्षतैः ।
वसु प्रदाय च ततः प्रदक्षिणमथाकरोत् ॥ १३
काञ्चनं रथमास्थाय तार्क्ष्यकेतनमाशुगम् ।
गदाचक्रासिशार्ङ्गाद्यैरायुधैरावृतं शुभम् ॥ १४
सुतिथावथ नक्षत्रे मुहूर्ते च गुणान्विते ।
प्रययौ पुण्डरीकाक्षः शैब्यसुग्रीववाहनः ॥ १५
अन्वारुरोह चाप्येनं प्रेम्णा राजा युधिष्ठिरः ।
अपास्य चास्य यन्तारं दारुकं यन्तृसत्तमम् ॥ १६
अभीषून्संप्रजग्राह स्वयं कुरुपतिस्तदा ।
उपारुह्यार्जुनश्चाऽपि चामरव्यजनं सितम् ॥ १७
रुक्मदण्डं बृहद्बाहुर्विदुधाव प्रदक्षिणम् ।
तथैव भीमसेनोऽपि रथमारुह्य वीर्यवान् ॥ १८
'छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ।
वैडूर्यमणिदण्डं च चामीकरविभूषितम् ॥ १९
दधार तरसा भीमः सुच्छत्रं शार्ङ्गधन्वने ।
भीमसेनार्जुनौ चापि यमावरिनिषूदनौ ॥' २०
पृष्ठतोऽनुययुः कृष्णमृत्विक्पौरजनैर्वृताः ।
स तथा भ्रातृभिः सर्वैः केशवः परवीरहा ॥ २१
अन्वीयमानः शुशुभे शिष्यैरिव गुरुः प्रियैः ।
'अभिमन्युं च सौभद्रं वृद्धैः परिवृतस्तथा ॥ २२
रथमारोप्य निर्यातो धौम्यो ब्राह्मणपुङ्गवः ।
इन्द्रप्रस्थमतिक्रम्य क्रोशमात्रं महाद्युतिः ।'
पार्थमामन्त्र्य गोविन्दः परिष्वज्य सुपीडितम् २३
युधिष्ठिरं पूजयित्वा भीमसेनं यमौ तथा ।
परिष्वक्तो भृशं तैस्तु यमाभ्यामभिवादितः ॥२४
योजनार्धमथो गत्वा कृष्णः परपुरञ्जयः ।
युधिष्ठिरं समामन्त्र्य निवर्तस्वेति भारत ॥ २५
ततोऽभिवाद्य गोविन्दः पादौ जग्राह धर्मवित् ।
उत्थाप्य धर्मराजस्तु मूर्ध्न्युपाघ्राय केशवम् ॥२६
पाण्डवो यादवश्रेष्ठं कृष्णं कमललोचनम् ।
गम्यतामित्यनुज्ञाप्य धर्मराजो युधिष्ठिरः ॥ २७
ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः ।
निवर्त्य च तथा कृच्छ्रात्पाण्डवान्सपदानुगान् ॥
स्वां पुरीं प्रययौ हृष्टो यथा शक्रोऽमरावतीम् ।
लोचनैरनुजग्मुस्ते तमादृष्टिपथात्तदा ॥ २९
मनोभिरनुजग्मुस्ते कृष्णं प्रीतिसमन्वयात् ।
अतृप्तमनसामेव तेषां केशवदर्शने ॥ ३०
क्षिप्रमन्तर्दधे शौरिश्चक्षुषां प्रियदर्शनः ।
अकामा एव पार्थास्ते गोविन्दगतमानसाः ॥ ३१
निवृत्योपययुस्तूर्णं स्वं पुरं पुरुषर्षभाः ।
स्यन्दनेनाथ कृष्णोऽपि त्वरितं द्वारकामगात् ॥३२
सात्वतेन च वीरेण पृष्ठतो यायिना तदा ।
दारुकेण च सूतेन सहितो देवकीसुतः ॥
स गतो द्वारकां विष्णुर्गरुत्मानिव वेगवान् ॥ ३३
वैशंपायन उवाच ।
निवृत्य धर्मराजस्तु सह भ्रातृभिरच्युतः ।
सुहृत्परिवृतो राजा प्रविवेश पुरोत्तमम् ॥ ३४
विसृज्य सुहृदः सर्वान्भ्रातॄन्पुत्रांश्च धर्मराट् ।
मुमोद पुरुषव्याघ्रो द्रौपद्या सहितो नृप ॥ ३५
केशवोपि मुदा युक्तः प्रविवेश पुरोत्तमम् ।
पूज्यमानो यदुश्रेष्ठैरुग्रसेनमुखैस्तथा ॥ ३६
आहुकं पितरं वृद्धं मातरं च यशस्विनीम् ।
अभिवाद्य बलं चैव स्थितः कमललोचनः ॥ ३७
प्रद्युम्नसाम्बनिशठांश्चारुदेष्णं गदं तथा ।
अनिरुद्धं च भानुं च परिष्वज्य जनार्दनः ॥३८
स वृद्धैरभ्यनुज्ञातो रुक्मिण्या भवनं ययौ ।
'स तत्र भवने दिव्ये प्रमुमोद सुखी सुखम् ३९
एतस्मिन्नन्तरे राजन्मयो दैत्याधिपस्तदा ।
विधिवत्कल्पयामास सभां धर्मसुताय वै ॥' ४०

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ॥ ३ ॥

सभानिर्माणसामग्र्यानयनाय बिन्दुसरःप्रति मयस्य गमनम् ॥ १ ॥ गदाशङ्खाभ्यां सह सामग्रीं गृहीत्वा मयस्य खाण्डवप्रस्थागमनम् ॥ २ ॥ भीमार्जुनयोः गदाशङ्खदानं सभानिर्माणं च ॥ ३ ॥

वैशंपायन उवाच ।
अथाब्रवीन्मयः पार्थमर्जुनं जयतां वरम् ।
आपृच्छे त्वां गमिष्यामि पुनरेष्यामि चाप्यहम् १
'विश्रुतां त्रिषु लोकेषु पार्थ दिव्यां सभां तव ।
प्राणिनां विस्मयकरीं तव प्रियविवर्धिनीम् ।
पाण्डवानां च सर्वेषां करिष्यामि धनञ्जय ॥' २
उत्तरेण तु कैलासं मैनाकं पर्वतं प्रति ।
यियक्षमाणेषु पुरा दानवेषु मया कृतम् ॥ ३
चित्रं मणिमयं भाण्डं रम्यं बिन्दुसरः प्रति ।
सभायां सत्यसन्धस्य यदासीद्वृषपर्वणः ॥ ४
आगमिष्यामि तद्गृह्य यदि तिष्ठति भारत ।
ततः सभां करिष्यामि पाण्डवस्य यशस्विनीम् ५
मनःप्रह्लादिनीं चित्रां सर्वरत्नविभूषिताम् ।
अस्ति बिन्दुसरस्युग्रा गदा च कुरुनन्दन ॥ ६
निहिता यौवनाश्वेन राज्ञा हत्वा रणे रिपून् ।
सुवर्णबिन्दुभिश्चित्रा गुर्वी भारसहा दृढा ॥ ७
सा वै शतसहस्रस्य संमिता शत्रुघातिनी ।
अनुरूपा च भीमस्य गाण्डीवं भवतो यथा ॥ ८
वारुणश्च महाशङ्खो देवदत्तः सुघोषवान् ।
सर्वमेतत्प्रदास्यामि भवते नात्र संशयः ॥ ९
वैशंपायन उवाच ।
इत्युक्त्वा सोऽसुरः पार्थं प्रागुदीचीं दिशं गतः।
अथोत्तरेण कैलासान्मैनाकं पर्वतं प्रति ॥ १०
हिरण्यशृङ्गः सुमहान्महामणिमयो गिरिः ।
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ॥ ११
द्रष्टुं भागीरथीं गङ्गामुवास बहुलाः समाः ।
यत्रेष्टं सर्वभूतानामीश्वरेण महात्मना ॥ १२
आहृताः क्रतवो मुख्याः शतं भरतसत्तम ।
यत्र यूपा मणिमयाश्चैत्याश्चापि हिरण्मयाः ॥ १३
शोभार्थं विहितास्तत्र न तु दृष्टान्ततः कृताः ।
यत्रेष्ट्वा स गतः सिद्धिं सहस्राक्षः शचीपतिः १४
यत्र भूतपतिः सृष्ट्वा सर्वाँल्लोकान्सनातनः ।
उपास्यते तिग्मतेजाः स्थितो भूतैः सहस्रशः १५
नरनारायणौ ब्रह्मा यमः स्थाणुश्च पञ्चमः ।
उपासते यत्र परं सहस्रयुगपर्यये ॥ १६
यत्रेष्टं वासुदेवेन सत्रैर्वर्षगणान्बहून् ।
श्रद्दधानेन सततं धर्मसंप्रतिपत्तये ॥ १७
सुवर्णमालिनो यूपाश्चैत्याश्चाप्यतिभास्वराः ।
ददौ यत्र सहस्राणि प्रयुतानि च केशवः ॥ १८
तत्र गत्वा स जग्राह गदां शङ्खं च भारत ।
'तस्माद्गिरेरुपादाय शिलाः सुरुचिरावहाः' ।
स्फाटिकं च सभाद्रव्यं यदासीद्वृषपर्वणः ॥ १९
किंकरैः सह रक्षोभिर्यदरक्षन्महद्धनम् ।
तदगृह्णान्मयस्तत्र गत्वा सर्वं महाऽसुरः ॥ २०
तदाहृत्य च तां चक्रे सोऽसुरोऽप्रतिमां सभाम् ।
विश्रुतां त्रिषु लोकेषु दिव्यां मणिमयीं शुभां २१
गदां च भीमसेनाय प्रवरां प्रददौ तदा ।
देवदत्तं चार्जुनाय शङ्खप्रवरमुत्तमम् ॥ २२
यस्य शङ्खस्य नादेन भूतानि प्रचकम्पिरे ।
'स कालं कंचिदाश्वस्य विश्वकर्मा विचिन्त्य च २३
सभां प्रचक्रमे कर्तुं पाण्डवानां महात्मनाम् ।
अभिप्रायेण पार्थानां कृष्णस्य च महात्मनः॥२४
सर्वर्तुगुणसंपन्नां दिव्यरूपामलङ्कृताम् ।
तर्पयित्वा द्विजश्रेष्ठान्पायसेन सहस्रशः ।
सभा च सा महाराज शातकुम्भमयद्रुमा ॥ २५
दशकिष्कुसहस्राणि समन्तादायताभवत् ।
यथा वह्नेर्यथार्कस्य सोमस्य च यथा सभा ॥२६
भ्राजमाना तथाऽत्यर्थं दधार परमं वपुः ।
अभिघ्नतीव प्रभया प्रभामर्कस्य भास्वराम् ॥ २७
प्रबभौ ज्वलमानेव दिव्या दिव्येन वर्चसा ।
नवमेघप्रतीकाशा दिवमावृत्य विष्ठिता ।
आयता विपुला रम्या विपाप्मा विगतक्लमा २८

उत्तमद्रव्यसंपन्ना रत्नप्राकारतोरणा ।
बहुचित्रा बहुधना सुकृता विश्वकर्मणा ॥ २९
न दाशार्ही सुधर्मा वा ब्रह्मणो वाथ तादृशी ।
सभा रूपेण संपन्ना यां चक्रे मतिमान्मयः ॥ ३०
तां स्म तत्र मयेनोक्ता रक्षन्ति च वहन्ति च ।
सभामष्टौ सहस्राणि किङ्करा नाम राक्षसाः ॥ ३१
अन्तरिक्षचरा घोरा महाकाया महाबलाः ।
रक्ताक्षाः पिङ्गलाक्षाश्च शुक्तिकर्णाः प्रहारिणः ३२
तस्यां सभायां नलिनीं चकाराप्रतिमां मयः ।
वैदूर्यपत्रविततां मणिनालमयाम्बुजाम् ॥ ३३
पद्मसौगन्धिकवतीं नानाद्विजगणायुताम् ।
पुष्पितैः पङ्कजैश्चित्रां कूर्ममत्स्यैश्च काञ्चनैः ।
चित्रस्फटिकसोपानां निष्पङ्कसलिलां शुभाम् ३४
मन्दानिलसमुद्धूतां मुक्ताबिन्दुभिराचिताम् ।
महामणिशिलापट्टबद्धपर्यन्तवेदिकाम् ॥ ३५
मणिरत्नचितां तां तु केचिदभ्येत्य पार्थिवाः ।
दृष्ट्वापि नाभ्यजानन्त तेऽज्ञानात्प्रपतन्त्युत ॥ ३६
तां सभामभितो नित्यं पुष्पवन्तो महाद्रुमाः ।
आसन्नानाविधा लोलाः शीतच्छाया मनोरमाः ॥
काननानि सुगन्धीनि पुष्करिण्यश्च सर्वशः ।
हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः ॥ ३८
जलजानां च पद्मानां स्थलजानां च सर्वशः ।
मारुतो गन्धमादाय पाण्डवान्स्म निषेवते ॥ ३९
ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः ।
निष्ठितां धर्मराजाय मयो राजन्न्यवेदयत् ॥ ४०

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ॥ ४ ॥

ब्राह्मणान्भोजयित्वा युधिष्ठिरस्य सभाप्रवेशः ॥ १ ॥ ऋषीणां क्षत्रियाणां देवगन्धर्वादीनां च तत्रोपवेशनम् ॥ २ ॥

वैशंपायन उवाच ।
'तां तु कृत्वा सभां श्रेष्ठां मयश्चार्जुनमब्रवीत् ।
भूतानां च महावीर्यो ध्वजाग्रे किङ्करो गणः ॥ १
तव विष्फारघोषेण मेघवन्निनदिष्यति ।
अयं हि सूर्यसङ्काशो ज्वलनस्य रथो महान् ॥ २
इमे च दिव्यजाः श्वेता वीर्यवन्तो हयोत्तमाः ।
मायामयः कृतो ह्येष ध्वजो वानरलक्षणः ॥ ३
असज्जमानो वृक्षेषु धूमकेतुरिवोच्छ्रितः ।
बहुवर्णं हि लक्ष्येत ध्वजं वानरलक्षणम् ॥ ४
ध्वजोत्कटं ह्यनवमं युद्धे द्रक्ष्यसि विष्ठितम् ।
एष वीरः सव्यसाचिन्ध्वजस्यान्ते भविष्यति ॥ ५
वैशंपायन उवाच ।
इत्युक्त्वाऽऽलिङ्ग्य बीभत्सुं विसृष्टः प्रययौ मयः' ६
ततः प्रवेशनं तस्यां चक्रे राजा युधिष्ठिरः ।
अयुतं भोजयित्वा तु ब्राह्मणानां नराधिपः ॥ ७
साज्येन पायसेनैव मधुना मिश्रितेन च ।
भक्ष्यैर्मूलैः फलैश्चैव मांसैर्वाराहहारिणैः ।
कृसरेणाथ जीवन्त्या हविष्येण च सर्वशः ॥ ८
मांसप्रकारैर्विविधैः खाद्यैश्चापि तथा नृप ।
चोष्यैश्च विविधै राजन्पेयैश्च बहुविस्तरैः ॥ ९
अहतैश्चैव वासोभिर्माल्यैरुच्चावचैरपि ।
तर्पयामास विप्रेन्द्रान्नानादिग्भ्यः समागतान् १०
ददौ तेभ्यः सहस्राणि गवां प्रत्येकशः पुनः ।
पुण्याहघोषस्तत्रासीद्दिवस्पृगिव भारत ॥ ११
वादित्रैर्विविधैर्दिव्यैर्गन्धैरुच्चावचैरपि ।
पूजयित्वा कुरुश्रेष्ठो दैवतानि निवेश्य च ॥ १२
तत्र मल्ला नटा झल्लाः सूता वैतालिकास्तथा ।
उपतस्थुर्महात्मानं धर्मपुत्रं युधिष्ठिरम् ॥ १३
तथा स कृत्वा पूजां तां भ्रातृभिः सह पाण्डवः ।
तस्यां सभायां रम्यायां रेमे शक्रो यथा दिवि ॥ १४
सभायामृषयस्तस्यां पाण्डवैः सह आसते ।
आसाञ्चक्रुर्नरेन्द्राश्च नानादेशसमागताः ॥ १५

असितो देवलः सत्यः सर्पिर्माली महाशिराः ।
अर्वा वसुः सुमित्रश्च मैत्रेयः शुनको वलिः ॥१६
वको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः शुकः ।
सुमन्तुर्जैमिनिः पैलो व्यासशिष्यास्तथा वयम् १७
तित्तिरिर्याज्ञवल्क्यश्च ससुतो रोमहर्षणः ।
अप्सुहोम्यश्च धौम्यश्च अणीमाण्डव्यकौशिकौ १८
दामोष्णीषस्त्रैवलिश्च पर्णादो घटजानुकः ।
मौञ्जायनो वायुभक्षः पाराशर्यश्च सारिकः ॥१९
वलिवाकः सिनीवाकः सप्तपालः कृतश्रमः ।
जातूकर्णः शिखावांश्च आलम्बः पारिजातकः॥२०
पर्वतश्च महाभागो मार्कण्डेयो महामुनिः ।
पवित्रपाणिः सावर्णो भालुकिर्गालवस्तथा ॥ २१
जङ्घावन्धुश्च रैभ्यश्च कोपवेगस्तथा भृगुः ।
हरिवभ्रुश्च कौण्डिन्यो वभ्रुमाली सनातनः ॥ २२
काक्षीवानौशिजश्चैव नाचिकेतोऽथ गौतमः ।
पैङ्ग्यो वराहः शुनकः शाण्डिल्यश्च महातपाः॥२३
कुक्कुरो वेणुजङ्घोऽथ कालापः कठ एव च ।
मुनयो धर्मविद्वांसो धृतात्मानो जितेन्द्रियाः॥२४
एते चान्ये च वहवो वेदवेदाङ्गपारगाः ।
उपासते महात्मानं सभायामृषिसत्तमाः ॥ २५
कथयन्तः कथाः पुण्या धर्मज्ञाः शुचयोऽमलाः ।
तथैव क्षत्रियश्रेष्ठा धर्मराजमुपासते ॥ २६
श्रीमान्महात्मा धर्मात्मा मुञ्जकेतुर्विवर्धनः ।
सङ्ग्रामजिद्दुर्मुखश्च उग्रसेनश्च वीर्यवान् ॥ २७
कक्षसेनः क्षितिपतिः क्षेमकश्चापराजितः ।
कम्बोजराजः कमठः कम्पनश्च महावलः ॥ २८
सततं कम्पयामास यवनानेक एव यः ।
वलपौरुषसंपन्नान्कृतास्त्रानमितौजसः ।
यथाऽसुरान्कालकेयान्देवो वज्रधरस्तथा ॥ २९
जटासुरो मद्रकानां च राजा
कुन्तिः पुलिन्दश्च किरातराजः ।
तथाङ्गवाङ्गौ सहपुण्ड्रकेण
पाण्ड्योड्रराजौ च सहान्ध्रकेण ॥ ३०

अङ्गो वङ्गः सुमित्रश्च शैब्यश्चामित्रकर्शनः ।
किरातराजः सुमना यवनाधिपतिस्तथा ॥ ३१
चाणूरो देवरातश्च भोजो भीमरथश्च यः ।
श्रुतायुधश्च कालिङ्गो जयसेनश्च मागधः ॥ ३२
सुकर्मा चेकितानश्च पुरुश्चामित्रकर्शनः ।
केतुमान्वसुदानश्च वैदेहोऽथ कृतक्षणः ॥ ३३
सुधर्मा चानिरुद्धश्च श्रुतायुश्च महावलः ।
अनूपराजो दुर्धर्षः क्रमजिच्च सुदर्शनः ॥ ३४
शिशुपालः सहसुतः करूपाधिपतिस्तथा ।
वृष्णीनां चैव दुर्धर्षाः कुमारा देवरूपिणः ॥ ३५
आहुको विपृथुश्चैव गदः सारण एव च ।
अक्रूरः कृतवर्मा च सत्यकश्च शिनेः सुतः॥३६
भीष्मकोऽथाकृतिश्चैव द्युमत्सेनश्च वीर्यवान् ।
केकयाश्च महेष्वासा यज्ञसेनश्च सोमकिः ॥ ३७
केतुमान्वसुमांश्चैव कृतास्त्रश्च महावलः ।
एते चान्ये च वहवः क्षत्रिया मुख्यसंमताः ३८
उपासते सभायां स्म कुन्तीपुत्रं युधिष्ठिरम् ।
अर्जुनं ये च संश्रित्य राजपुत्रा महावलाः ॥३९
अशिक्षन्त धनुर्वेदं रौरवाजिनवाससः ।
तत्रैव शिक्षिता राजन्कुमारा वृष्णिनन्दनाः॥४०
रौक्मिणेयश्च साम्बश्च युयुधानश्च सात्यकिः ।
सुधर्मा चानिरुद्धश्च शैब्यश्च नरपुङ्गवः ॥ ४१
एते चान्ये च वहवो राजानः पृथिवीपते ।
धनञ्जयसखा चात्र नित्यमास्ते स्म तुम्बुरुः ॥४२
उपासते महात्मानमासीनं सप्तविंशतिः ।
चित्रसेनः सहामात्यो गन्धर्वाप्सरसस्तथा ॥ ४३
गीतवादित्रकुशलाः साम्यतालविशारदाः ।
प्रमाणेऽथ लये स्थाने किन्नराः कृतनिश्रमाः ४४
संचोदितास्तुम्बुरुणा गन्धर्वसहितास्तदा ।
गायन्ति दिव्यतानैस्ते यथान्यायं मनस्विनः ४५
पाण्डुपुत्रानृषींश्चैव रमयन्त उपासते ।

कालकेयाः कालकाया अपत्यान्यसुराः ॥ २९ ॥

सभापर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

तस्यां सभायामासीनाः सुव्रताः सत्यसङ्गराः ४६ | दिवीव देवा ब्रह्माणं युधिष्ठिरमुपासते ॥ ४७

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ॥ ५ ॥

तत्रागतेन युधिष्ठिरपूजितेन नारदेन कुशलप्रश्नव्याजेन राजनीतिकथनम् ॥ १ ॥

वैशंपायन उवाच ।

अथ तत्रोपविष्टेषु पाण्डवेषु महात्मसु ।
महत्सु चोपविष्टेषु गन्धर्वेषु च भारत ॥ १
वेदोपनिषदां वेत्ता ऋषिः सुरगणार्चितः ।
इतिहासपुराणज्ञः क्रियाकल्पविशेषवित् ॥ २
'स्तुतस्तोमग्रहस्तोभपदक्रमविभागवित् ।
शिक्षाक्षरविभागज्ञः पुराकल्पविशेषवित् ॥ ३
आदिकल्पार्थवेत्ता च कल्पसूत्रार्थतत्त्ववित् ।
ब्रह्मचर्यव्रतपर ऊहापोहविशारदः ॥ ४
नृत्तगान्धर्वसेवी च सर्वत्राप्रतिमस्तथा ।
अष्टादशानां विद्यानां कोशभूतो महाद्युतिः ॥'५
न्यायविद्धर्मतत्त्वज्ञः षडङ्गविदनुत्तमः ।
ऐक्यसंयोगनानात्वसमवायविशारदः ॥ ६
वक्ता प्रगल्भो मेधावी स्मृतिमान्नयवित्कविः ।
परापरविभागज्ञः प्रमाणकृतनिश्चयः ॥ ७
पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् ।
उत्तरोत्तरवक्ता च वदतोपि बृहस्पतेः ॥ ८
धर्मकामार्थमोक्षेषु यथावत्कृतनिश्चयः ।
तथा भुवनकोशस्य सर्वस्यास्य महामतिः ॥ ९
प्रत्यक्षदर्शी लोकस्य तिर्यगूर्ध्वमधस्तथा ।
साङ्ख्ययोगविभागज्ञो निर्विवित्सुः सुरासुरान् १०
सन्धिविग्रहतत्त्वज्ञस्त्वनुमानविभागवित् ।
षाड्गुण्यविधियुक्तश्च सर्वशास्त्रविशारदः ॥ ११
युद्धगान्धर्वसेवी च सर्वत्राप्रतिघस्तथा ।
एतैश्चान्यैश्च बहुभिर्युक्तो गुणगणैर्मुनिः ॥ १२
लोकाननुचरन्सर्वानागमत्तां सभां नृप ।
नारदः सुमहातेजा ऋषिभिः सहितस्तदा ॥ १३
पारिजातेन राजेन्द्र पर्वतेन च धीमता ।
सुमुखेन च सौम्येन देवर्षिरमितद्युतिः ॥ १४
सभास्थान्पाण्डवान्द्रष्टुं प्रीयमाणो मनोजवः ।
जयाशीर्भिस्तु तं विप्रो धर्मराजानमार्चयत् ॥१५
तमागतमृषिं दृष्ट्वा नारदं सर्वधर्मवित् ।
सहसा पाण्डवश्रेष्ठः प्रत्युत्थायानुजैः सह ॥ १६
अभ्यवादयत प्रीत्या विनयावनतस्तदा ।
तदर्हमासनं तस्मै संप्रदाय यथाविधि ॥ १७
गां चैव मधुपर्कं च संप्रदायार्घ्यमेव च ।
अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित् ॥ १८
तुतोष च यथावच्च पूजां प्राप्य युधिष्ठिरात् ।
सोऽर्चितः पाण्डवैः सर्वैर्महर्षिर्वेदपारगः ।
धर्मकामार्थसंयुक्तं पप्रच्छेदं युधिष्ठिरम् ॥ १९

नारद उवाच ।

कच्चिदर्थाश्च कल्पन्ते धर्मे च रमते मनः ।
सुखानि चानुभूयन्ते मनश्च न विहन्यते ॥ २०
कच्चिदाचरितां पूर्वैर्नरदेवपितामहैः ।
वर्तसे वृत्तिमक्षुद्रां धर्मार्थसहितां त्रिषु ॥ २१
कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा ।
उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ॥ २२
कच्चिदर्थं च धर्मं च कामं च जयतां वर ।
विभज्य काले कालज्ञः सदा वरद सेवसे ॥ २३
कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथाऽनघ ।
बलाबलं तथा सम्यक्चतुर्दश परीक्षसे ॥ २४
कच्चिदात्मानमन्वीक्ष्य परांश्च जयतां वर ।
तथा सन्धाय कर्माणि अष्टौ भारत सेवसे ॥२५

---

षड्गुणाः सन्धिविग्रहादयः । सप्तोपायाः मन्त्रौषधेन्द्रजालसहिताः सामादयः । स्वपरपक्षबलाबलसहिता एतएव चतुर्दश ॥ २४ ॥ अष्टौ कर्माणि-कृषिर्वणिक्पथो दुर्गं सेतुः कुञ्जरबन्धनम् । खन्याकरकरादानं शून्यानां च निवेशनमित्युक्तानि ॥२५॥

कच्चित्प्रकृतयः सप्त न लुप्ता भरतर्षभ ।
आढ्यास्तथा व्यसनिनः स्वनुरक्ताश्च सर्वशः ॥ २६
कच्चिन्न कृतकैर्दूतैर्ये चाप्यपरिशङ्किताः ।
त्वत्तो वा तव चामात्यैर्भिद्यते मन्त्रितं तथा ॥ २७
मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितम् ।
कच्चित्सन्धिं यथाकालं विग्रहं चोपसेवसे ॥ २८
कच्चिद्वृत्तिमुदासीने मध्यमे चानुमन्यसे ।
कच्चिदात्मसमा वृद्धाः शुद्धाः संबोधनक्षमाः ॥ २९
कुलीनाश्चानुरक्ताश्च कृतास्ते वीरमन्त्रिणः ।
विजयो मन्त्रमूलो हि राज्ञो भवति भारत ॥ ३०
कच्चित्संवृतमन्त्रैस्ते अमात्यैः शास्त्रकोविदैः ।
राष्ट्रं सुरक्षितं तात शत्रुभिर्न विलुप्यते ॥ ३१
कच्चिन्निद्रावशं नैषि कच्चित्काले विबुध्यसे ।
कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् ॥ ३२
कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।
कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रं परिधावति ॥ ३३
कच्चिदर्थान्विनिश्चित्य लघुमूलान्महोदयान् ।
क्षिप्रमारभसे कर्तुं न विघ्नयसि तादृशान् ॥ ३४
कच्चिन्न सर्वे कर्मान्ताः परोक्षास्ते विशङ्किताः ।
सर्वे वा पुनरुत्सृष्टाः संसृष्टं चात्र कारणम् ॥ ३५
आप्तैरलुब्धैः क्रमिकैस्ते च कच्चिदनुष्ठिताः ।
कच्चिद्राजन्कृतान्येव कृतप्रायाणि वा पुनः ॥ ३६
विदुस्ते वीर कर्माणि नानवाप्तानि कानिचित् ।
कच्चित्कारणिका धर्मे सर्वशास्त्रेषु कोविदाः ।
कारयन्ति कुमारांश्च योधमुख्यांश्च सर्वशः ॥ ३७
कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम् ।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं परम् ॥ ३८
कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः ।
यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ ३९
एकोऽप्यमात्यो मेधावी शूरो दान्तो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥ ४०
कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ ४१
कच्चिद्द्विषामविदितः प्रतिपन्नश्च सर्वदा ।
नित्ययुक्तो रिपून्सर्वान्वीक्षसे रिपुसूदन ॥ ४२
कच्चिद्विनयसंपन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरनुप्रष्टा सत्कृतस्ते पुरोहितः ॥ ४३
कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः ।
हुतं च होष्यमाणं च काले वेदयते सदा ॥ ४४
कच्चिदङ्गेषु निष्णातो ज्योतिषः प्रतिपादकः ।
उत्पातेषु च सर्वेषु दैवज्ञः कुशलस्तव ॥ ४५
कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ।
जघन्याश्च जघन्येषु भृत्याः कर्मसु योजिताः ॥ ४६
अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् ।
श्रेष्ठाञ्श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ ४७
कच्चिन्नोग्रेण दण्डेन भृशमुद्विजसे प्रजाः ।
राष्ट्रं तवानुशासन्ति मन्त्रिणो भरतर्षभ ॥ ४८
कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा ।
उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ ४९
कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमाञ्शुचिः ।
कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तथा ॥ ५०
कच्चिद्बलस्य ते मुख्याः सर्वयुद्धविशारदाः ।
धृष्टावदाता विक्रान्तास्त्वया सत्कृत्य मानिताः ॥
कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ।
संप्राप्तकाले दातव्यं ददासि न विकर्षसि ॥ ५२
कालातिक्रमणादेते भक्तवेतनयोर्भृताः ।
भर्तुः कुप्यन्ति दौर्गत्यात्सोऽनर्थः सुमहान्स्मृतः ॥
कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः ।

---

सप्तप्रकृतयः स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलाख्याः ॥ २६ ॥ कच्चिन्न तर्कैर्दूतैर्वा इति ख-पाठः ॥ २७ ॥ शुचयो जीवितक्षमाः इति ख-पाठः ॥ २८ ॥ कर्मान्ताः कृष्याद्यः ॥ ३५ ॥ कारणिकाः युद्धोपकरणयुक्ताः ॥ ३७ ॥ मन्त्री पुरोहितश्चैव युवराजश्चमूपतिः । पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वेशिकस्तथा १, कारागाराधिकारी च द्रव्यसंचयकृत्तथा । कृत्याकृत्येषु चार्थानां न-वमो विनियोजकः २, प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा । धर्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ३, षोडशो दुर्गपालश्च तथा राष्ट्रान्तपालकः । अटवीपालकान्तानि तीर्थान्यष्टादशैव तु ४, चारान्विचारयेत्तीर्थेष्वात्मनश्च परस्य च । पाखण्डादीनविज्ञातानन्योन्यमितरेष्वपि ५, मन्त्रिणं युवराजं च हित्वा स्वेषु पुरोहितमिति ॥ ४१ ॥

कच्चित्प्राणांस्तवार्थेषु सन्त्यजन्ति सदा युधि ॥५४
कच्चिन्नैको बहूनर्थान्सर्वशः सांपरायिकान् ।
अनुशास्ति यथाकामं कामात्मा शासनातिगः ५५
कच्चित्पुरुषकारेण पुरुषः कर्म शोभयन् ।
लभते मानमधिकं भूयो वा भक्तवेतनम् ॥ ५६
कच्चिद्विद्याविनीतांश्च नराञ्ज्ञानविशारदान् ।
यथार्हं गुणतश्चैव दानेनाभ्युपपद्यसे ॥ ५७
कच्चिद्दारान्मनुष्याणां तवार्थे मृत्युमीयुषाम् ।
व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ ॥ ५८
कच्चिद्भयादुपगतं क्षीणं वा रिपुमागतम् ।
युद्धे वा विजितं पार्थ पुत्रवत्परिरक्षसि ॥ ५९
कच्चित्त्वमेव सर्वस्याः पृथिव्याः पृथिवीपते ।
समश्चानभिशङ्क्यश्च यथा माता यथा पिता ॥ ६०
कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ ।
अभियासि जवेनैव समीक्ष्य त्रिविधं बलम् ॥६१
यात्रामारभसे दिष्ट्या प्राप्तकालमरिन्दम ।
पार्ष्णिमूलं च विज्ञाय व्यवसायं पराजयम् ॥ ६२
बलस्य च महाराज दत्त्वा वेतनमग्रतः ।
कच्चिच्च बलमुख्येभ्यः परराष्ट्रे परन्तप ।
उपच्छन्नानि रत्नानि प्रयच्छसि यथार्हतः ॥ ६३
कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः ।
पराञ्जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान् ॥ ६४
कच्चित्ते यास्यतः शत्रून्पूर्वं यान्ति स्वनुष्ठिताः ।
साम दानं च भेदश्च दण्डश्च विधिवद्गुणाः ॥६५
कच्चिन्मूलं दृढं कृत्वा परान्यासि विशांपते ।
तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि ॥ ६६
कच्चिदष्टाङ्गसंयुक्ता चतुर्विधबला चमूः ।
बलमुख्यैः सुनीता ते द्विषतां प्रतिवर्धिनी ॥६७
कच्चिल्लवं च मुष्टिं च परराष्ट्रे परन्तप ।
अविहाय महाराज निहंसि समरे रिपून् ॥ ६८
कच्चित्स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव ।
अर्थान्समधितिष्ठन्ति रक्षन्ति च परस्परम् ॥ ६९
कच्चिदभ्यवहार्याणि गात्रसंस्पर्शनानि च ।
घ्रेयाणि च महाराज रक्षन्त्यनुमतास्तव ॥ ७०
कच्चित्कोशश्च कोष्ठं च वाहनं द्वारमायुधम् ।
आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ॥ ७१
कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशांपते ।
रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान् ७२
कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च ।
प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव ॥ ७३
कच्चिदायस्य चार्धेन चतुर्भागेन वा पुनः ।
पादभागैस्त्रिभिर्वापि व्ययः संशुद्ध्यते तव ॥७४

कच्चिज्ज्ञातीन्गुरून्वृद्धा-
न्वणिजः शिल्पिनः श्रितान् ।
अभीक्ष्णमनुगृह्णासि
धनधान्येन दुर्गतान् ॥ ७५

कच्चिच्चायव्यये युक्ताः सर्वे गणकलेखकाः ।
अनुतिष्ठन्ति पूर्वाह्णे नित्यमायं व्ययं तव ॥७६
कच्चिदर्थेषु संप्रौढान्हितकामाननुप्रियान् ।
नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् ॥७७
कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान् ।
त्वं कर्मस्वनुरूपेषु नियोजयसि भारत ॥ ७८
कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशांपते ।
अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः ॥ ७९
कच्चिन्न चौरैर्लुब्धैर्वा कुमारैः स्त्रीबलेन वा ।
त्वया वा पीड्यते राष्ट्रं कच्चित्तुष्टाः कृषीवलाः ८०
कच्चिद्राष्ट्रे तटाकानि पूर्णानि च बृहन्ति च ।
भागशो विनिविष्टानि न कृषिर्देवमातृका ॥८१
कच्चिन्न भक्तं बीजं च कर्षकस्यावसीदति ।
प्रत्येकं च शतं वृद्ध्या ददास्यृणमनुग्रहम् ॥ ८२
कच्चित्स्वनुष्ठिता तात वार्ता ते साधुभिर्जनैः ।
वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते ॥८३
कच्चिच्छूराः कृतप्रज्ञाः पञ्चपञ्च स्वनुष्ठिताः ।

---

अष्टाङ्गसंयुक्ता—रथा नागा हया योधाः पत्तयः कर्मकारकाः । चारा दैशिकमुख्याश्च ध्वजिन्यष्टाङ्गिका मता । चतुर्विधबला मौलमैत्रभृत्याटविकैर्बलैर्युक्ता । बलमुख्यैः सेनापतिभिः प्रतिवर्धिनी प्रातिकूल्येन च्छेदिनी ॥ ६७ ॥ लवः सस्यच्छेदनकालः । मुष्टिः सस्यानां गोपनकालः ॥ ६८ ॥ कोष्ठं धान्यस्थानम् ॥ ७१ ॥ कच्चिन्नेति पानादिव्यसनजं व्ययं तव पूर्वाह्णे धर्माचरणकाले भृत्या न प्रतिजानन्ति नावेदयन्ति ॥ ७३ ॥ अनुतिष्ठन्ति निवेदयन्ति ॥७६॥ अप्राप्तव्यवहारा अप्रौढाः ॥ ७९ ॥ प्रतिग्रामं पञ्चपञ्चेति ।

क्षेमं कुर्वन्ति संहत्य राजञ्जनपदे तव ॥ ८४
कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत्कृताः ।
ग्रामवच्च कृताः प्रान्तास्ते च सर्वे त्वदर्पणाः ॥ ८५
कच्चिद्बलेनानुगताः समानि विषमाणि च ।
पुराणि चौरान्निघ्नन्तश्चरन्ति विषये तव ॥ ८६
कच्चित्स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः ।
कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥८७
कच्चिदात्ययिकं श्रुत्वा तदर्थमनुचिन्त्य च ।
प्रियाण्यनुभवञ्शेषे न त्वमन्तःपुरे नृप ॥ ८८
कच्चिद्द्वौ प्रथमौ यामौ रात्रेः सुप्त्वा विशांपते ।
संचिन्तयसि धर्मार्थौ याम उत्थाय पश्चिमे ॥८९
कच्चिद्दर्शयसे नित्यं मनुष्यान्समलङ्कृतः ।
उत्थाय काले कालज्ञैः सह पाण्डव मन्त्रिभिः ॥९०
कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलङ्कृताः ।
उपासते त्वामभितो रक्षणार्थमरिन्दम ॥ ९१
कच्चिद्दण्ड्येषु यमवत्पूज्येषु च विशांपते ।
परीक्ष्य वर्तसे सम्यगप्रियेषु प्रियेषु च ॥ ९२
कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा ।
मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि ॥ ९३
कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः ।
सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा ॥ ९४
कच्चिन्न लोभान्मोहाद्वा मानाद्वापि विशांपते ।
अर्थिप्रत्यर्थिनः प्राप्तान्नापास्यसि कथंचन ॥ ९५
कच्चिन्न लोभान्मोहाद्वा विश्रम्भात्प्रणयेन वा ।
आश्रितानां मनुष्याणां वृत्तिं त्वं संरुणत्सि वै ९६
कच्चित्पौरा न सहिता ये च ते राष्ट्रवासिनः ।
त्वया सह विरुध्यन्ते परैः क्रीताः कथंचन ॥९७
कच्चिन्न दुर्बलः शत्रुर्बलेन परिपीडितः ।
मन्त्रेण बलवान्कश्चिदुभाभ्यां च कथंचन ॥ ९८
कच्चित्सर्वेऽनुरक्तास्त्वां भूमिपालाः प्रधानतः ।
कच्चित्प्राणांस्त्वदर्थेषु सन्त्यजन्ति त्वया हृताः ९९
कच्चित्ते सर्वविद्यासु गुणतोऽर्चा प्रवर्तते ।
ब्राह्मणानां च साधूनां तव नैःश्रेयसी शुभा ।
दक्षिणास्त्वं ददास्येषां नित्यं स्वर्गापवर्गदाः १००
कच्चिद्धर्मे त्रयीमूले पूर्वैराचरिते जनैः ।
यतमानस्तथा कर्तुं तस्मिन्कर्मणि वर्तसे ॥ १०१
कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः ।
गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणम् ॥१०२
कच्चित्क्रतूनेकचित्तो वाजपेयांश्च सर्वशः ।
पौण्डरीकांश्च कार्त्स्न्येन यतसे कर्तुमात्मवान् १०३
कच्चिज्ज्ञातीन्गुरून्वृद्धान्दैवतांस्तापसानपि ।
चैत्यांश्च वृक्षान्कल्याणान्ब्राह्मणांश्च नमस्यसि १०४
कच्चिच्छोको न मन्युर्वा त्वया प्रोत्पाद्यतेऽनघ ।
अपि मङ्गलहस्तश्च जनः पार्श्वे न तिष्ठति ॥ १०५
कच्चिदेषा च ते बुद्धिर्वृत्तिरेषा च तेऽनघ ।
आयुष्या च यशस्या च धर्मकामार्थदर्शिनी १०६
एतया वर्तमानस्य बुद्ध्या राष्ट्रं न सीदति ।
विजित्य च महीं राजा सोत्यन्तं सुखमेधते ॥१०७
कच्चिदार्यो विशुद्धात्मा क्षारितश्चौरकर्मणि ।
अदृष्टशास्त्रकुशलैर्न लोभाद्बध्यते शुचिः ॥ १०८
दुष्टो गृहीतस्तत्कारितज्ज्ञैर्दृष्टः सकारणः ।
कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ॥ १०९
उत्पन्नान्कच्चिदाढ्यस्य दरिद्रस्य च भारत ।
अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः ॥
नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ।
अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम् ।
एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् ॥ १११
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ।
मङ्गलाद्यप्रयोगं च प्रत्युत्थानं च सर्वतः ॥११२
कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ।
प्रायशो यैर्विनश्यन्ति कृतमूलापि पार्थिवाः ११३
कच्चित्ते सफला वेदाः कच्चित्ते सफलं धनम् ।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ११४

तेच–प्रशास्ता समाहर्ता संविधाता लेखकः साक्षी चेति॥ ८४ ॥ आत्ययिकमकल्याणम् ॥ ८८ ॥ आबाधं दुःखम् । नियमेन पथ्याशनादिना ॥ ९३ ॥ निदानं पूर्वलिङ्गानि रूपाण्युपशयस्तथा । संप्राप्तिरौषधी रोगी परिचारक एव चेत्यष्टाङ्गानि ॥ ९४ ॥ तवाध्यक्षं त्वत्समक्षम् ॥ १०२ ॥ क्षारितः मिथ्यापवादैः पातितः ॥ १०८ ॥ कृतमूलाः अपीति छेदः ॥ ११३ ॥

युधिष्ठिर उवाच ।
कथं वै सफला वेदाः कथं वै सफलं धनम् ।
कथं वै सफला दाराः कथं वै सफलं श्रुतम् ११५
नारद उवाच ।
अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ।
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥ ११६
वैशंपायन उवाच ।
एतदाख्याय स मुनिर्नारदो वै महातपाः ।
पप्रच्छानन्तरमिदं धर्मात्मानं युधिष्ठिरम् ॥ ११७
नारद उवाच ।
कच्चिदभ्यागता दूराद्वणिजो लाभकारणात् ।
यथोक्तमवहार्यन्ते शुल्कं शुल्कोपजीविभिः ॥ ११८
कच्चित्ते पुरुषा राजन्पुरे राष्ट्रे च मानिताः ।
उपानयन्ति पण्यानि उपधाभिरवञ्चिताः ॥ ११९
कच्चिच्छृणोषि वृद्धानां धर्मार्थसहिता गिरः ।
नित्यमर्थविदां तात यथाधर्मार्थदर्शिनाम् ॥ १२०
कच्चित्ते कृषितन्त्रेषु गोषु पुष्पफलेषु च ।
धर्मार्थं च द्विजातिभ्यो दीयेते मधुसर्पिषी १२१
द्रव्योपकरणं किंचित्सर्वदा सर्वशिल्पिनाम् ।
चातुर्मास्यावरं सम्यङ्नियतं संप्रयच्छसि ॥ १२२
कच्चित्कृतं विजानीषे कर्तारं च प्रशंससि ।
सतां मध्ये महाराज सत्करोषि च पूजयन् ॥ १२३
कच्चित्सूत्राणि सर्वाणि गृह्णासि भरतर्षभ ।
हस्तिसूत्राश्वसूत्राणि रथसूत्राणि वा विभो ॥ १२४
कच्चिदभ्यस्यते सम्यग्गृहे ते भरतर्षभ ।
धनुर्वेदस्य सूत्रं वै यन्त्रसूत्रं च नागरम् ॥ १२५
कच्चिदस्त्राणि सर्वाणि ब्रह्मदण्डश्च तेऽनघ ।
विषयोगास्तथा सर्वे विदिताः शत्रुनाशनाः ॥ १२६
कच्चिदग्निभयाच्चैव सर्वं व्यालभयात्तथा ।
रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षसि ॥ १२७
कच्चिदन्धांश्च मूकांश्च पङ्गून्व्यङ्गानबान्धवान् ।
पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि ॥ १२८
षडनर्था महाराज कच्चित्ते पृष्ठतः कृताः ।
निद्राऽऽलस्यं भयं क्रोधो मार्दवं दीर्घसूत्रता १२९
वैशंपायन उवाच ।

ततः कुरूणामृषभो महात्मा
श्रुत्वा गिरो ब्राह्मणसत्तमस्य ।
प्रणम्य पादावभिवाद्य तुष्टो
राजाऽब्रवीन्नारदं देवरूपम् ॥ १३०
एवं करिष्यामि यथा त्वयोक्तं
प्रज्ञा हि मे भूय एवाभिवृद्धा ।
उक्त्वा तथा चैव चकार राजा
लेभे महीं सागरमेखलां च ॥ १३१

नारद उवाच ।
एवं यो वर्तते राजा चातुर्वर्ण्यस्य रक्षणे ।
स विहृत्येह सुसुखी शक्रस्यैति सलोकताम् १३२

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ॥ ६ ॥

उत्तमसभालाभगर्वितेन युधिष्ठिरेण सभाविषयकप्रश्ने नारदस्य इन्द्रादिसभावर्णनप्रतिज्ञानम् ॥ १ ॥

वैशंपायन उवाच ।
संपूज्याथाभ्यनुज्ञातो महर्षेर्वचनात्परम् ।
प्रत्युवाचानुपूर्व्येण धर्मराजो युधिष्ठिरः ॥ १
भगवन्न्याय्यमाहैतं यथावद्धर्मनिश्चयम् ।
यथाशक्ति यथान्यायं क्रियतेऽयं विधिर्मया ॥ २
राजभिर्यद्यथा कार्यं पुरा वै तन्न संशयः ।
यथान्यायोपनीतार्थं कृतं हेतुमदर्थवत् ॥ ३
वयं तु सत्पथं तेषां यातुमिच्छामहे प्रभो ।
न तु शक्यं तथा गन्तुं यथा तैर्नियतात्मभिः ॥ ४
वैशंपायन उवाच ।
एवमुक्त्वा स धर्मात्मा वाक्यं तदभिपूज्य च ।
'तं तु विश्रान्तमासीनं देवर्षिममितद्युतिम् ॥'

ब्रह्मदण्डः आभिचारः ॥ १२६ ॥ सभापर्वणि पंचमोऽध्यायः ॥ ५ ॥

मुहूर्तात्प्राप्तकालं च दृष्ट्वा लोकचरं मुनिम् ॥ ५
नारदं सुखमासीनमुपासीनो युधिष्ठिरः ।
अपृच्छत्पाण्डवस्तत्र राजमध्ये महाद्युतिः ॥ ६
भवान्सञ्चरते लोकान्सदा नानाविधान्बहून् ।
ब्रह्मणा निर्मितान्पूर्वं प्रेक्षमाणो मनोजवः ॥ ७
ईदृशी भविता काचिद्दृष्टपूर्वा सभा क्वचित् ।
इतो वा श्रेयसी ब्रह्मंस्तन्ममाचक्ष्व पृच्छतः ॥ ८
वैशंपायन उवाच ।
तच्छ्रुत्वा नारदस्तस्य धर्मराजस्य भाषितम् ।
पाण्डवं प्रत्युवाचेदं स्मयन्मधुरया गिरा ॥ ९
नारद उवाच ।
मानुषेषु न मे तात दृष्टपूर्वा न च श्रुता ।
सभा मणिमयी राजन्यथेयं तव भारत ॥ १०
सभां तु पितृराजस्य वरुणस्य च धीमतः ।
कथयिष्ये तथेन्द्रस्य कैलासनिलयस्य च ॥ ११
ब्रह्मणश्च सभां दिव्यां कथयिष्ये गतक्लमाम् ।
दिव्यादिव्यैरभिप्रायैरुपेतां विश्वरूपिणीम् ॥१२
देवैः पितृगणैः साध्यैर्यज्वभिर्नियतात्मभिः ।
जुष्टां मुनिगणैः शान्तैर्वेदयज्ञैः सदक्षिणैः ॥
यदि ते श्रवणे बुद्धिर्वर्तते भरतर्षभ ॥ १३
नारदेनैवमुक्तस्तु धर्मराजो युधिष्ठिरः ।
प्राञ्जलिर्भ्रातृभिः सार्धं तैश्च सर्वैर्द्विजोत्तमैः॥१४
नारदं प्रत्युवाचेदं धर्मराजो महामनाः ।
सभाः कथय ताः सर्वाः श्रोतुमिच्छामहे वयं १५
किंद्रव्यास्ताः सभा ब्रह्मन्किंविस्ताराः किमायताः।
पितामहं च के तस्यां सभायां पर्युपासते ॥ १६
वासवं देवराजं च यमं वैवस्वतं च के ।
वरुणं च कुबेरं च सभायां पर्युपासते ॥ १७
एतत्सर्वं यथान्यायं ब्रह्मर्षे वदतस्तव ।
श्रोतुमिच्छाम सहिताः परं कौतूहलं हि नः॥१८
एवमुक्तः पाण्डवेन नारदः प्रत्यभाषत ।
क्रमेण राजन्दिव्यास्ताः श्रूयन्तामिह नः सभाः॥

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ॥ ७ ॥

इन्द्रसभावर्णनम् ॥ १ ॥

नारद उवाच ।
शक्रस्य तु सभा दिव्या भास्वरा कर्मनिर्मिता ।
स्वयं शक्रेण कौरव्य निर्जितार्कसमप्रभा ॥ १
विस्तीर्णा योजनशतं शतमध्यर्धमायता ।
वैहायसी कामगमा पञ्चयोजनमुच्छ्रिता ॥ २
जराशोकक्लमापेता निरातङ्का शिवा शुभा ।
वेश्मासनवती रम्या दिव्यपादपशोभिता ॥ ३
तस्यां देवेश्वरः पार्थ सभायां परमासने ।
आस्ते शच्या महेन्द्राण्या श्रिया लक्ष्म्या च भारत।
बिभ्रद्वपुरनिर्देश्यं किरीटी लोहिताङ्गदः ।
विरजोम्बरश्चित्रमाल्यो ह्रीकीर्तिद्युतिभिः सह॥५
तस्यामुपासते नित्यं महात्मानं शतक्रतुम् ।
मरुतः सर्वशो राजन्सर्वे च गृहमेधिनः ॥ ६
सिद्धा देवर्षयश्चैव साध्या देवगणास्तथा ।
मरुत्वन्तश्च सहिता भास्वंतो हेममालिनः ॥ ७
एते सानुचराः सर्वे दिव्यरूपाः स्वलङ्कृताः ।
उपासते महात्मानं देवराजमरिन्दमम् ॥ ८
तथा देवर्षयः सर्वे पार्थ शक्रमुपासते ।
अमला धूतपाप्मानो दीप्यमाना इवाग्नयः ॥ ९
तेजस्विनः सोमसुतो विशोका विगतज्वराः।
पराशरः पर्वतश्च तथा सावर्णिगालवौ ॥ १०
'एकतश्च द्वितश्चैव त्रितश्चैव महामतिः ।'
शङ्खश्च लिखितश्चैव तथा गौरशिरा मुनिः ।
दुर्वासाः क्रोधनः श्येनस्तथा दीर्घतमा मुनिः११
पवित्रपाणिः सावर्णिर्याज्ञवल्क्योऽथ भालुकिः ।
उद्दालकः श्वेतकेतुस्ताण्डो भाण्डायनिस्तथा॥१२
हविष्मांश्च गरिष्ठश्च हरिश्चन्द्रश्च पार्थिवः ।

कैलासनिलयस्य कुबेरस्य ॥११॥ सभापर्वणि षष्ठोऽध्यायः॥६॥

हृद्यश्चोदरशाण्डिल्यः पाराशर्यः कृपीवलः ॥ १३
वातस्कन्धो विशाखश्च विधाता काल एव च ।
करालदन्तस्त्वष्टा च विश्वकर्मा च तुम्बुरुः ॥१४
अयोनिजा योनिजाश्च वायुभक्षा हुताशिनः ।
ईशानं सर्वलोकस्य वज्रिणं समुपासते ॥ १५
सहदेवः सुनीथश्च वाल्मीकिश्च महातपाः ।
समीकः सत्यवाक्चैव प्रचेताः सत्यसङ्गरः ॥ १६
मेधातिथिर्वामदेवः पुलस्त्यः पुलहः क्रतुः ।
मरुत्तश्च मरीचिश्च स्थाणुश्चात्र महातपाः ॥ १७
कक्षीवान्गौतमस्तार्क्ष्यस्तथा वैश्वानरो मुनिः ।
मुनिः कालकवृक्षीय आश्राव्योऽथ हिरण्मयः १८
संवर्तो देवहव्यश्च विष्वक्सेनश्च वीर्यवान् ।
दिव्या आपस्तथौषध्यः श्रद्धा मेधा सरस्वती १९
अर्थो धर्मश्च कामश्च विद्युतश्चैव पाण्डव ।
जलवाहास्तथा मेघा वायवः स्तनयित्नवः ॥ २०
प्राचीदिग्यज्ञवाहाश्च पावकाः सप्तविंशतिः ।
अग्नीषोमौ तथेन्द्राग्नी मित्रश्च सविताऽर्यमा ॥२१
भगो विश्वे च साध्याश्च गुरुः शुक्रस्तथैव च ।
विश्वावसुश्चित्रसेनः सुमनस्तरुणस्तथा ॥ २२
यज्ञाश्च दक्षिणाश्चैवं ग्रहास्तोभाश्च भारत ।
यज्ञवाहाश्च ये मन्त्राः सर्वे तत्र समासते ॥ २३
तथैवाप्सरसो राजन् 'रम्भोर्वश्यथ मेनका ।
घृताची पञ्चचूडा च विप्रचित्तिपुरोगमाः २४
विद्याधराश्च राजेन्द्र' गन्धर्वाश्च मनोरमाः ।
नृत्यवादित्रगीतैश्च हास्यैश्च विविधैरपि ॥ २५
रमयन्ति स्म नृपते देवराजं शतक्रतुम् ।
स्तुतिभिर्मङ्गलैश्चैव स्तुवन्तः कर्मभिस्तथा ॥ २६
विक्रमैश्च महात्मानं वलवृत्रनिषूदनम् ।
ब्रह्मराजर्षयश्चैव सर्वे देवर्षयस्तथा ॥ २७
विमानैर्विविधैर्दिव्यैर्दीप्यमाना इवाग्नयः ।
स्रग्विणो भूषिताः सर्वे यान्ति चायान्ति चापरे ॥
बृहस्पतिश्च शुक्रश्च नित्यमास्तां हि तत्र वै ।
एते चान्ये च बहवो महात्मानो यतव्रताः ॥२९
विमानैश्चन्द्रसङ्काशैः सोमवत्प्रियदर्शनाः ।
ब्रह्मणो वचनाद्राजन्भृगुः सप्तर्षयस्तथा ॥ ३०
एषा सभा मया राजन्दृष्टा पुष्करमालिनी ।
शतक्रतोर्महाबाहो याम्यामपि सभां शृणु ॥ ३१

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ॥ ८ ॥

यमसभावर्णनम् ॥ १ ॥

नारद उवाच ।
कथयिष्ये सभां याम्यां युधिष्ठिर निबोध ताम् ।
वैवस्वतस्य यां पार्थ विश्वकर्मा चकार ह ॥ १
तैजसी सा सभा राजन्बभूव शतयोजना ।
विस्तारायामसंपन्ना भूयसी चापि पाण्डव ॥ २
अर्कप्रकाशा भ्राजिष्णुः सर्वतः कामरूपिणी ।
नातिशीता न चात्युष्णा मनसश्च प्रहर्षिणी ॥ ३
न शोको न जरा तस्यां क्षुत्पिपासे न चाप्रियम् ।
न च दैन्यं क्लमो वाऽपि प्रतिकूलं न चाप्युत ॥४
सर्वे कामाः स्थितास्तस्यां ये दिव्या ये च मानुषाः ।
रसवच्च प्रभूतं च भक्ष्यं भोज्यमरिन्दम ॥ ५
लेह्यं चोष्यं च पेयं च हृद्यं स्वादु मनोहरम् ।
पुण्यगन्धाः स्रजस्तस्य नित्यं कामफला द्रुमाः ॥६
रसवन्ति च तोयानि शीतान्युष्णानि चैव हि ।

पाराशर्यः कपिष्ठल इति घ. पाठः ॥ १३ ॥ ब्रह्मणोऽङ्गात्प्रसूतोऽङ्गिरङ्गिरा इति विश्रुतः । दक्षिणाग्निर्गार्हपत्याहवनीयाविति त्रयी । निर्मन्थ्यो वैद्युतः शूरः संवर्तो लौकिकस्तथा । जाठरो विषगः क्रव्यात् क्षेमवान् वैष्णवस्तथा । दस्युमान् वलदश्चैव शान्तः पुष्टो विभावसुः । ज्योतिष्मान्भरतो भद्रः स्विष्टकृद्वसुमान् क्रतुः । सोमश्च पितृमांश्चैव पावकाः सप्तविंशतिः ॥ २१ ॥ पुष्करमालिनी नामतः ॥ ३१ ॥ सभापर्वणि सप्तमोऽध्यायः ॥ ७ ॥

तस्यां राजर्षयः पुण्यास्तथा ब्रह्मर्षयोऽमलाः ॥ ७
यमं वैवस्वतं तात प्रहृष्टाः पर्युपासते ।
ययातिर्नहुषः पूरुर्मान्धाता सोमको नृगः ॥ ८
त्रसदस्युश्च राजर्षिः कृतवीर्यः श्रुतश्रवाः ।
अरिष्टनेमिः सिद्धश्च कृतवेगः कृतिर्निमिः ॥ ९
प्रतर्दनः शिबिर्मत्स्यः पृथुलाक्षो बृहद्रथः ।
वार्तो मरुत्तः कुपिकः साङ्काश्यः साङ्कृतिर्ध्रुवः ॥१०
चतुरश्वः सदस्योर्मिः कार्तवीर्यश्च पार्थिवः ।
भरतः सुरथश्चैव सुनीथो निशठोऽनलः ॥ ११
दिवोदासश्च सुमना अम्बरीषो भगीरथः ।
व्यश्वः सदश्वो वाध्र्यश्वः पृथुवेगः पृथुश्रवाः ॥१२
पृषदश्वो वसुमनाः क्षुपश्च सुमहाबलः ।
रुषद्गुर्वृषसेनश्च पुरुकुत्सो ध्वजी रथी ॥ १३
आर्ष्टिषेणो दिलीपश्च महात्मा चाप्युशीनरः ।
औशीनरिः पुण्डरीकः शर्यातिः शरभः शुचिः १४
अङ्गो रिष्टश्च वेनश्च दुष्यन्तः सृञ्जयो जयः ।
भाङ्गासुरिः सुनीथश्च निषधोऽथ वहीनरः ॥ १५
करन्धमो बाह्लिकश्च सुद्युम्नो बलवान्मधुः ।
ऐलो मरुत्तश्च तथा बलवान्पृथिवीपतिः ॥ १६
कपोतरोमा तृणकः सहदेवार्जुनौ तथा ।
व्यश्वः साश्वः कृशाश्वश्च शशबिन्दुश्च पार्थिवः १७
रामो दाशरथिश्चैव लक्ष्मणोऽथ प्रतर्दनः ।
अलर्कः कक्षसेनश्च गयो गौराश्व एव च ॥ १८
जामदग्न्यश्च रामश्च नाभागसगरौ तथा ।
भूरिद्युम्नो महाश्वश्च पृथाश्वो जनकस्तथा ॥ १९
राजा वैन्यो वारिसेनः पुरिजिज्जनमेजयः ।
ब्रह्मदत्तस्त्रिगर्तिश्च राजोपरिचरस्तथा ॥ २०
इन्द्रद्युम्नो भीमजानुर्गौरपृष्ठोऽनघो लयः ।
पद्मोऽथ मुचुकुन्दश्च भूरिद्युम्नः प्रसेनजित् ॥ २१
अरिष्टनेमिः सुद्युम्नः पृथुलाश्वोऽष्टकस्तथा ।
शतं मत्स्या नृपतयः शतं नीपाः शतं हयाः २२
धृतराष्ट्राश्चैकशतमशीतिर्जनमेजयाः ।
शतं च ब्रह्मदत्तानां वीरिणामीरिणां शतम् ॥ २३
भीष्माणां द्वे शतेऽप्यत्र भीमानां तु तथा शतम् ।
शतं च प्रतिविन्ध्यानां शतं नागाः शतं हयाः ॥
पलाशानां शतं ज्ञेयं शतं काशकुशादयः ।
शान्तनुश्चैव राजेन्द्र पाण्डुश्चैव पिता तव ॥ २५
उशङ्गवः शतरथो देवराजो जयद्रथः ।
वृषदर्भश्च राजर्षिर्बुद्धिमान्सहमन्त्रिभिः ॥ २६
अथापरे सहस्राणि ये गताः शशबिन्दवः ।
इष्ट्वाऽश्वमेधैर्बहुभिर्महद्भिर्भूरिदक्षिणैः ॥ २७
एते राजर्षयः पुण्याः कीर्तिमन्तो बहुश्रुताः ।
तस्यां सभायां राजेन्द्र वैवस्वतमुपासते ॥ २८
अगस्त्योऽथ मतङ्गश्च कालो मृत्युस्तथैव च ।
यज्वानश्चैव सिद्धाश्च ये च योगशरीरिणः ॥ २९
अग्निष्वात्ताश्च पितरः फेनपाश्चोष्मपाश्च ये ।
सुधावन्तो बर्हिषदो मूर्तिमन्तस्तथाऽपरे ॥ ३०
कालचक्रं च साक्षाच्च भगवान्हव्यवाहनः ।
नरा दुष्कृतकर्माणो दक्षिणायनमृत्यवः ॥ ३१
कालस्य नयने युक्ता यमस्य पुरुषाश्च ये ।
तस्यां शिंशुपपालाशास्तथा काशकुशादयः ॥ ३२
उपासते धर्मराजं मूर्तिमन्तो जनाधिप ।
एते चान्ये च बहवः पितृराजसभासदः ।
न शक्याः परिसङ्ख्यातुं नामभिः कर्मभिस्तथा ३३
असंबाधा हि सा पार्थ रम्या कामगमा सभा ।
दीर्घकालं तपस्तप्त्वा निर्मिता विश्वकर्मणा ॥ ३४
ज्वलन्ती भासमाना च तेजसा स्वेन भारत ।
तामुग्रतपसो यान्ति सुव्रताः सत्यवादिनः ॥३५
शान्ताः संन्यासिनः शुद्धाः पूताः पुण्येन कर्मणा ।
सर्वे भास्वरदेहाश्च सर्वे च विरजोम्बराः ॥ ३६
चित्राङ्गदाश्चित्रमाल्याः सर्वे ज्वलितकुण्डलाः ।
सुकृतैः कर्मभिः पुण्यैः पारिबर्हैश्च भूषिताः ॥३७
गन्धर्वाश्च महात्मानः सङ्घशश्चाप्सरोगणाः ।
वादित्रं नृत्तगीतं च हास्यं लास्यं च सर्वशः ॥ ३८

रामइति रामलक्ष्मणयोर्विष्णुशेषरूपेण स्वस्थानस्थयोरपि रूपान्तरेण उपासकानुग्रहार्थमत्रावस्थानम् ॥ १८ ॥ धृतराष्ट्राश्चैकशतमिति पुराणेषु प्रायेणाधिकारिणामेव कीर्तनात्तेषां च प्रतिकल्पं समाननामरूपकर्मत्वादनेककल्पं धर्मसभावासिनां तेषां बहुत्वं युक्तं । एवमन्येषामपि ॥ २३ ॥ दुष्कृतकर्माणो विद्याविहीनकर्ममात्रनिष्ठाः ॥ ३१ ॥ सभापर्वणि अष्टमोऽध्यायः ॥ ८ ॥

पुण्याश्च गन्धाः शब्दाश्च तस्यां पार्थ समन्ततः । उपासते महात्मानं रूपयुक्ता मनस्विनः ॥ ४०
दिव्यानि चैव माल्यानि उपतिष्ठन्ति नित्यशः॥ ईदृशी सा सभा राजन्पितृराज्ञो महात्मनः ।
शतं शतसहस्राणि धर्मिणां तं प्रजेश्वरम् । वरुणस्यापि वक्ष्यामि सभां पुष्करमालिनीम् ॥४१

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः ॥ ९ ॥

वरुणसभावर्णनम् ॥ १ ॥

नारद उवाच ।
युधिष्ठिर सभा दिव्या वरुणस्यामितप्रभा ।
प्रमाणेन यथा याम्या शुभप्राकारतोरणा ॥ १
अन्तःसलिलमास्थाय विहिता विश्वकर्मणा ।
दिव्यै रत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युता ॥ २
नीलपीतैः सिताः श्यामैः सितैर्लोहितकैरपि ।
अवतानैस्तथा गुल्मैर्मञ्जरीजालधारिभिः ॥ ३
तथा शकुनयस्तस्यां विचित्रा मधुरस्वराः ।
अनिर्देश्या वपुष्मन्तः शतशोऽथ सहस्रशः ॥ ४
सा सभा सुखसंस्पर्शा न शीता न च घर्मदा ।
वेश्मासनवती रम्या सिता वरुणपालिता ॥ ५
यस्यामास्ते स वरुणो वारुण्या च समन्वितः ।
दिव्यरत्नाम्बरधरो दिव्याभरणभूषितः ॥ ६
'द्वितीयेन तु नाम्ना वै गौरीति भुवि विश्रुता ।
पत्न्या स वरुणो देवः प्रमोदति सुखी सुखम् ॥' ७
स्रग्विणो दिव्यगन्धाश्च दिव्यगन्धानुलेपनाः ।
आदित्यास्तत्र वरुणं जलेश्वरमुपासते ॥ ८
वासुकिस्तक्षकश्चैव नागश्चैरावतस्तथा ।
कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च वीर्यवान् ॥ ९
कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ ।
मणिमान्कुण्डधारश्च कर्कोटकधनञ्जयौ ॥ १०
पाणिमान्कुण्डधारश्च बलवान्पृथिवीपते ।
प्रह्लादो मूषिकादश्च तथैव जनमेजयः ॥ ११
पताकिनो मण्डलिनः फणवन्तश्च सर्वशः ।
'अर्थो धर्मश्च कामश्च वसुः कपिल एव च ॥१२
अनन्तश्च महानागो यं दृष्ट्वा जलजेश्वरः ।
अभ्यर्चयति सत्कारैरासनेन च तं विभुः॥ १३
वासुकिप्रमुखाश्चैव सर्वे प्राञ्जलयः स्थिताः ।
अनुज्ञाताश्च शेषेण यथार्हमुपविश्य च ॥ १४
एते चान्ये च बहवः सर्पास्तस्यां युधिष्ठिर ।
'वैनतेयश्च गरुडो ये चास्य परिचारिणः ॥'
उपासते महात्मानं वरुणं विगतक्लमाः ॥ १५
बलिर्वैरोचनो राजा नरकः पृथिवीञ्जयः ।
संह्रादो विप्रचित्तिश्च कालखञ्जाश्च दानवाः॥१६
सुहनुर्दुर्मुखः शङ्खः सुमनाः सुमतिस्ततः ।
घटोदरो महापार्श्वः क्रथनः पिठरस्तथा ॥ १७
विश्वरूपः स्वरूपश्च विरूपोऽथ महाशिराः ।
दशग्रीवश्च वाली च मेघवासा दशावरः ॥ १८
टिट्टिभो विटभूतश्च संह्रादश्चेन्द्रतापनः ।
दैत्यदानवसङ्घाश्च सर्वे रुचिरकुण्डलाः ॥ १९
स्रग्विणो मौलिनश्चैव तथा दिव्यपरिच्छदाः ।
सर्वे लब्धवराः शूराः सर्वे विगतमृत्यवः ॥ २०
ते तस्यां वरुणं देवं धर्मपाशधरं सदा ।
उपासते महात्मानं सर्वे सुचरितव्रताः ॥ २१
तथा समुद्राश्चत्वारो नदी भागीरथी च सा ।
कालिन्दी विदिशा वेणा नर्मदा वेगवाहिनी॥२२
विपाशा च शतद्रुश्च चन्द्रभागा सरस्वती ।
इरावती वितस्ता च सिन्धुर्देवनदी तथा ॥ २३
गोदावरी कृष्णवेणी कावेरी च सरिद्वरा ।
किंपुना च विशल्या च तथा वैतरणी नदी॥२४
तृतीया ज्येष्ठिला चैव शोणश्चापि महानदः ।
चर्मण्वती तथा चैव पर्णाशा च महानदी ॥२५

सरयूर्वारवत्याऽथ लाङ्गली च सरिद्वरा ।
करतोया तथाऽऽत्रेयी लौहित्यश्च महानदः ॥ २६
लङ्घती गोमती चैव सन्ध्या त्रिस्रोतसी तथा ।
एताश्चान्याश्च राजेन्द्र सुतीर्था लोकविश्रुताः २७
सरितः सर्वतश्चान्यास्तीर्थानि च सरांसि च ।
कूपाश्च सप्रस्रवणा देहवन्तो युधिष्ठिर ॥ २८
पल्वलानि तटाकानि देहवन्त्यथ भारत ।
दिशस्तथा मही चैव तथा सर्वे महीधराः ॥ २९
उपासते महात्मानं सर्वे जलचरास्तथा ।
गीतवादित्रवन्तश्च गन्धर्वाप्सरसां गणाः ॥ ३०
स्तुवन्तो वरुणं तस्यां सर्व एव समासते ।
महीधरा रत्नवन्तो रसा ये च प्रतिष्ठिताः ॥ ३१
कथयन्तः सुमधुराः कथास्तत्र समासते ।
वारुणश्च तथा मन्त्री सुनाभः पर्युपासते ॥ ३२
पुत्रपौत्रैः परिवृतो गोनाम्ना पुष्करेण च ।
सर्वे विग्रहवन्तस्ते तमीश्वरमुपासते ॥ ३३
एषा मया संपतता वारुणी भरतर्षभ ।
दृष्टपूर्वा सभा रम्या कुबेरस्य सभां शृणु ॥ ३४

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ॥ १० ॥

कुबेरसभावर्णनम् ॥ १ ॥

नारद उवाच ।
सभा वैश्रवणी राजञ्शतयोजनमायता ।
विस्तीर्णा सप्ततिश्चैव योजनानि सितप्रभा ॥ १
तपसा निर्जिता राजन्स्वयं वैश्रवणेन सा ।
शशिप्रभा प्रावरणा कैलासशिखरोपमा ॥ २
गुह्यकैरुह्यमाना सा खे विषक्तेव शोभते ।
दिव्या हेममयैरुच्चैः प्रासादैरुपशोभिता ॥ ३
महारत्नवती चित्रा दिव्यगन्धा मनोरमा ।
सिताभ्रशिखराकारा प्लवमानेव दृश्यते ॥ ४
दिव्या हेममयै रङ्गैर्विद्युद्भिरिव चित्रिता ।
तस्यां वैश्रवणो राजा विचित्राभरणाम्बरः ॥ ५
स्त्रीसहस्रैर्वृतः श्रीमानास्ते ज्वलितकुण्डलः ।
'सह पत्न्या महाराज ऋद्ध्या सह विराजते ॥ ६
सर्वाभरणभूषिण्या वपुष्मत्या धनेश्वरः ।'
दिवाकरनिभे पुण्ये दिव्यास्तरणसंवृते ।
दिव्यपादोपधाने च निषण्णः परमासने ॥ ७
मन्दाराणामुदाराणां वनानि परिलोडयन् ।
सौगन्धीकवनानां च गन्धं गन्धवहो वहन् ॥ ८
नलिन्याश्चालकाख्याया नन्दनस्य वनस्य च ।
शीतो हृदयसंह्लादी वायुस्तमुपसेवते ॥ ९
तत्र देवाः सगन्धर्वा गणैरप्सरसां वृताः ।
दिव्यतानैर्महाराज गायन्ति स्म सभागताः ॥ १०
मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता ।
चारुनेत्रा घृताची च मेनका पुञ्जिकस्थला ॥ ११
विश्वाची सहजन्या च प्रम्लोचा उर्वशी इरा ॥ १२
वर्गा च सौरभेयी च समीची बुद्बुदा लता ।
एताः सहस्रशश्चान्या नृत्तगीतविशारदाः ॥ १३
उपतिष्ठन्ति धनदं गन्धर्वाप्सरसां गणाः ।
अनिशं दिव्यवादित्रैर्नृत्तगीतैश्च सा सभा ॥ १४
अशून्या रुचिरा भाति गन्धर्वाप्सरसां गणैः ।
किन्नरा नाम गन्धर्वा नरा नाम तथाऽपरे ॥ १५
माणिभद्रोऽथ धनदः श्वेतभद्रश्च गुह्यकः ।
कशेरको गण्डकण्डूः प्रद्योतश्च महाबलः ॥ १६
कुस्तुम्बरुः पिशाचश्च गजकर्णो विशालकः ।
वराहकर्णस्ताम्रौष्ठः फलकक्षः फलोदकः ॥ १७
हंसचूडः शिखावर्तो हेमनेत्रो बिभीषणः ।
पुष्पाननः पिङ्गलकः शोणितोदः प्रवालकः ॥ १८
वृक्षवास्यनिकेतश्च चीरवासाश्च भारत ।
एते चान्ये च बहवो यक्षाः शतसहस्रशः ॥ १९
सदा भगवती लक्ष्मीस्तत्रैव नलकूबरः ।

संपतता समागच्छता ॥ ३४ ॥ सभापर्वणि नवमोऽध्यायः ॥ ९ ॥

रङ्गैरितिच्छेदः ॥ ५ ॥

अहं च बहुशस्तस्यां भवन्त्यन्ये च मद्विधाः ॥ २०
ब्रह्मर्षयो भवन्त्यत्र तथा देवर्षयोऽपरे ।
क्रव्यादाश्च तथैवान्ये गन्धर्वाश्च महाबलाः ॥ २१
उपासते महात्मानं तस्यां धनदमीश्वरम् ।
भगवान्भूतसङ्घैश्च वृतः शतसहस्रशः ॥ २२
उमापतिः पशुपतिः शूलभृद्भगनेत्रहा ।
त्र्यम्बको राजशार्दूल देवी च विगतक्लमा ॥ २३
वामनैर्विकटैः कुब्जैः क्षतजाक्षैर्महारवैः ।
मेदोमांसाशनैरुग्रैरुग्रधन्वा महाबलः ॥ २४
नानाप्रहरणैरुग्रैर्वातैरिव महाजवैः ।
वृतः सखायमन्वास्ते सदैव धनदं नृप ॥ २५
प्रहृष्टाः शतशश्चान्ये बहुशः सपरिच्छदाः ।
गन्धर्वाणां च पतयो विश्वावसुर्हहा हुहूः ॥ २६
तुम्बुरुः पर्वतश्चैव शैलूषश्च तथाऽपरः ।
चित्रसेनश्च गीतज्ञस्तथा चित्ररथोपि च ॥ २७
एते चान्ये च गन्धर्वा धनेश्वरमुपासते ।
विद्याधराधिपश्चैव चक्रधर्मा सहानुजैः ॥ २८
उपाचरति तत्र स धनानामीश्वरं प्रभुम् ।
किन्नराः शतशस्तत्र धनानामीश्वरं प्रभुम् ॥ २९
आसते चापि राजानो भगदत्तपुरोगमाः ।
द्रुमः किंपुरुषेशश्च उपास्ते धनदेश्वरम् ॥ ३०
राक्षसाधिपतिश्चैव महेन्द्रो गन्धमादनः ।
सह यक्षैः सगन्धर्वैः सह सर्वैर्निशाचरैः ॥ ३१
विभीषणश्च धर्मिष्ठ उपास्ते भ्रातरं प्रभुम् ।
हिमवान्पारियात्रश्च विन्ध्यकैलासमन्दराः ॥ ३२
मलयो दर्दुरश्चैव महेन्द्रो गन्धमादनः ।
इन्द्रकीलः सुनाभश्च तथा दिव्यौ च पर्वतौ ॥ ३३
एते चान्ये च बहवः सर्वे मेरुपुरोगमाः ।
उपासते महात्मानं धनानामीश्वरं प्रभुम् ॥ ३४
नन्दीश्वरश्च भगवान्महाकालस्तथैव च ।
शङ्कुकर्णमुखाः सर्वे दिव्याः पारिषदास्तथा ॥ ३५
काष्ठः कुटी मुखो दन्ती विजयश्च तपोधिकः ।
श्वेतश्च वृषभस्तत्र नर्दन्नास्ते महाबलः ॥ ३६
धनदं राक्षसाश्चान्ये पिशाचाश्च उपासते ।
पारिषदैः परिवृतमुपायान्तं महेश्वरम् ॥ ३७
सदा हि देवदेवेशं शिवं त्रैलोक्यभावनम् ।
प्रणम्य मूर्ध्ना पौलस्त्यो बहुरूपमुमापतिम् ॥ ३८
ततोऽभ्यनुज्ञां संप्राप्य महादेवाद्धनेश्वरः ।
आस्ते कदाचिद्भगवान्भवो धनपतेः सखा ॥ ३९
निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ ।
सर्वान्निधीन्प्रगृह्याथ उपास्तां वै धनेश्वरम् ॥ ४०
सा सभा तादृशी रम्या मया दृष्टान्तरिक्षगा ।
पितामहसभां राजन्कीर्तयिष्ये निबोध ताम् ॥ ४१

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ॥ ११ ॥

ब्रह्मसभावर्णनम् ॥ १ ॥

नारद उवाच ।
पितामहसभां तात कथ्यमानां निबोध मे ।
शक्यते या न निर्देष्टुमेवंरूपेति भारत ॥ १
पुरा देवयुगे राजन्नादित्यो भगवान्दिवः ।
आगच्छन्मानुषं लोकं दिदृक्षुर्विगतक्लमः ॥ २
चरन्मानुषरूपेण सभां दृष्ट्वा स्वयंभुवः ।
स तामकथयन्मह्यं दृष्ट्वा तत्त्वेन पाण्डव ॥ ३
अप्रमेयां सभां दिव्यां मानसीं भरतर्षभ ।
अनिर्देश्यां प्रभावेण सर्वभूतमनोरमाम् ॥ ४
श्रुत्वा गुणानहं तस्याः सभायाः पाण्डवर्षभ ।

आस्ते इत्यावृत्त्या योजनीयम् । यदा भवः कदाचित्कुबेरसभामध्यास्ते तदा कुबेरोऽपि भवादनुज्ञां प्राप्य तन्निकटे आस्ते उपविशति ॥ ३९ ॥ दशमोऽध्यायः ॥ १० ॥
देवयुगे कृतयुगे ॥ २ ॥

दर्शनेप्सुस्तथा राजन्नादित्यमिदमब्रुवम् ॥ ५
भगवन्द्रष्टुमिच्छामि पितामहसभां शुभाम् ।
येन वा तपसा शक्या कर्मणा वाऽपि गोपते॥६
औषधैर्वा तथा युक्तैरुत्तमा पापनाशिनी ।
तन्ममाचक्ष्व भगवन्पश्येयं तां सभां यथा ॥ ७
स तन्मम वचः श्रुत्वा सहस्रांशुर्दिवाकरः ।
प्रोवाच भरतश्रेष्ठ व्रतं वर्षसहस्रकम् ॥ ८
ब्रह्मव्रतमुपास्स्व त्वं प्रयतेनान्तरात्मना ।
ततोऽहं हिमवत्पृष्ठे समारब्धो महाव्रतम् ॥ ९
ततः स भगवान्सूर्यो मामुपादाय वीर्यवान् ।
आगच्छत्तां सभां ब्राह्मीं विपाप्मा विगतक्लमः॥१०
एवंरूपेति सा शक्या न निर्देष्टुं नराधिप ।
क्षणेन हि बिभर्त्यन्यदनिर्देश्यं वपुस्तथा ॥ ११
न वेद परिमाणं वा संस्थानं चापि भारत ।
न च रूपं मया तादृक् दृष्टपूर्वं कदाचन ॥ १२
सुसुखा सा सदा राजन्न शीता न च घर्मदा ।
न क्षुत्पिपासे न ग्लानिं प्राप्यतां प्राप्नुवन्त्युत१३
नानारूपैरिव कृता मणिभिः सा सुभास्वरैः ।
स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा१४
दिव्यैर्नानाविधैर्भावैर्भासद्भिरमितप्रभैः ॥ १५
अति चन्द्रं च सूर्यं च शिखिनं च स्वयंप्रभा ।
दीप्यते नाकपृष्ठस्था भर्त्सयन्तीव भास्करम्॥१६
तस्यां स भगवानास्ते विदधद्देवमायया ।
स्वयमेकोऽनिशं राजन्सर्वलोकपितामहः ॥ १७
उपतिष्ठन्ति चाप्येनं प्रजानां पतयः प्रभुम् ।
दक्षः प्रचेताः पुलहो मरीचिः कश्यपः प्रभुः १८
भृगुरत्रिर्वसिष्ठश्च गौतमोऽथ तथाङ्गिराः ।
पुलस्त्यश्च क्रतुश्चैव प्रह्लादः कर्दमस्तथा ॥ १९
अथर्वाङ्गिरसश्चैव वालखिल्या मरीचिपाः ।
मनोऽन्तरिक्षं विद्याश्च वायुस्तेजो जलं मही॥२०
शब्दस्पर्शौ तथा रूपं रसो गन्धश्च भारत ।
प्रकृतिश्च विकारश्च यच्चान्यत्कारणं भुवः ॥ २१
अगस्त्यश्च महातेजा मार्कण्डेयश्च वीर्यवान् ।
जमदग्निर्भरद्वाजः संवर्तश्च्यवनस्तथा ॥ २२
दुर्वासाश्च महाभाग ऋष्यशृङ्गश्च धार्मिकः ।
सनत्कुमारो भगवान्योगाचार्यो महातपाः ॥ २३
असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित् ।
ऋषभो जितशत्रुश्च महावीर्यस्तथा मणिः ॥ २४
आयुर्वेदस्तथाऽष्टाङ्गो देहवांस्तत्र भारत ।
चन्द्रमाः सह नक्षत्रैरादित्यश्च गभस्तिमान्॥२५
वायवः क्रतवश्चैव संकल्पः प्राण एव च ।
मूर्तिमन्तो महात्मानो महाव्रतपरायणाः ॥ २६
एते चान्ये च बहवो ब्रह्माणं समुपस्थिताः ।
अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तपो दमः ॥ २७
आयान्ति तस्यां सहिता गन्धर्वाप्सरसां गणाः ।
विंशतिः सप्त चैवान्ये लोकपालाश्च सर्वशः ॥ २८
शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च ।
शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च ॥ २९
मन्त्रो रथन्तरं चैव हरिमान्वसुमानपि ।
आदित्याः साधिराजानो नामद्वन्द्वैरुदाहृताः॥३०
मरुतो विश्वकर्मा च वसवश्चैव भारत ।
तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ ॥३१
ऋग्वेदः सामवेदश्च यजुर्वेदश्च पाण्डव ।
अथर्ववेदश्च तथा सर्वशास्त्राणि चैव ह ॥ ३२
इतिहासोपवेदाश्च वेदाङ्गानि च सर्वशः ।
ग्रहा यज्ञाश्च सोमश्च देवताश्चापि सर्वशः ॥ ३३
सावित्री दुर्गतरणी वाणी सप्तविधा तथा ।
मेधा धृतिः श्रुतिश्चैव प्रज्ञा बुद्धिर्यशः क्षमा ॥ ३४
सामानि स्तुतिशस्त्राणि गाथाश्च विविधास्तथा ।
भाष्याणि तर्कयुक्तानि देहवन्ति विशांपते॥ ३५
नाटका विविधाः काव्याः कथाख्यायिककारिकाः
तत्र तिष्ठन्ति ते पुण्या ये चान्ये गुरुपूजकाः ॥ ३६
क्षणा लवा मुहूर्ताश्च दिवा रात्रिस्तथैव च ।
अर्धमासाश्च मासाश्च ऋतवः षट् च भारत ॥ ३७
संवत्सराः पञ्चयुगमहोरात्रश्चतुर्विधः ।
कालचक्रं च तद्दिव्यं नित्यमक्षयमव्ययम् ॥ ३८

नामद्वन्द्वैरग्नीषोमेन्द्राग्न्यादिभिः ॥ ३० ॥ संवत्सराः षष्टिः प्रभवादयः । तेच पञ्चपञ्च एकैकं युगम् । चतुर्विधो मानुषोऽहो-

धर्मचक्रं तथा चापि नित्यमास्ते युधिष्ठिर ।
अदितिर्दितिर्दनुश्चैव सुरसा विनता इरा ॥ ३९
कालिका सुरभी देवी सरमा चाथ गौतमी ॥ ४०
प्रभा कद्रूश्च वै देव्यौ देवतानां च मातरः ।
रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथाऽपरा ॥४१
पृथिवी गां गता देवी ह्रीः स्वाहा कीर्तिरेव च ।
सुरा देवी शची चैव तथा पुष्टिररुन्धती ॥ ४२
संवृत्तिराशा नियतिः सृष्टिर्देवी रतिस्तथा ।
एताश्चान्याश्च वै देव्य उपतस्थुः प्रजापतिम् ॥ ४३
आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि ।
विश्वेदेवाश्च साध्याश्च पितरश्च मनोजवाः ॥ ४४
पितॄणां च गणान्विद्धि सप्तैव पुरुषर्षभ ।
मूर्तिमन्तो वै चत्वारस्त्रयश्चापि शरीरिणः ॥ ४५
वैराजाश्च महाभागा अग्निष्वात्ताश्च भारत ।
गार्हपत्या नाकचराः पितरो लोकविश्रुताः ॥ ४६
सोमपा एकशृङ्गाश्च चतुर्वेदाः कलास्तथा ।
एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप ॥ ४७
एतैराप्यायितैः पूर्वं सोमश्चाप्याय्यते पुनः ।
त एते पितरः सर्वे प्रजापतिमुपस्थिताः ॥ ४८
उपासते च संहृष्टा ब्रह्माणममितौजसम् ।
राक्षसाश्च पिशाचाश्च दानवा गुह्यकास्तथा ॥ ४९
नागाः सुपर्णाः पशवः पितामहमुपासते ॥
स्थावरा जङ्गमाश्चैव महाभूतास्तथाऽपरे ॥ ५०
पुरन्दरश्च देवेन्द्रो वरुणो धनदो यमः ।
महादेवः सहोमोऽत्र सदा गच्छति सर्वशः ॥ ५१
महासेनश्च राजेन्द्र सदोपास्ते पितामहम् ।
देवो नारायणस्तस्यां तथा देवर्षयश्च ये ॥ ५२
ऋषयो वालखिल्याश्च योनिजायोनिजास्तथा ।
यच्च किंचित्त्रिलोकेऽस्मिन्दृश्यते स्थाणु जङ्गमम् ।
सर्वं तस्यां मया दृष्टमिति विद्धि नराधिप ॥ ५३
अष्टाशीतिसहस्राणि ऋषीणामूर्ध्वरेतसाम् ।
प्रजावतां च पञ्चाशदृषीणामपि पाण्डव ॥ ५४
ते स्म तत्र यथाकामं दृष्ट्वा सर्वे दिवौकसः ।
प्रणम्य शिरसा तस्मै सर्वे यान्ति यथागमम् ॥ ५५
अतिथीनागतान्देवान्दैत्यान्नागांस्तथा द्विजान् ।
यक्षान्सुपर्णान्कालेयान्गन्धर्वाप्सरसस्तथा ॥ ५६
महाभागानमितधीर्ब्रह्मा लोकपितामहः ।
दयावान्सर्वभूतेषु यथार्हं प्रतिपद्यते ॥ ५७
प्रतिगृह्य तु विश्वात्मा स्वयंभूरमितद्युतिः ।
सान्त्वमानार्थसंभोगैर्युनक्ति मनुजाधिप ॥ ५८
तथा तैरुपयातैश्च प्रतियद्भिश्च भारत ।
आकुला सा सभा तात भवति स्म सुखप्रदा ॥ ५९
सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता ।
ब्राह्म्या श्रिया दीप्यमाना शुशुभे विगतक्लमा ॥६०
सा सभा तादृशी दृष्टा मया लोकेषु दुर्लभा ।
सभेयं राजशार्दूल मनुष्येषु यथा तव ॥ ६१
एता मया दृष्टपूर्वाः सभा देवेषु भारत ।
सभेयं मानुषे लोके सर्वश्रेष्ठतमा तव ॥ ६२

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि एकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः ॥ १२ ॥

इन्द्रसभास्थहरिश्चन्द्रचरिते युधिष्ठिरेण पृष्टे तत्कथाप्रसङ्गेन नारदकृता राजसूयप्रशंसा ॥ १ ॥ युधिष्ठिरंप्रति पाण्डुसन्देशकथनपूर्वकं नारदस्य गमनम् ॥ २ ॥

युधिष्ठिर उवाच ।
प्रायशो राजलोकस्ते कथितो वदतां वर ।
वैवस्वतसभायां तु यथा वदसि मे प्रभो ॥ १
वरुणस्य सभायां तु नागास्ते कथिता विभो ।

---

रात्रः षष्टिघटिकाभिः । पैत्रो मासेन । दैवो वत्सरेण । ब्राह्मः कल्पेनेति । कालचक्रं द्वादशराश्यात्मकम् ॥ ३८ ॥

एकादशोऽध्ययः ॥ ११ ॥

दैत्येन्द्राश्चापि भूयिष्ठाः सरितः सागरास्तथा ॥२
तथा धनपतेर्यक्षा गुह्यका राक्षसास्तथा ।
गन्धर्वाप्सरसश्चैव भगवांश्च वृषध्वजः ॥ ३
पितामहसभायां तु कथितास्ते महर्षयः ।
सर्वे देवनिकायाश्च सर्वशास्त्राणि चैव ह ॥ ४
शक्रस्य तु सभायां तु देवाः संकीर्तिता मुने ।
उद्देशतश्च गन्धर्वा विविधाश्च महर्षयः ॥ ५
एक एव तु राजर्षिर्हरिश्चन्द्रो महामुने ।
कथितस्ते सभायां वै देवेन्द्रस्य महात्मनः ॥ ६
किं कर्म तेनाचरितं तपो वा नियतव्रत ।
येनासौ सह शक्रेण स्पर्धते सुमहायशाः ॥ ७
पितृलोकगतश्चैव त्वया विप्र पिता मम ।
दृष्टः पाण्डुर्महाभागः कथं वाऽपि समागतः ॥८
किमुक्तवांश्च भगवंस्तन्ममाचक्ष्व सुव्रत ।
त्वत्तः श्रोतुं सर्वमिदं परं कौतूहलं हि मे ॥ ९

नारद उवाच ।

यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो ।
तत्तेऽहं संप्रवक्ष्यामि माहात्म्यं तस्य धीमतः ॥१०
'इक्ष्वाकूणां कुले जातस्त्रिशङ्कुर्नाम पार्थिवः ।
अयोध्याधिपतिर्वीरो विश्वामित्रेण संस्थितः॥११
तस्य सत्यवती नाम पत्नी केकयवंशजा ।
तस्यां गर्भः समभवद्धर्मेण कुरुनन्दन ॥ १२
सा च काले महाभागा राजन्मासं प्रविश्य च ।
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ।
स वै राजा हरिश्चन्द्रस्त्रैशङ्कव इति स्मृतः ॥' १३
स राजा बलवानासीत्सम्राट् सर्वमहीक्षिताम् ।
तस्य सर्वे महीपालाः शासनावनताः स्थिताः॥१४
तेनैकं रथमास्थाय जैत्रं हेमविभूषितम् ।
शस्त्रप्रतापेन जिता द्वीपाः सप्त जनेश्वर ॥ १५
स निर्जित्य महीं कृत्स्नां सशैलवनकाननाम् ।
आजहार महाराज राजसूयं महाक्रतुम् ॥ १६
तस्य सर्वे महीपाला धनान्याजह्रुराज्ञया ।
द्विजानां परिवेष्टारस्तस्मिन्यज्ञे च तेऽभवन् ॥ १७
'समाप्तयज्ञो विधिवद्धरिश्चन्द्रः प्रतापवान् ।
अभिषिक्तश्च शुशुभे साम्राज्येन नराधिपः ॥१८
राजसूयेऽभिषिक्तश्च समाप्तवरदक्षिणे ॥' १९
प्रादाच्च द्रविणं प्रीत्या याचकानां नरेश्वरः ।
यथोक्तवन्तस्ते तस्मिंस्ततः पञ्चगुणाधिकम् ॥२०
अतर्पयच्च विविधैर्वसुभिर्ब्राह्मणांस्तदा ।
प्रसर्पकाले संप्राप्ते नानादिग्भ्यः समागतान् ॥२१
भक्ष्यभोज्यैश्च विविधैर्यथाकामपुरस्कृतैः ।
रत्नौघतर्पितैस्तुष्टैर्द्विजैश्च समुदाहृतम् ।
तेजस्वी च यशस्वी च नृपेभ्योऽभ्यधिकोऽभवत्२२
एतस्मात्कारणाद्राजन्हरिश्चन्द्रो विराजते ।
तेभ्यो राजसहस्रेभ्यस्तद्विद्धि भरतर्षभ ॥ २३
समाप्य च हरिश्चन्द्रो महायज्ञं प्रतापवान् ।
अभिषिक्तश्च शुशुभे साम्राज्येन नराधिप ॥ २४
ये चान्ये च महीपाला राजसूयं महाक्रतुम् ।
यजन्ते ते सहेन्द्रेण मोदन्ते भरतर्षभ ॥ २५
ये चापि निधनं प्राप्ताः सङ्ग्रामेष्वपलायिनः ।
ते तत्सदनमासाद्य मोन्दते भरतर्षभ ॥ २६
तपसा ये च तीव्रेण त्यजन्तीह कलेवरम् ।
ते तत्स्थानं समासाद्य श्रीमन्तो भान्ति नित्यशः॥
पिता च त्वाऽऽह कौन्तेय पाण्डुः कौरवनन्दन।
हरिश्चन्द्रे श्रियं दृष्ट्वा नृपतौ जातविस्मयः ॥ २८
विज्ञाय मानुषं लोकमायान्तं मां नराधिप ।
प्रोवाच प्रणतो भूत्वा वदेथास्त्वं युधिष्ठिरम् ॥ २९
समर्थोऽसि महीं जेतुं भ्रातरस्ते स्थिता वशे।
राजसूयं क्रतुश्रेष्ठमाहरस्वेति भारत ॥ ३०
त्वयीष्टवति पुत्रेऽहं हरिश्चन्द्रवदाशु वै ।
मोदिष्ये बहुलाः शश्वत्समाः शक्रस्य संसदि॥ ३१
एवं भवतु वक्ष्येऽहं तव पुत्रं नराधिपम् ।
भूलोकं यदि गच्छेयमिति पाण्डुमथाब्रुवम् ॥ ३२
तस्य त्वं पुरुषव्याघ्र सङ्कल्पं कुरु पाण्डव ।
गन्तासि त्वं महेन्द्रस्य पूर्वैः सह सलोकताम् ॥३३
बहुविघ्नश्च नृपते क्रतुरेष स्मृतो महान् ।
छिद्राण्यस्य तु वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः॥३४
युद्धं च क्षत्रशमनं पृथिवीक्षयकारणम् ।

किंचिदेव निमित्तं च भवत्यत्र क्षयावहम् ॥३५
एतत्संचिन्त्य राजेन्द्र यत्क्षमं तत्समाचर ।
अप्रमत्तोत्थितो नित्यं चातुर्वर्ण्यस्य रक्षणे ॥ ३६
भव एधस्व मोदस्व धनैस्तर्पय च द्विजान् ।
एतत्ते विस्तरेणोक्तं यन्मां त्वं परिपृच्छसि ।
आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति ॥३७

वैशंपायन उवाच ।
एवमाख्याय पार्थेभ्यो नारदो जनमेजय ।
जगाम तैर्वृतो राजन्नृषिभिर्यैः समागतः ॥ ३८
गते तु नारदे पार्थो भ्रातृभिः सह कौरवः ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास पार्थिवः ॥ ३९

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः ॥ १३ ॥

मन्त्रिभिः सह संमन्त्र्य कृतराजसूयकरणनिश्चयस्य युधिष्ठिरस्य श्रीकृष्णंप्रति दूतप्रेषणम् ॥ १ ॥ दूतेन सह इन्द्रप्रस्थमागतं श्रीकृष्णंप्रति युधिष्ठिरोक्तिः ॥ २ ॥

वैशंपायन उवाच ।
ऋषेस्तद्वचनं श्रुत्वा निशश्वास युधिष्ठिरः ।
चिन्तयन्राजसूयेष्टिं न लेभे शर्म भारत ॥ १
राजर्षीणां च तं श्रुत्वा महिमानं महात्मनाम् ।
यज्वनां कर्मभिः पुण्यैर्लोकप्राप्तिं समीक्ष्य च ॥२
हरिश्चन्द्रं च राजर्षिं रोचमानं विशेषतः ।
यज्वानं यज्ञमाहर्तुं राजसूयमियेष सः ॥ ३
युधिष्ठिरस्ततः सर्वानर्चयित्वा सभासदः ।
प्रत्यर्चितश्च तैः सर्वैर्यज्ञायैव मनो दधे ॥ ४
स राजसूयं राजेन्द्र कुरूणामृषभस्तदा ।
आहर्तुं प्रवणं चक्रे मनः संचिन्त्य चासकृत् ॥५
भूयश्चाद्भुतवीर्यौजा धर्ममेवानुचिन्तयन् ।
किं हितं सर्वलोकानां भवेदिति मनो दधे ॥ ६
अनुगृह्णन्प्रजाः सर्वाः सर्वधर्मभृतां वरः ।
अविशेषेण सर्वेषां हितं चक्रे युधिष्ठिरः ॥ ७
सर्वेषां दीयतां देयं मुष्णन्कोपमदावुभौ ।
साधु धर्मेति धर्मेति नान्यच्छ्रूयेत भाषितम् ॥८
एवं गते ततस्तस्मिन्पितरीवाश्वसञ्जनाः ।
न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता ॥ ९
परिग्रहान्नरेन्द्रस्य भीमस्य परिपालनात् ।
शत्रूणां क्षपणाच्चैव बीभत्सोः सव्यसाचिनः ॥१०
'बलीनां सम्यगुत्थानान्नकुलस्य यशस्विनः ।'
धीमतः सहदेवस्य धर्माणामनुशासनात् ॥ ११
वैनत्यात्सर्वतश्चैव नकुलस्य स्वभावतः ।
अविग्रहा वीतभयाः स्वकर्मनिरताः सदा ॥ १२
निकामवर्षाः स्फीताश्च आसञ्जनपदास्तथा ।
वार्धुषी यज्ञसत्वानि गोरक्षं कर्षणं वणिक् ॥१३
विशेषात्सर्वमेवैतत्संजज्ञे राजकर्मणा ।
अनुकर्षं च निष्कर्षं व्याधिपावकमूर्छनम् ॥ १४
सर्वमेव न तत्रासीद्धर्मनित्ये युधिष्ठिरे ।
दस्युभ्यो वञ्चकेभ्यश्च राज्ञः प्रति परस्परम् ॥१५
राजवल्लभतश्चैव नाश्रूयत मृषाकृतम् ।
प्रियं कर्तुमुपस्थातुं बलिकर्म स्वकर्मजम् ॥ १६
अभिहर्तुं नृपाः षट्सु पृथग्जात्यैश्च नैगमैः ।
ववृधे विषयस्तत्र धर्मनित्ये युधिष्ठिरे ॥ १७
कामतोऽप्युपयुञ्जानै राजसैर्लोभजैर्जनैः ।
सर्वव्यापी सर्वगुणी सर्वसाहः स सर्वराट् ॥ १८
यस्मिन्नधिकृतः सम्राड् भ्राजमानो महायशाः ।
यत्र राजन्दश दिशः पितृतो मातृतस्तथा ।
अनुरक्ताः प्रजा आसन्नागोपाला द्विजातयः १९

वार्धुषी वृद्ध्युपजीविका । यज्ञसत्वानि क्रतूनां सामर्थ्यानि सद्यः पुष्कलफलप्रदत्वादिविषयाणि ॥ १३ ॥ अनुकर्षं दारिद्र्याद्राजकीयद्रव्यस्यातीतवर्षस्य ऋणत्वेन धारणम् । निष्कर्षं करार्थं प्रजापीडनम् । अवर्षणं चातिवर्षं इति क. पाठः । मूर्छनं वृद्धिः ॥१४॥ नैगमैर्वणिग्भिः सह आसन्निति शेषः । इतरे नृपा वणिग्वचेन करदीकृता इत्यर्थः । तत्र तस्मिन् विषयोदेशः ॥ १७॥ लोभजैर्वि-

स मन्त्रिणः समानाय्य भ्रातृंश्च वदतां वरः ।
राजसूयं प्रति तदा पुनःपुनरपृच्छत ॥ २०
ते पृच्छ्यमानाः सहिता वचोऽर्थ्यं मन्त्रिणस्तदा।
युधिष्ठिरं महाप्राज्ञं यियक्षुमिदमब्रुवन् ॥ २१
येनाभिषिक्तो नृपतिर्वारुणं गुणमृच्छति ।
तेन राजाऽपि तं कृत्स्नं सम्राड्गुणमभीप्सति॥२२
तस्य सम्राड्गुणार्हस्य भवतः कुरुनन्दन ।
राजसूयस्य समयं मन्यन्ते सुहृदस्तव ॥ २३
तस्य यज्ञस्य समयः स्वाधीनः क्षत्रसंपदा ।
साम्ना षडग्नयो यस्मिंश्चीयन्ते शंसितव्रतैः ॥ २४
दर्वीहोमानुपादाय सर्वान्यः प्राप्नुते क्रतून् ।
अभिषेकं च यज्ञान्ते सर्वजित्तेन चोच्यते ॥ २५
समर्थोऽसि महाबाहो सर्वे ते वशगा वयम् ।
अचिरात्त्वं महाराज राजसूयमवाप्स्यसि ॥ २६
अविचार्य महाराज राजसूये मनः कुरु ।
इत्येवं सुहृदः सर्वे पृथक्क सह चाब्रुवन् ॥ २७
स धर्म्यं पाण्डवस्तेषां वचः श्रुत्वा विशांपते ।
धृष्टमिष्टं वरिष्ठं च जग्राह मनसाऽरिहा ॥ २८
श्रुत्वा सुहृद्वचस्तच्च जानंश्चाप्यात्मनः क्षमम् ।
'स प्रशस्तक्रियारम्भः परीक्षामुपचक्रमे ॥ २९
वैशंपायन उवाच ।
चतुर्भिर्भीमसेनाद्यैर्भ्रातृभिः सहितो हितम् ।
एवमुक्तस्तथा पार्थो धर्म एव मनो दधे ॥ ३०
स राजसूयं राजेन्द्रः कुरूणामृषभः क्रतुम् ।
जगाम मनसा सद्य आहरिष्यन्युधिष्ठिरः ॥ ३१
भूयस्त्वद्भुतवीर्योपि धर्ममेवानुपालयन् ।'
पुनः पुनर्मनो दध्रे राजसूयाय भारत ॥ ३२
स भ्रातृभिः पुनर्धीमानृत्विग्भिश्च महात्मभिः ।
मन्त्रिभिश्चापि सहितो धर्मराजो युधिष्ठिरः ॥ ३३
धौम्यद्वैपायनाद्यैश्च मन्त्रयामास मन्त्रवित् ।
'विराटद्रुपदाभ्यां च सात्यकेन च धीमता॥३४
युधामन्यूत्तमौजोभ्यां सौभद्रेण च धीमता ।
द्रौपदेयैः परं शूरैर्मन्त्रयामास संवृतः ॥ ३५
युधिष्ठिर उवाच ।'
भवन्तो राजसूयस्य सम्राडर्हस्य सुक्रतोः ।
श्रद्दधानस्य वदत ममावाप्तिः कथं भवेत् ॥ ३६
वैशंपायन उवाच ।
एवमुक्तास्तु ते तेन राज्ञा राजीवलोचन ।
इदमूचुर्वचः काले धर्मराजं युधिष्ठिरम् ॥ ३७
अर्हस्त्वमसि धर्मज्ञ राजसूयं महाक्रतुम् ।
अथैवमुक्ते नृपतावृत्विग्भिर्ऋषिभिस्तथा ॥ ३८
मन्त्रिणो भ्रातरश्चास्य तद्वचः प्रत्यपूजयन् ।
स तु राजा महाप्राज्ञः पुनरेवात्मनाऽऽत्मवान्३९
भूयो विममृशे पार्थो लोकानां हितकाम्यया ।
सामर्थ्ययोगं संप्रेक्ष्य देशकालौ व्ययागमौ॥४०
विमृश्य सम्यक् च धिया कुर्वन्प्राज्ञो न सीदति ।
न हि यज्ञसमारम्भः केवलात्मविनिश्चयात्॥४१
भवतीति समाज्ञाय यत्नतः कार्यमुद्वहन् ।
स निश्चयार्थं कार्यस्य कृष्णमेव जनार्दनम् ॥ ४२
सर्वलोकात्परं मत्वा जगाम मनसा हरिम् ।
अप्रमेयं महाबाहुं कामाज्जातमजं नृषु ॥ ४३
पाण्डवस्तर्कयामास कर्मभिर्देवसंमतैः ।
नास्य किंचिदविज्ञातं नास्य किंचिदकर्मजम्॥४४
न स किंचिन्न विषहेदिति कृष्णममन्यत ।
स तु तां नैष्ठिकीं बुद्धिं कृत्वा पार्थो युधिष्ठिरः॥४५
गुरुवद्भूतगुरवे प्राहिणोद्दूतमञ्जसा ।
शीघ्रगेन रथेनाशु स दूतः प्राप्य यादवान् ॥४६
द्वारकावासिनं कृष्णं द्वारवत्यां समासदत् ।
'स प्रह्वं प्राञ्जलिर्भूत्वा व्यज्ञापयत माधवम्॥४७
दूत उवाच ।
धर्मराजो हृषीकेश धौम्यव्यासादिभिः सह ।
पाञ्चालमात्स्यसहितैर्भ्रातृभिश्चैव सर्वशः ॥ ४८
त्वद्दर्शनं महाबाहो काङ्क्षते स युधिष्ठिरः ॥ ४९
वैशंपायन उवाच ।
इन्द्रसेनवचः श्रुत्वा यादवप्रवरो बली ।'
दर्शनाकाङ्क्षिणं पार्थं दर्शनाकाङ्क्षयाच्युतः ॥५०

मोहोत्थैराजसैर्वृत्तिविशेषैस्तृष्णादिभिस्तादृशैरपि ववृधे वृद्धिमान-भूत्॥१८॥ येन कारणेन वारुणं गुणं वृद्धिं। तेन कारणेन॥२२॥

'आमन्त्र्य राजन्सुहृदो वसुदेवं च माधवः ।'
इन्द्रसेनेन सहित इन्द्रप्रस्थमगात्तदा ।
व्यतीत्य विविधान्देशांस्त्वरावान्क्षिप्रवाहनः॥५१
इन्द्रप्रस्थगतं पार्थमभ्यगच्छज्जनार्दनः ।
स गृहे पितृवद्भ्रात्रा धर्मराजेन पूजितः ॥ ५२
भीमेन च ततोऽपश्यत्स्वसारं प्रीतिमान्पितुः ।
प्रीतः प्रीतेन सुहृदा रेमे स सहितस्तदा ॥ ५३
अर्जुनेन यमाभ्यां च गुरुवत्पर्युपासितः ।
तं विश्रान्तं शुभे देशे क्षणिनं कल्पमच्युतम् ।
धर्मराजः समागम्य ज्ञापयत्स्वप्रयोजनम् ॥ ५४
युधिष्ठिर उवाच ।
प्रार्थितो राजसूयो मे न चासौ केवलेप्सया ।
प्राप्यते येन तत्ते हि विदितं कृष्ण सर्वशः ॥५५
यस्मिन्सर्वं संभवति यश्च सर्वत्र पूज्यते ।
यश्च सर्वेश्वरो राजा राजसूयं स विन्दति ॥ ५६
तं राजसूयं सुहृदः कार्यमाहुः समेत्य मे ।
तत्र मे निश्चिततमं तव कृष्ण गिरा भवेत् ॥५७
केचिद्धि सौहृदा देवे न दोषं परिचक्षते ।
स्वार्थहेतोस्तथैवान्ये प्रियमेव वदन्त्युत ॥ ५८
प्रियमेव परीप्सन्ते केचिदात्मनि यद्धितम् ।
एवंप्रायाश्च दृश्यन्ते जनवादाः प्रयोजने ॥ ५९
त्वं तु हेतूनतीत्यैतान्कामक्रोधौ व्युदस्य च ।
परमं यत्क्षमं लोके यथावद्वक्तुमर्हसि ॥ ६०

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ॥ १४ ॥

जरासन्धशौर्यकथनादिरूपं श्रीकृष्णवाक्यम् ॥ १ ॥

कृष्ण उवाच ।
सर्वैर्गुणैर्महाराज राजसूयं त्वमर्हसि ।
जानतस्त्वेव ते सर्वं किंचिद्वक्ष्यामि भारत ॥ १
जामदग्न्येन रामेण क्षत्रं यदवशेषितम् ।
तस्मादवरजं लोके यदिदं क्षत्रसंज्ञितम् ॥ २
कृतोऽयं कुलसंकल्पः क्षत्रियैर्वसुधाधिप ।
निदेशवाग्भिस्तत्तेह विदितं भरतर्षभ ॥ ३
ऐलस्येक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते ।
राजानः श्रेणिबद्धाश्च तथाऽन्ये क्षत्रिया भुवि॥४
ऐलवंश्याश्च ये राजंस्तथैवेक्ष्वाकवो नृपाः ।
तानि चैकशतं विद्धि कुलानि भरतर्षभ ॥ ५
ययातेस्त्वेव भोजानां विस्तरो गुणतो महान् ।
भजतेऽद्य महाराज विस्तरं सचतुर्दिशम् ॥ ६
तेषां तथैव तां लक्ष्मीं सर्वक्षत्रमुपासते ।
इदानीमेव वै राजञ्जरासन्धो महीपतिः ॥ ७
अभिभूय श्रियं तेषां कुलानामभिषेचितः ।
स्थितो मूर्ध्नि नरेन्द्राणामोजसाऽऽक्रम्य सर्वशः ८
सोऽवनीं मध्यमां भुक्त्वा मिथो भेदममन्यत ।
प्रभुर्यस्तु परो राजा यस्मिन्नेकवशे जगत् ॥ ९
स साम्राज्यं महाराज प्राप्तो भवति योगतः ।
तं स राजा जरासन्धं संश्रित्य किल सर्वशः॥१०
राजन्सेनापतिर्जातः शिशुपालः प्रतापवान् ।
तमेव च महाराज शिष्यवत्समुपस्थितः ॥ ११
वक्रः करूषाधिपतिर्मायायोधी महाबलः ।
अपरौ च महावीर्यौ महात्मानौ समाश्रितौ॥१२
जरासन्धं महावीर्यं तौ हंसडिम्भिकावुभौ ।
वक्रदन्तः करूषस्य करभो मेघवाहनः ।
मूर्ध्ना दिव्यं मणिं बिभ्रद्यमद्भुतमणिं विदुः ॥१३
मुरुं च नरकं चैव शास्ति यो यवनाधिपः ।
अपर्यन्तबलो राजा प्रतीच्यां वरुणो यथा ॥१४

भ्रात्रा पितृष्वसृजेन ॥ ५२ ॥ क्षणिनं सावसरम् । कल्पं समर्थम् ॥ ५४ ॥ त्रयोदशोऽध्यायः ॥ १३ ॥

भुवि ये श्रेणिबद्धा राजानः येचान्ये क्षत्रियाः तान् इक्ष्वाकुवंशस्य प्रकृतिं प्रजां परिचक्षते ॥ ४ ॥

भगदत्तो महाराज वृद्धस्तव पितुः सखा ।
स वाचा प्रणतस्तस्य कर्मणा च विशेषतः ॥ १५
स्नेहबद्धश्च मनसा पितृवद्भक्तिमांस्त्वयि ।
प्रतीच्यां दक्षिणं चान्तं पृथिव्याः प्रति यो नृपः १६
मातुलो भवतः शूरः पुरुजित्कुन्तिवर्धनः ।
स ते सन्नतिमानेकः स्नेहतः शत्रुसूदनः ॥ १७
जरासन्धं गतस्त्वेव पुरा यो न मया हतः ।
पुरुषोत्तमविज्ञातो योसौ चेदिषु दुर्मतिः ॥ १८
आत्मानं प्रतिजानाति लोकेऽस्मिन्पुरुषोत्तमम् ।
आदत्ते सततं मोहाद्यः स चिह्नं च मामकम् ॥ १९
वङ्गपुण्ड्रकिरातेषु राजा बलसमन्वितः ।
पौण्ड्रको वासुदेवेति योसौ लोकेऽभिविश्रुतः ॥ २०
चतुर्थभाङ्महाराज भोज इन्द्रसखो बली ।
विद्याबलाद्यो व्यजयत्स पाण्ड्यक्रथकैशिकान् २१
भ्राता यस्याकृतिः शूरो जामदग्न्यसमोऽभवत् ।
स भक्तो मागधं राजा भीष्मकः परवीरहा ॥ २२
प्रियाण्याचरतः प्रह्वान्सदा संबन्धिनस्ततः ।
भजतो न भजत्यस्मानप्रियेषु व्यवस्थितः ॥ २३
न कुलं सबलं राजन्नभ्यजानात्तथाऽऽत्मनः ।
पश्यमानो यशो दीप्तं जरासन्धमुपस्थितः ॥ २४
उदीच्याश्च तथा भोजाः कुलान्यष्टादश प्रभो ।
जरासन्धभयादेव प्रतीचीं दिशमास्थिताः ॥ २५
शूरसेना भद्रकारा बोधाः शाल्वाः पटच्चराः ।
सुस्थलाश्च सुकुट्टाश्च कुलिन्दाः कुन्तिभिः सह २६
शाल्वायनाश्च राजानः सोदर्यानुचरैः सह ।
दक्षिणा ये च पञ्चालाः पूर्वाः कुन्तिषु कोसलाः २७
तथोत्तरां दिशं चापि परित्यज्य भयार्दिताः ।
मत्स्याः सन्न्यस्तपादाश्च दक्षिणां दिशमाश्रिताः ॥
तथैव सर्वपञ्चाला जरासन्धभयार्दिताः ।
स्वराज्यं संपरित्यज्य विद्रुताः सर्वतोदिशम् २९
'अग्रतो ह्यस्य पाञ्चालास्तत्रानीके महात्मनः ।
अनिर्गते सारबले मागधेभ्यो गिरिव्रजात् ॥ ३०
उग्रसेनसुतः कंसः पुरा निर्जित्य बान्धवान्' ।
बार्हद्रथसुते देव्यावुपागच्छद्वृथामतिः ॥ ३१

अस्तिः प्राप्तिश्च नाम्ना ते सहदेवानुजेऽबले ।
बलेन तेन स्वज्ञातीनभिभूय वृथामतिः ॥ ३२
श्रैष्ठ्यं प्राप्तः स तस्यासीदतीवापनयो महान् ।
भोजराजन्यवृद्धैश्च पीड्यमानैर्दुरात्मना ॥ ३३
ज्ञातित्राणमभीप्सद्भिरस्मत्संभावना कृता ।
दत्त्वाऽऽक्रूराय सुतनुं तामाहुकसुतां तदा ॥ ३४
संकर्षणद्वितीयेन ज्ञातिकार्यं मया कृतम् ।
हतौ कंससुनामानौ मया रामेण चाप्युत ॥ ३५
'हत्वा कंसं तथैवादौ जरासन्धस्य बिभ्यतः ।
मया रामेण चान्यत्र ज्ञातयः परिपालिताः ॥' ३६
भये तु समतिक्रान्ते जरासन्धे समुद्यते ।
मन्त्रोऽयं मन्त्रितो राजन्कुलैरष्टादशावरैः ॥ ३७
अनारमन्तो निघ्नन्तो महास्त्रैः शत्रुघातिभिः ।
न हन्यामो वयं तस्य त्रिभिर्वर्षशतैर्बलम् ॥ ३८
तस्य ह्यमरसङ्काशौ बलेन बलिनां वरौ ।
नामभ्यां हंसडिबिकावशस्त्रनिधनावुभौ ॥ ३९
तावुभौ सहितौ वीरौ जरासन्धश्च वीर्यवान् ।
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः ॥ ४०
न हि केवलमस्माकं यावन्तोऽन्ये च पार्थिवाः ।
तथैव तेषामासीच्च बुद्धिर्बुद्धिमतां वर ॥ ४१
'अष्टादश मया तस्य सङ्ग्रामा रोमहर्षणाः ।
दत्ता न च हतो राजञ्जरासन्धो महाबलः ॥' ४२
अथ हंस इति ख्यातः कश्चिदासीन्महान्नृपः ।
रामेण स हतस्तत्र सङ्ग्रामेऽष्टादशावरे ॥ ४३
हतो हंस इति प्रोक्तमथ केनापि भारत ।
तच्छ्रुत्वा डिबिको राजन्यमुनाम्भस्यमज्जत ॥ ४४
विना हंसेन लोकेऽस्मिन्नाहं जीवितुमुत्सहे ।
इत्येतां मतिमास्थाय डिबिको निधनं गतः ॥ ४५
तथा तु डिबिकं श्रुत्वा हंसः परपुरञ्जयः ।
प्रपेदे यमुनामेव सोपि तस्यां न्यमज्जत ॥ ४६
तौ स राजा जराजन्धः श्रुत्वा च निधनं गतौ ।
पुरं शून्येन मनसा प्रययौ भरतर्षभ ॥ ४७
ततो वयममित्रघ्न तस्मिन्प्रतिगते नृपे ।
पुनरानन्दिनः सर्वे मथुरायां वसामहे ॥ ४८

यदा त्वभ्येत्य पितरं सा वै राजीवलोचना ।
कंसभार्या जरासन्धं दुहिता मागधं नृपम् ।
चोदयत्येव राजेन्द्र पतिव्यसनदुःखिता ॥ ४९
पतिघ्नं मे जहीत्येवं पुनः पुनररिन्दम ।
ततो वयं महाराज तं मन्त्रं पूर्वमन्त्रितम् ॥ ५०
संस्मरन्तो विमनसो व्यपयाता नराधिप ।
पृथक्त्वेन महाराज संक्षिप्य महतीं श्रियम् ॥५१
पलायामो भयात्तस्य ससुतज्ञातिबान्धवाः ।
इति संचिन्त्य सर्वे स्म प्रतीचीं दिशमाश्रिताः ५२
कुशस्थलीं पुरीं रम्यां रैवतेनोपशोभिताम् ।
ततो निवेशं तस्यां च कृतवन्तो वयं नृप ॥ ५३
तथैव दुर्गसंस्कारं देवैरपि दुरासदम् ।
स्त्रियोऽपि यस्यां युध्येयुः किमु वृष्णिमहारथाः ५४
तस्यां वयममित्रघ्न निवसामोऽकुतोभयाः ।
आलोच्य गिरिमुख्यं तं मागधं तीर्णमेव च ॥५५
माधवाः कुरुशार्दूल परां मुदमवाप्नुवन् ।
एवं वयं जरासन्धादभितः कृतकिल्बिषाः ॥५६
सामर्थ्यवन्तः संबन्धाद्गोमन्तं समुपाश्रिताः ।
त्रियोजनायतं सद्म त्रिस्कन्धं योजनावधि ॥५७
योजनान्ते शतद्वारं वीरविक्रमतोरणम् ।
अष्टादशावरैर्नद्धं क्षत्रियैर्युद्धदुर्मदैः ॥ ५८
अष्टादश सहस्राणि भ्रातॄणां सन्ति नः कुले ।
आहुकस्य शतं पुत्रा एकैकस्त्रिदशावरः ॥ ५९
चारुदेष्णः सह भ्रात्रा चक्रदेवोऽथ सात्यकिः ।
अहं च रौहिणेयश्च साम्बः प्रद्युम्न एव च ॥ ६०
एवमेते रथाः सप्त राजन्नन्यान्निबोध मे ।
कृतवर्मा ह्यनाधृष्टिः समीकः समितिंजयः ॥ ६१
कङ्कः शङ्कुश्च कुन्तिश्च सप्तैते वै महारथाः ।
‘प्रद्युम्नश्चानिरुद्धश्च भानुरक्रूरसारणौ ॥ ६२
निशठश्च गदश्चैव सप्त चैते महारथाः ।
विक्रमो झिल्लिबभ्रू च उद्धवोऽथ विदूरथः ॥ ६३
वसुदेवोग्रसेनौ च सप्तैते मन्त्रिपुङ्गवाः ।
प्रसेनजिच्च यमलो राजराजगुणान्वितः ॥ ६४
स्यमन्तको मणिर्यस्य रुक्मं निस्रवते बहु ।
पुत्रौ चान्धकभोजस्य वृद्धो राजा च ते दश ६५
वज्रसंहनना वीरा वीर्यवन्तो महाबलाः ।
स्मरन्तो मध्यमं देशं वृष्णिवीरा गतज्वराः ॥६६
पाण्डवैश्चापि सततं नाथवन्तो वयं नृप ।
सर्वसंपद्गुणैः सिद्धे तस्मिन्नेवं व्यवस्थिते ॥ ६७
क्षत्रे सम्राजमात्मानं कर्तुमर्हसि भारत ।
दुर्योधनं शान्तनवं द्रोणं द्रौणायनिं कृपम् ॥६८
कर्णं च शिशुपालं च रुक्मिणं च धनुर्धरम् ।
एकलव्यं द्रुमं श्वेतं शैब्यं शकुनिमेव च ॥ ६९
एतानजित्वा सङ्ग्रामे कथं शक्नोपि तं क्रतुम् ।
तथैते गौरवेणैव न योत्स्यन्ति नराधिपाः ॥ ७०
एकस्तत्र बलोन्मत्तः कर्णो वैकर्तनो वृषा ।
योत्स्यते स परामर्षी दिव्यास्त्रबलगर्वितः ॥’ ७१
न तु शक्यं जरासन्धे जीवमाने महाबले ।
राजसूयस्त्वयाऽवाप्तुमेषा राजन्मतिर्मम ॥ ७२
तेन रुद्धा हि राजानः सर्वे जित्वा गिरिव्रजे ।
कन्दरे पर्वतेन्द्रस्य सिंहेनेव महाद्विपाः ॥ ७३
स हि राजा जरासन्धो यियक्षुर्वसुधाधिपैः ।
‘अभिषिक्तः स राजन्यैः सहस्रैरुत चाष्टभिः ।’
महादेवं महात्मानमुमापतिमरिन्दम ॥ ७४
आराध्य तपसोग्रेण निर्जितास्तेन पार्थिवाः ।
प्रतिज्ञायाश्च पारं स गतः पार्थिवसत्तम ॥ ७५
स हि निर्जित्य निर्जित्य पार्थिवान्पृतनागतान् ।
पुरमानीय बद्ध्वा च चकार पुरुषव्रजम् ॥ ७६
वयं चैव महाराज जरासन्धभयात्तदा ।
मथुरां संपरित्यज्य गता द्वारवतीं पुरीम् ॥ ७७
यदि त्वेनं महाराज यज्ञं प्राप्तुमभीप्ससि ।
यतस्व तेषां मोक्षाय जरासन्धवधाय च ॥ ७८
समारम्भो न शक्योऽयमन्यथा कुरुनन्दन ।
राजसूयस्य कार्त्स्न्येन कर्तुं मतिमतां वर ॥ ७९
इत्येषा मे मती राजन्यथा वा मन्यसेऽनघ ।
एवं गते ममाचक्ष्व स्वयं निश्चित्य हेतुभिः ॥८०

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥

माधवाः मधुवंश्याः ॥ ५६ ॥

चतुर्दशोऽध्यायः ॥ १४ ॥

## पञ्चदशोऽध्यायः ॥ १५ ॥

राजसूयविषये श्रीकृष्णयुधिष्ठिरभीमानां संवादः ॥ १ ॥

युधिष्ठिर उवाच ।
उक्तं त्वया बुद्धिमता यन्नान्यो वक्तुमर्हति ।
संशयानां हि निर्मोक्ता त्वन्नान्यो विद्यते भुवि॥१
गृहे गृहे हि राजानः स्वस्य स्वस्य प्रियङ्कराः ।
न च साम्राज्यमाप्तास्ते सम्राट्शब्दो हि कृच्छ्रभाक्
कथं परानुभावज्ञः स्वं प्रशंसितुमर्हति ।
परेण समवेतस्तु यः प्रशस्यः स पूज्यते ॥ ३
विशाला बहुला भूमिर्बहुरत्नसमाचिता ।
दूरं गत्वा विजानाति श्रेयो वृष्णिकुलोद्वह ॥ ४
शममेव परं मन्ये शमात्क्षेमं भवेन्मम ।
आरम्भे पारमेष्ठ्यं तु न प्राप्यमिति मे मतिः॥५
एवमेते हि जानन्ति कुले जाता मनस्विनः ।
कश्चित्कदाचिदेतेषां भवेच्छ्रेष्ठो जनार्दन ॥ ६
वयं चैव महाभाग जरासन्धभयात्तदा ।
शङ्किताः स्म महाभाग दौरात्म्यात्तस्य चानघ॥७
अहं हि तव दुर्धर्ष भुजवीर्याश्रयः प्रभो ।
नात्मानं बलिनं मन्ये त्वयि तस्माद्विशङ्किते॥ ८
त्वत्सकाशाच्च रामाच्च भीमसेनाच्च माधव ।
अर्जुनाद्वा महाबाहो हन्तुं शक्यो नवेति वै ।
एवं जानन्हि वार्ष्णेय विमृशामि पुनः पुनः ॥९
त्वं मे प्रमाणभूतोऽसि सर्वकार्येषु केशव ।
तच्छ्रुत्वा चाब्रवीद्भीमो वाक्यं वाक्यविशारदः१०
भीम उवाच ।
अनारम्भपरो राजा वल्मीक इव सीदति ।
दुर्बलश्चानुपायेन बलिनं योऽधितिष्ठति ॥ ११
अतन्द्रितश्च प्रायेण दुर्बलो बलिनं रिपुम् ।
जयेत्सम्यक्प्रयोगेण नीत्याऽर्थानात्मनो हितान्॥
कृष्णे नयो मयि बलं जयः पार्थे धनञ्जये ।
मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ॥ १३
'त्वद्बुद्धिबलमाश्रित्य सर्वं प्राप्स्यति धर्मराट् ।
जयोऽस्माकं हि गोविन्द येषां नाथो भवान्सदा ॥'
कृष्ण उवाच ।
अर्थानारभते बालो नानुबन्धमवेक्षते ।
तस्मादरिं न मृष्यन्ति बालमर्थपरायणम् ॥ १५
जित्वा जय्यान्यौवनाश्विः पालनाच्च भगीरथः ।
कार्तवीर्यस्तपोवीर्याद्बलात्तु भरतो विभुः ॥ १६
ऋद्ध्या मरुत्तस्तान्पञ्च सम्राजस्त्वनुशुश्रुम ।
'सर्वान्वंश्यानतुमृशन्नैते सन्ति युगे युगे ॥' १७
साम्राज्यमिच्छतस्ते तु सर्वाकारं युधिष्ठिर ।
निग्राह्यलक्षणं प्राप्तिर्धर्मार्थनयलक्षणैः ॥ १८
बार्हद्रथो जरासन्धस्तद्विद्धि भरतर्षभ ।
न चैनं प्रत्ययुध्यन्त कुलान्येकशतं नृपाः ॥ १९
तस्मादिह बलादेव साम्राज्यं कुरुते हि सः ॥ २०
रत्नभाजो हि राजानो जरासन्धमुपासते ।
न च तुष्यति तेनापि बाल्यादनयमास्थितः ॥२१
मूर्धाभिषिक्तं नृपतिं प्रधानपुरुषो बलात् ।
आदत्ते न च नो दृष्टोऽभागः पुरुषतः क्वचित्२२
एवं सर्वान्वशे चक्रे जरासन्धः शतावरान् ।
तं दुर्बलतरो राजा कथं पार्थ उपैष्यति ॥ २३
'तण्डुलप्रस्थके राजा कपर्दिनमुपासते ।'
प्रोक्षितानां प्रमृष्टानां राज्ञां पशुपतेर्गृहे ।
पशूनामिव का प्रीतिर्जीविते भरतर्षभ ॥ २४
क्षत्रियः शस्त्रमरणो यदा भवति सत्कृतः ।
ततः स्म मागधं सङ्ख्ये प्रतिबाधेम यद्वयम् ॥ २५
षडशीतिः समानीताः शेषा राजंश्चतुर्दश ।
जरासन्धेन राजानस्ततः क्रूरं प्रवर्त्स्यते ॥ २६
प्राप्नुयात्स यशो दीप्तं तत्र यो विघ्नमाचरेत् ।
जयेद्यश्च जरासन्धं स सम्राणियतं भवेत् ॥ २७

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

---

युधिष्ठिर धर्मार्थनयलक्षणैः सहिता प्राप्तिः पालनं निग्राह्यलक्षणं साम्राज्यं च तेऽस्ति ॥ १८ ॥ बार्हद्रथं जरासन्धं तं विद्धि इति क.

घ. पाठः ॥ १९ ॥ बलात्प्रधानपुरुषः जरासन्धः पुरुषतः पुरुषेषु अभागः अस्वीकृतः ॥ २२ ॥ पञ्चदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः ॥ १६ ॥

युधिष्ठिरार्जुनयोर्भाषणम् ॥ १ ॥

युधिष्ठिर उवाच ।
सम्राड्गुणमभीप्सन्वै युष्मान्स्वार्थपरायणः ।
कथं प्रहिणुयां कृष्ण सोऽहं केवलसाहसात् ॥ १
भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्दनम् ।
मनश्चक्षुर्विहीनस्य कीदृशं जीवितं भवेत् ॥ २
जरासन्धबलं प्राप्य दुष्पारं भीमविक्रमम् ।
यमोपि न विजेताऽऽजौ तत्र वः किं विचेष्टितम् ॥३
अस्मिंस्त्वर्थान्तरे युक्तमनर्थः प्रतिपद्यते ।
तस्मान्न प्रतिपत्तिस्तु कार्या युक्ता मता मम ॥४
यथाऽहं विमृशाम्येकस्तत्तावच्छ्रूयतां मम ।
संन्यासं रोचये साधु कार्यस्यास्य जनार्दन ।
प्रतिहन्ति मनो मेऽद्य राजसूयो दुराहरः ॥ ५
वैशंपायन उवाच ।
पार्थः प्राप्य धनुः श्रेष्ठमक्षय्यौ च महेषुधी ।
रथं ध्वजं हयांश्चैव युधिष्ठिरमभाषत ॥ ६
अर्जुन उवाच ।
धनुः शस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् ।
प्राप्तमेतन्मया राजन्दुष्प्रापं यदभीप्सितम् ॥ ७
कुले जन्म प्रशंसन्ति वैद्याः साधु सुनिष्ठिताः ।
बलेन सदृशं नास्ति वीर्यं तु मम रोचते ॥ ८
कृतवीर्यकुले जातो निर्वीर्यः किं करिष्यति ।
निर्वीर्ये तु कुले जातो वीर्यवांस्तु विशिष्यते ॥९
क्षत्रियः सर्वशो राजन्यस्य वृत्तिर्द्विषज्जये ।
सर्वैर्गुणैर्विहीनोऽपि वीर्यवान्हि तरेद्रिपून् ॥ १०
सर्वैरपि गुणैर्युक्तो निर्वीर्यः किं करिष्यति ।
गुणीभूता गुणाः सर्वे तिष्ठन्ति हि पराक्रमे ॥११
जयस्य हेतुः सिद्धिर्हि कर्म दैवं च संश्रितम् ।
संयुक्तो हि बलैः कश्चित्प्रमादान्नोपयुज्यते ॥१२
तेन द्वारेण शत्रुभ्यः क्षीयते सबलो रिपुः ॥ १३
दैन्यं यथा बलवति तथा मोहो बलान्विते ।
तावुभौ नाशकौ हेतू राज्ञा त्याज्यौ जयार्थिना १४
जरासन्धविनाशं च राज्ञां च परिरक्षणम् ।
यदि कुर्याम यज्ञार्थं किं ततः परमं भवेत् ॥ १५
अनारम्भे हि नियतो भवेदगुणनिश्चयः ।
गुणान्निःसंशयाद्राजन्नैर्गुण्यं मन्यसे कथम् ॥ १६
काषायं सुलभं पश्चान्मुनीनां शममिच्छताम् ।
साम्राज्यं तु भवेच्छक्यं वयं योत्स्यामहे परान् १७

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः ॥ १७ ॥

युधिष्ठिरेण जरासन्धप्रभावप्रश्ने श्रीकृष्णेन तदुपोद्घाततया बृहद्रथराजोपाख्यानकथनारम्भः ॥ १ ॥ अपुत्रस्य बृहद्रथस्य पत्नीभ्यां सह तपोवनगमनम् ॥ २ ॥ तत्र चण्डकौशिकमुनिना बृहद्रथाय पुत्रीयाम्रफलदानम् ॥ ३ ॥ प्रविभक्ततत्फलभोजनेन संजातगर्भयोस्तद्भार्ययोः पृथगेकैकशरीरखण्डसंभवः ॥ ४ ॥ तत्पत्नीभ्यां दासीद्वारा बहिस्त्याजितयोः खण्डयोः जरानाम्न्या राक्षस्या संधानाज्जरासन्धसंभवः ॥ ५ ॥ बालकं गृहीत्वा आगतया जरया सह बृहद्रथस्य संवादः ॥ ६ ॥

वासुदेव उवाच ।
जातस्य भारते वंशे तथा कुन्त्याः सुतस्य च ।
या वै युक्ता मतिः सेयमर्जुनेन प्रदर्शिता ॥ १
न स्म मृत्युं वयं विद्म रात्रौ वा यदि वा दिवा ।
न चापि कंचिदमरमयुद्धेनानुशुश्रुम ॥ २
एतावदेव पुरुषैः कार्यं हृदयतोषणम् ।
नयेन विधिदृष्टेन यदुपक्रमते परान् ॥ ३
सुनयस्यानपायस्य संयोगे परमः क्रमः ।

सङ्गत्या जायतेऽसाम्यं साम्यं च न भवेद्द्वयोः ॥४
अनयस्यानुपायस्य संयुगे परमः क्षयः ।
संशयो जायते साम्याज्जयश्च न भवेद्द्वयोः ॥ ५
ते वयं नयमास्थाय शत्रुदेशसमीपगाः ।
कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः ।
पररन्ध्रे पराक्रान्ताः स्वरन्ध्रावरणे स्थिताः ॥ ६
व्यूढानीकैरतिबलैर्न युध्येदरिभिः सह ।
इति बुद्धिमतां नीतिस्तन्ममापीह रोचते ॥ ७
अनवद्या ह्यसंबुद्धाः प्रविष्टाः शत्रुसद्म तत् ।
शत्रुदेशमुपाक्रम्य तं कामं प्राप्नुयामहे ॥ ८
एको ह्येव श्रियं नित्यं बिभर्ति पुरुषर्षभः ।
अन्तरात्मेव भूतानां तत्क्षयं नैव लक्षये ॥ ९
अथवैनं निहत्याजौ शेषेणापि समाहताः ।
प्राप्नुयाम ततः स्वर्गं ज्ञातित्राणपरायणाः ॥ १०
युधिष्ठिर उवाच ।
कृष्ण कोऽयं जरासन्धः किंवीर्यः किंपराक्रमः ।
यस्त्वां स्पृष्ट्वाऽग्निसदृशं न दग्धः शलभो यथा ११
कृष्ण उवाच ।
शृणु राजञ्जरासन्धो यद्वीर्यो यत्पराक्रमः ।
यथा चोपेक्षितोऽस्माभिर्बहुशः कृतविप्रियः॥१२
अक्षौहिणीनां तिसृणां पतिः समरदर्पितः ।
राजा बृहद्रथो नाम मगधाधिपतिर्बली ॥ १३
रूपवान्वीर्यसंपन्नः श्रीमानतुलविक्रमः ।
नित्यं दीक्षाङ्किततनुः शतक्रतुरिवापरः ॥ १४
तेजसा सूर्यसङ्काशः क्षमया पृथिवीसमः ।
यश्चान्तकसमः क्रोधे श्रिया वैश्रवणोपमः ॥ १५
'स्वराज्यं कारयामास मगधेषु गिरिव्रजे ।'
तस्याभिजनसंयुक्तैर्गुणैर्भरतसत्तम ।
व्याप्तेयं पृथिवी सर्वा सूर्यस्येव गभस्तिभिः॥१६
स काशिराजस्य सुते यमजे भरतर्षभ ।
उपयेमे महावीर्यो रूपद्रविणसंयुते ।
तयोश्चकार समयं मिथः स पुरुषर्षभः ॥ १७
नातिवर्तिष्य इत्येवं पत्नीभ्यां सन्निधौ तदा ।

स ताभ्यां शुशुभे राजा पत्नीभ्यां वसुधाधिपः १८
प्रियाभ्यामनुरूपाभ्यां करेणुभ्यामिव द्विपः ।
तयोर्मध्यगतश्चापि रराज वसुधाधिपः ॥ १९
गङ्गायमुनयोर्मध्ये मूर्तिमानिव सागरः ।
विषयेषु निमग्नस्य तस्य यौवनमत्यगात् ॥ २०
न च वंशकरः पुत्रस्तस्याजायत कश्चन ।
मङ्गलैर्बहुभिर्होमैः पुत्रकामाभिरिष्टिभिः ॥ २१
नाससाद नृपश्रेष्ठः पुत्रं कुलविवर्धनम् ।
स भार्याभ्यां च सहितो निर्वेदमगमद्भृशम् ॥ २२
'राज्यं चापि परित्यज्य तपोवनमथाश्रयत् ।
वार्यमाणः प्रकृतिभिर्नृपभक्त्या विशांपते ॥' २३
अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः ।
शुश्राव तपसि श्रेष्ठमुदारं चण्डकौशिकम् ॥ २४
यदृच्छयाऽऽगतं तं तु वृक्षमूलमुपाश्रितम् ।
पत्नीभ्यां सहितो राजा सर्वयत्नैरतोषयत् ॥ २५
'बृहद्रथं च स ऋषिर्यथावच्चाभ्यनन्दत ।
उपविष्टः स तेनाथ अनुज्ञातो महात्मना ॥ २६
तमपृच्छत्तदा विप्रः किमागमनमित्यथ ।
विप्रैरनुगतस्यैव पत्नीभ्यां सहितस्य च ॥ २७
स उवाच मुनिं राजा भगवन्नास्ति मे सुतः ।
अपुत्रस्य तु राज्येन वृद्धत्वे किं प्रयोजनम्॥ २८
सोऽहं तपश्चरिष्यामि पत्नीभ्यां सहितो वने ।
नाप्रजस्य मुने कीर्तिः स्वधा चैवाक्षया भवेत् ।
एवमुक्तः स राज्ञा तु मुनिः कारुण्यमागतः ॥ २९
तमब्रवीत्सत्यधृतिः सत्यवागृषिसत्तमः ।
परितुष्टोऽस्मि राजेन्द्र वरं वरय सुव्रत ॥ ३०
ततः सभार्यः प्रणतस्तमुवाच बृहद्रथः ।
पुत्रदर्शननैराश्याद्बाष्पसन्दिग्धया गिरा ॥ ३१
राजोवाच ।
भगवन् राज्यमुत्सृज्य प्रस्थितस्य तपोवनम् ।
किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे ॥३२
कृष्ण उवाच ।
एतच्छ्रुत्वा मुनिर्ध्यानमगमत्क्षुभितेन्द्रियः ।
तस्यैव चाम्रवृक्षस्य छायायां समुपाविशत् ॥ ३३

क्रमः उपक्रमः ॥ ४ ॥ तत्क्षये वै बलक्षयः इति पाठः ॥ ९ ॥

तस्योपविष्टस्य मुनेरुत्सङ्गे निपपात ह ।
अवानमशुकादष्टमेकमाम्रफलं किल ॥ ३४
तत्प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च ।
राज्ञे ददावप्रतिमं पुत्रसंप्राप्तिकारणम् ॥ ३५
उवाच च महाप्राज्ञस्तं राजानं महामुनिः ।
गच्छ राजन्कृतार्थोऽसि निवर्तस्व नराधिप ॥३६
'एष ते तनयो राजन्मा तपेह तपोवने ।
प्रजाः पालय धर्मेण एष धर्मो महीक्षिताम् ॥ ३७
यजस्व विविधैर्यज्ञैरिन्द्रं तर्पय चेन्दुना ।
पुत्रं राज्ये प्रतिष्ठाप्य तत आश्रममाव्रज ॥ ३८
अष्टौ वरान्प्रयच्छामि तव पुत्रस्य पार्थिव ।
ब्रह्मण्यत्वमजेयत्वं युद्धेषु च तथा मतिः ॥ ३९
प्रियातिथेयतां चैव दीनानामन्ववेक्षणम् ।
तथा बलं च सुमहल्लोके कीर्तिं च शाश्वतीम् ॥४०
अनुरागं प्रजानां चेत्येवमष्टौ वरान्नृप ।
गच्छ त्वं कृतकृत्योऽसि निवर्तस्व जनाधिप॥'४१
अनुज्ञातः स ऋषिणा पत्नीभ्यां सहितो नृपः ।
पौरैरनुगतश्चापि विवेश स्वपुरं ततः ॥ ४२
यथासमयमाज्ञाय तदा स नृपसत्तमः ।
द्वाभ्यामेकं फलं प्रादात्पत्नीभ्यां भरतर्षभ ॥ ४३
मुनेश्च बहुमानेन कालस्य च विपर्ययात् ।
ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः शुभे ।
भावित्वादपि चार्थस्य सत्यवाक्यतया मुनेः ॥ ४४
तयोः समभवद्गर्भः फलप्राशनसंभवः ।
ते च दृष्ट्वा स नृपतिः परां मुदमवाप ह ॥ ४५
अथ काले महाप्राज्ञ यथासमयमागते ।
प्रजायेतामुभे राजञ्शरीरशकले तदा ॥ ४६
एकाक्षिबाहुचरणे अर्धोदरमुखस्फिचे ।
दृष्ट्वा शरीरशकले प्रवेपतुरुभे भृशम् ॥ ४७
उद्विग्ने सह संमन्त्र्य ते भगिन्यौ तदाऽबले ।
सजीवे प्राणिशकले तत्यजाते सुदुःखिते ॥ ४८
तयोर्धात्र्यौ सुसंवीते कृत्वा ते गर्भसंप्लवे ।
निर्गम्यान्तःपुरद्वारात्समुत्सृज्याभिजग्मतुः ॥४९
'दुकूलाभ्यां सुसंछन्ने पाण्डराभ्यामुभे तदा ।
अज्ञाते कस्यचित्ते तु जहतुस्ते चतुष्पथे ॥ ५०
ततो विविशतुर्धात्र्यौ पुनरन्तःपुरं तदा ।
कथयामासतुरुभे देवीभ्यां तु पृथक्पृथक् ॥' ५१
ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी ।
जग्राह मनुजव्याघ्र मांसशोणितभोजना ॥ ५२
कर्तुकामा सुखवहे शकले सा तु राक्षसी ।
संयोजयामास तदा विधानबलचोदिता ॥ ५३
ते समानीतमात्रे तु शकले पुरुषर्षभ ।
एकमूर्तिधरो वीरः कुमारः समपद्यत ॥ ५४
ततः सा राक्षसी राजन्विस्मयोत्फुल्ललोचना ।
न शशाक समुद्वोढुं वज्रसारमयं शिशुम् ॥ ५५
बालस्ताम्रतलं मुष्टिं कृत्वा चास्ये निधाय सः ।
प्राक्रोशदतिसंरब्धः सतोय इव तोयदः ॥ ५६
तेन शब्देन संभ्रान्तः सहसाऽन्तःपुरे जनः ।
निर्जगाम नरव्याघ्र राज्ञा सह परन्तप ॥ ५७
ते चाबले परिम्लाने पयःपूर्णपयोधरे ।
निराशे पुत्रलाभाय सहसैवाभ्यगच्छताम् ॥ ५८
ते च दृष्ट्वा तथाभूते राजानं चेष्टसंततिम् ।
तं च बालं सुबलिनं चिन्तयामास राक्षसी ॥५९
नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः ।
बालं पुत्रमिमं हन्तुं धार्मिकस्य महात्मनः ॥ ६०
सा तं बालमुपादाय मेघलेखेव भास्करम् ।
कृत्वा च मानुषं रूपमुवाच वसुधाधिपम् ॥ ६१
बृहद्रथ सुतस्तेऽयं मया दत्तः प्रगृह्यताम् ।
तव पत्नीद्वये जातो द्विजातिवरशासनात् ।
धात्रीजनपरित्यक्तो मयाऽयं परिरक्षितः ॥ ६२

कृष्ण उवाच ।

ततस्ते भरतश्रेष्ठ काशिराजसुते शुभे ।
तं बालमभिपद्याशु प्रस्रवैरभ्यषिञ्चताम् ॥ ६३

---

अवानमशुष्कं सरसमिति यावत् । अमारुतमनाविद्धं इति घ. पाठः ॥ ३४ ॥ प्रजायेतां सुषुवतुः ॥४६॥ रिफक् कट्या अधोभागः ॥ ४७ ॥ सुखवहे एकीकृतयोर्वहनं हि सुखेन भवतीति प्रसिद्धम् ॥ ५३ ॥ समानीतमात्रे संयोजितमात्रे ॥ ५४ ॥

ततः स राजा संहृष्टः सर्वं तदुपलभ्य च ।
अपृच्छद्धेमगर्भाभां राक्षसीं तामराक्षसीम् ॥ ६४

का त्वं कमलगर्भाभे मम पुत्रप्रदायिनी ।
कामं मा ब्रूहि कल्याणि देवता प्रतिभासि मे ६५

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

## अष्टादशोऽध्यायः ॥ १८ ॥

राजानंप्रति स्वस्वरूपमभिधाय जराया अन्तर्धानम् ॥ १ ॥

राक्षस्युवाच ।
जरा नामास्मि भद्रं ते राक्षसी कामरूपिणी ।
तव वेश्मनि राजेन्द्र पूजिता न्यवसं सुखम् ॥ १
गृहे गृहे मनुष्याणां नित्यं तिष्ठामि राक्षसी ।
गृहदेवीति नाम्ना वै पुरा सृष्टा स्वयंभुवा ॥ २
दानवानां विनाशाय स्थापिता दिव्यरूपिणी ।
यो मां भक्त्या लिखेत्कुड्ये सपुत्रां यौवनान्वितां ३
गृहे तस्य भवेद्वृद्धिरन्यथा क्षयमाप्नुयात् ।
त्वद्गृहे तिष्ठमानाऽहं पूजिताऽहं सदा विभो ॥ ४
लिखिता चैव कुड्येषु पुत्रैर्बहुभिरावृता ।
गन्धपुष्पैस्तथा धूपैर्भक्ष्यभोज्यैः सुपूजिता ॥ ५
साऽहं प्रत्युपकारार्थं चिन्तयन्त्यनिशं नृप ।
तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिक ॥ ६
संश्लेषिते मया दैवात्कुमारः समपद्यत ।
तव भाग्यान्महाराज हेतुमात्रमहं त्विह ॥ ७

मेरुं वा खादितुं शक्ता किं पुनस्तव बालकम् ।
गृहसंपूजनात्तुष्ट्या मया प्रत्यर्पितस्तव ॥ ८
मम नाम्ना च लोकेऽस्मिन्ख्यात एव भविष्यति ।
कृष्ण उवाच ।
एवमुक्त्वा तु सा राजंस्तत्रैवान्तरधीयत ।
स सङ्गृह्य कुमारं तं प्रविवेश गृहं नृपः ॥ ९
तस्य बालस्य यत्कृत्यं तच्चकार नृपस्तदा ।
आज्ञापयच्च राक्षस्या मगधेषु महोत्सवम् ॥ १०
तस्य नामाकरोच्चैव पितामहसमः पिता ।
जरया सन्धितो यस्माज्जरासन्धो भवत्वयम् ॥ ११
सोऽवर्धत महातेजा मागधाधिपतेः सुतः ।
प्रमाणबलसंपन्नो हुताहुतिरिवानलः ॥ १२
'एवं स ववृधे राजन्कुमारः पुष्करेक्षणः ।
कालेन महता चापि यौवनस्थो बभूव ह ।'
मातापित्रोर्नन्दकरः शुक्लपक्षे यथा शशी ॥ १३

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः ॥ १९ ॥

पुनर्यदृच्छागतेन चण्डकौशिकेन जरासन्धपराक्रमादौ कथिते जरासन्धं राज्येऽभिषिच्य तपोवनगतस्य सभार्यस्य बृहद्रथस्य स्वर्गगमनम् ॥ १ ॥ कृष्णेन कंसवधात् जरासन्धस्य स्वस्मिन्वैरोदयकथनम् ॥ २ ॥

कृष्ण उवाच ।
कस्यचित्त्वथ कालस्य पुनरेव महातपाः ।
मगधेषूपचक्राम भगवांश्चण्डकौशिकः ॥ १
तस्याऽऽगमनसंहृष्टः सामात्यः सपुरःसरः ।
सभार्यः सह पुत्रेण निर्जगाम बृहद्रथः ॥ २
पाद्यार्घ्याचमनीयैस्तमर्चयामास भारत ।

स नृपो राज्यसहितं पुत्रं तस्मै न्यवेदयत् ॥ ३
प्रतिगृह्य च तां पूजां पार्थिवाद्भगवानृषिः ।
उवाच मागधं राजन्प्रहृष्टेनान्तरात्मना ॥ ४
सर्वमेतन्मया ज्ञातं राजन्दिव्येन चक्षुषा ।
पुत्रस्तु शृणु राजेन्द्र यादृशोऽयं भविष्यति ॥ ५
अस्य रूपं च सत्वं च बलमूर्जितमेव च ।
एष श्रिया समुदितः पुत्रस्तव न संशयः ॥ ६

अराक्षसीं वेषतः ॥ ६४ ॥ सप्तदशोऽध्यायः ॥ १७ ॥

प्रापयिष्यति तत्सर्वं विक्रमेण समन्वितः ।
अस्य वीर्यवतो वीर्यं नानुयास्यन्ति पार्थिवाः॥७
पततो वैनतेयस्य गतिमन्ये यथा खगाः ।
विनाशमुपयास्यन्ति ये चास्य परिपन्थिनः॥ ८
देवैरपि विसृष्टानि शस्त्राण्यस्य महीपते ।
न रुजं जनयिष्यन्ति गिरेरिव नदीरयाः॥ ९
सर्वमूर्धाभिषिक्तानामेष मूर्ध्नि ज्वलिष्यति ।
प्रभाहरोऽयं सर्वेषां ज्योतिषामिव भास्करः॥१०
एनमासाद्य राजानः समृद्धबलवाहनाः ।
विनाशमुपयास्यन्ति शलभा इव पावकम् ॥ ११
एष श्रियः समुदिताः सर्वराज्ञां ग्रहीष्यति ।
वर्षास्विवोदीर्णजला नदीर्नदनदीपतिः ॥ १२
एष धारयिता सम्यक्चातुर्वर्ण्यं महाबलः ।
शुभां शुभवतीं स्फीतां सर्वसस्यधरां धराम्॥१३
अस्याज्ञावशगाः सर्वे भविष्यन्ति नराधिपाः ।
सर्वभूतात्मभूतस्य वायोरिव शरीरिणः ॥ १४
एष रुद्रं महादेवं त्रिपुरान्तकरं हरम् ।
सर्वलोकेष्वतिबलः साक्षाद्द्रक्ष्यति मागधः ॥ १५
एवं ब्रुवन्नेव मुनिः स्वकार्यमिव चिन्तयन् ।
विसर्जयामास नृपं बृहद्रथमथारिहन् ॥ १६
प्रविश्य नगरीं चापि ज्ञातिसंबन्धिभिर्वृतः ।
अभिषिच्य जरासन्धं मगधाधिपतिस्तदा ॥ १७
बृहद्रथो नरपतिः परां निर्वृतिमाययौ ।
अभिषिक्ते जरासन्धे तदा राजा बृहद्रथः ।
पत्नीद्वयेनानुगतस्तपोवनचरोऽभवत् ॥ १८
ततो वनस्थे पितरि मातृभ्यां सह भारत ।
जरासन्धः स्ववीर्येण पार्थिवानकरोद्वशे ॥ १९
अथ दीर्घस्य कालस्य तपोवनचरो नृपः ।
सभार्यः स्वर्गमगमत्तपस्तप्त्वा बृहद्रथः ॥ २०
जरासन्धोऽपि नृपतिर्यथोक्तं कौशिकेन तत् ।
वरप्रदानमखिलं प्राप्य राज्यमपालयत् ॥ २१
हते चैव मया कंसे सहंसडिभिके तदा ।
जरासन्धस्य दुहिता रोदते पार्श्वतः पितुः ।
जातो वै वैरनिर्बन्धो मयासीत्तत्र भारत ॥ २२
भ्रामयित्वा शतगुणमेकोनं येन भारत ।
गदा क्षिप्ता बलवता मागधेन गिरिव्रजात् ॥२३
तिष्ठतो मथुरायां वै कृत्स्नस्याद्भुतकर्मणः ।
एकोनयोजनशते सा पपात गदा शुभा ॥ २४
दृष्ट्वा पौरैस्तदा सम्यग्गदा चैव निवेदिता ।
गदावसानं तत्ख्यातं मथुरायाः समीपतः ॥२५
तस्यास्तां हंसडिभिकावशस्त्रनिधनावुभौ ।
मन्त्रे मतिमतां श्रेष्ठौ नीतिशास्त्रे विशारदौ ॥२६
यौ तौ मया ते कथितौ पूर्वमेव महाबलौ ।
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः॥२७
एवमेष तदा वीर बलिभिः कुकुरान्धकैः ।
वृष्णिभिश्च महाराज नीतिहेतोरुपेक्षितः ॥ २८

॥ इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

॥ समाप्तं च मन्त्रपर्व ॥

---

## ( अथ जरासन्धवधपर्व ॥ २ ॥)

### विंशोऽध्यायः ॥ २० ॥

कृष्णयुधिष्ठिरसंवादानन्तरं भीमार्जुनाभ्यांसह कृष्णस्य मागधपुरप्रस्थानम् ॥ १ ॥

वासुदेव उवाच ।
पतितौ हंसडिभिकौ कंसश्च सगणो हतः ।
जरासन्धस्य निधने कालोऽयं समुपागतः ॥ १
न शक्योऽसौ रणे जेतुं सर्वैरपि सुरासुरैः ।

---

आह्निकाय महातपाः इति घ. पाठः ॥ १६ ॥

एकोनविंशतितमोऽध्यायः ॥ १९ ॥

प्राणयुद्धेन जेतव्यः स इत्युपलभामहे ॥ २
मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः ।
मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ॥ ३
त्रिभिरासादितोऽस्माभिर्विजने स नराधिपः ।
न सन्देहो यथा युद्धमेकेनाप्युपयास्यति ॥ ४
अवमानाच्च लोभाच्च बाहुवीर्याच्च दर्पितः ।
भीमसेनेन युद्धाय ध्रुवमप्युपयास्यति ॥ ५
अलं तस्य महाबाहुर्भीमसेनो महाबलः ।
लोकस्य समुदीर्णस्य निधनायान्तको यथा ॥ ६
यदि भीमबलं वेत्सि यदि ते प्रत्ययो मयि ।
भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे ॥ ७
वैशंपायन उवाच ।
एवमुक्तो भगवता प्रत्युवाच युधिष्ठिरः ।
भीमार्जुनौ समालोक्य संप्रहृष्टमुखौ स्थितौ ॥ ८
युधिष्ठिर उवाच ।
अच्युताच्युत मामैवं व्याहरामित्रकर्शन ।
पाण्डवानां भवान्नाथो भवन्तं चाश्रिता वयम्॥९
यथा वदसि गोविन्द सर्वं तदुपपद्यते ।
नहि त्वमग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी॥१०
'येषामभिमुखी लक्ष्मीस्तेषां कृष्ण त्वमग्रतः ।'
निहतश्च जरासन्धो मोक्षिताश्च महीक्षितः ।
राजसूयश्च मे लब्धो निदेशे तव तिष्ठतः ॥ ११
क्षिप्रमेव यथा त्वेतत्कार्यं समुपपद्यते ।
अप्रमत्तो जगन्नाथ तथा कुरु नरोत्तम ॥ १२
त्रिभिर्भवद्भिर्हि विना नाहं जीवितुमुत्सहे ।
धर्मकामार्थरहितो रोगार्त इव दुःखितः ॥ १३
न शौरिणा विना पार्थो न शौरिः पाण्डवं विना ।
नाजेयोस्त्यनयोर्लोके कृष्णयोरिति मे मतिः१४
अयं च बलिनां श्रेष्ठः श्रीमानपि वृकोदरः ।
युवाभ्यां सहितो वीर किं न कुर्यान्महायशाः१५
सुप्रणीतो बलौघो हि कुरुते कार्यमुत्तमम् ।
अन्धं बलं जडं प्राहुः प्रणेतव्यं विचक्षणैः॥ १६
यतो हि निम्नं भवति नयन्ति हि ततो जलम् ।
यतश्छिद्रं ततश्चापि नयन्ते धीवरा जलम् ॥ १७
तस्मान्नयविधानज्ञं पुरुषं लोकविश्रुतम् ।
वयमाश्रित्य गोविन्दं यतामः कार्यसिद्धये॥ १८
एवं प्रज्ञानयबलं क्रियोपायसमन्वितम् ।
पुरस्कुर्वीत कार्येषु कृष्णकार्यार्थसिद्धये ॥ १९
एवमेव यदुश्रेष्ठ यावत्कार्यार्थसिद्धये ।
अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनञ्जयम् ।
नयो जयो बलं चैव विक्रमे सिद्धिमेष्यति॥ २०
वैशंपायन उवाच ।
एवमुक्तास्ततः सर्वे भ्रातरो विपुलौजसः ।
वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मागधं प्रति॥ २१
वर्चस्विनां ब्राह्मणानां स्नातकानां परिच्छदैः ।
आच्छाद्य सुहृदां वाक्यैर्मनोज्ञैरभिनन्दिताः॥२२
'माधवः पाण्डवेयौ च प्रतस्थुर्व्रतधारिणः' ।
अमर्षादभितप्तानां ज्ञात्यर्थं मुख्यतेजसाम् ।
रविसोमाग्निवपुषां दीप्तमासीत्तदा वपुः ॥ २३
हतं मेने जरासन्धं दृष्ट्वा भीमपुरोगमौ ।
एककार्यसमुद्यन्तौ कृष्णौ युद्धेऽपराजितौ ॥ २४
ईशौ हितौ महात्मानौ सर्वकार्यप्रवर्तिनौ ।
धर्मकामार्थलोकानां कार्याणां च प्रवर्तकौ ॥२५
कुरुभ्यः प्रस्थितास्ते तु मध्येन कुरुजाङ्गलम् ।
रम्यं पद्मसरो गत्वा कालकूटमतीत्य च ॥ २६
गण्डकीं च महाशोणं सदानीरां तथैव च ।
एकपर्वतके नद्यः क्रमेणैत्याव्रजन्त ते ॥ २७
उत्तीर्य सरयूं रम्यां दृष्ट्वा पूर्वांश्च कोसलान् ।
अतीत्य जग्मुर्मिथिलां मालां चर्मण्वतीं नदीम्२८
अतीत्य गङ्गां शोणं च त्रयस्ते प्राङ्मुखास्तदा ।
कुशचीरच्छदा जग्मुर्मागधं क्षेत्रमच्युताः ॥ २९
ते शश्वद्गोधनाकीर्णमम्बुमन्तं शुभद्रुमम् ।
गोरथं गिरिमासाद्य ददृशुर्मागधं पुरम् ॥ ३०

॥ इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि विंशोऽध्यायः ॥ २० ॥

जयोऽर्जुनः ॥ ३ ॥

विंशोऽध्यायः ॥ २० ॥

## एकविंशोऽध्यायः ॥ २१ ॥

जरासन्धसमीपं गतानां श्रीकृष्णभीमार्जुनानां जरासन्धेन सह विवादः ॥ १ ॥

वासुदेव उवाच ।
एष पार्थ महान्भाति पशुमान्नित्यमम्बुमान् ।
निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः १
वैहारो विपुलः शैलो वाराहो वृषभस्तथा ।
तथा ऋषिगिरिस्तात शुभाश्चैत्यकपञ्चमाः ॥ २
एते पञ्च महाशृङ्गाः पर्वताः शीतलद्रुमाः ।
रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम् ॥ ३
पुष्पवेष्टितशाखाग्रैर्गन्धवद्भिर्मनोहरैः ।
निगूढा इव लोध्राणां वनैः कामिजनप्रियैः ॥ ४
'यत्र दीर्घतमा नाम ऋषिः परमयन्त्रितः' ।
शूद्रायां गौतमो यत्र महात्मा संशितव्रतः ।
औशीनर्यामजनयत्काक्षीवाद्यान्सुतान्मुनिः ॥ ५
गौतमः प्रणयात्तस्माद्यथाऽसौ तत्र सद्मनि ।
भजते मागधं वंशं स नृपाणामनुग्रहः ॥ ६
अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः ।
गौतमक्षयमभ्येत्य रमन्ते स्म पुरार्जुन ॥ ७
वनराजीस्तु पश्येमाः पिप्पलानां मनोरमाः ।
लोध्राणां च शुभाः पार्थ गौतमौकःसमीपजाः ८
अर्बुदः शक्रवापी च पन्नगौ शत्रुतापनौ ।
स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः ॥ ९
अपारिहार्या मेघानां मागधा मनुना कृताः ।
कौशिको मणिमांश्चैव चक्राते चाप्यनुग्रहम् ॥१०
'पाण्डरे विपुले चैव तथा वाराहकेऽपि च ।
चैत्यके च गिरिश्रेष्ठे मातङ्गे च शिलोच्चये ॥ ११
एतेषु पर्वतेन्द्रेषु सर्वसिद्धसमालयाः ।
यतीनामाश्रमाश्चैव मुनीनां च महात्मनाम् ॥१२
वृषभस्य तमालस्य महावीर्यस्य वै तथा ।
गन्धर्वरक्षसां चैव नागानां च तथाऽऽलयाः॥१३
कक्षीवतस्तपोवीर्यात्तपोदा इति विश्रुताः ।
पुण्यतीर्थाश्च ते सर्वे सिद्धानां चैव कीर्तिताः ।
मणेश्च दर्शनादेव भद्रं शिवमवाप्नुयात् ॥' १४
एवं प्राप्य पुरं रम्यं दुराधर्षं समन्ततः ।
अर्थसिद्धिं त्वनुपमां जरासन्धोऽभिमन्यते ॥ १५
वयमासादने तस्य दर्पमद्य हरेम हि ।
वैशंपायन उवाच ।
एवमुक्त्वा ततः सर्वे भ्रातरो विपुलौजसः॥ १६
वार्ष्णेयः पाण्डवौ चैव प्रतस्थुर्मागधं पुरम् ।
हृष्टपुष्टजनोपेतं चातुर्वर्ण्यसमाकुलम् ॥ १७
स्फीतोत्सवमनाधृष्यमासेदुश्च गिरिव्रजम् ।
ततो द्वारमनासाद्य पुरस्य गिरिमुच्छ्रितम् ॥ १८
बार्हद्रथैः पूज्यमानं तथा नगरवासिभिः ।
मागधानां तु रुचिरं चैत्यकान्तरमाद्रवन् ॥ १९
यत्र मांसादमृषभमाससाद बृहद्रथः ।
तं हत्वा मासतालाभिस्तिस्रो भेरीरकारयत् ॥२०
स्वपुरे स्थापयामास तेन चानह्य चर्मणा ।
यत्र ताः प्राणदन्भेर्यो दिव्यपुष्पावचूर्णिताः॥२१
भङ्क्त्वा भेरीत्रयं तेऽपि चैत्यप्राकारमाद्रवन् ।
द्वारतोऽभिमुखाः सर्वे ययुर्नानायुधास्तदा ॥ २२
मागधानां सुरुचिरं चैत्यकं तं समाद्रवन् ।
शिरसीव समाघ्नन्तो जरासन्धं जिघांसवः ॥ २३
स्थिरं सुविपुलं शृङ्गं सुमहत्तत्पुरातनम् ।
अर्चितं गन्धमाल्यैश्च सततं सुप्रतिष्ठितम् ॥ २४
विपुलैर्बाहुभिर्वीरास्तेऽभिहत्याभ्यपातयन् ।
ततस्ते मागधं हृष्टाः पुरं प्रविविशुस्तदा ॥ २५
एतस्मिन्नेव काले तु ब्राह्मणा वेदपारगाः ।
दृष्ट्वा तु दुर्निमित्तानि जरासन्धमदर्शयन् ॥ २६
पर्यग्न्यकुर्वंश्च नृपं द्विरदस्थं पुरोहिताः ।
ततस्तच्छान्तये राजा जरासन्धः प्रतापवान् ।
दीक्षितो नियमस्थोऽसावुपवासपरोऽभवत् ॥ २७
स्नातकव्रतिनस्ते तु बाहुशस्त्रा निरायुधाः ।
युयुत्सवः प्रविविशुर्जरासन्धेन भारत ॥ २८
भक्ष्यमाल्यापणानां च ददृशुः श्रियमुत्तमाम् ।
स्फीतां सर्वगुणोपेतां सर्वकामसमृद्धिनीम् ॥ २९
तां तु दृष्ट्वा समृद्धिं ते वीथ्यां तस्यां नरोत्तमाः ।

राजमार्गेण गच्छन्तः कृष्णभीमधनञ्जयाः ।
बलाद्गृहीत्वा माल्यानि मालाकारान्महाबलाः३०
'कर्पूरशृङ्गं कोष्ठं च सफलं चान्तरापणे ।
वैश्याद्बलाद्गृहीत्वा ते विहृत्य च महारथाः॥'३१
विरागवसनाः सर्वे स्रग्विणो मृष्टकुण्डलाः ।
निवेशनमथाजग्मुर्जरासन्धस्य धीमतः ॥ ३२
गोवासमिव वीक्षन्तः सिंहा हैमवता यथा ।
शालस्तम्भनिभास्तेषां चन्दनागुरुरूपिताः ॥३३
अशोभन्त महाराज बाहवो युद्धशालिनाम् ।
तान्दृष्ट्वा द्विरदप्रख्याञ्शालस्कन्धानिवोद्गतान् ॥
व्यूढोरस्कान्मागधानां विस्मयः समपद्यत ।
'अद्वारेणाभ्यवस्कन्द्य विविशुर्मागधालयम् ॥'३५
ते त्वतीत्य जनाकीर्णाः कक्षास्तिस्रो नरर्षभाः ।
अहङ्कारेण राजानमुपतस्थुर्गतव्यथाः ॥ ३६
'भो शब्देनैव राजानमूचुस्ते तु महारथाः ।'
तान्पाद्यमधुपर्कार्हान्गवार्हान्सत्कृतिं गतान् ।
प्रत्युत्थाय जरासन्ध उपतस्थे यथाविधि ॥ ३७
उवाच चैतान्राजाऽसौ स्वागतं वोऽस्त्विति प्रभुः ।
मौनमासीत्तदा पार्थभीमयोर्जनमेजय ॥ ३८
तेषां मध्ये महाबुद्धिः कृष्णो वचनमब्रवीत् ।
वक्तुं नायाति राजेन्द्र एतयोर्नियमस्थयोः ॥ ३९
अर्वाङ्निशीथात्परतस्त्वया सार्धं वदिष्यतः ।
यज्ञागारे स्थापयित्वा राजा राजगृहं गतः ॥४०
ततोऽर्धरात्रे संप्राप्ते यातो यत्र स्थिता द्विजाः ।
तस्य ह्येतद्व्रतं राजन्बभूव भुवि विश्रुतम् ॥ ४१
स्नातकान्ब्राह्मणान्प्राप्ताञ्श्रुत्वा स समितिञ्जयः ।
अप्यर्धरात्रे नृपतिः प्रत्युद्गच्छति भारत ॥ ४२
तांस्त्वपूर्वेण वेषेण दृष्ट्वा स नृपसत्तमः ।
उपतस्थे जरासन्धो विस्मितश्चाभवत्तदा ॥ ४३
ते तु दृष्ट्वैव राजानं जरासन्धं नरर्षभाः ।
इदमूचुरमित्रघ्नाः सर्वे भरतसत्तम ॥ ४४
स्वस्त्यस्तु कुशलं राजन्निति तत्र व्यवस्थिताः ।
तं नृपं नृपशार्दूल प्रेक्षमाणाः परस्परम् ॥ ४५
तानब्रवीज्जरासन्धस्तथा पाण्डवयादवान् ।
आस्यतामिति राजेन्द्र ब्राह्मणच्छद्मसंवृतान् ॥४६
अथोपविविशुः सर्वे त्रयस्ते पुरुषर्षभाः ।
संप्रदीप्तास्त्रयो लक्ष्म्या महाध्वर इवाग्नयः ॥४७
तानुवाच जरासन्धः सत्यसन्धो नराधिपः ।
विगर्हमाणः कौरव्य वेषग्रहणवैकृतान् ॥
न स्नातकव्रता विप्रा बहिर्माल्यानुलेपनाः ॥ ४८
भवन्तीति नृलोकेऽस्मिन्विदितं मम सर्वशः ।
के यूयं पुष्पवन्तश्च भुजैर्ज्याकृतलक्षणैः ॥ ४९
बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ ।
एवं विरागवसना बहिर्माल्यानुलेपनाः ॥ ५०
'क्षत्रिया एव लोकेऽस्मिन्विदिता मम सर्वशः ।'
सत्यं वदत के यूयं सत्यं राजसु शोभते ॥ ५१
चैत्यकस्य गिरेः शृङ्गं भित्त्वा किमिह सद्मनि ।
अद्वारेण प्रविष्टाः स्थ निर्भया राजकिल्बिषात् ५२
वदध्वं वाचि वीर्यं च ब्राह्मणस्य विशेषतः ।
कर्म चैतद्विलिङ्गस्थं किं वोऽद्य प्रसमीक्षितम् ॥५३
एवं च मामुपास्थाय कस्माच्च विधिनार्हणाम् ।
प्रणीतां नानुगृह्णीत कार्यं किं वाऽस्मदागमे ॥५४
वैशंपायन उवाच ।
एवमुक्ते ततः कृष्णः प्रत्युवाच महामनाः ।
स्निग्धगम्भीरया वाचा वाक्यं वाक्यविशारदः ५५
कृष्ण उवाच ।
स्नातकान्ब्राह्मणान्राजन्विद्ध्यस्मांस्त्वं नराधिप ।
स्नातकव्रतिनो राजन्ब्राह्मणाः क्षत्रिया विशः ५६
विशेषनियमाश्चैषामविशेषाश्च सन्त्युत ।
विशेषवांश्च सततं क्षत्रियः श्रियमृच्छति ॥ ५७
पुष्पवत्सु ध्रुवा श्रीश्च पुष्पवन्तस्ततो वयम् ।
क्षत्रियो बाहुवीर्यस्तु न तथा वाक्यवीर्यवान् ।
अप्रगल्भं वचस्तस्य तस्माद्बार्हद्रथेरितम् ॥ ५८
स्ववीर्यं क्षत्रियाणां तु बाह्वोर्धाता न्यवेशयत् ।
तद्दिदृक्षसि चेद्राजन्द्रष्टास्यद्य न संशयः ॥ ५९
अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहान् ।
प्रविशन्ति नरा धीरा द्वाराण्येतानि धर्मतः ॥६०

कार्यवन्तो गृहानेत्य शत्रुतो नार्हणां वयम् । प्रतिगृह्णीम तद्विद्धि एतन्नः शाश्वतं व्रतम् ॥ ६१

॥ इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः ॥ २२ ॥

कृष्णजरासन्धयोर्विवादानन्तरं जरासन्धस्य युद्धोद्यमः ॥ १ ॥

जरासन्ध उवाच ।

न स्मरामि कदा वैरं कृतं युष्माभिरित्युत ।
चिन्तयंश्च न पश्यामि भवतां प्रति वैकृतम् ॥ १
वैकृते वा सति कथं मन्यध्वं मामनागसम् ।
अरिं वै ब्रूत हे विप्राः सतां समय एष हि ॥ २
अर्थधर्मोपघाताद्धि मनः समुपतप्यते ।
योऽनागसि प्रसजति क्षत्रियो हि न संशयः ॥ ३
अतोऽन्यथा चरँल्लोके धर्मज्ञः सन्महारथः ।
वृजिनां गतिमाप्नोति श्रेयसोऽप्युपहन्ति च ॥ ४
त्रैलोक्ये क्षत्रधर्मो हि श्रेयान्वै साधुचारिणाम् ।
नान्यं धर्मं प्रशंसन्ति ये च धर्मविदो जनाः ॥ ५
तस्य मेऽद्य स्थितस्येह स्वधर्मे नियतात्मनः ।
अनागसं प्रजानां च प्रमादादिव जल्पथ ॥ ६

कृष्ण उवाच ।

कुलकार्यं महाबाहो कश्चिदेकः कुलोद्वहः ।
वहते यस्तन्नियोगाद्वयमभ्युद्यतास्त्वयि ॥ ७
त्वया चोपहृता राजन्क्षत्रिया लोकवासिनः ।
तदागः क्रूरमुत्पाद्य मन्यसे किमनागसम् ॥ ८
राजा राज्ञः कथं साधून्हिंस्यान्नृपतिसत्तम ।
तद्राज्ञः सन्निगृह्य त्वं रुद्रायोपजिहीर्षसि ॥ ९
अस्मांस्तदेनोपगच्छेत्कृतं बार्हद्रथ त्वया ।
वयं हि शक्ता धर्मस्य रक्षणे धर्मचारिणः ॥ १०
'तस्मादद्योपगच्छामस्तव बार्हद्रथान्तिकम् ।'
मनुष्याणां समालम्भो न च दृष्टः कदाचन ।
स कथं मानुषैर्देवं यष्टुमिच्छसि शङ्करम् ॥ ११
सवर्णो हि सवर्णानां पशुसंज्ञां करिष्यसि ।
कोऽन्य एवं यथा हि त्वं जरासन्ध वृथामतिः ॥ १२
यस्यां यस्यामवस्थायां यद्यत्कर्म करोति यः ।
तस्यां तस्यामवस्थायां तत्फलं समवाप्नुयात् ॥ १३
ते त्वां ज्ञातिक्षयकरं वयमार्तानुसारिणः ।
ज्ञातिवृद्धिनिमित्तार्थं विनिहन्तुमिहागताः ॥ १४
नास्ति लोके पुमानन्यः क्षत्रियेष्विति चैव तत् ।
मन्यसे स च ते राजन्सुमहान्बुद्धिविप्लवः ॥ १५
को हि जानन्नभिजनमात्मवान्क्षत्रियो नृप ।
नाविशेत्स्वर्गमतुलं रणानन्तरमव्ययम् ॥ १६
स्वर्गं ह्येव समास्थाय रणयज्ञेषु दीक्षिताः ।
जयन्ति क्षत्रिया लोकांस्तद्विद्धि मनुजर्षभ ॥ १७
स्वर्गयोनिर्महद्ब्रह्म स्वर्गयोनिर्महद्यशः ।
स्वर्गं योनिस्तपो युद्धे मृत्युः सोऽव्यभिचारवान् ॥
एष ह्यैन्द्रो वैजयन्तो गुणैर्नित्यं समाहितः ।
येनासुरान्पराजित्य जगत्पाति शतक्रतुः ॥ १९
स्वर्गमार्गाय कस्य स्याद्विग्रहो वै यथा तव ।
मागधैर्विपुलैः सैन्यैर्बाहुल्यबलदर्पितः ॥ २०
माऽवमंस्थाः परान्राजन्नास्ति वीर्यं नरे नरे ।
समं तेजस्त्वया चैव विशिष्टं वा नरेश्वर ॥ २१
यावदेतदसंबुद्धं तावदेव भवेत्तव ।
विषह्यमेतदस्माकमतो राजन्ब्रवीमि ते ॥ २२
जहि त्वं सदृशेष्वेव मानं दर्पं च मागध ।
मा गमः ससुतामात्यः सबलश्च यमक्षयम् ॥ २३
दम्भोद्भवः कार्तवीर्य उत्तरश्च बृहद्रथः ।
श्रेयसो ह्यवमत्येह विनेशुः सबला नृपाः ॥ २४
युयुक्षमाणास्त्वत्तो हि न वयं ब्राह्मणा ध्रुवम् ।
शौरिरस्मि हृषीकेशो नृवीरौ पाण्डवाविमौ ।
अनयोर्मातुलेयं च कृष्णं मां विद्धि ते रिपुम् ॥ २५

सवर्णो हि सवर्णानां कथं कुर्याद्धि हिंसनम् । यो न स्यात्त्वमिवानार्यो जरासन्ध वृथामतिः ॥ इति क. घ. पाठः ॥ १२ ॥

युयुक्षमाणाः कपटेन संहर्तुमिच्छन्तः ॥ २५ ॥

त्वामाह्वयामहे राजन्स्थिरो युध्यस्व मागध ।
मुञ्च वा नृपतीन्सर्वान् गच्छ वा त्वं यमक्षयम् ॥२६
'वैशंपायन उवाच ।
एतच्छ्रुत्वा जरासन्धः क्रुद्धो वचनमब्रवीत् ॥ २७
नाहं कंसः प्रलम्बो वा न बाणो न च मुष्टिकः ।
नरको नेन्द्रतपनो न केशी न च पूतना ॥ २८
न कालयवनो वाऽपि ये त्वया निहता युधि ।
त्वं तु गोपकुलोत्पन्नो जातिं वै पौर्विकीं स्मर॥२९
योऽस्मद्भयादतिक्रम्य सागरानूपमाश्रितः ।
जन्मभूमिं परित्यज्य मधुरां प्राकृतो यथा ॥ ३०
सोऽधुना कत्थसे शौरे शरदीव यथा घनः ।
अद्यानृण्यं करिष्यामि भोजराजस्य धीमतः ॥३१
जामातुरौग्रसेनस्य त्वां निहत्याद्य माधव ।
चिरकाङ्क्षितो मे सङ्ग्रामस्त्वां हन्तुं ससुहृद्गणम्॥३२
दिष्ट्या मे सफलो यत्नः कृतो देवैः सवासवैः ।
क्लीबाविमौ च गोविन्द भीमसेनार्जुनावुभौ॥३३
हिंस्यामि युधि विक्रम्य सिंहः क्षुद्रमृगाविव ।
वैशंपायन उवाच ।
तस्य रोषाभिभूतस्य जरासन्धस्य गर्जतः ॥ ३४
सर्वभूतानि वित्रेसुर्ये तत्रासन्समागताः ।
श्रीभगवानुवाच ।
किं गर्जसि जरासन्ध कर्मणा तत्समाचर ॥ ३५
मम निर्देशकर्तृभ्यां पाण्डवाभ्यां नृपाधम ।
सामात्यं ससुतं चाद्य घातयिष्याम्यहं रणे ।
न कथंचन जीवन्वै प्रवेक्ष्यसि पुरोत्तमम् ॥' ३६
जरासन्ध उवाच ।
नाजितान्वै नरपतीनहमादद्मि कांश्चन ।
अजितः पर्यवस्थाता कोऽत्र यो न मया जितः॥३७
क्षत्रियस्यैतदेवाहुर्धर्म्यं कृष्णोपजीवनम् ।
विक्रम्य वशमानीय कामतो यत्समाचरेत्॥३८
देवतार्थमुपाहृत्य राज्ञः कृष्ण कथं भयात् ।
अहमद्य विमुच्येयं क्षात्रं व्रतमनुस्मरन् ॥ ३९
सैन्यं सैन्येन व्यूढेन एक एकेन वा पुनः ।
द्वाभ्यां त्रिभिर्वा योत्स्येऽहं युगपत्पृथगेव वा॥४०
वैशंपायन उवाच ।
एवमुक्त्वा जरासन्धः सहदेवाभिषेचनम् ।
आज्ञापयत्तदा राजा युयुत्सुर्भीमकर्मभिः ॥ ४१
स तु सेनापतिं राजा सस्मार भरतर्षभ ।
कौशिकं चित्रसेनं च तस्मिन्युद्ध उपस्थिते ॥ ४२
ययोस्ते नामनी राजन्हंसेति डिबिकेति च ।
पूर्वं संकथिते पुंभिर्नृलोके लोकसत्कृते ॥ ४३
तं तु राजन्विभुः शौरी राजानं बलिनां वरम् ।
स्मृत्वा पुरुषशार्दूलः शार्दूलसमविक्रमम् ॥ ४४
सत्यसन्धो जरासन्धं भुवि भीमपराक्रमम् ।
भागमन्यस्य निर्दिष्टमवध्यं मधुभिर्मृधे ॥ ४५
नात्मनाऽऽत्मवतां मुख्य इयेष मधुसूदनः ।
ब्राह्मीमाज्ञां पुरस्कृत्य हन्तुं हलधरानुजः ॥ ४६

॥ इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः ॥ २३ ॥

कृष्णजरासन्धयोर्द्वेषकारणकथनम् ॥ १ ॥

जनमेजय उवाच ।
किमर्थं वैरिणावास्तामुभौ तौ कृष्णमागधौ ।
कथं च निर्जितः सङ्ख्ये जरासन्धेन माधवः ॥ १
कश्च कंसो मागधस्य यस्य हेतोः स वैरवान् ।
एतदाचक्ष्व मे सर्वं वैशंपायन तत्वतः ॥ २
वैशंपायन उवाच ।
यादवानामन्ववाये वसुदेवो महामतिः ।
उदपद्यत वार्ष्णेयो ह्युग्रसेनस्य मन्त्रभृत् ॥ ३
उग्रसेनस्य कंसस्तु बभूव बलवान्सुतः ।
ज्येष्ठो बहूनां कौरव्य सर्वशस्त्रविशारदः ॥ ४

मधुभिर्यादवैः । ४५ वध्य मत्वा तदाच्युतः इति पाठः ॥ ४५ ॥

द्वाविंशोऽध्यायः ॥ २२ ॥

जरासन्धस्य दुहिता तस्य भार्याऽतिविश्रुता ।
राज्यशुल्केन दत्ता सा जरासन्धेन धीमता ॥ ५
तदर्थमुग्रसेनस्य मधुरायां सुतस्तदा ।
अभिषिक्तस्तदाऽमात्यैः स वै तीव्रपराक्रमः ॥ ६
ऐश्वर्यबलमत्तस्तु स तदा बलमोहितः ।
निगृह्य पितरं भुङ्क्ते तद्राज्यं मन्त्रिभिः सह ॥ ७
वसुदेवस्य तत्कृत्यं न शृणोति स मन्दधीः ।
न तेन सह तद्राज्यं धर्मतः पर्यपालयत् ॥ ८
प्रीतिमान्स तु दैत्येन्द्रो वसुदेवस्य देवकीम् ।
उवाह भार्यां स तदा दुहिता देवकस्य या ॥ ९
तस्यामुद्वाह्यमानायां रथेन जनमेजय ।
उपारुरोह वार्ष्णेयं कंसो भूमिपतिस्तदा ॥ १०
ततोऽन्तरिक्षे वागासीद्देवदूतस्य कस्यचित् ।
वसुदेवश्च शुश्राव तां वाचं पार्थिवश्च सः ॥ ११
यामेतां वहमानोऽद्य कंसोद्वहसि देवकीम् ।
अस्या यश्चाष्टमो गर्भः स ते मृत्युर्भविष्यति॥१२
सोऽवतीर्य ततो राजा खड्गमुद्धृत्य निर्मलम् ।
इयेष तस्या मूर्धानं छेत्तुं परमदुर्मतिः ॥ १३
सान्त्वयन्स तदा कंसं हसन्क्रोधवशानुगम् ।
राजन्ननुनयामास वसुदेवो महामतिः ॥ १४
अहिंस्यां प्रमदामाहुः सर्वधर्मेषु पार्थिव ।
अकस्मादबलां नारीं हन्तासीमामनागसीम्॥१५
यच्च तेऽत्र भयं राजञ्शक्यते बाधितुं त्वया ।
इयं शक्या पालयितुं समयं चैव रक्षितुम् ॥ १६
अस्यास्त्वमष्टमं गर्भं जातमात्रं महीपते ।
विध्वंसय तदा प्राप्तमेवं परिहृतं भवेत् ॥ १७
एवं स राजा कथितो वसुदेवेन भारत ।
तस्य तद्वचनं चक्रे शूरसेनपतिस्तदा ॥ १८
ततस्तस्यां संबभूवुः कुमाराः सूर्यवर्चसः ।
जाताञ्जातांस्तु तान्सर्वाञ्जघान मधुरेश्वरः ॥ १९
अथ तस्यां समभवद्बलदेवस्तु सत्तमः ।
याम्यया मायया तं तु यमो राजा विशांपते॥२०
देवक्या गर्भमतुलं रोहिण्या जठरेऽक्षिपत् ।
आकृष्य कर्षणात्सम्यक्संकर्षण इति स्मृतः॥२१
बलश्रेष्ठतया तस्य बलदेव इति स्मृतः ।
पुनस्तस्यां समभवदष्टमो मधुसूदनः ॥ २२
तस्य गर्भस्य रक्षां तु स चक्रेऽभ्यधिकं नृपः ।
ततः काले रक्षणार्थं वसुदेवस्य तत्वतः ॥ २३
उग्रः प्रयुक्तः कंसेन सचिवः क्रूरकर्मकृत् ॥ २४
जातमात्रं वासुदेवमथाकृष्य पिता ततः ।
उपजह्रे परिक्रीतां सुतां गोपस्य कस्यचित् ॥२५
अमृष्यमाणस्तं शब्दं देवदूतस्य पार्थिवः ।
वासुदेवं महात्मानमर्पयामास गोकुले ॥ २६
वासुदेवोपि गोपेषु ववृधेऽब्जमिवाम्भसि ।
अज्ञायमानः कंसेन गूढोऽग्निरिव दारुषु ॥ २७
विप्रचक्रे तदा सर्वान्वल्लवान्मधुरेश्वरः ।
वर्धमानो महाबाहुस्तेजोबलसमन्वितः ॥ २८
ततस्ते क्लिश्यमानास्तु पुण्डरीकाक्षमच्युतम् ।
भयेन कामादपरे गणशः पर्यवारयन् ॥ २९
स तु लब्ध्वा बलं राजन्नुग्रसेनस्य संमतः ।
वसुदेवात्मजः सर्वैर्भ्रातृभिः सहितं पुनः ॥ ३०
निर्जित्य युधि भोजेन्द्रं हत्वा कंसं महाबलः ।
अभ्यषिञ्चत्ततो राज्य उग्रसेनं विशांपते ॥ ३१
ततः श्रुत्वा जरासन्धो माधवेन हतं युधि ।
शूरसेनाधिपं चक्रे कंसपुत्रं तदा नृप ॥ ३२
ससैन्यं महदुत्थाप्य वासुदेवं प्रगृह्य च ।
अभ्यषिञ्चत्सुतं तत्र सुताया जनमेजय ॥ ३३
उग्रसेनं च वृष्णींश्च महाबलसमन्वितः ।
स तत्र विप्रकुरुते जरासन्धः प्रतापवान् ॥ ३४
एतद्वैरं कौरवेय जरासन्धस्य माधवे ।
आशासितार्थे राजेन्द्र संरुरोध विनिर्जितान् ३५
पार्थिवैस्तैर्नृपतिभिर्यक्ष्यमाणः समृद्धिमान् ।
देवश्रेष्ठं महादेवं कृत्तिवासं त्रियम्बकम् ॥ ३६
एतत्सर्वं यथावृत्तं कथितं भरतर्षभ ।
यथा तु स हतो राजा भीमसेनेन तच्छृणु ॥३७

॥ इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः ॥ २४ ॥

भीमजरासन्धयोः स्वस्त्ययनपूर्वकं युद्धारम्भः ॥ १ ॥ श्रीकृष्णप्रोत्साहितस्य भीमस्य जरासन्धवधोद्यमः ॥ २ ॥

ततस्तं निश्चितात्मानं युद्धाय यदुनन्दनः ।
उवाच वाग्मी राजानं जरासन्धमधोक्षजः ॥ १
त्रयाणां केन ते राजन्योद्धुमुत्सहते मनः ।
अस्मदन्यतमेनेह सज्जीभवतु को युधि ॥ २
एवमुक्तः स नृपतिर्युद्धं वव्रे महाद्युतिः ।
जरासन्धस्ततो राजा भीमसेनेन मागधः ॥ ३
'धारयन्तं गदां दिव्यां बलं श्रुत्वा च निर्वृतः ।
अर्जुनं वासुदेवं च वर्जयित्वा स मागधः ॥ ४
मत्वा देवं गोप इति बालोऽर्जुन इति स्म ह ।'
आदाय रोचनां माल्यं मङ्गल्यान्यपराणि च ॥ ५
धारयन्नगदान्मुख्यान्निर्वृतीर्वेदनानि च ।
उपतस्थे जरासन्धं युयुत्सुं वै पुरोहितः ॥ ६
कृतस्वस्त्ययनो राजा ब्राह्मणेन यशस्विना ।
समनह्यज्जरासन्धः क्षात्रं धर्ममनुस्मरन् ॥ ७
अवमुच्य किरीटं स केशान्समनुमृज्य च ।
उदतिष्ठज्जरासन्धो वेलातिग इवार्णवः ॥ ८
उवाच मतिमान्राजा भीमं भीमपराक्रमः ।
भीम योत्स्ये त्वया सार्धं श्रेयसा निर्जितं वरम् ॥९
एवमुक्त्वा जरासन्धो भीमसेनमरिन्दमः ।
प्रत्युद्ययौ महातेजाः शक्रं बल इवासुरः ॥ १०
ततः संमन्त्र्य कृष्णेन कृतस्वस्त्ययनो बली ।
भीमसेनो जरासन्धमाससाद युयुत्सया ॥ ११
ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः ।
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ॥ १२
करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम् ।
कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः ॥१३
स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः ।
अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो ॥१४
चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः ।
गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम् ॥१५
बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ ।
उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ ॥ १६
करसंपीडनं कृत्वा गर्जन्तौ वारणाविव ।
नर्दन्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ ॥ १७
तलेनाहन्यमानौ तु अन्योन्यं कृतवीक्षणौ ।
सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यताम् ॥१८
अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि ।
आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः ॥ १९
उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ ।
अधो हस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत् ॥२०
सर्वातिक्रान्तमर्यादं पृष्ठभङ्गं च चक्रतुः ।
संपूर्णमूर्च्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः ॥ २१
तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम् ।
एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम् ॥ २२
तयोर्युद्धं ततो द्रष्टुं समेताः पुरवासिनः ।
ब्राह्मणा वणिजश्चैव क्षत्रियाश्च सहस्रशः ॥ २३
शूद्राश्च नरशार्दूल स्त्रियो वृद्धाश्च सर्वशः ।
निरन्तरमभूत्तत्र जनौघैरभिसंवृतम् ॥ २४
तयोरथ भुजाघातान्निग्रहप्रग्रहात्तथा ।
आसीत्सुभीमसंपातो वज्रपर्वतयोरिव ॥ २५
उभौ परमसंहृष्टौ बलेन बलिनां वरौ ।
अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ॥ २६
'शिरोभिरिव तौ मेषौ वृक्षैरिव निशाचरौ ।
पदैरिव शुभावश्वौ तुण्डाभ्यां तित्तिरी इव ॥'२७
तद्भीममुत्सार्य जनं युद्धमासीदुपह्वरे ।
बलिनोः संयुगे राजन्वृत्रवासवयोरिव ॥ २८
प्रकर्षणाकर्षणाभ्यामनुकर्षविकर्षणैः ।
आचकर्षतुरन्योन्यं जानुभिश्चावजघ्नतुः ॥ २९
ततः शब्देन महता भर्त्सयन्तौ परस्परम् ।
पाषाणसंघातनिभैः प्रहारैरभिजघ्नतुः ॥ ३०

---

निर्वृतीर्वेदनानि च दुःखमूर्छयोः काले सुखसंज्ञाकराणि ॥६॥ कक्षैः दोर्मूलैः ॥ १३ ॥ ग्रथिताङ्गुलिभ्यां हस्ताभ्यां परशिरसः पीडनं पूर्णकुम्भः ॥ १६ ॥ तक्षवन्तौ गात्रसङ्कोचवन्तौ ॥२०॥

चतुर्विंशोऽध्यायः ॥ २४ ॥

'ततो भीमं जरासन्धो जघानोरसि मुष्टिना ।
भीमोपि तं जरासन्धं वक्षस्यभिजघान ह ॥' ३१
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥ ३२
कार्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि ।
तदा तद्युद्धमभवद्दिनानि दश पञ्च च ।
अनाहारं दिवारात्रमविश्रान्तमवर्तत ॥ ३३
तद्वृत्तं तु त्रयोदश्यां समवेतं महात्मनोः ।
चतुर्दश्यां निशायां तु निवृत्तो मागधः क्लमात् ३४
तं राजानं तथा क्लान्तं दृष्ट्वा राजञ्जनार्दनः ।
उवाच भीमकर्माणं भीमं संबोधयन्निव ॥ ३५
क्लान्तः शत्रुर्हि कौन्तेय शक्यः पीडयितुं रणे ।
पीड्यमानो हि कार्त्स्न्येन जह्याज्जीवितमात्मनः ३६
तस्मात्तेऽद्यैव कौन्तेय पीडनीयो जनाधिपः ।
सममेतेन युध्यस्व बाहुभ्यां भरतर्षभ ॥ ३७
वैशंपायन उवाच ।
एवमुक्तः स कृष्णेन पाण्डवः परवीरहा ।
जरासन्धस्य तद्रन्ध्रं ज्ञात्वा चक्रे मतिं वधे ॥ ३८
ततस्तमजितं जेतुं जरासन्धं वृकोदरः ।
संरम्भाद्बलिनां श्रेष्ठो जग्राह कुरुनन्दनः ॥ ३९

॥ इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ॥ २५ ॥

जरासन्धवधः ॥ १ ॥ जरासन्धेन बन्दीकृतानां राज्ञां कृष्णेन मोचनम् ॥ २ ॥ मोचितै राजभिः कृष्णाय रत्नादिदानम् ॥ ३ ॥ कृष्णानुज्ञया जरासन्धपुत्रेण सहदेवेन पितुरौर्ध्वदैहिककरणम् ॥ ४ ॥ सहदेवं राज्येऽभिषिच्य श्रीकृष्णभीमार्जुनानामिन्द्रप्रस्थगमनम् ॥ ५ ॥ जरासन्धवधश्रवणहृष्टेन युधिष्ठिरेण पूजितस्य कृष्णस्य द्वारकागमनम् ॥ ६ ॥

वैशंपायन उवाच ।
भीमसेनस्ततः कृष्णमुवाच यदुनन्दनम् ।
बुद्धिमास्थाय विपुलां जरासन्धवधेप्सया ॥ १
नायं पापो मया कृष्ण युक्तः स्यादनुरोधितुम् ।
प्रायेण यदुशार्दूल बान्धवक्षयकृत्तव ॥ २
एवमुक्तस्ततः कृष्णः प्रत्युवाच वृकोदरम् ।
त्वरयन्पुरुषव्याघ्रो जरासन्धवधेप्सया ॥ ३
यत्ते दैवं परं सत्वं यच्च ते मातरिश्वनः ।
बलं भीम जरासन्धे दर्शयाशु तदद्य वै ॥ ४
'तवैष वध्यो दुर्बुद्धिर्जरासन्धो महारथः ।
इत्यन्तरिक्षे त्वश्रौषं यदा वायुरवाप्यते ॥ ५
गोमन्ते पर्वतश्रेष्ठे येनैष परिमोक्षितः ।
बलदेवबलं प्राप्य कोऽन्यो जीवेत्तु मागधात् ॥ ६
तदस्य मृत्युर्विहितस्त्वदृते न महाबल ।
वायुं चिन्त्य महाबाहो जहीमं मगधाधिपम् ॥ ७
वैशंपायन उवाच ।
एवमुक्तस्ततो भीमो मनसाऽऽचिन्त्य मारुतम् ।
जनार्दनं नमस्कृत्य परिष्वज्य च फल्गुनम्' ॥८
प्रभञ्जनबलाविष्टो जरासन्धमरिन्दमः ।
उत्क्षिप्य भ्रामयामास बलवन्तं महाबलः ॥ ९
भ्रामयित्वा शतगुणं जानुभ्यां भरतर्षभ ।
बभञ्ज पृष्ठं संक्षिप्य निष्पिष्य विननाद च ॥ १०
करे गृहीत्वा चरणं द्विधा चक्रे महाबलः ।
तस्य निष्पिष्यमाणस्य पाण्डवस्य च गर्जतः ॥११
अभवत्तुमुलो नादः सर्वप्राणिभयंकरः ।
वित्रेसुर्मागधाः सर्वे स्त्रीणां गर्भाश्च सुस्रुवुः ॥ १२
भीमसेनस्य नादेन जरासन्धस्य चैव ह ।
किं नु स्याद्धिमवान्भिन्नः किंनुस्विद्दीर्यते मही १३
इति वै मागधा जज्ञुर्भीमसेनस्य निस्वनात् ।
'ततस्तु भगवान्कृष्णो जरासन्धजिघांसया ॥ १४
भीमसेनं समालोक्य नलं जग्राह पाणिना ।
द्विधा चिच्छेद वै तत्तु जरासन्धवधं प्रति ॥ १५
ततस्त्वाज्ञाय तस्यैव पादमुत्क्षिप्य मारुतिः ।
द्विधा बभञ्ज तद्गात्रं प्राक्षिपद्विननाद च ॥ १६

अवाप्यते प्राप्तः ॥ ५ ॥ एवमुक्तस्तदा भीमो जरासन्धमिति झ. पाठः ॥ ८ ॥ नलं इरिणनामकं तृणविशेषं ॥ १५ ॥

पुनः सन्धाय तु तदा जरासन्धः प्रतापवान् ।
भीमेन च समागम्य बाहुयुद्धं चकार ह ॥ १७
तयोः समभवद्युद्धं तुमुलं रोमहर्षणम् ।
सर्वलोकक्षयकरं सर्वभूतभयावहम् ॥ १८
पुनः कृष्णस्तमिरिणं द्विधा विच्छिद्य माधवः ।
व्यत्यस्य प्राक्षिपत्तत्तु जरासन्धवधेप्सया ॥ १९
भीमसेनस्तदा ज्ञात्वा निर्बिभेद च मागधम् ।
द्विधा व्यत्यस्य पादेन प्राक्षिपच्च ननाद ह ॥२०
शुष्कमांसास्थिमेदस्त्वग्भिन्नमस्तिष्कपिण्डकः ।
शवभूतस्तदा राजन्पिण्डीकृत इवाबभौ ॥' २१
ततो राज्ञः कुलद्वारि प्रसुप्तमिव तं नृपम् ।
रात्रौ गतासुमुत्सृज्य निश्चक्रमुररिन्दमाः ॥ २२
जरासन्धरथं कृष्णो योजयित्वा पताकिनम् ।
आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान् २३
ते वै रत्नभुजं कृष्णं रत्नार्हं पृथिवीश्वराः ।
राजानं चक्रुरासाद्य मोक्षिता महतो भयात् ॥२४
अक्षतः शस्त्रसंपन्नो जितारिः सह राजभिः ।
रथमास्थाय तं दिव्यं निर्जगाम गिरिव्रजात् ॥२५
यः स सोदर्यवान्नाम द्वियोधी कृष्णसारथिः ।
अभ्यासघाती सन्दृश्यो दुर्जयः सर्वराजभिः ॥२६
भीमार्जुनाभ्यां योधाभ्यामास्थितः कृष्णसारथिः।
शुशुभे रथवर्योऽसौ दुर्जयः सर्वधन्विभिः ॥ २७
शक्रविष्णू हि सङ्ग्रामे चेरतुस्तारकामये ।
रथेन तेन वै कृष्ण उपारुह्य ययौ तदा ॥ २८
'एवमेतौ महाबाहू तदा दुष्करकारिणौ ।
कृष्णप्रणीतौ लोकेऽस्मिन्रथे को द्रष्टुमर्हति ॥ २९
इत्यवोचन्व्रजन्तं तं जरासन्धपुरालयाः ।
वासुदेवं नरश्रेष्ठं युक्तं वातजवैर्हयैः ॥' ३०
तप्तचामीकराभेण किङ्किणीजालमालिना ।
मेघनिर्घोषनादेन जैत्रेणामित्रघातिना ॥ ३१
येन शक्रो दानवानां जघान नवतीर्नव ।
तं प्राप्य समहृष्यन्त रथं ते पुरुषर्षभाः ॥ ३२
ततः कृष्णं महाबाहुं भ्रातृभ्यां सहितं तदा ।
रथस्थं मागधा दृष्ट्वा समपद्यन्त विस्मिताः ॥३३
हयैर्दिव्यैः समायुक्तो रथो वायुसमो जवे ।
अधिष्ठितः स शुशुभे कृष्णेनातीव भारत ॥ ३४
असङ्गो देवविहितस्तस्मिन्रथवरे ध्वजः ।
योजनाद्ददृशे श्रीमानिन्द्रायुधसमप्रभः ॥ ३५
चिन्तयामास कृष्णोऽथ गरुत्मन्तं स चाभ्ययात्।
क्षणे तस्मिन्स तेनासीच्चैत्यवृक्ष इवोत्थितः ॥ ३६
व्यादितास्यैर्महानादैः सह भूतैर्ध्वजालयैः ।
तस्मिन्रथवरे तस्थौ गरुत्मान्पन्नगाशनः ॥ ३७
दुर्निरीक्ष्यो हि भूतानां तेजसाऽभ्यधिकं बभौ।
आदित्य इव मध्याह्ने सहस्रकिरणावृतः ॥ ३८
न स सज्जति वृक्षेषु शस्त्रैश्चापि न रिष्यते ।
दिव्यो ध्वजवरो राजन्दृश्यते चेह मानुषैः ॥३९
तमास्थाय रथं दिव्यं पर्जन्यसमनिःस्वनम् ।
निर्ययौ पुरुषव्याघ्रः पाण्डवाभ्यां सहाच्युतः ४०
यं लेभे वासवाद्राजा वसुस्तस्माद्बृहद्रथः ।
बृहद्रथात्क्रमेणैव प्राप्तो बार्हद्रथो रथम् ॥ ४१
स निर्याय महाबाहुः पुण्डरीकेक्षणस्ततः ।
गिरिव्रजाद्बहिस्तस्थौ समदेशे महायशाः ॥ ४२
तत्रैनं नागराः सर्वे सत्कारेणाभ्ययुस्तदा ।
ब्राह्मणप्रमुखा राजन्विधिदृष्टेन कर्मणा ॥ ४३
बन्धनाद्विप्रमुक्ताश्च राजानो मधुसूदनम् ।
पूजयामासुरूचुश्च स्तुतिपूर्वमिदं वचः ॥ ४४
नैतच्चित्रं महाबाहो त्वयि देवकिनन्दने ।
भीमार्जुनबलोपेते धर्मस्य प्रतिपालनम् ॥ ४५
जरासन्धह्रदे घोरे दुःखपङ्के निमज्जताम् ।
राज्ञां समभ्युद्धरणं यदिदं कृतमद्य वै ॥ ४६
विष्णो समवसन्नानां गिरिदुर्गे सुदारुणे ।
दिष्ट्या मोक्षाद्यशो दीप्तमाप्तं ते यदुनन्दन ॥४७
किं कुर्मः पुरुषव्याघ्र शाधि नः प्रणतिस्थितान्।
कृतमित्येव तद्विद्धि नृपैर्यद्यपि दुष्करम् ॥ ४८
वैशंपायन उवाच ।
तानुवाच हृषीकेशः समाश्वास्य महामनाः ।
युधिष्ठिरो राजसूयं क्रतुमाहर्तुमिच्छति ॥ ४९

कुलद्वारि गृहद्वारि ॥ २२ ॥ असंगो रथस्पर्शहीनः ॥ ३५ ॥

तस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
सर्वैर्भवद्भिर्विज्ञाय साहाय्यं क्रियतामिति ॥ ५०
ततः सुप्रीतमनसस्ते नृपा नृपसत्तम ।
तथेत्येवाब्रुवन्सर्वे प्रतिगृह्यास्य तां गिरम् ॥ ५१
रत्नभाजं च दाशार्हं चक्रुस्ते पृथिवीश्वराः ।
कृच्छ्राज्जग्राह गोविन्दस्तेषां तदनुकम्पया ॥ ५२
जरासन्धात्मजश्चैव सहदेवो महामनाः ।
निर्ययौ सजनामात्यः पुरस्कृत्य पुरोहितम् ॥५३
स नीचैः प्रणतो भूत्वा बहुरत्नपुरोगमः ।
सहदेवो नृणां देवं वासुदेवमुपस्थितः ॥ ५४
भयार्ताय ततस्तस्मै कृष्णो दत्त्वाऽभयं तदा ।
आददेऽस्य महार्हाणि रत्नानि पुरुषोत्तमः ॥ ५५
'सहदेवँ उवाच ।
यत्कृतं पुरुषव्याघ्र मम पित्रा जनार्दन ।
तत्ते हृदि महाबाहो न कार्यं पुरुषोत्तम ॥ ५६
त्वां प्रपन्नोऽस्मि गोविन्द प्रसादं कुरु मे प्रभो ।
पितुरिच्छामि संस्कारं कर्तुं देवकिनन्दन ॥ ५७
त्वत्तोऽभ्यनुज्ञां संप्राप्य भीमसेनात्तथार्जुनात् ।
निर्भयो विचरिष्यामि यथाकामं यथासुखम् ॥५८
वैशंपायन उवाच ।
एवं विज्ञाप्यमानस्य सहदेवस्य मारिष ।
प्रहृष्टो देवकीपुत्रः पाण्डवौ च महारथौ ॥ ५९
क्रियतां संस्क्रिया राजन्पितुस्त इति चाब्रुवन् ।
तच्छ्रुत्वा वासुदेवस्य पार्थयोश्च स मागधः ॥६०
प्रविश्य नगरं तूर्णं सह मन्त्रिभिरच्युत ।
चितां चन्दनकाष्ठैश्च कालेयसरलैस्तथा ॥ ६१
कालागरुसुगन्धैश्च तैलैश्च विविधैरपि ।
घृतधाराशतैश्चैव सुमनोभिश्च भारत ॥ ६२
समन्तादेव कीर्यन्तोऽदहन्त मगधाधिपम् ।
उदकं तस्य चक्रेऽथ सहदेवः सहानुजः ॥ ६३
कृत्वा पितुः स्वर्गगतिं निर्ययौ यत्र केशवः ।
पाण्डवौ च महाभागौ भीमसेनार्जुनावुभौ ॥६४
स प्रह्वः प्राञ्जलिर्भूत्वा व्यज्ञापयत माधवम् ।
सहदेव उवाच ।
इमे रत्नानि भूरीणि गोजाविमहिषादयः ॥ ६५
हस्तिनोऽश्वाश्च गोविन्द वासांसि विविधानि च ।
दीयतां धर्मराजाय यथा वा मन्यते भवान् ॥६६
वैशंपायन उवाच ।
भयार्ताय ततस्तस्मै कृत्वा कृष्णोऽभयं तदा ।
अभ्यषिञ्चत राजानं सहदेवं जनार्दनः ॥ ६७
मागधानां महीपालं जरासन्धात्मजं तदा ।
आददे च महार्हाणि रत्नानि पुरुषोत्तमः ॥ ६८
गत्वैकत्वं स कृष्णेन पार्थाभ्यां चापि सत्कृतः ।
विवेश मतिमान्राजा पुनर्बार्हद्रथं पुरम् ॥ ६९
पार्थाभ्यां सहितः कृष्णः सर्वैश्च वसुधाधिपैः ।
यथावयः समागम्य विससर्ज नराधिपान् ॥७०
विसृज्य सर्वान्नृपतीन्राजसूये महात्मभिः ।
आगन्तव्यं भवद्भिश्च धर्मराजप्रियेप्सुभिः ॥ ७१
एवमुक्ता माधवेन सर्वे ते वसुधाधिपाः ।
एवमस्त्विति चाप्युक्त्वा समेताः परया मुदा ७२
भीमार्जुनहृषीकेशैः प्रहृष्टाः प्रययुस्तदा ।
रत्नान्यादाय भूरीणि ज्वलन्तो रिपुसूदनाः ॥'७३
कृष्णस्तु सह पार्थाभ्यां श्रिया परमया युतः ।
रत्नान्यादाय भूरीणि प्रययौ पुरुषर्षभः ॥ ७४
इन्द्रप्रस्थमुपागम्य पाण्डवाभ्यां सहाच्युतः ।
समेत्य धर्मराजानं प्रीयमाणोऽभ्यभाषत ॥ ७५
दिष्ट्या भीमेन बलवाञ्जरासन्धो निपातितः ।
राजानो मोक्षिताश्चेमे बन्धनान्नृपसत्तम ॥ ७६
दिष्ट्या कुशलिनौ चेमौ भीमसेनधनञ्जयौ ।
पुनः स्वनगरं प्राप्तावक्षताविति भारत ॥ ७७
ततो युधिष्ठिरः कृष्णं पूजयित्वा यथार्हतः ।
भीमसेनार्जुनौ चैव प्रहृष्टः परिषस्वजे ॥ ७८

* एतदादि ७३ पर्यन्तानां श्लोकानां स्थाने झ. पुस्तके
अभ्यषिञ्चत तत्रैव जरासन्धात्मजं मुदा ।
गत्वैकत्वं च कृष्णेन पार्थाभ्यां चैव सत्कृतः ॥१॥
विवेश राजा द्युतिमान्बार्हद्रथपुरं नृप ।
अभिषिक्तो महाबाहुर्जारासन्धिर्महात्मभिः ॥२॥
इत्येतौ द्वावेव श्लोकौ वर्तेते ॥

ततः क्षीणे जरासन्धे भ्रातृभ्यां विहितं जयम् ।
अजातशत्रुरासाद्य मुमुदे भ्रातृभिः सह ॥ ७९
'हृष्टश्च धर्मराड्वाक्यं जनार्दनमभाषत ।
त्वां प्राप्य पुरुषव्याघ्र भीमसेनेन पातितः ॥८०
मागधोऽसौ बलोन्मत्तो जरासन्धः प्रतापवान् ।
राजसूयं क्रतुश्रेष्ठं प्राप्स्यामि विगतज्वरः ॥ ८१
त्वद्बुद्धिबलमाश्रित्य यागार्होऽस्मि जनार्दन ।
पीतं पृथिव्याः क्रुद्धेन यशस्ते पुरुषोत्तम ॥ ८२
जरासन्धवधेनैव प्राप्तास्ते विपुलाः श्रियः ॥
वैशंपायन उवाच ।
एवं संभाष्य कौन्तेयः प्रादाद्रथवरं प्रभोः ॥८३
प्रतिगृह्य तु गोविन्दो जरासन्धस्य तं रथम् ॥८४
प्रहृष्टस्तस्य मुमुदे फल्गुनेन जनार्दनः ।
प्रीतिमानभवद्राजन्धर्मराजपुरस्कृतः ॥' ८५
यथावयः समागम्य भ्रातृभिः सह पाण्डवः ।
सत्कृत्य पूजयित्वा च विससर्ज नराधिपान् ॥८६
युधिष्ठिराभ्यनुज्ञातास्ते नृपा हृष्टमानसाः ।
जग्मुः स्वदेशांस्त्वरिता यानैरुच्चावचैस्ततः ॥८७
एवं पुरुषशार्दूलो महाबुद्धिर्जनार्दनः ।
पाण्डवैर्घातयामास जरासन्धमरिं तदा ॥ ८८
घातयित्वा जरासन्धं बुद्धिपूर्वमरिंदमः ।
धर्मराजमनुज्ञाप्य पृथां कृष्णां च भारत ॥ ८९
सुभद्रां भीमसेनं च फाल्गुनं यमजौ तथा ।
धौम्यमामन्त्रयित्वा च प्रययौ स्वां पुरीं प्रति ॥९०
'पाण्डवैरनुधावद्भिर्युधिष्ठिरपुरोगमैः ।
हर्षेण महता युक्तः प्राप्य चानुत्तमं यशः ।
जगाम हृष्टः कृष्णस्तु पुनर्द्वारवतीं पुरीम् ॥' ९१
तेनैव रथमुख्येन मनसस्तुल्यगामिना ।
धर्मराजविसृष्टेन दिव्येनानादयन्दिशः ॥ ९२
ततो युधिष्ठिरमुखाः पाण्डवा भरतर्षभ ।
प्रदक्षिणमकुर्वन्त कृष्णमक्लिष्टकारिणम् ॥ ९३
ततो गते भगवति कृष्णे देवकिनन्दने ।
जयं लब्ध्वा सुविपुलं राज्ञां दत्त्वाऽभयं तदा ॥९४
संवर्धितं यशो भूयः कर्मणा तेन भारत ।
द्रौपद्याः पाण्डवा राजन्परां प्रीतिमवर्धयन् ॥ ९५
तस्मिन्काले तु यद्युक्तं धर्मकामार्थसंहितम् ।
तद्राजा धर्मतश्चक्रे प्रजापालनकीर्तनम् ॥ ९६

॥ इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

॥ समाप्तं चेदं जरासन्धवधपर्व ॥

---

# (अथ दिग्विजयपर्व ॥ ३ ॥)

## षड्विंशोऽध्यायः ॥ २६ ॥

युधिष्ठिराज्ञया दिग्विजयार्थं निर्गतानामर्जुनादीनां संक्षेपेण दिग्विजयकथनम् ॥ १ ॥

---

वैशंपायन उवाच ।
'कृपेस्तद्वचनं स्मृत्वा निशश्वास युधिष्ठिरः ।
धर्मं धर्मभृतां श्रेष्ठः कर्तुमिच्छन्परन्तपः ॥ १
तस्येङ्गितज्ञो बीभत्सुः सर्वशस्त्रभृतां वरः ।
संविवर्तयिषुः कामं पावकात्पाकशासनिः ॥' २
प्राप्तं प्राप्य धनुःश्रेष्ठमक्षय्यौ च महेषुधी ।
रथं ध्वजं सभां चैव युधिष्ठिरमभाषत ॥ ३
अर्जुन उवाच ।
धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् ।
प्राप्तमेतन्मया राजन्दुष्प्रापं यदभीप्सितम् ॥ ४
तस्य कृत्यमहं मन्ये कोशस्य परिवर्धनम् ।
करमाहारयिष्यामि राज्ञः सर्वान्नृपोत्तम ॥ ५
विजयाय प्रयास्यामि दिशं धनदपालिताम् ।
तिथावथ मुहूर्ते च नक्षत्रे चाभिपूजिते ॥ ६

वैशंपायन उवाच ।

धनञ्जयवचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
स्निग्धगम्भीरनादिन्या तं गिरा प्रत्यभाषत ॥ ७
स्वस्ति वाच्यार्हतो विप्रान्प्रयाहि भरतर्षभ ।
दुर्हृदामप्रहर्षाय सुहृदां नन्दनाय च ॥ ८
विजयस्ते ध्रुवं पार्थ प्रियं काममवाप्स्यसि ।
इत्युक्तः प्रययौ पार्थः सैन्येन महता वृतः ॥ ९
अग्निदत्तेन दिव्येन रथेनाद्भुतकर्मणा ।
तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ ॥ १०
ससैन्याः प्रययुः सर्वे धर्मराजेन पूजिताः ।
दिशं धनपतेरिष्टामजयत्पाकशासनिः ॥ ११
भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणाम् ।
प्रतीचीं नकुलो राजन्दिशं व्यजयतास्त्रवित् ॥ १२
खाण्डवप्रस्थमध्यस्थो धर्मराजो युधिष्ठिरः ।
आसीत्परमया लक्ष्म्या सुहृद्गणवृतः प्रभुः ॥ १३

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ॥ २७ ॥

अर्जुनदिग्विजये भगदत्तादिजयः ॥ १ ॥

जनमेजय उवाच ।

दिशामभिजयं ब्रह्मन्विस्तरेणानुकीर्तय ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ १

वैशंपायन उवाच ।

धनञ्जयस्य वक्ष्यामि विजयं पूर्वमेव ते ।
यौगपद्येन पार्थैर्हि निर्जितेयं वसुंधरा ॥ २
'अवाप्य राजा राज्यार्धं कुन्तीपुत्रो युधिष्ठिरः ।
महत्त्वे राजशब्दस्य मनश्चक्रे महामनाः ॥ ३
तदा क्षात्रं विदित्वाऽस्य पृथिवीविजयं प्रति ।
अमर्षात्पार्थिवेन्द्राणां तं समेयाय वारयत् ॥ ४
तत्समेत्य ध्रुवः क्षात्रं रथनागाश्वपत्तिमत् ।
अभ्ययात्पार्थिवं जिष्णुं मोघं कर्तुं जनाधिप ॥५
तत्पार्थः पार्थिवं क्षात्रं युयुत्सुं परमाहवे ।
प्रत्युद्ययौ महाबाहुस्तरसा पाकशासनिः ॥ ६
तद्भग्नं पार्थिवं क्षात्रं पार्थेनाक्लिष्टकर्मणा ।
वायुनेव घनानीकं तूलीभूतं ययौ दिशः ॥ ७
तज्जित्वा पार्थिवं क्षात्रं समरे परवीरहा ।
ययौ तदा वशे कर्तुमुदीचीं पाण्डुनन्दनः ॥' ८
पूर्वं कुलिङ्गविषये वशे चक्रे महीपतिम् ।
धनञ्जयो महाबाहुर्नातितीव्रेण कर्मणा ॥ ९
'तेनैव सहितः प्रायाज्जिष्णुः साल्वपुरं प्रति ।
स साल्वपुरमासाद्य साल्वराजं धनञ्जयः ॥ १०
विक्रमेणोग्रधन्वानं वशे चक्रे महामनाः ।
तं पार्थः सहसा जित्वा द्युमत्सेनं महीश्वरम् ॥ ११
कृत्वा स सैनिकं प्रायात्कटदेशमरिन्दमः ।
तत्र पार्थो रणे जिष्णुः सुनाभं वसुधाधिपम् १२
विक्रमेण वशे कृत्वा कृतवाननुसैनिकम् ।
एतेन सहितो राजन्सव्यसाची परन्तपः ॥' १३
विजिग्ये शाकलद्वीपे प्रतिविन्ध्यं च पार्थिवम् ।
शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः ॥ १४
अर्जुनस्य च सैन्यस्तैर्विग्रहस्तुमुलोऽभवत् ।
तान्सर्वानजयत्पार्थो धर्मराजप्रियेप्सया ॥ १५
तैरेव सहितः सर्वैः प्राग्ज्योतिषमुपाद्रवत् ॥ १६
तत्र राजा महानासीद्भगदत्तो विशांपते ।
तेनासीत्सुमहद्युद्धं पाण्डवस्य महात्मनः ॥ १७
स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत् ।
अन्यैश्च बहुभिर्योधैः सागरानूपवासिभिः ॥ १८
ततः स दिवसानष्टौ योधयित्वा धनञ्जयम् ।
प्रहसन्नब्रवीद्राजा संग्रामविगतक्लमम् ॥ १९
उपपन्नं महाबाहो त्वयि कौरवनन्दन ।

खाण्डवप्रस्थं खाण्डवदाहेन ख्यापितस्थानम् ॥ १३ ॥

षड्विंशोऽध्यायः ॥ २६ ॥

पाकशासनदायादे वीर्यमाहवशोभिनि ॥ २०
अहं सखा महेन्द्रस्य शक्रादनवरो रणे ।
न शक्ष्यामि च ते तात स्थातुं प्रमुखतो युधि२१
त्वमीप्सितं पाण्डवेय ब्रूहि किं करवाणि ते ।
यद्वक्ष्यसि महाबाहो तत्करिष्यामि पुत्रक ॥ २२
अर्जुन उवाच ।
कुरूणामृषभो राजा धर्मपुत्रो युधिष्ठिरः ।
धर्मज्ञः सत्यसन्धश्च यज्वा विपुलदक्षिणः ॥ २३
तस्य पार्थिवतामीप्से करस्तस्मै प्रदीयताम् ।
भवान्पितृसखश्चैव प्रीयमाणो मयापि च ।
ततो नाज्ञापयामि त्वां प्रीतिपूर्वं प्रदीयताम् २४
भगदत्त उवाच ।
कुन्तीमातर्यथा मे त्वं तथा राजा युधिष्ठिरः ।
सर्वमेतत्करिष्यामि किं चान्यत्करवाणि ते ॥ २५

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अष्टाविंशोऽध्यायः ॥ २८ ॥

अर्जुनेन उत्तरदिग्विजये नानादेशजयः ॥ १ ॥

वैशंपायन उवाच ।
एवमुक्तः प्रत्युवाच भगदत्तं धनञ्जयः ।
अनेनैव कृतं सर्वं भविष्यत्यनुजानता ॥ १
तं विजित्य महाबाहुः कुन्तीपुत्रो धनञ्जयः ।
प्रययावुत्तरां तस्माद्दिशं धनदपालिताम् ॥ २
अन्तर्गिरिं च कौन्तेयस्तथैव च बहिर्गिरिम् ।
तथैवोपगिरिं चैव विजिग्ये पुरुषर्षभः ॥ ३
विजित्य पर्वतान्सर्वान्ये च तत्र नराधिपाः ।
तान्वशे स्थापयित्वा स धनान्यादाय सर्वशः॥४
तैरेव सहितः सर्वैरनुरज्य च तान्नृपान् ।
उलूकवासिनं राजन्बृहन्तमुपजग्मिवान् ॥ ५
मृदङ्गवरनादेन रथनेमिस्वनेन च ।
हस्तिनां च निनादेन कम्पयन्वसुधामिमाम् ॥ ६
ततो बृहन्तस्त्वरितो बलेन चतुरङ्गिणा ।
निष्क्रम्य नगरात्तस्माद्योधयामास फाल्गुनम्॥७
सुमहान्संनिपातोऽभूद्धनञ्जयबृहन्तयोः ।
न शशाक बृहन्तस्तु सोढुं पाण्डवविक्रमम् ॥ ८
सोऽविपह्यतमं मत्वा कौन्तेयं पर्वतेश्वरः ।
उपावर्तत दुर्धर्षो रत्नान्यादाय सर्वशः ॥ ९
स तद्राज्यमवस्थाप्य उलूकसहितो ययौ ।
सेनाबिन्दुमथो राजन्राज्यादाशु समाक्षिपत् १०
मोदापुरं वामदेवं सुदामानं सुसङ्कुलम् ।
उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत् ॥ ११
तत्रस्थः पुरुषैरेव धर्मराजस्य शासनात् ।
किरीटी जितवान्राजन्देशान्पञ्चगणांस्ततः ॥१२
स देवप्रस्थमासाद्य सेनाबिन्दोः पुरं प्रति ।
बलेन चतुरङ्गेण निवेशमकरोत्प्रभुः ॥ १३
स तैः परिवृतः सर्वैर्विष्वगश्वं नराधिपम् ।
अभ्यगच्छन्महातेजाः पौरवं पुरुषर्षभ ॥ १४
विजित्य चाहवे शूरान्पार्वतीयान्महारथान् ।
जिगाय सेनया राजन्पुरं पौरवरक्षितम् ॥ १५
पौरवं युधि निर्जित्य दस्यून्पर्वतवासिनः ।
गणानुत्सवसङ्केतानजयत्सप्त पाण्डवः ॥ १६
ततः काश्मीरकान्वीरान्क्षत्रियान्क्षत्रियर्षभः ।
व्यजयल्लोहितं चैव मण्डलैर्दशभिः सह ॥ १७
ततस्त्रिगर्ताः कौन्तेयं दार्वाः कोकनदास्तथा ।
क्षत्रिया बहवो राजन्नुपावर्तन्त सर्वशः ॥ १८
अभिसारीं ततो रम्यां विजिग्ये कुरुनन्दनः ।
उरगावासिनं चैव रोचमानं रणेऽजयत् ॥ १९
ततः सिंहपुरं रम्यं चित्रायुधसुरक्षितम् ।
प्राधमद्बलमास्थाय पाकशासनिराहवे ॥ २०
ततः सुह्मांश्च चोलांश्च किरीटी पाण्डवर्षभः ।
सहितः सर्वसैन्येन प्रामथत्कुरुनन्दनः ॥ २१
ततः परमविक्रान्तो बाह्लीकान्पाकशासनिः ।

महता परिमर्देन वशे चक्रे दुरासदान् ॥ २२
गृहीत्वा तु बलं सारं फल्गुनः पाण्डुनन्दनः ।
दरदान्सहकाम्भोजैरजयत्पाकशासनिः ॥ २३
प्रागुत्तरां दिशं ये च वसन्त्याश्रित्य दस्यवः ।
निवसन्ति वने ये च तान्सर्वानजयत्प्रभुः ॥ २४
लोहान्परमकाम्भोजानृषिकानुत्तरानपि ।
सहितांस्तान्महाराज व्यजयत्पाकशासनिः ॥ २५
ऋषिकेष्वपि संग्रामो बभूवातिभयङ्करः ।
तारकामयसङ्काशः परस्त्वृषिकपार्थयोः ॥ २६
स विजित्य ततो राजन्नृषिकान्रणमूर्धनि ।
शुकोदरसमांस्तत्र हयानष्टौ समानयत् ॥ २७
मयूरसदृशानन्यानुत्तरानपरानपि ।
जवनानाशुगांश्चैव करार्थं समुपानयत् ॥ २८
स विनिर्जित्य संग्रामे हिमवन्तं सनिष्कुटम् ।
श्वेतपर्वतमासाद्य न्यविशत्पुरुषर्षभः ॥ २९

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ॥ २९ ॥

अर्जुनेन उत्तरदिग्विजये किंपुरुषादिखण्डजयः ॥ १ ॥ अर्जुनस्य खाण्डवप्रस्थं प्रति प्रत्यागमनम् ॥ २ ॥

वैशंपायन उवाच ।
स श्वेतपर्वतं वीरः समतिक्रम्य वीर्यवान् ।
देशं किंपुरुषावासं द्रुमपुत्रेण रक्षितम् ॥ १
महता सन्निपातेन क्षत्रियान्तकरेण ह ।
अजयत्पाण्डवश्रेष्ठः करे चैनं न्यवेशयत् ॥ २
तं जित्वा हाटकं नाम देशं गुह्यकरक्षितम् ।
पाकशासनिरव्यग्रः सहसैन्यः समासदत् ॥ ३
तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम् ।
ऋषिकुल्यास्तथा सर्वा ददर्श कुरुनन्दनः ॥ ४
सरो मानसमासाद्य हाटकानभितः प्रभुः ।
गन्धर्वरक्षितं देशमजयत्पाण्डवस्ततः ॥ ५
तत्र तित्तिरिकल्माषान्मण्डूकाख्यान्हयोत्तमान् ।
लेभे स करमत्यन्तं गन्धर्वनगरात्तदा ॥ ६
'हेमकूटमथासाद्य न्यवसत्फल्गुनस्तदा ।
तं हेमकूटं राजेन्द्र समतिक्रम्य पाण्डवः ॥ ७
हरिवर्षं विवेशाथ सैन्येन महता वृतः ।
तत्र पार्थो ददर्शाथ बहूनिह मनोरमान् ॥ ८
नगरान्सवनांश्चैव नदीश्च विमलोदकाः ।
पुरुषान्देवकल्पांश्च नारीश्च प्रियदर्शनाः ॥ ९
तान्सर्वांस्तत्र दृष्ट्वाऽथ मुदा युक्तो धनञ्जयः ।
वशे चक्रे स रत्नानि लेभे च सुबहूनि च ॥ १०
ततो निषधमासाद्य गिरिस्थानजयत्प्रभुः ।
अथ राजन्नतिक्रम्य निषधं शैलमायतम् ॥ ११
विवेश मध्यमं वर्षं पार्थो दिव्यमिलावृतम् ।
तत्र दिव्योपमान्दिव्यान्पुरुषान्देवदर्शनान् ॥ १२
अदृष्टपूर्वान्सुभगान्स ददर्श धनञ्जयः ।
सदनानि च शुभ्राणि नारीश्चाप्सरसंनिभाः ॥ १३
दृष्ट्वा तानजयद्रम्यान्स तैश्च ददृशे तदा ।
जित्वा च तान्महाभागान्करे च विनिवेश्य च ॥ १४
रत्नान्यादाय दिव्यानि भूषणान्यासनैः सह ।
उदीचीमथ राजेन्द्र ययौ पार्थो मुदाऽन्वितः ॥ १५
स ददर्श ततो मेरुं शिखरीणां प्रभुं महत् ।
तं काञ्चनमयं दिव्यं चतुर्वर्णं दुरासदम् ॥ १६
उन्नतं शतसाहस्रं योजनानां तु सुस्थितम् ।
ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम् ॥ १७
आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः ।
काञ्चनाभरणं दिव्यदेवगन्धर्वसेवितम् ॥ १८
अप्रमेयमनाधृष्यमधर्मबहुलैर्जनैः ।
व्यालैराचरितं घोरैर्दिव्यौषधिविदीपितम् ॥ १९
स्वर्गमावृत्य तिष्ठन्तमुच्छ्रायेण महागिरिम् ।
अगम्यं मनसाप्यन्यैर्नदीवृक्षसमन्वितम् ॥ २०
नानाविहगसङ्घैश्च नादितं सुमनोहरैः ।

तं दृष्ट्वा फल्गुनो मेरुं प्रीतिमानभवत्तदा ॥ २१
मेरोरिलावृतं दिव्यं सर्वतः परिमण्डितम् ।
मेरोस्तु दक्षिणे पार्श्वे जम्बूर्नाम वनस्पतिः ॥२२
नित्यपुष्पफलोपेतः सिद्धचारणसेवितः ।
आस्वर्गमुच्छ्रिता राजंस्तस्य शाखा वनस्पतेः २३
यस्य नाम्ना त्विदं द्वीपं जम्बूद्वीपमिति स्मृतम् ।
तां च जम्बूं ददर्शाथ सव्यसाची परन्तपः॥२४
तौ दृष्ट्वाऽप्रतिमौ लोके जम्बूं मेरुं च संस्थितौ ।
प्रीतिमानभवद्राजन्सर्वतः स विलोकयन् ॥ २५
तत्र लेभे ततो जिष्णुः सिद्धैर्दिव्यैश्च चारणैः ।
रत्नानि बहुसाहस्रं दत्तान्याभरणानि च ॥ २६
वासांसि च महार्हाणि तत्र लब्ध्वाऽर्जुनस्तदा ।
आमन्त्रयित्वा तान्सर्वान्यज्ञमुद्दिश्य वै गुरोः॥२७
अथादाय बहून्रत्नान्गमनायोपचक्रमे ।
मेरुं प्रदक्षिणीकृत्य पर्वतप्रवरं प्रभुः ॥ २८
ययौ जम्बूनदीतीरे नदीं श्रेष्ठां विलोकयन् ।
स तां मनोरमां दिव्यां जम्बूस्वादुरसावहाम् ॥२९
हैमपक्षिगणैर्जुष्टां सौवर्णजलजाकुलाम् ।
हैमपङ्कां हैमजलां सौवर्णोज्ज्वलवालुकाम् ॥ ३०
क्वचित्सुपुष्पितैः पूर्णां सौवर्णकुसुमोत्पलैः ।
क्वचित्तीररुहैः कीर्णां हैमपुष्पैः सुपुष्पितैः ॥ ३१
तीर्थैश्च रुक्मसोपानैः सर्वतः समलङ्कृताम् ।
विमलैर्मणिजालैश्च नृत्तगीतरवैर्युताम् ॥ ३२
दीप्तैर्हेमवितानैश्च समन्ताच्छोभितां शुभाम् ।
तथाविधां नदीं दृष्ट्वा पार्थस्तां प्रशशंस ह ॥३३
अदृष्टपूर्वां राजेन्द्र दृष्ट्वा हर्षमवाप च ।
दर्शनीयां नदीतीरे पुरुषान्सुमनोहरान् ॥ ३४
तान्नदीसलिलाहारान्सदारानमरोपमान् ।
नित्यं सुखमुदा युक्तान्सर्वालङ्कारशोभितान्॥३५
तेभ्यो बहूनि रत्नानि तदा लेभे धनञ्जयः ।
दिव्यजम्बूफलं हैमं भूषणानि च पेशलम् ॥ ३६
लब्ध्वा तान्दुर्लभान्पार्थः प्रतीचीं प्रययौ दिशम्।
नागानां रक्षितं देशमजयच्च पुनस्ततः ॥ ३७
ततो गत्वा महाराज वारुणीं पाकशासनिः ।
गन्धमादनमासाद्य ततस्तानजयत्प्रभुः ॥ ३८
तं गन्धमादनं राजन्नतिक्रम्य ततोऽर्जुनः ।
केतुमालं ददर्शाथ वर्षं रत्नसमन्वितम् ॥ ३९
सेवितं देवकल्पैश्च नारीभिः प्रियदर्शनैः ।
तं जित्वा चार्जुनो राजन्करे च विनिवेश्य च४०
आहृत्य तत्र रत्नानि दुर्लभानि तथार्जुनः ।
पुनश्च परिवृत्याथ मध्यं देशमिलावृतम् ॥ ४१
गत्वा प्राचीं दिशं राजन्सव्यसाची धनञ्जयः ।
मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम् ॥ ४२
ये ते कीचकवेणूनां छायां रम्यामुपासते ।
कषान्झषांश्च नद्यौ तान्प्रघसान्दीर्घवेणिपान्॥४३
पशुपांश्च कुलिन्दांश्च तङ्कणान्परतङ्कणान् ।
एतान्समस्ताञ्जित्वा च करे च विनिवेश्य च४४
रत्नान्यादाय सर्वेभ्यो माल्यवन्तं ततो ययौ ।
तं माल्यवन्तं शैलेन्द्रं समतिक्रम्य पाण्डवः॥४५
भद्राश्वं प्रविवेशाथ वर्षं स्वर्गोपमं शुचिम् ।
तत्र देवोपमान्दिव्यान्पुरुषाञ्शुभसंयुतान् ॥४६
जित्वा तान्स्ववशे कृत्वा करे च विनिवेश्य च ।
आहृत्य सर्वतो रत्नान्यसङ्ख्यानि ततस्ततः ॥४७
नीलं नाम गिरिं गत्वा तत्रस्थानजयत्प्रभुः ।
ततो जिष्णुरतिक्रम्य पर्वतं नीलमायतम् ॥ ४८
विवेश रम्यकं वर्षं सङ्कीर्णं मिथुनैः शुभैः ।
तं देशमथ जित्वा स करे च विनिवेश्य च॥४९
अजयच्चापि बीभत्सुर्देशं गुह्यकरक्षितम् ।
तत्र लेभे च राजेन्द्र सौवर्णान्मृगपक्षिणः ॥ ५०
अगृह्णाद्यज्ञभूत्यर्थं रमणीयान्मनोहरान् ।
अन्यांश्च लब्ध्वा रत्नानि पाण्डवोऽथ महाबलः५१
गन्धर्वरक्षितं देशमजयत्सगणं तदा ।
तत्र रत्नानि दिव्यानि लब्ध्वा राजन्नथार्जुनः५२
वर्षं हिरण्वतं नाम विवेशाथ महीपते ।
स तु देशेषु रम्येषु गन्तुं तत्रोपचक्रमे ॥ ५३
मध्ये प्रासादवृन्देषु नक्षत्राणां शशी यथा ।
महापथेषु राजेन्द्र सर्वतो यान्तमर्जुनम् ॥ ५४
प्रासादवरशृङ्गस्थाः परया वीर्यशोभया ।

ददृशुस्तं स्त्रियः सर्वाः पार्थमात्मयशस्करम् ५५
तं कलापधरं शूरं सरथं सधनुःकरम् ।
सवर्म सकिरीटं वै संनद्धं सपरिच्छदम् ॥ ५६
सुकुमारं महासत्वं तेजोराशिमनुत्तमम् ।
शक्रोपमममित्रघ्नं परवारणवारणम् ॥ ५७
पश्यन्तः स्त्रीगणास्तत्र शक्तिपाणिं स मेनिरे ।
अयं स पुरुषव्याघ्रो रणेऽद्भुतपराक्रमः ॥ ५८
अस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ।
इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा धनञ्जयम्॥
तुष्टुवुः पुष्पवृष्टिं च ससृजुस्तस्य मूर्धनि ।
दृष्ट्वा ते तु मुदा युक्ताः कौतूहलसमन्विताः॥६०
रत्नैर्विभूषणैश्चैव अभ्यवर्षंश्च पाण्डवम् ।
अथ जित्वा समस्तांस्तान्करे च विनिवेश्य च६१
मणिहेमप्रवालानि शस्त्राण्याभरणानि च ।
एतानि लब्ध्वा पार्थोऽथ शृङ्गवन्तं गिरिं ययौ६२
शृङ्गवन्तं च कौरव्यः समतिक्रम्य फल्गुनः ।
उत्तरं हरिवर्षं तु स समासाद्य पाण्डवः ॥ ६३
विद्याधरगणांश्चैव यक्षेन्द्रांश्च विनिर्जयन् ।
तत्र लेभे महात्मा वै वासो दिव्यमनुत्तमम् ६४
किन्नरद्रुमपत्रांश्च तत्र कृष्णाजिनान्बहून् ।
याज्ञीयांस्तांस्तदा दिव्यांस्तत्र लेभे धनञ्जयः॥'६५
उत्तरं हरिवर्षं तु स समासाद्य पाण्डवः ।
इयेष जेतुं तं देशं पाकशासननन्दनः ॥ ६६
तत एनं महावीर्यं महाकाया महाबलाः ।
द्वारपालाः समासाद्य हृष्टा वचनमब्रुवन् ॥ ६७
पार्थ नेदं त्वया शक्यं पुरं जेतुं कथञ्चन ।
उपावर्तस्व कल्याण पर्याप्तमिदमच्युत ॥ ६८
इदं पुरं यः प्रविशेद्ध्रुवं न स भवेन्नरः ।
प्रीयामहे त्वया वीर पर्याप्तो विजयस्तव ॥ ६९
न चात्र किंचिज्जेतव्यमर्जुनात्र प्रदृश्यते ।
उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्तते ॥ ७०
प्रविष्टोऽपि हि कौन्तेय नेह द्रक्ष्यसि किंचन ।
न हि मानुषदेहेन शक्यमत्राभिवीक्षितुम् ॥ ७१
अथेह पुरुषव्याघ्र किंचिदन्यच्चिकीर्षसि ।
तत्प्रब्रूहि करिष्यामो वचनात्तव भारत ॥ ७२
ततस्तानब्रवीद्राजन्नर्जुनः प्रहसन्निव ।
पार्थिवत्वं चिकीर्षामि धर्मराजस्य धीमतः ॥ ७३
न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मानुषैः ।
युधिष्ठिराय यत्किंचित्करपण्यं प्रदीयताम् ॥ ७४
'नो चेत्कृष्णेन सहितो योधयिष्यामि सायकैः'।
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च।
क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम्७५
एवं स पुरुषव्याघ्रो विजित्य दिशमुत्तराम् ।
संग्रामान्सुबहून्कृत्वा क्षत्रियैर्दस्युभिस्तथा ॥ ७६
स विनिर्जित्य राज्ञस्तान्करे च विनिवेश्य तु ।
धनान्यादाय सर्वेभ्यो रत्नानि विविधानि च॥७७
हयांस्तित्तिरिकल्माषाञ्शुकपत्रनिभानपि ।
मयूरसदृशानन्यान्सर्वाननिलरंहसः ॥ ७८
वृतः सुमहता राजन्बलेन चतुरङ्गिणा ।
आजगाम पुनर्वीरः शक्रप्रस्थं पुरोत्तमम् ॥ ७९
धर्मराजाय तत्पार्थो धनं सर्वं सवाहनम् ।
न्यवेदयदनुज्ञातस्तेन राज्ञा गृहान्ययौ ॥ ८०

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ॥ ३० ॥

भीमेन प्राचीदिग्विजये पाञ्चालदेशगमनम् ॥ १ ॥

वैशंपायन उवाच ।
एतस्मिन्नेव काले तु भीमसेनोऽपि वीर्यवान् ।
धर्मराजमनुज्ञाप्य ययौ प्राचीं दिशं प्रति ॥ १
महता बलचक्रेण परराष्ट्रावमर्दिना ।
हस्त्यश्वरथपूर्णेन दंशितेन प्रतापवान् ॥ २
वृतो भरतशार्दूलो द्विषच्छोकविवर्धनः ।
स गत्वा नरशार्दूलः पञ्चालानां पुरं महत् ॥ ३
पञ्चालान्विविधोपायैः सान्त्वयामास पाण्डवः ।

'किंचित्करं समादाय विदेहानां पुरं ययौ ।'
ततः स गण्डकाञ्शूरो विदेहान्भरतर्षभः ॥ ४
विजित्याल्पेन कालेन दशार्णानजयत्प्रभुः ।
तत्र दाशार्णको राजा सुधर्मा रोमहर्षणम् ।
कृतवान्भीमसेनेन महद्युद्धं निरायुधम् ॥ ५
भीमसेनस्तु तद्दृष्ट्वा तस्य कर्म महात्मनः ।
अधिसेनापतिं चक्रे सुधर्माणं महाबलम् ॥ ६
ततः प्राचीं दिशं भीमो ययौ भीमपराक्रमः ।
सैन्येन महता राजन्कम्पयन्निव मेदिनीम् ॥ ७
सोऽश्वमेधेश्वरं राजन्रोचमानं सहानुगम् ।
जिगाय समरे वीरो बलेन बलिनां वरः ॥ ८
स तं निर्जित्य कौन्तेयो नातितीव्रेण कर्मणा ।
पूर्वदेशं महावीर्यो विजिग्ये कुरुनन्दनः ॥ ९
ततो दक्षिणमागम्य पुलिन्दनगरं महत् ।
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ॥ १०
ततस्तु धर्मराजस्य शासनाद्भरतर्षभः ।
शिशुपालं महावीर्यमभ्यगाज्जनमेजय ॥ ११
चेदिराजोऽपि तच्छ्रुत्वा पाण्डवस्य चिकीर्षितम् ।
उपनिष्क्रम्य नगरात्प्रत्यगृह्णात्परन्तप ॥ १२
तौ समेत्य महाराज कुरुचेदिवृषौ तदा ।
उभयोरात्मकुलयोः कौशलं पर्यपृच्छताम् ॥ १३
ततो निवेद्य तद्राष्ट्रं चेदिराजो विशांपते ।
उवाच भीमं प्रहसन्किमिदं कुरुषेऽनघ ॥ १४
तस्य भीमस्तदाचख्यौ धर्मराजचिकीर्षितम् ।
स च तं प्रतिगृह्यैव तथा चक्रे नराधिपः ॥ १५
ततो भीमस्तत्र राजन्नुषित्वा त्रिदशाः क्षपाः ।
सत्कृतः शिशुपालेन ययौ सबलवाहनः ॥ १६

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

---

## एकत्रिंशोऽध्यायः ॥ ३१ ॥

प्राचीं दिशं निर्जित्य भीमस्य प्रतिनिवर्तनम् ॥ १ ॥

---

वैशंपायन उवाच ।
ततः कुमारविषये श्रेणिमन्तमथाजयत् ।
कोसलाधिपतिं चैव बृहद्बलमरिन्दमः ॥ १
अयोध्यायां तु धर्मज्ञं दीर्घयज्ञं महाबलम् ।
अजयत्पाण्डवश्रेष्ठो नातितीव्रेण कर्मणा ॥ २
ततो गोपालकक्षं च सोत्तरानपि कोसलान् ।
मल्लानामधिपं चैव पार्थिवं चाजयत्प्रभुः ॥ ३
ततो हिमवतः पार्श्वे समभ्येत्य जलोद्भवम् ।
सर्वमल्पेन कालेन देशं चक्रे वशं बली ॥ ४
एवं बहुविधान्देशान्विजिग्ये भरतर्षभः ।
भल्लाटमभितो जिग्ये शुक्तिमन्तं च पर्वतम् ॥ ५
पाण्डवः सुमहावीर्यो बलेन बलिनां वरः ।
स काशिराजं समरे सुबाहुमनिवर्तिनम् ॥ ६
वशे चक्रे महाबाहुर्भीमो भीमपराक्रमः ।
ततः सुपार्श्वमभितस्तथा राजपतिं क्रथम् ॥ ७
युध्यमानं बलात्संख्ये विजिग्ये पाण्डवर्षभः ।
ततो मत्स्यान्महातेजा मलदांश्च महाबलान् ॥ ८
अनघानभयांश्चैव पशुभूमिं च सर्वशः ।
निवृत्य च महाबाहुर्मदधारं महीधरम् ॥ ९
सोमधेयांश्च निर्जित्य प्रत्ययावुत्तरामुखः ।
वत्सभूमिं च कौन्तेयो विजिग्ये बलवान्बलात् ॥ १०
भर्गाणामधिपं चैव निषादाधिपतिं तथा ।
विजिग्ये भूमिपालांश्च मणिमत्प्रमुखान्बहून् ॥ ११
ततो दक्षिणमल्लांश्च भोगवन्तं च पर्वतम् ।
तरसैवाजयद्भीमो नातितीव्रेण कर्मणा ॥ १२
शर्मकान्वर्मकांश्चैव व्यजयत्सान्त्वपूर्वकम् ।
वैदेहकं च राजानं जनकं जगतीपतिम् ॥ १३
विजिग्ये पुरुषव्याघ्रो नातितीव्रेण कर्मणा ।
शकांश्च बर्बरांश्चैव अजयच्छद्मपूर्वकम् ॥ १४
वैदेहस्थस्तु कौन्तेय इन्द्रपर्वतमन्तिकात् ।

किरातानामधिपतीनजयत्सप्त पाण्डवः ॥ १५
ततः सुह्मान्प्रसुह्मांश्च सपक्षानतिवीर्यवान् ।
विजित्य युधि कौन्तेयो मागधानभ्यधाद्बली॥१६
दण्डं च दण्डधारं च विजित्य पृथिवीपतीन् ।
तैरेव सहितैः सर्वैर्गिरिव्रजमुपाद्रवत् ॥ १७
जारासन्धिं सान्त्वयित्वा करे च विनिवेश्य ह ।
तैरेव सहितैः सर्वैः कर्णमभ्यद्रवद्बली ॥ १८
स कम्पयन्निव महीं बलेन चतुरङ्गिणा ।
युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ॥ १९
स कर्णं युधि निर्जित्य वशे कृत्वा च भारत ।
ततो विजिग्ये बलवान्राज्ञः पर्वतवासिनः ॥ २०
अथ मोदागिरौ चैव राजानं बलवत्तरम् ।
पाण्डवो बाहुवीर्येण निजघान महामृधे ॥ २१
ततः पुण्ड्राधिपं वीरं वासुदेवं समाययौ ।
'इदानीं वृष्णिवीरेण न योत्स्यामीति पौण्ड्रकः॥२२
कृष्णस्य भुजसंत्रासात्करमाशु ददौ नृपः ।'
कौशिकीकच्छनिलयं राजानं च महौजसम् ॥२३
उभौ बलभृतौ वीरावुभौ तीव्रपराक्रमौ ।
निर्जित्याजौ महाराज वङ्गराजमुपाद्रवत् ॥ २४
समुद्रसेनं निर्जित्य चन्द्रसेनं च पार्थिवम् ।
ताम्रलिप्तं च राजानं कर्वटाधिपतिं तथा ॥ २५
सुह्मानामधिपं चैव ये च सागरवासिनः ।
सर्वान्म्लेच्छगणांश्चैव विजिग्ये भरतर्षभः ॥ २६
एवं बहुविधान्देशान्विजित्य पवनात्मजः ।
वसु तेभ्य उपादाय लौहित्यमगमद्बली ॥ २७
स सर्वान्म्लेच्छनृपतीन्सागरानूपवासिनः ।
करमाहारयामास रत्नानि विविधानि च ॥ २८
चन्दनागुरुवस्त्राणि मणिमौक्तिककम्बलम् ।
काञ्चनं रजतं चैव विद्रुमं च महाधनम् ॥ २९
ते कोटीशतसङ्ख्येन कौन्तेयं महता तदा ।
अभ्यवर्षन्महात्मानं धनवर्षेण पाण्डवम् ॥ ३०
इन्द्रप्रस्थमुपागम्य भीमो भीमपराक्रमः ।
निवेदयामास तदा धर्मराजाय तद्धनम् ॥ ३१

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ॥ ३२ ॥

दक्षिणदिग्विजये शूरसेनादीञ्जितवतः सहदेवस्य माहिष्मत्यां नीलेन सह युद्धम् ॥ १ ॥ नीलस्य अग्निसाहाय्यकरणकारण-कथनम् ॥ २ ॥ सहदेवस्तुत्या तुष्टस्याग्नेराज्ञया नीलेनार्चितस्य सहदेवस्य विभीषणात्करग्रहणार्थं घटोत्कचप्रेषणम् ॥ ३ ॥

वैशंपायन उवाच ।
तथैव सहदेवोऽपि धर्मराजेन पूजितः ।
महत्या सेनया राजन्प्रययौ दक्षिणां दिशम् ॥ १
स शूरसेनान्कार्त्स्न्येन पूर्वमेवाजयत्प्रभुः ।
मत्स्यराजं च कौरव्यो वशे चक्रे बलाद्बली ॥ २
अधिराजाधिपं चैव दन्तवक्रं महाबलम् ।
जिगाय करदं चैव कृत्वा राज्ये न्यवेशयत् ॥ ३
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ।
तथैवापरमत्स्यांश्च व्यजयत्स पटच्चरान् ॥ ४
निषादभूमिं गोशृङ्गं पर्वतप्रवरं तथा ।
तरसैवाजयद्धीमाञ्श्रेणिमन्तं च पार्थिवम् ॥ ५
नरराष्ट्रं च निर्जित्य कुन्तिभोजमुपाद्रवत् ।
प्रीतिपूर्वं च तस्यासौ प्रतिजग्राह शासनम् ॥ ६
ततश्चर्मण्वतीकूले जम्भकस्यात्मजं नृपम् ।
ददर्श वासुदेवेन शेषितं पूर्ववैरिणा ॥ ७
चक्रे तेन स सङ्ग्रामं सहदेवेन भारत ।
स तमाजौ विनिर्जित्य दक्षिणाभिमुखो ययौ ॥८
सेकानपरसेकांश्च व्यजयत्सुमहाबलः ।
करं तेभ्य उपादाय रत्नानि विविधानि च ॥ ९
ततस्तेनैव सहितो नर्मदामभितो ययौ ।

सुह्मा राढाः । मागधानभ्यधाद्बली करं प्रयच्छतेत्युक्तवान् । पूर्वमेव पराक्रान्तत्वात् ॥ १६ ॥ एकत्रिंशोध्यायः ॥ ३१ ॥

पटच्चरान् चोरदेशान् ॥ ४ ॥

'भगदत्तं महाबाहुं क्षत्रियं नरकात्मजम् ।
अर्जुनाय करं दत्तं श्रुत्वा तत्र न्यवर्तत ॥' १०
विन्दानुविन्दावावन्त्यौ सैन्येन महतावृतौ ।
जिगाय समरे वीरावाश्विनेयः प्रतापवान् ॥ ११
ततो रत्नान्युपादाय पुरं भोजकटं ययौ ।
तत्र युद्धमभूद्राजन्दिवसद्वयमच्युत ॥ १२
स विजित्य दुराधर्षं भीष्मकं माद्रिनन्दनः ।
कोसलाधिपतिं चैव तथा वेणातटाधिपम् ॥१३
कान्तारकांश्च समरे तथा प्राकोटकान्नृपान् ।
नाटकेयांश्च समरे तथा हेरम्बकान्युधि ॥ १४
मारुधं च विनिर्जित्य रम्यग्राममथो बलात् ।
नाचीनानर्बुकांश्चैव राजानश्च महाबलः ॥ १५
तांस्तानाटविकान्सर्वानजयत्पाण्डुनन्दनः ।
वाताधिपं च नृपतिं वशे चक्रे महाबलः ॥ १६
पुलिन्दांश्च रणे जित्वा ययौ दक्षिणतः पुरः ।
युयुधे पाण्ड्यराजेन दिवसं नकुलानुजः ॥ १७
तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम् ।
गुहामासादयामास किष्किन्धां लोकविश्रुताम् ॥
'पुरा वानरराजेन वालिना चाभिरक्षिताम् ।
ततः कोसलराजस्य रामस्यैवानुगेन च ।
सुग्रीवेणाभिगुप्तां तां प्रविष्टस्तमथाह्वयत् ॥' १९
तत्र वानरराजाभ्यां मैन्देन द्विविदेन च ।
युयुधे दिवसान्सप्त न च तौ विकृतिं गतौ ॥२०
ततस्तुष्टौ महात्मानौ सहदेवाय वानरौ ।
ऊचतुश्चैव संहृष्टौ प्रीतिपूर्वमिदं वचः ॥ २१
गच्छ पाण्डवशार्दूल रत्नान्यादाय सर्वशः ।
अविघ्नमस्तु कार्याय धर्मराजाय धीमते ॥ २२
ततो रत्नान्युपादाय पुरीं माहिष्मतीं ययौ ॥
तत्र नीलेन राज्ञा स चक्रे युद्धं नरर्षभः ॥ २३
पाण्डवः परवीरघ्नः सहदेवः प्रतापवान् ॥
ततोऽस्य सुमहद्युद्धमासीद्भीरुभयंकरम् ॥ २४
सैन्यक्षयकरं चैव प्राणानां संशयावहम् ।
चक्रे तस्य हि साहाय्यं भगवान्हव्यवाहनः ॥२५
ततो रथा हया नागाः पुरुषाः कवचानि च ।
प्रदीप्तानि व्यदृश्यन्त सहदेवबले तदा ॥ २६
ततः सुसंभ्रान्तमना बभूव कुरुनन्दनः ।
नोत्तरं प्रतिवक्तुं च शक्तोऽभूज्जनमेजय ॥ २७

जनमेजय उवाच ।

किमर्थं भगवान्वह्निः प्रत्यमित्रोऽभवद्युधि ।
सहदेवस्य यज्ञार्थं घटमानस्य वै द्विज ॥ २८

वैशंपायन उवाच ।

तत्र माहिष्मतीवासी भगवान्हव्यवाहनः ।
श्रूयते हि गृहीतो वै पुरस्तात्पारदारिकः ॥ २९
नीलस्य राज्ञो दुहिता बभूवातीव शोभना ।
साऽग्निहोत्रमुपातिष्ठद्बोधनाय पितुः सदा ॥ ३०
व्यजनैर्धूयमानोऽपि तावत्प्रज्वलते न सः ।
यावच्चारुपुटौष्ठेन वायुना न विधूयते ॥ ३१
ततः स भगवानग्निश्चकमे तां सुदर्शनाम् ।
नीलस्य राज्ञः सर्वेषामुपनीतश्च सोऽभवत् ॥ ३२
ततो ब्राह्मणरूपेण रममाणो यदृच्छया ॥
चकमे तां वरारोहां कन्यामुत्पललोचनाम् ।
तं तु राजा यथाशास्त्रमशासद्धार्मिकस्तदा ॥ ३३
प्रजज्वाल ततः कोपाद्भगवान्हव्यवाहनः ।
तं दृष्ट्वा विस्मितो राजा जगाम शिरसाऽवनिम् ॥३४
ततः कालेन तां कन्यां तथैव हि तदा नृपः ।
प्रददौ विप्ररूपाय वह्नये शिरसा नतः ॥ ३५
प्रतिगृह्य च तां सुभ्रूं नीलराज्ञः सुतां तदा ।
चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसुः ॥ ३६
वरेण च्छन्दयामास तं नृपं स्विष्टकृत्तमः ।
अभयं च स जग्राह स्वसैन्ये वै महीपतिः ॥ ३७
ततःप्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः ।
जिगीषन्ति बलाद्राजंस्ते दह्यन्ते स्म वह्निना ॥३८
तस्यां पुर्यां तदा चैव माहिष्मत्यां कुरूद्वह ।
बभूवुरनतिग्राह्या योषितश्छन्दतः किल ॥ ३९
एवमग्निर्वरं प्रादात्स्त्रीणामप्रतिवारणे ।
स्वैरिण्यस्तत्र नार्यो हि यथेष्टं विचरन्त्युत ॥ ४०
वर्जयन्ति च राजानस्तत्पुरं भरतर्षभ ।
भयादग्नेर्महाराज तदाप्रभृति सर्वदा ॥ ४१

सहदेवस्तु धर्मात्मा सैन्यं दृष्ट्वा भयार्दितम् ।
परीतमग्निना राजन्नाकम्पत यथाऽचलः ।
उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत्पावकं ततः॥४२

सहदेव उवाच ।

त्वदर्थोऽयं समारम्भः कृष्णवर्त्मन्नमोस्तु ते ।
मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक॥ ४३
पावनात्पावकश्चासि वहनाद्धव्यवाहनः ।
वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि ॥४४
चित्रभानुः सुरेशश्च अनलस्त्वं विभावसो ।
स्वर्गद्वारस्पृशश्चासि हुताशो ज्वलनः शिखी ॥४५
वैश्वानरस्त्वं पिङ्गेशः प्लवङ्गो भूरितेजसः ।
कुमारसूस्त्वं भगवान्रुद्रगर्भो हिरण्यकृत्॥ ४६
अग्निर्ददातु मे तेजो वायुः प्राणं ददातु मे ।
पृथिवी बलमादध्याच्छिवं चापो दिशन्तु मे॥४७
अपां गर्भ महासत्त्व जातवेदः सुरेश्वर ।
देवानां मुखमग्ने त्वं सत्येन विपुनीहि माम् ४८
ऋषिभिर्ब्राह्मणैश्चैव दैवतैरसुरैरपि ।
नित्यं सुहुत यज्ञेषु सत्येन विपुनीहि माम्॥४९
धूमकेतुः शिखी च त्वं पापहाऽनिलसंभवः ।
सर्वप्राणिषु नित्यस्थः सत्येन विपुनीहि माम् ५०
एवं स्तुतोऽसि भगवन्प्रीतेन शुचिना मया ।
तुष्टिं पुष्टिं श्रुतं चैव प्रीतिं चाग्ने प्रयच्छ मे ॥५१

वैशंपायन उवाच ।

इत्येवं मन्त्रमाग्नेयं पठन्यो जुहुयाद्विभुम् ।
ऋद्धिमान्सततं दान्तः सर्वपापैः प्रमुच्यते ॥ ५२

सहदेव उवाच ।

यज्ञविघ्नमिमं कर्तुं नार्हस्त्वं यज्ञवाहन ।
एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य मेदिनीम्॥५३
विधिवत्पुरुषव्याघ्रः पावकं प्रत्युपाविशत् ।
प्रमुखे तस्य सैन्यस्य भीतोद्विग्नस्य भारत ॥ ५४
न चैनमत्यगाद्वह्निर्वेलामिव महोदधिः ।
तमुपेत्य शनैर्वह्निरुवाच कुरुनन्दनम् ॥　५५
सहदेवं नृणां देवं सान्त्वपूर्वमिदं वचः ।
उत्तिष्ठोत्तिष्ठ कौरव्य जिज्ञासेयं कृता मया॥ ५६
वेद्मि सर्वमभिप्रायं तव धर्मसुतस्य च ।
मया तु रक्षितव्या पूरियं भरतसत्तम ॥　५७
यावद्राज्ञो हि नीलस्य कुले वंशधरा इति ।
ईप्सितं तु करिष्यामि मनसस्तव पाण्डव ॥ ५८
तत उत्थाय हृष्टात्मा प्राञ्जलिः शिरसा नतः ।
पूजयामास माद्रेयः पावकं भरतर्षभ ॥　५९
पावके विनिवृत्ते तु नीलो राजाऽभ्यगात्तदा ।
पावकस्याज्ञया चैनमर्चयामास पार्थिवः ॥ ६०
सत्कारेण नरव्याघ्रं सहदेवं युधां पतिम् ।
प्रतिगृह्य च तां पूजां करे च विनिवेश्य च॥६१
माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशम् ।
त्रैपुरं स वशे कृत्वा राजानममितौजसम् ॥ ६२
निजग्राह महाबाहुस्तरसा पौरवेश्वरम् ।
आकृतिं कौशिकाचार्यं यत्नेन महता ततः ॥६३
वशे चक्रे महाबाहुः सुराष्ट्राधिपतिं तदा ।
सुराष्ट्रविषयस्थश्च प्रेषयामास रुक्मिणे ॥　६४
राज्ञे भोजकटस्थाय महामात्राय धीमते ।
भीष्मकाय स धर्मात्मा साक्षादिन्द्रसखाय वै ६५
स चास्य प्रतिजग्राह ससुतः शासनं तदा ।
प्रीतिपूर्वं महाराज वासुदेवमवेक्ष्य च ॥　६६
ततः स रत्नान्यादाय पुनः प्रायाद्युधां पतिः ।
ततः शूर्पारकं चैव तालाकटमथापि च ॥　६७
वशे चक्रे महातेजा दण्डकांश्च महाबलः ।
सागरद्वीपवासांश्च नृपतीन्म्लेच्छयोनिजान् ॥६८
निषादान्पुरुषादांश्च कर्णप्रावरणानपि ।
ये च कालमुखा नाम नरराक्षसयोनयः ॥　६९
कृत्स्नं कोलगिरिं चैव सुरभीपट्टनं तथा ।
द्वीपं ताम्राह्वयं चैव पर्वतं रामकं तथा ॥　७०
तिमिङ्गिलं च स नृपं वशे कृत्वा महामतिः ।
एकपादांश्च पुरुषान्केरलान्वनवासिनः ॥　७१
नगरीं संजयन्तीं च पाषण्डं करहाटकम् ।
दूतैरेव वशे चक्रे करं चैनानदापयत् ॥　७२
पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः ।
अन्ध्रांस्तालवनांश्चैव कलिङ्गानुष्ट्रकर्णिकान् ॥७३

आटवीं च पुरीं रम्यां यवनानां पुरं तथा ।
दूतैरेव वशे चक्रे करं चैनानदापयत् ॥ ७४
'ताम्रपर्णीं ततो गत्वा कन्यातीर्थमतीत्य च ।
दक्षिणां च दिशं सर्वां विजित्य कुरुनन्दनः॥७५
उत्तरं तीरमासाद्य सागरस्योर्मिमालिनः ।
चिन्तयामास कौन्तेयो भ्रातुः पुत्रं घटोत्कचम्॥७६
ततश्चिन्तितमात्रस्तु राक्षसः प्रत्यदृश्यत ।
तं मेरुशिखराकारमागतं पाण्डुनन्दनः ॥ ७७
भृगुकच्छात्ततो धीमान्सान्त्वेनामित्रकर्शनः ।
आगम्यतामिति प्राह धर्मराजस्य शासनात्॥७८
स राक्षसपरीवारस्तं प्रणम्याशु संस्थितः ।
घटोत्कचं महात्मानं राक्षसं घोरदर्शनम् ॥ ७९
तत्रस्थः प्रेषयामास पौलस्त्याय महात्मने ।'
बिभीषणाय धर्मात्मा प्रीतिपूर्वमरिन्दमः ॥ ८०
स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।
तच्च कृष्णकृतं धीमानभ्यमन्यत स प्रभुः ॥ ८१
ततः संप्रेषयामास रत्नानि विविधानि च ।
चन्दनागुरुकाष्ठानि दिव्यान्याभरणानि च ॥
वासांसि च महार्हाणि मणींश्चैव महाधनान्॥८२

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

जनमेजयप्रश्नानुरोधेन सहदेवस्य द्राविडपाण्ड्यदेशगमनकथनम् ॥ १ ॥

'जनमेजय उवाच ।
इच्छाम्यागमनं श्रोतुं हैडिम्बस्य द्विजोत्तम ।
लङ्कायां च गतिं ब्रह्मन्पौलस्त्यस्य च दर्शनम्॥१
कावेरीदर्शनं चैव आनुपूर्व्या वदस्व मे ।
वैशंपायन उवाच ।
शृणु राजन्यथा वृत्तं सहदेवस्य साहसम् ॥ २
काननद्वीपगांश्चैव तरसाऽऽजित्य चाहवे ।
दक्षिणां च दिशं जित्वा चोलस्य विषयं ययौ॥३
ददर्श पुण्यतोयां वै कावेरीं सरितां वराम् ।
नानापक्षिगणैर्जुष्टां तापसैरुपशोभिताम् ॥ ४
साललोध्रार्जुनैर्बिल्वैर्जम्बूशाल्मलकिंशुकैः ।
कदम्बैः सप्तपर्णैश्च काश्मर्यामलकैर्वृताम् ॥ ५
न्यग्रोधैश्च महाशाखैः प्लक्षैरौदुम्बरैरपि ।
शमीपलाशवृक्षैश्च अश्वत्थैः खदिरैर्वृताम् ॥ ६
बदरीभिश्च संछन्नामश्वकर्णैश्च शोभिताम् ।
चूतैः पुण्ड्रकपत्रैश्च कदलीवनसंवृताम् ॥ ७
चक्रवाकगणैः कीर्णां प्लवैश्च जलवायसैः ।
समुद्रकाकैः क्रौञ्चैश्च नादितां जलकुक्कुटैः ॥ ८
एवं खगैश्च बहुभिः संघुष्टां जलवासिभिः ।
आश्रमैर्बहुभिः सक्तां चैत्यवृक्षैश्च शोभिताम् ॥९
शोभितां ब्राह्मणैः शुभ्रैर्वेदवेदाङ्गपारगैः ।
क्वचित्तीररुहैर्वृक्षैर्मालाभिरिव शोभिताम् ॥ १०
क्वचित्सुपुष्पितैर्वृक्षैः क्वचित्सौगन्धिकोत्पलैः ।
कह्लारकुमुदोत्फुल्लैः कमलैरुपशोभिताम् ॥ ११
कावेरीं तादृशीं दृष्ट्वा प्रीतिमान्पाण्डवस्तदा ।
असद्राष्ट्रे यथा गङ्गा कावेरी च तथा शुभा॥१२
सहदेवस्तु तां तीर्त्वा नदीमनुचरैः सह ।
दक्षिणं तीरमासाद्य गमनायोपचक्रमे ॥ १३
आगतं पाण्डवं तत्र श्रुत्वा विषयवासिनः ।
दर्शनार्थं ययुस्ते तु कौतूहलसमन्विताः ॥ १४
द्रमिडाः पुरुषा राजन्स्त्रियश्च प्रियदर्शनाः ।
गत्वा पाण्डुसुतं तत्र ददृशुस्ते मुदाऽन्विताः॥१५
सुकुमारं विशालाक्षं व्रजन्तं त्रिदशोपमम् ।
दर्शनीयतमं लोके नेत्रैरनिमिषैरिव ॥ १६
आश्चर्यभूतं ददृशुर्द्रमिडास्ते समागताः ।
महासेनोपमं दृष्ट्वा पूजां चक्रुश्च तस्य वै ॥ १७
रत्नैश्च विविधैरिष्टैर्भोगैरन्यैश्च संमतैः ।
गतिमङ्गलयुक्ताभिः स्तुवन्तो नकुलानुजम् ॥१८

सहदेवस्तु तान्दृष्ट्वा द्रमिलानागतान्मुदा ।
विसृज्य तान्महाबाहुः प्रस्थितो दक्षिणां दिशम् १९
दूतेन तरसा चोलं विजित्य द्रमिडेश्वरम् ।
ततो रत्नान्युपादाय पाण्ड्यस्य विषयं ययौ ॥ २०
दर्शने सहदेवस्य न च तृप्ता नराः परे ।
गच्छन्तमनुगच्छन्तः प्राप्ताः कौतूहलान्विताः॥२१
ततो माद्रीसुतो राजन्मृगसङ्घान्विलोकयन् ।
गजान्वनचरानन्यान्व्याघ्रान्कृष्णमृगान्बहून् २२
शुकान्मयूरान्दृष्ट्वा तु गृध्रानारण्यकुक्कुटान् ।
ततो देशं समासाद्य श्वशुरस्य महीपतेः ॥ २३
प्रेषयामास माद्रेयो दूतान्पाण्ड्याय वै तदा ।
प्रतिजग्राह तस्याज्ञां संप्रीत्या मलयध्वजः ॥ २४
भार्या रूपवती जिष्णोः पाण्ड्यस्य तनया शुभा।
चित्राङ्गदेति विख्याता द्रमिडी योषितां वरा २५
आगतं सहदेवं तु सा श्रुत्वाऽन्तःपुरे पितुः ।
प्रेषयामास संप्रीत्या पूजारत्नं च वै बहु ॥ २६
पाण्ड्योऽपि बहुरत्नानि दूतैः सह मुमोच ह ।
मणिमुक्ताप्रवालानि सहदेवाय कीर्तिमान् ॥२७
तां दृष्ट्वाऽप्रतिमां पूजां पाण्डवोऽपि मुदा नृप ।
भ्रातुः पुत्रे बहून्रत्नान्दत्वा वै बभ्रुवाहने ॥ २८
पाण्ड्यं द्रमिडराजानं श्वशुरं मलयध्वजम् ।
स दूतैस्तं वशे कृत्वा मणलूरेश्वरं तदा ॥ २९
ततो रत्नान्युपादाय द्रमिडैरावृतो ययौ ।
अगस्त्यस्यालयं दिव्यं देवलोकसमं गिरिम् ॥३०
स तं प्रदक्षिणं कृत्वा मलयं भरतर्षभ ।
लङ्घयित्वा तु माद्रेयस्ताम्रपर्णीं नदीं शुभाम्॥३१
प्रसन्नसलिलां दिव्यां सुशीतां च मनोहराम् ।
समुद्रतीरमासाद्य न्यविशत्पाण्डुनन्दनः ॥ ३२

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

स्मृतिमात्रागतघटोत्कचलङ्काप्रेषणवृत्तान्तस्य विस्तरेण कथनम् ॥ १ ॥ कृष्णगौरवेण विभीषणेन करदानम् ॥ २ ॥ विभीषणात्करमाहृतवता घटोत्कचेन सह सहदेवस्य प्रतिनिवर्तनम् ॥ ३ ॥

वैशंपायन उवाच ।
सहदेवस्ततो राजा मन्त्रिभिः सह भारत ।
संप्रधार्य महाबाहुः सचिवैर्बुद्धिमत्तरैः ॥ १
स विचार्य तदा राजन्सहदेवस्त्वरान्वितः ।
चिन्तयामास राजेन्द्र भ्रातुः पुत्रं घटोत्कचम् ॥२
ततश्चिन्तितमात्रे तु राक्षसः प्रत्यदृश्यत ।
अतिदीर्घो महाबाहुः सर्वाभरणभूषितः ॥ ३
नीलजीमूतसङ्काशस्तप्तकाञ्चनकुण्डलः ।
विचित्रहारकेयूरः किङ्किणीमणिभूषितः ॥ ४
हेममाली महादंष्ट्रः किरीटी कुक्षिबन्धनः ।
ताम्रकेशो हरिश्मश्रुर्भीमाक्षः कटकाङ्गदः ॥ ५
रक्तचन्दनदिग्धाङ्गः सूक्ष्माम्बरधरो बली ।
बलेन स ययौ तत्र चालयन्निव मेदिनीम् ॥ ६
ततो दृष्ट्वा जना राजन्नायान्तं पर्वतोपमम् ।
भयाद्धि दुद्रुवुः सर्वे सिंहात्क्षुद्रमृगा यथा ॥ ७
आससाद च माद्रेयं पुलस्त्यं रावणो यथा ।
अभिवाद्य ततो राजन्सहदेवं घटोत्कचः ॥ ८
प्रह्वः कृताञ्जलिस्तस्थौ किं कार्यमिति चाब्रवीत् ।
तं परिष्वज्य बाहुभ्यां मूर्ध्न्युपाघ्राय पाण्डवः ॥९
तं मेरुशिखराकारमागतं पाण्डुनन्दनः ।
पूजयित्वा सहामात्यः प्रीतो वाक्यमुवाच ह ॥१०
गच्छ लङ्कां पुरीं वत्स करार्थं मम शासनात् ।
तत्र दृष्ट्वा महात्मानं राक्षसेन्द्रं विभीषणम् ॥११
रत्नानि राजसूयार्थं विविधानि बहूनि च ।
उपादाय च सर्वाणि प्रत्यागच्छ महाबल ॥ १२
वैशंपायन उवाच ।
पाण्डवेनैवमुक्तस्तु मुदा युक्तो घटोत्कचः ।
तथेत्युक्त्वा महाराज प्रतस्थे दक्षिणां दिशम् १३

कटाहानि विचित्राणि द्रोण्यश्चैव सहस्रशः ॥७८
राजतानि च भाण्डानि रत्नगर्भांश्च कुण्डलान् ।
हेमपुष्पाणि चान्यानि रुक्ममुख्यानि चापरान् ॥
शङ्खांश्च चन्द्रसङ्काशांश्चित्रावर्तविचित्रितान् ।
यज्ञस्य तोरणे युक्तान्ददौ तालांश्चतुर्दश ॥ ८०
रुक्मपङ्कजपुष्पाणि शिबिका मणिभूषिताः ।
मुकुटानि महार्हाणि रत्नगर्भांश्च कङ्कणान् ॥ ८१
चन्दनानि च मुख्यानि वासांसि विविधानि च।
स ददौ सहदेवाय तदा राजा विभीषणः ॥ ८२
तानि सर्वाणि रत्नानि आजह्रुस्ते निशाचराः ।
अष्टाशीतिसहस्राणि समदा रक्तलोचनाः ॥ ८३
रत्नान्यादाय सर्वाणि प्रतस्थे स घटोत्कचः ।
विभीषणं च राजानमभिवाद्य कृताञ्जलिः ॥८४
प्रदक्षिणं परीत्यैव निर्जगाम घटोत्कचः ।
ततो रत्नान्युपादाय हैडिम्बो राक्षसैः सह ॥८५
जगाम तूर्णं लङ्कायाः सहदेवपदं प्रति ।
आसेदुः पाण्डवं सर्वे लङ्घयित्वा महोदधिम्॥८६
सहदेवो ददर्शाथ रत्नाहारान्निशाचरान् ।
आगतान्भीमसङ्काशान्हैडिम्बं च तथा नृप॥८७
द्रमिला नैर्ऋतान्दृष्ट्वा दुद्रुवुस्ते भयार्दिताः ।
भैमसेनिस्ततो गत्वा माद्रेयं प्राञ्जलिः स्थितः ८८
प्रीतिमानभवद्दृष्ट्वा रत्नौघं तं च पाण्डवः ।
तं परिष्वज्य पाणिभ्यां दृष्ट्वा तान्प्रीतिमानभूत्८९
विसृज्य द्रविडान्सर्वान्गमनायोपचक्रमे ।
न्यवर्तत ततो धीमान्सहदेवो नराधिपः ॥ ९०
एवं विजित्य तरसा सान्त्वेन विजयेन च ।
करदान्पार्थिवान्कृत्वा प्रत्यागच्छदरिन्दमः ॥ ९१
रत्नसालमुपादाय ययौ सहनिशाचरः ।
इन्द्रप्रस्थं विवेशाथ कम्पयन्निव मेदिनीम् ॥ ९२
दृष्ट्वा युधिष्ठिरं राजन्सहदेवः कृताञ्जलिः ।
प्रह्वोऽभिवाद्य तस्थौ स पूजितश्चापि तेन वै॥९३
लङ्काप्राप्तान्धनौघांश्च दृष्ट्वा तान्दुर्लभान्बहून् ।
प्रीतिमानभवद्राजा विस्मयं परमं ययौ ॥ ९४
धर्मराजाय तत्सर्वं निवेद्य भरतर्षभ ।
कोटीसहस्रमधिकं हिरण्यस्य महात्मने ॥ ९५
विविधानि च रत्नानि गोजाविमहिषांस्तथा ।
कृतकर्मा सुखं राजन्नुवास जनमेजय ॥ ९६

॥ इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥'

---

## पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

नकुलस्य पश्चिमदिग्विजयः ॥ १ ॥

वैशंपायन उवाच ।
नकुलस्य तु वक्ष्यामि कर्माणि विजयं तथा ।
वासुदेवजितामाशां यथाऽसावजयत्प्रभुः ॥ १
निर्याय खाण्डवप्रस्थात्प्रतीचीमभितो दिशम् ।
उद्दिश्य मतिमान्प्रायान्महत्या सेनया सह ॥ २
सिंहनादेन महता योधानां गर्जितेन च ।
रथनेमिनिनादैश्च कम्पयन्वसुधामिमाम् ॥ ३
ततो बहु धनं रम्यं गवाढ्यं धनधान्यवत् ।
कार्तिकेयस्य दयितं रोहीतकमुपाद्रवत् ॥ ४
तत्र युद्धं महच्चासीच्छूरैर्मत्तमयूरकैः ।
मरुभूमिं स कार्त्स्न्येन तथैव बहुधान्यकम् ॥ ५
शैरीषकं महेत्थं च वशे चक्रे महाद्युतिः ।
आक्रोशं चैव राजर्षिं तेन युद्धमभून्महत् ॥ ६
तान्दशार्णान्स जित्वा च प्रतस्थे पाण्डुनन्दनः ।
शिबींस्त्रिगर्तानम्बष्ठान्मालवान्पञ्च कर्पटान् ॥ ७
तथा मध्यमकेयांश्च वाटधानान्द्विजानथ ।
पुनश्च परिवृत्याथ पुष्करारण्यवासिनः ॥ ८
गणानुत्सवसङ्केतान्व्यजयत्पुरुषर्षभः ।
सिन्धुकूलाश्रिता ये च ग्रामणीया महाबलाः॥९
शूद्राभीरगणाश्चैव ये चाश्रित्य सरस्वतीम् ।
वर्तयन्ति च ये मत्स्यैर्ये च पर्वतवासिनः ॥ १०
कृत्स्नं पञ्चनन्दं चैव तथैवामरपर्वतम् ।

